आनन्दाश्रमसंस्कृतग्रन्थावलिः ।

ग्रन्थाङ्कः ३६

कृष्णयजुर्वेदीयं

# तैत्तिरीयारण्यकम् ।

श्रीमत्सायणाचार्यविरचितभाष्यसमेतम् ।

( सपरिशिष्टम् । )

तत्र प्रथमप्रपाठकादारभ्य षष्ठप्रपाठकपर्यन्तोऽयं

प्रथमो भागः (१) ।

एतत्पुस्तकं वे० शा० रा० रा० "बाबाशास्त्री फडके" इत्येतैः संशोधितम् ।

तच्च

हरि नारायण आपटे

इत्यनेन

पुण्याख्यपत्तने

आनन्दाश्रममुद्रणालये

आयसाक्षरैर्मुद्रयित्वा

प्रकाशितम् ।

शालिवाहनशकाब्दाः १८१९

खिस्ताब्दाः १८९८





मूल्यमाणकाष्टकसहितं रूपकचतुष्कम् (४।८) ।

ॐ तत्सद्ब्रह्मणे नमः ।

कृष्णयजुर्वेदीयं

# तैत्तिरीयारण्यकम् ।

श्रीमत्सायणाचार्यविरचितभाष्यसमेतम् ।

( तत्र प्रथमप्रपाठके प्रथमोऽनुवाकः । )

हरिः ॐ ।

*भद्रं कर्णेभिः शृणुयाम देवाः । भद्रं पश्येमाक्षभिर्यजत्राः ।
स्थिरैरङ्गैस्तुष्टुवाꣳसस्तनूभिः । व्यशेम देवहितं यदायुः ॥
स्वस्ति न इन्द्रो वृद्धश्रवाः । स्वस्ति नः पूषा विश्ववेदाः ।
स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः । स्वस्ति नो बृहस्पतिर्दधातु ।

ॐ शान्तिः शान्तिः शान्तिः ।

इति शान्तिः ।

वागीशाद्याः सुमनसः सर्वार्थानामुपक्रमे ।
यं नत्वा कृतकृत्याः स्युस्तं नमामि गजाननम् ॥ १ ॥
यस्य [1]निश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ २ ॥
तत्कटाक्षेण तद्रूपं दधद्बुक्कमहीपतिः ।
आदिशन्माधवाचार्यं वेदार्थस्य प्रकाशने ॥ ३ ॥
ये पूर्वोत्तरमीमांसे ते व्याख्यायातिसंग्रहात् ।
कृपालुः सायणाचार्यो वेदार्थं वक्तुमुद्यतः ॥ ४ ॥

* व्याख्येयातिरिक्तं शान्तिमन्त्रादिरूपं ग्रन्थजातं क. ख पुस्तकयोर्न संगृहीतम् । एवं प्रतिप्रपाठकं द्रष्टव्यम् ।

१ ख. निःश्वसितं ।

व्याख्याता सुखबोधार्थं तैत्तिरीयकसंहिता ।
तद्ब्राह्मणं च व्याख्यातं शिष्टमारण्यकं ततः ॥ ५ ॥
अरण्याध्ययनादेतदारण्यकमितीर्यते ।
अरण्ये तदधीयीतेत्येवं वाक्यं प्रवक्ष्यते ॥ ६ ॥
काण्डमारण्यकं सर्वं व्याख्यातव्यं प्रयत्नतः ।
आरण्यकविशेषास्तु पूर्वाचार्यैरुदीरिताः ॥ ७ ॥
होतॄन्प्रवर्ग्यकाण्डं च याश्चोपनिषदो विदुः ।
आरुणीयविधिश्चैव काठके परिकीर्तितः ॥ ८ ॥
रुद्रो नारायणश्चैव मेधो यश्चैव पित्रियः ।
एतदारण्यकं सर्वं नाव्रती श्रोतुमर्हति ॥ ९ ॥
कठेन मुनिना दृष्टं काठकं परिकीर्त्यते ।
सावित्रो नाचिकेतश्च चातुर्होत्रस्तृतीयकः ॥ १० ॥
तुर्यो वैश्वसृजस्तद्वद्वह्निरारुणकेतुकः ।
स्वाध्यायब्राह्मणं चेति सर्वं काठकमीरितम् ॥ ११ ॥
नारण्याधीतिनियमः सावित्रादिचतुष्टये ।
अतस्तद्ब्राह्मणग्रन्थे श्रुतं व्याख्यातमप्यदः ॥ १२ ॥
वह्निरारुणकेत्वाख्यः काठके पञ्चमः श्रुतः ।
आरण्यकादावाम्नातस्तद्व्याख्याऽथ प्रतन्यते ॥ १३ ॥

अत्र बोधायने कल्पे तत्प्रकारोऽभिहितः—“ एतेनाऽऽरुणकेतुको व्याख्यातो यावन्मन्त्रबीहकाः । लोकंपृणाश्च स्वयमातृण्णाश्चाऽऽप एव ” इति । पूर्वत्र सावित्रादिचयनानामभिहितत्वादेतेनेति तत्परामर्शः । अब्रूपा इष्टका अबीष्टकाः । नात्रेष्टका मृदादिना निष्पादनीयाः । किं त्वाप एवेष्टकाबुद्ध्योपधेया इत्यर्थः । उपधानेऽस्मिन्कल्प एवमभिहितः—उत्तरवेद्यावपनकाले तूष्णीं जानुदघ्नं खात्वाऽन्यत्र मृदं निवपति विदेरग्निरित्यादिर्लुप्यते । ध्रुवाऽसीति प्रतिपद्यते । हस्तग्राभमबीष्टका उपदध्यात् । भद्रं कर्णेभिरिति द्वाभ्यां शान्तिं कृत्वा ताभ्यामुपदधाति ” इति । [हस्तग्राभं] हस्तग्राहं हस्तेन गृहीत्वा जलमित्यर्थः । तत्र शान्त्यर्थां प्रथमामृचमाह—

**ॐ भद्रं कर्णेभिः शृणुयाम देवाः । भद्रं पश्येमाक्षभिर्यजत्राः ।**
**स्थिरैरङ्गैस्तुष्टुवाꣳसस्तनूभिः । व्यशेम देवहितं यदायुः, इति ।**

---

१ ग °ताः ॥ ५ ॥ हेतून्प्र° । २ ख. °विधी चैव । ३ ख. °र्तितौ ॥ ८ ॥ रु° । ४ ख. मेधयोश्चै° । ५ ख. प्रवर्तते । ६ ख. ग बोधायमे । ७ ग. °णाच स्त्र° । ८ ग. °ण्णाश्चाऽऽप ।

**हे देवा** इन्द्रादयो **भद्रं** कल्याणं श्रुतिस्मृतिवाक्यरूपं **कर्णेभि**राचार्यान्तेवासिरूपाणामृत्विग्यजमानरूपाणां वाऽस्माकं बहूनां कर्णैः **शृणुयाम** युष्मत्प्रसादात्सर्वदा श्रोतुं समर्थाः स्याम । श्रुत्वा च **यजत्रा** यागक्षमा वयं **भद्रं** कल्याणं यज्ञादिकं कर्म**ाक्षभि**श्चक्षुरिन्द्रियैः साक्षात्**पश्येम** । **स्थिरै**रविकलै**रङ्गै**श्चक्षुरादिभिर्हस्तादिभिश्चावयवै**स्तनूभि**स्तथाविधशरीरै[१]र्युक्ता वयं **तुष्टुवांसो** युष्मदीयां स्तुतिं कुर्वाणा यद्यस्मात्कारणा**द्देवहितं** देवेन प्रजापतिना समर्पितं सर्वमप्यायु**र्व्यशेम** विशेषेण प्राप्नवाम । तस्मादपमृत्योरभावाच्चिरं भद्रं शृणुयामेति पूर्वत्रान्वयः ।

अथ द्विती[२]यामाह—

**स्वस्ति न इन्द्रो वृद्धश्रवाः । स्वस्ति नः पूषा विश्ववेदाः ।**

**स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः । स्वस्ति नो बृहस्पतिर्दधातु,** इति ।

वृद्धैर्महात्मभिः सदा पुराणादिषु श्रूयत इति **वृद्धश्रवाः** । तादृश **इन्द्रो नो**ऽस्माकं **स्वस्ति दधात्व**ध्ययनश्रवणानुष्ठानार्थं क्षेमं संपादयतु । विश्वं वेत्ति जानातीति **विश्ववेदाः** । तादृशः **पूषा**ऽपि **नः स्वस्ति दधातु** । अरिष्टमहिंसा तस्य **नेमि**स्थानीयः । यथा लोहमयी नेमिः काष्ठमयस्य चक्रस्य भङ्गाभावाय पाल्यत्येवमयं **तार्क्ष्यो** गरुडोऽपि सर्पादिकृतां हिंसां निवार्य तत्पालकत्वाद**रिष्टनेमिः** । तादृशस्तार्क्ष्यो **नः स्वस्ति दधातु** । **बृहस्पति**श्च ब्रह्मवर्चसं परिपाल्य **नः स्वस्ति दधातु** । एतन्मन्त्रद्वयं शान्त्यर्थमादौ पठित्वा तन्मन्त्रद्वयेनाबीष्टकाद्वयमुपदध्यात् ।

कल्पः—"आपमापामिति पञ्चभिर्महानाम्नीभिरप्णोदकम् " इति । उपदधातीत्यनुवर्तते । तत्र प्रथममाह—

**आपमापामपः सर्वाः । अस्मादस्मादितोऽमुतः ( + १ ) ।**

**अग्निर्वायुश्च सूर्यश्च । सह संचस्करर्द्धिया,** इति ।

**अहं सर्वा अपः** सर्वदेशवर्तीनि जलान्या**पमापां** पुनः पुनः प्राप्तवानस्मि । आपमित्यस्य वीप्सया पौनःपुन्यं लभ्यते । दीर्घस्य छान्दसत्वाद्द्वितीयोऽप्यापमित्येव शब्दः । जललाभाय स्थानविशेषा निर्दिश्यन्ते**ऽस्मादस्मादि**[ति]दंशब्देन वीप्सायुक्तेन सर्वनाम्ना । जलस्थानानि गङ्गासरस्वतीयमुनागोदावरीकावेर्यादीनि विद्यन्ते तस्मात्सर्वस्माज्जलस्थानात्प्राप्तवानस्मीति पूर्वत्रान्वयः । **इतोऽमुत** इत्याभ्यां शब्दाभ्यां भूलोकस्व-

+ वाक्यदशकबोधकोऽयमङ्कः । एवमग्रेऽपि बोध्यम् । अयं च क. ख. पुस्तकयोर्नास्ति । एवमग्रेऽपि स तत्र नास्तीति बोध्यम् ।

१ क. ख. °रीरयुक्ता । २ ख. ग. °तीयमा° । ३ क. °यच° । ४ ख. ग. °त्वा प्रणव° ।

र्गलोकावभिधीयेते । तस्मादप्युभयस्माज्जलं प्राप्तवानित्यन्वयः । तामेतां सर्वजलप्राप्तिमग्निवायुसूर्याः संपादयन्त्विति शेषः । अहं तैर्देवैः **सह ऋद्ध्या** समृद्धिनिमित्तं **संचस्कर** ता अपः संस्करोमि ।

अथ द्वितीयामाह—

**वाय्वश्वा रश्मिपतयः । मरीच्यात्मानो अद्रुहः ।**
**देवीर्भुवनसूवरीः । पुत्रवत्त्वाय मे सुत, इति ।**

वायव एवाश्वस्थानीया वोढारो यासामपां ता **वाय्वश्वाः** । आदित्यरश्मय एव पातारो यासामपां ता **रश्मिपतयः** । मरीचय एवाऽऽत्मा शरीरमाधारभूतं यासामपां ता **मरीच्यात्मानः** । **अद्रुहः** कस्यचिदपि द्रोहमकुर्वाणाः । **देवीः** स्वच्छत्वेन द्योतमानाः । **भुवनसूवरी**र्भूतजातस्य सवित्र्यः । ईदृश्य आपो याः सन्ति तथाविधा हे आपो यूयं मे मम **पुत्रवत्त्वाय** बहुपुत्रयुक्तत्वाय **सुता**नुजानीत ।

अथ तृतीयामाह—

**महानाम्नीर्महामानाः । महसो महसः स्वः ।**
**देवीः पर्जन्यसूवरीः । पुत्रवत्त्वाय मे सुत(२), इति ।**

महदधिकं नाम यासामपां ता **महानाम्न्यः** । आप्नोतिधातोरुत्पन्नस्याप्शब्दस्य सर्वफलप्राप्तिवाचकत्वान्महानामत्वम् । **महामाना** अधिकपूजायुक्ताः । सर्वकर्मसु शुद्धिहेतुत्वेनाधिकपूज्यत्वम् । **महसो महस**स्तत्तद्देवताविषयपूजायाः **स्वः** सवित्र्यः प्रवर्तिका इत्यर्थः । सति ह्युदकेऽर्घ्यपाद्यादिना देवाः पूज्यन्ते । **देवीः** स्वच्छत्वेन द्योतमानाः । **पर्जन्यसूवरी**र्मेघेन प्रेरिताः । तादृश्यो या आपः सन्ति तथाविधा हे आपो **मे** मम **पुत्रवत्त्वाय** बहुपुत्रसंपत्तये **सुत** प्रेरयत ।

अथ चतुर्थीमाह—

**अपाऽश्न्युष्णिमपा रक्षः । अपाऽश्न्युष्णिमपा रघम् ।**
**अपाघ्रामप चावर्तिम् । अप देवीरितो हित, इति ।**

अश्नाति भुङ्क्त इत्यश्निर्भोक्ता । ओषति दहतीत्युष्णिर्दाहकोऽग्निः । अश्नीनां भोक्तॄणामुष्णिर्दाहको योऽग्निः सोऽयम**श्न्युष्णिः** । योऽग्निर्गृहान्दहति सोऽयं भोग्यवस्तुविनाशकत्वाद्भोक्तृदाहको भवति । तादृशमग्निमितोऽस्मात्पार्श्वाद्धे आपो यूयम**पहितापहि**नुत । वियोजयतेत्यर्थः । तथा **रक्षो** बाधकं राक्षसम**पहित** । तथाऽ-

१ क ख. हे यू॰ । २ क. °हकोऽग्निः ।

**इन्धुर्षिण** भोक्तॄणां शरीरदाहकं ज्वरादिरूपमग्निमपहित । [**रघं!**] ज्वरदाहकृतं शरीरशोषणं तद्धेतुभूतं पापं चापहित । **अघ्रां** प्राणादिज्ञानशक्त्यभावमपहित । **अवर्तिं** वृत्तिर्जीवनं तद्विरोधि दारिद्र्यमपहित । **देवीः** स्वच्छत्वेन द्योतमाना हे आपोऽन्यदपि प्रतिकूलं सर्वमितोऽस्मत्समीपादपहित[1] ।

अथ पञ्चमीमाह—

**वज्रं देवीरजीताँश्च । भुवनं देवसूवरीः ।**
**आदित्यानदितिं देवीम् । योनिनोर्ध्वमुदीषत, इति ।**

हे आपो यूयं देवीर्द्योतनात्मिकाः सत्यो **वज्रमिन्द्रायुधमूर्ध्वमुपरिदेशे** द्युलोक **उदीषतास्मद्रक्षार्थमुन्नयत** । उपरि हि वज्रे दृश्यमाने शत्रूणां भीतत्वादस्माकं रक्षा भवतीत्यर्थः । **अजीता**ञ्शत्रुभिरजितानस्मानप्युपरिदेशे रक्षार्थमुन्नयत । **भुवनं** भूतजातं गवादिकं **चोदीषत** । **देवसूवरीर्देवानामपि** सवित्र्यः प्रेरयित्र्यो यूयमादित्यानदितेः पुत्रान्सर्वान्देवान**दितिं देवीं** च **योनिना** कारणत्वेनोदीषत । सर्वेऽपि देवा अस्मद्रक्षायाः * कारणा भवन्त्वित्यर्थः ।

कल्पः—“ शिवा नः शंतमे(मा इ)ति × सौषध्योऽपोऽध्वर्यवे ददाति । स ताः प्रतिगृह्य शिवा न इत्युपदधाति” इति । पाठस्तु—

**शिवा नः शंतमा भवन्तु । दिव्या आप ओषधयः, इति ।**

दिवि भवा या **आपो** याश्चौषधयो विद्यन्ते ताः सर्वा **नोऽ**स्माकं **शिवाः** सुखहेतवः **शंतमा** अतिशयेन दुःखशान्तिहेतवश्च **भवन्तु** ।

कल्पः—“ सुमृडीकेति भूमिवतीमुपदध्यादेताः पुरस्तात् ” इति । पाठस्तु—

**सुमृडीका सरस्वति । मा ते व्योम संदृशि ( ३ ), इति ।**

**= अमुतः सुतौषधयो द्वे च ॥**

**इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके प्रथमप्रपाठके**
**प्रथमोऽनुवाकः ॥ १ ॥**

---

* अत्र पुंस्त्वं चिन्त्यम् । पाठस्तु सकलादर्शपुस्तकेष्वेवमेवोपलभ्यते । करोतीति कारण इति व्युत्पत्तिर्वा । × छान्दसत्वात्स धुत्वम् । = एतदनुवाकगतवाक्यदशकसंकलनार्थं तत्तद्वाक्यदशकान्तिमपदगणनम् । एवं प्रत्यनुवाकसमाप्तौ ज्ञेयम् । एतच्च क. ख. पुस्तकयोरेकस्याप्यनुवाकस्य समाप्तौ न दृश्यते ।

---

१ क. °त प° । २ ख. °तमाना° । ३ क. °क्षार्थं वज्रमु° ४ क. ख. ग. °क्षार्थं वज्रमु° ।

**हे सरस्वति** सरोयुक्तभूमिरूप इष्टके त्वं **सुमृडीका** सुष्ठु सुखहेतुर्भव। **ते** तव संबन्धि **व्योम** च्छिद्रमोषधिभिराच्छन्नत्वान्मा **संदृशि** दृष्टं मा भूत्।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यके प्रथमप्रपाठके प्रथमोऽनुवाकः ॥ १ ॥

---

अथ प्रथमप्रपाठके द्वितीयोऽनुवाकः।

---

कल्पः—" स्मृतिः प्रत्यक्षमैतिह्यमित्यष्टौ[१] मध्ये शुक्रं ते अन्यदिति च " इति। उपदध्यादित्यनुवर्तते। तत्र प्रथमामाह—

**स्मृतिः प्रत्यक्षमैतिह्यम्। अनुमानश्चतुष्टयम्।**
**एतैरादित्यमण्डलम्। सर्वैरेव विधास्यते, इति।**

**स्मृति**रनुमेयश्रुतिमूलं मन्वादिशास्त्रम्। **प्रत्यक्षं** सर्वपुरुषाणां श्रोत्रेण ग्राह्यं वेदवाक्यं च। **ऐतिह्य**मितिहासपुराणमहाभारतब्राह्मणादिकम्। **अनुमानः** शिष्टाचारः। तेन हि मूलभूतं श्रुतिस्मृतिलक्षणं प्रमाणमनुमीयते। तदेतत्स्मृत्यादि**चतुष्टय**मवगतिकारणभूतं प्रमाणम्। **एतैः** स्मृत्यादिभिः **सर्वैरेव** प्रमाणैरादित्यमण्डलं **विधास्यते** प्रमीयते, यादृशमिदं मण्डलं भवति यथा च प्रवर्तते यथा[२] वा मन्वन्तरादिभेदभिन्नं कालं प्रवर्तयति यथा चोदकसृष्ट्यादिना विश्वमुत्पादयति तत्सर्वं स्मृत्यादिप्रमाणसिद्धम्। हेऽग्नि-ष्टके त्वं तथाविधमण्डलस्वरूपाऽसीति स्तुतिः।

अथ द्वितीयामाह—

**सूर्यो मरीचिमादत्ते। सर्वस्माद्भुवनादधि।**
**तस्याः पाकविशेषेण। स्मृतं कालविशेषणम्, इति।**

अयं **सूर्यो** जगदादौ **मरीचिं** सर्वव्यवहारहेतुभूतं कंचिद्रश्मिमा**दत्ते**। कुत्राऽऽदत्त इति तदुच्यते—**सर्वस्माद्भुवनादधि** सर्वस्य भूतजातस्योपरि, रसवीर्यविकारादिभिः सर्वभूतजातमनुग्रहीतुमित्यर्थः। **तस्या** मरीचेः **पाकविशेषेण** तत्कृतेन पदार्थपरिपाकतारतम्येन **कालविशेषण**मस्माभिः **स्मृतं** भवति। प्रथमं तावद्बीजं मरीचिकृतेन केनचित्पाकेनाङ्कुरी भवति स चाङ्कुरः पाकान्तरेण काण्डी भवति तच्च काण्डं पाकान्तरेण पत्रपुष्पाण्युत्पादयति तच्च पुष्पं पाकान्तरेण फली[३] भवत्येवं कालकृततत्तत्पदार्थावस्था

---

१ ख. °क्षमि°। २ क. °था म°। ग. °था चाम°। ३ ग. फलि।

दृष्टा । तदुचिताः क्षणमुहूर्तदिवसपक्षमासादिरूपाः कालविशेषा अस्माभिर्निश्चीयन्ते । ईदृशकालरूपा त्वमसीतीष्टकास्तुतिः । एवं सर्वं सर्वत्र द्रष्टव्यम् ।

अथ तृतीयामाह—

**नदीव प्रभवात्काचित् । अक्षय्यात्स्यन्दते यथा ( १ ) ।**
**तां नद्योऽभिसमायन्ति । सोरुः सती न निवर्तते,** इति ।

अत्र कालस्य दृष्टान्तोऽभिधीयते—प्रभवत्युत्पद्यते जलमस्मादिति गोदावर्याद्युत्पत्तिप्रदेशः प्रभवः स च निरन्तरजलोत्पत्तिदर्शनादक्षय्यः । तस्मादक्षय्यात्प्रभवादुत्पन्ना **महानदी स्यन्दते** प्रवहति । सा नदी यादृशी तादृशोऽयं संवत्सरः । **यथा** च **तां** महानदीमन्याः क्षुद्रा **नद्योऽभिसमायन्त्याभिमुख्येन** संयोगं प्राप्नुवन्ति **सा** च महानदी बहुक्षुद्रनदीमेलनादुरुर्विस्तीर्णा **सती न निवर्तते** कदाचिदपि न शुष्यति किंतु निरन्तरं प्रवहति ।

अथ चतुर्थीमाह—

**एवं नानासमुत्थानाः । कालाः संवत्सरꣳ श्रिताः ।**
**अणुशश्च महशश्च । सर्वे समवयन्त्रिं तम्,** इति ।

अत्र दार्ष्टान्तिकोऽभिधीयते—यथा दृष्टान्ते क्षुद्रा नद्यः सर्वा महानदीमेकामभिसमायन्ति, **एवमेव नानासमुत्थाना** नानासमाकारा **अणुशश्च महशश्च** क्षणमुहूर्तादिरूपाः क्षुद्र**कालाश्च** दिवसपक्षादिरूपा महा**कालाश्च संवत्सरं श्रिताः** । ते क्षुद्रा महान्तश्च **सर्वे समवयन्त्रि तम्** । रेफस्य च्छान्दसत्वात्प्राप्नुवन्तीत्यर्थः ।

अथ पञ्चमीमाह—

**स तैः सर्वैः समाविष्टः । उरुः सन्न निवर्तते ।**
**अधिसंवत्सरं विद्यात् । तदेव लक्षणे ( २ ),** इति ।

**स** च संवत्सरस्तैरणुभिर्महद्भिश्च कालावयवैः **सर्वैः सम्यगाविष्ट उरु**र्विस्तीर्णः **सन्न निवर्तते** कदाचिदपि न विच्छिद्यते, किंतु प्रभवविभवादिरूपेणानुवर्तत एव । तस्मा**दधिसंवत्सरं** संवत्सरस्योपरि सर्वं कालाधीनं जगदाश्रितमिति **विद्यात्** । **लक्षणे** काललक्षणे निरूप्यमाणे सति **तदेव** संवत्सररूपमेव व्यावहारिककालस्य तत्त्वमवगम्यत इति शेषः ।

---

१ घ. ऊरुः । २ ख. ग. °ति । सं° ।

अथ षष्ठीमाह—

**अणुभिश्च महद्भिश्च । समारूढः प्रदृश्यते ।**
**संवत्सरः प्रत्यक्षेण । नाधिसत्त्वः प्रदृश्यते, इति ।**

**अणुभिश्च** स्वल्पैः क्षणमुहूर्तादिभिरपि **महद्भिश्च** दिवसपक्षादिभिरप्यवयवैः **समारूढः** सम्यक्प्राप्तः **संवत्सरः प्रत्यक्षेण प्रदृश्यते** । आविपालगोपालं हि सार्वजनीनेनानुभवेन व्यवह्रियमाणत्वात् । **अधिसत्त्वः** सत्त्वात्सर्वप्राणिनामस्तित्वेन प्रतीयमानात्संवत्सररूपात्कालादधिको नित्यो निरवयवः परमात्मरूपो व्यावहारिककालस्याप्युत्पादकः कालात्माऽधिसत्त्वः । योऽयं शास्त्रदृष्टिमन्तरेण **न प्रदृश्यते** ।

अथ सप्तमीमाह—

**पटरो[1] विक्लिधः पिङ्गः । एतद्वरुणलक्षणम् ।**
**यत्रैतदुपदृश्यते । सहस्रं तत्र नीयते, इति ।**

योऽयमधिसत्त्वनामको व्यावहारिककालस्याप्युत्पादकः परमात्मरूपश्चैन्यात्मकः कालोऽस्ति "ज्ञः[2] कालकालः" इति श्रुत्यन्तरात् । तस्य कालस्य शास्त्रदृष्टिवर्जितैरदर्शने कारणमुच्यते । पटो वस्त्रसदृशश्चर्मविशेषोऽस्यास्तीति **पटरः** । **विक्लिधो** विविधक्लेदनयुक्तः । **पिङ्गः** पिङ्गलवर्णः । एतच्छुक्लकृष्णादेरुपलक्षणम्[3] । एतैः सर्वैर्विशेषणैर्मांसमयोऽक्षिगोलकविशेषो[4] विभज्यते । अस्ति हि तस्य पक्ष्मा(क्ष्म)पटलाख्यश्चर्मखण्डः पटसदृशः । विक्लेदनमप्यस्ति यदा तदा चक्षुषि जलस्रवणात्[5] । पिङ्गलः शुक्लादिवर्णः स्पष्ट एव । एतादृशं यदक्षिगोलकमेतदेव **वरुणस्य** पारमार्थिककालतत्त्वावरकस्य **लक्षणं** स्वरूपं **वरुणलक्षणं,** मांसदृष्टिरेव तत्त्वविषयां शास्त्रदृष्टिमावृणोतीत्यर्थः । **यत्र** यस्यां मांसदृष्टावेतज्जगत्प्रतीयते तत्र क्षणो मुहूर्तो दिवस इत्यादिरूपभेदेन कालभेदानां **सहस्रं नीयते** । व्यवह्रियतेऽवगम्यत इत्यर्थः ।

अथाष्टमीमाह—

**एकꣳ हि शिरो नाना मुखे । कृत्स्नं तदृतुलक्षणम् (३) ।**
**उभयतः सप्तेन्द्रियाणि । जल्पितं त्वेव दिह्यते, इति ।**

**एकमेवास्य** व्यावहारिककालस्य **शिरः** संवत्सर एव शिरोवदुत्तमावयवस्थानीयः । **मुखे तु नाना** मुखस्थानीये दक्षिणोत्तरायणे द्विविधे । यच्छिरःस्थानीयस्य संवत्सर-

१ घ. पटारो । २ ग. यः । ३ क. 'दृशः पक्ष्मवि' । ४ ख. ग. 'योऽस्थिगो' । ५ ख. 'लश्रव' ।

स्यैकत्वं यच्च मुखस्थानीययोर्दक्षिणोत्तरायणयोर्द्वित्वं तत्कृत्स्नमपि ऋतुलक्षणमृतूनां ज्ञापनम् । सति हि संवत्सरे ततश्च तदंशयोर्दक्षिणोत्तरायणयोः पश्चात्तदंशत्वेनर्तवो ज्ञातुं शक्यन्ते । उभयतस्तयोरुभयोर्मुखस्थानीययोरयनयोः सप्तेन्द्रियाणि सप्तसंख्याकेन्द्रियाधारशीर्षण्यच्छिद्रयुक्तानि शरीराण्युत्पद्यन्ते । तदेवं शास्त्रदृष्टिवर्जितानामेकः संवत्सरो द्वे अयने तदवयवा ऋतवस्तेषु च सर्वेषु कालेषु प्राणिशरीराण्युत्पद्यन्त इत्येवं भ्रान्तो व्यवहारः प्रवर्तते । परमार्थतस्तु शास्त्रदृष्ट्या पर्यालोच्यमानो जल्पितमेव दिद्यते संवत्सरायनादिनाममात्रमुपचीयते न त्वभिधेयः कश्चिदर्थोऽस्ति । अत एवोपनिषत्सु—" वाचाऽऽरम्भणं विकारो नामधेयम् " " नेह नानाऽस्ति किंचन " " मायामात्रमिदं द्वैतम् " इति व्यवहारस्य मिथ्यात्वं बहुशश्चाऽऽम्नायते । एवमष्टौ मन्त्रा अभिहिताः ।

अथ ब्राह्मणमुच्यते—

शुक्लकृष्णे संवत्सरस्य । दक्षिणवामयोः
पार्श्वयोः । तस्यैषा भवति, इति ।

**संवत्सरस्य** व्यावहारिकस्य मुख्यस्य कालस्य **दक्षिणवामपार्श्व**स्थानीययोरुभयोः **शुक्लकृष्णे** तथाविधवर्णयुक्ते अहोरात्रे विद्येते । **तस्यै**तस्यार्थस्य प्रतिपादिका काचिदृग्विद्यते ।

अथ तामृचमाह—

**शुक्रं ते अन्यद्यजतं ते अन्यत् । विषुरूपे अहनी द्यौरिवासि । विश्वा हि माया अवसि स्वधावः । भद्रा ते पूषन्निह रातिरस्त्विति, इति ।**

हे **पूषञ्ज**गतः पोषक संवत्सर **ते** तवांशरूपं **शुक्रं** श्वेतवर्ण**मन्य**दहराख्यं वस्तु पृथगेवास्ति । तथा **ते** तव **यजतं** यजनीयं निशितायां निर्वपेदित्यादियागोपलक्षितं रात्रिरूप**मन्य**त्पृथगेवास्ति । तदेवं **विषुरूपे** परस्परविलक्षणरूपे **अहनी** अहोरात्रे वर्तेते तयोर्मध्ये **द्यौरिव** त्वमसि । तयोः प्रवर्तयिता वर्तसे । हे **स्वधावो**ऽन्नवत्संवत्सर **विश्वा मायाः** सर्वाः पक्षमासादिकल्पितकालावयवाकृतीर**वसि** पालयसे । हे **पूषन्निह** कर्मणि **ते** तव **रातिर्भद्राऽस्तु** फलप्रदानं समीचीनमस्तु । इत्यनेन मन्त्रेण । पूर्वमन्त्रवदुपधानं कल्प एवोदाहृतम् ।

---

१ क. °र्जिना° । २ क. °माने ज° । ३ ख. रात्रम° । ४ क. °त्रिरन्य° ।

अथ ब्राह्मणमुच्यते—

नात्र भुवनम् । न पूषा । न पशवः । नाऽऽदित्यः संवत्सर एव प्रत्यक्षेण प्रियतमं विद्यात् । एतद्वै संवत्सरस्य प्रियतमꣳ रूपम् । योऽस्य महानर्थ उत्पत्स्यमानो भवति । इदं पुण्यं कुरुष्वेति । तमाहरणं दद्यात् ( ४ ), इति ।

यथा लक्षण ऋतुलक्षणं भुवनꣳ सप्त च ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके प्रथमप्रपाठके द्वितीयोऽनुवाकः ॥ २ ॥

अस्मिन्ब्राह्मणे पारमार्थिकतत्त्वं व्यावहारिककालश्च विविच्य प्रदर्श्यते—**अत्र** पारमार्थिकतत्त्वे **भुवनं** भूतजातं **नास्ति** । तथा सति सर्वस्माद्भुवनादधीति यदुक्तं तन्नोपपन्नम् । **न** वा **पूषा** कश्चिद्देवोऽस्ति । तेन भद्रा ते पूषन्नित्येतदयुक्तम् । **न** च **पशवो** द्विपादश्च[1] चतुष्पादो वा सन्ति । तेनोभयतः सप्तेन्द्रियाणीत्येतदयुक्तम्[2] । **नाप्यादित्यः** कश्चिदस्ति । तस्मादेतैरादित्यमण्डलमित्येतन्न[3] युक्तम् । किं तर्हि विद्यत इति चेत्, उच्यते—**संवत्सर एव** निरस्तसमस्तक्षणमुहूर्ताद्यवयवविशेषोऽखण्ड एकाकारः कालतत्त्वमेव विद्यते । तर्हि तथाविध[4] एव नित्यो निरवयवः संवत्सर एव परमार्थभूतः प्राणिभिरवबुध्यतामिति चेत् । मैवम् । **प्रत्यक्षेण** हि लोकसिद्धेन सर्वो जन्तुः **प्रियतममेव रूपं** विन्देन्न तु वस्तुतत्त्वम् । किं तर्हि प्रियतममिति चेत्तदुच्यते । क्षणमुहूर्तदिवसपक्षाद्यात्मकं काल्पनिकं संवत्सरे यद्रूपमेतदेव शास्त्रदृष्टिरहितानां **प्रियतमम्** । **अस्य** यजमानस्य **योऽ**यमिष्टकोपधानपूर्वकः[6] ऋतुरुत्पत्स्यमानो **महान**धिको**ऽर्थः** फलहेतुत्वेन पुरुषार्थो **भवति तमेवाऽऽहरणमा**हर्तव्यमनुष्ठेयमिष्टकोपधानपूर्वकं ऋतुं **दद्या**च्छिष्येभ्य उपदिशेत् । उपदेशप्रकार एवे**दं पुण्यं कुरुष्वे**तिवाक्येन स्पष्टं(ष्टी) क्रियते । नात्र भुवन इ(नामि)[5]त्यादिपरमार्थतत्त्वं नोपदिशेत् । यद्यपि तत्त्वमेवोत्तमं तथाऽपि विवेकाभावान्नासावुपदेशार्ह इत्यभिप्रायः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यके प्रथमप्रपाठके द्वितीयोऽनुवाकः ॥ २ ॥

---

१ ग. द्विपद्° । २ ग. °तुष्पदो । ३ क. °दप्ययु° । ४ ख. ग. यथाविध । ५ ख. ग. °यामि° । ६ क. ख. °र्वकं क्र° ।

अथ प्रथमे तृतीयोऽनुवाकः ।

---

कल्पः—" साकंजानामित्येकादश पुरस्तात् " इति । उपदधातीत्यनुवर्तते । तत्र प्रथमामाह[1]—

**साकंजानाꣳ सप्तथमाहुरेकजम् । षडुद्यमा ऋषयो देवजा इति । तेषामिष्टानि विहितानि धामशः । स्थात्रे रेजन्ते विकृतानि रूपशः, इति ।**

**साकंजानां** सहोत्पन्नानामादित्यरश्मीनां मध्ये **सप्तथं** यः स सप्तमो रश्मिः " सूर्यो मरीचिमादत्ते " इति पूर्वत्रोक्तस्तं[2] सप्तमं रश्मि**मेकजमाहु**रितररश्मिभ्यः पूर्वमेकं[3] एवोत्पन्न इत्यभिज्ञाः कथयन्ति । **देवजा** आदित्यदेवादुत्पन्ना इतरे षड्रश्मय **उद्यमाः** शिक्यस्योद्यमा इव सप्तमरश्मेरुपसर्जनभूता इत्यप्याहुः । ते च रश्मयः प्रकाशवत्त्वादृषिसमाः । **तेषां** षण्णां रश्मीनामि**ष्टा**न्यभिप्रेतानि **धामशः** स्थानानि **विहितानि** प्रजापतिना निर्मितानि । ते च रश्मय ऋत्वात्मका अत एकस्य वसन्तत्वेन प्राथम्यमन्यस्य तदनन्तरभावित्वं ततोऽप्यूर्ध्वभावित्वमन्यस्येत्येवं स्थानविकल्पितानि **स्थात्रे** जगतः स्थित्यर्थं **विकृतानि** शीतोष्णादिरूपेण विलक्षणानि **रूपशः** स्वरूपाणि **रेजन्ते** कम्पन्ते प्रवर्तन्त इत्यर्थः ।

अथ द्वितीयामाह[4]—

**को नु मर्या अमिथितः । सखा सखायमब्रवीत् । जहाको अस्मदीषते, इति ।**

हे **मर्या** मरणशीला मनुष्या इदमेकं वचनं ब्रूतेति शेषः । **को नु** युष्माकं मध्ये कः खल्व**मिथित** इतरेणाबाधितः **सखा** तमबाधकं **सखायमब्रवीत्** । किमब्रवीदिति तदुच्यते—**जहाको** हानशीलोऽयमतोऽस्मत्सकाशा**दीषते** भीतः पलायत इति । अयमर्थः । द्वयोः सख्योः परस्परविरोधे सत्येकेन[5] बाधित इतरः स्वयमपि तं बाधं बाधितुमिच्छन्निदं ब्रूतेऽयं परित्यागशीलो मत्तः पलायत इति । न त्वेतद्वचनं सख्योर्युक्तं ततो मनुष्या भवतां मध्ये सखा खलु सखायमन्यमेवं ब्रूते न कश्चिदप्येवं वक्तीति ।

अथ तृतीयामाह[6]—

**यस्तित्याज सखिविदꣳ सखायम् । न तस्य वाच्यपि**

---

१ ग. °थममा । २ क. ग. °त्रोक्तः स° । ३ ख. °कमेवोत्तरमित्य° । ग. कमेवोत्तरं न इ° । ४ ग. °तीयमा° । ५ ख. ग सतीत्ये° । ६ ग. °तीयमा° ।

भागो अस्ति । यदी॑ᳪ शृणोत्यलक॑ᳪ शृणोति
( १ ) । न हि प्रवेदं सुकृतस्य पन्थामिति, इति ।

**यः** पुमान्स्वयं क्रूरहृदयः सन्स्वविषये **सखिविदं** मदीयोऽयं सखेति ज्ञातारमन्यं **सखायं तित्याज** परित्यजति । अयमर्थः । द्वयोः सख्योर्मध्ये सात्त्विक एकः पुमानितरं प्रति मदीय आप्तः सखाऽसावित्येवं विश्वासेऽवातिष्ठत इतरस्तु दुरात्मा तं परित्यजति । **तस्य** सखिद्रोहिणो **वाच्यपि** वेदशास्त्राध्ययनेऽपि **भागो** भाग्यं **नास्ति** क्वापि विश्वासाभावात् । किमु वक्तव्यमर्थज्ञानतदनुष्ठानयोर्नास्ति भाग्यमिति । **यद्यप्ययं** सखिद्रोही ईमिदं[१] वेदवाक्यं **शृणोति** तथाऽप्यलकमलीकं मिथ्यैव **शृणोति** । सखिद्रोहिणस्तस्योपकारके वेदेऽपि प्रामाण्यबुद्ध्यभावात् । तस्मादयं वेदद्रोही **सुकृतस्य पन्थां** पुण्यमार्गं **न हि प्रवेद** सर्वथा न जानाति । ततो बुद्धिमान्पुरुषः सख्यौ वेदेऽतिविश्वासाभावरूपं द्रोहं परित्यज्याऽऽस्तिकः सन्नारुणकेतुकचयनमनुतिष्ठेदित्यभिप्रायः । **इति**-शब्दः शाखान्तरप्रदर्शनार्थः । इत्येष शब्दः शाखान्तरे पठ्यतेऽतः सखिद्रोहस्यान्याय्यत्वादेकः सखाऽन्यस्मिन्सख्यावुपलम्भं वक्तुं नार्हतीति पूर्वमन्त्रस्याभिप्रायः ।

चतुर्थी[२]माह—

ऋतुर्ऋतुना नुद्यमा॑नः । विन॑नादाभिधा॑वः । षष्टिश्च
त्रि॑ᳪशका॑ वल्गाः । शुक्लकृ॑ष्णौ च षाष्टि॑कौ, इति ।

अथ संवत्सरगर्भाणामृतूनां स्वभावोऽभिधीयते—ऋतुनैकेनान्य **ऋतुर्नुद्यमानः** प्रेर्यमाणोऽभिधाव आभिमुख्येन धावन्विननाद विशिष्टशब्दं[३] चकार । अयमर्थः । वसन्ततीव(तौर)नन्तरमेव ग्रीष्मर्तुः प्रवर्तते न त्वीषदपि व्यवधानमस्ति तदेतत्पूर्वेणोत्तरस्य प्रेर्यमाणत्वम् । स चावच्छिन्नाभिस्तिथिभिरभिनिष्पद्यते तदेतदभिधावनमित्युच्यते । उपरिष्टादेव "एता वाचः प्रयुज्यन्ते" इति तत्तदृत्वनुसारेण प्राणिनां वाच उदाहरिष्यन्ते । तदेतदृतुर्विननादेत्यनेन विवक्षितमिति । मुहूर्तानां त्रिंशत्संख्या यस्मिन्नहोरात्रे विद्यते सोऽयं त्रिंशकः । तादृशा बहवस्त्रिंशका अहोरात्रा **वल्गा** वर्गाः समूहरूपा भूत्वा, ऋतावेकस्मिन्**षष्टिः** संपद्यन्ते । षष्टिसंख्याकाहोरात्रात्मक ऋतुरित्यर्थः । **चकारः** पूर्वोक्तनुद्यमानत्वादिस्वभावेन समुच्चयार्थः । तस्याश्च षष्टिसंख्याया द्वौ भागौ तौ च **शुक्लकृष्णा**त्मकौ[४] । एकैकस्मिन्मासि शुक्लतिथयः पञ्चदश[५] मिलित्वा

---

१ ग. वेदे वा° । २ ग. °तुर्थेमा° । ३ क. °शिष्टं श° । ४ क. ख. ग. °क्लकृष्णावि° । ५ क. ख °श मासे मि° । ग. घ. °श मासो मि° ।

त्रिंशत् । एवं कृष्णपक्षतिथयोऽपि । चकारः पूर्ववत् । सोऽयमृतूनां स्वभाव इति मन्त्राभिप्रायः ।

अथ पञ्चमीमाह—

**सारागवस्त्रैर्जरदक्षः । वसन्तो वसुभिः सह ।**
**संवत्सरस्य सवितुः । प्रैषकृत्प्रथमः स्मृतः,** इति ।

समन्ताद्राग आरागस्तेन सहितानि सारागाणि तादृशानि च वस्त्राणि येषां ते **सारागवस्त्रास्तैर्वसुभिः** प्रजानां निवासहेतुभिर्देवताविशेषैः **सहायं वसन्त** ऋतुर्**जरदक्षो** जरे जले दक्षः कुशलः सन्सवितुऋतूनां प्रेरकस्य **संवत्सरस्य** देवस्य **प्रैषकृदा**ज्ञाकारी **प्रथम** ऋतूनां मध्ये मुख्य इत्यभिज्ञैः **स्मृतः** । ऋतूनां स्वामी संवत्सरो देवस्तस्याऽऽज्ञां सर्वे ऋतवः कुर्वन्ति तेषां मध्ये मुख्योऽयं वसन्तः । तदा वृष्टिकालवत्पङ्ककालुष्याभावेन जलं निर्मलं देवतानां वस्त्राणि च शृङ्गारार्थं हरिद्रादिद्रव्यरञ्जितानि भवन्ति सोऽयं वसन्तस्य विशेषस्वभाव इत्यर्थः ।

अथ षष्ठीमाह—

**अमूनादयतेत्यन्यान् ( २ ) अमूंश्च परिरक्षतः ।**
**एता वाचः प्रयुज्यन्ते । यत्रैतदुपदृश्यते,** इति ।

वसन्तप्रवृत्तौ ब्राह्मणानां यज्ञोपनयनादिप्रवृत्तेस्तत्र प्राणिभिरेता **वाचः प्रयुज्यन्ते** । काः पुनर्वाच इति ता उच्यन्ते—**अमून्**बन्धूनाद**यत** यथोचितं भोजयतेत्येवमन्यान्स्वगृहवासिनः पुरुषान्प्रति यज्ञोपनयनादिकर्तारो वदन्ति । **अमूंश्चै**तानप्यागतान्वैदेशिकान्ब्राह्मणान्**परिरक्षतो** हे गृहवर्तिपुरुषा धनादिदानेन परितो रक्षां कुरुत । इत्येतद्वचनजातं यस्मिन्नृतौ **दृश्यते** सोऽयं वसन्त इत्यर्थः ।

अथ सप्तमीमाह—

**एतदेव विजानीयात् । प्रमाणं कालपर्यये ।**
**विशेषणं तु वक्ष्यामः । ऋतूनां तन्निबोधत,** इति ।

सारागवस्त्रैरित्यादिमन्त्रद्वयेन वसन्तर्तोरसाधारणस्वरूपं यदुक्त**मेतदेव, कालपर्यये** ग्रीष्माद्यृतुभेदे **प्रमाणं विजानीयात्** । एतद्दृष्टान्तेनानुमातुं शक्यत्वात् । विमता ग्रीष्माद्यृतवोऽसाधारणस्वभावोपेता ऋतुत्वाद्वसन्तवदित्यनुमानम् । तेन च सामान्या-

---

१ ग. °श्चमा° । २ ग. षष्ठमा° । ३ ग. °प्तमा° ।

कारेणास्ति कश्चिदसाधारणस्वभाव इत्यवगतम् । **ऋतूनां** ग्रीष्मादीनां **विशेषणं** **तु** तत्तत्स्वभावविशेषं तूत्तरेषु मन्त्रेषु वयं **वक्ष्यामो हे** बुभुत्सवस्त**न्निबोधत** ।

अथाष्टमीमाह—

**शुक्लवासा रुद्रगणः । ग्रीष्मेणाऽऽवर्तते सह । निज-**
**हन्पृथिवीꣳसर्वाम् (३) । ज्योतिषाऽप्रतिरूपेण सः, इति ।**

योऽयमेकादशानां **रुद्राणां गणः** सोऽयं शुक्लवस्त्रोपेतः **सन्ग्रीष्मेण**र्तुना **सह** **व(हाऽऽव)र्तते** । **स** ग्रीष्मोऽतिप्र(प्रति)रूपेण निरुपमेनात्यधिकेन **ज्योतिषा** तापेन **सर्वां पृथिवीं निजहन्**नितरां धक्ष्यन्वर्तते । यत्रैतल्लक्षणं तं ग्रीष्मं विद्यादित्यर्थः ।

अथ नवमीमाह—

**विश्वरूपाणि वासाꣳसि । आदित्यानां निबोधत ।**
**संवत्सरीणं कर्मफलम् । वर्षाभिर्ददताꣳ सह, इति ।**

इत आरभ्य वर्षर्तोरसाधारणः स्वभाव उच्यते—**संवत्सरीण**मेकस्मिन्संवत्सरे सर्वस्मिन्नपि भोगयोग्यं **कर्मफलं** व्रीह्यादिरूपं कृष्यादिफलं यदस्ति तत्सर्वं **वर्षाभि**-र्वर्षर्तुना **सह**ावस्थाय **ददतां** प्रयच्छतामादित्यानां **वासांसि** वस्त्राणि **विश्व-रूपाणि** विचित्रवर्णोपेतानि **निबोधत** वर्षर्तौ यत्कृष्यादिकर्म क्रियते तत्फलमागा-मिवर्षर्तुपर्यन्तं प्राणिभिर्भोक्तुं पर्याप्तं भवति । तच्च फलं वर्षर्तुस्वामिभिरादित्यैर्दीयते । ते च विचित्रवर्णवस्त्रोपेता इत्यर्थः ।

अथ दशमीमाह—

**अदुःखो दुःखचक्षुरिव । तद्मा पीत इव दृश्यते ।**
**शीतेनाव्यथयन्निव । रुरुदक्ष इव दृश्यते, इति ।**

अयं वर्षर्तु**रदुःखः** स्वयं दुःखरहितोऽपि **दुःखचक्षुरिव दृश्यते** । तस्मिन्काले प्राणिनां चक्षूरोगोत्पत्तेः । तस्मिन्काले प्राणिनां *कामि(म)लादिरोगोपेतत्वात् । अयमृतुः स्वयमपि तथा **पीत इव** प्राणिद्वारा तद्रोगवानिवं **दृश्यते** । × कामि(म)लरोगग्रस्तस्य पीतत्वाभासात् । किंच **शीतेन** वृष्ट्या वायुना च दिने यच्छीतं तेन **शीतेनायमृतु-**

* सर्वेष्वादर्शपुस्तकेषु कामिलादीत्येव पाठः । × अत्राप्यादर्शपुस्तकेषु कामिलरोगेत्यादिरेव पाठः ।

१ क. °शेषमुत्त° । ख. ग. °शेषमन्त्रमुत्त° । २ क. °क्ष्यामो बु° । ३ ग. °ष्टममा° । ४ ग. °निद्दहत्पृथि° । ५ ख. ग. निद्दह° । ६ ख. ग. धक्षन्व° । ७ ग. °वममा° । ८ ग °श-ममा° । ९ ख. ग. तथा । १० क. °त्तेः । तद्दा त° । ११ क. ख. °था प्रा° । १२ क. ख. °ष पीत इव दृ° ।

**रव्यथयन्निव** पीडामप्राप्नुवन्निव **दृश्यते** । सत्यपि तदा शीते प्रावरणाग्निसेवादिना शान्तस्य शीतस्य प्राणिभिः परिह्रियमाणत्वान्नास्ति व्यथा । किंच **रुरुदक्ष इव** रुरवो मृगविशेषास्तैर्दक्षः समृद्ध इवायमृतुर्दृश्यते । अरण्येषु तृणसमृद्ध्या तस्मिन्नृतौ पुष्टानां मृगयूथानां बहुलमुपलम्भात् ।

अथैकादशीमाह—

**ह्लादयते ज्वलतश्चैव । शाम्यतश्चास्य चक्षुषी ।**

**या वै प्रजा भ्रंश्यन्ते । संवत्सरात्ता भ्रंश्यन्ते, इति ।**

अयं वर्षर्तुः सर्वान्प्राणिनो ह्लादयते संतोषयते । अहो सुवृष्टो देवः संपत्स्यन्तेऽस्माकं[2] शस्यानीत्येवं सर्वस्य लोकस्य परितोषः । तस्मिन्नृतौ बीजवापमकृत्वा या **भ्रंश्यन्ते** [भ्रश्यन्ति] ताः **प्रजा** न केवलं तस्माद्दतोरेव भ्रष्टाः किंतु कृत्स्नादपि **संवत्सराद्भ्रष्टाः** । आगामिवर्षपर्यन्तमन्नस्य दुर्लभत्वात् । **यास्तु प्रजास्तस्मिन्नृतौ** क्षेत्रेषु बीजावापं कृत्वा प्रतिष्ठिता भवन्ति ताः प्रजा अन्नस्य सुलभत्वात्समृद्धा दृश्यन्ते । **अस्यैवंविधस्य** वर्षर्तोश्चक्षुषी **ज्वलतश्चैव शाम्यतश्च** । अनेन हि ऋतुना दृष्टाः पदार्थाः शक्तिविशेषलाभेनौज्ज्वल्यं भजन्ते । अतस्तदीये चक्षुषी सर्वान्पदार्थानुज्ज्वलयतः । तथा तस्मिन्नृतौ सर्वे पदार्थाः शान्ता उपद्रवरहिता भवन्ति । अतस्तदीये चक्षुषी सर्वान्पदार्थानुपशमयतः । ईदृशेन लक्षणेन वर्षर्तुरवगन्तव्य इत्यर्थः । तैरेतैरेकादशभिर्मन्त्रैरिष्टका उपधेयाः ।

अथ ब्राह्मणमुच्यते—

**याः प्रतितिष्ठन्ति । संवत्सरे ताः प्रतितिष्ठन्ति । वर्षाभ्य इत्यर्थः (४), इति ।**

**शृणोत्यन्यान्सर्वामेव षट्च ॥**

**इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके प्रथमप्रपाठके तृतीयोऽनुवाकः ॥ ३ ॥**

याः काश्चित्प्रजास्तस्मिन्नृतौ क्षेत्रेषु बीजावापमकृत्वा भ्रंश्यन्ते[भ्रश्यन्ति] ताः प्रजा न केवलं तस्माद्दतोरेव भ्रष्टाः किंतु कृत्स्नादपि संवत्सराद्भ्रष्टाः । आगामिवर्षर्तुपर्यन्तमन्नस्य दुर्लभत्वात् । यास्तु प्रजास्तस्मिन्नृतौ क्षेत्रेषु बीजावापं कृत्वा प्रतिष्ठिता भवन्ति **ताः** प्रजा अन्नस्य सुलभत्वात्कृत्स्नेऽपि **संवत्सरे** प्रतिष्ठिता भवन्ति । यद्यपि[5] या भ्रंश्यन्ते[6]

---

१ क. °लत्वोप° । २ क. ख. °कं सस्या° । ३ ग. लभन्ते । ४ क. भ्रश्यन्ते । ५ क. ग. °पि ता भ्रश्य° । ख. °पि ता भ्रं । ६ ख. ग. °न्तमित्यर्थे° ।

ईत्येतस्मिन्पूर्ववाक्ये भ्रंशस्यापादानवाचकं पञ्चम्यन्तं पदं किमपि नास्ति तथाऽपि वर्षर्तुप्रकरणबलेन तल्लाभाद्वर्षाभ्यो भ्रंश्यन्त इति तस्य वाक्यस्यार्थः संपद्यते ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीय-तैत्तिरीयारण्यके प्रथमप्रपाठके तृतीयोऽनुवाकः ॥ ३ ॥

---

अथ प्रथमे चतुर्थोऽनुवाकः ।

---

कल्पः—"अक्षिदुःखोत्थितस्यैवेति पङ्क्तिहेह वः स्वतपस इति च" इति । अथ प्रथमामाह[3]—

**अक्षिदुःखोत्थितस्यैव । विप्रसन्ने कनीनिके ।**

**आङ्क्ते चाद्गणं नास्ति । ऋभूणां तन्निबोधत इति, ।**

अत्र शरदृतुर्वर्ण्यते—**अक्षिदुःखं** नेत्ररोगः, त[स्मादुत्थित]स्य हि **कनीनिके** अक्षिमध्यवर्तिन्यौ तारके **विप्रसन्ने** नेत्रमलस्यापगतत्वाद्विशेषेण प्रसन्ने भवतः । वर्षर्तावुत्पन्ना नेत्रपीडा शाम्यति यथा कनीनिके प्रसन्ने एवं सर्वं जगदपि मेघपङ्कादिमालिन्याभावात्प्रसन्नं भवति । ततोऽक्षिदुःखोत्थितस्यैवेत्ययमेवकार उपमार्थः । किंचाक्षिरोगाभावात्सर्वो जन **आङ्क्ते** चाञ्जनेन चक्षुषी संस्करोत्यपि । तस्मिन्नृतौ **गणं** ग्रहणं दृष्टिविरोधि नीहारादिकं **नास्ति** तत्सर्वमृतुदेवानामृभूणां सामर्थ्यमिति **निबोधत** ।

अथ द्वितीयामाह[6]—

**कनकाभानि वासांसि । अहतानि निबोधत ।**

**अन्नमश्नीत मृज्मीत । अहं वो जीवनप्रदः, इति ।**

तेषामृभूणां देवानां **वासांसि** वस्त्राणि **कनकाभानि** सुवर्णसदृशानि । **अहतानि** नूतनत्वान्न क्वापि तेषु च्छिद्रं दृश्यते । हे बुभुत्सव एवं **निबोधत** । किंच शरत्काले वाच एतादृश्यः प्रवर्तन्ते । हे जना **अन्नमश्नीतास्मिन्नृतौ** शरीरपुष्टिहेतुत्वाद्भक्ष्यं भोज्यं च पुष्कलं भक्षयत । ततो **मृज्मीत** लेपाञ्शोधयत । **अहं** शरदाख्य ऋतुर्वो युष्माकं **जीवनप्रदः** सुखभोजनेन युक्तं जीवनं प्रयच्छामि ।

अथ तृतीयामाह[7]—

**एता वाचः प्रयुज्यन्ते । शरद्यत्रोपदृश्यते ( १ ) ।**

---

१ क. इत्येते° । २ क. ग. भ्रश्यन्त । ३ ग °थममा । ४ ग. चाद्ग्रहणं । ५ ख. ग. °न्नृतावन्न° । ६ ग. °तीयमा° । ७ ग. °तीयमा° ।

**अभिधून्वन्तोऽभिघ्नन्त इव । वातवन्तो मरुद्गणाः, इति ।**

**यत्र** यदा **शरदाख्य ऋतुरुपदृश्यते** तदानीमन्नमश्नीतेत्येता **वाचः** प्राणिभिः **प्रयुज्यन्ते**, अनेन लक्षणेन शरदाख्यमृतुं जानीयादित्यर्थः । अथ हेमन्त ऋतुर्वर्ण्यते–तस्मिन्नृतौ **मरुद्गणा** देवविशेषसंघा **अभिधून्वन्तः** सर्वतः कम्पयन्तोऽ**भिघ्नन्त** आभिमुख्येन हननं कुर्वन्त **इव वातवन्त**स्तीव्रेण वायुना युक्ता भवन्ति ।

अथ चतुर्थीमाह[1]—

**अमुतो जेतुमिषुमुखमिव । संनद्धाः सह ददृशे ह ।**

**अपध्वस्तैर्वस्तिवर्णैरिव । विशिखासः कपर्दिनः, इति ।**

**अमुतो** वायुलोकादागता वायव **इषुमुखं** योद्धृभिः शत्रुभिः प्रेरितं बाणाग्रं **जेतुमिव संनद्धाः** कवचादिभृतः **सह ददृशे** ह संघीभूता दृश्यन्त एव । हेमन्तेऽतिप्रबला वायवो युद्धार्थं संनद्धा इव सर्वतः प्रचरन्ति । अत एव प्राणिनोऽपि युद्धार्थिन इव शीतवातोपद्रवपरिहाराय कञ्चुकाद्यावृता दृश्यन्ते । **अपध्वस्तै**स्तिरस्कृतैर्मलिनै**र्वस्तिवर्णैरिव** वस्त्याकारैः कवचैरिव युक्ता **विशिखासो** विविधशिखायुक्ताः **कपर्दिनः** केशबन्धयुक्ताश्च प्राणिनो दृश्यन्ते । रजकैर्धौतानां घटितानां लिप्तानां वस्त्राणामतिशैत्येन परित्यज्य नूतनाः स्थूलतन्तवो मलिनाश्च पटा द्वित्रि(त्र?)गुणाः प्राव्रियन्त उष्णीषादिभिश्च शिरांसि वेष्टयन्त इत्यर्थः ।

अथ पञ्चमीमाह[2]—

**अक्रुद्धश्च योत्स्यमानस्य । क्रुद्धस्येव लोहिनी । हेमतश्चक्षुषी विद्यात् । अक्ष्णयोः क्षिपणोरिव[3] (२), इति ।**

**अक्रुद्धस्य** क्रोधरहितस्यैव **हेमतो** हेमन्तर्तोश्चक्षुषी, **लोहिनी** रक्ताकारे **विद्यात्** । तत्र दृष्टान्तः—**क्रुद्धस्य** क्रोधाविष्टस्य परान्हन्तुं पुरुषं प्रेरयतोऽक्षिणी रक्ते तद्वत् । न चात्र क्रुद्धस्य **योत्स्यमानस्ये**त्यनेन पुनरुक्तिः । उभयोरेकवाक्यत्वाङ्गीकारात् । क्रोधाविष्टपुरुषसाम्यं वक्तुमेक इवकारः । अक्षिसाम्यं वक्तुमपर इवकारः ।

अथ षष्ठीमाह[4]—

**दुर्भिक्षं देवलोकेषु । मनूनामुदकं गृहे । एता वाचः प्रवदन्तीः । वैद्युतो यान्ति शैशिरीः, इति ।**

पूर्वत्र यथा वाताभिघातादिकं हेमन्तस्य लक्षणमुक्तमेवमत्र शिशिरस्य लक्षणमु-

---

१ ग. °तुर्थमा° । २ ग. °ञ्चममा° । ३ ग. °पणेरि° । ४ ग. षष्ठमा° ।

च्यते—देवलोकेष्वन्तरिक्षभागेषूदकं दुर्भिक्षं भिक्षितुमपि दुर्लभम्। तस्मिन्नृतौ वृष्टेरभावात्। मनूनां मनुष्याणां गृहे कूपादिसद्भावादुदकमल्पं विद्यते। तस्मादुदकार्थिभिर्गृहेषु गत्वा जलं ग्राह्यं न तु मार्गेषु। तदस्मिन्नेता एवंरूपा वाचः प्रवदन्तीरुच्चारयन्त्यः प्रजाः शैशिरीः शिशिरर्तौ विद्यमाना वैद्युतो विद्युत्संबन्धिन्यो विद्युदुपलक्षितसंतापयुक्ता यान्ति मार्गे गच्छन्ति, तदिदं शिशिरर्तोर्लक्षणम्। एभिः षड्भिर्मन्त्रैरिष्टका उपदध्यात्।

अतः परं ब्राह्मणमुच्यते—

ता अग्निः पवमाना अन्वैक्षत। इह जीविकाम्-
अपरिपश्यन्। तस्यैषा भवति, इति।

अग्निर्देव इह लोके प्राणिनां जीविकां जीवनहेतुमुदकमपरिपश्यन्पवमानाः शोषयन्तीर्निरुदकत्वं प्रकाशयन्तीर्मार्गे गच्छन्तीस्ताः प्रजा अन्वैक्षतानुसृत्यैवं विचारितवान्। एताः प्रजा एवं वदन्ति, इह चोदकं न पश्यामि[1] किंवा प्राणिनां भविष्यतीति चिन्तितवानित्यर्थः। तस्याग्निविचारस्य प्रतिपादिकैषर्ग्विद्यते।

तामृचमाह—

इहेह वः स्वतपसः। मरुतः सूर्यत्वचः।
शर्म सप्रथा आवृणे (२), इति।
दृश्यत इवाऽऽवृणे॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके प्रथमप्रपाठके
चतुर्थोऽनुवाकः॥ ४॥

स्वतपसः स्वायत्ततपसः संतापोदकयोः स्वतन्त्रा इत्यर्थः। सूर्यत्वचः सूर्यसमानदीप्तयस्तादृशा हे मरुतो वो युष्मत्सकाशात्सप्रथा विस्तारयुक्तं शर्म सुखकारणमुदकमिहेहैतेषु सर्वेषु जलरहितप्रदेशेष्वावृणे प्राणिजीवनार्थमहमग्निः सर्वतः प्रार्थये। अनेनापि मन्त्रेण कांचिदिष्टकामुपदध्यात्॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यके चतुर्थोऽनुवाकः॥ ४॥

---

१ ग. पश्यामः। २ क. ख. व।

अथ प्रथमप्रपाठके पञ्चमोऽनुवाकः ।

---

कल्पः—"अतिताम्राणीति चतस्रो मदन्तीस्तप्ताः प्रवर्ग्यवदाद्यन्तयोः शान्तिं कृत्वा" इति । यथा प्रवर्ग्यस्याऽऽदौ नमो वाच इति शान्तिः पठ्यतेऽन्ते शं नो वात इति शान्तिः पठ्यत एवमत्रापि चतसृणामिष्टकानामादावन्ते च तच्छान्तिद्वयं पठेत् । इष्टका अपि पूर्वेष्टकावदन्या आपो न भवन्ति किंतु मदन्तिकासंज्ञिकास्तप्ता आपस्ताश्चतसृभिरुपदध्यात् । तत्र प्रथमामाह—

**अतिताम्राणि वासाꣳसि । अष्टिवज्रिशतघ्नि च ।**

**विश्वे देवा विप्रहरन्ति । अग्निजिह्वा असश्चत, इति ।**

यथा पूर्वत्र वसन्ताद्यृतुसहभाविनां वसुरुद्रादीनां सारागशुक्लवस्त्रादीन्येवमत्रापि शिशिरर्तुसहभाविनां विश्वेषां देवानाम**तिताम्राणि** वस्त्राण्यायुधानि चाष्ट्यादीनि । ते च **विश्वे देवा**स्तैरष्टिवज्रिशतघ्निनामकैरायुधविशेषैर्विविधं शत्रून्प्र**हरन्ति** । ततोऽ**ग्निजिह्वा** आरुणकेतुकाग्निरूपजिह्वायुक्ता **असश्चत** जयनिमित्तेनोत्साहेनात्युच्चं शब्दं कृतवन्तः ।

अथ द्वितीयामाह—

**नैव देवो न मर्त्यः । न राजा वरुणो विभुः ।**

**नाग्निर्नेन्द्रो न पवमानः । मातृक्कचन विद्यते, इति ।**

यदास्फोटनं विश्वैर्देवैः कृतं तदत्र स्पष्टी क्रियते—**क्कचन**(कञ्चन) कश्चन कोऽपि देवो **मातृङ्**मादृङ्मत्सदृशो **न विद्यते** । एवं न मर्त्य इत्यादिष्वपि योज्यम् । सोऽयं विश्वैर्देवैरुद्घोषितः शब्दः ।

अथ तृतीयामाह—

**दिव्यस्यैका धनुरार्त्निः । पृथिव्यामपरा श्रिता (१)**

**तस्येन्द्रो वम्रिरूपेण धनुर्ज्यामच्छिनत्स्वयम्, इति ।**

**अस्य** विश्वे(श्व)देवजिह्वारूपस्याऽऽरुणकेतुकस्याग्नेरेका **धनुरार्त्नि**र्धनुष ऊर्ध्वकोटि**र्दिवि श्रिता । अपरा** त्वधस्तनी कोटिः **पृथिव्यां श्रिता** । वम्रयः पिपीलिकासमाना जन्तवः । यदीयवमनान्मृत्तिका द्रवी क्रियते । इन्द्रो यथोक्तधनुर्दर्शनेन भीतः

---

१ ग. °न्तीस्ताभ्याप्र । २ ग. °सि । ऋष्टि° । ३ ग. असंश्चत । ४ ख. ग. °नि चष्ट्यर्चा°ी° । ५ क. ख. °स्तैर्ऋष्टि° । ६ ग. असंश्चत । ७ ग. मातृक्चन । ८ ख ग °थिव्यामाश्रि° ।

**सन्वाग्निरूपेणा**धःकोटिसमीपे स्थाने स्थित्वा **तस्याऽऽरुणकेतुकस्याग्नेर्धनुष्यवस्थितां ज्यां स्वयम(मे?)वाच्छिनत्** ।

अथ चतुर्थीमाह—

**तदिन्द्रधनुरित्यज्यम् । अभ्रवर्णेषु चक्षते ।**
**एतदेव शंयोर्बार्हस्पत्यस्य । एतद्रुद्रस्य धनुः, इति ।**

यस्य धनुषो ज्या छिन्ना तत्तदेतदभिज्ञा **अभ्रवर्णेषु** मेघस्थितप्रकाशेषु दृष्टेन्द्रेण च्छिन्नत्वाज्ज्यारहित**मिन्द्रधनुरि**त्याच**क्षते** । योऽयं बृहस्पतिपुत्रः **शंयु**स्तस्याप्ये**तदेव धनुः** । अनेनैव धनुषाऽसौ स्वकार्यं संपादयति । **एतद्रुद्रस्य धनु**स्तस्मादिदमुत्कृष्टम् । रुद्रो नामात्राऽऽरुणकेतुकोऽग्निः । " रुद्रो वा एष यदग्निः " इति श्रुतेः । एताभिश्चतसृभिरुष्णोदकरूपाश्चतस्र [ इष्टका ] उपधेयाः ।

अथ ब्राह्मणम्—

**रुद्रस्य त्वेव धनुरार्तिनः । शिर उत्पिपेष । स प्रवर्ग्योऽभवत् ।**
**तस्माद्यः सप्रवर्ग्येण यज्ञेन यजते । रुद्रस्य स शिरः प्रतिदधाति । नैनꣳ रुद्र आरुको भवति । य एवं वेद ( २ ), इति ।**
**श्रिता यजते त्रीणि च ॥**

**इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके प्रथमप्रपाठके**
**पञ्चमोऽनुवाकः ॥ ५ ॥**

यदेतदुच्छिन्नज्याकं **धनु**स्तस्येन्द्रवशं पुराणं धनुष्टमित्येतावदेव न किंतु ज्यायां छिन्नायामुत्पतन्ती धनुष ऊर्ध्वा कोटिर्यस्य रुद्रस्य गलमवष्टभ्य पूर्वमवास्थिता तस्य **रुद्रस्य शिर**श्छिन्दत्यूर्ध्वं नीत्वाऽधः पतन्ती **पिपेष** तच्छिरश्चूर्णीचकार । **स** च पिष्टार्धशिरोभागः **प्रवर्ग्यरूपेणाऽऽ**विर्बभौ । यस्माद्रुद्रस्य शिर एव **प्रवर्ग्यस्तस्मा**त्प्रवर्ग्यसहितेन **यज्ञेन यो यजते** सोऽयं **रुद्रस्य** तच्छि**रः प्रतिदधाति** पुनः समादधाति । **यः** पुमा**नेवं** शिरःसमाधानप्रकारं **वेद** तमे**नं रुद्र आरुको न भवति** तस्य हिंसां न करोतीत्यर्थः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यके प्रथमप्रपाठके पञ्चमोऽनुवाकः ॥ ५ ॥

अथ प्रथमप्रपाठके षष्ठोऽनुवाकः ।

कल्पः—" अत्यूर्ध्वाक्ष इति त्रीण्यृतुमण्डलान्यवद्रप्स इति च " इति । ऋतुमण्डलशब्दस्य मन्त्रनामत्वादुपधेयानामिष्टकानामपि तदेव नाम । तत्र प्रथमामृचमाह—

अत्यूर्ध्वाक्षोऽतिरश्चात् । शिशिरः प्रदृश्यते ।
नैव रूपं न वासाꣳसि । न चक्षुः प्रतिदृश्यते, इति ।

योऽयं शिशिर ऋतुः सोऽयं प्राणिषु प्रकर्षेण **दृश्यते** । कीदृशः शिशिरोऽत्यूर्ध्वाक्षः । तस्मिन्नृतौ यदा शीतबाहुल्यं भवति तदानीं कम्पमानाः प्राणिनो हस्ताभ्यामुर आच्छादयन्तो मुखेन सीत्कारं कुर्वन्तो द्वे भ्रुवावत्यूर्ध्वमुन्नमयन्ति तदिदं तस्यर्तोरत्यूर्ध्वाक्षत्वम् । शीतपीडितत्वादेव दक्षिणतो वामतो वा तिर्यङ्न पश्यन्ति तदिदम**तिरश्चा**दित्युच्यते । यत्तु शरीरस्य **रूपं** तदपि शीतवेलायां प्राणिभि**र्नैव दृश्यते** । **वासांस्य**पि नैव दृश्यन्ते । **चक्षु**रपि दर्पणादौ **न प्रतिदृश्यते** । रूपवस्त्रादिषु नात्यन्तमादरः किंतु शीतपरिहारमेवान्विच्छन्तीत्यर्थः ।

अथ द्वितीयमाह—

अन्योन्यं तु न हिꣳस्रातः । सतस्तद्देवलक्षणम् ।
लोहितोऽक्ष्णि शार शीर्ष्णिः । सूर्यस्योदयनं प्रति, इति ।

यौ परस्परमत्यन्तद्वेषिणौ युद्धार्थमुद्युक्तौ तावपि शिशिरर्तावन्योन्यं **तु न हिंस्रातः** शीतनिवारणाय प्रावरण एव प्रयत्नयुक्तौ सन्तौ परस्परं हिंसामपि न कुरुतः । यदेतदीदृशं प्राणिनां वर्तनं तदेतत्**सतो** वर्तमानस्य शिशिरर्तो**र्देवलक्षणं** देवेन सूर्येण संपादितं चिह्नम् । अनेन लक्षणेन शिशिरत्वं विद्यात् । किंच तस्यर्तोरभिमानिदेवताविग्रहे**ऽक्ष्णि** चक्षुषि **लोहितो** वर्णो भवति, **शीर्ष्णिः** शिरसि **शार** सारिदा(का)याः शुक्लिया यो वर्णः स वर्गो भवति । कस्मिन्कालेऽयं वर्णविशेष इत्युच्यते—**सूर्यस्योदयनं प्रति** सूर्योदयवेलायाम् । अत्र सर्वत्रोच्यमानेषु काललक्षणेषु यत्प्रजासु संभवति तत्प्रजाद्वारेण कालं लक्षयति । यत्तु प्रजासु न संभवति तत्साक्षादेव कालाभिमानिदेवतायां द्रष्टव्यम् ।

अथ तृतीयामाह—

त्वं करोषि न्यञ्जलिकाम् । त्वं करोषि नि जानुकाम् ( १ ) ।

---

१ ख. 'षु च ना° । २ ग. शीर्ष्णि । ३ क. ख. 'र्तोस्तल्लक्ष' । ग. °र्तोर्लक्ष' । ४ ग. शीर्ष्णि । ५ ख. ग. सारिमायाः । ६ ख. शुक्लत्रिया । ग. शुक्लिया । ७ क. ख. ग. यथा प्रजा° । ८ क. ख. ग. तत्र प्रजा° ।

नि जानुका मे न्यञ्जलिका । अमी वाचमुपासतामिति, इति ।

हे शिशिरर्तो त्वमञ्जलिकां हस्ताग्रवर्तिनमञ्जलिं निकरोषि न्यग्भूतं करोषि । यथा जानुकां जानुप्रदेशमपि त्वं निकरोषि न्यग्भूतं करोषि सर्वे प्राणिनः शीतबाहुल्यादग्निसेवार्थं हस्तौ न्यग्भूतौ कुर्वन्ति । उदरादिदेहावयवतापनाय व्यवधानभूते जानुनी अपि भूमिस्पर्शिनी यथा भवतस्तथा न्यग्भूते कुर्वन्ति । स्वयमेवं कुर्वन्तो बुद्धिमन्तोऽप्रबुद्धान्बालान्प्रत्येवमुपदिशन्ति । हे बाला अमी भवन्त ईदृशीं वाचमुपासताम् । कीदृशी वागिति तदुच्यते—मे मदीया जानुका न्यग्भूता भवतु, अञ्जलिकाऽपि न्यग्भूता भवत्विति । श्रौत इतिशब्द एवंविधलक्षणप्रदर्शनार्थः । अनुक्तमप्येतादृशं लोकव्यवहारं दृष्ट्वा तमृतुं जानीयात् । ऋतुमण्डलाख्यैरेतैर्मन्त्रैस्तिस्र इष्टका उपदध्यात् ।

अथ ब्राह्मणमुच्यते—

तस्मै सर्व ऋतवो नमन्ते । मर्यादाकरत्वात्प्र पुरोधाम् । ब्राह्मण आप्नोति । य एवं वेद । स खलु संवत्सर एतैः सेनानीभिः सह । इन्द्राय सर्वान्कामानभिवहति । स द्रप्सः । तस्यैषा भवति ( २ ), इति ।

यः पुमानेवमुक्तैरनुवाकैः प्रतिपादितमृतुस्वभावं वेद तस्मै पुरुषाय सर्व ऋतवो वसन्तादयो नमन्ते प्रह्वी भवन्ति स्वाधीना भवन्ति । किंच स ब्राह्मणः पुरोधां पुरतोऽवस्थितिं[1] सर्वेषु ब्राह्मणेषु प्राधान्यं प्राप्नोति । ऋतूनां स्वाधीनत्वं दुःखानुत्पादकत्वम् । तस्मिन्स्वाधीनत्वे प्राधान्यप्राप्तौ च हेतुरुच्यते—मर्यादाकरत्वादिति । अयं हि विद्वान्पुरुषस्तेषां वसन्ताद्यृतूनां मर्यादां करोति यस्मिन्यस्मिन्नृतौ ये धर्मास्तत्र तान्प्रवर्तयति । मर्यादाकरत्वमेव कथमिति तदुपपाद्यते—स खलु विद्वान्ब्राह्मणो देहपातादूर्ध्वं संवत्सरो भूत्वा संवत्सरनिष्पादकादित्यरूपी भूत्वाऽऽरुणकेतुकाग्नितादात्म्यं प्राप्यैतैः सेनानीभिः "वसन्तो वसुभिः सह" "शुक्लवासा रुद्रगणः" इत्यादिवाक्येषु प्रतिपादितैर्वसन्तादिदेवतासहवर्तिभिर्वस्वादिभिः सेनाधिपतिभिः सह वर्तमानः सन्निन्द्राय कर्मस्वामिने यजमानाय सर्वान्कामानभिवहत्याभिमुख्येन संपादयति । तस्मादारुणकेतुकाग्निप्राप्तियोग्यत्वादयं विद्वान्मर्यादाकरो भवत्येव । स च विदुषा प्राप्य आरुणकेतुको द्रप्स उदकस्वरूपो वृष्टिहेतुत्वात् । तस्य द्रप्सरूपस्याऽऽरुणकेतुकाग्नेः प्रतिपादिकेयं काचिदृग्विद्यते ।

---

१ क. °वस्थानं स° ।

अथ तामृचं दर्शयति—

अव॑ द्र॒प्सो अ॑ꣳशु॒मती॑मतिष्ठत् । इ॒या॒नः कृ॒ष्णो द॒शभि॑ः स॒हस्रै॑ः ।
आव॒र्तमिन्द्र॒ः शच्या॒ धम॑न्तम् । उप॑ स्नुहि॒ तं नृम॑णामथ॒द्रामिति, इति ।

द्रप्स उदकात्मकोऽयमारुणकेतुकः, अंशुमतीमंशुशब्देन सोमलताखण्डवाचिना सर्वा ह्योषधय उपलक्ष्यन्ते तद्युक्तत्वादंशुमती पृथिवी तामवातिष्ठदवगम्य प्राप्य तत्राऽवस्थितः । कीदृशो द्रप्सः, दशभिः सहस्रैरनेकसहस्रसंख्याकैरादित्यरश्मिभिरियानः संचरन् । "आदित्याज्जायते वृष्टिः" इति स्मृतेः । कृष्णः कृषिहेतुः । सति ह्युदके भूमिं कृषन्ति । हे आदित्यरूपाऽऽरुणकेतुकाग्न इन्द्रो वृष्टेरीश्वरस्त्वमावर्तं पुनः पुनरिहाऽऽवृत्यै शच्या स्वकीयया शक्त्या तदा तदाऽपेक्षितकाले समागत्य धमन्तं गर्जनादिना शब्दयन्तं नृमणां नृभिर्मनुष्यैर्मननीयं सर्वदा प्रार्थनीयमथद्रामेघोद्रवणशीलं तं द्रप्समुदकविशेषमुपस्नुहि भूमौ प्रस्रावय । इत्यनेन मन्त्रेण द्रप्सवतीमिष्टकामुपदध्यात् ।

अथ ब्राह्मणमुच्यते—

ए॒तयै॒वेन्द्र॑ः सला॒वृक्या॑ स॒ह । असु॑रा॒न्परि॑वृश्चति । पृ॒थि॒व्य॑ꣳशु॒म॑ती । ताम॒न्वव॑स्थितः संव॒त्स॒रो दि॒वं च॑ । नैवं॑वि॒दुषाऽऽचार्या॑न्तेवा॒सिनौ॑ । अ॒न्योन्य॑स्मै॑ द्रुह्या॒ताम् । यो द्रुह्य॑ति । भ्र॒श्यते॑ स्व॒र्गाल्लो॒कात् । इत्यृ॑तुम॒ण्डला॑नि । सूर्य॑म॒ण्डला॒न्याख्या॒यि॑काः । अत॒ ऊर्ध्व॑ꣳ स॒निर्व॑चनाः (३), इति ।

नि जानु॑का॒ भव॑ति द्रु॒ह्या॒तां पञ्च॑ च ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके प्रथमप्रपाठके षष्ठोऽनुवाकः ॥ ६ ॥

योऽयमिन्द्र आरुणकेतुको वृष्टिस्वामी सलावृक्या सलः सलिलं जलं तस्याऽऽवृक् आदानं तद्युक्ता भूमिः सलावृक्येतया सलावृक्या निमित्तभूतया सहासुरानसवः प्राणा रमन्ते क्रीडन्ते(न्ति) येषु मेघेषु सत्सु ते मेघा असुरास्तान्परिवृश्चति परितश्छिनत्ति । अयं देवो जलार्थी पृथिवीनिमित्तं मेघभेदं कृत्वा वर्षयतीत्यर्थः । पूर्वोक्तमन्त्रे येयमंशुमती कथिता सेयं पृथिवी विवक्षिता तां पृथिवीं, दिवं चानुसृत्यायं संवत्सरात्मक

१ ख. ग. °पस्तुहि । २ ग. नृम्णाम° । ३ क. ख. °त्य तं श° । ग. °त्य त्वं श° । ४ ग. नृम्णां । ५ ख. ग. °मथो द्र° । ६ ख. ग. °पस्तुहि । ७ ख. ग. °वृक्या द्रा° ।

आरुणकेतुको देवो वह्निरूपेणाऽऽदित्यरूपेण वाऽवस्थितः । यः पुमानेवमारुणकेतुकाग्नेर्महिमानं जानाति तेनैवंविदुषा सहाऽऽचार्यान्तेवासिनावन्योन्यस्मै द्रोहं कर्तुं नार्हतः । आचार्योऽध्वर्युः, यज्ञे धर्मानाचरतीति व्युत्पत्तेः । यजमानोऽन्तेवासी, तस्याध्वर्योः समीपे निवासात् । तावध्वर्युयजमानावभिज्ञेन सह द्रोहयोग्यौ न भवतः । स्वयं द्रोह्यावपि न भवतो द्रोग्धारावपि न भवत इति वक्तुमन्योन्यस्मा इत्युक्तम् । तस्मै विदुषे स्वयं द्रोहमकृत्वा सोऽपि यथा न द्रुह्यति तथा वर्तितव्यम् । यो मूढस्तस्मै विदुषे स्वयं द्रुह्यति सोऽयं स्वर्गलोकाद्भ्रष्टो भवति । तस्मान्न द्रोहः कर्तव्यः । "स्मृतिः प्रत्यक्षम्" इत्यारभ्य पञ्चस्वनुवाकेषु प्रोक्तोऽर्थ उपसंह्रियते—इति एवमतीते ग्रन्थे "ऋतुर्ऋतुना नुद्यमानः" इत्यादिभिर्ऋतुमण्डलप्रतिपादकानि वाक्यान्युक्तानि, "एतैरादित्यमण्डलम्" इत्यादिभिः सूर्यमण्डलप्रतिपादकानि वाक्यान्युक्तानि, पूर्वोक्त एवार्थो दृढमाख्यायते यास्वृक्षूदाहृतासु ता आख्यायिकाः "शुक्रं ते अन्यत्" इत्यादयस्ता अप्युक्ताः । अत ऊर्ध्वमुपरितनेष्वनुवाकेषु सनिर्वचना निःशेषेण वचनं निर्वचनं ब्राह्मणं तेन सहिता आख्यायिकाः सनिर्वचनाः । पूर्वेष्वनुवाकेषु मन्त्रप्रतिपादितेऽर्थे संवादार्थमृच उदाहृता उत्तरेष्वनुवाकेषु ब्राह्मणप्रतिपादितेऽर्थे संवादार्थमृच उदाह्रियन्त इत्यर्थः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यके प्रथमप्रपाठके षष्ठोऽनुवाकः ॥ ६ ॥

---

अथ प्रथमप्रपाठके सप्तमोऽनुवाकः ।

---

कल्पः—"आरोग इत्यष्टौ पदशो यत्ते शिल्पमिति च" इति । तत्र ब्राह्मणेमारोग इत्यादिपदप्रतिपादिकामृचमुदाहरति—

**आरोगो भ्राजः पटरः पतङ्गः । स्वर्णरो ज्योतिषीमान्विभासः । ते अस्मै सर्वे दिवमातपन्ति । ऊर्जं दुहाना अनपस्फुरन्त इति, इति ।**

**आरोगादीनि विभासान्तानि** सप्त पदानि सप्तानां सूर्यविशेषाणां नामधेयानि । ते सप्तापि सूर्या **अस्मै** लोकार्थं **दिवमा**काशमा**तपन्ति** सर्वतः प्रकाशयन्ति । किं कुर्वन्तः **ऊर्जं दुहाना** वृष्टिद्वारेण क्षीरादिरसं संपादयन्तः । **अनपस्फुरन्तः** प्राणिनां प्रातिकूल्येन

१ ख. ग. °ति । आरोगादीनि विभासान्तानि । त° । २ ख. ग. °णभाग ।

प्रकाशनमस्फुरणं तदकुर्वन्तः । अनुकूलमेव प्रकाशनं सर्वदा कुर्वन्तीत्यर्थः । **श्रौतइति-शब्द** उपधानप्रदर्शनार्थः । उदाहृतायामस्यामृच्युक्तैरारोगादिनामभिः सप्तभिरि-ष्टका उपदध्यादित्यर्थः । आरोगस्तया देवतयाऽङ्गिरस्वद्ध्रुवाऽऽसीदेत्येवमुपधानमन्त्रा उन्नेयाः ।

अथाष्टमं नामधेयं दर्शयति—

**कश्यपोऽष्टमः स महामेरुं न जहाति । तस्यैषा भवति, इति ।**

पूर्वोक्तारोगादिसप्तसूर्यापेक्षया योऽयमष्टमः सूर्यस्तस्य **कश्यप** इति नामधेयम् । तेन नाम्नेष्टका उ(मु?)पदध्यात् । **स** च कश्यपो **मेरु**पर्वतं **न** कदाचिदपि परित्यजति मेरु-स्थानमेव सर्वदा प्रकाशं करोति । तस्य कश्यपस्य प्रतिपादिका काचिदृग्विद्यते ।

अथ तामृचं दर्शयति—

**यत्ते शिल्पं कश्यप रोचनावत् । इन्द्रियावत्पु-**
**ष्कलं चित्रभानु । यस्मिन्त्सूर्या अर्पिताः सप्त**
**साकम् (१) । तस्मिन्राजानमधिविश्रयेममिति, इति ।**

हे **कश्यप**ाष्टमसूर्य **यत्ते** तव **शिल्पं** जगत्प्रकाशलक्षणं चित्रं कर्म **यस्मिन्**स्वकीये प्रकाशरूपे चित्रकर्मण्यारोगादयः **सप्त सूर्याः साकमर्पिता**स्त्वया सह स्थापितास्तस्मि-ञ्शिल्पे प्रकाशलक्षण **इमं** यजमानं **राजानं** दीप्तियुक्तं कृत्वाऽ**धिविश्रय** सर्वेषामुपरि विशिष्टत्वेन स्थापय । कीदृशं शिल्पम्, **रोचनावत्**प्रकाशयुक्तम् । **इन्द्रियावदि**न्द्रिय-सामर्थ्ययुक्तम् । **पुष्कलं** संपूर्णम् । **चित्रभानु** विविधरश्मियुक्तम् । इत्येषा कश्यप-प्रतिपादिकाऽभिहिता ।

कश्यपस्य शिल्पे सप्तसूर्याणामर्पितत्वं स्पष्टी करोति—

**ते अस्मै सर्वे कश्यपाज्ज्योतिर्लभन्ते । तान्त्सोमः**
**कश्यपादधिनिर्धमति । भ्रस्ताकर्मकृदिवैवम्, इति ।**

**ते सर्वे** सप्तापि सूर्या **अस्मै** जगत्प्रकाशनार्थं **कश्यपा**त्सकाशा**ज्ज्योतिर्लभन्ते** । यद्यपि सूर्याः पूर्वमेव ज्योतिष्मन्तस्तथाऽपि **तान्**सूर्या**न्सोमो** देवः **कश्यपा**त्सकाशा-**दधिनिर्धम**त्यधिकत्वेन निस्तमस्का यथा भवन्ति तथा शोधयति । सोमो हि तानाहूय कश्यपसमीपं प्रापितवान् । तस्य कश्यपस्यानुग्रहादेतेषां प्रकाशाधिक्यं संपन्नमित्यर्थः । **भ्रस्ते**त्यादिस्तत्र दृष्टान्तः । रेफस्य व्यत्यये सति भस्त्राशब्दो धमनसाधनमित्याचष्टे ।

---

१ ग. °षा काश्य° । २ ख. स्थापितवान् । ३ क. ग. °मिवेत्या° ।

यथा चर्ममय्या दृत्या वायुमुत्पाद्य ज्वलिताग्निना सुवर्णादेः किट्टादिकमपनीय भस्त्राकर्मकृत्सुवर्णकारः शोधयत्येवं कश्यपसंबन्धकारी सोमस्तान्सूर्यानशोधयत् ।

तेषां सप्तसूर्याणां स्वरूपे मतभेदं दर्शयति—

प्राणो जीवानीन्द्रियजीवानि । सप्त शीर्षण्याः प्राणाः । सूर्या इत्याचार्याः, इति ।

मुखनासिकयोः संचारी यः प्राणः स एव सप्तभिर्वृत्तिभेदैः सप्त सूर्या इत्येवं केचिदाचार्या आहुः । जीवानि जीवननिमित्तभूतानि महदहंकारपञ्चतन्मात्ररूपाणि तत्त्वानि सप्त सूर्या इत्येवमन्य आचार्याः प्रचक्षते । इन्द्रियजीवानि चक्षुरादीनि पञ्चेन्द्रियाणि मनोबुद्धिसहितानि जीवननिमित्तभूतानि सप्त सूर्या इत्येवमपरे प्रचक्षते । शिरस्यवस्थितानि यानि सप्त च्छिद्राणि तेषु संचरन्तः प्राणाः सप्त सूर्या इत्यन्ये । एते सर्वेऽप्याचार्याः सप्तसूर्यबुद्ध्या स्वैरुपास्यानि तत्त्वान्याहुरतो नैते मुख्याः सप्त सूर्याः ।

अथ मुख्यानां सप्तसूर्याणां द्रष्टारावृषी उदाहरति—

अपश्यमहमेतान्सप्त सूर्यानिति । पञ्चकर्णो वात्स्यायनः । सप्तकर्णश्च प्लाक्षिः (२) । आनुश्रविक एव नौ कश्यप इति । उभौ वेदयिते । न हि शेकुमिव महामेरुं गुन्तुम्, इति ।

पञ्चकर्णनामकः कश्चिद्वत्सस्य पुत्रो महर्षिरेतानारोगादीन्सप्त सूर्यान्प्रत्यक्षेणैवाहमपश्यमित्युवाच । तथा सप्तकर्णनामकः कश्चित्प्लक्षस्य पुत्रो महर्षिरप्यहमपश्यमित्युवाच । अतो मनुष्यैः संनिहितत्वादेक एव सूर्योऽवलोक्यते न तु व्यवहितत्वादितरे षट्सूर्या अवलोक्यन्ते । किंच तावुभावपि पञ्चकर्णसप्तकर्णाख्यौ महर्षी वेदयिते इत्थं वेदयतः प्राणिनः सर्वान्बोधयतः । किमिति तदुच्यते— कश्यपाख्योऽष्टमः सूर्यो नावावयोरुभयोरानुश्रविक एव न तु प्रत्यक्षः । गुरूपदेशमनु श्रूयत इत्यनुश्रवो वेदस्तत्रैवावगत आनुश्रविकः । "यत्ते शिल्पं कश्यप" इत्यादिमन्त्रादेवावगम्यत इत्यर्थः । प्रत्यक्षादर्शने हेतुमप्याहतुः—महामेरुं कश्यपस्य स्थानं गन्तुमावां न हि शेकुमिव न शक्तौ भवाव एव, तस्माद्वेदादेव जानीवः ।

अथ कश्यपदर्शिनमृषिमुदाहरति—

अपश्यमहमेतत्सूर्यमण्डलं परिवर्तमानम् । गार्ग्यः प्राणत्रातः । गच्छन्त महामेरुम् । एकं चाजहतम्, इति ।

---

१ क. ख. °मुदाहरन्ति । २ क. ग. °मानु° । ३ ग. गच्छतं ।

गर्गस्य पुत्रः प्राणत्रातनामकः कश्चिन्महर्षिस्तौ पञ्चकर्णसप्तकर्णौ प्रत्येवमुवाच । महामेरावेव परिवर्तमानमेतत्कश्यपाभिधं सूर्यमण्डलं प्रत्यक्षेणैवा[हम]पश्यम् । अतो हे मुनी युवामपि महामेरुं गच्छन्त योग्येन मार्गेण गच्छतम्, अजहतं मेरुं कदाचिदप्यपरित्यजन्तमेकं कश्यपाख्यं सूर्यं च गच्छतम् ।

अथ मेरुगमने मार्गं दर्शयति—

**भ्राजपटरपतङ्गा निहने । तिष्ठन्नातपन्ति । तस्मादिह तप्त्रितपाः ( ३ ) । अमुत्रेतरे । तस्मादिहातप्त्रितपाः, इति ।**

य एते सप्त सूर्यास्तेषां मध्य आरोगाख्यस्यास्माभिर्दृश्यमानस्य सूर्यस्य गतिः प्रतिद्धा। तदनन्तरभाविनो भ्राजादयस्त्रयस्ते निहने मेरुमार्गस्य निहतप्रदेशेऽधोभागे तिष्ठन्नातपन्ति अवस्थिताः सन्तो रश्मिभिरधोमुखैर्मेरुमार्गादधोवर्तिनः प्राणिनः सर्वतः प्रकाशयन्ति । यस्मादेषामधोमुखा रश्मयस्तस्मादिह लोके तप्त्रितपास्तपनशीलरश्मियुक्ताः । इतरे तु भ्राजपटरपतङ्गेभ्योऽन्ये स्वर्णरज्योतिष्मद्विभासाख्याः सूर्यास्तेऽमुत्र मेरुमार्गादुपरिभागे वर्तन्ते । यस्मात्तेषां रश्मय ऊर्ध्वमुखास्तस्मात्त इहाधोलोकेष्वतप्त्रितपास्तपनशीलरश्मियुक्ता न भवन्ति । भ्राजादीनामधोमुखरश्मित्वात्स्वर्णरादीनामूर्ध्वमुखरश्मित्वाच्च वर्गद्वयमध्ये तापाभावाच्छीतलेन मार्गेण मेरुं गन्तुं शक्यत इत्यर्थः ।

अथ सूर्याणां मध्यवर्तिमार्गप्रतिपादिकामृचमवतारयति—

**तेषामेषा भवति, इति ।**

तेषां सप्तसूर्याणां संबन्धिनी मेरुमार्गप्रतिपादिकेयमृग्विद्यते ।

तामृचं दर्शयति—

**सप्त सूर्या दिवमनुप्रविष्टाः । तानन्वेति पथिभिर्दक्षिणावान् । ते अस्मै सर्वे घृतमातपन्ति । ऊर्जं दुहाना अनपस्फुरन्त इति , इति ।**

आरोगादयः सप्त सूर्या दिवमन्तरिक्षमनुप्रविष्टा अनुक्रमेण व्याप्ताः । दक्षिणावाञ्शास्त्रोक्तविष्टिकादक्षिणायुक्तोऽनुष्ठितारुणकेतुकाग्निः प्रागुक्तान्सप्त सूर्याननुसृत्य पथिभिः सूर्यवर्गद्वयवर्तिभिः शीतैर्मार्गैरेति मेरुं गच्छति । ते सूर्याः सर्वेऽप्यस्मै यजमानाय घृतमातपन्ति मेरुमार्गरूपमाकाशं घृतादिभोग्यवस्तुसंपूर्णं यथा भवति तथा

---

१ ग. गच्छतं । २ क. येगेन । ३ ख. ग. °म् । तस्तस्तरित्त्रहाभ्राज° । ४ क. °मेतं क° । ५ ख. ग. °स्त्रोक्त इट° । ६ क. °ष्टकं द° । ग. °ष्ट द° । ७ ख °भिः शा तमार्गै° । ८ ग. °र्वेऽस्मै° ।

प्रकाशयन्ति। किं कुर्वन्तः, ऊर्जं दुहाना भोग्यं क्षीरादिकं[1] संपादयन्तः, अनपस्फुरन्तः संतापमकुर्वन्तः, हे यजमानेहाऽऽस्यतामिह भुज्यतामित्येवं प्रियोक्तिं वदन्ति। यथा चाऽऽथर्वणिका आमनन्ति—"एह्येहीति तमाहुतयः सुवर्चसः सूर्यरश्मिभिर्यजमानं वहन्ति प्रियां वाचमभिवदन्त्योऽर्चयन्ते" इति। इत्येषा सप्त सूर्या इत्यादिका मार्गप्रतिपादिका, तयेष्टकामुपदध्यात्। तथा च बौधायनः—"सप्त सूर्याः सप्त दिशो नाना यद्द्यावश्चित्रं देवानामिति चतस्रः सौरीः पुरस्तात्" इति।

इदानीं सूर्यस्वरूपे पक्षान्तरमुपन्यस्यति—

**सप्तर्त्विजः सूर्या इत्याचार्याः, इति।**

य एते यज्ञे होत्रादयः सप्तर्त्विजस्त एव सप्त सूर्या इति केचिदाचार्याः प्रचक्षते। अस्मिन्नर्थे कांचिदृचमवतारयति—

**तेषामेषा भवति, इति।**

तेषामृत्विग्रूपाणां सप्तसूर्याणां प्रतिपादनार्थेयमृग्विद्यते।

तामेतामृचं दर्शयति—

**सप्त दिशो नानासूर्याः (४)। सप्त होतार ऋत्विजः।**

**देवा आदित्या ये सप्त। तेभिः सोमाभीरक्ष ण इति, इति।**

अष्टसु दिक्षु मध्ये या प्राची सा सूर्यवतीति सर्वेषां प्राणिनां प्रसिद्धा। यास्त्वन्या आग्नेयाद्याः सप्त दिशस्ता अपि नानाविधसूर्योपेताः। ते च सप्तसु दिक्ष्ववस्थिताः। तत्स्वामिनः सूर्या इह कर्मणि होत्रादय ऋत्विजो भूत्वा चरन्ति। होता प्रशास्ता ब्राह्मणाच्छंसी पोता नेष्टाच्छावाक आग्नीध्र इत्येते सप्त होतारः। य एतेऽत्र होत्रादय ऋत्विजो देवा भूत्वा सप्ताऽऽदित्या इत्युच्यन्ते, हे सोम यागाधिपते तेभिर्होतृरूपैरादित्यैर्नोऽस्मानभिरक्ष। इत्यनयाऽपीष्टकामुपदध्यात्।

[* ननु सूर्या ऋत्विग्रूपा इत्यस्मिन्नर्थ इयमृगाहृता। तत्र दिशो नानासूर्या इत्येतदप्रस्तुताभिधानमित्याशङ्क्योत्तरमाह]—

**तदप्याम्नायः। दिग्भ्राज ऋतूंन्करोति, इति।**

यदुक्तं दिशां नानासूर्योपेतत्वं तदप्याम्नायः, शाखान्तरे कश्चिन्मन्त्रो[2] ब्रूते। अतो वेदान्तरसिद्धत्वादेतदपि वक्तव्यमेव न त्वप्रस्तुतम्[3]। किंच तस्मिन्नर्थे युक्तिरप्यस्ति। दिग्भ्राजस्तां तां दिशं प्राप्यावस्थिताः सूर्या ऋतून्वसन्तादिसूचितानृतुधर्मान्करोति

* एतदारभ्योत्तरमाहेत्यन्तं क. पुस्तके नास्ति।

१ क. हीरादिकं। २ ख. ग. °ना पन्थानश्चि° ३ ग. °स्तुतं किंचित्। त°।

तस्यां तस्यां दिशि कुर्वन्ति । न हि ऋतुनिष्पादकसूर्यव्यतिरेकेण तत्तदृतुधर्माः संभवन्ति, तस्मात्सन्त्येव दिक्षु विभिन्नाः सूर्याः ।

अथ कैमुतिकन्यायेन दिशां बहुसूर्यत्वं दृढी करोति—

**एतयैवाऽऽवृताऽऽ सहस्रसूर्यताया इति वैशम्पायनः**, इति ।

**एतयैवाऽऽवृता** अने( वृताऽने )नैव प्रकारेणर्तुधर्मा यत्र सन्ति तत्र तत्संपादकः सूर्योऽस्तीति न्यायेनाऽऽ **सहस्रसूर्यतायाः** सहस्रसंख्याकसूर्योपेतत्वपर्यन्तं दिक्षु सूर्यभेदाः कल्पनीयाः, तत्र सहस्रसूर्यत्वे किमाश्चर्यमिति **वैशम्पायन** आचार्यो मन्यते । आसहस्रमित्युपलक्षणम्, अनन्ताः सूर्या इत्यर्थः ।

अनन्तसूर्यप्रतिपादिकामृचमवतारयति—

**तस्यैषा भवति**, इति ।

तस्य सहस्रसूर्यवत्त्वस्य प्रतिपादिकेयमृग्विद्यते ।

तामेतामृचं दर्शयति—

**यद्द्याव इन्द्र ते शतꣳ शतं भूमीः । उत**
**स्युः । न त्वा वज्रिन्त्सहस्रꣳ सूर्याः ( ५ ) ।**
**अनु न जातमष्ट रोदसी इति**, इति ।

**यद्यदि** हे **इन्द्र ते** तव **शतं द्यावः** स्युर्बहुभिः शतसंख्याभिर्युक्ता द्युलोकाः संभवेयुः, **उतापि** च **शतं भूमीः** स्युर्बह्वीभिः शतसंख्याकाभिर्युक्ता भूमयोऽपि यदि संभवेयुः, हे **वज्रिंस्तदानीमपि रोदसी जातं** द्यावापृथिव्योर्मध्ये समुत्पन्नं **त्वां सहस्रसू( स्रं सू )र्याः** सहस्रोपलक्षिता अनन्ताः सूर्या [न] **नान्वष्ट** [न] नान्वश्नुवते त्वामनु न [न] व्याप्नुवन्ति । एतावत्सु द्युलोकेषु भूलोकेषु च सत्स्वपि तत्र तत्र स्थितं त्वामनु सूर्यव्याप्तेरपर्याप्ता देशाः, सूर्याणामनन्तत्वादित्यर्थः । इत्यनयाऽपीष्टका उ(मु?)पदध्यात् ।

मन्त्रोक्तमनन्तसूर्यत्वं युक्त्योपपादयति—

**नानालिङ्गत्वादृतूनां नानासूर्यत्वम्**, इति ।

यद्येक एव सूर्यः स्यात्तदानीं वसन्ताद्यृतूनां नानालिङ्गत्वं न स्यात्, न हि कारणभेदमन्तरेण कार्यभेदः संभवति । तस्मादृतुधर्मवैलक्षण्यसिद्धये बहुसूर्यत्वमभ्युपेयम् ।

कथं तर्हि पूर्वत्र कश्यपोऽष्टम इत्येवं सूर्याणामष्टसंख्या स्वीकृतेत्याशङ्क्य तदभिप्रायं दर्शयति—

**अष्टौ तु व्यवसिता इति**, इति ।

---

१ ख. ग. °येन स° । २ ग. सूर्याभ्या° ।

बादम् । सन्त्येव तत्तल्लिङ्गकल्प्या अनन्ताः सूर्याः किंतु तत्रास्ति कश्चिद्विशेषो **व्यवसिता** निश्चिताः सूर्या अष्टावित्येवंविधः, पञ्चकर्णसप्तकर्णाभ्यां सप्तानां सूर्याणां प्रत्यक्षेण दृष्टत्वात्प्राणत्रातेनाष्टमस्यापि दृष्टत्वात्। 31228

अष्टसंख्यां निगमयति—

**सूर्यमण्डलान्यष्टात ऊर्ध्वम्,** इति ।

यस्मादृषिभिर्दृष्टत्वेनाष्टौ सूर्या निश्चिता अतः कारणादस्माभिरदृश्यमानान्य-प्यूर्ध्वमाकाशे सूर्यमण्डलान्यष्ट विद्यन्त इत्यभ्युपेयम् । तत्र संनिहितत्वादेकमेवास्मा-भिर्दृश्यते ।

बहुमण्डलप्रतिपादिकामृचमुदाहरति—

**तेषामेषा भवति,** इति ।

**तेषामनेक**सूर्यमण्डलानां प्रतिपादिकेयमृग्विद्यते ।

तामेतामृचं दर्शयति—

**चित्रं देवानामुदगादनीकम् । चक्षुर्मित्रस्य वरुणस्याग्नेः । आप्रा द्यावापृथिवी अन्तरिक्षम् । सूर्य आत्मा जगतस्तस्थुषश्चेति (६),** इति ।

**साकं ग्राक्षिस्तपस्त्रितपा नानासूर्याः सूर्या नव च ॥**

**इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके प्रथमप्रपाठके सप्तमोऽनुवाकः ॥ ७ ॥**

**चित्रं** बहुमण्डलरूपत्वेन विचित्रं **देवानामनीक**मन्धकाररूपवृत्रशरीरात्मकस्य शत्रोर्विनाशकत्वेन देवसैन्यरूपमादित्यमण्डल**मुदगा**त्पूर्वस्यां दिश्युदेति । तच्च मण्डलजातं **मित्रा**दीनां **चक्षुः**स्वरूपम् । अन्धकारनिवारणेन चक्षुषोऽनुग्रहात् । तादृशं सैन्यं **द्यावापृथिवी अन्तरिक्षं** चाऽऽप्रा लोकत्रयं स्वकीयप्रकाशेनाऽऽपूर्य वर्तते । तथाविध-मण्डलसमूहस्वामी **सूर्यो जगतो** जङ्गमस्य **तस्थुषः** स्थावरस्य चाऽऽत्मा स्वरूपम् । इत्यनेनेष्टकामुपदध्यात् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीय-तैत्तिरीयारण्यकभाष्ये प्रथमप्रपाठके सप्तमोऽनुवाकः ॥ ७ ॥

अथ प्रथमेऽष्टमोऽनुवाकः ।

---

कल्पः—"पुरस्तात्क्वेदमभ्रमित्येकाम्" इति । पाठस्तु—

**क्वेदमभ्रं निविशते । क्वायꣳ संवत्सरो मिथः ।**

**क्वाहः क्वेयं देव रात्री । क्व मासा ऋतवः श्रिताः, इति ।**

अपो बिभ्रती(भर्ती) त्यभ्रं मेघस्वरूपं तच्चाऽऽकाशे निरालम्बत्वेनास्माभिर्दृश्यतेऽतः कुत्राऽऽधारे निवसतीति प्रश्नः । न ह्यालम्बनमन्तरेण निर्देष्टुं शक्यम् । एतच्चोपलक्षणम्, कारणमपि किमिति प्रष्टुरभिप्रायः । एवं **संवत्सराहोरात्रमासर्तवः** कस्मिन्नाश्रयेऽवस्थिताः किं वा तेषां कारणमिति हे **देव** जगत्कर्तः कथय । संवत्सरस्य बह्ववयवसमष्टित्वं द्योतयितुं **मिथ** इत्युक्तम् । बहवः कालावयवाः संभूय वसन्ति यत्र सोऽयं **संवत्सरः** ।

कल्पः—"अर्धमासा इत्युपरिष्टात्" इति ।

**अर्धमासा मुहूर्ताः । निमेषास्त्रुटिभिः सह ।**

**क्वेमा आपो निविशन्ते । यदीतो यान्ति संप्रति, इति ।**

**अर्धमासमुहूर्तनिमेषाः** प्रसिद्धाः । कालपरमाणुद्वयात्मकः कालद्व्यणुकस्त्रुटिः, तथाविधैस्त्रुटि**भिः सहा**र्धमासादयः कुत्राऽऽधारे स्थिताः कुतश्चोत्पन्नाः । भूमौ वर्तमाना **आपो** याः सन्ति ता **यदि** घर्मकाल **इतो** भूमेः सकाशाद्**यान्ति** । दृश्यते हि तस्मिन्काले सर्वत्र जलशोषः । **संप्रति** तदानीमिमा **आपः क्व निविशन्ते** चाऽऽसामाधारः कः ।

कल्पः—"काला अप्सु निविशन्ते(न्त) [इति द्वे?]" इति । तत्र प्रथमामाह—

**काला अप्सु निविशन्ते । आपः सूर्ये समाहिताः (१) ।**

**अभ्राण्यपः प्रपद्यन्ते । विद्युत्सूर्ये समाहिता, इति ।**

पूर्वमन्त्रद्वयोक्तानां प्रश्नानामिदमुत्तरम् । संवत्सरादयस्त्रुट्यन्ताः कालाः पृष्टास्ते सर्वे **काला अप्सु निविशन्ते** । "आपो वा इदमग्रे सलिलमासीत्" इत्यपां जगत्कारणत्वेनाऽऽम्नातत्वात् । तत्रैव कालानामवस्थानमुत्पत्तिश्च । तथा हि **मनुना** तावदेवं स्मर्यते—

"अप एव ससर्जाऽऽदौ तासु वीर्यमवासृजत् ।
तदण्डमभवद्धैमं सूर्यकोटिसमप्रभम्" इति ।

---

१ क. °भ्रनन्वे° । २ क. °न्ते वा तासा° । ३ ख. ग. °स्त्र्यन्तादयः का° ।

परमेश्वरेण प्रथमं सृष्टास्वप्सु घनीभावसामर्थ्ये प्रक्षिप्ते सति ब्रह्माण्डं निष्पन्नं तच्च ब्रह्माण्डमभिन्नं सद्यावदवस्थितं तावतः कालस्य संवत्सर इति नाम संपन्नम्। तथा च वाजसनेयिनो बृहदारण्यके समामनन्ति—"तद्यद्रेत आसीत्संवत्सरोऽभवन्न ह पुरा ततः संवत्सर आस" इति। एवं ब्रह्माण्डेन सहाप्सु संवत्सरे समुत्पन्ने सति तदवयवाः कालविशेषाः सर्वेऽप्यद्भ्य एवोत्पन्ना अप्स्वेव निविशन्ते, तदिदं कालप्रश्नस्योत्तरम्। या एता आपो भूमौ शुष्यन्ति ताः सर्वा रश्मिद्वारा सूर्ये समाहिता भवन्ति। घर्मकाले हि तीक्ष्णैः सूर्यरश्मिभिर्जलशोषः सर्वैः प्राणिभिर्दृश्यते। अत एव बुद्धिमद्भिरुक्तम्—"सहस्रगुणमुत्स्रष्टुमादत्ते हि रसं रविः" इति। इदं च केमा आपो निविशन्त इत्यस्योत्तरम्। तेभ्यः सूर्यरश्मिभ्यः सकाशादभ्राणि जलं प्राप्नुवन्ति। रश्मयो हि स्वनिष्ठजलं धूमज्योतिर्मरुतां मेलनेनाभ्राकारमापादयन्ति, अतोऽभ्रस्य रश्मिगता आप एवोत्पत्तिकारणमाधारश्च। इदं च केदमभ्रमितिप्रश्नस्योत्तरम्। येयं विद्युन्मेघेषु दृश्यते येयं सूर्ये समाहिता। सूर्यरश्मेरेव विद्युदाकारेण परिणतत्वात्। एतदुत्तरसामर्थ्यात्केयं विद्युन्निविशत इत्यपि प्रश्नोऽत्र द्रष्टव्यः।

अथ द्वितीयामाह—

**अनवर्णे इमे भूमी। इयं चासौ च रोदसी, इति।**

वर्णो रूपविशेषस्तद्राहित्यमवर्णत्वं कुरूपत्वम्। केनापि कुरूपत्वेन रहितत्वमनवर्णत्वं सुरूपत्वम्। इमे भूमी उभे अनवर्णे सुरूपे दृश्येते। अत्र द्विवचनान्तभूमिशब्देन विवक्षितमर्थं श्रुतिरेव ब्रूते। इयं च भूमिरप्यसौ च द्यौरप्येते रोदसी द्यावापृथिव्यौ भूमिशब्देन विवक्षिते इत्यर्थः। द्यावापृथिव्योः सुरूपत्वं नाम बहुविधदेवपरिपूर्णत्वम्।

कल्पः—"किंस्विदत्रेति पञ्च वैष्णवीः" इति। तत्र प्रथमामाह—

**किंस्विदत्रान्तरा भूतम्। येनेमे विधृते उभे।**

**विष्णुना विधृते भूमी। इति वत्सस्य वेदना, इति।**

येन वस्तुनेमे द्यावापृथिव्यावुभे अपि विधृते विशेषेण सर्वजगदाधारत्वेन धृते अत्रान्तराऽनयोर्द्यावापृथिव्योर्मध्ये किंस्विद्भूतं किं नाम वस्तु तादृशं विधारकमभूत्, इति प्रश्नः। विष्णुना व्यापिना परमेश्वरेण भूमी द्यावापृथिव्यौ विधृते इत्येवं वत्साख्यस्य महर्षेर्वेदना विज्ञानम्। वत्सो हि स्मृतिकर्ता स च विष्णुमेव द्यावापृथिव्योर्विधारकं स्मरति। इदं च किंस्विदत्रेतिप्रश्नस्योत्तरम्।

---

१ ख. °न्न स°। २ क. तत्र ब्र°। ३ क. तद्रे°। ४ ख. ग. आभाति। ५ ख. ग. °त्द्रे स°। ६ क. °प्रश्नोत्त°। ७ क. °ष्णवीभिरवति। ख. ग. °ष्णवीति।

अथ द्वितीयामाह—

**इरावती धेनुमती हि भूतम् । सूयवसिनी मनुषे दशस्ये ( २ ) ।**

**व्यष्टभ्नाद्रोदसी विष्णवेते । दाधर्थ पृथिवीमभितो मयूखैः,** इति ।

**मनुषे** मनुष्यार्थमेते द्यावापृथिव्याविरावती अन्नवत्यौ बह्वन्नयुक्ते **धेनुमती** धेनुमत्यौ **सूयवसिनी** शोभनैर्यवसैर्भक्ष्यैर्युक्ते **दशस्ये** दातुमर्हे **भूतमन्नादिदानशक्ते** भवतः । **रोदसी** द्यावापृथिव्यावेतादृशौ व्यष्टभ्नाद्विष्णुर्विशेषेण धृतवान् । हे **विष्णो** त्वं **पृथिवीमेतां** द्युलोकसहितामभितोऽध उपरि च **मयूखैः** शङ्कुस्थानीयै रश्मिभि**र्दाधर्थ** धृतवानसि ।

अथ तृतीयामाह—

**किं तद्विष्णोर्बलमाहुः । का दीप्तिः किं परायणम् ।**

**एको यद्धारयद्देवः । रेजती रोदसी उभे,** इति ।

**यद्देवो** यो विष्णुरेक एव **रेजती** राजमाने **रोदसी** द्यावापृथिव्यावुभे **धारयद्धृ**तवांस्तस्य **विष्णोः किं तद्बलं** तादृशी शक्तिः कुत आगता, यैर्मयूखैर्धृतवान्सा **दीप्तिः का** कुत्रत्या, **किं च परायणं** तस्य सहायभूतं वस्तु, इति प्रष्टार **आहुः** ।

अथ चतुर्थीमाह—

**वाताद्विष्णोर्बलमाहुः । अक्षराद्दीप्तिरुच्यते । त्रिप-**

**दाद्धारयद्देवः । यद्विष्णोरेकमुत्तमम् ( ३ ),** इति ।

विष्णुर्हि वातरूपं सूत्रात्मानमुत्पाद्य तेन सूत्रेण सर्वं जगद्धारयति । तथा च **वाजसनेयिन** आमनन्ति—"वायुर्वै गौतम तत्सूत्रं वायुना वै गौतम सूत्रेणायं च लोकः परश्च लोकः सर्वाणि च भूतानि संदृब्धानि भवन्ति" इति । तस्मा**द्विष्णोर्बलं** धारणसामर्थ्यं **वातादागतमित्यभिज्ञा उत्तरमाहुः** । दीप्तिर्जगदवभासकं ज्योतिः, तच्च विष्णोर**क्षराद्वि**नाशरहितात्स्वकीयात्परमपदाद्भवतीत्यभिज्ञैरुच्यते । विष्णोर्हि जगत्सृष्ट्यादिनिर्वाहकमुपासकैरुपास्यमिदमपरं यच्च ज्ञानिभिर्वेद्यं परमं पदम्, अत एवाऽऽम्नायते—"तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः" इति । तत्र परविद्यागम्यं स्वरूपं विनाशराहित्यादक्षरम् । अत एवाऽऽ**थर्वणिका** आमनन्ति—"अथ परा यया तदक्षरमधिगम्यते" इति । तस्मादक्षराज्जगदवभासिका चैतन्यरूपा दीप्तिर्लभ्यते । "तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति" इति श्रुतेः । इदं च का

१ क. °मबाद्वि° । २ ग. कुतस्या । ३ ख ग. रमम्, । ४ क. °र्लभते ।

दीप्तिरित्यस्योत्तरम्—**पुरुषसूक्ते**—"पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि" इत्याम्नायते। सर्वमप्येतज्जगदस्य परमेश्वरस्य चतुर्थोऽशः। अवशिष्टमंशत्रयं व्यवहारातीतत्वादमृतमविनश्वरं सद्द्योतनात्मके[1] स्वस्वरूपे सर्वदाऽवतिष्ठते। तादृशात्त्रिपात्स्वरूपाद्ब्रह्मणो लब्धसामर्थ्यो **देवो** विष्णुर्धारयत्सर्वं जगद्धारयति। **यत्त्रिपाद्वस्तु विष्णोरेकमेवोत्तमं** स्वरूपं तस्मात्त्रिपदादिति पूर्वत्रान्वयः। अथ वैतदुत्तरवशात्पूर्वत्रैको यद्धारयदिति वाक्ये कथमेको धृतवानिति प्रश्न उन्नेयः।

अथ पञ्चमीमाह—

**अग्नयो वायवश्चैव। एतदस्य परायणम्,** इति।

य एतेऽ**ग्नयः** सावित्रादय आरुणकेतुकान्ताः, ये च तत्सखिभूता **वायवः चका**राद्येऽप्यादित्याः, **एतत्**सर्वं देवताजात**मस्य** विष्णोः **परायणं** सहकारिभूतम्। इदं च किं परायणमित्यस्योत्तरम्।

कल्पः—"पृच्छामि त्वां परं मृत्युमिति चतस्रो मृत्युमतीः" इति। तत्र प्रथमामाह—

**पृच्छामि त्वां परं मृत्युम्। अवमं मध्यमं चतुम्।**

**लोकं च पुण्यपापानाम्। एतत्पृच्छामि संप्रति,** इति।

अत्र कश्चिन्मुनिर्जिज्ञासुरभिज्ञमन्यं मुनिं पृच्छति—हेऽभिज्ञ मुने त्वां[2] प्रति चतुर्विधान्मृत्यून्**पृच्छामि**। परोऽवमो[3] मध्यमश्चतुर्थश्चेत्येते मृत्यवस्तेषां स्वरूपं ब्रूहि। चतुर्थ इत्येतस्मिन्नर्थे **चतुः**(तु)शब्दः। तथा पुण्यकृतां पापिनां च **लोकं** ब्रूहि। एतत्सर्वमिदानीं **पृच्छामि**।

अथ द्वितीयामाह—

**अमुमाहुः परं मृत्युम्। पवमानं तु मध्यमम्।**

**अग्निरेवावमो मृत्युः। चन्द्रमाश्चतुरुच्यते (४),** इति।

इदमभिज्ञस्योत्तरम्—योऽसावादित्योऽमुमेव **परं मृत्युं** पूर्वे महर्षय **आहुः**। आदित्यस्य परिस्पन्दबाहुल्येनाऽऽयुषः क्षये सति मृत्योरलङ्घनीयत्वात्। **पवमानं** वायुं **मध्यमं मृत्युमाहुः**। प्राणवायोर्नाडीष्वन्यथा संचारे सति तत्क्लेशेन मृत्युः प्राप्यते स च प्राणायामकुशलैर्योगिभिः क्लेशेन समाधातुं शक्यते, तस्मान्मध्यमो मृत्युः। जाठराग्निर्यदा मन्दो भवति तदा व्याधिद्वारा मृत्युः प्राप्नोति स च चिकित्सकैरल्प-

---

१ ख. ०द्द्यो०। २ क. ख. ०यः। ए०। ३ ख. त्वां। ४ ख. त्वां। ५ क. त्वा। ६ क ख. परमो मध्यमोऽवमोऽधमश्च०। ७ क. ०तुर्थे०। ८ ख. ०त्युः। जठ०। ९ क. ख. मन्दो।

प्रयासेन समाधातुं शक्यते तस्मादग्निरवमो मृत्युः। चन्द्रमा ओषधीनामधिपतिः, तदनुग्रहाभावे सत्यन्नाभावान्मृत्युः प्राप्नोति, तस्मादसौ चतुर्थो मृत्युः।

अथ तृतीयामाह—

**अनाभोगाः परं मृत्युम्। पापाः संयन्ति सर्वदा।**

**आभोगास्त्वेवं संयन्ति। यत्र पुण्यकृतो जनाः, इति।**

**पापाः** श्रुतिस्मृत्युल्लङ्घनेन पापमेवाऽऽचरन्तः पुरुषा **अनाभोगाः** सुखलेशेनापि हीनाः कृमिकीटादयः सन्तः **सर्वदा परं मृत्युं संयन्ति** कतिपयैरेवाऽऽदित्यपरिस्पन्दैरल्पायुषः सन्तः पुनः पुनर्जायन्ते म्रियन्ते च। सेयं सर्वदा परमृत्युप्राप्तिः। ये तु श्रुतिस्मृतिमार्गवर्तिनस्ते सर्वेऽप्याभोगाः संपूर्णाः सर्वभोगयुक्ताः सन्तस्तादृशं स्थानं प्राप्नुवन्ति। **यत्र** यस्मिन्स्वर्गे पूर्वे **पुण्यकृतो जना** देवा वर्तन्ते तत्र गच्छन्ति। एतत्तु लोकं च पुण्यपापानामित्यस्योत्तरम्।

अथ चतुर्थीमाह—

**ततो मध्यममायन्ति। चतुर्थमग्निं च संप्रति, इति।**

**ततः** पूर्वोक्तेभ्योऽत्यन्तपापकृद्भ्योऽत्यन्तपुण्यकृद्भ्यश्चान्ये ये पुरुषा मिश्राणि पुण्यपापान्याचरन्ति ते **संप्रति** मनुष्यजन्मनि मध्यमाधमचतुर्थमृत्युं च तदा प्राप्य प्रतीकारैः समादधते। एतदपि पुण्यपापलोकप्रश्नस्योत्तरम्।

कल्पः—"पृच्छामि त्वा पापकृतश्चतस्रो निरयवतीः" इति। तत्र प्रथमामाह—

**पृच्छामि त्वा पापकृतः। यत्र यातयते यमः।**

**त्वं नस्तद्ब्रह्मन्प्रब्रूहि। यदि वेत्थाऽसतो गृहान् (५), इति।**

हे **ब्रह्मंस्त्वामिदं पृच्छामि**। किं पृच्छसीति तदुच्यते—**पापकृतः** प्राणिनो **यमो यत्र स्थाने यातयते** क्लेशयति तत्स्थानं **नो**ऽस्मभ्यं **त्वं प्रब्रूहि**। **यद्यसतः** पापिनो जन्तोर्**गृहा**न्नायतनानि **वेत्थ** तर्हि शुश्रूषवे मह्यं ब्रूहि।

अथ द्वितीयामाह—

**कश्यपादुदिताः सूर्याः। पापान्निर्घ्नन्ति सर्वदा।**

**रोदस्योरन्तर्देशेषु। तत्र न्यस्यन्ते वासवैः, इति।**

योऽयं कश्यपाख्योऽष्टमः सूर्यो महामेरौ नित्यं वसति तस्मादुत्पन्ना आरोगादयः सप्त सूर्यास्तदीयमूर्तिविशेषा अन्ये सहस्रसंख्याकास्ते सर्वेऽपि **रोदस्योरन्त**र्द्यावापृथि-

---

१ ग. च. परं मृत्युं प्रा०। २ ग. °हान्पातकाने।

द्योर्मध्य(ध्ये)देशेषु रौरवादिनरकप्रदेशेषु, पापान्पापिनः प्राणिनः **सर्वदा निघ्नन्ति** निःशेषेण मारयन्ति। मारिताश्च ते पापिनो **वासवैर्निवासहेतुभिः सूर्यरश्मिरूपैर्देवैस्तत्र न्यस्यन्ते** तेष्वेव नरकप्रदेशेषु पुनरपि बाधिता उत्पाद्य स्थाप्यन्ते।

अथ तृतीयामाह—

**तेऽशरीराः प्रपद्यन्ते। यथाऽपुण्यस्य कर्मणः।**

**अपाण्यपादकेशासः। तत्र तेऽयोनिजा जनाः, इति।**

**ते** पापिनस्तेषु नरकस्थानेष्व**शरीराः**[1] संपूर्णावयवैर्वसमीचीनावयवरहिताः **प्रपद्यन्ते** जन्म प्राप्नुवन्ति, अपुण्यस्य **कर्मणो यथा** योग्यं तथा प्राप्नुवन्ति। तत्र कश्चित्पापी पाणिशून्यः कुणिर्भवति। अपरः पादहीनः पङ्गुर्भवति। अपरः केशहीनः खलतिर्भवति। एवम**पाण्यपादकेशासो** विकृतशरीरा जायन्ते। किंच **तत्र** तेषु नरकस्थानेषु केचि**दयोनिजा** जन्तवो भवन्ति। तन्मध्ये केचित्स्वेदजाः कृमिदंशाद्या अपर उद्भिदस्तरुगुल्माद्या भवन्ति। अत एव **वाजसनेयिनः** पञ्चाग्निविद्यायां दक्षिणोत्तरमार्गरहितानां पापिनामीदृशं जन्माऽऽमनन्ति—"अथ य एतौ पन्थानौ न विदुस्ते कीटाः पतङ्गा यदिदं दन्दशूकम्" इति। **छन्दोगा**श्चैवमामनन्ति—"तानीमानि क्षुद्राण्यसकृदावर्तीनि भूतानि भवन्ति" इति।

अथ चतुर्थीमाह—

**मृत्वा पुनर्मृत्युमापद्यन्ते। अद्यमानाः स्वकर्मभिः (६)।**

**आशातिकाः क्रिमय[3] इव। ततः पूयन्ते वासवैः, इति।**

तेषु नरकस्थानेषूत्पन्नाः प्राणिनः सकृन्**मृत्वा पुन**रुत्पद्यन्ते **मृत्युं** प्राप्नुवन्ति, जन्ममरणसहस्राणि प्रतिपद्यन्त इत्यर्थः। ते च **स्वकर्मभिः** स्वकीयैः पापै**रद्यमाना** भक्ष्यमाणाः, कर्मपरवशा इत्यर्थः। तेषामेव मध्येऽस्मत्प्रत्यक्षसिद्धो दृष्टान्त उदाह्रियते—**आशातिका** आगत्य शात्यमाना अस्माभिरेव बाध्यमानाः शिरोवस्त्रखट्वादिषु वर्तमानाः **क्रिमय इव** यूका मत्कुणादय इव। यूकादयः पापिनो यथाऽस्माभिः प्रतिक्षणं मार्यन्त एवमन्येऽपि पापिनो देवैर्मार्यन्त इत्यर्थः।

अथ ब्राह्मणम्—

**अपैतं मृत्युं जयति। य एवं वेद। स खल्वैवं-**

**विद्ब्राह्मणः। दीर्घश्रुत्तमो भवति। कश्यप-**

---

१ क. °रीरा असं°। २ क. °थवाः स°। ३ ग. कृमयः। ४ ख. ग. खल्वेवं°।

स्यातिथिः सिद्धगमनः सिद्धागमनः, इति ।

यः पुमानेवं कश्यपादुदिताः सूर्या इत्याद्युक्तप्रकारेण कश्यपमहिमानं जानाति, असावेतमपमृत्युं कृमिकीटादिकेषूक्तमपकृष्टमृत्युं जयति । विदुषः पापेष्वप्रवृत्तेर्युक्तो मृत्युजयः । किं च स खलु ब्राह्मण एवंवित्कश्यपमहिमाभिज्ञः सन्दीर्घश्रुत्तमो भवति, दीर्घं चिरकालं कश्यपेन श्रूयते सम्यगनुष्ठाताऽयमिति, ततोऽप्यतिशयो बहूनां देवानां मुखाच्छ्रवणं बहवोऽपि देवाः कश्यपसमीपं गत्वा ब्राह्मणोऽयमारुणकेतुकं सम्यगनुतिष्ठतीति पुनः पुनः कथयन्त्यतोऽयं दीर्घश्रुत्तमः । परलोके कश्यपस्यातिथिरिव पूज्यो भवति । किंच स ब्राह्मणः स्वेच्छया कश्यपसमीपगमनागमनयोः समर्थो भवति ।

अथ ब्राह्मणोक्तार्थस्य प्रतिपादिकामृचमवतारयति—

तस्यैषा भवति, इति ।

तामेतामृचं दर्शयति—

आ यस्मिन्त्सप्त वासवाः । रोहन्ति पूर्व्या रुहः (७) ।

ऋषिर्ह दीर्घश्रुत्तमः । इन्द्रस्य घर्मो अतिथिरिति, इति ।

यस्मिन्कश्यपे सप्तसंख्याका आरोगादयः सूर्या आ रोहन्ति कश्यपादेवोत्पद्य स्थितिं लभन्त इत्यर्थः । कीदृशाः सप्त सूर्याः, वासवा जगन्निवासहेतवः, पूर्व्या रुहः सृष्ट्यादावुत्पन्नत्वेन प्रथमाङ्कुरभूताः, तस्येन्द्रस्य परमैश्वर्ययुक्तस्य कश्यपस्य दीर्घश्रुत्तमनामकः कश्चिदृषिर्घर्मो दीप्यमानः सन्नतिथिः संपन्नः । इत्यनयेष्टकामुपदध्यात् । अत एव बौधायनः—" मा यस्मिन्नग्ने नयेति द्वे " इति ।

अथ ब्राह्मणमुच्यते—

कश्यपः पश्यको भवति । यत्सर्वं परिपश्यतीति सौक्ष्म्यात्, इति ।

योऽयमष्टमः सूर्यो रूढ्या कपश्य इतिनाम्नाऽभिधीयते स एवावयवार्थपर्यालोचनायामाद्यन्तयोरक्षरयोर्व्यत्यासेन पश्यको भवति । यद्यस्मात्कारणादत्यन्तसूक्ष्मत्वेन दिव्यदृष्ट्या सर्वमतीतानागतादिकं परितः पश्यति ।

तदेवं कश्यपप्रकरणं समाप्याग्निप्रकरणमारभते—

अथाग्नेरष्टपुरुषस्य । तस्यैषा भवति, इति ।

---

१ क. °कीश्यूक°। ख. ग. °कीटोद्के°। २ ख. °र्षिर्हि द्री°। ३ क. °रभ्यते ।

अथ कश्यपमहिमकथनानन्तरमष्टपुरुषस्याष्टसंख्याकमूर्तियुक्तस्याग्नेर्महिमा कथ्यत इति शेषः। तस्याग्नेर्महिमप्रतिपादिकेयमृग्विद्यते।

तामेतामृचं दर्शयति—

अग्ने नय सुपथा राये अस्मान्। विश्वानि देव

वयुनानि विद्वान्। युयोध्यस्मज्जुहुराणमेनः।

भूयिष्ठां ते नमउक्तिं विधेमेति (८), इति।

समाहिता दशस्ये उत्तमसुच्यते गृहान्त्स्वकर्मभिः पूर्व्या रुह इति।

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके प्रथमप्रपाठकेऽ-

ष्टमोऽनुवाकः॥ ८॥

हेऽग्ने राये धनप्राप्त्यर्थमस्मान्सुपथा नय शोभनेन मार्गेण प्रापय। हे देव त्वं विश्वानि वयुनानि सर्वान्मार्गाञ्ज्ञानन्सन्वर्तसे। जुहुराणं कुटिलमेनः पापमस्मद्युयोध्यस्मत्सकाशाद्वियोजय। ते तुभ्यं भूयिष्ठामत्यधिकां नमउक्तिं नमस्कारप्रतिपादकं वाक्यं विधेम कुर्यास्म। इत्यनयेष्टकामुपदध्यात्॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यके प्रथमप्रपाठकेऽष्टमोऽनुवाकः॥ ८॥

---

अथ प्रथमे नवमोऽनुवाकः।

---

कल्पः—"अग्निश्च जातवेदाश्चेत्यष्टौ" इति। पाठस्तु—

अग्निश्च जातवेदाश्च। सहोजा अजिराप्रभुः। वैश्वानरो

नर्यापाश्च। पङ्क्तिराधाश्च सप्तमः। विसर्पैवाऽष्टमोऽ

ग्नीनाम्। एतेऽष्टौ वसवः क्षिता इति, इति।

अग्न्यादयः शब्दा मूर्तिविशेषाणां नामधेयानि। तत्र यः पङ्क्तिराधाः सोऽग्नीनां मूर्तिविशेषाणां मध्ये सप्तमो ज्ञेयः। विसर्पच्छ(र्पेवश)ब्देन विसर्पीति नाम विवक्ष्यते। सोऽयमग्नीनां मध्येऽष्टमः। एतेऽग्न्यादयोऽष्टौ मूर्तिविशेषा वसवः सर्वेषां प्राणिनां निवासहेतवः, स्वयं च क्षिताः सुखेन निवासं प्राप्ताः। इतिशब्द उपधानप्रदर्शनार्थः। अस्यामृच्यभिहितानि नामान्येवोपधानमन्त्राः। अग्निस्तया देवतयाऽङ्गिरस्वद्ध्रुवाऽऽसीदेत्येवं सर्वत्रोपधानम्।

---

१ ख. ग. 'सर्पो वाऽ'।

अथ ब्राह्मणमुच्यते—

**यथर्त्वेवाग्नेरर्चिर्वर्णविशेषाः । नीलार्चिश्च पीतकार्चिश्चेति, इति ।**

ऋतूननतिक्रम्य **यथर्तु**, यस्यर्तोर्यादृशो वर्णविशेषस्तस्मिन्नृतावग्नेरपि **वर्णविशेषस्ता**दृगेव भवति । एवं सति क्वचिदृतौ **नीलार्चिः** क्वचिच्च **पीतार्चि**रित्यादिकं द्रष्टव्यम् ।

कल्पः—"प्रभ्राजमाना इत्येकादश रुद्राः प्रभ्राजमान्य इत्येकादश रुद्राण्यः" इति । तदेतदुभयविधं विधत्ते—

**अथ वायोरेकादशपुरुषस्यैकादशस्त्रीकस्य, इति ।**

**अथा**ग्नेरष्टविधस्य मन्त्रस्य कथनादनन्तरम्, एकादशभिः पुरुषमूर्तिभिरेकादशभिः स्त्रीमूर्तिभिश्च युक्तस्य वायोरिष्टका उपधेयाः ।

तत्र पूर्ववन्नामधेयरूपान्मन्त्रान्दर्शयति—

**प्रभ्राजमाना व्यवदाताः (१) । याश्च वासुकिवैद्युताः । रजताः परुषाः श्यामाः । कपिला अतिलोहिताः । ऊर्ध्वा अवपतन्ताश्च । वैद्युत इत्येकादश, इति ।**

अत्रापि प्रभ्राजमानास्तया देवतयाऽङ्गिरस्वद्ध्रुवाऽऽसीदेत्यादिकं द्रष्टव्यम् । **याश्चे**त्युपन्यासार्थमुच्यते नतु नामान्तःपाती । वैद्युतपर्यन्ता या (य) उक्तास्ता (स्त) **इति**शब्देन परामृश्यन्ते । इत्येकादश वायुसंबन्धिपुरुषगणाः । एकैकस्मिन्गणे पुरुषबाहुल्यात्**प्रभ्राजमाना** इत्यादिबहुवचननिर्देशः । एकादशस्त्रीकस्येति विहितत्वादनाम्नाता अपि स्त्रीनाममन्त्रा अत्रोन्नेयाः । तथा च प्रभ्राजमान्यस्तया देवतयाऽङ्गिरस्वद्ध्रुवाऽऽसीदेति मन्त्रपाठः संपद्यते ।

उक्तवायुगणवेदनं प्रशंसति—

**नैनं वैद्युतो हिनस्ति । य एवं वेद, इति ।**

**यः** पुमान्वायुगणमाहात्म्यं वेदैनं वैद्युतोऽग्निरशनिरूपो **न हिनस्ति** ।

एतस्योत्तमफलत्वं द्योतयितुं वैद्युतवधस्य कष्टतां दर्शयति—

**स होवाच व्यासः पाराशर्यः ।**

**विद्युद्वधमेवाहं मृत्युमैच्छमिति, इति ।**[2]

पराशरस्य पुत्रो **व्यासाख्यो** महर्षिर्योऽस्ति **स** खल्वेव**मुवाच**, विद्युताऽशनिना क्रियमाणो यो वधस्तमेवाहं **मृत्युमैच्छं** तस्य मरणस्यातिकष्टत्वात्स एव वध एको

---

१ ख. ग. °स्त्रीगणक° । २ ग. °ति (२), इ° ।

मृत्युशब्दस्य मुख्यार्थः । तदपेक्षयाऽन्येषां पापिष्ठत्वाभावादितरे वधा मृत्यव एव न भवन्तीत्यहं मन्ये ।

विद्युद्वधस्यातिकष्टत्वं प्रदर्श्य वेदितुस्तद्वधराहित्यलक्षणं फलं पूर्वोक्तमुपसंहरति —

न त्वकामꣳ हन्ति ( २ ) । य एवं वेद, इति ।

एवं वेदितुर्विद्युद्वधपरिहारार्थित्वाद्विद्युद्वधे कामरहितं वेदितारं स वैद्युतोऽशनिर्नैव हन्ति ।

कल्पः—" स्वानभ्राडित्येकादश गन्धर्वाः पदशः पश्चात् " इति । तदेतद्विधत्ते—

अथ गन्धर्वगणाः, इति ।

वायुगणानन्तरं गन्धर्वगणा उपधेयाः ।

गन्धर्वाणां नाममन्त्रान्दर्शयति —

स्वानभ्राट् । अङ्घारिर्बम्भारिः । हस्तः सुहस्तः । कृशानुर्विश्वावसुः । मूर्धन्वान्सूर्य-वर्चाः । कृतिरित्येकादश गन्धर्वगणाः, इति ।

स्वानादीनि गणनामधेयानि । स्वानत(स्त?)या देवतयाऽङ्गिरस्वद्ध्रुवाऽऽसीदेत्येवमुपधानं कर्तव्यम् ।

एकादशसंख्याका य एते गन्धर्वगणास्तान्प्रशंसति—

देवाश्च महादेवाः । रश्मयश्च देवा गरगिरः ( ३ ) । इति ।

देवाः स्वयं द्योतमानाः, महादेवा इतरेषु देवेषु मध्ये गुणैर्महान्तः रश्मयो दीप्तिमन्तः, देवा इतरेषामपि द्योतयितारः, गरगिरो विषमपि निगीर्य जरयन्ति ।

एतद्वेदनं प्रशंसति—

नैनं गरो हिनस्ति । य एवं वेद, इति ।

वेदितुर्विषबाधा नास्ति ।

कल्पः—" गौरी मिमायेत्येका " इति ।

गौरी मिमाय सलिलानि तक्षती । एकपदी द्विपदी सा चतुष्पदी । अष्टापदी नवपदी बभूवुषी । सहस्राक्षरा परमे व्योमन्निति, इति ।

गौरी शुक्लवर्णा सरस्वती या शब्दब्रह्मात्मिका सा मिमाय मिमीते स्वकीयैः शब्दैरभिधेयं सर्वं जगत्परिच्छिनत्ति । किं कुर्वती, सलिलान्युदकजन्यानि सर्वाणि

भूतजातानि तक्षती स्वव्याप्त्या नाना कुर्वती । एकैकस्य हि पदार्थस्य बहूनि नामधेयानि, वृक्षो महीरुहः शाखीत्येवं पार्यायबहुत्वदर्शनात् । यद्यप्यत्र प्रवृत्तिनिमित्तभूता अवयवार्था भिद्यन्ते तथाऽपि देशभेदेन भिन्नभाषासु नास्ति प्रवृत्तिनिमित्तभेदः । अतः शब्दप्रपञ्चस्य बाहुल्यादर्थप्रपञ्चोऽपि स्वल्पो भवति । सा च सरस्वती छन्दोभेदादेक-पद्यादिरूपेण वर्धमाना **सहस्राक्षरा** सहस्रशब्दस्यानन्तपर्यायत्वादनन्ताक्षरा, अत्र **बभूवुषी** भवितुमिच्छां कृतवती **परमे व्योमन्**विविधरक्षके परमे जगत्कारणे ब्रह्मणि स्थिता । इत्यनयेष्टकामुपदध्यात् ।

अस्या ऋचस्तात्पर्यं दर्शयति—

**वाचो विशेषणम्,** इति ।

**वाग्**देवतायाः स्तुतिरस्यामृचि क्रियत इत्यर्थः ।

कल्पः—"वराहव इति सप्त वाताः पदशः" इति तदेतद्विधत्ते—

**अथ निगदव्याख्याताः ।ताननुक्रमिष्यामः,** इति ।

**अथ** सारस्वतेष्टकोपधानानन्तरं **निगदव्याख्याता** उपधेयाः । निगद्यमानेनैव मन्त्रपाठेनैव तेषां वायूनां महिमा विस्पष्टमाख्यातो भवति । **तानेता**न्मन्त्रा**ननुक्र**मेण कथयिष्यामः ।

प्रतिज्ञातान्मन्त्रान्दर्शयति—

**वराहवः स्वतपसः ( ४ )। विद्युन्महसो धूपयः ।**
**श्वापयो गृहमेधाश्चेत्येते । ये चेमेऽशिमिविद्विषः,** इति ।

अत्र वराहव इत्यारभ्य गृहमेधा इत्यन्तैः षड्भिः पदैः पर्जन्यप्रवर्तका वायुविशेषा उच्यन्ते । तेषां गणरूपत्वादेकैकगणस्थान्बहून्विवक्षित्वा वराहव इत्यादिबहुवचननिर्देशः । वरं श्रेष्ठं वर्षमाह्वयतीति वराहः (हुः), ते च बहवो **वराहवः** । ये वायवः **स्वतपसः** स्वयमेव तपन्ति न तु तापार्थमग्निमादित्यं वाऽपेक्षन्ते **स्वतपसः** । विद्युत्समानं महस्तेजो येषां ते **विद्युन्महसः धूपयो** गुग्गुलदशाङ्गादिद्रव्यान्तरैरन(न्तरान)पेक्षेण स्वशरीरगतसुगन्धेनैव सर्वान्पदार्थान्धूपयन्तो वासितान्कुर्वन्तो वर्तन्ते । **श्वापयः** । शुशब्द आशुशब्दपर्यायस्ततः शीघ्रव्यापिन इत्युक्तं भवति । गृहेषु मेधार्हा[3] **गृहमेधाः** । चकारः षण्णां समुच्चयार्थः । ईत्येत इतिशब्दद्वयेन यथोक्तनिर्वचनप्रख्यातमाहिमत्वं प्रदर्श्यते । एवं षड्विधा वायुगणा एकदेशवर्तिनो निर्दिष्टाः । गणान्तरं तु देशान्तरवर्ति-

१ ग. °श्चेतीति । ये । २ क. °त्याद्यार° । ३ ख. ग. बधार्हा ४ ग. इतीतीति° ।

त्वापृथङ्निर्दिश्यते । शिमिः कर्म कृष्यादिकं तस्य विघातकाः शिमिविद्विषः, तद्विपरीता अशिमिविद्विषः कृष्याद्यनुकूलप्रवृत्तयो वायव इत्यर्थः । तादृशा ये च सन्ति तेऽपि पूर्वोक्तपङ्गणवन्निगदेनैव व्याख्यातमहिमान इत्यभिप्रायः । अत्र नामान्येव मन्त्राः । तथा सति वराहवस्तया देवतयाऽङ्गिरस्वद्ध्रुवाऽऽसीदेत्येवमुपधानं संपद्यते ।

तैत्तच्छन्देनैव व्याख्यापितो यो महिमा तं महिमानं संगृह्य पुनः प्रकटयति—

**पर्जन्याः सप्त पृथिवीमभिवर्षन्ति । वृष्टिभिरिति ।**

**एतयैव विभक्तिर्विपरीताः सप्तभिर्वातैरुदीरिताः ।**

**अमूँल्लोकानभिवर्षन्ति । तेषामेषा भवति, इति ।**

पूर्वोक्तैः सप्तभिर्वायुगणैः प्रवर्तिताः सप्तविधा मेघा **वृष्टिभिरस्माभिर्दृश्यमानाभिः पृथिवीमभिलक्ष्य वर्षन्ति,** इत्येषां वायूनां महिमा । निराधारेऽन्तरिक्षे मेघान्संपाद्य बहुविधजलसंग्रहो योऽस्ति यस्य देशविशेषस्य यावदपेक्षितं तत्र तावदेव वर्षणं यच्चास्ति स सर्वोऽप्यचिन्त्यत(स्त)न्महिमेति दर्शयितुमितिशब्दप्रयोगः । यया रीत्या भूमावभिवर्षणमेतयैव रीत्याऽमून्सर्वाँल्लोकान्पर्जन्या अभिवर्षन्ति । इयांस्तु विशेषः यद्विभक्तिवैपरीत्यम् । विशिष्टं भजनं विभक्तिः । भूमिं प्रति पर्जन्यानामधोमुखत्वम्, उपरितनाँल्लोकान्प्रत्यभिवर्षणार्थमूर्ध्वमुखत्वमिति वैपरीत्यम् । न चोर्ध्वाभिवर्षणमयुक्तमिति शङ्कनीयम्, यस्मादेते पर्जन्याः पूर्वोक्तैः **सप्तभिर्वायुगणैरुदीरिता** ऊर्ध्वं प्रेरिताः दृश्यते हि वायूनां सर्वतः प्रेरणसामर्थ्यम् । तस्मादधोवर्षणवद्वायुवशादूर्ध्ववर्षणमपि संभवत्येव । तेषां पूर्वोक्तवायूनामूर्ध्वाधोवर्षणसामर्थ्यप्रतिपादिकेयमृग्विद्यते ।

तामेतामृचं दर्शयति—

**समानमेतदुदकम् (५) । उच्चैत्यव चाहभिः । भूमिं**

**पर्जन्या जिन्वन्ति । दिवं जिन्वन्त्यग्नय इति, इति ।**

यदुदकं भूमौ वृष्टं यच्चोर्ध्वलोकेषु तत्सर्वं **समानं** द्रवस्वभावमेव तथाऽप्य**हभिः** कैश्चिदुहोभिर्दिनैरुदकं चोर्ध्वमपि गच्छति पुनरपि कैश्चिद्दिनैरवैति **चा**धोऽपि गच्छति । तत्राऽऽगतेनोदकेन **पर्जन्या भूमिं जिन्वन्ति** प्रीणयन्ति । यथाऽग्नय ऊर्ध्वज्वाला एवमूर्ध्वाभिमुखाः पर्जन्या ऊर्ध्वगतिसामान्यादग्नय इत्युच्यन्ते । ते चोर्ध्वाभिवर्षणेन दिवं प्रीणयन्ति । इत्यनयेष्टकामुपदध्यात् । तथा च **बौधायन** आह—

१ क. थिगिनि । २ ख. ग. तच्छ° । ३ क. ख. त्येतेषां । ४ ख. ग. °त्यवि° । ५ क. °शिष्टभ° । ६ ग. °नं भू° । ७ ख. ग. °रीत्यं च नोर्ध्वा° । ८ ख. ग. °दूर्ध्वं व° । ९ ग. उच्चैत्य° । १० ग. °वराभि° । ११ ख. ग. °नि च पु° ।

"समानमेतदिति वृष्टिमतीम्" इति । इष्टकाविशेषस्य वृष्टिमतीति नामधेयम् । एवमुक्तैस्त्रिभिर्मन्त्रैर्लोकाप्यायितशंयुनामकानामिष्टकाविशेषाणामुपधानं स एवाऽऽह--"यदक्षरमिति लोको जमदग्निरित्याप्यायितस्तच्छंयोरिति शंयुः" इति ।

तत्र प्रथमं मन्त्रमाह--

यदक्षरं भूतकृतम् । विश्वे देवा उपासते ।
महर्षिमस्य गोप्तारम् । जमदग्निमकुर्वत, इति ।

न क्षरति न विनश्यति कदाचिदपीत्यक्षरं यत्परं ब्रह्म वस्तु भूतकृतमाकाशादि भूतरूपेण निष्पन्नम् । अत एवोपनिषद्याम्नायते—"तदात्मानं स्वयमकुरुत" इति । तादृशं विश्वे सर्वेऽपि देवा उपासते । अस्याक्षरस्य गोप्तारं रक्षितारं जमदग्न्याख्यं महर्षिमकुर्वत । देवा इन्द्रादयः स्वपुरुषार्थसिद्ध्यर्थं स्वयमुपासते मनुष्याणामनुग्रहार्थं जमदग्निप्रभृतिकं महर्षिसंघमस्याक्षरस्योपदेष्टारमकुर्वत । ऋषयो हि तत्तद्वेदप्रवर्तनेन मनुष्येभ्योऽक्षरमुपदिश्य तत्संप्रदायं परिपालयन्ति ।

अथ द्वितीयं मन्त्रमाह—

जमदग्निराप्यायते । छन्दोभिश्चतुरुत्तरैः । राज्ञः सोमस्य तृप्तासः (६) । ब्रह्मणा वीर्यावता । शिवा नः प्रदिशो दिशः, इति ।

स च जमदग्निश्चतुरुत्तरैरक्षरचतुष्टयादुत्तरभाविभिर्गायत्र्यादिभिश्छन्दोभिः स्वेनोपदिष्टैर्मन्त्रैर्वाऽऽप्यायते प्राणिनोऽभिवर्धयति । ते च प्राणिनो वीर्यावता शक्तिमता ब्रह्मणा मन्त्रेण राज्ञो राजमानस्य सोमस्य लतात्मकस्य पातारो भूत्वा तृप्तासः कृतकृत्यत्वबुद्ध्या तृप्ता भवन्ति। सैव तृप्तिः स्पष्टी क्रियते---नोऽस्माकं प्रदिशः प्राच्याद्यमुख्या दिश आग्नेयाद्या अवान्तरदिशश्च शिवाः शान्ताः संपन्नाः, सर्वदिग्वार्तिप्रजासुखहेतवः संपन्ना इत्यर्थः ।

अथ तृतीयं मन्त्रमाह--

तच्छं योरावृणीमहे । गातुं यज्ञाय । गातुं यज्ञपतये । दैवी स्वस्तिरस्तु नः । स्वस्तिर्मानुषेभ्यः । ऊर्ध्वं जिगातु भेषजम् । शं नो अस्तु द्विपदे । शं चतुष्पदे, इति ।

शं प्राप्तानां रोगादीनामुपशमनकारणम् । योः, आगामिनां रोगादीनां वियोगका-

१ ख. ग. 'शेषमु' । २ ग. 'र्वते । इ' । ३ ख ग. 'र्वते । दे' । ४ ग. 'तिकम' । ५ ग. 'र्वते । ऋ' । ६ ख. ग 'मानस्य । ७ ग. मुख्यदि' ।

रणम्, तत्कर्माऽऽरुणकेतुकाख्यमावृणीमहे आभिमुख्येन प्रार्थयामहे। यज्ञाय तस्मिन्नारुणकेतुकेऽनुष्ठीयमानस्योत्तरक्रतोर्गातुं गतिमावृणीमहे प्रार्थयामहे। यज्ञपतये यजमानस्य च गातुं गतिं फलप्राप्तिमावृणीमहे। नोऽस्माकं दैवी स्वस्तिर्देवैः संपादितः क्षेमोऽस्तु। मानुषेभ्यः पुत्रादिभ्यश्च स्वस्तिः क्षेमोऽस्तु। इत ऊर्ध्वं सर्वदा भेषजं सर्वानिष्टनिवारणं जिगातु प्राप्नोतु। स(?) नोऽस्मदीयाय द्विपदे मनुष्याय च शं सुखमस्तु चतुष्पदे पशवेऽपि शं सुखमस्तु।

अथ ब्राह्मणवाक्यमुच्यते—

**सोमपा३ असोमपा३ इति निगदव्याख्याताः (७), इति।**

**व्यवदाता हन्ति गरगिरस्ततपस उदकं तृप्तासश्चतुष्पद एकं च॥**

**इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके प्रथमप्रपाठके नवमोऽनुवाकः॥ ९॥**

अथ निगदव्याख्याता इति यदुपक्रान्तं तदत्रोपसंह्रियते—वराहव इत्यादिषु शं चतुष्पद इत्यन्तेषु मन्त्रेषु ये सोमपा देवा ये चासोमपास्ते सर्वेऽप्यभिहिताः। प्लुतिद्वयमाख्यानार्थम्। "[अनन्त्यस्यापि] प्रश्नाख्यानयोः" इति सूत्रेण प्रश्नवन्निश्चिताख्यानेऽपि प्लुतस्य विहितत्वात्। त एते सर्वे देवा **निगदव्याख्याताः**। मन्त्रपाठेनैव तदर्थपर्यालोचनायां तत्तन्महिम्नः प्रतीयमानत्वात्॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यके प्रथमप्रपाठके नवमोऽनुवाकः॥ ९॥

---

अथ प्रथमे दशमोऽनुवाकः।

---

कल्पः—"सहस्रवृदियमित्यष्टौ संयानीः" इति। तत्र प्रथमामाह—

**सहस्रवृदियं भूमिः। परं व्योम सहस्रवृत्। अश्विना भुज्यू नासत्या। विश्वस्य जगतस्पती, इति।**

इयं दृश्यमाना **भूमिः** **सहस्रवृदुपकारकतया** सहस्रसंख्याकैः पुरुषैर्व्रियमाणा प्रार्थ्यमाना। भवति तथा **परं व्योमो**त्कृष्टं स्वर्गस्थानमपि **सहस्रवृत्**सहस्रसंख्याकैर्देवैः प्रार्थ्यमानं भवति। ते एते द्यावापृथिव्यावश्विनावश्विसदृशौ, यथाऽश्विनौ सर्वेषामुपकुरुत एवमेते द्यावापृथिव्यावपीत्यर्थः। कीदृशावश्विनौ, प्राणिनां रोगनिवर्तनेन

१ ग. सर्वदे°। २ ग. °ला:। इति स°।

**भुज्यू** भोगहेतू, **नासत्यौ**, कदाचिदप्यसत्यरहितौ, अत एव **विश्वस्य जगतः पती** पालयितारौ ।

अथ द्वितीयामाह—

**जाया भूमिः पतिर्व्योम । मिथुनं ता अतुर्यथुः । पुत्रो बृहस्पती रुद्रः । सरमा इति स्त्रीपुमम्, इति ।**

पूर्वमन्त्रे द्यावापृथिव्यावश्विरूपेण स्तुते, इह तु मिथुनरूपेण स्तूयेते—येयं **भूमिः** सा **जाया**, जायतेऽस्यां प्राणिजातमिति व्युत्पत्तेः । यत्तु **व्योम** स **पतिः**, देवानां विविधरक्षकत्वेन पालयतीति पतिरिति व्युत्पत्तिसंभवात् । तस्माद्द्यावापृथिव्यौ ते उभे **मिथुनं** यथा भवति तथाऽतुर्यथुः परस्परं गच्छथः । तुरी गताविति धातुः । तथासंगतयोर्द्यावापृथिव्योरुत्सङ्गवर्ती **बृहस्पति**रेकः **पुत्रः** । **रुद्रो**ऽग्निः, "रुद्रो वा एष यदग्निः" इति श्रुतेः । सोऽयमपर पुत्रः । **सरमा** वेदिः, सरः सरणमनुष्ठानप्रवृत्तिः सा च मीयते परिच्छिद्यतेऽत्रेति **सरमा** सा च तयोर्दुहिता । इत्येवं **स्त्रीपुम**मेका स्त्री द्वौ पुमांसावित्यपत्यत्रयं संपन्नम् ।

अथ तृतीयामाह—

**शुक्रं वामन्यद्यजतं वामन्यत् । विषुरूपे अहनी द्यौरिव स्थः (१)। विश्वा हि माया अवथः स्वधावन्तौ । भद्रा वां पूषणाविह रातिरस्तु, इति ।**

पूर्वत्र द्यावापृथिव्यौ दंपतिरूपेण स्तुते, इह त्वहोरात्ररूपेण स्तूयेते—हे द्यावापृथिव्यौ **वां** युवयोर्मध्येऽन्यत्परं स्वरूपं **शुक्रं** शुक्रवर्णं भास्वरमहः । **अन्य**दितरत्स्वरूपं **र(य)जतं** निश्यनुष्ठितयागोपलक्षितकृष्णवर्णोपेता रात्रिः । इत्येवं युवां **विषुरूपे** विलक्षणरूपयुक्ते **अहनी** अहोरात्रे **स्थः** । ते युवां **द्यौरिव** द्युलोकस्थ आदित्य इव सर्वस्योपकुरुत(थ)इति शेषः । हे **स्वधावन्ता**वन्नवन्तौ युवां देवौ **हि** यस्माद्**विश्वा मायाः** सर्वा अपि मतीर**वथो** रक्षथः । सति ह्यन्ने सर्वेषां बुद्धिः प्रसीदति । तस्माद्धे **पूषणौ** पोषकौ देवौ **वां** युवयोरिह कर्मणि **रातिर्भद्राऽस्तु**, अन्नादिदानं कल्याणं भवतु ।

अथ चतुर्थीमाह—

**वासात्यौ चित्रौ जगतो निधानौ । द्यावाभूमी**

---

१ ग. अतुर्यथाः । २ ण. °म तन्पतिः । ३ क °लनात्पतिरि° । ४ ख. ग. °तू । द्यावा° । ५ ग. °र्यथाः प° । ६ ग. °न्यद्रज° । ७ क पूर्व । ८ ख. ग. °स्माद्द्वे पू° ।

चरथः स१ सखायौ । तावश्विना रासभाश्वा

हवं मे । शुभस्पती आगत२ सूर्यया सह, इति ।

अहोरात्ररूपेण स्तुतयोः पुनः सखिद्वयरूपेण स्तुतिः क्रियते—हे **द्यावाभूमी** द्यावापृथिव्यौ युवां **सखायौ** सखिद्वयमिव **संचरथः** संभूय वर्तेथे । कीदृशौ सखायौ, **वासात्यौ** वसतिमर्हतः, देवानां मनुष्याणां च निवासं प्रयच्छथ इत्यर्थः । **चित्रौ** विलक्षणभोगप्रदत्वेन नानाविधौ, **जगतो निधानौ** सर्वस्यापि प्राणिजातस्य निधानस्थानीयौ, **रासभाश्वा** रासभौ गर्दभावेवाश्वस्थानीयौ ययोरश्विनोर्देवयोस्तौ रासभाश्वाख्यौ, तथाविधावश्विनावश्विसदृशौ तौ देवौ युवां **शुभस्पती** शोभनस्य कर्मणः पालकौ सन्तौ **सूर्य**योपमां सह ( + द्यावापृथिव्या सह ) **हवं** मदीयं यज्ञं प्रत्या(आ)गतमागच्छतम् ।

अथ पञ्चमीमाह—

त्युग्रो ह भुज्युमश्विनोदमेघे । रयिं न कश्चि-

न्ममृवाँ ३ अवाहाः । तमूहथुर्नौभिरात्मन्व-

तीभिः । अन्तरिक्षप्रुद्भिरपोदकाभिः (२), इति ।

हेऽ**श्विना**वु**दमेघ** उदकसहितमेघेऽवस्थितं **भुज्युं** पालकं तमुदकसंघ**मूहथु**र्वहथः संपादयथः । कीदृशमुदकसंघम्, **नौभिः**, तरणीयमिति शेषः । कीदृशीभिर्नौभिः, **आत्मन्वतीभि**र्दृढस्वरूपयुक्ताभिः । **अन्तरिक्षप्रुद्भि**र्भूमिस्पर्शमन्तरेण जलस्योपर्यन्तरिक्षे प्लवनशीलाभिः । **अपोदकाभि**रुदकप्रवेशरहिताभिः, निश्छिद्राभिरित्यर्थः । अश्विनोरुदकस्य वहने दृष्टान्तः—**त्युग्रो**ऽत्युग्रो मूर्खः **कश्चि**त्पुमान्**ममृवा**न्मरणं प्राप्यमाणोऽपि **रयिं** धनं **न** प्रयच्छति किन्त्व**वाहा** आवहत्येव । यद्वा स्वयमेवावहरति(हृति) । यथा स लुब्धोऽत्यादरेण धनं संपादयत्येवमश्विनावप्यादरेण वृष्टिं संपादयत इत्यर्थः ।

अथ षष्ठीमाह—

तिस्रः क्षपस्त्रिरहाऽतिव्रजद्भिः । नासत्या

भुज्युमूहथुः पतङ्गैः । समुद्रस्य धन्वन्नार्द्रस्य

पारे । त्रिभी रथैः शतपद्भिः षडश्वैः, इति ।

+ एतच्चिह्नान्तर्गतमधिकमिव भाति ।

१ क. प्रयच्छत । २ क. ख. °सा या° । ३ क. °थिव्यौ स° । ४ ग. °वां अ° । ५ ग. °क्षपास्त्रि° ।

नासत्याऽसत्यरहितावश्विनौ देवौ तिस्रः क्षपा( पो ) रात्रित्रयं त्रिरहाऽहस्त्रयं च रन्तर्येणातिव्रजद्भिरतिशयेन गच्छाद्भिः पतङ्गैः पक्षिसदृशैरितस्ततः संचारिभिर्मेघैर्भुज्युं लकं जलसमूहमूहथुर्युवां वहथः। कुत्र देश इति तदुच्यते—आर्द्रस्य जलपूर्णस्य समुस्य पारे परभागे धन्वन्निर्जले मरुदेशे। कीदृशैर्मेघैः, त्रिभिस्तत्तद्देशमनुसृत्योत्तममध्यमाधमभावेन त्रिविधैः। रथैः रथसदृशैः। यथा रथा उपरि महान्तं भारं वहन्ति था बहुजलभारवाहिन इत्यर्थः। शतपद्भिः शतसंख्याकाः पदा ( दो ) जलधाराः सदृशा येषां तादृशैः, अनन्तधारैरित्यर्थः। षडश्वैः षट्प्रकारव्याप्तियुक्तैः। उत्तमानां त्रयाणामागमनार्थास्तिस्रो व्याप्तयः पुनर्गमनार्थास्तिस्र इत्येवं षड्विधव्याप्तयः।

अथ सप्तमीमाह—

सवितारं वितन्वन्तम्। अनुबध्नाति शाम्बरः।

+आपपूरु पम्बरश्चैव। सविताऽरेपसो भवत्, इति।

शम्बरमुदकं तस्योदकस्य धारको मेघः शाम्बरः स च वितन्वन्तं वृष्ट्यर्थं रश्मीन्विस्तारयन्तं सवितारमादित्यमनुबध्नाति स्वानुग्रहार्थमाश्रयति आपपूरापशब्दो जलवाची तेन जलेन पूर्णः श(ष)म्बरः पूर्वोक्तः शाम्बरो मेघो यः सोऽप्यरेपसः पापराहितायाः सर्वानुग्राहिकाया वृष्टेः सविता भवदेवोत्पादयिता भवत्येव।

अथाष्टमीमाह—

त्यं सुतृप्तं विदित्वैव। बहुसोमगिरं वशी ( ३ )।

अन्वेति तुग्रो वक्रियां तम्। आयसूयान्त्सोमतृप्सुषु, इति।

सुतृप्तं सुष्ठु तृप्तियुक्तमुदकपूर्णमित्यर्थः। बहुसोमगिरं बहवः [सोमाः] सो(सौ)म्या गिरः शब्दाः स्तनितरूपा यस्यासौ बहुसोमगीः, बहुविधगर्जनयुक्त इत्यर्थः। तादृशं त्यं पूर्वोक्तं मेघं विदित्वा वशी स्वाधीनमेघः। तुग्र आदित्यः, तुग्रशब्दो रश्मिनाम तद्वांस्तुग्रः स च वक्रियां वक्रं कुटिलं वृष्टिविमुखं तं मेघमन्वेति वर्षयितुमनुगच्छति। किं कुर्वन्, सोमतृप्सुष्वायसूयान्। सोमेन तृप्यन्तीति सोमतृप्सवो यजमानास्तेषु निमित्तभूतेषु वृष्टेरागमनमायस्तस्य प्रेरणमायसूस्तत्प्रेरणं यान्प्राप्नुवन्नायसूयान्, वृष्टिं प्रेरयितुमुद्यमं कुर्वन्नित्यर्थः। एतैरष्टाभिर्मन्त्रैरिष्टका उपदध्यात्।

---

+ आपपूर्वम्बरश्चैवेत्यपि वैदिकानां पाठः प्रसिद्धः।

---

१ ग °त्यभाषणर°। २ ग. °पूरपशम्ब°। ३ क. °वं मेघस्य धारणात्तस्यो°। ४ ग. °वरे°। ५ क तुक्शब्दो। ६ क °ङ्गवृष्टिं विमुञ्चन्तं मे°।

कल्पः—" स संग्राम इति द्वे " इति । तत्र प्रथमामाह—

**स संग्रामस्तमोद्योऽत्योतः । वाचो गाः पिपाति तत् ।**

**स तद्गोभिः स्तवाऽत्येत्यन्ये । रक्षसाऽनन्विताश्च ये, इति ।**

**स** आदित्यो **गा** गवादीन्पशूंस्तदप्सूदकं **पिपाति** पाययति । कीदृशीः ॰ः, **वाचः** शब्दयन्तीः । पूर्वमुदकाभावात्तृषार्ताः सत्यो जलपानार्थं हम्भारवं कुर्वन्तीत्यर्थः । कीदृशः स आदित्यः— **संग्रामः,** समूहवाची ग्रामशब्दोऽत्र रश्मिसंघमाचष्टे । संप्राप्तो ग्रामो रश्मिसंघो येनासौ संग्रामः, रश्मिभिः पूर्ण इत्यर्थः । तमो द्यति खण्डयतीति **तमोद्यः,** अत्यैरश्वैरुतो रक्षितो धृत इत्यत्योतः । " अश्वोऽसि हयोऽस्यत्योऽसि नरोऽसि " इत्यश्वनामस्वत्यशब्द आम्नातः । आदित्यो ह्यश्वैः स्वकीयरथे स्थितः **स** आदित्यस्तत्तदा **गोभि**र्वृष्ट्या परितुष्टानां प्राणिनां वाग्भिः **स्तवा** स्तूयमानः ॰न्ये ऽन्यान्देवानत्येत्यतिक्रामति, सर्वदेवाधिकत्वेन भासत इत्यर्थः । ये च दिव्या जना **रक्षसा** रक्षसो जात्याऽ**नन्विता** असंबद्धा देवपक्षपातिनस्तैः सर्वैः स्तूयत इति शेषः ।

अथ द्वितीयामाह—

**अन्वेति परिवृत्यास्तः । एवमेतौ स्थो अश्विना ।**

**ते एते द्युःपृथिव्योः । अहरहर्गर्भं दधाथे ( ४ ), इति ।**

**अस्तः** क्षिप्त आदित्येन प्रेरितो मेघः **परिवृत्य** पुनरपि वृष्ट्यर्थं पर्यागत्यान्वेत्यानुकूल्येन गच्छति, वर्षतीत्यर्थः । हेऽ**श्विना**(नौ)ते **एते** यथोक्तवृष्टियुक्ते द्यावापृथिव्यौ ये विद्येते तयोरे**वमुक्तेन** प्रकारेणोपकुर्वन्तावेतौ युवां **स्थो** वर्तेथे । कथमुपकार इति तदेव स्पष्टी क्रियते-**द्युःपृथिव्यो**र्द्यावापृथिव्योर**हरहः** प्रतिदिनं **गर्भं दधाथे** जलद्वारा तत्तत्प्राण्युत्पत्तिबीजं संपादयथः । एवमेताभ्यां मन्त्राभ्यामिष्टके उपदध्यात् ।

अतः परं ब्राह्मणवाक्यमुच्यते । तत्र द्यावापृथिव्यौ बहुधा प्रशस्येते । तत्रैकां प्रशंसामाह—

**तयोरेतौ वत्सावहोरात्रे । पृथिव्या अहः । दिवो**

**रात्रिः । ता अविसृष्टौ । दंपती एव भवतः, इति ।**

**तयो**र्द्यावापृथिव्योरे**ता**वहोरात्ररूपौ कालौ वत्सस्थानीयौ, तत्रोत्पन्नत्वात् । तयोर्मध्ये **पृथिव्या** गोस्थानीयाया अहर्वत्सस्थानीयं दिवश्च **रात्रि**र्वत्सस्थानीया । प्रशं-

---

१ क. °ब्दो र° । २ ख ग. °श्वैरूतो । ३ ख. परास° । ४ ख. ग. प्रशंस्यते । ५ क. रात्रिस्थानीयाया । ६ ख. ग. °त्रिश्च वत्स° ।

सारूप्यत्वान्नात्र विभागे कारणमन्वेष्टव्यम् । तावेतावहोरात्ररूपौ वत्सौ परस्परमविसृष्टौ **दंपती एव भवत इति ।**

अथ द्वितीयां प्रशंसामाह—

**तयोरेतौ वत्सौ । अग्निश्चाऽऽदित्यश्च । रात्रेर्वत्सः ।**

**श्वेत आदित्यः । अह्नोऽग्निः । (५) । ताम्रो अरुणः ।**

**ता अविसृष्टौ । दंपती एव भवतः, इति ।**

**तयोर्द्यावापृथिव्योर्यौ** वत्सावहोरात्ररूपौ पूर्वमुक्तौ तयोरहोरात्रयोरग्न्यादित्यौ वत्सौ । योऽयं **श्वेत आदित्यः** सोऽयं रात्रेर्वत्सस्थानीयः, रात्रेः परभागे तदाविर्भावात् । योऽयं **ताम्रोऽरुणश्चा**ग्निरीषद्रक्तस्ताम्रोऽत्यन्तरक्तोऽरुणः सोऽयमह्नो वत्सस्थानीयः, अहनि पाकाद्यर्थमग्निः प्राणिभिः प्रज्वाल्यते । अन्यत्पूर्ववत् ।

तृतीयां प्रशंसामाह—

**तयोरेतौ वत्सौ । वृत्रश्च वैद्युतश्च । अग्नेर्वृत्रः । वैद्युतं आदित्यस्य । ता अविसृष्टौ । दंपती एव भवतः, इति ।**

**तयो**रग्न्यादित्ययोः । **वृत्र** आवरको धूमः । **वैद्युत** आतपः । अन्यत्पूर्ववत् ।

अथ चतुर्थीं प्रशंसामाह—

**तयोरेतौ वत्सौ (६) । उष्मा च नीहारश्च । वृत्रस्योष्मा ।**

**वैद्युतस्य नीहारः । तौ तावेव प्रतिपद्येते, इति ।**

**तयो**र्वृत्रवैद्युतयोः । **वृत्रस्या**ऽऽवरकस्य धूमस्यो**ष्मा** वत्सस्थानीयः । सति हि धूमेऽन्त्रोष्मा भवति । उष्णत्वमूष्मा । **वैद्युतस्या**ऽऽतपस्य **नीहारो** वत्सस्थानीयः । नीहारो हिमम्[1] । तावुष्मनीहारौ **तावेव** स्वकारणभूतौ वृत्रवैद्युतावेव **प्रतिपद्येते** कारणयोरेव लीयेते न तु कार्यान्तरं जनयतः । एवं साक्षात्परम्परया च द्यावापृथिव्यौ प्रशस्ते ।

अथ रात्रिं तद्वत्समादित्यं च विशेषेण प्रशंसति—

**सेयꣳ रात्री गर्भिणी पुत्रेण संवसति । तस्या वा एतदुल्बणम् । यद्रात्रौ रश्मयः । यथा गोर्गर्भिण्या उल्बणम् । एवमेतस्या उल्बणम्, इति ।**

**येयं रात्रि**रादित्यवत्सस्य मातृत्वेन[2] निरूपिता **सेयं** रात्रिर्गर्भरूपमादित्यं धारयन्ती

---

१ ग. हिमवान् । २ ख. ग. समातृत्वेन ।

**सर्वेऽसतो** जगत्कारणादव्यक्तात्सकाशात्सद्व्यक्तं जगत्तत्क्षुस्तक्षणोपलक्षितं निष्पादनं कृतवन्तः। एते हि पूर्वस्मिन्कल्पे सृष्ट्यधिकारार्थं तपस्तप्त्वा वर्तमानकल्पे जगत्कारणादव्यक्तात्सकाशात्स्वस्वाधिकारोचितं व्यक्तं जगदुत्पादितवन्तः। अव्यक्ताव्द्यक्तमुत्पन्नमित्ययमर्थ उपनिषद्यप्याम्नायते—"असद्वा इदमग्र आसीत्, ततो वै सदजायत" इति। एवं सति सप्तर्षिवद्ये पुरुषा अस्मिञ्जन्मन्यारुणकेतुकमग्निं चिन्वन्ति ते सर्वेऽप्यागामिजन्मन्यन्त्यगस्त्यसमानाश्च भवन्ति। किंचैते कर्मानुष्ठातारो **नक्षत्रैर्दिवि भासमानैः सह शंक्रतोऽवसन्**सर्वप्राणिनां सुखकारिणो वसन्ति। द्युलोके नक्षत्ररूपेणोत्पद्यन्त इत्यर्थः। तथा चान्यत्राऽऽम्नायते—"यो वा इह यजते। अमुं स लोकं नक्षते। तन्नक्षत्राणां नक्षत्रत्वम्" इति। एतैश्चतुर्भिर्मन्त्रैरुपदध्यात्।

अथैकं ब्राह्मणवाक्यमाह—

**अथ सवितुः श्यावाश्वस्यावर्तिकामस्य,** इति।

पूर्वमथ पवित्राङ्गिरस इत्यङ्गिरोनाम्नो महर्षेः संबन्धिन इष्टकामन्त्रान्प्रतिज्ञाय ते दर्शिताः, **अथ** तेभ्योऽनन्तरं **श्यावाश्वस्य** श्यावाश्वनाम्नः कस्यचिन्महर्षेः संबन्धिन इष्टकामन्त्रा उच्यन्त इति शेषः। कीदृशस्य **सवितुः** प्रेरकस्य, मन्त्रसंप्रदायप्रवर्तकस्येत्यर्थः। **अवर्तिकामस्य,** वार्तिर्वर्तनं लोकव्यवहारे साधनं धनं तद्राहित्यमवर्तिर्दारिद्र्यं तेन वैराग्यमुपलक्ष्यतेऽतो वैराग्यकामस्येत्युक्तं भवति।

कल्पः—"अमी य इति सप्त मध्ये" इति। तत्र प्रथमामाह—

**अमी य ऋक्षा निहितास उच्चा। नक्तं ददृश्रे कुहचिद्दिवेयुः। अदब्धानि वरुणस्य व्रतानि। विचाकशच्चन्द्रमा नक्षत्रमेति,** इति।

ऋक्षा नक्षत्रविशेषाः, अमी अस्माभिर्दृश्यमानाः, **उच्चा**उच्चस्थाने दिवि **निहितासः** प्रजापतिनाऽवस्थापिताः। ते नक्षत्रविशेषा **नक्तं** रात्रौ **ददृश्रे** विस्पष्टं दृश्यन्ते। **दिवा**ऽहनि **कुहचित्**क्वापि गताः, अस्माभिर्न दृश्यन्त इत्यर्थः। **वरुणस्य** नक्षत्रज्योतिषामावरकस्य सौर्यतेजसः, **व्रतान्यदब्धानि** व्यापाराः केनाप्यहिंसिताः। तस्मात्तेजोन्तराभिभावकस्य सूर्यतेजसः केनाप्यहिंसितत्वादहनि तेनाभिभूतानि नक्षत्राणि न भासन्त इत्यर्थः। **चन्द्रमास्तु विचाकशद्विशेषेण** प्रकाशमानं **नक्षत्रमेति** प्राप्नोति न तु सूर्यवन्नक्षत्राण्यभिभवति। तस्माद्रात्रौ दृश्यन्त इत्यर्थः।

---

१ ख. ग. °षद्याम्ना°। २ ख. ग. जयते। ३ ख. ग. नक्षत्रे। ४ ख. ग. ददृशे। ५ क. ग. °हिताः प्र°। ६ ख. ग. ददृशे। ७ ख. °स्य भावस्य सौ°। ८ ख. ग. °स्य भावस्य सू°।

अथ द्वितीयामाह—

तत्स॑वितुर्वरे॑ण्यम् । भर्गो॑ दे॒वस्य॑ धीमहि ( २ ) ।
धियो॒ यो नः॑ प्रचो॒दया॑त्, इति ।

**वरेण्यं** वरणीयं श्रेष्ठं **सवितुः** प्रेरकस्य सूर्यस्य तत्प्रसिद्धं **भर्ग**स्तेजो **धीमहि** ध्यायामः । **यः** सविता **नो**ऽस्माकं **धियो** बुद्धीः **प्रचोदया**त्प्रकर्षेण प्रेरयति, तस्य सवितुरिति पूर्वत्रान्वयः ।

अथ तृतीयामाह—

तत्स॑वितुर्वृ॑णीमहे । व॒यं दे॒वस्य॒ भोज॑नम् । श्रेष्ठ॑ं
सर्व॒धात॑मम् । तुरं॒ भग॑स्य धीमहि, इति ।

**वयं** यजमानाः **सवितुर्देवस्य** तत्तेजो **वृणीमहे** प्रार्थयामहे । कीदृशं तेजः, **भोजनं** भोगसाधनं, **श्रेष्ठ**मतिशयेन प्रशस्तं, **सर्वधातमं** सर्वस्य जगतोऽतिशयेन धारयितृ, **तुरं** तूर्णं **भगस्य** सौभाग्ययुक्तस्याऽऽदित्यस्य, **धीमहि** तत्तेजो ध्यायामः ।

अथ चतुर्थीमाह—

अपा॑गूहत सवि॒ता तृ॒भीन् । सर्वा॑न्दि॒वो अन्ध॑सः ।
नक्तं॒ तान्य॑भवन्दृ॒शे । अस्थ्य॑स्था संभ॑विष्यामः, इति ।

**सविता** सूर्यो नक्षत्रप्रकाशस्याऽऽवरणेनाऽऽन्ध्यापादकान्**सर्वांस्तृभी**न्रश्मीन्**दिवो**ऽन्तरिक्षात्सकाशाद**पागूहत**ावगूहति रात्रौ गुप्तत्वेन स्थापयति । तस्मात्कारणा**त्तानि** नक्षत्रज्योतींषि **नक्तं** रात्रौ **दृशे** दर्शनीयान्यभवन्द्रष्टुं योग्या [ नि ] भवन्ति । अयमर्थः । अहनि सूर्यरश्मिष्वाविर्भूतेषु तैरभिभूतत्वान्नक्षत्रज्योतींष्यन्धानि भवन्ति प्रकाशरहितानि भवन्ति रात्रौ तु सूर्यः स्वकीयान्रश्मीनुपसंहरत्यत आच्छादकाभावान्नक्षत्रज्योतींषि प्रकाशन्त इति । अहनि नक्षत्रज्योतिषामभावे दृष्टान्त उच्यते—यथा वयमस्थि शरीरगतमस्न्थाऽसृजा रक्तेन **संभविष्याम** एवमिदमपि द्रष्टव्यम् ।

अथ पञ्चमीमाह—

नाम॒ नामै॒व नाम॒ मे ( ३ ) । नपुं॑सकं॒ पुमा॑ंस्त्र्य॑स्मि ।
स्थाव॑रोऽस्म्यथ॒ जङ्ग॑मः । य॒जेऽय॑क्षि यष्टा॑हे च॑, इति ।

यथा पूर्वेषु मन्त्रेषु सूर्यनक्षत्रादिरूपेणेष्टकां स्तोतुं तत्तद्वस्तुमहिमा वर्णितः, एवमत्रापि परमात्मरूपेण स्तोतुं परमात्मनः स(सा)र्वात्म्यमुच्यते तदेतन्मन्त्रद्रष्टुर्ब्रह्मविदो वच-

---

१ ख. ग. °वन्योग्या ।

नम् । अत्राऽऽद्यौ द्वौ नामशब्दौ नकारान्तौ नामधेयमाचक्षाते । तृतीयो नामशब्दः प्रसिद्धिवाचकमव्ययम् । तत्र ब्रह्मवित्पुमान्स्वानुभवं प्रकटयति—मे मम ब्रह्मात्मभूतस्य पूर्वमज्ञानदशायां देवो मनुष्यो गौरश्व इत्येवं तत्तज्जन्मसु यन्नाम व्यवह्रियते तत्सर्वं नामैव नामशब्दमात्रमेव खलु, न तु तत्र परस्परविलक्षणः कश्चिदर्थोऽस्ति । अत एव च्छन्दोगा उपनिषद्येवमामनन्ति—"वाचाऽऽरम्भणं विकारो नामधेयम्" इति । योऽयं विकारः शरीरादिर्दृश्यते स सर्वोऽपि वाङ्निष्पाद्यं नाममात्रमेव न तु वास्तवः कश्चि- द्विकारोऽस्तीति तस्यार्थः । देवतिर्यङ्मनुष्यादिशरीरभेदस्य तत्तन्नामव्यतिरेकेण वास्त- वत्वाभावे सति किं तद्वास्तवं स्वरूपमिति चेत्तदुच्यते, सर्वेष्वपि वस्तुषु यदनुगतं सर्वा- धिष्ठानकारणरूपं ब्रह्म तदेव ब्रह्मविदो वास्तवं स्वरूपमित्यभिधीयते । लोके यन्नपुंसकं शरीरं यश्च पुमान्या च स्त्री तत्सर्वमहमेवास्मि । यश्च स्थावरो वृक्षादिर्योऽपि जङ्गमो मनुष्यपश्वादिस्तदुभयमप्यहमेवास्मि । तथा वर्तमानयजमानरूपेण यजे यजनं करोमि, अतीतयजमानरूपेणायाक्षि यागं कृतवानस्मि, भविष्यद्यजमानरूपेण यष्टा [हे] यागं करिष्यामि । सर्ववस्तुष्वनुगतं सच्चिदानन्दरूपमेकाकारं यद्ब्रह्म वस्तु तदेवाहमि- त्येवं स्वानुभवो मन्त्रदर्शिना प्रकटीकृतः ।

अथ षष्ठीमाह—

मया भूतान्ययक्षत । पशवो मम
भूतानि । अनूबन्ध्योऽस्म्यहं विभुः, इति ।

मया मद्रूपेणैव भूतानि सर्वे प्राणिनोऽयक्षत यागं कृतवन्तः, अहमेव यजमानश- रीरेषु जीवरूपेण प्रविश्य तं तं यागमकार्षमित्यर्थः । मम भूतानि मया सृष्टत्वेन मदीयानि पृथिव्यादीनि पञ्च भूतानि पशवो द्विपादश्चतुष्पादः संपन्नाः । अहं ब्रह्म- चैतन्यरूपेण विभुर्व्याप्त एवं सन्ननूबन्ध्योऽस्मि तत्तच्छरीरेषु प्रविश्य तदात्मत्वाभि- मानं कृत्वाऽनुबन्ध्य(न्ध)वान्संबन्धवानस्मि ।

अथ सप्तमीमाह—

स्त्रियः सतीः । ता उ मे पुंस आहुः । पश्यदक्षण्वान्न
विचेतदन्धः । कविर्यः पुत्रः स इमा चिकेत
(४) । यस्ता विजानात्सवितुः पिता सत्, इति ।

या लोके प्रसिद्धाः स्त्रियः सतीः सद्रूपा गुरुकटाक्षेण "सदेव सोम्येदमग्र आसीत्"

---

१ क. °नुभावो । २ ख. ग. अनुव° । ३ ख. °बन्धाऽस्म्य° । ४ क. °नि मायया सृष्टत्व° । ५ क. ख. °व वस° । ६ ख. ग. °न्ननुव° । ७ ग. विवेत्तद° । ८ क. °व सोम्ये° ।

इत्यादिश्रुत्युक्तं सद्वस्तु बुद्ध्वा तदनुभवेन तद्रूपा वर्तन्ते **ता उ ता अपि स्त्रियो मे मते पुंस आहुर्ब्रह्मविदः** पुरुषान्कथयन्ति । यद्यपि शरीरे स्तनवृद्ध्यादि स्त्रीलक्षणं दृश्यते, तथाऽपि पुरुषस्योचितं तत्त्वज्ञानमस्तीति पुरुषलक्षणसद्भावात्पुरुषत्वं तासामभिज्ञाः कथयन्ति । ये तु शरीरे श्मश्रुप्रभृतिभिः पुरुषलक्षणैर्युक्ता अपि पुरुषस्योचितं तत्त्वज्ञानं न संपादयन्ति, ते स्त्रीणामुचितेन मोहेनोपेतत्वात्स्त्रिय एवेत्यभिप्रायः । यथा स्त्रीपुरुषविभागो लोकविपरीत एवमन्धानन्धविभागोऽपि द्रष्टव्यः । **अक्षण्वां**श्चक्षुरिन्द्रिययुक्तः **पश्यन्नी**लपीतादिरूपं पश्यन्नपि **न विचेत**द्विवेकेन सद्वस्तुतत्त्वं न जानाति चेत्सोऽयमन्ध एव । मांसदृष्टिरहितोऽपि स्वरूपतत्त्वाभिज्ञश्चेत्सोऽयं चक्षुष्मानेवेत्यपि द्रष्टव्यम् । यथाऽयमलौकिकान्धानन्धविभागः एवं पितृपुत्रविभागोऽप्यलौकिकः कश्चिद्द्रष्टव्यः । लोके यत्र पिता न जानाति पुत्रस्तु **कविर्वेद**शास्त्रपारंगतस्तत्र **स पुत्र इमा,** एतानि दृश्यमानानि सर्वाणि भूतानि विवेकेन स्वात्मत्वेन जानाति, तदानीं **यः पुत्रस्ता विजानात्**तानि सर्वाणि भूतानि स्वात्मतया जानाति **स पुत्रः सवितुरु**त्पादकस्यापि **पिता स**त्पिता भवति । ज्ञानोपदेशेन पालयितुं समर्थत्वात् । किं बहुना तत्त्वज्ञानमेव प्रशस्तमज्ञानं निकृष्टमिति तात्पर्यार्थः ।

कल्पः—"अन्धो मणिमिति पञ्च वैश्वदेव्य उत्तरतः" इति तत्र प्रथमामाह—

**अन्धो मणिमविन्दत् । तमनङ्गुलिरावयत् ।**

**अग्रीवः प्रत्यमुञ्चत् । तमजिह्वा असश्चत,** इति ।

लोके हि पुरुषश्चक्षुषा मणिं दृष्ट्वा तमङ्गुलिभिरादाय ग्रीवायां प्रतिमुच्य जिह्वया प्रशंसति, चिद्रूप आत्मा तु चक्षुरङ्गुलिग्रीवाजिह्वावर्जित एव सन्नचिन्त्यशक्तित्वात्तान्सर्वान्व्यापारान्करोति । तथा च **श्वेताश्वतरा** बाह्यसाधनरहितस्यैव सर्वव्यापारकर्तृत्वमामनन्ति— " अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः " इति आत्मा ह्युपाधिभेदाद्द्विविधः, जीव ईश्वरश्चेति । तथाच **सिद्धान्तरहस्याभिज्ञा** आहुः—" कार्योपाधिरयं जीवः कारणोपाधिरीश्वरः " इति । कार्यं देहेन्द्रियादिसंघातरूपं, कारणमचिन्त्यशक्तिः । तत्र कार्योपाधिर्जीवः स्वतो निरुपाधित्वेन सर्वसाधनशून्य एव सन्नज्ञानेन देहेन्द्रियतादात्म्यं स्वस्मिन्नारोप्य भ्रान्त्या सर्वमिदं करोतीति लक्ष्यते, ईश्वरस्तु भ्रान्तिरहितोऽप्यचिन्त्यशक्तियुक्तत्वाच्चक्षुरादिसाधनहीन एव सन्संकल्पमात्रेण सर्वव्यापारं करोति, तदुभयमभिप्रेत्यायं मन्त्रः प्रवृत्तः । अथवा योगाभ्यासेन चक्षुरादीन्द्रियं निरुप्य नीलपीतादिष्वन्धः सन्मणिमिव स्वयंप्रकाशमा-

१ ख. ग. तु ते श° । २ ख. ग. उत्तर । ३ ग. °जिह्व अ° । ४ ख. ग. निरुद्ध । ५ क ख. °गिरिव ।

त्मानं समाधिना पश्यति । तस्य च दृष्टस्य वस्तुनः स्वस्वरूपत्वेन निश्चयः स्वीकारः। [*अतोऽङ्गुलिव्यापाररहितोऽपि स्वी करोतीत्युच्यते । तस्मिन्वस्तुनि स्थैर्यं प्रत्यमुञ्च-दित्युच्यते । कृतकृत्योऽस्मीत्यादि भाषणं जिह्वया प्रशंसेत्युच्यते (?)] ।

अथ द्वितीयामाह—

**ऊर्ध्वमूलमवाक्छाखम् । वृक्षं यो वेद संप्रति ।**

**न स जातु जनः श्रद्दध्यात् । मृत्युर्मा मारयादिति[1]**, इति ।

लौकिकस्य हि वृक्षस्याधोभागे मूलमूर्ध्वभागे शाखाश्च । संसारवृक्षस्य तद्वैपरी-त्यम् । **ऊर्ध्वं** सर्वोत्कृष्टं ब्रह्म **मूलम्**, **अवाञ्चो**ऽधमा ब्रह्मादिस्तम्बान्ता देहाः **शाखाः**, अयं[2] च संसारो व्रश्चनयोग्यत्वाद्वृक्षः । तत्त्वज्ञानेन हि सोऽयमज्ञानजन्यो वृक्षश्छिद्यते । तमीदृशं **वृक्षं यः** पुमान्गुरुशास्त्रमुखाद्वेद **स जनः संप्रति** तदानीमेव **न श्रद्दध्यान्न** विश्वस्यात् । किंविषयोऽयमविश्वास इति तदुच्यते—**जातु** कदाचि-दपि **मृत्युर्मा मारयान्**मां हन्यादिति । अयमर्थः । सर्वो ह्यज्ञानेन जन्तुः कदाचि-न्मृत्युर्मां मारयिष्यतीति विश्वासं कृत्वैव वर्तते, अयं तु ब्रह्मज्ञानी ब्रह्मरूपस्य स्वस्य जन्ममरणाभावं निश्चित्य तस्मिन्नेव क्षणे स्वकीयमरणविश्वासं परित्यजति । आत्मनो मरणाभावाद्देहस्य च स्वव्यतिरिक्तत्वान्मृत्योर्न बिभेतीत्यर्थः ।

अथ तृतीयामाह—

**हसितꣳ रुदितं गीतम् (५) । वीणा पणवलासितम् ।**

**मृतं जीवं च यत्किंचित् । अङ्गानि स्नेव विद्धि तत्**, इति ।

अत्र शरीरस्याऽऽत्म[त्व]शङ्कां वारयितुं तदीया विकारा उपन्यस्यन्ते—**हसितं** कदाचिन्मुखे हासो दृश्यते, कदाचिद्रोदनं, कदाचिदुत्साहेन गानं कदाचिद्धस्ते वाद्यमाना **वीणा**, कदाचित्**पणवस्य** मृदङ्गस्य **लासितं** वादनरूपो विनोदः, कदाचिच्छरीरं **मृतं** दृश्यते, कदाचिज्जीवनोपेतम्, एवमन्यदपि **यत्किंचि**द्विकारजातमस्ति **तत्**सर्व-**मङ्गानि स्नेव विद्धि**, यथा हस्तपादाद्यङ्गानि शरीरगतानि **स्ना**शब्देन स्नायवोऽभिधी-यन्ते यथा वा स्नायवः शरीरगता एवमेता हसितादिविकाराः शरीरादिगता न त्वात्मनो योग्या इति हे विवेकिंस्त्वं विजानीहि ।

अथ चतुर्थीमाह—

**अतृष्यꣳस्तृष्ण्य ध्यायत् । अस्माज्जाता मे मिथू चरन् ।**

---

* इत आरभ्य प्रशंसेत्युच्यत इत्यन्तं क. पुस्तके नास्ति

---

[1] ख. ग. °दिति, इति । [2] क. °यं प्र° ।

पुत्रो निर्ऋत्यां वैदेहः। अचेता यश्च चेतनः, इति।

अत्र पूर्वोक्तेन हसितादिगुणयुक्तेन शरीरादिना सह चिदात्मनस्तादात्म्याध्यासो वर्ण्यते। अयं चिदात्मा स्वयमतृष्यन्नेव [तृष्य] तृष्यंस्तृषां प्राप्नोति, तृषाया जडधर्मत्वेन स्वस्मिन्नसंभवेऽपि जडतादात्म्यभ्रमेण तृषां प्राप्नोतीव लक्ष्यते। तथा ध्यायद्ध्यायतीव, स्वयं ध्यानरहितोऽपि ध्यानयुक्तेन मनसा सह तादात्म्यभ्रमात्स्वयं ध्यायतीव लक्ष्यते। अस्माद्दृश्याज्जडदेहाज्जाता हसितादिविकारा मे मदीया इति भ्रान्त्या ध्यायतीति शेषः। मिथूशब्दो[3] मिथःशब्दपर्यायः संश्लिज्जडयोः परस्परमेलनं ब्रूते, तेन मेलनेन चरन्मदीयमिति वृथाऽभिमन्यते। कोऽसावेवमभिमन्यत इति तदुच्यते—निर्ऋत्या निर्ऋतिवत्प्रतिकूलाया मायायाः। पुत्रोऽहंकारो विदेहस्य शरीररहितस्य चिदात्मनः संबन्धी वैदेहश्चैतन्यच्छायायुक्त इत्यर्थः। तदेव स्पष्टी क्रियते योऽहंकारोऽचेताः स्वयमचेतनः संश्चेतनश्च चैतन्यच्छायायोगेन चेतनोऽपि भवति, तादृशः पदार्थः। देहेन्द्रियादिधर्मानात्मन्यारोप्य तदारोपेण सुखध्यानादिधर्मा आत्मनि प्रतिभासन्ते।

अथ पञ्चमीमाह—

स तं मणिमविन्दत्। सोऽनङ्गुलिरावयत्। सोऽग्रीवः प्रत्यमुञ्चत् (६)। सोऽजिह्वो असश्चत, इति।

यः पूर्वोक्तश्चेतनाचेतनयोरन्योन्यतादात्म्याध्यासेन निष्पन्नः संसारी स एव तं मणिम्, अतीतेऽन्धो मणिमित्यादिमन्त्रे प्रोक्तं मण्याद्युपलक्षितमाभरणं चक्षुषा दृष्टवान्। स एव स्वतोऽङ्गुलिरहितोऽपि देहतादात्म्याध्यासेन तदीयैरङ्गुलिभिरावयत्स्वीकृतवान्। तथा स्वतो ग्रीवारहितोऽपि शरीरगतायां ग्रीवायां प्रत्यमुञ्चत्। तथा स एव स्वतो जिह्वारहितोऽपि शरीरगतया जिह्वयाऽसश्चत प्रशंसां कृतवान्।

अथ ब्राह्मणमाह—

नैतमृषिं विदित्वा नगरं प्रविशेत्। यदि प्रविशेत्। मिथौ चरित्वा प्रविशेत्। तत्संभवस्य व्रतम्, इति।

एतमृषिं पूर्वोक्तं विवेकप्रतिपादकं मन्त्रसंघं[4] विदित्वा मन्त्रप्रतिपाद्यं परमार्थतत्त्वमवगत्य नगरं जनसंमर्दयुक्तं न प्रविशेत्। यद्वा नगरोपलक्षितं देहं न प्रविशेत्, देहे[5] तादात्म्यभ्रमं न कुर्यादित्यर्थः। यदि[6] कथंचित्पूर्ववासनाबलात्प्रविशेद्देहे[7] तादात्म्यबुद्धिं

१ ख. नैर्ऋत्या। २ ख. ग. °थाऽध्या°। ३ क. ख. मिथुश°। ४ क. °रं संपन्ना पु°। ५ ख. देहता°। ६ ख. °दि किंचि°। ७ ख. °देहता°।

कुर्यात्तदानीं मिथौ चरित्वा शास्त्रार्थपर्यालोचनया मिथ्येदमिति निश्चित्य प्रविशेत्ता-दात्म्यभ्रमरहितेन देहेन प्रारब्धभोगाय लोकव्यवहारं कुर्यात्। तदेतत्संभवनाम्न ऋषे-र्व्रतमाचारः, स ह्येवमाचरितवान्।

कल्पः - "आ तमग्ने रथमिति तिस्रः" इति। तत्र प्रथमामाह—

आ तमग्ने रथं तिष्ठ। एकाश्वमेकयोजनम्।

एकचक्रमेकधुरम्। वातध्राजिगतिं विभो, इति।

हेऽग्न आरुणकेतुकेह कर्मण्यागमनाय तं तादृशं रथमातिष्ठाऽऽरोह। कीदृशम्। एकाश्वमेक एव प्रबलोऽश्वस्तं वहति, एकयोजनं निमिषमात्रेण योजनरूपं (प) [म-ध्वानं] गच्छति, एकचक्रं लौकिकरथवच्चक्रद्वयं नापेक्षते किं त्वेकचक्रेण वर्तते, एकधु-रमश्वस्यैकत्वात्तद्योजनाय धूरप्येकैव, वातध्राजिगतिं ध्राजिशब्दोऽपि गमनवाची वातस्य ध्राजिर्वातध्राजिस्त[द्व]द्गतिर्यस्यासौ वातध्राजिगतिस्तादृशम्, यथोक्तरथस्यालौकिकत्वा-त्तेन गमनायाचिन्त्यशक्तिमग्नेर्द्योतयितुं विभुशब्देन संबोधनम्।

अथ द्वितीयामाह—

न रिष्यति न व्यथते (७)। नास्याक्षो यातु सज्जति।

यच्छ्वेतान्रोहितांश्चाग्नेः। रथे युक्त्वाऽधितिष्ठति, इति।

अयमेकचक्रो रथो न रिष्यति न विनश्यति न व्यथते न नि(वि)षीदति, इतस्त-तश्चलति, अस्य रथस्याक्षो यातु याने गमनवेलायां न सज्जति क्वापि पाषाणवृक्षादौ सक्तो न भवति, यद्यस्मात्कारणादग्नेरयमग्निः श्वेतान्रोहितांश्च प्रसिद्धान्प्रबलानश्वा-न्पर्यायेणास्मिन्रथे युक्त्वा तं रथमधितिष्ठति तस्मादश्वसामर्थ्याद्रथस्य न कोऽपि बाध इत्यर्थः।

अथ तृतीयामाह—

एकया च दशभिश्च स्वभूते। द्वाभ्यामिष्टये

विंशत्या च। तिसृभिश्च वहसे त्रिंशता च।

नियुद्भिर्वायविह ता विमुञ्च (८), इति॥

ततक्षुर्धीमहि नाम मे चिकेत गीतं प्रत्यमुञ्चद्व्यथते सप्त च॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके प्रथमप्रपाठक एकादशोऽनुवाकः॥ ११॥

---

१ क. °क्तिस्त्रम°। २ ग. °दय°।

नियुच्छब्दो वायुसंबन्धिनीरश्वयोषित आचष्टे । हे वायो, इष्टयेऽस्मत्संबन्धियागार्थं **स्वभूते** स्वाधीने रथे, एकादिसंख्यायुक्ताभिर्नियुद्भिस्तं रथं योजयित्वा **वहसे**ऽस्मत्समीपं प्रापयसि । अश्वादिविषयाः षट्प्रकाराः संख्याविकल्पिताः । हे **वायो,** इहाऽऽगत्य ता नियुतो **विमुञ्च** ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीय-
तैत्तिरीयारण्यके प्रथमप्रपाठक एकादशोऽनुवाकः ॥ ११ ॥

---

अथ प्रथमे द्वादशोऽनुवाकः ।

---

कल्पः—"आतनुष्वेति चतस्रः" इति । तत्र प्रथमामाह—

**आतनुष्व प्रतनुष्व । उद्धमाऽऽधम संधम ।**
**आदित्ये चन्द्रवर्णानाम् । गर्भमाधेहि यः पुमान्, इति ।**

हे इन्द्र त्वम**आतनुष्व** समन्तादात्मानं विस्तारय, स्वरूपं प्रदर्श्य सर्वाननुगृहाण । **प्रतनुष्व** प्रकर्षेण क्रतुषु स्वात्मानं विस्तारय, क्रतुष्वागत्य संनिहितो भव । **उद्धमो**-त्कर्षेण शब्दय, अहमागत इत्येवमुच्चैः कथय । **आधमा**ऽऽभिमुख्येन शब्दय । **संधम** सम्यगानुकूल्येन शब्दय । ततस्त्वं **चन्द्रवर्णानां** हिरण्यवर्णानामपां **गर्भमा-दित्ये धेहि,** आदित्यरश्मिषु जलं संगृहाणेत्यर्थः । यस्त्वं **पुमान्**पुंस्त्वशक्तियुक्तः स तं **गर्भमाधेहि** ।

अथ द्वितीयामाह—

**इतः सिक्त॑ सूर्यगतम् । चन्द्रमसे रसं कृधि ।**
**वारादं जनयाग्रेऽग्निम् । य एको रुद्र उच्यते, इति ।**

**इतः** कर्मणः सकाशात्सिक्तमाज्याद्याहुतिद्रव्यं **सूर्यगतं** कृत्वा **चन्द्रमसे** चन्द्रवृ-द्ध्यर्थं **रसं कृधि** कुरु । अग्नौ प्रक्षिप्तं द्रव्यमादित्यं प्राप्य जलं भूत्वा दिवि चन्द्रं भूमावोषधीश्चाभिवर्धयति, तत्सर्वमिन्द्र त्वं कुरु । ततो **वारादं** वरणीयस्य फलस्याऽऽ-समन्ताद्दातारमग्निमारुणकेतुकरूपम**ग्रे**ऽस्माकं पुरतो **जनयो**त्पादय । **यो**ऽग्निरेको **रुद्र** इति सर्वत्रोच्यते । तथा चान्यत्राऽऽम्नातम्,—"एक एव रुद्रो न द्वितीयाय तस्थे" इति । "रुद्रो वा एष यदग्निः" इति च ।

---

१ ग. °तीयोऽवत° ।

अथ तृतीयामाह—

असंख्याताः सहस्राणि । स्मर्यते न च
दृश्यते (१)। एवमेतं निबोधत, इति ।

एकस्य रुद्रस्य मूर्तीनां सहस्राणि, असंख्याता असंख्यातानि, गणयितुं न शक्यन्ते । स च रुद्रः स्वयं स्मर्यते श्रुतिदृङ्मुखादवगत्य स्मर्तुं शक्यते, स रुद्रो न द्रष्टुं शक्यः । एतं रुद्रमग्निमेवमुक्तप्रकारेण निबोधत हे यजमाना अवगच्छत ।

अथ चतुर्थीमाह—

आ मन्द्रैरिन्द्र हरिभिः । याहि मयूररोमभिः ।
मा त्वा केचिन्न्येमुरिन्न पाशिनः । दधन्वेव ता इहि, इति ।

हे इन्द्र मन्द्रैर्मदनीयैर्हर्षहेतुभिर्मयूररोमभिर्मयूरसदृशवर्णरोमयुक्तैर्हरिभिरश्वैरायाहि, अस्मिन्कर्मण्यागच्छ । आयान्तं त्वां केचिदपि जना मा न्येमुर्मा नियमयन्तु, प्रतिबन्धं मा कुर्वन्त्वित्यर्थः । पाशिन इत्, अश्वानां पाशधारिणः सारथयोऽपि न न्येमुर्नियमनं विलम्बरूपं न कुर्वन्तु । दधन्वेव सर्वाभिमतानां दातेव ता इहि ता अस्मद्युक्तभुव इहि गच्छ ।

कल्पः—" आ (मा)मन्द्रैरित्येकां यजमान उपदध्यात् " [इति] । पाठस्तु—

मां मन्द्रैरिन्द्र हरिभिः । यामि मयूररोमभिः । मा मा
केचिन्न्येमुरिन्न पाशिनः । निधन्वेव ताँ३ इमि, इति ।

मेत्ययं शब्दः प्रथमैकवचनमुपलक्षयति तस्मादहमित्यर्थः संपद्यते । मन्द्रैरित्यादि पूर्ववद्योजनीयम् । हे इन्द्र त्वया सहाहमपि त्वदीये लोके यामि गच्छामि, त्वामिव मामपि जनाः पाशिनो मा प्रतिबध्नन्तु, ततोऽहं निधन्वेव निधानवानिव लब्धनिधिरिव तुष्टः संस्तानुत्तमलोकानिमि, एमि प्राप्नवानि ।

कल्पः—" अणुभिश्चेति द्वे " इति । तत्र प्रथमामाह—

अणुभिश्च महद्भिश्च (२) । निघृष्वैरसमायुतैः ।
कालैर्हरित्वमापन्नैः । इन्द्राऽऽयाहि सहस्रयुक्, इति ।

हे इन्द्र त्वं कालैः कालविशेषैः सहाऽऽयाहि, आगच्छ । कीदृशैः कालैः ।

---

१ क. चन्द्र. स्व° । २ क. °तिदर्शिमुखा° । ३ क. चिच्चिरेमु° । ४ क. ख. धावन्तं । ५ क. मा निरेमु° । ६ ग. आ । ७ ख. ग. इत्ययं । ८ क. ख. ग. °नो मां मा । ९ ख. निधन° । १० क. द्वये ।

**अणुभिश्च** क्षणमुहूर्ताद्याकारेण सूक्ष्मरूपैः, **महद्भिश्च** संवत्सरयुगादिरूपेण प्रौढैरपि, **निघृष्वैर्नि**तरां दीप्यमानैः, यद्यपि कालस्य नीरूपत्वान्नास्ति दीप्तिस्तथाऽपि तदभिमानिनां देवानामस्त्येव दीप्तिः । **असमायुतैः** परस्परमसंगतैः, न ह्येकस्मिन्काले वर्तमाने कालान्तरं सह प्रवर्तते । **हरित्वमापन्नैर्ह**रिनामकत्वदीयाश्वत्वं प्राप्तैः, कालाभिमानिदेवा एव तवाश्वा इत्यर्थः । कीदृश इन्द्रः । **सहस्रयुगक्षि**सहस्रेण युक्तः ।

अथ द्वितीयामाह —

**अग्निर्विभ्राष्टिवसनः । वायुः श्वेतसिकद्रुकः ।**
**संवत्सरो विषूवर्णैः । नित्यास्तेऽनुचरास्तव,** इति ।

हे इन्द्र**ाग्निर्वायुः संवत्सरश्च** ये त्रयः सन्ति ते त्रयोऽपि **तव नित्या अनुचराः** । कदाचिदप्यनपायिनो नित्याः । कीदृशोऽग्निः, **विभ्राष्टिवसनो** विशेषेण भ्राजमानवसनयुक्तः । कीदृशो वायुः, **श्वेतसिकद्रुकः** श्वेतानां सिकतानां द्रोग्धा । तदेतदुपलक्षणम्, नानाविधां धूलिमुत्पादयतीत्यर्थः । कीदृशः संवत्सरः, **विषूवर्णै**र्नानाविधैर्वर्णैर्युक्तः । वसन्ताद्यृतुभेदाः[२] पूर्वमेवोक्ताः[३] ।

कल्पः—" सुब्रह्मण्योमित्येकाम् " इति । पाठस्तु—

**सुब्रह्मण्यो३ सुब्रह्मण्यो३ सुब्रह्मण्योम् । इन्द्राऽऽगच्छ हरिव आगच्छ मेधातिथेः । मेष वृषणश्वस्य मेने ( ३ ) । गौरावस्कन्दिन्नहल्यायै जार । कौशिकब्राह्मण गौतमब्रुवाण,** इति ।

शोभनं ब्रह्म सुब्रह्म वेदस्तस्मै हितः **सुब्रह्मण्य** इन्द्रः । **ओ**मिति संबोधनार्थः । हे सुब्रह्मण्येति । त्रिरभिधानमादरार्थम् । तद्गुणकथनेन स्तुत्यर्थमिन्द्रादिपदैः संबोधनम् । हे **इन्द्र** परमैश्वर्ययुक्त, इह कर्मण्यागच्छ । **हरिवो** हरिनामकावश्वावस्य विद्येते इति हरिवांस्तस्य संबोधनम्, शुक्लकृष्णपक्षदेवावेव[४] तदीयाश्वत्वं प्राप्य हरिशब्देनोच्येते, तादृश हे हरिव इह कर्मण्यागच्छ । **मेधातिथेर्मे**धातिथिर्नामकः कश्चिदृषिः कण्वस्य पुत्रस्तत्संबन्धिन्, हे **मेषे**रूप । वृषणश्वो नाम कश्चिन्मुनिस्तस्य संबन्धिनी या मेनकाख्या दुहिता तां मन्यमाने तस्मिन्नर्थे **वृषणश्वस्य मेने,** इति संबुद्ध्यन्तं प्रयुक्तम् । **गौरावस्कन्दिन्**गौरमृगो भूत्वा यागमध्ये समागत्य सोमं पीत्वा हे विनाशक । तदेतत्सर्वं **शाखान्तरब्राह्मणे** समाम्नातम्—"हरिव आगच्छेति पूर्वपक्षापरपक्षौ वा इन्द्रस्याश्वौ ताभ्यां ह्येष सर्वं हरतीति, मेधातिथेर्मेषेति मेधातिथिं काण्वायनिं मेषो भूत्वा जहार,

१ क. ख. °स्य निरू° । २ ख. °भेदात्पूर्व° । ३ ख. °वोक्तः । ४ ख. °वेवैत° । ५ ख. ग. °ष तु° । ६ ख. ग. °क्षाव° । क. °न्द्रस्य हरी ता° ।

वृषणश्वस्य मेन इति वृषणश्वस्य मेनका नाम दुहिता तामिन्द्रश्चकमे, गौरावस्कन्दि न्निति गौरमृगो भूत्वा राजानं पिबहि(ति)"इति । अहल्यायै जार, अहल्या गौतमस्य भार्या तस्या इन्द्रो जार इति पुराणे प्रसिद्धम् । कौशिकब्राह्मण कौशिकनामा कश्चि न्महर्षिस्तस्य समीपे ब्राह्मणवेषेण समागतवान् । गौतमब्रुवाण गौतमो महर्षिस्तं प्रसाद यितुं स्तुतिं कृतवान् । तथाविध हे इन्द्राऽऽगच्छेत्यन्वयः ।

कल्पः—" अरुणाश्वा इति चतस्रः " इति । तत्र प्रथमामाह—

अरुणाश्वा इहाऽऽगताः । वसवः पृथिविक्षितः ।
अष्टौ दिग्वाससोऽग्नयः । अग्निश्च जातवेदाश्चेत्येते, इति ।

अष्टावग्नय इह कर्मणि, आगताः, कीदृशाः । अरुणाश्वा अरुणवर्णैरश्वैर्युक्ताः वसवो जगतो निवासहेतवः, पृथिविक्षितो भूमिनिवासिनः, दिग्वाससो दिश एते षामग्नीनां वासांसि । के तेऽष्टावग्नय इति तदुच्यते—अग्निश्च जातवेदाश्च, इत्यस्मि न्मन्त्रे ये पूर्वमभिहिता एतेऽग्नयो वेदितव्याः ।

अथ द्वितीयामाह—

ताम्राश्वास्ताम्ररथाः । ताम्रवर्णास्तथाऽसिताः ।
दण्डहस्ताः खादग्दतः । इतो रुद्राः परं गताः ।
( ४ ) । उक्तं स्थानं प्रमाणं च पुर इत, इति ।

ये रुद्राः सन्ति त इतः स्थानात्पृथिवीरूपात्परां दिवं गताः । कीदृशा रुद्राः— ताम्रवर्णैरश्वै रथैश्च युक्ताः, स्वयं च तथा ताम्रवर्णाः, असिता ईषदपि सितं श्वेत येषां नास्ति ते तादृशाः, दण्डहस्ता गदापाणयः, खादग्दतः खादयन्तो भक्षयन्त दन्ता येषां तादृशाः, एवंविधा हे रुद्रा युष्माकं स्थानमुक्तं शास्त्रेषु प्रसिद्धम् । त तस्य स्थानस्य प्रमाणं चेयत्तानिश्चयः शास्त्रसिद्धः, तस्मात्पुरो भवदीयाः पुरीरि गच्छत ।

अथ तृतीयामाह—

बृहस्पतिश्च सविता च । विश्वरूपैरिहाऽऽगताम् ।
रथेनोदकवर्त्मना । अप्सुषा इति तद्द्वयोः, इति ।

योऽयं बृहस्पतिर्यश्च सविता तावुभौ विश्वरूपैर्नानाविधरूपैरश्वैरिह कर्मण्याग

---

१ क. पिबति । २ क. ख. ग. तस्य । ३ क. ख. °नाम क° । ४ ख. ग. °मिश्रा°
५ क. इत्येतस्मि° । ६ क. °तास्तेऽग्न° । ७ घ, यित । ८ ग. °ता । वि° । ९ घ. अप्सुषा

तामागच्छताम् । केन साधनेन । उदकवर्त्मना रथेन, उदकस्येव वर्त्म मार्गो यस्य रथस्य सोऽयमुदकवर्त्मा यथा वृष्टिजलस्यान्तरिक्षमेव मार्ग एवमेतदीयरथस्याप्यन्तरिक्षमेव मार्गः । कीदृशावेतौ, अप्सुषा, अपां सवितारौ । **इति,** एवमुक्तप्रकारेण **द्वयोः** सवितृबृहस्पत्योरुभयोः, तत्स्वरूपमुक्तमिति शेषः । एवं त्रयो मन्त्रा उक्ताः, चतुर्थस्तूपरिष्टादुदाहरिष्यते ।

**उक्तो वेषो वासाꣳसि च । कालावयवानामितः प्रतीज्या । वासात्यां इत्यश्विनोः । कोऽन्तरिक्षे शब्दं करोतीति । वासिष्ठो रौहिणो मीमाꣳसां चक्रे । तस्यैषा भवति, इति ।**

**कालावयवानां** वसन्ताद्यृतूनामितोऽस्मादनुवाकात्प्रतीच्येष्ववतीतेष्वनुवाकेषु साकंजानामित्यादिषु **वेष** आकारविशेष **उक्तः, वासांसि च** वस्त्राण्यप्युक्तानि । " ऋतुर्ऋतुना नुद्यमानः । विननादाभिधावः । षष्टिश्च त्रिंशका वल्गाः " इत्यादिना यत्स्वरूपमृतूनामभिहितं सोऽयं वेष इत्युच्यते । " सारागवस्त्रैर्जरदक्षः । वसन्तो वसुभिः सह " इत्यादिना वस्त्राण्युक्तानि । तथा वासात्यौ चित्रावित्यादिनाऽश्विनोर्देवयोर्वेष उक्तः । यद्यप्येतद्ब्राह्मणं न संनिहितमन्त्रोपयुक्तं तथाऽप्युक्तं स्थानमिति वचनेन बुद्धिस्थमर्थं प्रसङ्गाद्ब्रूते । अथ चतुर्थमन्त्रोदाहरणार्थमिदमुच्यते—**वासिष्ठो** वसिष्ठगोत्रोत्पन्नः, **रौहिणः,** रोहिणाश्वस्य मुनेः पुत्रः, सोऽयमाकाशे कंचिद्ध्वनिं श्रुत्वा **मीमांसां चक्रे** विचारितवान् । किमिति । को नामान्तरिक्षे शब्दं करोति, न ह्यूर्ध्वमवलोक्यमाने कश्चिदपि पुमानुपलभ्यते शब्दश्चायं भेरीवादनादप्यधिकः श्रूयते । तस्माद्विस्मयं प्राप्तस्य को नाम शब्दकर्तेति विचारः । **तस्य** विचारस्यैषा निर्णयवादिनी काचिदृग्विद्यते ।

तस्या ऋचः प्रतीकं दर्शयति—

**वाश्रेव विद्युदिति, इति ।**

वाश्रेव विद्युन्मिमातीत्ययं मन्त्रोऽग्निना रयिमश्नवदित्यनुवाके व्याख्यातः । **वाश्रा** वाशनशीला गौर्यथा वत्सं प्रति शब्दं करोत्येवमियं विद्युत्सूर्यतेजोरूपमेघवर्तिनी **मिमाति** शब्दं निर्मिमीत इत्यर्थः ।

कल्पः—" ब्रह्मण उदरणमसीति चतस्रो ब्रह्मसदनाः " इति । पाठस्तु—

**ब्रह्मण उदरणमसि । ब्रह्मण उदीरणमसि । ब्रह्मण**

---

१ क. ख. °क्षमा° । २ ख. ग. सवितारौ । ३ ख. ग. प्रतीच्या । ४ क. °तीच्या तीच्ये° । ५ ख. ग. °ब्दश्च भे° ।

आस्तरणमसि । ब्रह्मण उपस्तरणमसि(५), इति ॥

दृश्यन्ते च मेने परां गताश्चक्रे षट् च ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके प्रथमप्रपाठके
द्वादशोऽनुवाकः ॥ १२ ॥

हे इष्टके त्वं ब्रह्मणो हिरण्यगर्भस्योदरणमुदीरणत्वहेतुरसि । उदीरणमुदीर्णत्वहेतुरसि । उदीरणत्वं लोभराहित्यम् । उदीर्णत्वं गुणान्तरैरन्येभ्य आधिक्यम् । आस्तरणमासनम् । उपस्तरणमुपर्याच्छादनम् । एतैश्चतुर्भिर्यजुर्मन्त्रैश्चतस्र इष्टका उपदध्यात् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यके प्रथमप्रपाठके द्वादशोऽनुवाकः ॥ १२ ॥

---

अथ प्रथमे त्रयोदशोऽनुवाकः ।

---

कल्पः—“ अष्टयोनीमित्यष्टौ दिश्याः ” इति । तत्र प्रथमामाह—

अष्टयोनीमष्टपुत्राम् । अष्टपत्नीमिमां महीम् ।
अहं वेद न मे मृत्युः । न चामृत्युरघाऽहरत्, इति ।

अष्टावष्टसंख्याकानि मूलप्रकृतिसहितानि महदहंकारपञ्चतन्मात्ररूपाणि तत्त्वानि योनयः कारणानि यस्याः पृथिव्याः सेयमष्टयोनी ताम् । अष्टसंख्याका वक्ष्यमाणा मित्रावरुणादयः पुत्रा यस्याः पृथिव्याः सेयमष्टपुत्रा ताम् । अष्टसंख्याका इन्द्रादयो दिग्वर्तिनः पतयः पालका यस्याः पृथिव्याः सेयमष्टपत्नी ताम् । तथोक्तगुणयुक्तामिमां महीं पृथिवीमहं मन्त्रद्रष्टा वेद जानामि, अतो ज्ञानप्रभावेन मे मृत्युर्नास्ति, किं त्वमृतो मुक्त एव भविष्यामीति शेषः । किंच । अमृत्युः परममृत्योरन्योऽपमृत्युरित्यर्थः । सोऽघा पापानि दुःखानि न चाहरज्ज्ञानप्रभावादेव नैव संपादयिष्यति ।

अथ द्वितीयां तृतीयां चाऽऽह--

अष्टयोन्यष्टपुत्रम् । अष्टपदिदमन्तरिक्षम् । अहं
वेद न मे मृत्युः । न चामृत्युरघाऽहरत् ।
अष्टयोनीमष्टपुत्राम् । अष्टपत्नीममूं दिवम् (१) ।
अहं वेद न मे मृत्युः । न चामृत्युरघाऽहरत्, इति ।

---

१ ख. ग. °पदि द्°।

**अष्टपदष्टपतिः**, अष्टसंख्याका (क) पालका इ(कमि)त्यर्थः । अन्यत्पूर्ववत् ।

अथ चतुर्थपञ्चममन्त्रयोः प्रतीके दर्शयति—

**सुत्रामाणं महीमूषु**, इति ।

सुत्रामाणं पृथिवीं द्यामित्येको मन्त्रः । महीमूषु मातरमित्यपरो मन्त्रः । एतौ चोभौ वैश्वानरो न ऊत्येत्यनुवाके व्याख्यातौ ।

अथ षष्ठीमाह—

**अदितिर्द्यौरदितिरन्तरिक्षम् । अदितिर्माता स पिता स पुत्रः । विश्वे देवा अदितिः पञ्च-जनाः । अदितिर्जातमदितिर्जनित्वम्**, इति ।

अदितिशब्दवाच्यदेवता सर्वात्मकत्वेन स्तूयते—**माता** पृथिवी, अतो लोकत्रयात्मकांशदेवताविशेषोऽदित्याख्यः सर्वस्य जगतः **पिता स** एव **पुत्रश्च** । ये **विश्वे देवाः** सर्वेऽपि देवाः, ये च **पञ्चजना** निषादपञ्चमा ब्राह्मणक्षत्रियवैश्यशूद्रास्ते सर्वेऽप्यदितिरेव, **जातं** यत्पूर्वमुत्पन्नं जगत्, **जनित्वं** जननरूपो व्यापारस्तत्सर्वमप्यदितिरेव ।

अथ सप्तमीमाह—

**अष्टौ पुत्रासो अदितेः । ये जातास्तन्वः परि । देवाꣳ उपप्रैत्सप्तभिः ( २ ) । परा मार्ताण्डमास्यत्**, इति ।

अदितेर्देवताया **अष्टौ पुत्रासो**ऽष्टसंख्याकाः पुत्रा विद्यन्ते, ये पुत्रास्**तन्वः परि** शरीरस्योपरि जाता औरसा इत्यर्थः । तेषां मध्ये **सप्तभिः** पुत्रैः सह **देवानुप**[ै]त्समीपे प्राप्तवती, **मार्ताण्ड**मष्टमं पुत्रं **परास्य**त्पराकृतवती । तमेकं परित्यज्यान्यैरेव सप्तभिः सह देवलोकं गता ।

अथाष्टमीमाह—

**सप्तभिः पुत्रैरदितिः । उपप्रैत्पूर्व्यं युगम् । प्रजायै मृत्यवे तत् । परा मार्ताण्डमाभरदिति**, इति ।

अस्यामृच्यदितिदेवतायाः सप्तपुत्रस्वीकारे मार्ताण्डपरित्यागे च कारणमुच्यते—इयमदितिर्देवी **सप्तभिः पुत्रै**र्निमित्तभूतैस्तदुत्पादनार्थं [१]पूर्व्यं **युगं** तदुत्पत्तेः पूर्वकालीनं पतिसंयोगं **प्रजायै** प्रजोत्पत्त्यर्थमुपप्रैत्प्रीतिपूर्वकं प्राप्तवती । एतेषु सप्तसु पुत्रेषूत्पन्नेषु तद्द्वारा प्रजावृद्धिर्भवतीत्यभिप्रेत्य तैः सह देवलोके गमनम् । मार्ताण्डाख्यमष्टमं पुत्रं

---

१ क ख. °पूर्वं ।

परोभरत्परित्यक्तवतीति यत्तन्मृत्यवे मृत्युनिमित्तम्, मार्ताण्डो हि मृत्योरेव हेतुर्न प्रजाभिवृद्धेः। मार्ताण्डो ह्यादित्यः, स चाण्डभेदेनोत्पद्यते । तथा हि च्छन्दोगाः—"तदाण्डं निरवर्तत तत्संवत्सरस्य मात्रामदायत। तन्निरभिद्यत" इत्युपक्रम्यान्ते समामनन्ति—"यत्तदजायत सोऽसावादित्यः" इति। शब्दनिर्वचनमपि तादृशमेव, मृतमण्डं यदीयजन्मना स मार्ताण्ड इति। तथा च स्मर्यते—"मृतेऽण्डे जायते यस्मान्मार्ताण्डः स उदाहृतः" इति। अतोऽयं मृत्यवे मृत्युप्रीत्यर्थमेवोपयुज्यते न त्वभिवृद्ध्यर्थमित्यदितेस्तत्परित्यागो युक्तः। इतिशब्दो मन्त्रसमाप्तिद्योतनार्थः।

अथ ब्राह्मणवाक्यमुच्यते—

तानुनुक्रमिष्यामः, इति।

अष्टपुत्रामिति ये पुत्राः सूचितास्तान्पुत्राननुक्रमेण वक्ष्यामः।

कल्पः—"मित्रश्च वरुणश्चेत्यष्टौ दिश्याः" इति। पाठस्तु—

मित्रश्च वरुणश्च। धाता चार्यमा च। अꣳशश्च भगश्च। इन्द्रश्च विवस्वाꣳश्चेत्येते, इति।

मित्रादिनामान्येवात्र मन्त्राः। मित्रस्तया देवतयाऽङ्गिरस्वद्ध्रुवा सीदेत्युपधानं द्रष्टव्यम्। इत्येते मित्रावरुणादयोऽष्टौ पुत्रा उक्ताः।

अथ मन्त्रचतुष्टयस्य प्रतीकानि दर्शयति—

हिरण्यगर्भो हꣳसः शुचिषत्। ब्रह्मजज्ञानं तदित्पदमिति, इति।

हिरण्यगर्भ इत्ययं मन्त्र ऊर्ध्वा अस्येत्यनुवाके व्याख्यातः। हꣳसः शुचिषदित्ययं मन्त्र इन्द्रस्य वज्रोऽसीत्यनुवाके व्याख्यातः। ब्रह्मजज्ञानमित्ययं मन्त्रोऽभ्यस्थाद्विश्वा इत्यनुवाके व्याख्यातः। तदित्पदमित्ययं मन्त्र उदस्ताप्सीत्सवितेत्यनुवाके व्याख्यातः। तत्र हिरण्यगर्भ इति मन्त्रो हिरण्मयपुरुषोपधानार्थः। हꣳसः शुचिषदिति मन्त्रः पुष्करपर्णोपधानार्थः। ब्रह्मजज्ञानमिति मन्त्रो रुक्मोपधानार्थः। तदित्पदमिति मन्त्रः कूर्मोपधानार्थः। एतदेवाभिप्रेत्य कल्पेऽभिहितम्—"पुष्करपर्णं रुक्मं हिरण्मयं पुरुषं कूर्मम्" इति। इतिशब्दः प्रतीकसमाप्त्यर्थः।

अथ ब्राह्मणमुच्यते—

गर्भः प्राजापत्यः। अथ पुरुषः सप्तपुरुषः (३), इति॥

---

१ क. °रास्यत° । २ क. ख. °त्युर्निमि° । ३ क. °णम्° । ४ ख. ग. °रवदित्यु° । ५ ख. ग. °णौ हि° ।

अमूं दिवꣳ सप्तभिरेते चत्वारि च ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके प्रथमप्रपाठके
त्रयोदशोऽनुवाकः ॥ १३ ॥

प्रजापतेरयं **प्राजापत्यः**, तादृशो **गर्भः** पूर्वमुक्तः, हिरण्यगर्भ इति मन्त्रे प्राजापत्यगर्भाभिधानात् । **अथा**नन्तरमुत्तरेणानुवाकेन **पुरुष** आदित्याख्यः प्रतिपाद्यते । स च कीदृशः, **सप्तपुरुषः** सप्त पुरुषाः किंकरस्थानीया नक्षत्रमासार्धमासर्तुसंवत्सराहोरात्राख्यपुरुषा यस्यासौ सप्तपुरुष. ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्ये त्रयोदशोऽनुवाकः ॥ १३ ॥

---

अथ प्रथमप्रपाठके चतुर्दशोऽनुवाकः ।

---

योऽसावित्यनुवाकस्योपधाने विनियोगादर्शनाल्लिङ्गानुसारेणाऽऽयुष्काम एतेनाऽऽदित्यमुपतिष्ठेत्(त) । तस्मिन्ननुवाके प्रथमं मन्त्रमाह—

योऽसौ तपन्नुदेति । स सर्वेषां भूतानां
प्राणानादायोदेति । मा मे प्रजाया मा
पशूनाम् । मा मम प्राणानादायोदगाः, इति ।

**योऽसा**वादित्यः प्रातःकाले प्राच्यामुदेति स आदित्यः **सर्वेषां** प्राणिनां **प्राणानादाय** स्वीकृत्योदे**ति** । आयुःक्षयापादनेन प्राणानपहरति । सूर्योदये सति पूर्वदिनस्य समाप्तत्वादेकदिनमात्रमायुः क्षीणं भवति । तस्मादेवं प्रार्थयामहे, आदित्य मदीयानां **प्रजानां पशूनां** च **मम** च **प्राणानादायोदयं मा गा** माऽऽप्नुहि । प्राणापहारहेतुमायुःक्षयं मा कुर्वित्यर्थः ।

अथ द्वितीयं मन्त्रमाह—

असौ योऽस्तमेति । स सर्वेषां भूतानां प्राणा-
नादायास्तमेति । मा मे प्रजाया मा पशूनाम् ।
मा मम प्राणानादायास्तं गाः, इति ।

---

१ ख. ग. °योगद्° । २ ग. °क्षयोपाद्गने° । ३ क. °पादेन ।

योऽसावादित्यः सायंकालेऽस्तं प्राप्नोति सोऽप्येकमहः समाप्य तावन्मात्रमायुः क्षयपति। अन्यत्पूर्ववत्।

अथ तृतीयं[1] मन्त्रमाह—

**असौ य आपूर्यति। स सर्वेषां भूतानां प्राणैरापूर्यति (१)। मा मे प्रजाया मा पशूनाम्। मा मम प्राणैरापूरिष्ठाः, इति।**

उदेतुं प्रक्रान्तः सूर्यः क्रमेण यावद्यावद्रश्मि[भि]रापूर्यते तावत्तावत्प्राणिनामायुः क्षीयते। अन्यत्पूर्ववत्।

अथ चतुर्थमाह[3]—

**असौ योऽपक्षीयति। स सर्वेषां भूतानां प्राणैरपक्षीयति। मा मे प्रजाया मा पशूनाम्। मा मम प्राणैरपक्षेष्ठाः, इति।**

अस्तं प्राप्तुमुपक्रान्तः सूर्यो यावद्यावद्रश्मिभिः क्रमेण क्षीणो भवति तावत्तावत्प्राणिनामायुःक्षयः। अन्यत्पूर्ववत्सर्वत्र योज्यम्।

अथ पञ्चममाह—

**अमूनि नक्षत्राणि। सर्वेषां भूतानां प्राणैरप प्रसर्पन्ति चोत्सर्पन्ति च। मा मे प्रजाया मा पशूनाम्। मा मम प्राणैरप प्रसृपत मोत्सृपत (२), इति।**

अमून्येतानि नक्षत्राणि दिवि संचरन्ति तानि सर्वाण्यहन्यप[प्र]सर्पन्ति, अपगतज्योतींषि भूत्वा प्रकर्षेण संचरन्ति। रात्रौ चोत्सर्पन्ति, उत्कृष्टज्योतींषि भूत्वा प्रवर्तन्ते। तस्मिन्नुभयस्मिन्नपि काले प्राणिनां प्राणैः सहैव प्रवर्तन्ते। यावद्यावत्कालातिक्रमस्तावत्तावदायुषा (षां) क्षीयमाणत्वात्। ततो हे नक्षत्राणि प्रजादीनां प्राणैः सह माऽप[प्र]सृपताहन्यपसर्पणं मा कुरुत, मोत्सृपत रात्रावुत्सर्पणमपि मा कुरुत। भवदीयप्रजारक्षणनिमित्तमायुःक्षयो मा भूदित्यर्थः।

अथ षष्ठसप्तममन्त्रावाह—

**इमे मासाश्चार्धमासाश्च। सर्वेषां भूतानां प्राणैरप प्रसर्पन्ति चोत्सर्पन्ति च। मा मे प्रजाया मा पशूनाम्। मा मम प्राणैरप प्रसृपत मोत्सृपत॥ इम ऋतवः। सर्वेषां भूतानां प्राणैरप प्रसर्पन्ति**

---

१ क. °तीयामा°। २ क. ग. °वत्या°। ३ क. ख. °तुर्थीमा°। ४ क. ख. °ञ्चमीमा°।

चोत्सर्पन्ति च । मा मे प्रजाया मा पशूनाम् ।
मा मम प्राणैरप प्रसृपत मोत्सृपत इति, ।

नक्षत्रवाक्यवद्व्याख्येयम् ।

अथाष्टममाह—

अयꣳ संवत्सरः । सर्वेषां भूतानां प्राणैरप प्रस-
र्पति चोत्सर्पति च (३) । मा मे प्रजाया मा पशू-
नाम् । मा मम प्राणैरप प्रसृप मोत्सृप, इति ।

अत्र संवत्सरशब्दस्यैकवचनान्तत्वा[दु]त्सर्प प्रसर्पेति चैकवचनम् । अन्यत्पूर्ववत् ।

अथ नवमदशमौ मन्त्रावाह—

इदमहः । सर्वेषां भूतानां प्राणैरप प्रसर्पति चोत्सर्पति
च । मा मे प्रजाया मा पशूनाम् । मा मम प्राणैरप
प्रसृप मोत्सृप । इयꣳ रात्रिः । सर्वेषां भूतानां प्राणै-
रप प्रसर्पति चोत्सर्पति च । मा मे प्रजाया मा
पशूनाम् । मा मम प्राणरप प्रैसृप मोत्सृप, इति ।

एतद्वाक्यद्वयं संवत्सरवाक्यवद्व्याख्येयम् ।

अथैकादशं मन्त्रमाह—

ॐ भूर्भुवः स्वः, इति ।

योऽयं प्रणवप्रतिपाद्यः परमात्मा स एव लोकत्रयरूप इत्यर्थः ।

अथ द्वादशमाह—

एतद्वो मिथुनं मा नो मिथुनꣳ रीढ्वम् (४), इति ।
प्राणैरापूर्यति मोत्सृपत चोत्सर्पति च मोत्सृप द्वे च ॥

*उदेत्यस्तमेत्यापूर्यत्यपक्षीयत्यमूनि नक्षत्राणीमे मासा इम ऋत-
वोऽयꣳ संवत्सर इदमहरियꣳ रात्रिर्दश ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके प्रथमप्रपाठके
चतुर्दशोऽनुवाकः ॥ १४ ॥

नक्षत्रमासार्धमासर्तुसंवत्सराहोरात्ररूपा हे सप्त पुरुषाः प्रणवप्रतिपाद्यपरमात्मरूपे,

---

* एतदनुवाकमन्त्राद्यवाक्यगतान्तिमपदभागसंकलनमेतत् ।

णाऽऽदित्येन सहावस्थानं यदस्त्येतद्वो युष्माकं मिथुनं संबन्ध उपकार्योपकारकलक्षणः एतस्य ध्यानेनास्माकमपि मिथुनं स्त्रीपुंसलक्षणं मा रीढ्वं हिंसितं मा कुरुत ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यके प्रथमप्रपाठके चतुर्दशोऽनुवाकः ॥ १४ ॥

---

अथ प्रथमप्रपाठके पञ्चदशोऽनुवाकः ।

---

कल्पः—"वसूनां रुद्राणामित्यष्टावुत्तरतः" इति । तदेतद्ब्राह्मणवाक्येन संग्रहरूपे प्रतिजानीते—

अथाऽऽदित्यस्याष्टपुंरुषस्य, इति ।

अष्टयोनीमित्यनुवाकोक्तैर्मन्त्रैरिष्टकोपधानानन्तरं वस्वाद्यष्टविधपुरुषेणावस्थितस्याऽऽदित्यस्य संबन्धिभिर्मन्त्रैरिष्टका उपदध्यादिति शेषः ।

तत्र प्रथमं मन्त्रमाह—

वसूनामादित्यानाꣳ स्थाने स्वतेजसा भानि, इति ।

पूर्वमृतुप्रकरणे—"वसन्तो वसुभिः सह" "शुक्लवासा रुद्रगणः" इत्यादिना ये च रुद्रादयो निर्दिष्टास्ते सर्वेऽप्यादित्यस्यैवावतारविशेषाः, ते चात्र मन्त्रेषु क्रमेण निर्दिश्यन्ते । अष्टवसुरूपेणावतीर्णा य आदित्यमूर्तिविशेषाः, तेषां स्थाने तिष्ठन्नहं तत्प्रसादलभ्येन स्वकीयेन तेजसा भानि भासमानो भूयासम् ।

अथ द्वितीयमाह[१]—

रुद्राणामादित्यानाꣳ स्थाने स्वतेजसा भानि, इति ।

एकादशरुद्ररूपेणावतीर्णा आदित्यमूर्तिविशेषाः । अन्यत्पूर्ववत्सर्वत्र व्याख्येयम्

अथ तृतीयमाह[३]—

आदित्यानामादित्यानाꣳ स्थाने स्वतेजसा भानि, इति ।

द्वादशादित्यरूपेणावतीर्णाः परमात्मरूपादित्यस्य[४] मूर्तिविशेषाः ।

अथ चतुर्थमाह[५]—

सताꣳ सत्यानाम् । आदित्यानाꣳ
स्थाने स्वतेजसा भानि, इति ।

---

१ ख. °न्त्रेण । २ क. ख. °तीयामा° ३ क. ख. °तीयामा° । ४ क. °स्य भूतिवि° ५ क. ख. °तुर्थीमा° ।

सन्तः सत्पुरुषा निजावतारेण सर्वलोकसंप्रतिपन्ना महर्षयः, ते च सत्याः सर्वदा सत्यवादिनः, तादृशाः केचिदादित्यावतारविशेषाः ।

अथ पञ्चमंमाह—

अभिधून्वतामभिघ्नताम् । वातवतां मरुताम् ।

आदित्यानाᳪ स्थाने स्वतेजसा भानि,[2] इति ।

ऋतुप्रकरणे—'अभिधून्वन्तोऽभिघ्नन्तः' इत्यादिना मरुद्गणा उक्तास्ते चाभितो धून्वन्ति वृष्टिजलं चालयन्ति, इतस्ततः कम्पयन्ति । मार्गे गच्छतः पुरुषानभिघ्नन्ति, आभिमुख्येन ताडयन्ति । ते च वातवन्तस्तीव्रवायुयुक्ता भवन्ति, ते च मरुद्गणा आदित्यावतारविशेषाः ।

अथ[3] षष्ठमाह—

ऋभूणामादित्यानाᳪ स्थाने स्वतेजसा भानि, इति ।

"ऋभूणां तान्निबोधत" इत्यत्र य ऋभवो देवविशेषा उक्तास्तेऽप्यादित्यावतारविशेषाः ।

अथ सप्तममाह—

विश्वेषां देवानाम् । आदित्यानाᳪ स्थाने स्वतेजसा भानि, इति ।

ये प्रसिद्धा[4] विश्वे देवास्तेऽप्यादित्यावतारविशेषाः ।

अथाष्टममाह—

संवत्सरस्य सवितुः । आदित्यस्य स्थाने स्वतेजसा भानि, इति ।

ऋतुप्रकरणे—"स खलु संवत्सर एतैः" इति संवत्सरोऽभिहितः स चाऽऽदित्यस्यावतारविशेषः ।

अथ सर्वमन्त्रेष्वनुषञ्जनीयं वाक्यद्वयमाह—

ओं भूर्भुवः स्वः । रश्मयो वो मिथुनं

मा नो मिथुनᳪ रीढ्वम् ( १ ), इति ।

ऋभूणामादित्यानाᳪ स्थाने स्वतेजसा भानि षट् च ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके प्रथमप्रपाठके पञ्चदशोऽनुवाकः ॥ १५ ॥

---

१ ग. °मथ षष्ठावाह । २ ग. °नि । ऋभूणामादित्यानाᳪ स्थाने स्वतेजसा भानि, इति ।
३ ग. °थ सप्तमम° । ४ ख. ग °द्धास्ते वि° ।

प्रणवप्रतिपाद्यस्य लोकत्रयात्मकस्याऽऽदित्यस्य संबन्धिनो **हे रश्मयो वो** युष्माकं स्वामिनाऽऽदित्येन सह **मिथुनं** मिथुनवदुपकार्योपकारकभावोऽस्ति, अतस्तादृशा **यूयं नो**ऽस्माकं स्त्रीपुरुषलक्षणमिथुनं **मा रीढ्वं** हिंसितं मा कुरुत ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यके प्रथमप्रपाठके पञ्चदशोऽनुवाकः ॥ १५ ॥

---

अथ प्रथमप्रपाठके षोडशोऽनुवाकः ।

---

कल्पः—" आरोगस्येत्यष्टावुपरिष्टात् " इति । " आरोगो भ्राजः पटरः पतङ्गः " इत्यादीन्यष्ट सूर्यनामानि मन्त्ररूपाणि पूर्वमाम्नातानि, इदानीं तेनैव क्रमेणाष्टौ मन्त्रान्तराण्यत्राऽऽम्नायन्ते । तानि दर्शयति—

**आरोगस्य स्थाने स्वतेजसा भानि । भ्राजस्य स्थाने स्वतेजसा भानि । पटरस्य स्थाने स्वतेजसा भानि । पतङ्गस्य स्थाने स्वतेजसा भानि । स्वर्णरस्य स्थाने स्वतेजसा भानि । ज्योतिषीमतस्य स्थाने स्वतेजसा भानि । विभासस्य स्थाने स्वतेजसा भानि । कश्यपस्य स्थाने स्वतेजसा भानि । ॐ भूर्भुवः स्वः । आपो वो मिथुनं मा नो मिथुनꣳ रीढम् ( १ ), इति ।**

**आरोगस्य दश ॥**

**इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके प्रथमप्रपाठके षोडशोऽनुवाकः ॥ १६ ॥**

आरोगनामको यः प्रथमः सूर्यस्तस्य **स्थाने** तिष्ठन्नहं तत्प्रसादलभ्येन **स्वकीयेन तेजसा** भासमानो भूयासम् । प्रणवप्रतिपाद्यो लोकत्रयात्मको यः सूर्यस्तेन सहा**ऽऽपो वो** युष्माकमुपकार्योपकारकभावोऽस्ति, अतस्तथाविधा यूयमस्मदीयं **मिथुनं** हिंसितं मा कुरुत । एतच्च वाक्यद्वयं पूर्ववत्सर्वमन्त्रशेषः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्ये प्रथमप्रपाठके षोडशोऽनुवाकः ॥ १६ ॥

---

अथ प्रथमे सप्तदशोऽनुवाकः ।

कल्पः—"प्रभ्राजमानानामित्येकादश प्रभ्राजमानीनामिति चैकादश मध्ये" इति । तेषां मन्त्राणां संग्रहरूपेण ब्राह्मणवाक्येन प्रतिज्ञां दर्शयति—

**अथ वायोरेकादशपुरुषस्यैकादशस्त्रीकस्य,** इति ।

एक एव वायुः प्रभ्राजमानाद्येकादशरुद्रमूर्तिरूपेण प्रभ्राजमान्याद्येकादशस्त्रीमूर्तिरूपेणाप्यवतीर्णः, तस्य संबन्धिनो मन्त्रा उच्यन्त इति शेषः ।

तान्मन्त्रान्दर्शयति—

**प्रभ्राजमानानाꣳ रुद्राणाꣳ स्थाने स्वतेजसा भानि । व्यवदातानाꣳ रुद्राणाꣳ स्थाने स्वतेजसा भानि । वासुकिवैद्युतानाꣳ रुद्राणाꣳ स्थाने स्वतेजसा भानि । रजतानाꣳ रुद्राणाꣳ स्थाने स्वतेजसा भानि । परुषाणाꣳ रुद्राणाꣳ स्थाने स्वतेजसा भानि । श्यामानाꣳ रुद्राणाꣳ स्थाने स्वतेजसा भानि । कपिलानाꣳ रुद्राणाꣳ स्थाने स्वतेजसा भानि । अतिलोहितानाꣳ रुद्राणाꣳ स्थाने स्वतेजसा भानि । ऊर्ध्वानाꣳ रुद्राणाꣳ स्थाने स्वतेजसा भानि (१) । अवपतन्तानाꣳ रुद्राणाꣳ स्थाने स्वतेजसा भानि । वैद्युतानाꣳ रुद्राणाꣳ स्थाने स्वतेजसा भानि । प्रभ्राजमानीनाꣳ रुद्राणीनाꣳ स्थाने स्वतेजसा भानि । व्यवदातीनाꣳ रुद्राणीनाꣳ स्थाने स्वतेजसा भानि । वासुकिवैद्युतीनाꣳ रुद्राणीनाꣳ स्थाने स्वतेजसा भानि । रजतानाꣳ रुद्राणीनाꣳ स्थाने स्वतेजसा भानि । परुषाणाꣳ रुद्राणीनाꣳ स्थाने स्वतेजसा भानि । श्यामानाꣳ रुद्राणीनाꣳ स्थाने स्वतेजसा भानि । कपिलानाꣳ रुद्राणीनाꣳ स्थाने स्वतेजसा भानि । अतिलोहिती-**

नाᳯ रुद्राणीनाᳯ स्थाने स्वतेजसा भानि। ऊर्ध्वानाᳯ रुद्राणीनाᳯ स्थाने स्वतेजसा भानि। अवपतन्तीनाᳯ रुद्राणीनाᳯ स्थाने स्वतेजसा भानि। वैद्युतीनाᳯ रुद्राणीनाᳯ स्थाने स्वतेजसा भानि। ओं भूर्भुवः स्वः। रूपाणि वो मिथुनं मा नो मिथुनᳯ रीढ्वम् (२), इति। ऊर्ध्वानाᳯ रुद्राणाᳯ स्थाने स्वतेजसा भान्यतिलोहितीनाᳯ रुद्राणीनाᳯ स्थाने स्वतेजसा भानि पञ्च च ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके प्रथमप्रपाठके सप्तदशोऽनुवाकः ॥ १७ ॥

प्रभ्राजमाननामको वायुसंबन्धी यो रुद्रविशेषस्तस्य बहवो मूर्तिविशेषाः। अतः प्रभ्राजमानानामिति बहुवचनम्। एवं सर्वत्र द्रष्टव्यम्। **रूपाणि** स्त्रीपुरुषविशेषाः, हे **रूपाणि वो** युष्माकं संबन्धि यन्मिथुनं तत्प्रसादादस्मदीयमपि **मिथुनम**हिंसितं भवतु। अयं च सर्वमन्त्रशेषः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्ये प्रथमप्रपाठके सप्तदशोऽनुवाकः ॥ १७ ॥

---

अथ प्रथमेऽष्टादशोऽनुवाकः।

---

कल्पः—"अग्नेः पूर्वदिश्यस्येत्यष्टौ दिश्याः" इति। तत्र संग्रहरूपेण ब्राह्मणवाक्येन मन्त्रान्प्रतिजानीते—

**अथाग्नेरष्टपुरुषस्य, इति।**

अग्निजातवेदःप्रभृतयः पुरुषा मूर्तिविशेषा यस्याग्नेः सन्ति सोऽयम**ष्टपुरुषः**, तस्याग्नेः संबन्धिनो मन्त्राः पूर्वोक्तवायुसंबन्धिद्विविधैकादशरुद्रमन्त्रानन्तरमुच्यन्ते।

तान्मन्त्रान्दर्शयति—

**अग्नेः पूर्वदिश्यस्य स्थाने स्वतेजसा भानि। जातवेदस उपदिश्यस्य स्थाने स्वतेजसा भानि। सहोजसो दक्षिणदिश्यस्य**

---

१ ग. म. 'द्रुद्राण्यन'।

**स्थाने स्वतेजसा भानि । अजिराप्रभव उपदिश्यस्य स्थाने स्वतेजसा भानि । वैश्वानरस्यापरादिश्यस्य स्थाने स्वतेजसा भानि । नर्यापस उपदिश्यस्य स्थाने स्वतेजसा भानि । पङ्क्तिराधस उदग्दिश्यस्य स्थाने स्वतेजसा भानि । विसर्पिण उपदिश्यस्य स्थाने स्वतेजसा भानि । ओं भूर्भुवः स्वः । दिशो वो मिथुनं मा नो मिथुनꣳ रीढ्वम् (१), इति ॥**

**स्वरेकं च ॥**

**+ एतद्रश्मय आपो रूपाणि दिशः पञ्च ॥**

**इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके प्रथमप्रपाठकेऽष्टादशोऽनुवाकः ॥ १८ ॥**

पूर्वा दिक्प्राची तस्यां भवः **पूर्वदिश्यः**, तथाविधोऽग्निनामको यो मूर्तिविशेषस्तस्य **स्थाने** तिष्ठन्नहं तत्प्रसादाल्लब्धेन **स्वतेजसा** भासमानो भूयासम् । उपदिगाग्नेयी तस्यां भव **उपदिश्यो** जातवेदोनामकः । एवं सर्वत्र योज्यम् । हे **दिशो वो** युष्माकमग्निना स्वामिना सहोपकार्योपकारकभावः । अतो युष्मत्प्रसादेनास्मदीयं **मिथुनम**हिंसितं भवतु । सोऽयं सर्वमन्त्रशेषः । अथवा, ओमित्यादिः सर्वत्र यजमानाभिमन्त्रणमन्त्रो द्रष्टव्यः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्ये प्रथमप्रपाठकेऽष्टादशोऽनुवाकः ॥ १८ ॥

---

अथ प्रथम एकोनविंशोऽनुवाकः ।

---

कल्पः—" दक्षिणपूर्वस्यामिति चतस्रो नरकवतीर्यथालिङ्गम् " इति । तत्र प्रथमं मन्त्रमाह—

**दक्षिणपूर्वस्यां दिशि विसर्पी नरकः । तस्मान्नः परिपाहि, इति ।**

दक्षिणस्याः पूर्वस्याश्चान्तरालवर्तिनी दिगाग्नेयी तस्यां **विसर्पि**नामको **नरको** विद्यते, इष्टके **तस्मा**न्नरकान्नोऽस्मान्परिपाहि ।

---

+ चतुर्दशानुवाकमारभ्यैतदनुवाकसमाप्तिपर्यन्तमुक्तपर्यायगणनाय तत्तत्पर्यायान्तिमवाक्याद्यपदानां सूचनमेतत् । एतच्च क. ग. पुस्तकयोर्नास्ति ।

अथ द्वितीयमाह[1]—

**दक्षिणापरस्यां दिश्यविसर्पी नरकः । तस्मान्नः परिपाहि, इति ।**

नैर्ऋती दक्षिणापरा तस्यामविसर्पी नाम नरकः । पूर्वत्र वेदनातिशयाद्विविधमितस्ततः सर्पन्ति जन्तवो यत्रेति व्युत्पत्त्या विसर्पी, इह तु दुःखस्यात्यन्तमाधिक्याद्विसर्पितुमपि न क्षमन्ते[2] तस्मादविसर्पी । शेषं पूर्ववत् ।

अथ तृतीयमाह[3]—

**उत्तरपूर्वस्यां दिशि विषादी नरकः । तस्मान्नः परिपाहि, इति ।**

ऐशानी दिगुत्तरपूर्वा, तत्र हि विषादिसंज्ञको नरकः किमर्थमस्माभिः पापं कृतमिति जन्तवो विषादं कुर्वन्ति तस्मादयं विषादी । अन्यत्पूर्ववत् ।

अथ चतुर्थमाह[4]—

**उत्तरापरस्यां दिश्यविषादी नरकः । तस्मान्नः परिपाहि, इति ।**

वायवी दिगुत्तरापरा तत्राविषादी नरकः, दुःखातिशयाज्जन्तवो विषादमपि कर्तुं न क्षमन्ते तस्मादविषादी । शेषं पूर्ववत् ।

कल्पः—"आ यस्मिन्निन्द्रियाणि शतक्रताविति द्वे" इति । तयोर्मन्त्रयोः प्रतीके दर्शयति—

**आ यस्मिन्सप्त वासवा इन्द्रियाणि शतक्रतावित्येते (१), इति ।**

**दक्षिणपूर्वस्यां नव ॥**

**इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके प्रथमप्रपाठके एकोनविंशोऽनुवाकः ॥ १९ ॥**

इत्येते ये ऋचौ ताभ्यामिष्टके उपदध्यादित्यर्थः । एतच्चोभयमिन्द्रं वो विश्वतस्परीत्यनुवाके व्याख्यातम् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्ये प्रथमप्रपाठके एकोनविंशोऽनुवाकः ॥ १९ ॥

---

अथ प्रथमे विंशोऽनुवाकः ।

---

कल्पः—"इन्द्रघोषा वः संज्ञानमिति षड्दिश्याः" इति । पाठस्तु—

**इन्द्रघोषा वो वसुभिः पुरस्तादुपदधताम् । मनोजवसो वः पितृ-**

---

१ क. ख. °तीयामा° । २ ग. क्षमते । ३ क. °तीयामा° । ४ ख. °तुर्थीमा° ।

भिर्दक्षिणत उपदधताम् । प्रचेता वो रुद्रैः पश्चादुपदधताम् ।
विश्वकर्मा व आदित्यैरुत्तरत उपदधताम् । त्वष्टा वो रूपै-
रुपरिष्टादुपदधताम् । संज्ञानं वः पश्चादिति, इति ।

हेऽब्रूपा इष्टका वो युष्मान्पुरस्तात्पूर्वस्यां दिशि वसुभिर्देवैः सहिता इन्द्रघोष-नामका देवा उपदधताम् । पितृभिः सहिता मनोजवसो देवा वो युष्मान्दक्षिणस्यां दिश्युपदधताम् । एवं सर्वत्र योज्यम् । संज्ञानं समीचीनज्ञानयुक्तं देवतास्वरूपं वो युष्मान्पश्चात्, उपदधतामिति शेषस्य सूचनार्थं इतिशब्दः प्रयुक्तः । त एते षण्मन्त्राः ।

कल्पः—"आदित्यः सर्व इति पञ्च दिश्याः" इति । पाठस्तु—

आदित्यः सर्वोऽग्निः पृथिव्याम् । वायुरन्तरिक्षे । सूर्यो
दिवि । चन्द्रमा दिक्षु । नक्षत्राणि स्वलोके, इति ।

आदित्यात्मकः सर्वोऽप्यग्निः पृथिव्यामुपदधातु । एवं वाय्वादिषु योज्यम् ।

कल्पः—"एवा ह्येवेति षड्दिश्याः" इति । पाठस्तु—

एवा ह्येव । एवा ह्यग्ने । एवा हि वायो । एवा हीन्द्र ।
एवा हि पूषन् । एवा हि देवाः ( १ ), इति ।
दिक्षु, सप्त च ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके प्रथमप्रपाठके
विंशोऽनुवाकः ॥ २० ॥

ई गताविति धातोरुत्पन्न एवशब्दः, हे एव, अयनशीलाऽऽदित्य, एवा एतव्याः प्राप्तव्याः कामास्ते सर्वे त्वमसीति शेषः । हिशब्देनाऽऽदित्यस्य सर्वकामहेतुत्वप्रसिद्धि-रुच्यते । एवमुत्तरत्रापि योज्यम् ॥[1]

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरी-
यारण्यकभाष्ये प्रथमप्रपाठके विंशोऽनुवाकः ॥ २० ॥

---

१ ख. ग. °दधातीति ।

अथ प्रथम एकविंशोऽनुवाकः ।

---

कल्पः—" आपमापामिति नवोपरिष्टात् " इति । पाठस्तु—

आपमापामपः सर्वाः । अस्मादस्मादितोऽमुतः । अग्निर्वायुश्च सूर्यश्च । सह संचस्करर्द्धिया । वाय्वश्वा रश्मिपतयः । मरीच्यात्मानो अद्रुहः । देवीर्भुवनसूवरीः । पुत्रवत्त्वाय मे सुत । महानाम्नीर्महामानाः । महसो महसः स्वः ( १ ) । देवीः पर्जन्यसूवरीः । पुत्रवत्त्वाय मे सुत । +अपाश्नुष्णिमपा रक्षः । अपाश्नुष्णिमपा रघम् । अपाघ्रामप चावर्तिम् । अप देवीरितो हित । वज्रं देवीरजीताꣳश्च । भुवनं देवसूवरीः । आदित्यानदितिं देवीम् । योनिनोर्ध्वमुदीषत ( २ ) । भद्रं कर्णेभिः शृणुयाम देवाः । भद्रं पश्येमाक्षभिर्यजत्राः । स्थिरैरङ्गैस्तुष्टुवाꣳसस्तनूभिः । व्यशेम देवहितं यदायुः । स्वस्ति न इन्द्रो वृद्धश्रवाः । स्वस्ति नः पूषा विश्ववेदाः । स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः । स्वस्ति नो बृहस्पतिर्दधातु । केतवो अरुणासश्च । ऋषयो वातरशनाः । प्रतिष्ठाꣳ शतधा हि । समाहितासो सहस्रधायसम् । शिवा नः शंतमा भवन्तु । दिव्या आप ओषधयः । सुमृडीका सरस्वति । मा ते व्योम संदृशि ( ३ ) । इति ।

स्वरुदीषत वातरशनाः षट् च ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके प्रथमप्रपाठक एकविंशोऽनुवाकः ॥ २१ ॥

अत्र केतव इति मन्त्रं विहायान्येऽष्टौ मन्त्राः प्रथमानुवाके व्याख्याताः । पुनरप्युपधानार्थं मन्त्रपाठः । केत्वरुणवातरशनशब्दा ऋषिसंघानाचक्षते । ते सर्वेऽपि ऋषिसंघाः

---

+ यकाररहितः पाठो वैदिकानाम् । एवं प्रथमानुवाकेऽपि बोध्यम् । भाष्यात्तु यकारसहितः पाठ इति भाति । यकारसहितः पाठः प्रथमानुवाके ग. पुस्तके दृश्यते ।

समाहितासोऽप्रमत्ताः सन्तः, **शतधा** हि शतसंख्याकेनापि प्रकारेण **प्रतिष्ठां** स्थैर्यहेतुं **सहस्रधायसं** सहस्रसंख्याकस्य फलस्य धारयित्रीम्, इष्टकामुपदधत्विति शेषः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्ये प्रथमप्रपाठक एकविंशोऽनुवाकः ॥ २१ ॥

---

अथ प्रथमे द्वाविंशोऽनुवाकः ।

---

एतावत्स्वनुवाकेषूपधानमन्त्राः प्रायेणाभिहिताः, अतः परमिष्टकानां ब्राह्मणमुच्यते । तत्राऽऽदौ[1] तावदापो बहुधा प्रशस्यन्ते[2] । तत्र प्रथमां[3] प्रशंसामाह—

**योऽपां पुष्पं वेद । पुष्पवान्प्रजावान्पशुमान्भवति । चन्द्रमा वा अपां पुष्पम् । पुष्पवान्प्रजावान्पशुमान्भवति । य एवं वेद,** इति ।

अमृतमयं हि चन्द्रमण्डलम् । अतो जलकार्यत्वादपां पुष्पस्थानीयम् । एतस्य वेदिता स्वयं भोगार्थं[4] चम्पकबकुलादिपुष्पैः[5] पुत्रादिप्रजया गवादिपशुभिश्च समृद्धो भवति । वेदने प्ररोचनार्थमादौ फलकथनम्, उपसंहारार्थं पुनः कथनम् ।

अथ द्वितीयां प्रशंसामाह—

**योऽपामायतनं वेद । आयतनवान्भवति । अग्निर्वा अपामायतनम् । आयतनवान्भवति । योऽग्नेरायतनं वेद (१) । आयतनवान्भवति । आपो वा अग्नेरायतनम् । आयतनवान्भवति । य एवं वेद,** इति ।

सृष्टिश्रुतौ " अग्नेरापः " इत्यग्नेर्जलकारणत्वाभिधानादग्निरपामाश्रयः । अत्रापि प्ररोचनार्थमादौ फलकथनम्, उपसंहारार्थं पुनरप्यायतनवानित्यभिधानम् । तत्र य एवं वेदेत्यध्याहरणीयम् । महासृष्टावपामग्निकार्यत्वेऽपि ब्रह्माण्डाद्यवान्तरसृष्टौ " आपो वा इदमासन्सलिलमेव[6] " इत्यादिवाक्येनापां सर्वकारणत्वाभिधानाद्ब्रह्माण्डान्तःपातिनोऽस्मद्दृश्यस्याग्नेर्जलकार्यत्वादपामग्न्याधारत्वम् । अत्रापि प्ररोचनार्थमुपसंहारार्थं द्विः फलकथनम् । सेयं जलाग्न्योः परस्पराधारत्वोक्तिर्द्वितीया प्रशंसा । एवमुत्तरत्र द्रष्टव्यम् ।

---

१ क. ख. ग. °दृथाहिव° । २ ख. ग. प्रशंस्यते । ३ क. ख. °थमप्र° । ४ ग. °गार्थंच° । ५ ग. °बहुला° । ६ ख. ग. °लमानीद्विरा° ।

अथ तृतीयां प्रशंसामाह—

योऽपामायतनं वेद । आयतनवान्भवति । वायुर्वा अपामायतनम् । आयतनवान्भवति । यो वायोरायतनं वेद । आयतनवान्भवति ( २ ) । आपो वै वायोरायतनम् । आयतनवान्भवति । य एवं वेद, इति ।

महासृष्टौ "वायोरग्निः । अग्नेरापः" इति श्रुतेरग्निद्वारा वायोरप्कारणत्वादायतनत्वम् । अपां त्ववान्तरसृष्टौ पूर्वोक्तन्यायेन वाय्वाधारत्वम् । अन्यत्पूर्ववद्व्याख्येयम् ।

अथ चतुर्थीमाह—

योऽपामायतनं वेद । आयतनवान्भवति । असौ वै तपन्नपामायतनम् । आयतनवान्भवति । योऽमुष्य तपत आयतनं वेद । आयतनवान्भवति । आपो वा अमुष्य तपत आयतनम् (३) । आयतनवान्भवति । य एवं वेद, इति ।

योऽसावादित्यस्तपन्नुपलभ्यते सोऽयमपामाधारः । 'आदित्याज्जायते वृष्टिः' इति जलकारणत्वस्मृतेः । अपां च पूर्ववदादित्याधारत्वं द्रष्टव्यम् ।

अथ पञ्चमीमाह—

योऽपामायतनं वेद । आयतनवान्भवति । चन्द्रमा वा अपामायतनम् । आयतनवान्भवति । यश्चन्द्रमस आयतनं वेद । आयतनवान्भवति । आपो वै चन्द्रमस आयतनम् । आयतनवान्भवति ( ४ ) । य एवं वेद, इति ।

तुहिनरूपाणां किरणानां चन्द्रजन्यत्वाच्चन्द्रमसो जलाधारत्वम् ।

अथ षष्ठीमाह—

योऽपामायतनं वेद । आयतनवान्भवति । नक्षत्राणि वा अपामायतनम् । आयतनवान्भवति । यो नक्षत्राणामायतनं वेद । आयतनवान्भवति । आपो वै नक्षत्राणामायतनम् । आयतनवान्भवति । य एवं वेद ( ५ ), इति ।

पुष्याश्लेषादिषु महानक्षत्रेषु वर्तमानेषु वृष्ट्याधिक्यदर्शनान्नक्षत्राणामब्धाधारत्वम् ।

अथ सप्तमीमाह—

योऽपामायतनं वेद। आयतनवान्भवति। पर्जन्यो वा अपामायतनम्। आयतनवान्भवति। यः पर्जन्यस्याऽऽयतनं वेद। आयतनवान्भवति। आपो वै पर्जन्यस्याऽऽयतनम्। आयतनवान्भवति। य एवं वेद, इति।

वृष्टिद्वारा पर्जन्याख्यस्य मेघस्य जलाधारत्वं प्रसिद्धम्।

अथाष्टमीमाह—

योऽपामायतनं वेद (६)। आयतनवान्भवति। संवत्सरो वा अपामायतनम्। आयतनवान्भवति। यः संवत्सरस्याऽऽयतनं वेद। आयतनवान्भवति। आपो वै संवत्सरस्याऽऽयतनम्। आयतनवान्भवति। य एवं वेद, इति।

वर्षर्तुद्वारा संवत्सरस्य जलाधारत्वम्।

अथ नवमीमाह—

योऽप्सु नावं प्रतिष्ठितां वेद। प्रत्येव तिष्ठति (७)। इमे वै लोका अप्सु प्रतिष्ठिताः। तदेषाऽभ्यनूक्ता, इति।

यः पुमानप्सु प्रतिष्ठितां स्थैर्येणावस्थितां नावं वेद स स्वयं लोके प्रतिष्ठायुक्तो भवति। काऽसौ प्रतिष्ठिता नौरिति सेयमुच्यते—इमे वै दृश्यमाना एव भूरादयो लोका अप्सु स्थैर्येणावस्थिता नौस्थानीयाः। अतः सर्वलोकाधारभूता आप इति वेदनेन प्रतिष्ठाप्राप्तिः[1]। नद्यादिषु परतीरगमनाय जनैर्या नौः संपाद्यते सा जले प्रतिष्ठिता न भवति। गमनागमनाभ्यां चञ्चलत्वात्। सर्वलोकसंग्रहरूपा तु नौर्न कदाचिदपि चलति किं त्वप्सु स्थैर्येणावतिष्ठते। आवरणसहितं ब्रह्माण्डं घनोदाख्ये महाजलेऽवतिष्ठत इति हि पौराणिकप्रसिद्धिः। तत्तस्मिन्सर्वजगदाधारभूता आप इत्येवंरूपेऽर्थे काचिदृगभ्यनूक्ता शाखान्तरे समाम्नाता।

तामेतामृचं दर्शयति—

अपाꣳ रसमुदयꣳसन्। सूर्ये शुक्रꣳ समाभृतम्। अपाꣳ रसस्य यो रसः। तं वो गृह्णाम्युत्तममिति, इति।

---

१ ख. °ति। प°। २ ख. ग. °तिष्ठताप्रा°। ३ ख. ग. सर्वलो। ४ ख. ग. °म्नानात्। ता°।

योऽयमपां रसः सारस्तं रसमभिलक्ष्योद्यंसन्सर्वे लोका उद्गताः । तस्मादेव रसा-दुत्पद्यन्तेऽस्मिन्नेवावतिष्ठन्त इत्यर्थः । कीदृशं रसम्, सूर्ये आदित्यमण्डले वृष्टिजननाय समाभृतं संपादितम्, अत एव शुक्रं निर्मलम् । अपां रसस्य त्रैलोक्यरूपस्योदकसा-रस्य तदु(य उ)त्तमो रसः सोमरूपः, हे, आपो युष्मदीयं तमुत्तमं रसं गृह्णामि तेषु तेषु स्वी करोमि । इतिशब्दो मन्त्रसमाप्त्यर्थः । अनेन मन्त्रेण काचिदिष्टकोपधेया । तथाच बौधायन आह—"अपा२ँ रसमित्येका" इति ।

मन्त्रस्य तात्पर्यं दर्शयति—

इमे वै लोका अपा२ँ रसः । तेऽमुष्मिन्नादित्ये समाभृताः, इति ।

य एते पृथिव्यादयो लोकास्ते सर्वेऽप्यपां मध्ये सारभूताः सर्वलोकगर्भिताः । ब्रह्माण्डगोलकरूपा पृथिवी क्षीरमध्ये मण्डमिव जलमध्ये घनीभूता । तथाच वाजसने-यिन आमनन्ति—"यदपां शर आसीत्तत्समहन्यत सा पृथिव्यभवत्" इति । ते चोद-कसारभूता लोका अमुष्मिन्दृश्यमान आदित्यमण्डले समाभृताः सम्यगाश्रिताः । आदित्यस्य वृष्टिद्वारेण सर्वलोकस्थितिहेतुत्वात् ।

तदेवं योऽपां पुष्पमित्यारभ्यामुष्मिन्नादित्ये समाभृता इत्यन्तेन ग्रन्थेनेष्टकोपधाना-र्थमपां बहुधा प्रशंसा कृता । अथ प्रयोगं विधत्ते—

जानुदघ्नीमुत्तरवेदीं खात्वा । अपां पूरयित्वा गुल्फदघ्नम् ।
(८)। पुष्करपर्णैः पुष्करदण्डैः पुष्करैश्च स२ँस्तीर्य ।
तस्मिन्विहायसे । अग्निं प्रणीयोपसमाधाय, इति ।

तत्र सावित्रचयनवद्रथचक्रं परिलिख्य तत्र जानुप्रमाणामुत्तरवेदीं खात्वा तां खातामुत्तरवेदीं गुल्फदघ्नं यथा भवति तथा जलैः पूरयित्वा तज्जलमादौ पद्मपत्रैः संछाद्य तत उपरि पत्ररहितैः केवलैः पद्मदण्डैः संछाद्य ततोऽप्युपरि मूलदण्डपत्रसहितैः कृत्स्नैः पद्मैः संछाद्य तस्मिन्विहायसे तत्र स्थापितस्य मञ्चकस्योपरि कर्मानुगुणमग्नेः प्रणयनं कृत्वा तं चाग्निमुपसमाधाय तस्याग्नेः परित इष्टका उपदध्यादिति वक्ष्यमाणे-नान्वयः ।

अथाऽऽक्षेपसमाधानाभ्यां तमिमं प्रयोगं समर्थयते—

ब्रह्मवादिनो वदन्ति । कस्मात्प्रणीतेऽयमग्निश्चीयते ।
साप्रणीतेऽयमप्सु ह्ययं चीयते । असौ भुवनेऽप्यना-

---

१ ख. 'यतेऽस्मि' । २ ख. ग. 'भूत इ' । ३ क °न्समह' । ४ ग- अपू' । ५ ख. ग. तत्तस्याग्नि त° ।

हिताग्निरेताः । तमभित एता अबीष्टका उपदधाति, इति ।

अन्यन्तरेभ्योऽस्य वैलक्षण्यं दर्शयितुं ब्रह्मवादिनोऽत्र पर्यनुयोगमाहुः । इतरत्र चयने संपूर्णे सति पश्चादग्निः प्रणीयते, अत्र तु कस्मात्कारणान्मञ्चकस्योपरि वह्नौ प्रणीते सति पश्चादिष्टकाभिरयमारुणकेतुकोऽग्निश्चीयते * मञ्चकं तु बौधायनेन दर्शितम्,—"दीर्घदारुभिर्मञ्चकं कृत्वा पृष्टो दिवीति पुरीषव्यूहनम्" इति । अतोऽस्य मञ्चकस्योपर्याकाशेऽग्निप्रणयनादूर्ध्वं पुनरिष्टकोपधानमितरचयनाद्वैलक्षण्यादयुक्तमिति ब्रह्मवादिनामाक्षेपाभिप्रायः । तस्याऽऽक्षेपस्योत्तरं साप्प्रणीत इत्यादिनोच्यते । अद्भिः सह वर्तत इति साप्, यस्मादयं जलसहितस्तस्मादयमिष्टकाचयनरूपोऽग्निरङ्गाररूपे वह्नौ प्रणीते सति पश्चाच्चेतव्यः । अप्सु ह्ययं चीयत इत्यनेन जलसहितत्वमेव स्पष्टी क्रियते आदावुत्तरवेद्यामद्भिः पूरणम्, ततः पुष्करपर्णादिसंछादनम्, ततो मञ्चकस्योपरि वह्निप्रणयनम्, एवं सत्यप्स्वेवायं प्रणीतो भवति । इतरस्त्वग्निर्नाप्सु प्रणीयते तस्मादितरवैलक्षण्यात्प्रणयनादूर्ध्वमबीष्टकोपधानं कर्तव्यम् । पश्चात्प्रणयने सत्यसावग्निः परितो रक्षकाभावेन भुवने देवयजनाद्बहिर्भूते लोकेऽपि गत्वाऽनाहिताग्निः सन्नेता गमिष्यति । इतराग्नयो जलभयाभावाद्देवयजन एव तिष्ठन्ति, अयं तु जलाद्भीतः सन्बहिरपि गमिष्यति । एता इति शब्दो लुडन्तो गमिष्यतीत्यस्मिन्नर्थे वर्तते । अतो बहिर्गमनं मा भूदित्येवमर्थं तं प्रणीतमग्निमभितः सर्वतो रक्षार्थमेता अबीष्टका उपदध्यात् । तदेवमाक्षेपसमाधानाभ्यामग्निं प्रणीयोपसमाधाय तमभित एता अबीष्टका उपदधातीत्ययमर्थ उपपादितः ।

अथायमारुणकेतुकोऽग्निः कस्मिन्कर्मण्यङ्गभूत इत्याकाङ्क्षायामङ्गीनि कर्माणि दर्शयति—

अग्निहोत्रे दर्शपूर्णमासयोः । पशुबन्धे चातुर्मास्येषु ।
(९) । अथो आहुः । सर्वेषु यज्ञक्रतुष्विति, इति ।

अग्निहोत्रादिविषयत्वेन संकोचो मा भूदिति सोमयागविषयत्वमप्यभिप्रेत्य पक्षान्तरोपन्यासः ।

अथ प्रश्नोत्तरपर्यायैः सप्तभिरारुणकेतुकस्याग्नेरधिकफलत्वं वक्तुं प्रथमं प्रश्नोत्तरपर्यायं दर्शयति—

एतद्ध स्म वा आहुः शण्डिलाः । कमग्निं चिनुते ।

---

* नपुंसकत्वं चिन्त्यम् ।

---

१ ख. ग. °दा उतिर्मञ्चं कृ° । २ क. °यनवे° । ३ क. °लसाहित्यमे° । ४ ख ग. °त्पणिधानाभावे स° । ५ ख. ग. °न्नेवाऽऽग° । ६ ख. ग. शब्दं उल्लङ्घ्य ग° । ७ क. रक्षणार्थं° ।

सत्रियमग्निं चिन्वानः । संवत्सरं प्रत्यक्षेण, इति ।

शाण्डिलो नाम कश्चिन्महर्षिस्तस्य वंशे समुत्पन्नाः सर्वे शाण्डिलाः, ते चैतदारुणकेतुकफलं निश्चेतुं परस्परमेवमाहुः स्म 'ह स्म वै' इति निपातत्रयस्याप्येक एवार्थः । तत्र कैश्चिदेवं पृच्छ्यते—सत्रियं सत्रे भवमग्निं यश्चिनुते सोऽयं कमग्निं किंफलमग्निं चिनुत इति । तत्राभिज्ञैरुत्तरमुच्यते—प्रत्यक्षेण मुख्यया वृत्त्या, संवत्सरं संवत्सरप्राप्तिफलकमग्निं चिनुत इत्युत्तरम् ।

अथ द्वितीयं पर्यायं दर्शयति—

कमग्निं चिनुते । सावित्रमग्निं चिन्वानः । अमुमादित्यं प्रत्यक्षेण, इति ।

अनुपचारेणाऽऽदित्यप्राप्तिफलकः सावित्रोऽग्निः ।

तृतीयं पर्यायं दर्शयति—

कमग्निं चिनुते । ( १० )। नाचिकेतमग्निं चिन्वानः । प्राणान्प्रत्यक्षेण, इति ।

यथा सावित्रस्याऽऽदित्यरूपत्वम् " एष वाव सावित्रो य एष तपति " इति श्रुत्याऽवगतम्, एवम् "अयं वाव यः पवते सोऽग्निर्नाचिकेतः" इति श्रुत्या नाचिकेतस्य वायुरूपत्वावगमात्तच्चयनेन वायुरूपप्राणप्राप्तिः ।

चतुर्थं पर्यायं दर्शयति—

कमग्निं चिनुते । चातुर्होत्रियमग्निं चिन्वानः । ब्रह्म प्रत्यक्षेण, इति ।

'ब्रह्म वै चतुर्होतारः' इत्युक्तत्वाद्ब्रह्मप्राप्तिः । ब्रह्मशब्देन वेदपुरुष उच्यते ।

पञ्चमं पर्यायं दर्शयति—

कमग्निं चिनुते । वैश्वसृजमग्निं चिन्वानः । शरीरं प्रत्यक्षेण, इति ।

शरीरं हिरण्यगर्भस्य देहम् ।

षष्ठं पर्यायं दर्शयति—

कमग्निं चिनुते । उपानुवाक्यमाशुमग्निं चिन्वानः । ( ११ )। इमाँल्लोकान्प्रत्यक्षेण, इति ।

'यदेकेन सꣳस्थापयति' इत्यादिकमुपानुवाक्यकाण्डं तत्र प्रोक्तोऽग्निरप्युपानुवाक्यः स चाऽऽशुः शीघ्रं(घ्रो) महानित्यर्थः । अत एव तच्चयनेन सर्वलोकप्राप्तिः ।

---

१ ख. ग. तें वै त° । २ क. °ग्निं चि° । ३ क. °पचरे° । ४ ख. ग. °वाक्याका° ।

सप्तमं पर्यायं दर्शयति—

कमग्निं चिनुते । इममारुणकेतुकमग्निं चिन्वान इति ।

य एवासौ । इतश्चामुतश्चाव्यतीपाती । तमिति, इति ।

इमं[1] चामुं च लोकं व्यतीत्यातिक्रम्य हित्वा यो न गच्छति सोऽयमव्यतीपाती सूर्यः, तं सूर्यं प्राप्नोति । आद्य इतिशब्दः प्रश्नसमाप्त्यर्थः, द्वितीय उत्तरसमाप्त्यर्थः । आरुणकेतुकाग्नेरपां च संबन्धरूपो यो मिथुनीभावस्तद्वेदनं प्रशंसति—

योऽग्नेर्मिथूया वेद । मिथुनवान्भवति ।

आपो वा अग्नेर्मिथूयाः । मिथुनवा-

न्भवति । य एवं वेद ( १२ ), इति ।

वेद भवत्यायतनमायतनवान्भवति वेद वेद[2] तिष्ठति गुल्फदघ्नं चातुर्मास्येष्वमुमादित्यं प्रत्यक्षेण कमग्निं चिनुत उपानुवाक्यमाशुमग्निं चिन्वानो[3] मिथूया मिथुनवान्भव-त्येकं च ॥[+पुष्पमग्निर्वायुरसौ वै तपन् चन्द्रमा नक्षत्राणि पर्जन्यः संवत्सरस्तिष्ठति सत्रियꣳ संवत्सरꣳ सावित्रमग्निं नाचिकेतं प्राणाꣳश्चातुर्होत्रियं ब्रह्म वैश्वसृजꣳशरीरमुपा-नुवाक्यमाशुमिमाँल्लोकानिममारुणकेतुकं[4] य एवासौ ॥ ]

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके प्रथमप्रपाठके द्वाविंशोऽनुवाकः ॥ २२ ॥

मिथूया मिथुनगमनाः[5] । मिथुनवान्मिथुनशक्तिमान् । वेदनफलस्य पुनर्वचनमुपसं-हारार्थम् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्ति-रीयारण्यकभाष्ये प्रथमप्रपाठके द्वाविंशोऽनुवाकः ॥ २२ ॥

---

+ एतदादि य एवासावित्यन्तं क. ख. पुस्तकयोर्नास्ति ।

---

१ ख. ग. °मं च । २ ग. °द प्रत्येव ति° । ३ ग. °नो मिथु° । ४ घ. °तुकमग्निं चिन्वानो य । ५ क. मिथुनगमनम् ।

अथ प्रथमप्रपाठके त्रयोविंशोऽनुवाकः ।

———

अथास्मिन्नप्यनुवाके सृष्ट्युपन्यासमुखेनाऽऽरुणकेतुकमग्निं तदङ्गभूता अपश्च प्रशंसति। तत्र सृष्ट्यादौ कामोत्पत्तिं दर्शयति—

**आपो वा इदमासन्त्सलिलमेव । स प्रजापतिरेकः पुष्करपर्णे समभवत् । तस्यान्तर्मनसि कामः समवर्तत । इद५सृजेयमिति । तस्माद्यत्पुरुषो मनसाऽभिगच्छति । तद्वाचा वदति । तत्कर्मणा करोति । तदेषाऽभ्यनूक्ता, इति ।**

**यदिदं** जगदिदानीमस्माभिर्दृश्यते तदिदमुत्पत्तेः पूर्वमाप एवाऽऽसन्, न तु देवतिर्यङ्मनुष्यादिकं किंचिदपि भौतिकमासीत् । पृथिव्यादिभूतान्तरमपि वारयि[तुं] **सलिलमेवे**त्युच्यते । तास्वप्सु मध्ये कस्मिंश्चित्**पुष्करपर्णे** जगदीश्वरः **स प्रजापति[रेकः]** **समभवत्**सम्यगाविर्भूयावस्थितः । **तस्य** प्रजापतेर्मनसोऽन्तर्मध्ये[1] सर्वमिदं जगत्**सृजेयमि**त्येवं **काम** उदपद्यत । तस्मात्प्रजापतेर्वाक्शरीरप्रभृतिभ्यां पूर्वं सर्वप्रवृत्तिहेतुः **काम** मनस्याविरभूत्**तस्मा**त्प्रजापतिसंततावुत्पन्नः सर्वः **पुरुष** इदं कार्यं करिष्यामीत्या[दि] **मनसा** चिन्तयति **तत्त**थैव **वाचा वदति कर्मणा** शरीरव्यापारेणापि तथैव **करोति** **तत्त**स्मिन्कामस्य प्रथमोत्पत्तिलक्षणेऽर्थे काचि**दृक्**शाखान्तरे**ऽभ्यनूक्ता** ।

तामेतामृचं दर्शयति—

**कामस्तदग्रे समवर्तताधि । मनसो रेतः प्रथमं यदासीत् (१) । सतो बन्धुमसति निरविन्दन् । हृदि प्रतीष्या कवयो मनीषेति, इति ।**

**तत्त**दानीं सृष्टिकाले प्रजापतेः सकाशा**दग्रे** प्रथमं **कामः** सर्वं सृजेयमित्यभिलाष **अधि समवर्तता**ऽऽधिक्येन सम्यगुत्पन्नः । **य**द्**यदा मनसः प्रथमं रेतः** कार्य**मासीत्** तदेति[2] पूर्वत्रान्वयः । पूर्वसृष्टौ लीनायामव्यक्ते जगत्कारणे स्रक्ष्यमाणप्राणिकर्मोद्ब[ुद्धे] सति यदा प्रजापतेर्मानसं प्रथमं कार्यमुत्पन्नं तदा तत्कार्यं सृष्टिविषयेच्छारूपेण नि[ष्प]न्नमित्यर्थः । **मनीषा** मनस ईशितारः **कवयो** विद्वांसस्तत्तत्सृष्टिगताः प्रजापत[यो] **हृदि** स्वचित्ते **प्रतीष्य** प्रत्येकं निश्चित्य **सतो** विद्यमानस्य व्यक्तस्य जगतो **ब[न्धुं]** बन्धकमुत्पत्तिहेतुं काम**मसत्य**व्यक्ते कारणे **निरविन्द**न्निष्कृष्य लब्धवन्तः । केवलमेतस्यामेव सृष्टौ किंतु सर्वास्वपि सृष्टिषु प्रवृत्ताः प्रजापतयः काममेव प्र[थमं]

———

१ ख. ग. °र्मनोमध्ये । २ ग. तद्विति ।

लभन्त इत्यर्थः। इतिशब्दो मन्त्रसमाप्तौ। अनेन मन्त्रेणैकामिष्टकामुपदध्यात्। तथा च बौधायन आह—'कामस्तदग्र इति संकल्पवतीम्' इति।

यथोक्तकाममाहात्म्यवेदनं प्रशंसति—

उपैनं तदुपनमति। यत्कामो भवति। य एवं वेद, इति।

यः पुमान्काममाहात्म्यं वेद स पुमान्यत्कामो यद्विषयकामनावान्भवति तद्वस्तु, एनं वेदितारमुपनमति प्राप्नोति। देशकालयोः सामीप्यविवक्षया द्वावुपशब्दावुक्तौ।

कामानन्तरभाविनीं सृष्टिं दर्शयति—

स तपोऽतप्यत। स तपस्तप्त्वा। शरीरमधूनुत। तस्य यन्मांसमासीत्। ततोऽरुणाः केतवो वातरशना ऋषय उदतिष्ठन् (२)। ये नखाः। ते वैखानसाः। ये वालाः। ते वालखिल्याः। यो रसः। सोऽपाम्, इति।

स प्रजापतिः सृष्टिं कामयित्वा तपः कृतवान्। नात्र तप उपवासादिरूपं किंतु स्रष्टव्यं वस्तु कीदृशमिति पर्यालोचनरूपम्। अत एवाऽऽथर्वणिका आमनन्ति—'यः सर्वज्ञः सर्वविद्यस्य ज्ञानमयं तपः' इति। स प्रजापतिः, तपः पर्यालोचनरूपं कृत्वा स्रष्टव्यविशेषं निश्चित्य स्वकीयं शरीरमधूनुत कम्पितवान्। तस्य कम्पनस्य शरीरस्य यन्मांसमस्ति, तस्मान्मांसादरुणादिनामकास्त्रिविधा ऋषय उदपद्यन्त। प्रजापतेः सत्यसंकल्पत्वात्तत्संकल्पानुसारेण तत्तद्वस्तूत्पद्यते। तस्य शरीरस्य ये नखा आसंस्ते वैखानसनामका मुनयोऽभवन्। ये च शरीरे वालाः केशास्ते वालखिल्यनामका[2] मुनयोऽभवन्। यः शरीरस्य रसः सारांशः सोऽपां मध्ये कश्चित्कूर्मोऽभूदिति शेषः।

तेन कूर्मेण सह प्रजापतेः संवादं दर्शयति—

अन्तरतः कूर्मं भूतं सर्पन्तम्। तमब्रवीत्। मम वै त्वङ्मांसा। समभूत् (३)। नेत्यब्रवीत्। पूर्वमेवाहमिहाऽऽसमिति। तत्पुरुषस्य पुरुषत्वम्। स सहस्रशीर्षा पुरुषः। सहस्राक्षः सहस्रपात्। भूत्वोदतिष्ठत्। तमब्रवीत्। त्वं वै पूर्वं समभूः। त्वमिदं पूर्वः कुरुष्वेति, इति।

अन्तरतो जलस्य मध्ये कूर्माकारेण निष्पन्नं तत्रैव संचरन्तं तं पुरुषं[3] प्रजापतिर-

१ क. 'साद्रारु°'। २ क. ख. '°खिल्यानां'। ३ ख. ग. '°षं स प्र°'।

ब्रवीत्, हे कूर्म मम वै त्वङ्मांसा त्वचो मांसस्य च संबन्धिनो रसात्त्समभूस्त्वं समुत्पन्नोऽसीति। तदा स कूर्मो नेत्यब्रवीत्, यत्त्वयोक्तं तन्न त्वदीयशरीररसान्नाह-मुत्पन्नः किंतु कूर्माकारं शरीरमेव निष्पन्नम्, अहं तु सर्वगतनित्यचैतन्यस्वरूपत्वात्पू-र्वमेवेहास्मिन्स्थाने स्थितोऽस्मीत्येतत्कूर्मस्य वचनम्। यस्मात्पूर्वमासमित्युवाच तस्मात्पु-रुष इति परमात्मनो नाम संपन्नम्। एवमुक्त्वा स कूर्मशरीरवर्ती परमात्मा स्वसाम-र्थ्यप्रकटनाय विराड्रूपं कृत्वा सहस्रसंख्याकैः शिरोभिरक्षिभिः पादैश्च युक्तो भूत्वा प्रादुरभूत्। तदानीं प्रजापतिस्तं विराड्रूपं दृष्ट्वा तत्रत्यं परमात्मानमेवमब्रवीत्। भोः परमात्मन्मच्छरीरात्पूर्वं त्वमेव सर्वदा विद्यमानोऽतो मत्तः पूर्वभावी संस्त्वमेवेदं सर्वं जगत्कुरुष्वेति।

तेन प्रजापतिनैवमुक्तस्य परमेश्वरस्य सृष्टिप्रकारं दर्शयति—

स इत आदायापः (४)। अञ्जलिना पुर-स्तादुपादधात्। एवा ह्येवेति। तत आदित्य उदतिष्ठत्। सा प्राची दिक्, इति।

स परमेश्वरः स्वयमारुणकेतुकरूपः सन्नितः सृष्टेरपि पूर्वसिद्धात्सलिलमेवाऽऽसी-दित्युक्तान्महाजलात्कियतीरपः स्वकीयेनाञ्जलिना समादाय पूर्वस्यां दिशि तामबी-ष्टकामुपधत्तवान्। केन मन्त्रेण, एवा ह्येवेति, अनेन मन्त्रेण। तस्य मन्त्रस्याऽऽदित्य-परत्वं पूर्वमेव दर्शितम्। ततः समन्त्रकोपधानादादित्य उत्पन्नः। स यस्यां दिश्यु-त्पन्नः सा प्राची दिगभूत्।

अनेन प्रकारेण क्रमात्सर्वदिगुत्पत्तिं दर्शयति—

अथाऽऽरुणः केतुर्दक्षिणत उपादधात्। एवा ह्यग्न इति। ततो वा अग्निरुदतिष्ठत्। सा दक्षिणा दिक्। अथाऽऽरुणः केतुः पश्चादुपादधात्। एवा हि वायो इति। (५)। ततो वायुरुद-तिष्ठत्। सा प्रतीची दिक्। अथाऽऽरुणः केतुरुत्तरत उपाद-धात्। एवा हीन्द्रेति। ततो वा इन्द्र उदतिष्ठत्। सोदीची दिक्। अथाऽऽरुणः केतुर्मध्य उपादधात्। एवा हि पूषन्निति। ततो वै पूषोदतिष्ठत्। सेयं दिक्। (६)। अथाऽऽरुणः केतुरुप-

१ क. ग. °मेवाहमस्मि°। २ क. ख. ग. °रक्षभिः।

रिष्ठादुपादधात् । एवा हि देवा इति । ततो देवमनुष्याः पितरः । गन्धर्वाप्सरसश्चोदतिष्ठन् । सोर्ध्वा दिक्, इति ।

एतेषु मन्त्रेषु एवा एतव्याः प्राप्तव्याः कामाः । हिशब्दः प्रसिद्धौ । सर्वेषां देवानां कामप्रदत्वेन तत्कामरूपत्वं प्रसिद्धमिति पूर्वं व्याख्यातम् । एवाहीतिशब्द आगच्छेत्येतस्मिन्नर्थे वा व्याख्येयः । सेयमित्यधोदिगुच्यते । अन्यत्पूर्ववद्व्याख्येयम् ।

देवसृष्टिमभिधायासुरसृष्टिं दर्शयति—

या विप्रुषो वि परापतन् । ताभ्योऽसुरा रक्षाꣳसि पिशाचाश्चोदतिष्ठन् । तस्मात्ते पराभवन् । विप्रुड्भ्यो हि ते समभवन्, इति ।

अञ्जलिनोपधीयमानानामपां संबन्धिन्यो या विप्रुषो बिन्दवो विविधा भूत्वा तस्मादुपधानप्रदेशाद्बहिः परापतंस्ताभ्यो विप्रुड्भ्योऽसुरादय उत्पन्नाः । ते चावान्तर जातिभेदात्त्रिविधाः । यस्मात्ते पराभवन्तीभ्यो विप्रुड्भ्य उत्पन्नास्तस्मात्पराभूताः, अधमाः सन्तो विनष्टा इत्यर्थः ।

अपां सकाशाद्येयं सृष्टिः प्रपञ्चिता, तस्याः संग्रहरूपामृचमवतारयति—

तदेषाऽभ्यनूक्ता (७) इति ।

तत्तस्मिन्नद्भ्यः सर्वं समुत्पन्नमित्यस्मिन्नर्थे काचिदियमृक्शाखान्तरेऽभ्यनूक्ता । तामेतामृचं दर्शयति —

आपो ह यद्बृहतीर्गर्भमायन् । दक्षं दधाना जनयन्तीः स्वयंभुम् । तत इमेऽध्यसृज्यन्त सर्गाः । अद्भ्यो वा इदꣳ समभूत् । तस्मादिदꣳ सर्वं ब्रह्म स्वयंभ्विति, इति ।

अत्राद्भ्यो वा इति वाक्यं ब्राह्मणरूपमपि तृतीयपादतात्पर्यप्रदर्शनाय मन्त्रमध्ये समाम्नातम् । बृहतीः प्रौढा आपो यं गर्भं जगद्रूप मायन्प्राप्तवत्यः । कीदृश्य आपः । दक्षं वृद्धिशीलं गर्भं दधाना धारयन्त्यः, स्वयंभुं कूर्मरूपं परमात्मानं जनयन्तीर्जनयितुकामाः, ततस्तस्माद्विराड्रूपादपां गर्भादिमे भूरादयः सर्गाः सृज्यमाना लोका अध्यसृज्यन्त, सृष्टचर्हानेतान्सृष्टवानित्यर्थः । अद्भ्य एवेदं सर्वं जगदुत्पन्नमिति कृत्वा पादत्रयेणोक्तोऽर्थो युक्त एव । यस्मात्कारणात्कूर्मरूपं ब्रह्मैव सर्वं सृष्टवांस्तस्मात्कारणादिदं सर्वं जगत्स्वयंभु स्वतःसिद्धं ब्रह्मैव । इति अनेन मन्त्रेणैकामिष्टकामुपदध्यात् । तथाच बौधायन आह—"आपो ह यदित्योघवतीम्" इति ।

कार्यत्वं जगतो युक्त्योपपादयति—

तस्मादिदꣳ सर्वꣳ शिथिलमिवाध्रुवमिवाभवत्, इति ।

यस्माच्छिथिलाभ्योऽद्भ्यो जातम्, आपो हि शिथिला न तु पाषाणवद्दृढाः, तस्मात्कारणादिदं सर्वं जगच्छिथिलमिव दृश्यते । तस्यैव व्याख्यानमध्रुवमिवेति । अनित्यत्वमध्रुवत्वम् ।

अथास्य जगतो दार्ढ्योपायं दर्शयति—

प्रजापतिर्वाव तत् । आत्मनाऽऽत्मानं
विधाय । तदेवानुप्राविशत्, इति ।

केवलकार्यत्वे[1] समुत्पन्नं शिथिलं भवेन्न[2] तु तदस्ति । किंतु तज्जगत्प्रजापतिरेव । यथा घटे मृदंशः पृथुबुध्नोदराकारांशश्चेत्यंशद्वयमेवं जगत्यपि सच्चिदानन्दरूपप्रजाप[3]त्यंशो नामरूपांशश्चेत्यंशद्वयम्[4], तत्र नामरूपयोरेव[5] कार्यत्वेन शैथिल्येऽपि सच्चिदानन्दप्रजापत्यंशस्य दार्ढ्यमस्ति । स हि प्रजापतिरात्मना साधनान्तरनिरपेक्षेण स्वसामर्थ्येनाऽऽत्मानं स्वस्वरूपं जगदाकारेण विधाय तदेव जगदनुसृत्य शरीरेषु स्वयं चिद्रूपेण प्राविशत् ।

अस्मिन्नर्थे ऋचमुदाहरति—

तदेषाऽभ्यनूक्ता (८), इति ।

तत्तस्मिन्स्वयमेव सृष्ट्वा प्रविष्ट इत्यस्मिन्नर्थे काचिदृक्शाखान्तरेऽभ्यनूक्ता ।

तामेतामृचं दर्शयति—

विधाय लोकान्विधाय भूतानि । विधाय सर्वाः
प्रदिशो दिशश्च । प्रजापतिः प्रथमजा
ऋतस्य । आत्मनाऽऽत्मानमभिसंविवेशेति, इति ।

ऋतस्य सत्यस्य परब्रह्मणः सकाशात्प्रथममुत्पन्नः प्रजापतिर्लोकान्भूरादीन्विधाय भूतानि प्राणिनश्च विधाय प्राच्याद्या मुख्यदिश आग्नेय्याद्या विदिशश्च विधायाऽऽत्मना स्वकीयेन चैतन्येनाऽऽत्मानं स्वशरीररूपं जगदभितः सम्यक्प्रविवेश । इत्यनेन मन्त्रेण काचिदिष्टकोपधेया । तथाच बौधायन आह—'विधाय लोकानिति स्तम्भनवतीम्, इति ।

१ ख. ग. 'र्यत्वं स° । २ ख. ग. भवन्न । ३ क. 'पप्राजा° । ४ क. 'पत्योऽंशो । ५ ख. ग. 'योरन° ।

यथोक्तसृष्टिवेदनं प्रशंसति—

सर्वमेवेदमाप्त्वा । सर्वमवरुध्य । तदेवा-
नुप्रविशति । य एवं वेद ( ९ ), इति ॥

आसीदितिष्ठन्नभूदपो वायो इति सेयं दिगभ्यनूक्ताऽभ्यनूक्ताऽष्टौ च ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके प्रथमप्रपाठके
त्रयोविंशोऽनुवाकः ॥ २३ ॥

यः पुमानेवं प्रजापतिसृष्टिप्रकारं विजानाति स पुमान्सर्वमेव जगति विद्यमानमिदं फलं प्राप्य तच्च सर्वं वशीकृत्य तदेव जगदनुप्रविशति । सर्वात्मको भवतीत्यर्थः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरी-
यारण्यकभाष्ये प्रथमप्रपाठके त्रयोविंशोऽनुवाकः ॥ २३ ॥

---

अथ प्रथमे चतुर्विंशोऽनुवाकः ।

---

अतीतेनानुवाकद्वयेनापां प्रशंसामुक्त्वाऽस्मिन्ननुवाकेऽब्दीष्टकानामनुष्ठानविशेष उच्यते । तत्राऽऽदौ सामान्येनापां ग्रहणं विधत्ते—

चतुष्टय्य आपो गृह्णाति । चत्वारि वा अपाꣳ रूपाणि ।
मेघो विद्युत् । स्तनयित्नुर्वृष्टिः । तान्येवावरुन्धे, इति ।

उपधानार्थं चतुर्विधा आपो ग्रहीतव्याः, अपां रूपाणि[२] निरूपकाणि[३] वस्तूनि मेघादीनि चत्वारि एव । ततः स्तनयित्नुशब्देन गर्जनं विवक्षितम् । अपां चतुर्विधत्वेन मेघादिचतुष्टयमपि स्वाधीनं भवति ।

तेषु चतुर्विधेषु जलेषु प्रथमं जलविशेषं विधत्ते—

आतपति वर्ष्या गृह्णाति । ताः पुरस्तादुपदधाति । एता
वै ब्रह्मवर्चस्या आपः । मुखत एव ब्रह्मवर्चसमवरुन्धे ।
तस्मान्मुखतो ब्रह्मवर्चसितरः ( १ ), इति ।

आतपयुक्ते प्रदेशे वर्षेण संपन्ना या आपस्ताः पात्रेण केनचिद्गृह्णीयात्, ताश्च गृहीताश्चयनक्षेत्रे पूर्वस्यां दिश्युपदध्यात् । एता आतपयुक्ते देशे वृष्टा आप एव

---

१ ख. ग. °गादिति । २ क. °णि चतुर्विधानि । ३ क. ख. °कारि° ।

प्रकाशोपेतत्वाद्ब्रह्मवर्चसयोग्याः, तासां पुरस्तादुपधानेनाग्नेर्मुख एव ब्रह्मवर्चसमवरुद्धं भवति। यस्मादेवं तस्माल्लोकेऽपि वेदशास्त्रपाठरूपस्य ब्रह्मवर्चसस्य जिह्वावर्तित्वात्पुमान्मुखप्रदेश एवातिशयेन ब्रह्मवर्चसयुक्तो भवति।

द्वितीयं जलविशेषं विधत्ते—

**कूप्या गृह्णाति। ता दक्षिणत उपदधाति। एता वै तेजस्विनीरापः। तेज एवास्य दक्षिणतो दधाति। तस्माद्दक्षिणोऽर्धस्तेजस्वितरः, इति।**

कूपे भवाः कूप्याः। तासां बहुविधगृहकृत्योपयोगित्वेन तेजस्विनीत्वम्[1]। तासां दक्षिणदिश्युपधाने सत्यग्नेर्दक्षिणभागे तेजः संपादयति। यस्मादेवं तस्माल्लोकेऽपि शरीरे दक्षिणभागोऽतिशयेन तेजस्वी शक्तिमान्भवति।

तृतीयं जलविशेषं विधत्ते—

**स्थावरा गृह्णाति। ताः पश्चादुपदधाति। प्रतिष्ठिता वै स्थावराः। पश्चादेव प्रतितिष्ठति, इति।**

नदीषु क्वचिदगाधो ह्रदो दृश्यते, तत्राऽऽपो न प्रवहन्ति किंतु स्थिरावस्थितिशीलास्तासां प्रतिष्ठितस्वभावानां पश्चिमदिश्युपधानेन स्वकीयानां सर्वेषां प्रतिष्ठां कृत्वा पश्चात्स्वस्य प्रतिष्ठां करोति।

चतुर्थं जलविशेषं विधत्ते—

**वहन्तीर्गृह्णाति (२)। ता उत्तरत उपदधाति। ओजसा वा एता वहन्तीरिवोद्गतीरिव आकूजतीरिव धावन्तीः। ओज एवास्योत्तरतो दधाति। तस्मादुत्तरोऽर्ध ओजस्वितरः, इति।**

नद्यां प्रवहन्त्यो या आपस्ता गृहीत्वोत्तरस्यां दिश्युपदध्यात्। एता आपो यदा धावन्ति तदानीमोजसा स्वकीयेन बलेन प्रवाहमध्यपतितान्काष्ठादिपदार्थान्वहन्तीरिवाऽऽकर्षयन्त्य[2] इव भवन्ति, उद्गतीरिव पाषाणादिषु लग्नाः स्वबिन्दुभिरूर्ध्वं गच्छन्त्य इव, आकूजतीरिव तत्र तत्र निम्नोन्नतप्रदेशेषु संचाराच्छब्दं कुर्वत्य इव भवन्ति। तस्यैतस्य वहनस्योद्गमनस्याऽऽकूजनस्य चौज एव कारणम्, अत उत्तरस्यां दिश्योज एवाऽऽस्थापयति। यस्मादेवं तस्माल्लोकेऽपि शरीरस्योत्तरो भाग ओज-

---

१ ग. °स्विनीस्ता द°। २ ग. °यन्ति। य। क. °न स्वयमपि स्व°।

**स्वितरः** । पूजाहोमादिकार्येषु दक्षिणहस्तस्य तेजस्वित्वं पूर्वमुक्तं पादप्रक्षालनादिषु वामहस्तस्यौजस्वित्वमत्रोच्यते । चतुष्टय्य इत्यस्याः संख्याया उपलक्षणत्वात्षड्विधा आपो द्रष्टव्याः ।

तत्र पञ्चमं जलविशेषं विधत्ते—

**संभार्या गृह्णाति । ता मध्य उपदधाति । इयं वै संभार्याः । अस्यामेव प्रतितिष्ठति, इति ।**

गृहे घटेषु संपादनीया आपः **संभार्याः**, ता गृहीत्वा चतसृणां दिशां **मध्य** उपदध्यात्[1] । संभार्याणां घटेष्ववस्थितत्वेन भूमिसदृशत्वादुपधानेन भूम्यामेव प्रतिष्ठितो भवति ।

षष्ठं जलविशेषं विधत्ते—

**पल्वल्या गृह्णाति । ता उपरिष्टादुपादधाति ( ३ ) । असौ वै पल्वल्याः । अमुष्यामेव प्रतितिष्ठति, इति ।**

यत्र कदाचिदपि जलशोषो नास्ति द्रवमात्रानुवृत्तिः सर्वदा दृश्यते तत्**पल्वलं** तत्रोत्पन्ना अपो गृहीत्वा मध्ये स्थापितानामिष्टकानामुपरिष्टादुपदध्यात् । पल्वल्यानां कूपादिवत्खननमन्तरेण भूमेरुपर्येव वर्तनात्तदुपधानेन द्युलोके प्रतिष्ठितो भवति ।

यथोक्तं दिक्षूपधानं प्रशंसति—

**दिक्षूपदधाति । दिक्षु वा आपः । अन्नं वा आपः । अद्भ्यो वा अन्नं जायते । यदेवाद्भ्योऽन्नं जायते । तदवरुन्धे, इति ।**

दिक्ष्वपां जातत्वाददभ्यश्चान्नोत्पत्तेर्दिक्षूपधानेनान्नं प्राप्नोति ।

अस्य चितस्याग्नेरारुणकेतुकनाम निर्वक्ति—

**तं वा एतमरुणाः केतवो वातरशना ऋषयोऽचिन्वन् । तस्मादारुणकेतुकः, इति ।**

अरुणादिभिस्त्रिविधैर्मुनिभिश्चितत्वात्तत्संबन्धेनाऽऽरुणकेतुकत्वम् । यद्यपि वातरशनैरप्ययं चितस्तथाऽप्यरुणानां केतूनां च मुख्यत्वात्तन्नाम्नैव व्यवहारः ।

उक्तार्थप्रतिपादिकामृचमवतारयति—

**तदेषाऽभ्यनूक्ता, इति ।**

तत्तस्मिन्नारुणकेतुकसंबन्धोऽयमग्निरित्यस्मिन्नर्थे काचिदृक्शाखान्तरे पठिता ।

---

१ क. गृहघ° ।

ध्यात् । तत उपर्यपि पूर्ववत्पत्रैर्दण्डैः कृत्स्नपुष्करैश्च च्छादयित्वा पुनरप्यवीष्टका उपदध्यात् । एवं पञ्चकक्ष्याभिरुत्तरवेद्यां पूरितायां तत्र पञ्च चितयः संपद्यन्ते । तत्रोर्ध्वैः काष्ठैर्मञ्चकं कृत्वा तस्योपरि पुरीषं प्रसार्य पुरीषस्योपर्यग्निं प्रणीयोपसमाधाय तस्याग्नेश्चतुर्दिक्षु तत्तन्मन्त्रैरवीष्टका उपदध्यात् । एवं कृतेऽग्निः पञ्चचितियुक्तो भवति । आहवनीयगार्हपत्यदक्षिणाग्निसभ्यावसथ्यरूपेण पञ्चसंख्यायोगात्पाङ्क्तोऽग्निः सर्वोऽपि चितो भवति ।

द्विचितौ विशेषं विधत्ते—

लोकंपृणया द्वितीयामुपदधाति । पञ्चपदा वै
विराट् । तस्या वा इयं पादः । अन्तरिक्षं पादः ।
द्यौः पादः । दिशः पादः । परोरजाः पादः, इति ।

येयं द्वितीया चितिः सेयं लोकंपृणयैवेष्टकोपधेया, सर्वपूरकत्वादियं लोकंपृणा विराड्देहरूपी(पा) । सा च विराण्मूर्तिः पञ्चपादोपेता । लोकत्रयं च दिशश्च पादचतुष्टयम् । रजोगुणात्मकस्य संसारस्य परस्ताद्ब्रह्म योऽयं चिदात्मा वर्तते परोरजाः, स च पञ्चमः पादः, एवं प्रशस्ता लोकंपृणा ।

तच्चवेदनं प्रशंसति—

विराज्येव प्रतितिष्ठति । य एतमग्निं
चिनुते । य उ चैनमेवं वेद ( ३ ), इति ॥
अस्ति पृणान्तरिक्षं पादः षट्च ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके प्रथमप्रपाठके
पञ्चविंशोऽनुवाकः ॥ २५ ॥

विराज्येवान्न एव, विराड्देह एव वा ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्ये पञ्चविंशोऽनुवाकः ॥ २५ ॥

---

१ ख. ग. °कक्ष्याभि° । २ ग. °यं चितद्वश° । ३ ख. ग. °तेऽप° ।

अथ प्रथमे षड्विंशोऽनुवाकः ।

पूर्वानुवाके पुष्करपर्णाद्युपधानमुक्तम् । इह फलविशेषा व्रतविशेषाश्चोच्यन्ते । पूर्वं विहितमेवार्थं पुनर्विशेषकथनायाऽऽदावनुवदति—

**अग्निं प्रणीयोपसमाधाय । तमभित एता अबीष्टका उपदधाति । अग्निहोत्रे दर्शपूर्णमासयोः । पशुबन्धे चातुर्मास्येषु । अथो आहुः । सर्वेषु यज्ञक्रतुष्विति, इति ।**

एतत्सर्वं योऽपां पुष्पं वेदेत्यनुवाके व्याख्यातम् ।

अस्याऽऽरुणकेतुकस्य स्वातन्त्र्येण क्रत्वङ्गत्वमाक्षेपसमाधानाभ्यामुपपादयितुं मतद्वयमुपन्यस्यति—

**अथ ह स्माऽऽहारुणः स्वायंभुवः । सावित्रः सर्वोऽग्निरित्यननुषङ्गं मन्यामहे । नाना वा एतेषां वीर्याणि, इति ।**

स्वयंभुवः पुत्रः कश्चिदरुणनामको मुनिरेवमाह स्म । काठकेषु यो यो[2] विहितोऽग्निः सावित्रादिरारुणकेतुकान्तः स सर्वोऽपि सावित्र एव[3], उत्तरोत्तरेषु पूर्वपूर्वानुषङ्गस्य विद्यमानत्वात् । यो नाचिकेतः स सावित्रपूर्वक एवानुष्ठेयः । चातुर्होत्री(त्रि)यस्तदुभयपूर्वकः । वैश्वसृजस्तत्त्रितयपूर्वकः । आरुणकेतुकस्तच्चतुष्टयपूर्वकः । एवमनुषङ्गे सत्याऽऽरुणकेतुकस्येतरनिर(सा)पेक्षस्य स्वातन्त्र्यं नास्ति । सावित्रस्य तु तद्विद्यते । तस्मात्सर्वेष्वनुषक्तत्वात्सर्वोऽपि सावित्र इत्येव व्यवहार्यः । अतस्तस्यैव क्रत्वङ्गत्वं न त्वारुणकेतुकस्य (स्या)स्वतन्त्रस्येत्यरुणस्य मुनेर्मतं तदिदं दूष्यते । ब्रह्मवादिनो वदन्ति **सावित्रः सर्वोऽग्निरित्यननुषङ्गं मन्यामहे[4]** इति, न कोऽप्यग्निरितरत्रानुषज्यते[5] । **एतेषामग्नीनां वीर्याणि** फलानि **नाना** पृथगुक्तान्येव । तानि च योऽपां पुष्पमित्यनुवाके संवत्सरं प्रत्यक्षेणामुमादित्यं प्रत्यक्षेणेत्यादिना निरूपितानि ।

तदेतत्फलनानात्वं प्रपञ्चेन प्रदर्श्यते[6] —

**कमग्निं चिनुते (१) । सत्रियमग्निं चिन्वानः । कमग्निं चिनुते । सावित्रमग्निं चिन्वानः । कमग्निं चिनुते । नाचिकेतमग्निं चिन्वानः । कमग्निं चिनुते ।**

---

१ क. पूर्वेवि॰ । २ ख. ग योऽयं वि॰ । ३ क. ॰वमुत्त॰ । ४ ग. ॰महे, न । ५ क. ॰ज्जते । ए॰ । ६ ख. ग. प्रदर्शयति ।

चातुर्होत्रियमग्निं चिन्वानः । कमग्निं चिनुते ।
वैश्वसृजमग्निं चिन्वानः । कमग्निं चिनुते (२) ।
उपानुवाक्यमाशुमग्निं चिन्वानः । कमग्निं चिनुते ।
इममारुणकेतुकमग्निं चिन्वान इति, इति ।

द्वादशाहादिसत्राङ्गत्वेन चीयमानो योऽयं महाग्निः सोऽयं सत्रिय, तं चिन्वानः पुमान्कमग्निं किंफलकमग्निं चिनुत इत्येवं भो अरुणाख्यमुने त्वं विचारय। संवत्सरदेवताप्राप्तिस्तस्य फलम्, इतरेषां त्वन्यदेव पृथक्पृथक्फलमादित्यप्राप्त्यादिरूपम्, अतो नैकफलस्य संभावनाऽप्यस्तीति किंशब्दस्याभिप्रायः । एवमुत्तरत्रापि योज्यम् । उपानुवाक्यमाशुमग्निमित्यत्र यदेकेनेत्याद्युपानुवाक्यकाण्डोक्तो महानग्निर्विवक्षितः । यद्यसौ सत्रियमिति वाक्येनैव गतार्थस्तर्हि शाखान्तरप्रसिद्धं किंचिदन्यन्तरमस्तु । तदेव फलनानात्वमतिस्पष्टमिति ब्रह्मवादिनामभिप्रायः ।

सावित्राग्नेरनुषङ्गपक्षे बाधं दर्शयति—

वृषा वा अग्निः । वृषाणौ सꣳस्फालयेत् ।
हन्येतास्य यज्ञः । तस्मान्नानुषज्यः, इति ।

योऽयमग्न्युपलक्षितोऽग्निचित्सोऽयं वृषा सेक्ता रेतःसेचनेन प्रजामुत्पादयितुं समर्थः, तादृशो यद्यनुषङ्गं कुर्यात्तदानीमस्याग्निचितो वृषणद्वयं कश्चिद्वैरी संस्फालयेत्पीडयेत् । अस्य यज्ञोऽपि विनश्येत् । तस्मात्सावित्राग्निरितरत्र नानुषञ्जनीयः, स्वतन्त्रा एवैते सर्वेऽग्नयः । तस्मादारुणकेतुकस्य स्वातन्त्र्येणैव क्रत्वङ्गत्वं युक्तमित्यर्थः ।

क्रतुविशेषे तत्संबन्धं विधत्ते—

सोत्तरवेदिषु क्रतुषु चिन्वीत । उत्तरवेद्याꣳ ह्यग्निश्चीयते, इति ।

उत्तरवेदिसहिता ये क्रतवः पशुबन्धादयस्तेष्वेवाऽऽरुणकेतुकमग्निं चिन्वीत नतूत्तरवेदिरहितेष्वग्निहोत्रादिषु । यस्मादयमग्निरुत्तरवेदिस्थाने चीयते तस्मात्तद्रहिते[2] तच्चयनं न युक्तम् । एवं च सत्यस्मादग्निनिषेधात्पूर्वोक्तादग्निहोत्रे दर्शपूर्णमासयोरित्यादि विधानाच्चाग्निहोत्रादावारुणकेतुकस्य विकल्पो द्रष्टव्यः ।

अथास्य चयनस्य काम्यप्रयोगाः । तत्रैकं काम्यं दर्शयति—

प्रजाकामश्चिन्वीत (३) । प्राजापत्यो वा एषोऽग्निः ।

१ क. यद्येके° । २ ख. ग. °हिमं त° । ३ ख. ग. °वं स° ।

प्राजापत्याः प्रजाः । प्रजावान्भवति । य एवं वेद, इति ।

अग्नेः प्रजानां च प्रजापतिसृज्यत्वात्प्राजापत्यत्वं तेन साम्येन प्रजाफलकत्वमग्नेः ।

अथ द्वितीयं काम्यं दर्शयति—

पशुकामश्चिन्वीत संज्ञानं वा एतत्पशूनाम् ।
यदापः । पशूनामेव संज्ञानेऽग्निं चिनुते ।
पशुमान्भवति । य एवं वेद (४), इति ।

ये तृषार्ताः पशवो यत्र क्वाप्यपोऽन्विष्य जानन्ति तस्मादापः पशूनां सम्यग्ज्ञान-साधनमतोऽप्सु चयने सति पशूनां ज्ञानसाधन एवाग्निश्चितो भवति ।

अथ तृतीयं दर्शयति—

वृष्टिकामश्चिन्वीत । आपो वै वृष्टिः । पर्जन्यो
वर्षुको भवति । य एवं वेद, इति ।

चतुर्थं दर्शयति—

आमयावी चिन्वीत । आपो वै भेषजम् ।
भेषजमेवास्मै करोति । सर्वमायुरेति, इति ।

तापशान्तिकरत्वादपां भेषजत्वम् ।

पञ्चमं दर्शयति—

अभिचरश्चिन्वीत । वज्रो वा आपः (५) । वज्र-
मेव भ्रातृव्येभ्यः प्रहरति । स्तृणुत एनम्, इति ।

उपरिष्टात्ता आपो वज्री भूत्वेत्येवं वक्ष्यते तस्मादपां वज्रत्वम् । अत्रापामेवोपधेय-त्वात्सर्वतः फलसाधनत्वेनापामेव प्रशंसनम् ।

षष्ठसप्तमाष्टमनवमफलानि दर्शयति—

तेजस्कामो यशस्कामः । ब्रह्मवर्चसकामः
स्वर्गकामश्चिन्वीत । एतावद्वावास्ति याव-
देतत् । यावदेवास्ति । तदवरुन्धे, इति ।

एतत्प्रजापश्वादिकं स्वर्गान्तं यावत्फलमुक्तमेतावदेव लोकेऽपि विद्यमानमुत्तमं फलम् । अतो यावदुत्तमं फलमस्ति तत्सर्वमनेन चयनेन प्राप्नोति ।

---

१ ख. ग. °तिना सृ° । २ ख ग. °मेवोपशं° ।

अथाऽऽरुणकेतुकाग्निचितो नियमविशेषं विधत्ते—

तस्यैतद्व्रतम् । वर्षति न धावेत् (६)। अमृतं वा आपः । अमृतस्यानन्तरित्यै, इति ।

पर्जन्ये वर्षति सति यदा मार्गे गच्छति तदा क्लेदनभीत्या धावनं न कुर्यात् । तत्र करणे चामृतरूपाणामपां परित्यागेन स्वर्गसुखरूपममृतमन्तरितं भवेत्, तन्मा भूदिति न धावेत् ।

नियमान्तराणि विधत्ते—

नाप्सु मूत्रपुरीषं कुर्यात् । न निष्ठीवेत् । न विवसनः स्नायात् । गुह्यो वा एषोऽग्निः । एतस्याग्नेरनतिदाहाय, इति ।

एष आरुणकेतुकोऽग्निरबीष्टकाभिर्निष्पाद्यत्वादप्सु गूढो वर्तते । तादृशो मूत्रादिकारिणमतिशयेन दहति । स दाहो मा भूदिति मूत्रादिकं न कुर्यात् । पुरुषार्थत्वेन शास्त्रेषु निषिद्धस्याप्यत्र पुनर्निषेधः श्रौतप्रायश्चित्तार्थः ।

नियमान्तरं विधत्ते—

न पुष्करपर्णानि हिरण्यं वाऽधितिष्ठेत् । एतस्याग्नेरनभ्यारोहाय, इति ।

पुष्करपर्णस्य हिरण्यस्य वा पादेनाऽऽक्रमणे सति तमग्निमारूढवान्भवेत् । अतस्तदुभयं नाधितिष्ठेत् ।

नियमान्तरं विधत्ते—

न कूर्मस्याश्नीयात् । नोदकस्याघातुकान्येनमोदकानि भवन्ति । अघातुका आपः । य एतमग्निं चिनुते । य उ चैनमेवं वेद (७), इति ।

चिनुते चिनुते प्रजाकामाश्चिन्वीत य एवं वेदाऽऽपो धावेदश्नीयाच्चत्वारि च ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके प्रथमप्रपाठके षड्विंशोऽनुवाकः ॥ २६ ॥

---

१ ख. °चितो नि° । २ ग. °त्तार्थम् । नि° ।

कूर्मस्याङ्गं किंचिदपि न भुञ्जीत। उदकशब्देन तत्रत्यो मीनादिरुपलक्ष्यते, तदीयमप्यङ्गं नाश्नीयात्। य एतमारुणकेतुकमग्निं चिनुते यश्चैवं वेद तमेनं प्रत्योदःान्युदकवर्तीनि मीनादीनि, अघातुकान्यहिंसकानि भवन्ति। आपोऽप्यघातुकाः। ःदकमरणं न भवेदित्यर्थः॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्ये प्रथमप्रपाठके षड्विंशोऽनुवाकः॥ २६॥

---

अथ प्रथमे सप्तविंशोऽनुवाकः।

---

कल्पः—"इमा नुकमिति + चतस्रः" इति। तत्र प्रथमामाह—

इमा नुकं भुवना सीषधेम। इन्द्रश्च विश्वे च देवाः, इति।

इन्द्रश्च विश्वे देवाश्च वयं चेमा भुवनानि नुकं सीषधेम। सुखनामसु नुकमिति ठितं सुखं यथा भवति तथा साधयाम।

अथ द्वितीयामाह—

यज्ञं च नस्तन्वं च प्रजां च।
आदित्यैरिन्द्रः सह सीषधातु, इति।

अयमिन्द्र आदित्यैः सह नोऽस्माकं यज्ञं शरीरं प्रजां च साधयतु।

अथ तृतीयामाह—

आदित्यैरिन्द्रः सगणो मरुद्भिः।
अस्माकं भूत्वविता तनूनाम्, इति।

आदित्यैर्मरुद्भिश्च युक्तत्वात्सगणोऽयमिन्द्रोऽस्माकं तनूनामविता भूतु रक्षिता वतु।

कल्पः—"आप्लवस्वेति सप्तदश क्षपण्यः" इति। तत्र प्रथमामाह—

आप्लवस्व प्रप्लवस्व। आण्डी भव ज मा मुहुः। सुखादीं
दुःखनिधनाम्। प्रतिमुञ्चस्व स्वां पुरम् (१), इति।

जशब्देन जन्मवान्यजमान उच्यते। आप्लवनमागमनं जन्म, प्रप्लवनं प्रायणम्, हे

---

+ अत्र तिस्र इत्यपेक्षितमुत्तरत्र त्रिसृणामेकत्वात्। आदर्शपुस्तकेषु तु चतस्र इत्येव उपलभ्यते।

**यजमान** जन्मोपेत मा मुहुराप्लवस्व पुनः पुनर्जन्मलक्षणमागमनं मा कुरु **मुहुर्मा प्लुवस्व** पुनः पुनर्मरणलक्षणं प्रप्लवनं मा कुरु । **मा मुहुराण्डी भव** आण्डो ब्रह्माण्डमध्य (भव) इत्यर्थः । आण्डीत्यभूततद्भाव उच्यते । पूर्वमनाण्ड इदानीमाण्डीभव त (भूतस्त) स्य निषेधो माशब्देनोच्यते, पुनः पुनर्ब्रह्माण्डवर्तित्वं तव मा भूदित्यर्थः । शेषं स्पष्टार्थम् ।

अथ द्वितीयामाह—

**मरीचयः स्वायंभुवाः । ये शरीराण्यकल्पयन् ।**
**ते ते देहं कल्पयन्तु । मा च ते ख्या स्म तीरिषत्, इति ।**

**स्वायंभुवाः** स्वयंभूः सवितृमण्डलवर्ती परमात्मा तस्येमे स्वायंभुवाः, ये मरीचयो रश्मयः शरीराण्यात्मोपासकदेहानकल्पयन्कृतवन्तस्ते मरीचयस्ते तव देहं कल्पयन्तु जनयन्तु स्मशब्देनाऽऽवश्यकत्वं द्योतयति । संसारोत्तरणविषया न ते ख्यातिः सर्वथा विनश्यत्वित्यर्थः ।

अथ तृतीयामाह—

**उत्तिष्ठत मा स्वप्न । अग्निमिच्छध्वं भारताः ।**
**राज्ञः सोमस्य तृप्तासः । सूर्येण सयुजोषसः, इति ।**

हे ऋत्विजो यूयमुत्तिष्ठतोत्थिता भवत, उत्साहं कुरुतेत्यर्थः । **मा स्वप्न** स्वप्नं मा कुरुत, अलसा मा भूतेत्यर्थः । **भारता** हविरादिभरणशीलाः सन्तोऽग्निमारुणकेतुकमिच्छध्वम् । कीदृशा ऋत्विजः । **राज्ञो** राजमानस्य **सोमस्य** पानेन तृप्तासस्तृप्ताः, **सूर्येण सयुजोषसः** समानप्रीतयः । यद्यप्येवंविधा[2] मन्त्रा[3] अनुष्ठेयार्थस्येष्टकोपधानस्य प्रकाशका न भवन्ति तथाऽप्येतदर्थानुस्मरणेन कश्चिददृष्टातिशयो द्रष्टव्यः ।

अथ चतुर्थ्याः प्रतीकं दर्शयति—

**युवा सुवासाः, इति ।**

सोऽयं मन्त्रोऽञ्जन्ति त्वामध्वरे देवयन्त इत्यनुवाके व्याख्यातः ।

अथ पञ्चमीमाह—

**अष्टाचक्रा नवद्वारा (२) । देवानां पूरयोध्या । तस्या[4] हिरण्मयः कोशः ।**

---

१ क. ग. तृता: । २ ख ग. °विधो म° । ३ ख. ग. मन्त्रोऽनु° । ४ ख. ग. °र न । ५ ख. ग. भवति ।

स्वर्गो लोको ज्योतिषाऽऽवृतः, इति ।

पूरिति शरीरमुच्यते । देवानामिन्द्रादीनां पूरष्टाचक्रा । चक्रवदावरणभूतास्त्वगसृङ्मांसमेदोस्थिमज्जाशुक्रौजोरूपा अष्टौ धातवो यस्याः सेयमष्टाचक्रा । शिरोवर्तिभिः सप्तभिर्द्वारैरधोवर्तिभ्यां द्वाराभ्यामुपेता नवद्वारा । अयोध्या कर्मगतिमन्तरेण केनापि प्रहर्तुमशक्या । तस्यां पुरि हिरण्मयः सुवर्णनिर्मितपदार्थसदृशः कोशोऽवकाशरूपः स्वर्गः सुखमयो लोकः स्थानविशेषो ज्योतिषा भासकेन जीवचैतन्येनाऽऽवृतः परिवेष्टितो वर्तते ।

अथ षष्ठीमाह—

यो वै तां ब्रह्मणो वेद । अमृतेनाऽऽवृतां पुरीम् ।
तस्मै ब्रह्म च ब्रह्मा च । आयुः कीर्तिं प्रजां ददुः, इति ।

ब्रह्मणः सत्यं ज्ञानमनन्तमित्यादिश्रुतिप्रतिपादितस्य वस्तुनः संबन्धिनीममृतेन परमानन्देनाऽऽवृतां तां पुरीं यो वै यः कोऽपि पुमान्वेद तस्मै विदुषे ब्रह्म च परमात्माऽपि ब्रह्मा च प्रजापतिरपि, चकाराभ्यामन्येऽपि सर्वे देवा आयुरादिकं प्रयच्छन्ति ।

अथ सप्तमीमाह—

विभ्राजमानाꣳ हरिणीम् । यशसा संपरीवृताम् । पुरꣳ
हिरण्मयीं ब्रह्मा (३) । विवेशापराजिता, इति ।

ब्रह्मा प्रजापतिः पुरं शरीरं विवेश प्रविष्टवान् । कीदृशीं पुरम्, विभ्राजमानां विशेषेण राजमानाम्, हरिणीं पापहरणशीलाम्, यशसा जगत्स्रष्टृत्वलक्षणया कीर्त्या संपरीवृतां सम्यक्परिवेष्टिताम्, हिरण्मयीं सुवर्णनिर्मिताम्, [अपराजिता] कदाचिदपि पराजयरहिताम्[४] ।

अथाष्टमीमाह—

पराङेत्यज्यामयी । पराङेत्यनाशकी । इह
चामुत्र चान्वेति । विद्वान्देवासुरानुभयान्, इति ।

विद्वान्परब्रह्मतत्त्ववित्, पराङ्पुनरावृत्तिरहितः, एति ब्रह्मतत्त्वं प्राप्नोति । कीदृशो विद्वान् । अज्यामयी ज्या वयोहानिः, आमयो व्याधिः, तद्वान्ज्यामयी तदुभयराहित्यादयमज्यामयी, नाशकोऽपमृत्युर्बन्धकं कर्म वा तद्योगान्नाशकी तद्राहि-

---

१ ख. °ज्जाज्ञाख्योजो° । २ क. ख. °तां पु° । ३ क. ख. °नां ह° । ४ क. °हिता । अ° ।

त्यादनाशकी । देहतादात्म्यभ्रमाभावाद्व्योहानिव्याध्यपमृत्युरहितः पुनरावृत्तिशून्यः सन्ब्रह्म प्राप्नोति । इह चामुत्र च लोकद्वयेऽपि **देवासुरानुभयानन्वेति**, अनुगच्छति, सर्वात्मको भवतीत्यर्थः ।

अथ नवमीमाह—

> यत्कुमारी मन्द्रयते । यद्योषिद्यत्पतिव्रता । अरिष्टं
> यत्किंच क्रियते । अग्निस्तदनुवेधति, इति ।

**कुमारी** विवाहरहिता स्त्री यत्पापं पुरुषसंभोगरूपमुद्दिश्य **मन्द्रयते** हर्षं करोति, **योषिद्युवतिश्च** यत्पापं परपुरुषसंभोगरूपमुद्दिश्य **मन्द्रयते** हृष्टा भवति, **पतिव्रताऽपि** स्वभर्तृसंयोगाभावेन क्लिष्टा सती यत्पापं देहत्यागरूपमुद्दिश्य **मन्द्रयते** । यच्चान्यदपि **किंचिदरिष्टं** दानादिना रेष्टुं विनाशयितुमशक्यं महत्पापमस्य यजमानस्य येन केनापि **क्रियते** तत्सर्वमयमारुणकेतुकोऽ**ग्निरनुवेधति**, अनुक्रमेण विनाशयति ।

अथ दशमीमाह—

> अशृतासः शृतासश्च ( ४ ) । यज्वानो येऽप्ययज्वनः ।
> स्वर्यन्तो नापेक्षन्ते । इन्द्रमग्निं च ये विदुः, इति ।

**अशृतासो**ऽपक्वचित्ताः **शृतासश्च** पक्वचित्ता अपि, **यज्वानः** श्रुतिस्मृतिविहितकर्मानुष्ठायिनः, **येऽप्य**[यज्वनोऽ]यज्वानस्तद्विपरीताः, तेषां मध्ये ये पुरुषा **इन्द्रं** परमैश्वर्ययुक्तं परमात्मानमग्निमारुणकेतुकं च **विदु**र्याथात्म्येन जानन्ति । ते ज्ञानिनः **स्वर्यन्तः** स्वर्गं मोक्षं वा प्राप्नुवन्तो ज्ञानव्यतिरिक्तसाधनान्तरं **नापेक्षन्ते** ।

अथैकादशीमाह—

> सिकता इव संयन्ति । रश्मिभिः समुदीरिताः ।
> अस्माल्लोकादमुष्माच्च । ऋषिभिरदात्पृश्निभिः, इति ।

यथा लोके वायुना प्रेरिताः **सिकताः** क्वचित्परस्परं **संयन्ति** राशिरूपेण संगच्छन्ते, तद्वदेते जीवा **रश्मिभी** रज्जुस्थानीयैः कर्मभिः **समुदीरिताः** प्रेरिताः सन्तः कर्मार्जनस्थानीयाद**स्माल्लो**कात्कर्मफलभोगरूपाद**मुष्माच्च** लोकात्तदा तदा निर्गत्य क्वचित्क्वचित्संयन्ति । तेषां सर्वेषामनुग्रहाय परमेश्वरः **पृश्निभिः** शुक्लैस्तत्त्वप्रकाशकै**ऋषिभि**र्मन्त्रै**रदात्**, ज्ञानं प्रयच्छति ।

---

१ ग. यद्व° । २ ग. °यज्वानः ।

अथ द्वादशीमाह—

अपेत वीत वि च सर्पतातः । येऽत्र स्थ पुराणा
ये च नूतनाः । अहोभिरद्भिरक्तुभिर्व्यक्तम् ।
(५) । यमो ददात्ववसानमस्मै, इति ।

यमेन नियुक्ताः पुरुषाः पुरातना नूतनाश्च सर्वस्यां भूमौ व्याप्य वर्तन्ते तान्संबोध्येदमुच्यते—हे यमदूता ये यूयं पुराणा अत्राग्निक्षेत्रे ये पूर्वं स्थिताः, ये च नूतना[1][2] ये चात्र स्थ ते सर्वे यूयमपेतास्मात्स्थानादपगच्छत, वीत परस्परं वियुज्य गच्छत । किंचातो विसर्पतास्मात्स्थानाद्विदूरं गच्छत । अहोभिर्दिवसैरक्तुभी रात्रिभिश्च, अद्भिरबीष्टकाभिर्व्यक्तं विशेषेण संबद्धमवसानमिदं स्थानमस्मै यजमानाय यमो ददातु, यमेन दत्ते सति केषुचिदहोरात्रेष्वत्राबीष्टकोपधानं कुर्म इत्यर्थः ।

अथ त्रयोदशीमाह—

नृ मुणन्तु नृ पात्वर्यः । अकृष्टा ये च कृष्टजाः ।
कुमारीषु कनीनीषु । जारिणीषु च ये हिताः, इति ।

अविभाक्तिको नृशब्दो मनुष्यजातिमात्रे ज्ञेयः । परपीडादिना परभृत्यभावादिना जीवन्तो गर्हिताः पुरुषास्ते जातिमात्रान्वयवन्तो नृशब्देनात्र विवक्षिताः । तादृशाः पुरुषा[3] मुणन्तु, अस्मात्स्थानादपगच्छन्तु नृ तादृशानां मनुष्याणामर्यः स्वामी च पातु, इतः स्थानादपेत्यास्मान्पातु । अकृष्टा अकर्मयोग्या दुष्कृतप्रसूताः, ये च कृष्टजा विशुद्धवंशजाता एव सन्तो[4]ऽकर्मयोग्या अन्धादय पातकिनो वा, ते सर्वेऽप्यस्मात्स्थानादपयन्तु । तथा कुमारीषु विवाहरहितासु स्त्रीषु ये हिता गर्भत्वेन स्थापिताः, कनीनीषु कुमार्याः पुत्रीषु, विवाहयुक्तास्वपि ये गर्भत्वेन स्थापिताः, तथा जारिणीषूपपतियुक्तासु स्त्रीषु ये हिता गर्भत्वेन स्थापिताः, ते दुष्टक्षेत्रजाः सर्वेऽप्यस्मादुपधानस्थानादपगच्छन्तु ।

अथ चतुर्दशीमाह—

रेतःपीता आण्डपीताः । अङ्गारेषु च ये हुताः ।
उभयान्पुत्रपौत्रकान् । युवेऽहं यमराजगान्, इति ।

---

१ ग. °त्रस्थाः पु° । २ ख. येऽत्र । ग. येऽत्रस्थास्ते स° । ३ क. ख. °षा न मु° ।
४ ख. सन्तः कर्मयो° ।

रेतःपीताः पीतरेतस्काः पुरुषाः, आण्डपीता अण्डस्पृष्टोदकपायिनः, एवमाद्यभक्ष्यभक्षणाः सर्वेऽपीतोऽपगच्छन्तु । तथाऽङ्गारेषु ये पश्चादयोऽशास्त्रीयमार्गेण हुताः पिपीलिकादयो वा पिशाचादिभावेन जगति वर्तन्ते [ते] सर्वेऽप्यस्मात्स्थानादपगच्छन्तु । तथा पुत्रपौत्रकाञ्श्रुतवृत्तहीनताकुत्सितान्पुत्रान्पौत्रांश्चोभयानहं युवेऽस्मात्स्थानात्पृथक्करोमि । तथा यमराजगान्यमेन पातयितुं योग्यान्सर्वानप्यपनयामि ।

अथ पञ्चदश्याः प्रतीकं दर्शयति—

शतमिन्नु शरदः, इति ।

इयं च शाखान्तरीया वैश्वदेवकाण्डे योगे योग इत्यनुवाके समाम्नाता । तत्पाठस्तु "शतमिन्नु शरदो अन्ति देवा यत्रा नश्चक्रा जरसं तनूनाम् । पुत्रासो यत्र पितरो भवन्ति मा नो मध्या रीरिषताऽऽयुर्गन्तोः" इति । हे देवाः शतमिन्नु शतमपि शरदः संवत्सरा अन्ति अस्माकमन्तिकस्था एव । स्वल्पा एव शतायुः पुरुष इति श्रुत्या शतं शरद आधिक्येन तत्र तत्र प्रशस्यन्ते, अस्माकं तु न पर्याप्ताः । तत्र हेतुरुच्यते—यत्रैषु शतसंवत्सरेषु नोऽस्मदीयानां तनूनां जरसं शरीराणां वयोहानिलक्षणं शैथिल्यं चक्रा हे देवा यूयं कृतवन्तः । किंच यत्र यस्यां जरायां पुत्रासः पुत्राः स्वकीयोदरजाताः स्वेन रक्षिता एव पितरो भवन्ति प्रत्युत पालका भवन्ति । तादृशमायुः कथं पर्याप्तं भवेत् । आस्तां तावदायुषः पर्याप्तिः । हे देवा यूयमायुर्गन्तोस्तादृशमप्यायुः सर्वं प्राप्तुमिच्छा विद्यते[३] तस्मान्मध्या तस्याऽऽयुषो मध्ये नोऽस्मान्मा रीरिषत हिंसितान्मा कुरुत । इति शाखान्तरीयमन्त्रस्यार्थः ।

अथ षोडशीमाह—

अदो यद्ब्रह्म विलबम् । पितॄणां च यमस्य च ।
वरुणस्याश्विनोरग्नेः । मरुतां च विहायसाम्, इति ।

पूर्वोक्तं जगत्कारणमस्ति, अदो ब्रह्म पित्रादीनां सर्वेषां विलबं विशेषेणाऽऽलम्बनम् । विहायसामित्यनेनाऽऽकाशवर्तिनो यक्षगन्धर्वादय उच्यन्ते ।

अथ सप्तदशीमाह—

कामप्रयवणं मे अस्तु । स ह्येवास्मि सनातनः ।
इति नाको ब्रह्मिश्रवो रायो धनम् । पुत्रानापो देवीरिहाऽऽहिता(६), इति ॥

---

१ क. °हीनान्कुत्सि° । २ ध. २. प्रशंस्यन्ते । ३ ग. °ते यस्य त° ।

पुरं नवद्वारा ब्रह्मा च व्यक्तः शरदोऽष्टौ च ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके प्रथमप्रपाठके सप्तविंशोऽनुवाकः ॥ २७ ॥

प्रकर्षेण यवनं मिश्रीकरणं प्रयवणं कामानां प्रयवणं येन ब्रह्मणा भवति तत्**काम-प्रयवणम्**, **मे** मम ब्रह्म प्रकामप्रापकमस्तु । हि यस्मात्, अतः **सनातनो**ऽनादिसिद्धः **स एव** परमात्मैवास्मि । इत्यतः कारणान्नाको दुःखरहितस्थानविशेषो **ब्रह्मिश्रवो** ब्रह्मविषयवाक्यश्रवणं **रायो** हिरण्यादयो धनं प्रीतिसाधनं स्त्रीपुत्रादि चेत्येतत्सर्वं ममास्त्विति शेषः । **देवीर्देवनशीला आपो** यूयमबष्टका इहास्मिन्कर्मणि **पुत्रानाहि-ताऽऽधत्त** संपादयत ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीय-तैत्तिरीयारण्यकभाष्ये प्रथमप्रपाठके सप्तविंशोऽनुवाकः ॥ २७ ॥

---

अथ प्रथमेऽष्टाविंशोऽनुवाकः ।

---

कल्पः—'विशीर्ष्णीमिति द्वे' इति । तत्र प्रथमामाह—

विशीर्ष्णीं गृध्रशीर्ष्णीं च । अपेतो निर्ऋतिं हथः ।
परिबाधं श्वेतकुक्षम् । निजङ्घं शबलोदरम्, इति ।

हेऽग्ने **विशीर्ष्णीं** शिरोरहितां **गृध्रशीर्ष्णीं च** गृध्रसमानशिरोयुक्तां **च निर्ऋतिं** राक्षसीमलक्ष्मीमितोऽस्मात्स्थानादप**हथो**ऽपजहि । परिबाधादिनामकान्निर्ऋतिसंबन्धिनः पुरुषानप्यपजहि । **परिबाधं** परितो बाधकं **श्वेतकुक्षं** श्वेतवर्णकुक्षियुक्तं **निजङ्घं** न्यग्भूतजङ्घायुक्तं **शबलोदरं** शुक्लवर्णमिश्रितोदरयुक्तम् ।

अथ द्वितीयामाह—

स तान्वाच्यायया सह । अग्ने नाशय संदृशः ।
ईर्ष्यासूये बुभुक्षाम् । मन्युं कृत्यां च दीधिरे । रथेन
किंशुकावता । अग्ने नाशय संदृशः (१), इति ।

* इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके प्रथमप्रपाठकेऽष्टा-विंशोऽनुवाकः ॥ २८ ॥

---

* अत्र प्र पुस्तके [illegible]

---

१ क. ॰षयं वा॰ । २ ग हथ । ३ ग. ॰हथाप॰ ।

वाच्यानि जनैर्निन्द्यानि पूर्वोक्तपरिबाधादिरूपाण्यपत्यानि तान्यात्मन इच्छतीति वाच्याया परिबाधादीनां माता काचिदलक्ष्मीः। अस्मदुपद्रवोपायं सम्यक्पश्यन्तीति संदृशः परिबाधादयः। हेऽग्ने स त्वं तान्परिबाधादीन्वाच्यायया[1] मात्रा सह विनाशय। किंच ये विद्वेषिणोऽस्माकमीर्ष्यादीन्दीधिरे दीपयन्ति। अस्मद्गुणानामसहनमीर्ष्या, तेषु दोषारोपोऽसूया, अन्नाभावेन बाधा बुभुक्षा, मन्युरस्मद्विषयः क्रोधः, कृत्याऽस्मद्विषयोऽभिचारः, एतेषामीर्ष्यादीनां दीपनमभिवृद्धिं कुर्वन्तो ये[2] विद्वेषिणोऽस्मान्मारयितुं सम्यक्पश्यन्ति तान्सर्वान्रथेन तदीयेन सह नाशय। कीदृशेन रथेन, किंशुकावता कुत्सिताः शुकाः किंशुकाः प्राण्युपद्रवकारिणः पक्ष्याकारा राक्षसविशेषास्तैर्युक्तेन ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्ये प्रथमप्रपाठकेऽष्टाविंशोऽनुवाकः ॥ २८ ॥

---

अथ प्रथम एकोनत्रिंशोऽनुवाकः।

---

कल्पः—'पर्जन्यायेति तिस्रः' इति। तत्र प्रथमामाह—

पर्जन्याय प्रगायत। दिवस्पुत्राय मीढुषे। स नो यवसमिच्छतु, इति।

हे ऋत्विग्यजमानाः पर्जन्याय वृष्ट्यभिमानिदेवार्थं प्रगायत प्रकर्षेण स्तुतिं कुरुत। कीदृशाय दिवस्पुत्राय दिव्युत्पन्नत्वात्पुत्रत्वम्। मीढुषे वृष्टिरूपेण जलस्य सेचकाय। स पर्जन्यदेवो नोऽस्माकं यवसमन्नादिरूपं भक्ष्यं संपादयितुमिच्छतु।

अथ द्वितीयामाह—

इदं वचः पर्जन्याय स्वराजे। हृदो अस्त्वन्तरं तद्युयोत। मयोभूर्वातो विश्वकृष्टयः सन्त्वस्मे। सुपिप्पला ओषधीर्देवगोपाः, इति।

स्वराजे स्वत एव राजमानाय पर्जन्याय पर्जन्यदेवार्थ[3]मस्माभिरुक्तमिदं स्तुतिरूपं वचो हृदोऽन्तरमस्तु तदीयचित्ते प्रविष्टमस्तु। तदस्मदीयं वचो युयोत तच्चित्ते हे ऋत्विजो मिश्रयत। वातो वायुरस्मे अस्मासु मयोभूः सुखस्य भावयिता भवतु। विश्वकृष्टयः सर्वेऽपि मनुष्या अस्मासु मयोभुवः सन्तु। ओषधीर्व्रीहियवाद्याः सुपिप्पलाः शोभनफलोपेताः, देवगोपा हविर्द्वारा देवानां पालयित्र्यः सन्तु।

---

१ ख. ग. °दीन्नाशय मा°। २ ख. ग. ये द्वे°। ३ क. °देवतार्थ°।

अथ तृतीयामाह—

**यो गर्भमोषधीनाम् । गवां कृणोत्यर्वताम् ।**
**पर्जन्यः पुरुषीणाम् ( १ ) , इति ॥**

***त्रिशीर्ष्णी पर्जन्याय दश दश ॥**

**इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके प्रथमप्रपाठक एकोनत्रिंशोऽनुवाकः ॥ २९ ॥**

यः पर्जन्यो देवो व्रीहियवाद्योषधीनां गवामश्वानां मनुष्यस्त्रीणां च गर्भं कृणोति करोति । नोऽस्माकं मयोभूरिति शेषः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्ये प्रथमप्रपाठक एकोनत्रिंशोऽनुवाकः ॥ २९ ॥

---

अथ प्रथमे त्रिंशोऽनुवाकः ।

---

कल्पः—"पुनर्मा प्रैत्विति च" इति । तत्र प्रथमामाह—

**पुनर्मामैत्विन्द्रियम् । पुनरायुः पुनर्भगः । पुनर्ब्राह्मणमैतु मा । पुनर्द्रविणमैतु मा, इति ।**

यदिन्द्रियं भोगेन नष्टं तत्पुनरपि मां प्रत्यैत्वागच्छतु । आयुरपि पुनरैतु । ब्रह्मण इदं ब्राह्मणं ब्रह्मवर्चसं तदपि पुनर्मामैतु । द्रविणं धनमपि पुनर्मामैतु । एतत्सर्वं मम पुनर्वर्धतामित्यर्थः ।

अथ द्वितीयामाह—

**यन्मेऽद्य रेतः पृथिवीमस्कान् । यदोषधीरप्यसरद्य-दापः । इदं तत्पुनराददे । दीर्घायुत्वाय वर्चसे, इति ।**

अद्या (द्या?)स्मिन्दिने मे मदीयं यद्रेतः पृथिवीं प्रत्यस्कान्प्रमादेन स्कन्नमासीत् । ओषधीरपि मदीयं यद्रेतोऽसरत्प्राप्नोत्, ओषधीषु स्कन्नमित्यर्थः । यच्च रेत आपोऽसरदप्सु स्कन्नं, तदिदं रेतः पुनरप्यहमाददे । किमर्थम्, दीर्घायुत्वाय वर्चसे, आयुर्वृद्धये ब्रह्मवर्चसाय च ।

---

* ग. पुस्तके पर्जन्याय दशेत्येतावन्मात्रमेव वर्तते ।

---

१ ग. °युस्त्वाय । २ ख. यच्च । ग. अत्र । ३ ग. °युत्वाय ।

अथ तृतीयामाह—

यन्मे रेतः प्रसिच्यते । यन्म आजायते पुनः ।

तेन माममृतं कुरु । तेन सुप्रजसं कुरु (१), इति ।

पुनर्द्वे च ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके प्रथमप्रपाठके त्रिंशोऽनुवाकः ॥ ३० ॥

मे मदीयं यद्रेतो गर्भाशये प्रकर्षेण सिच्यते मे मदीयं यद्रेतः पुनरप्याजायतेऽपत्यरूपेणोत्पद्यते, तेनापत्येन मां यजमानममृतं सुखयुक्तं कुरु । तेनापत्यरूपेण रेतसा मां सुप्रजसं शोभनपुत्रपौत्रादिप्रजायुक्तं कुरु ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्ये प्रथमप्रपाठके त्रिंशोऽनुवाकः ॥ ३० ॥

---

अथ प्रथम एकत्रिंशोऽनुवाकः ।

---

अथ वैश्रवणयज्ञमन्त्रा उच्यन्ते । तत्र चतसृभिर्वैश्रवणमावाहयेत् । तासु प्रथमामाह—

अद्भ्यस्तिरोधाऽजायत । तव वैश्रवणः सदा ।

तिरो धेहि सपत्नान्नः । ये अपोऽश्नन्ति केचन, इति ।

अत्रानादिसिद्धः कुबेरः संबोध्योच्यते—हे कुबेर त्वया गृहीतो यो वैश्रवणो विश्रवसोऽपत्यं स खलु सदा तवाद्भ्यस्तिरोधाऽजायत, अनु(बु)पलक्षितानां त्वदीयकर्मणां तिरोधायक आसीत् । अतो वैश्रवणस्य कर्मतिरोधायकत्वं निवार्य तन्मुखेन नोऽस्मदीयाञ्शत्रूंस्तिरो धेहि विनाशय । ये केचनान्येऽपि अपोऽस्मदीयानि कर्माण्यश्नन्ति तिरो दधति नाशयन्ति तानपि सर्वांस्त्वं तिरो धेहि ।

अथ द्वितीयामाह—

त्वाष्ट्रीं मायां वैश्रवणः । रथꣳ सहस्रवन्धुरम् ।

पुरुश्चक्रꣳ सहस्राश्वम् । आस्थायाऽऽयाहि नो बलिम्, इति ।

हे कुबेर वैश्रवणसहितस्त्वं रथमास्थाय नो बलिमस्मदीयां पूजां प्रत्यायाह्यागच्छ । कीदृशं रथम्, सहस्रवन्धुरमराणां सहस्रं यस्मिंश्चक्रे तच्चक्रं सहस्रवत्तद्युक्ता धूर्यस्य

---

१ ग. °स्रव-धु° । २ ख. ग °स्रव-धु° ।

रथस्य सोऽयं सहस्रवन्धुरस्तादृशम्, पुरुश्चक्रं बहुचक्रोपेतम्, सहस्राश्वं सहस्रसंख्याकैरश्वैरुपेतम् । तस्य रथस्योपमानमुच्यते— त्वाष्ट्रीं मायां यथा त्वष्ट्रा निर्मिता मायाऽऽश्चर्यकरी तद्वदाश्चर्यकरम् ।

अथ तृतीयामाह—

**यस्मै भूतानि बलिमावहन्ति । धनं गावो हस्तिहिरण्यमश्वान् ( १ ) ।**
**असाम सुमतौ यज्ञियस्य । श्रियं बिभ्रतोऽन्नमुखीं विराजम्, इति ।**

यस्मै कुबेराय भूतानि सर्वे प्राणिनो बलिं पूजामावहन्ति संपादयन्ति । कीदृशं बलिम्, धनादिरूपम् । धनं मणिमुक्तादिकम् । हस्तिभिः सहितं हिरण्यं हस्तिहिरण्यम् । यज्ञियस्य बलिना पूजनीयस्य तस्य कुबेरस्य सुमतावनुग्रहबुद्धावसामावस्थिता भूयास्म । कीदृशस्य कुबेरस्य, अन्नमुखीमन्नप्रधानां विराजं विविधं राजमानां श्रियं संपदं बिभ्रतो धारयतः ।

अथ चतुर्थीमाह—

**सुदर्शने च क्रौञ्चे च । मैनागे[1] च महागिरौ ।**
**सतद्वाट्टारगमन्ता । सꣳहार्यं नगरं तव, इति ।**

सुदर्शनादिनामकास्त्रयः पर्वतास्तस्मिन्नेकैकस्मिन्महागिरौ यत्तव नगरं तत्संहार्यम् । तत्परित्यज्यास्मदनुग्रहार्थमत्राऽऽगच्छेत्यर्थः । कीदृशं नगरम्, सतद्वाट्टारगमन्ता । सतं शतं द्वा द्वाराण्यट्टारः ( राः ) कक्ष्याविशेषा गमन्ता गमनयोग्या रथ्याविशेषाः, शतसंख्याका द्वारविशेषाः कक्ष्याविशेषा रथ्याविशेषाश्च यस्मिन्नगरे तन्नगरं सतद्वाट्टारगमन्ता ।

श्रोतृबुद्धिसमाधानार्थं पूर्वोत्तरग्रन्थौ विभजते—

**इति मन्त्राः । कल्पोऽत ऊर्ध्वम्, इति ।**

इत्येवमुक्ता अद्भ्यस्तिरोधेत्यादयो नगरं तवेत्यन्ता मन्त्रा द्रष्टव्याः । अत ऊर्ध्वं यदि बलिं हरेदित्यादिग्रन्थः कल्पः, अनुष्ठानविधायकब्राह्मणरूपः ।

तद्विधां दर्शयति—

**यदि बलिꣳ हरेत् । हिरण्यनाभये वितुदये कौबेरायायं बलिः ( २ ) ।**
**सर्वभूताधिपतये नम इति । अथ बलिꣳ हृत्वोपतिष्ठेत, इति ।**

---

१ क. मैनाके ।

यदिशब्दप्रयोगाद्बलिहरणं वैकल्पिकमिति गम्यते । तस्मिन्बलिहरणपक्षे हिरण्येत्यादिमन्त्रेण बलिं हृत्वा वक्ष्यमाणमन्त्रेणोपस्थानं कुर्यात् । कुबेरस्य संबन्धी वैश्रवणः कौबेरः । हिरण्यं नाभौ यस्यासौ हिरण्यनाभिः, सर्वाभरणभूषित इत्यर्थः । हिरण्यं दुर्लभं कुर्वन्सर्वप्राणिनो विशेषेण तुदति व्यथयतीति वितुदिः । यथोक्तगुणयुक्ताय वैश्रवणायायं बलिर्मया दत्तः, सर्वप्राणिनामधिपतये तस्मै वैश्रवणाय नमोऽस्तु । इत्युक्तो बलिहरणमन्त्रः ।

**क्षत्रं क्षत्रं वैश्रवणः । ब्राह्मणा वयः स्मः । नमस्ते अस्तु मा मा हिꣳसीः । अस्मात्प्रविश्यान्नमद्धीति, इति ।**

अत्रैकः क्षत्रशब्दः क्षतात्त्रायत इति व्युत्पत्त्या पालकत्वं ब्रूते । द्वितीयः क्षत्रशब्दो जातिवाची । अयं वैश्रवणः क्षत्रं क्षत्रं पालकः क्षत्रियत्वजातियुक्तश्च । वयं तु यजमाना ब्राह्मणजातियुक्तास्तेन पालनीयाः स्मः, अतस्ते वैश्रवणाय नमोऽस्तु मा मा हिꣳसीः हिंसितं मा कुरु[1] । यस्माद्वयं ब्राह्मणत्वेन नमस्कर्तृत्वेन च त्वया पालनीया अस्मात्कारणादत्र बलिस्थाने प्रविश्यान्नमस्माभिर्दत्तं बलिरूपमद्धि । भक्षय इति, असावुपस्थानमन्त्रः ।

अग्निस्थापनं विधत्ते—

**अथ तमग्निमादधीत । यस्मिन्नेतत्कर्म प्रयुञ्जीत, इति,**

यस्मिन्नग्नौ वैश्रवणबल्याख्यमेतत्कर्म प्रयुज्यते तमग्निं पूर्वोक्तोपस्थानानन्तरं भूमौ स्थापयेत् ।

स्थापनीयं मन्त्रं दर्शयति—

**तिरोधा भूः । तिरोधा भुवः (२) ।**
**तिरोधा स्वः । तिरोधा भूर्भुवः स्वः ।**
**सर्वेषां लोकानामाधिपत्ये सीदेति, इति ।**

हेऽग्ने भूस्तिरोधा भूर्लोकं स्वतेजसाऽऽच्छादय, एवं[3] भुवर्लोकस्वर्लोकावेकैकशः समुदायरूपेणापि सर्वान्व्याप्नुहि । व्याप्य च सर्वेषामेतेषां[4] लोकानामाधिपत्येऽधिकपालननिमित्तं सीदात्रोपविश । इति अयमग्निस्थापनमन्त्रः ।

समिन्धनं विधत्ते—

**अथ तमग्निमिन्धीत । यस्मिन्नेतत्कर्म प्रयुञ्जीत, इति ।**

---

१ ख. ग. °यं ब्रा° । २ क. °रु । यतोऽस्मा° । ख. ग. °रुतो य° । ३ क. °वं भूर्लोकावे° । ग. °वं भूर्लोकः स्वर्लोको वैकै° । ४ क °षां लो° ।

पूर्ववद्व्याख्येयम् ।

समिन्धनमन्त्रान्दर्शयति—

तिरोधा भूः स्वाहा । तिरोधा भुवः स्वाहा । तिरोधा स्वः स्वाहा । तिरोधा भूर्भुवः स्वः स्वाहा, इति ।

स्वाहा समिदियं स्वाहुतमस्तु । अन्यत्पूर्ववत् ।

अस्य वैश्रवणयज्ञस्य कालविशेषं दर्शयति—

यस्मिन्नस्य काले सर्वा आहुतीर्हुता भवेयुः (४) । अपि ब्राह्मणमुखीनाः । तस्मिन्नह्नः काले प्रयुञ्जीत । परः सुप्तजनाद्वेपि, इति ।

अस्याऽऽरुणकेतुकस्य संबन्धिनो(न्यो) ब्राह्मणमुखीनाः "रुद्रो वा एष यदग्निः स एतर्हि जातः" इत्यादिब्राह्मणप्रतिपादिताः शतरुद्रीयादयः सर्वा अप्याहुतयो यस्मिन्काले हुता भवेयुः, तदहःसंबन्धिनि तस्मिन्काले वैश्रवणयज्ञं प्रयुञ्जीत । वेपि, अपि वा सुप्तजनात्परः सर्वेषु जनेषु सुप्तेषूत्तरस्मिन्काले ।

एतदीयग्रन्थाध्ययने नियमं दर्शयति—

मा स्म प्रमाद्यन्तमाध्यापयेत् । सर्वार्थाः सिध्यन्ते । य एवं वेद । क्षुध्यन्निदम-जानताम् । सर्वार्था न सिध्यन्ते, इति ।

प्रमाद्यन्तं प्रमादयुक्तं दुर्वृत्तं पुरुषम् । इदं वैश्रवणबलिकर्म गुरुमुखादजानतां पुरुषाणां क्षुध्यन्क्षुध्यतामन्नाभावेन दरिद्राणां न केऽपि कामाः सिध्यन्ति, अन्नमपि तैर्न लभ्यते कुतोऽन्यत्का(का) मप्राप्तिरित्यर्थः ।

अथ बलिहरणमन्त्रं दर्शयति—

यस्ते विघातुको भ्राता । ममान्तर्हृदये श्रितः (५) । तस्मा इममग्रपिण्डं जुहोमि । स मेऽर्थान्मा विवधीत् । मयि स्वाहा, इति ।

हे कुबेर विघातुकः सर्वेषां हिरण्यलाभविघ्नकरणशीलस्ते तव यो भ्राता वैश्रवणः सोऽयं ममान्तर्हृदये ध्येयत्वेनाऽऽश्रितः । तस्मै वैश्रवणायेममग्रपिण्डं श्रेष्ठपिण्डं

१ ख. ग 'बन्धो ब्रा°। २ क. °तां क्षु°। ३ क. °ण्डं जु°।

जुहोमि। स वैश्रवणो मेऽर्थान्मदीयान्हिरण्यलाभादीन्पुरुषार्थान्मा विवधीन्मा विनाशयतु, किंतु मयि संपादयतु तदर्थमिदं स्वाहुतमस्तु।

अथोपस्थानमन्त्रमाह—

राजाधिराजाय प्रसह्यसाहिने। नमो वयं वैश्रवणाय कुर्महे। स मे कामान्कामकामाय मह्यम्। कामेश्वरो वैश्रवणो ददातु। कुबेराय वैश्रवणाय। महाराजाय नमः। केतवो अरुणासश्च। ऋषयो वातरशनाः। प्रतिष्ठाꣳ शतधा हि। समाहितासो सहस्रधायसम्। शिवा नः शंतमा भवन्तु। दिव्या आप ओषधयः। सुमृडीका सरस्वति। मा ते व्योम संदृशि (६), इति॥

अश्वान्बलिर्ध्रुवो भवेयुः श्रितश्च सप्त च॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके प्रथमप्रपाठक एकत्रिंशोऽनुवाकः॥ ३१॥

राज्ञां सर्वेषामधिकत्वेन यो राज्य(जा) स्वामी सोऽयं राजाधिराजस्तस्मै, बलात्कारेण सर्वेषां लाभानां योऽभिभविता प्रतिबन्धकः स प्रसह्यसाही तस्मै, वैश्रवणाय वयं यजमाना नमस्कुर्महे। कामेश्वरः सर्वेषां कामानां स्वामी स वैश्रवणः कामकामाय बलभोगार्थिने मह्यं मे कामान्मदपेक्षितान्सर्वान्भोगान्ददातु। कुबेररूपाय महाराजाय वैश्रवणाय नमोऽस्तु केतव इत्यादिकं पूर्वमेव ( तै० आ० अ० २१ ) व्याख्यातम्। अस्य च वैश्रवणयज्ञस्याऽऽरुणकेतुकान्तः प्रयोगो बहिश्च स्वातन्त्र्येण प्रयोग इत्युभयप्रकारो विद्यते। तच्च सर्वाहुतिहोमान्ते बौधायनेन दर्शितम्—"वैश्रवणयज्ञो ब्राह्मणेन व्याख्यातोऽन्नकामस्य सर्वकामस्य वा पर्वणि पर्वणि वैश्रवणयज्ञः। सोत्तरवेदिषु क्रतुषु चिन्वीतेति यथाब्राह्मणम्" इत्यादि॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्ये प्रथमप्रपाठक एकत्रिंशोऽनुवाकः॥ ३१॥

---

अथ प्रथमे द्वात्रिंशोऽनुवाकः।

---

अथाऽऽरुणकेतुकचयनाङ्गव्रतं विधत्ते—

संवत्सरमेतद्व्रतं चरेत्। द्वौ वा मासौ, इति।

यो ह्यारुणकेतुकमग्निं चेतुमिच्छति सोऽधिकारसिद्ध्यर्थमादौ संवत्सरं वा मासद्वयं वा वक्ष्यमाणं व्रतमनुतिष्ठेत्।

व्रतशब्दार्थमाह—

**नियमः समासेन, इति।**

योऽयं नियमस्वीकारः, तदेव व्रतम्। एतच्च **समासेन** संक्षेपेण दर्शितम्। अथ विस्तारं प्रतिज्ञापूर्वकं दर्शयति—

**तस्मिन्नियमविशेषाः। त्रिषवणमुदकोपस्पर्शी। चतुर्थकालपानभक्तः स्यात्। अहरहर्वा भैक्षमश्नीयात्। औदुम्बरीभिः समिद्भिरग्निं परिचरेत्। पुनर्मा मैत्विन्द्रियमित्येतेनानुवाकेन। उद्धृतपरिपूताभिरद्भिः कार्यं कुर्वीत (१)। असंचयवान्। अग्नये वायवे सूर्याय। ब्रह्मणे प्रजापतये। चन्द्रमसे नक्षत्रेभ्यः। ऋतुभ्यः संवत्सराय। वरुणायारुणायेति व्रतहोमाः। प्रवर्ग्यवदादेशः। अरुणाः काण्ड ऋषयः, इति।**

नियमो व्रतमित्येवं सामान्यलक्षणमुक्तं तस्मिन्व्रतेऽनुष्ठेया **नियमविशेषाः** क्रमेणोच्यन्ते—सूयते सोमोऽत्रेति सवनं तत्त्रिविधं प्रातर्मध्यंदिनसायंकालभेदात्। तस्मिन्सवनत्रय उदकमुपस्पृशेत्, स्नायादित्यर्थः। पानं क्षीरादिविषयं भक्तमन्नं तदुभयमपि प्रतिदिनं कालद्वये स्वी क्रियते। तस्माद्द्विरह्नो मनुष्येभ्य उपह्रियते। प्रातश्च सायं चेत्याम्नातत्वात्। तथा प्रातर्भुक्तवतः सायं द्वितीयः कालः, परेद्युः प्रातःकालस्तृतीयः, तत्रैव सायं चतुर्थः कालः, मध्यवर्तिनौ द्वितीयतृतीयकालौ परित्यज्य तस्मिंश्चतुर्थकाले पानं भक्तं च यस्यासौ **चतुर्थकालपानभक्तः**, तथाविधो भवेत्। अथवा प्रतिदिनं भिक्षित्वा तदन्नं भुञ्जीत, सोऽयं पक्षोऽशक्तविषयः। उदुम्बरवृक्षजन्याभिः समिद्भिरग्निपरिचर्यां कुर्यात्। तस्मिन्समिदाधाने मन्त्राः '**पुनर्मा मैत्विन्द्रियम्**' **इत्येतेनानुवाकेनो**क्ताः। स चानुवाकः पूर्वमेव व्याख्यातः। आपो नदीतडागादिभ्यः पात्रेणोद्धृता वस्त्रेण शोधिताश्च ताभिः पादप्रक्षालनाचमनादिकं कुर्यान्न तु नद्यादौ। यत्किंचित्संचयो भिक्षापात्रादन्यत्र भक्ष्यादिवस्तुसंग्रहः, तद्युक्तो न भवेत्। प्रतिदिनमग्न्यादिभ्यो देवताभ्यो होमं कुर्यात्। व्रतहोमनियुक्तत्वात्स्वाहाकारोऽर्थलभ्यः।

---

१ ग. यमः स्वी°। २ ख. ग. त्येव सा°। ३ ख. यत्कार्यं सं°। ग. यत्कार्यं सं°। ४ ख. ग. °दित्योऽ(भ्योऽ)रुण(णा)न्ताभ्यो।

ततोऽग्नये स्वाहा वायवे स्वाहेत्यादयो मन्त्राः संपद्यन्ते। आदिश्यते विधीयत इत्यादेशोऽनुष्ठेयोऽर्थः, स च प्रवर्ग्यवदत्रावगन्तव्यः, प्रवर्ग्याध्ययनादौ ये धर्मास्तेऽत्राप्यनुष्ठेयाः। ते च प्रवर्ग्यधर्मा आपस्तम्बेन सूत्रिताः—" संवत्सरमेतद्व्रतं चरेदेतस्मिन्संवत्सरेऽधीयीत यद्येतस्मिन्संवत्सरे नाधीयीत यावदध्ययनमेतद्व्रतं चरेत्संवत्सरेऽखिले छदिर्दर्शेऽग्निमुपसमाधाय संपरिस्तीर्य पूर्ववाद्विसृज्य मदन्तीरुपस्पृश्य " इत्यादयः। तानेतान्धर्मानाचरेत्। अरुणाख्या [ ये ] अत्र काण्ड ऋषयस्तेऽपि होतव्या इत्यर्थः। अथाऽऽरुणकेतुकचयनप्रतिपादकस्य ग्रन्थस्याध्ययने नियमान्विधत्ते—

**अरण्येऽधीयीरन्। भद्रं कर्णेभिरिति द्वे जपित्वा ( २ )। महानाम्नीभिरुदकꣳ स्ꣳस्पर्शयेत्। तमाचार्यो दद्यात्। शिवा नः शंतमेत्योषधीरालभते। सुमृडीकेति भूमिम्। एवमपवर्गे। धेनुर्दक्षिणा। कꣳसं वासश्च क्षौमम्। अन्यद्वा शुक्लम्। यथाशक्ति वा। एवꣳ स्वाध्यायधर्मेण। अरण्येऽधीयीत। तपस्वी पुण्यो भवति तपस्वी पुण्यो भवति ( ३ ), इति ॥**

**कुर्वीत जपित्वा स्वाध्यायधर्मेण द्वे च ॥**

**इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके प्रथमप्रपाठके द्वात्रिंशोऽनुवाकः ॥ ३२ ॥**

सोऽयं ग्रन्थोऽरण्य एवाध्येतव्यः, न तु ग्रामे। अध्ययनोपक्रमे शान्त्यर्थं भद्रं कर्णेभिरिति द्वे ऋचौ जपेत्। आपमापामित्येताभिर्महानाम्नीभिर्ऋग्भिरध्येतारं माणवकमुदकं स्पर्शयेत्। ततस्तं माणवकमाचार्यो दद्यात्, व्रताय नियुञ्जीत। शिवा न इति मन्त्रेणौषधीः स्पृशेत्। सुमृडीका सरस्वतीति मन्त्रेण भूमिं स्पृशेत्। यथाऽध्ययनस्योपक्रमे सर्वमेतदनुष्ठितमेवमध्ययनस्यावसानेऽपि सर्वमेतदनुतिष्ठेत्। कृत्स्नाध्ययनस्य समाप्तावाचार्याय धेनुर्दक्षिणा देया, भोजनार्थं कांस्यपात्रं देयम्, प्रावरणार्थं क्षौमं वस्त्रं देयम्, तदशक्तावन्यत्कार्पासमयं शुक्लं वस्त्रं देयम्, अत्यन्तमशक्तेन यथाशक्ति किमपि देयम्, एवमेवमुक्तेनाध्ययनधर्मेण युक्तः सन्नरण्ये गुरुमुखाद्ग्रन्थमधीयीत। एवमधीयानो व्रतनियमानुष्ठानात्तपोयुक्तो भवति। अभ्यासोऽयं मङ्गलार्थः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्ये प्रथमप्रपाठके द्वात्रिंशोऽनुवाकः ॥ ३२ ॥

---

१ ख. ग. °रे पर्यवेते छादिर्दर्शेऽग्नि°। २ ख ग °र्मान्वा च°। ३ ख. ग. °पादितस्य।

[+ भद्रꣳ स्मृतिः साकंजानामक्ष्यतिताम्राण्यंःपूष्वौक्षं आरोगः केदमग्निश्च सहस्रवृत्पवित्रंवन्त आतनुष्वाष्टयोनीं योऽसावथाऽऽदित्यस्याऽऽरोगस्याथ वायोरथाग्नेर्दक्षिणपूर्वस्यामिन्द्रघोषा व आपमापां योऽपामापो वै चतुष्टय्यो जानुदघ्नीमग्निं प्रणीयेमा नुकंविशीर्ष्णी पर्जन्याय पुनरद्भ्यः संवत्सरं द्वात्रिꣳशत् ॥ ३२ ॥ भद्रं ज्योतिषाऽप्रतिरथ्येन तस्मिन्राजानं कश्यपात्सहस्रवृदियं नपुꣳसकम*ष्टयोनिमवपतन्तानामायतनवान्सतो बन्धुं ता उत्तरतो वज्रमेव भ्रातृव्येभ्यः पुनस्त्रिꣳशदुत्तरशतम् ॥ १३० ॥ ]

अथ शान्तिः ।

भद्रं कर्णेभिः शृणुयाम देवाः । भद्रं पश्येमाक्षभिर्यजत्राः । स्थिरैरङ्गैस्तुष्टुवाꣳसस्तनूभिः । व्यशेम देव हितं यदायुः ॥ स्वस्ति न इन्द्रो वृद्धश्रवाः । स्वस्ति नः पूषा विश्ववेदाः । स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः । स्वस्ति नो बृहस्पतिर्दधातु ॥

ॐ शान्तिः शान्तिः शान्तिः ।

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके प्रथमः प्रपाठकः समाप्तः ॥१॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥ १ ॥

इति श्रीमद्वीरबुक्कणसाम्राज्यधुरंधरश्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्ये प्रथमः प्रपाठकः समाप्तः ॥ १ ॥

---

+ एतच्चिह्नान्तर्गतं क. ख. पुस्तकयोर्नास्ति । भद्रमित्यारभ्य द्वात्रिंशदित्यन्तं प्रपाठकगतानुवाकानामाद्यप्रतीकदर्शनम् । अग्रे च भद्रमित्यारभ्य शतमित्यन्तं प्रपाठकगतवाक्यशतकाद्यप्रतीकप्रदर्शनम् ।

---

* योनिमथाग्नेर्य एवं वेद ये नखा असौ वै पल्वल्या अमृतं वा अद्भ्यो नवविꣳशोत्तरशतम् ॥ १२९ ॥

## अथ कृष्णयजुर्वेदीयतैत्तिरीयारण्यके द्वितीयः प्रपाठकः ।

( तत्र प्रथमोऽनुवाकः । )

हरिः ॐ ।

नमो ब्रह्मणे नमो अस्त्वग्नये नमः पृथिव्यै नम ओषधीभ्यः ।
नमो वाचे नमो वाचस्पतये नमो विष्णवे बृहते करोमि ॥
ॐ शान्तिः शान्तिः शान्तिः ॥

इति शान्तिः ।

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥
प्रपाठके हि प्रथमे वह्निरारुणकेतुकः ।
सम्यक्प्रोक्तो द्वितीये[1] स्यात्स्वाध्यायब्राह्मणाभिधा[2] ॥

तत्राऽऽद्येनुवाकेऽध्ययनाङ्गत्वेन यज्ञोपवीतं विधातुं तत्प्रशंसार्थमादावुपाख्यानमाह[3]—

ॐ सह वै देवानां चासुराणां च यज्ञौ प्रततावास्तां वयꣳ स्वर्गं लोकमेष्यामो वयमेष्याम इति तेऽसुराः संनह्य सहसैवाऽऽचरन्ब्रह्मचर्येण तपसैव देवास्तेऽसुरा अमुह्यꣳस्ते न प्राजानꣳस्ते पराभवन्ते न स्वर्गं लोकमायन्प्रसृतेन वै यज्ञेन देवाः स्वर्गं लोकमायन्नप्रसृतेनासुरान्पराभावयन्—, इति ।

वयमेवाऽऽधिपत्यनिमित्तं स्वर्गं गमिष्याम इत्येवं देवा यदा यज्ञे प्रवृत्तास्तदानीमेवासुरा अपि तथैवाभिप्रेत्य यज्ञे प्रवृत्ताः, तावुभौ यज्ञौ प्रततौ विस्तीर्णावास्ताम् । तदानीं तथाविधा असुराः संनह्य कृतसंनाहाः सहसैव भुजबलेन[4] शास्त्रेणैवाऽऽचरन्यज्ञमारब्धवन्तः, ते मौर्ख्याद्ब्रह्मचर्यादिनियमं[5] चानादृतवन्तः । देवास्तु ब्रह्मचर्यात्सम-

१ क. °तीयस्था । २ क. °भिधो । त° ग °भिधे त । ३ ख. °माह° । ४ ग °बलमाबे °। ५ ग. °मं नाऽऽदृ° ।

स्ततपसा युक्ताः सन्तो यथाशास्त्रमनुष्ठितवन्तः । ते मूर्खा असुरा अनुष्ठानमौर्ख्यपारवश्येन मोहं प्राप्ताः, मूढाः सन्तः कर्तव्याकर्तव्यं किमपि न प्राजानन् । ततो *यथाशास्त्रानुष्ठानाभावात्स्वर्गं न प्राप्ताः । देवास्तु प्रसृतेनैव यज्ञेन स्वर्गं प्राप्ताः, अप्रसृतेन यज्ञेन युक्तानसुरान्पराभावयन् ।

अथ प्रसृताप्रसृतयोः स्वरूपं विभजते[२]—

प्रसृ॑तो ह॒ वै य॑ज्ञोपवीति॒नो॑ य॒ज्ञोऽप्र॑सृ॒तो॒ऽनु॑पवी॒ति॒नो॒ यत्किं॑च ब्राह्म॒णो य॑ज्ञोपवी॒त्यधी॒ते यज॑त ए॒व तत्—, इति ।

यज्ञोपवीतयुक्तस्य यो यज्ञः सोऽयं[३] गुणाधिक्यात्प्रसृतः प्रकर्षेण वृत्त इत्युच्यते । अनुपवीतिनो यज्ञोपवीतरहितस्य यज्ञो गुणहीनत्वादप्रसृत इत्युच्यते । किंच ब्राह्मणो यज्ञोपवीतयुक्तः सन्यत्किमप्यधीते[५] तत्सर्वं यागानुष्ठानसमं भवति ।

तदेवं यज्ञोपवीतं प्रशस्याध्ययनोपयोगं वदन्यज्ञानामङ्गत्वेन विधत्ते—

तस्मा॑द्यज्ञोपवी॒त्ये॑वाधी॑यीत या॒जये॒द्यजे॑त वा य॒ज्ञस्य॒ प्रसृ॑त्यै॒, इति ।

प्रसृतिः प्रकृष्टगुणयुक्तत्वम्[६] ।

यज्ञोपवीतसाधनं द्रव्यं विधत्ते—

अजि॑नं॒ वासो॑ वा दक्षिण॒त उ॑पवी॒य—, इति ।

कृष्णाजिनवस्त्रयोरन्यतरद्द्रव्यं दक्षिणभागे लम्बमानं कृत्वाऽधीयीतेत्यर्थः । एवमध्ययनादावनेनैव वाक्येन विहितस्यापि यज्ञोपवीतस्य दर्शपूर्णमासप्रकरणे निवीतं मनुष्याणामित्यत्र पुनर्विधानं तदतिक्रमे तत्रत्याविशेषप्रायश्चित्तार्थम् ।

यज्ञोपवीतप्रसङ्गात्रायाणामपि लक्षणं दर्शयति—

दक्षि॑णं बा॒हुमु॒द्धर॑तेऽवधत्ते स॒व्यमिति॑ य॒ज्ञोपवी॒तमे॒तदे॒व विप॑रीतं प्राची॑नावीत॒[९] संवी॑तं मानु॒षम् ॥ १ ॥, इति ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके द्वितीयप्रपाठके प्रथमोऽनुवाकः ॥ १ ॥

दक्षिणं बाहुमूर्ध्वं धृत्वा सव्ये बाहौ लम्बमाने सति यद्वेष्टनं तद्यज्ञोपवीतम् ।

---

* ते पराभवन्नित्यस्य व्याख्यानं यथाशास्त्रानुष्ठानाभावादिति ।

---

१ क. ख. °नात्स्व° । २ क. ख. विवक्ष्यते । ३ ग. यो ऽयं य° । ४ क. प्रवृत्त । ५ क. °गं जनयन्त्य° । ६ ख. °नं वि° । ७ ग. उपवीत । ८ क. ख. °मने° । ९ क. वद्धते । क. [illegible]द्वपे । ग. वधते । १० क. कृत्वा ।

एतदेव विपरीतं सव्यबाहोरूर्ध्वं धारणं दक्षिणबाहोर्लम्बमानं चेद्भवति तदा वेष्टनं प्राचीनावीतमित्युच्यते । बाह्वोरुभयोरप्यधो लम्बमानयोरंसद्वये [ यद्वेष्टनं तत् ; ] संवीतं तदेतन्मानुषं मनुष्याणामृषीणाम्, यज्ञोपवीतं देवानां यथा वा प्राचीनावीतं पितॄणां तद्वत् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्ये द्वितीयप्रपाठके प्रथमोऽनुवाकः ॥ १ ॥

---

अथ द्वितीयप्रपाठके द्वितीयोऽनुवाकः ।

---

प्रथमे यज्ञोपवीतविधानमुक्तम् । द्वितीये संध्योपासनविधानमुच्यते । तत्प्रशंसार्थमादावाख्यायिकामाह—

**रक्षाꣳसि ह वा पुरोनुवाके तपोग्रमतिष्ठन्त तान्प्रजापतिर्वरेणोपामन्त्रयत तानि वरमवृणीताऽऽदित्यो नो योद्धा इति तान्प्रजापतिरब्रवीद्योधयध्वमिति तस्मादुत्तिष्ठन्तꣳ ह वा तानि रक्षाꣳस्यादित्यं योधयन्ति यावदस्तमन्वगात्तानि ह वा एतानि रक्षाꣳसि गायत्रियाऽभिमन्त्रितेनाम्भसा शाम्यन्ति—, इति ।**

हवाशब्दः प्रसिद्ध्यर्थः । पुरोनुवाकः पूर्वकालैः, पुर इत्येव पूर्वैरनूच्यते न त्विदानीमिति वा पश्चादिति वोच्यते । एतादृशे पूर्वकाले रक्षांसि खलूग्रं श्रेष्ठं तीव्रं तपोऽतिष्ठन्त कृतवन्तः । तेन तपसा तुष्टः प्रजापतिस्तान्रक्षोविशेषान्वरेणोपामन्त्रयतोपच्छन्दितवान्, वरं वृणीध्वमित्युक्त्वा तान्परितोष्य तपसो निवारितवान् । तानि रक्षांस्यादित्यो नोऽस्माकं योद्धा भवत्वित्येवं वरमवृणीत । प्रजापतिस्तानादित्येन सह युद्धं कुरुतेत्यनुज्ञां दत्तवान् । तस्मात्कारणात्तानि रक्षांसि, उत्तिष्ठन्तं ह्वोद्यन्तमेवाऽऽदित्यं योधयन्ति युद्धे प्रवर्तयन्ति । यावदयमादित्योऽस्तमन्वगादस्तं प्राप्नोति उदयमारभ्य तावदादित्येन सह युद्धं कुर्वन्ति । तदा च युद्धे प्रवृत्तानि तानि रक्षांसि तत्सवितुर्वरेण्यमित्यनया गायत्र्याऽभिमन्त्रितं यज्जलं तेनैव शाम्यन्ति न त्वन्येन केनापि ।

---

१ ग. °द्वयसमं मं° । २ क. °यं समं नेत्री । ३ ग. °षीणां च. ग. ४ क. °णाम्, सं यथोप° । ख. °णाम्; सव्यं यथोप° । ग. °था प्रा । ६ ख °लः पूर्वैः पुर इत्येव पूर्वकाल उच्यते । अनुवाकशब्देन निशोक्ति । अपरेणानुवाकशब्देन दिवस उच्यते । ए° । ७ क. परमतादि° । ८ क. ख. °नि च र° । ९ क. ख. वमृादि° । १० क. ख. तथा । ११ क. °यत्रियाऽभि° ।

इत्यनेनाऽऽख्यानेन जलं प्रशस्याध्यर्यमभिधत्ते—

**तदु ह वा एते ब्रह्मवादिनः पूर्वाभिमुखाः संध्यायां गायत्रियाऽभिमन्त्रिता आप ऊर्ध्वं विक्षिपन्ति ता एता आपो वज्री-भूत्वा तानि रक्षाꣳसि मन्देहारुणे द्वीपे प्रक्षिपन्ति—, इति ।**

यस्मादनेन जलेन रक्षसां शान्तिः, तदु ह वै तस्मादेव कारणादेते लोके दृश्यमाना ब्रह्मवादिनो वेदस्य वक्तारः संध्यायां प्रातःसंध्याकाले पूर्वाभिमुखाः सन्तो गायत्र्याऽभिमन्त्रितं जलमूर्ध्वं विक्षिपन्ति प्रक्षिपेयुरित्यर्थः । ताश्च विक्षिप्ता आपो गायत्रीसामर्थ्याद्वज्ररूपं प्राप्य तान्यादित्ययुद्धार्थमागतानि रक्षांसि मन्देहनामकानां रक्षसां स्वभूते कस्मिंश्चिदरुणनाम्नि द्वीपे प्रक्षिपन्ति ।

अथ प्रदक्षिणावृत्तिं विधत्ते—

**यत्प्रदक्षिणं प्रक्रमन्ति तेन पाप्मानमवधून्वन्ति—, इति ।**

प्रदक्षिणा[3]प्रारम्भमावर्तनं[4] प्रक्रमेयुः कुर्युः । तेन च पापक्षयो भवति ।

अथ ध्यानं विधत्ते—

**उद्यन्तमस्तं यन्तमादित्यमभिध्यायन्कुर्वन्ब्राह्मणो विद्वान्त्सकलं भद्रमश्नुतेऽसावादित्यो ब्रह्मेति—, इति ।**

अयं परिदृश्यमान आदित्यो ब्रह्मेति शास्त्रतो विद्वान्पुमानुद्यन्तमस्तं यन्तं वाऽऽदित्यं तथा ध्यायन्प्रदक्षिणं च कुर्वन्वर्तते स पुमान्सकलं भद्रमश्नुते श्रेयः प्राप्नोति[6] ॥

वेदनं प्रशंसति—

**ब्रह्मैव सन्ब्रह्माप्येति य एवं वेद ॥ २ ॥, इति ।**

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके द्वितीयप्रपाठके द्वितीयोऽनुवाकः ॥ २ ॥

यः पुमानादित्यो ब्रह्मेति वेद स पुमान्पूर्वमजानानोऽपि स्वयं वस्तुतो ब्रह्मैव सन्प्राप्ताद्वेदनादज्ञानापगमे सति स्वानुभवेनापि ब्रह्माऽऽप्नोति ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्ये द्वितीयप्रपाठके द्वितीयोऽनुवाकः ॥ २ ॥

---

१ ख. ग. प्रशंस्या° । २ क. °यत्रियाऽभि° । ३ ग. °क्षिणं प्रा° । ४ क. °मं क्र° ५ ग. °युः । ते° । ६ क. ख. °ति । प्र° ।

अथ द्वितीये तृतीयोऽनुवाकः ।

---

द्वितीये संध्यावन्दनमुक्तम् । तृतीयादिषु चतुर्ष्वनुवाकेषु पापक्षयार्थं कूष्माण्डहोमाङ्गभूता मन्त्रा उच्यन्ते । तत्र तृतीयानुवाकगतास्वृक्षु प्रथमामाह—

यद्देवा देवहेळनं देवासश्चकृमा वयम् । आदित्यास्तस्मान्मा मुञ्चतर्तस्यर्तेन मामित, इति ।

**देवासो** देवनशीला **आदित्या** अदितेः पुत्रा हे **देवा देवहेडनं** देवानां क्रोधकारणं यत्कर्म **वयं चकृम**, तस्मादपराधाद्यूयं **मुञ्चत** । अपि **चर्तस्य** यज्ञस्य संबन्धिना **ऋतेन** सत्येन होमेन **मां** यूयमित प्राप्नुत ।

अथ द्वितीयामाह—

देवा जीवनकाम्या यद्वाचाऽनृतमूदिम ।
तस्मान्न इह मुञ्चत विश्वे देवाः सजोषसः, इति ।

हे **देवा** वयं **जीवनकाम्या** जीवनमात्मन इच्छन्तो **यदनृतं वाचोदिम** राजसेवादौ तत्प्रियार्थमनृतमुक्तवन्तः, **सजोषसः** परस्परमस्माभिश्च समानप्रीतियुक्ता हे **विश्वे देवा** इहास्मिन्कर्मण्यनुष्ठिते सति तस्मात्पापान्नोऽस्मान्मुञ्चत ।

अथ तृतीयामाह—

ऋतेन द्यावापृथिवी ऋतेन त्वꣳ सरस्वति ।
कृतान्नः पाह्येनसो यत्किंचानृतमूदिम, इति ।

हे **द्यावापृथिव्यावृतेन** यज्ञेन विगुणेन यत्पापं प्राप्तं तथा हे **सरस्वति, ऋतेन** यत्पापं प्राप्तं **त्वं** द्यावापृथिव्यौ चैत्येता यूयं **कृतात्तस्मादेनसो नोऽस्मान्पाहि** पातेत्यर्थः । किंच **यत्किंचिदनृतमूदिम** वयमुक्तवन्तस्तस्मादप्येनसः पात ।

अथ चतुर्थीमाह—

इन्द्राग्नी मित्रावरुणौ सोमो धाता बृहस्पतिः ।
ते नो मुञ्चन्त्वेनसो यदन्यकृतमारिम, इति ।

यत्पापम**न्यकृत**मन्येन यज्ञव्यतिरिक्तेन निमित्तेन कृत**मारिम** वयं प्राप्ताः, तस्मादे**नसस्त** इन्द्रादयो बृहस्पत्यन्ता देवा **नो**ऽस्मान्**मुञ्चन्तु** ।

---

१ क. कूश्माण्ड° । २ क. ख. °कस्थास्वृ° । ३ ख. °हेडनं । ग. °हेलनं । ४ क. ख. °यार्थो अनृ° । ५ ग. °थिवी ऋतेन सत्यवचनेन य° । ६ क. ख. यथा । ७ ग. °प्तं त्वमनृतसमानर्तेन द्या° । ८ ग °त्येतौ यू° । ९ ग. °हि यूयं पा° ।

अथ पञ्चमीमाह—

सजातशꣳसादुत जामिशꣳसाज्ज्यायसः शꣳसा-
दुत वा कनीयसः । अनाधृष्टं देवकृतं
यदेनस्तस्मात्त्वमस्माज्जातवेदो मुमुग्धि, इति ।

**सजाताः** समानजन्मानो ज्ञातयः समानवयस्काः सखायो वा, तैर्मयि कृतः **शंसः** प्रशंसा स्तुतिः, **उताथवा जामयो** जाया भार्यास्ताभिर्मयि कृतः **शंसः** स्तुतिः, **ज्याया-**न्ज्येष्ठो भ्राता तस्य **शंसस्तेन** मयि कृता स्तुतिः, **उत वा**ऽथवा **कनीयान्**कनिष्ठो भ्राता तस्य **शंसस्तेन** मयि कृता स्तुतिः, **तस्मात्**स्तुतिसंघात्प्रमत्तेन मयाऽ**नाधृष्टं** केनापि प्रतीकारेणापरिहार्यं प्रबलं **देवकृतं** देवविषये संपादितं **यदेनः** पापं हे **जातवेद**स्त्वं **तस्मादस्मात्**पापान्**मुमुग्धि** मां मुक्तं कुरु ।

अथ षष्ठीमाह—

यद्वाचा यन्मनसा बाहुभ्यामूरुभ्यामष्ठीवद्भ्याꣳ
शिश्नैर्यदनृतं चकृमा वयम् । अग्निर्मा तस्मादेनसो
गार्हपत्यः प्रमुञ्चतु चकृम यानि दुष्कृता, इति ।

वागादिभि**र्यदनृत**मयुक्तरूपं **वयं चकृम** कृतवन्तः । **वाचा**ऽसत्याभिधानं गुर्वा-दिषु[1] त्वंकारादि[2] च । **मनसा** परानिष्टचिन्तनम् । **बाहुभ्यां** ब्राह्मणताडनादि । **ऊरु-भ्या**मगम्यालिङ्गनादि । **अष्ठीवद्भ्यां** जानुभ्यामगन्तव्यदेशगमनादि । **शिश्नैः** शिश्ने-नायोनौ रेतःसेकादि । बहुवचनाच्चक्षुरादीन्द्रियग्रहः । चक्षुषोद्यदर्कदर्शनादि । श्रोत्रेण गुरुदेवादिनिन्दाश्रवणम् । आस्येनाभक्ष्यभक्षणमित्यादि । **तस्मा**त्सर्व**स्मादेनसो**ऽ**ग्निर्मा प्रमुञ्चतु** । **यानि दुष्कृता**[3] यान्यप्यन्यानि पापानि **चकृम** तेभ्योऽपि **प्रमुञ्चतु** ।

अथ सप्तमीमाह—

येन त्रितो अर्णवान्निर्बभूव येन सूर्यं तमसो
निर्मुमोच । येनेन्द्रो विश्वा अजहादरातीस्ते-
नाहं ज्योतिषा ज्योतिरानशान आक्षि, इति ।

**त्रितो** नाम कश्चित्पुरुषः, स च[4] पौरोडाशिककाण्डेऽङ्गारेणोदकपातनान्निष्पन्न इति श्रुतः । स तृतीयमभ्यपातयत्, ततस्त्रितोऽजायतेति । स च तृती(त्रितो)येन परमेश्वरज्योति-

---

१ ग. प्रका° । २ ख. °षु त्वसत्कारा° । ३ ख. ग. °तानि या° । ४ क. च पुरो° । ५ क. °र्कं पा° । ६ ख. ग. °पावना° ।

षाऽर्णवात्समुद्रसमानात्पापान्निर्बभूव निर्मुक्तो बभूव, तथा येन ज्योतिषा परमेश्वरः स्वर्भानुसंज्ञकासुरेणाऽऽपादितात्तमसः सूर्यं निर्मुमोच निर्मुक्तं कृतवान्, इन्द्रः स्वर्गाधिपतिर्येन परमेश्वरज्योतिषा विश्वा अरातीः सर्वानपि शत्रूनजहात्क्षणान्नाशितवान्, तेन ज्योतिषाऽहमानशानः सर्वतो व्याप्नुवञ्ज्योतिराक्षि पारमेश्वरं ज्योतिः प्राप्तवानस्मि ।

अथाष्टमीमाह—

यत्कुसीदमप्रतीत्तं[1] मयेह येन यमस्य निधिना[2] चरामि ।
एतत्तदग्ने अनृणो भवामि जीवन्नेव प्रति तत्ते दधामि, इति ।

इहास्मिञ्जन्मनि मया स्वीकृतं यत्कुसीदमृणमप्रतीतं केनाप्यालस्यादिनोत्तमर्णेभ्यो न प्रत्यार्पितम्, यमस्य दुष्टशिक्षाधिकारिणो निधिना निधिस्थानीयेन[3] प्रत्यर्पयितव्येन येनर्णेन युक्तोऽहं चरामि, एतदेतेन होमेन तत्तस्मादृणान्मुक्तोऽहमनृणो भूयासम् । जीवन्नेव ते तव प्रसादा[त्त]त्तादृशं प्रतिदधामि प्रत्यर्पयामि । अनेन होमेन तुष्टस्त्वमस्मिन्नेव जन्मनि मां प्रत्यर्पणसमर्थं कुर्विति भावः ।

अथ नवमीमारभ्यैकविंशतिपर्यन्तानां त्रयोदशानां मन्त्राणां प्रतीकानि दर्शयति—

यन्मयि माता यदा पिपेष यदन्तरिक्षं यदाश-
सातिक्रामामि त्रिते देवा दिवि जाता यदाप
इमं मे वरुण तत्त्वा यामि त्वं नो अग्ने स त्वं
नो अग्ने त्वमग्ने अयासि (१), इति ॥

मुमुग्धि सप्त च ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके द्वितीयप्रपाठके
तृतीयोऽनुवाकः ॥ ३ ॥

एते मन्त्राः सर्वेऽप्यनेनैवाभिप्रायेणाच्छिद्रकाण्डे यद्देवा देवहेडनमित्यनुवाके व्याख्याताः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्ये द्वितीयप्रपाठके तृतीयोऽनुवाकः ॥ ३ ॥

---

१ ग. °तीतं म° । २ व. बलिना । ३ ख. ग. °धिस्था° ।

अथ द्वितीये चतुर्थोऽनुवाकः ।

चतुर्थानुवाकोक्तास्वृक्षु प्रथमामाह—

यददीव्यन्नृणमहं बभूवादित्सन्वा संजगर जनेभ्यः ।
अग्निर्मा तस्मादिन्द्रश्च संविदानौ प्रमुञ्चताम्, इति ।

अहमदीव्यन्पुत्रादिरक्षणरूपं व्यवहारं कर्तुमसमर्थः सन्यदृणं बभूव प्राप्तवानस्मि, यद्वा तदृणं जनेभ्य उत्तमर्णेभ्योऽदित्सन्प्रत्यर्पयितुमनिच्छन्संजगर सम्यग्भक्षितवानस्मि, अग्निरिन्द्रश्च संविदानौ परस्परमैक्यं गतौ मां तस्मादृणान्मुञ्चताम् ।

अथ द्वितीयामाह—

यद्धस्ताभ्यां चकर किल्बिषाण्यक्षाणां वग्नुमुपजिघ्नमानः ।
उग्रंपश्या च राष्ट्रभृच्च तान्यप्सरसावनुदत्तामृणानि, इति ।

यद्यानि किल्बिषाणि पापानि द्रव्यापहरणादीनि हस्ताभ्यामहं कृतवानस्मि । अक्षाणां चक्षुरादीन्द्रियाणां वग्नुं वञ्चनीयं गन्तव्यं रूपादिविषयमित्यर्थः । तं विषयमुपजिघ्नमान उपहतं कुर्वन्नधर्महेतुं कुर्वन्यत्पापं कृतवानस्मि, तानि पापात्मकानि ऋणान्युग्रंपश्या च राष्ट्रभृच्चेत्येतन्नामधारिण्यावप्सरसावनुदत्तामानुकूल्येन प्रत्यर्पयताम् । पापरूपमृणं यथाऽस्माकं न भवति तथा कुरुतामित्यर्थः ।

अथ तृतीयामाह—

उग्रंपश्ये राष्ट्रभृत्किल्बिषाणि यदक्षवृत्तमनुदत्तमेतत् । नेन्न
ऋणानृणव इत्समानो यमस्य लोके अधिरज्जुरायत्, इति ।

हे उग्रंपश्ये हे राष्ट्रभृत्किल्बिषाणि ऋणरूपाणि यानि कृतानि, यदक्षवृत्तं द्यूते पणादिरूपं प्रतिश्रुतमप्रणीतम्, एतत्सर्वमनुदत्तमनुकूले युवामेव दत्तवत्यौ । ऋणानृणयुक्तान्नोऽस्मान्समानः सदृश उत्तमर्णोऽधिरज्जुर्बन्धनार्थमाधिकरज्जुयुक्तः सन्नायास्मानादाय बद्ध्वा नेदृणवो नैर्गुण्याद्दणप्रयुक्तं बन्धनं कुर्यादित्यर्थः । कुत्रेति तदुच्यते—यमस्य लोके मरणादूर्ध्वभाविनि गन्तव्ये लोके । द्वितीय इच्छब्द एवकारार्थः सन्नायेत्यनेन संबध्यते, आदायैव रज्जुभिर्बद्ध्वेत्यर्थः ।

---

१ क. चकार । २ क. °त्तमानुकूल्येन यु° । ३ क. °मानोऽस्मदुत्त° । ख. °मानोऽस्मदधम° । ४ क. °स्मान्नाशाय । ख. °स्मान्नाशनाय । ५ ख. °व नाशयतु ऋण° । ग. °व ऋणयुक्त ऋण° । ६ क. ख. नाशायैव ।

चतुर्थीमारभ्य नवमीपर्यन्तानां षण्णामृचां प्रतीकानि दर्शयति—

अवते हेळ उदुत्तममिमं मे वरुण तत्त्वा
यामि त्वं नो अग्ने स त्वं नो अग्ने, इति ।

" अवते हेड उदुत्तमम् " इति द्वयं वैश्वानरो न इत्यत्र व्याख्यातम् । "इमं मे वरुण तत्त्वा यामि" इति द्वयमिन्द्रं वो विश्वतस्परीत्यत्र व्याख्यातम् । " त्वं नो अग्ने स त्वं नो अग्ने" इति द्वयमायुष्ट आयुर्दा अग्न इत्यनुवाके व्याख्यातम् ।

अथ दशमीमाह—

संकुसुको विकुसुको निर्ऋथो यश्च निस्वनः ।
तेऽ१स्मद्यक्ष्ममनागसो दूराद्दूरमचीचतम्, इति ।

**संकुसुकः** संक्षेपेण परापवादनशीलः, **विकुसुकः** परापवादनस्य विस्तारयिता, **निर्ऋथः** क्लेशस्य प्रापयिता, **यश्च निस्वनः** पिशुनः, **ते** तादृशा ये वयं स्मोऽस्मत्तेभ्योऽस्मत्तो **यक्ष्मं** रोगनिमित्तं पापम**नागसः** पापरहिता देवा **दूराद्दूर**मतिशयेन दूरं यथा भवति तथाऽ**चीचतं** चातयन्तु, विनाशयन्त्वित्यर्थः ।

अथैकादशीमाह—

निर्यक्ष्ममचीचते कृत्यां निर्ऋतिं च । तेन योऽ१-
स्मत्समृच्छातै तमस्मै प्रसुवामसि, इति ।

**यक्ष्मं** रोगनिमित्तं पापं **निरचीचते** निष्कृष्य निश्चयेन वा चातयामि नाशयामि **कृत्यां** पापरोगादिका(कां) [**निर्ऋति**]मलक्ष्मीं **च** नाशयामि । **यः** शत्रुरस्मदस्मासु **तेन** कृत्यादिना **समृच्छातै** विनाशमाचरे**दस्मै** शत्रवे **तं** यक्ष्मादिकं **प्रसुवामसि** प्रेरयामः ।

अथ द्वादशीमाह—

दुःशंसानुशंसाभ्यां घणेनानुघणेन च ।
तेनान्योऽ१स्मत्समृच्छातै तमस्मै प्रसुवामसि, इति ।

**दुःशंसो**ऽस्मदीयस्य दुष्कृतस्य शंसिता कथयिता, **अनुशंसो**ऽन्येषामग्रेऽस्मदीयस्य दुष्कृतस्य पुनः पुनः शंसिता, **घणो** हननशीलः, **अनुघण**स्तस्यैवानुविधायकः **तेन**

१ क. °तीकान्दर्श° । २ ग. हेड । ३ ग. ते येऽस्म° । ४ ग. चीतयन्तु । ५ ग. °ति । तेन य° । ६ ख. ग. वा भक्षया° ।

तैर्दुःशंसादिभिः सहान्योऽपि यः शत्रुरस्मत्समृच्छातै, अस्मासु विनाशमाचरेत्, अस्मै विनाशकाय तं यक्ष्माणमस्माकं प्रसुवामसि प्रेरयामः ।

अथ त्रयोदशीमाह—

सं वर्चसा पयसा संतनूभिरगन्महि मनसा
सꣳ शिवेन । त्वष्टा नो अत्र विदधातु
रायोऽनुमार्ष्टु तन्वो[१] यद्विलिष्टम् (१), इति ।
कृत्यां निर्ऋतिं च पञ्च च ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके द्वितीयप्रपाठके
चतुर्थोऽनुवाकः ॥ ४ ॥

एवमनेन कर्मणा निर्धूतपापा वयं वर्चसा बलेन संपयसा क्षीरादिना संतनूभिः शोभनैः शरीरैर्मनसा[३] च शिवेन समगन्महि संगता भूयास्म । अत्र कर्मणि त्वष्टा देवो नोऽस्माकं रायो धनानि विदधातु संपादयतु । यच्च विलिष्टं स्वल्पं पापं तन्वोऽस्मच्छरीरस्य संबन्धि विद्यते तदप्यनुमार्ष्टु त्वष्टा शोधयतु ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्ये द्वितीयप्रपाठके चतुर्थोऽनुवाकः ॥ ४ ॥

---

अथ द्वितीये पञ्चमोऽनुवाकः ।

---

पञ्चमानुवाकप्रोक्तर्क्षु[४] प्रथमामाह—

आयुष्टे विश्वतो दधदयमग्निर्वरेण्यः । पुनस्ते
प्राण आयाति परा यक्ष्मꣳ सुवामि ते, इति ।

हे यजमान ते तुभ्यं वरेण्यः श्रेष्ठोऽयमग्निर्विश्वत आयुर्दधत्संपूर्णमायुर्दधातु । पमृत्युना गृहीतोऽपि ते प्राणः पुनरस्यानुग्रहेणाऽऽयाति त्वद्देहे समागच्छतु । ते व यक्ष्मं व्याधिं परासुवामि विनाशयामि[६] ।

अथ द्वितीयामाह—

आयुर्दा अग्ने हविषो जुषाणो घृतप्रतीको घृतयोनिरेधि ।
घृतं पीत्वा मधु चारु गव्यं पितेव पुत्रमभिरक्षतादिमम्, इति ।

---

१ ख. यः प्रापितोऽस्म° । २ ग °न्वो ३अय° । ३ ख. °सा चाऽऽप्यायितेन । ४ क. ख. °क्तास्वृक्षु प्र° । ५ ख. ग. °त्युनिगृ° । ६ क. विनाशयति ।

हेऽग्ने त्वमायुर्दाः सन्नेधि यजमानस्याऽऽयुष्प्रदो भव । कीदृशस्त्वम्—हविषो जुषाण आज्यं सेवमानः । घृतप्रतीको घृतोपक्रमः, आघारादीनां घृतेन हूयमानत्वात् । अवसानेऽपि घृतमेव योनिर्ज्वालोत्पत्तिकारणं यस्यासौ घृतयोनिः, तादृशस्त्वम् । मधु स्वादुतमं चारु शोधितत्वेन निर्मलं गव्यं गोसंबन्धि घृतं पीत्वा पिता पुत्रमिवेमं यजमानमभितो रक्ष ।

अथ तृतीयामाह—

इममग्न आयुषे वर्चसे कृधि तिग्ममोजो वरुण सꣳशिशाधि । मातेवास्मा अदिते शर्म यच्छ विश्वे देवा जरदष्टिर्यथाऽसत्, इति ।

हेऽग्ने, इमं यजमानं कृधि, आयुषे वर्चसे दीर्घायुषे बलाय च समर्थं कुरु । हे वरुण तिग्मं तीक्ष्णमोजो बलं पुनरपि सꣳशिशाधि नियमितं कुरु । हेऽदिते पृथिवि मातेव मातृवदस्मै सुखं प्रयच्छ । हे विश्वे देवा ममायं यजमानो जरदष्टिर्यथाऽसत्तथा कुर्वन्तु ( रुत ) । जरयाऽष्टिर्व्याप्तिर्यस्यासौ जरदष्टिः, बाल्ये यौवने च मरणरहितः । जरामायुःसंपूर्तिपर्यन्तां यथा व्याप्नोति तथा कुर्वि ( रुते ) त्यर्थः ।

अथ चतुर्थीमाह—

अग्न आयूꣳषि पवस आसुवोर्जमिषं च नः । आरे बाधस्व दुच्छुनाम्, इति ।

हेऽग्ने, आयूꣳष्यस्मदीयजीवनानि पवसे यथा वर्धन्ते तथा शोधय । ऊर्जं क्षीरादिरसमिषमन्नं च नोऽस्माकमासुवाऽऽभिमुख्येन प्रेरय । दुच्छुनामुपद्रवमारे दूरे नीत्वा बाधस्व विनाशय ।

अथ पञ्चमीमाह—

अग्ने पवस्व स्वपा अस्मे वर्चः सुवीर्यम् । दधद्रयिं मयि पोषम् ( १ ), इति ।

हेऽग्ने शोभनमपः कर्म यस्यासौ स्वपाः, तादृशस्त्वमस्मे अस्मदीयं वर्चो ब्रह्मवर्चसं सुवीर्यं शोभनसामर्थ्यं च पवस्व शोधयं, वर्धयेत्यर्थः । धनं पुष्टिं च मयि दधत्स्थापय ।

---

१ ग. °व्यं घृ° । २ क. ख. °नं क्षी° । ३ क. ङ. °र्यन्तं य° । ४ ख. ग. शोधयते । ५ क. ख. °य, अर्पये° ।

अथ षष्ठीमाह—

अग्निर्ऋषिः पवमानः पाञ्चजन्यः पुरो-
हितः । तमीमहे महागयम् , इति ।

योऽग्निः, ऋषिरतीन्द्रियज्ञानवान् , पवमानः शोधनशीलः, निषादपञ्चमा वर्णाः पञ्चजनास्तेषु भवः पाञ्चजन्यः, पुरोहितः सर्वकर्मसु पुरस्तान्निहितः, तमेवंगुणमग्निं महागयं महागृहमीमहे प्राप्नुमः ।

अथ सप्तमीमाह—

अग्ने जातान्प्रणुदा नः सपत्नान्प्रत्यजाताञ्जातवेदो नुदस्व ।
अस्मे दीदिहि सुमना अहेळञ्छर्मन्ते स्याम त्रिवरूथ उद्भौ, इति ।

हेऽग्ने नोऽस्माकं जातान्सपत्नान्ये पूर्वमुत्पन्नाः शत्रवस्तान्प्रणुद प्रकर्षेण नाशय । हे जातवेदः पूर्वमनुत्पन्ना इतः परमुत्पत्तिप्रसक्तियुक्तास्तानजाताञ्शत्रून्प्र[ति]णु(नु)-दस्व, उत्पत्तिप्रतिबन्धेन निराकुरु । सुमना अस्मदनुग्रहचित्तस्त्वमहेडन्नक्रुध्यंस्त्रिवरूथः प्राग्वंशसदोहविर्धानरूपगृहत्रयोपेत उद्भावुद्भिदनुष्ठेयकर्मोत्पादकः सन्नस्मे दीदिहि, अस्मान्प्रकाशय । ते तव प्रसादाच्छर्मन्स्याम सुखवान्भवेयम् ।

अथाष्टमीमाह—

सहसा जातान्प्रणुदा नः सपत्नान्प्रत्यजाताञ्जात-
वेदो नुदस्व । अधि नो ब्रूहि सुमनस्यमानो
वयꣳ स्याम प्रणुदा नः सपत्नान् , इति ।

सहसा बलेन जातानित्यादि पूर्ववत् । सुमनस्यमानोऽस्मासु सौमनस्यं प्राप्तः सन्नोऽस्मानधिब्रूहि शत्रुभ्योऽधिकान्ब्रूहि । वयमपि त्वदनुग्रहादधिकाः स्याम, नोऽस्माकं सपत्नाञ्शत्रून्प्रणुद ।

अथ नवमीमाह—

अग्ने यो नोऽभितो जनो वृको वारो जिघाꣳसति ।
ताꣳस्त्वं वृत्रहञ्जहि वस्वस्मभ्यमाभर, इति ।

हेऽग्ने यः शत्रुजनो वृको वृकसदृशः, अरण्यश्वा यथोपद्रवं करोति तथोपद्रवकारीत्यर्थः । अत एव वारोऽस्मद्व्यवहारस्य निवारकः सन्नभितः सर्वतो नोऽस्माञ्जिघां-

१ ग. °हेडञ्छ° ।

सति हन्तुमिच्छति। हे वृत्रहन्वैरिघातिन्नग्ने त्वं तान्वृकवद्धातुकाञ्जहि मारय। अस्मभ्यं तु वसु धनमाभर संपादय।

अथ दशमीमाह—

अग्ने यो नोऽभिदासति समानो यश्च निष्ट्यः।
तं वयꣳ समिधं कृत्वा तुभ्यमग्नेऽपिदध्मसि (२), इति।

हेऽग्ने यः प्रबलः शत्रुर्नोऽस्मानभिदासति हिनस्ति, यश्चान्यः समानबलः[१] सन्निष्ट्यो नित्यं शत्रुत्वेनावस्थितो हिनस्ति, वयं तं हिंसकं समिधं समित्सदृशं कृत्वा हेऽग्ने तुभ्यं त्वदर्थमपिदध्मसि प्रक्षिपामः।

अथैकादशीमाह—

यो नः शपादशपतो यश्च नः शपतः शपात्।
उषाश्च तस्मै निम्रुक्च सर्वं पापꣳ समूहताम्, इति।

अशपतोऽनाक्रोशतो यः शत्रुः शपाच्छपति अधिक्षिपति, यश्चान्यः शत्रुः शपतोऽधिक्षिपतो नोऽस्मान्शपात्प्रत्यधिक्षिपति तस्मै तदर्थं तस्मिन्नवस्थापयितुमुषाश्च निम्रुक्चोदयास्तमयदेवावहोरात्रदेवौ वा सर्वं पापमस्मदीयं समूहतां संगतं कृत्वा तस्मिन्नेवावस्थापयताम्।

अथ द्वादशीमाह—

यो नः सपत्नो यो रणो मर्तोऽभिदासति देवाः।
इध्मस्येव प्रक्षायतो मा तस्योच्छेषि किंचन, इति।

हे देवा यो मर्तो मनुष्योऽस्माकं सपत्नः शत्रुः सन्ननर्थं चिन्तयति यश्चास्माभि सह रणो युद्धकारी सन्नभिदासत्युपक्षपयति, तस्योभयविधस्य संबन्धि किंचन धनादिकं मोच्छेष्यवशिष्टं मा कुरुत, किंतु सर्वं विनाशयत। यथा प्रक्षायतः प्रकर्षेण क्षीयमाणस्य दह्यमानस्येध्मस्य काष्ठस्य न कोऽप्यंशोऽवशिष्यते तद्वत्।

अथ त्रयोदशीमाह—

यो मां द्वेष्टि जातवेदो यं चाहं द्वेष्मि यश्च माम्।
सर्वाꣳस्तानग्ने संदह याꣳश्चाहं द्वेष्मि ये च माम्, इति।

हे जातवेदो यः शत्रुर्मां द्वेष्टि अहं च यं द्वेष्मि। द्विविधो द्वेषः प्रत्यक्षः परोक्षश्च। तत्र प्रत्यक्ष उभयकर्तृको द्वेष उदाहृतः, परोक्षमुभयकर्तृकं द्वेषं सूचयितुं यश्च

१ ख. ग. समानः।

मामिति पुनरुक्तिः। एवं च द्वेष्यो द्वेष्टा च द्वौ प्रत्यक्षौ द्वौ च परोक्षौ तांश्चतुर्विधान्सर्वान्, हेऽग्ने संदह सम्यग्भस्मी कुरु। यौ मुख्यौ द्वेष्यद्वेष्टारौ तद्द्वारा तदीया अन्येऽपि द्वेष्या द्वेष्टारश्च ये सन्ति तान्संग्रहीतुं याꣳश्चाहमिति पुनरुक्तिः। तान्सर्वांश्च संदहेति पूर्वत्रान्वयः॥

अथ चतुर्दशीमाह—

**यो अस्मभ्यमरातीयाद्यश्च नो द्वेषते जनः। निन्दाद्यो**
**अस्मान्दिप्साच्च सर्वाꣳस्तान्मꣳष्मषा कुरु, इति।**

शत्रवस्त्रिविधा अरातयो द्वेषिणो निन्दकाश्चेति। तत्र दातव्यत्वेन प्राप्तं धनं यो न ददाति सोऽयमरातिः। कार्यविघातं यः करोति स द्वेषी। वाग्दौर्जन्यमात्रं यः करोति स निन्दकः। हन्तुकामश्चतुर्थः। तत्र योऽस्मभ्यमरातीयादरातित्वमिच्छति, यश्च जनो नोऽस्मान्द्वेषते कार्यनाशेन बाधते योऽप्यन्योऽस्मान्निन्दाद्दौर्जन्यान्निन्दति, यश्चापरोऽस्मान्दिप्साद्दम्भितुं हिंसितुमिच्छेत्। तान्सर्वाञ्जनान्मꣳष्मषा कुरु चूर्णनभस्मीकरणादिजन्यस्य शब्दस्यानुकरणं मष्मषेति, चूर्णीकृत्य भस्मी कुर्वित्यर्थः॥

अथ पञ्चदशीमाह—

**सꣳशितं मे ब्रह्म सꣳशितं वीर्यं१ बलम्।**
**सꣳशितं क्षत्रं मे जिष्णु यस्याहमस्मि पुरोहितः, इति।**

मे मदीयं ब्रह्म ब्राह्मण्यं संशितं सम्यक्तीक्ष्णीकृतं शास्त्रीयमार्गेण कृतमित्यर्थः। तथा वीर्यमिन्द्रियशक्तिर्बलं शरीरदर्पस्तदुभयं संशितं सम्यक्स्वस्वकार्यक्षमं कृतम्। तथा यस्य क्षत्रस्य राज्ञोऽहं पुरोहितोऽस्मि मे मदीयं तत्क्षत्रं जिष्णु जयनशीलं यथा भवति तथा संशितम्, अस्त्विति शेषः।

अथ षोडशीमाह—

**उदेषां बाहू अतिरमुद्वर्चो अथो बलम्।**
**क्षिणोमि ब्रह्मणाऽमित्रानुन्नयामि स्वाँ१ अहम्, इति।**

एषां स्वकीयानां राजब्राह्मणादीनां मध्य एकैकस्य बाहू उदतिरमुत्कर्षेण वर्धितवानस्मि। लौकिकोक्तिरियम्, लोके हि योऽन्यस्मादुत्कृष्टो भवति तं जना एवमाहुः

---

१ क. च सति द्वे। २ ग. द्वेष्टारौ। ३ ग. °न्यो जनो निन्दा°। ४ क. °न्दान्नि°। ५ ख. ग. वीर्यं ब°। ६ क. °तीक्ष्णं कृ°। ७ क. °रजशक्तिस्त°। ८ ग. °कस्वस्य का°। ९ ख. ग. °म्। अथ। १० ग. स्वां ३।

स्वकीयं हस्तमुपरितनं कृतवानिति । वर्चः कान्तिः, तामप्युदतिरम्, अथो अपि च बलं शरीरशक्तिस्तामप्युदतिरमुत्कर्षं प्रापयामि । ब्रह्मणा मन्त्रसामर्थ्येनामित्रानमित्रान्क्षिणोमि क्षीणान्करोमि । स्वान्स्वकीयान्पुरुषानहमुन्नयामि, उत्कर्षं प्रापयामि ।

अथ सप्तदशीमाह—

पुनर्मनः पुनरायुर्म आगात्पुनश्चक्षुः पुनः श्रोत्रं म आगात्पुनः प्राणः पुनराकूतं म आगात्पुनश्चित्तं पुनराधीतं म आगात्। वैश्वानरो मेऽदब्धस्तनूपा अवबाधतां दुरितानि विश्वा (३), इति ॥

पोषं दध्मसि पुरोहितश्चत्वारि च ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके प्रथमप्रपाठके पञ्चमोऽनुवाकः ॥ ५ ॥

मनःप्राणादीनां पापेन योऽपक्षयः प्राप्तस्तस्य पापस्यानेन कर्मणा विनाशितत्वान्मे मनः पुनरप्यागादस्मिञ्शरीरे समागच्छतु । एवमायुरादयोऽपि समागच्छन्तु । आकूतं संकल्पितं कार्यम् । चित्तं मनोजन्यं ज्ञानम् । आधीतं साकल्येन पठितो वेदः । एतेषां सर्वेषामागमनार्थं वैश्वानरो मे विश्वा सर्वाणि दुरितानि अवबाधतां विनाशयतु । कीदृशो वैश्वानरः । अदब्धः केनाप्यहिंसितः । तनूपा मदीयशरीरपालकः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्ये द्वितीयप्रपाठके पञ्चमोऽनुवाकः ॥ ५ ॥

---

अथ द्वितीये षष्ठोऽनुवाकः ।

---

अथ षष्ठानुवाकोक्तास्वृक्षु प्रथमामाह—

वैश्वानराय प्रतिवेदयामो यदीनृणं संगरो देवतासु ।
स एतान्पाशान्प्रमुचन्प्रवेद स नो मुञ्चातु दुरितादवद्यात्, इति ।

यदीनृणं यदेव प्रसिद्धमृणं देवतासु संगरः प्रतिज्ञारूपेण स्तुत्या संपादितम् । संगरशब्दः प्रतिज्ञावाची । प्रतिज्ञा चैवं श्रूयते— ' त्रिभिर्ऋणवा जायते ब्रह्मचर्येण

---

१ क. ख. °क्षिम° । २ क. ख. °रम् । ब्र° । ३ ख. ग. 'दितः । सं° ।

ऋषिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्यः' इति । तदेतदृणं त्रिविधं वैश्वानरायात्मस्वामिने प्रतिवेदयामो विज्ञापयामः । तत्र देवताशब्देनर्षयः पितरश्चोपलक्षिताः । स वैश्वानर एतानृणत्रयरूपान्पाशान्प्रमुचन्प्रमोक्तुं प्रवेद प्रकर्षेण जानाति । सोऽभिज्ञो वैश्वानरो नोऽस्मान्दुरितात्परलोकविरोधिनः पापादवद्यादिह लोके निन्दादोषाच्च मुञ्चातु मुक्तान्करोतु ।

अथ द्वितीयामाह—

वैश्वानरः पवयान्नः पवित्रैर्यत्संगरमभिधावाम्याशाम् । अनाजानन्मनसा याचमानो यदत्रैनो अव तत्सुवामि, इति ।

वैश्वानरो देवो नोऽस्मान्पवित्रैः शुद्धिहेतुभिर्होमादिभिः पवयाच्छोधयतु । यद्येन शोधनेन संगरं श्रुत्युक्तां प्रतिज्ञामृणत्रयरूपामाशां मयाऽपि प्रत्यर्पणीयत्वेनाऽऽशंसनीयामभिधावाम्याभिमुख्येन शीघ्रं प्राप्नोमि, तादृशं पावनं कुर्यादित्यर्थः । अनाजानन्नृणनिर्मोचनोपायान्सर्वानप्यजानन्मनसा याचमानोऽनृणो भूयासमिति सर्वदा प्रार्थयमानोऽस्मि । अत्रोपायापरिज्ञाने यदेनः पापमस्ति तत्पापमवसुवामि वैश्वानरप्रसादेन विनाशयामि ।

अथ तृतीयामाह—

अमी ये सुभगे दिवि विचृतौ नाम तारके ।
प्रेहामृतस्य यच्छतामेतद्बद्धकमोचनम्, इति ।

दिव्याकाशे विचृतौ नाम विचृन्नामयुक्ते द्वे तारके लोके मैघाशब्देन व्यवह्रियमाणे सुभगे सौभाग्ययुक्ते अमी अमू प्रत्यक्षेणास्माभिर्दृश्यमाने ये विद्येते ते उभे इह कर्मण्यमृतस्यर्णापाकरणरूपममृतं सुखं प्रयच्छताम् । एतत्तारकाभ्यां दत्तममृतं सुखं बद्धकस्य मम मोचनमृणमोचनसाधनम् । ऋणत्रयेण यो बद्धः स एवं वाऽ(चा)त्यन्तकुत्सितत्वाद्बद्धक इत्युच्यते । पितृदेवताकाभ्यामाभ्यां तारकाभ्यां नामवृत्त्यादिप्रकाशनेन तस्मादृणत्रयान्मुक्तो भवामीत्यभिप्रायः ।

अथ चतुर्थीमाह—

*विजिहीर्ष्व लोकान्कृधि बन्धान्मुञ्चासि बद्धकम् ।
योनेरिव प्रच्युतो गर्भः सर्वान्पथो अनुष्व, इति ।

* विजिहीर्ष्मेत्यपि वैदिकानां क्काचित्कः पाठः ।

१ ग. °त्वेन शास° । २ ग. प्रपातनं । ३ क. मूलपदेन । ४ क. °व लोके कु° । ५ ख. °काभ्यां ता° । ग. °काभ्यां मघाभ्यां ।

अत्र मन्त्रद्रष्टा कश्चिदृषिरधमर्णं संबोध्य ब्रूते—हेऽधमर्ण विजिहीर्ष्वं विहर्तु-मिच्छ पारतन्त्र्यराहित्येन सुखसंचारो विहारस्तत्सिद्ध्यर्थं लोकान्कृधि पुण्यानुष्ठाने-नोत्तमलोकान्संपादय । बद्धकमृणेन कुत्सितेन बद्धमात्मानं बन्धादृणत्रयरूपान्मुञ्चासि मुक्तं कुरु । बन्धाद्विमोके दृष्टान्तः—योनेः प्रच्युतो गर्भ इव, उदरमध्ये सर्वावयव-संकोचेन निर्बध्यमानो गर्भो योनेर्बहिः पतितो यथा निर्बन्धान्मुक्तो भवति तद्वत् । तदृ-णत्रयान्मुक्तस्त्वं सर्वान्पथः पुण्यलोकमार्गाननुष्व सेवस्वेत्यर्थः ।

अथ पञ्चमीमाह—

स प्रजानन्प्रतिगृभ्णीत विद्वान्प्रजापतिः प्रथमजा ऋतस्य ।

अस्माभिर्दत्तं जरसः परस्तादच्छिन्नं तन्तुमनुसंचरेम (१), इति ।

स प्रजापतिरस्माभिर्दत्तं हविः प्रतिगृभ्णीत प्रतिगृह्णीत स्वी करोतु । कीदृशः प्रजापतिः—ऋतस्य प्रथमजाः सत्यस्य परब्रह्मणः प्रथमः पुत्रः । किं कुर्वन्, प्रजा-नन्नस्मत्प्रार्थनां प्रकर्षेण निरूपयन् । विद्वान्सर्वार्थसाधनाभिज्ञः । तस्य प्रजापतेः प्रसा-देन जरसः परस्ताद्वयोहानेरूर्ध्वमच्छिन्नं तन्तुं विच्छेदरहितं पुत्रपौत्रादिसंतानमनुसं-चरेम, अनुप्रविश्य सम्यगृणनिर्मुक्तो विश्रम्भेण चरेम ।

अथ षष्ठीमाह—

ततं तन्तुमन्वेके अनुसंचरन्ति येषां दत्तं पित्र्यमायनवत् । अब-न्ध्वेके ददतः प्रयच्छाद्दातुं चेच्छकवांꣳस स्वर्ग एषाम्, इति ।

एके पुरुषाः केचित्ततं पुत्रपौत्रादिरूपेण विस्तीर्णं तन्तुमनु स्वकीयं संतानमनुप्र-विश्यानुसंचरन्ति पुण्यलोकाननुक्रमेण प्राप्नुवन्ति । द्विविधो हि विग्रहः पुत्ररूप-श्चाऽऽत्मरूपश्चेति । तयोर्मध्ये पुत्ररूपेणेह लोके पुण्यं कुर्वन्नेवाऽऽस्ते । पितृरूपेण लोकान्तरेषु संचरति । एतदेवाभिप्रेत्यैतरेयोपनिषद्युक्तम्—"सोऽस्यायमात्मा पुण्येभ्यः कर्मभ्यः प्रतिधीयते । अथास्यायमितर आत्मा कृतकृत्यो वयोगतः प्रैति" इति । अत आकारभेदेन तन्तुमनुप्रविश्येति पुण्यलोकाननुसंचरतीत्युभयमप्युपपद्यते । येषां पुरुषाणां पित्र्यमृणमायनवद्दत्तम्, आयनमागमः शास्त्रं तदस्यास्तीत्यायनवद्यथा-शास्त्रं दत्तमित्यर्थः । पित्र्यमित्येतदन्ययोरपि द्वयोर्ऋणयोरुपलक्षणम् । तदृणत्रयं यैर्दत्तं तादृशाः केचिदनुसंचरन्तीति पूर्वत्रान्वयः । एकेऽपरे केचित्पुरुषा अबन्धु पुत्रपौत्रादि-बन्धुरहिताः सन्तः पित्र्यमृणमपाकर्तुमशक्ता अपि ददतो धनदायिन उत्तम-

१ ग. °च्छक्नुवा° । २ क. ग °वाꣳश्चः स्व° । ३ ग. हि पितुर्विग्र° । ४ °रूपः स्वात्म° ।

र्णस्य प्रयच्छात्प्रयच्छन्ति तद्धनं प्रत्यर्पयन्ति, ते पुरुषा दातुं शक्तवाऽशक्तवन्तश्चेत्, एषां पुरुषाणां स स्वर्गो भवत्येव । पुत्रोत्पत्तेर्दैवाधीनत्वेऽपि गृहीतं धनमवश्यं प्रत्यर्पणीयमेवेत्यर्थः ।

अथ सप्तमीमाह—

आरभेथामनुसꣳरभेथाꣳ समानं पन्थामवथो घृतेन । यद्वां पूर्तं परिविष्टं यदग्नौ तस्मै गोत्रायेह जायापती सꣳरभेथाम्, इति ।

हे जायापती कर्माधिकारिणाविह जन्मनि घृतेन द्रव्येणाऽऽरभेथां कर्मारम्भं कुरुतम् । अनुसंरभेथां परस्परमनुकूलौ संगतौ कदाचिदप्यवियुक्तावेव भवतम् । तयोरुभयोः समानं साधारणं पन्थां पुण्यलोकमार्गमवथो रक्षतम् । वां युवयोर्यत्पूर्तं पितृभ्यो दत्तमन्नादि, यदग्नौ परिविष्टं पारिप्रापितं हविः, तस्मै तदविच्छेदनं यथा क्रियेतेत्येतमर्थं संरभेथां त्वरेथां न तु तूष्णीमासाथाम् । तच्च गोत्रायोपयुज्यते, गोत्रसंभवाः पूर्वे परे च ये सन्ति तेषां सर्वेषामिदमनुष्ठानमुपयुक्तम् ।

अथाष्टमीमाह—

यदन्तरिक्षं पृथिवीमुत द्यां यन्मातरं पितरं वा जिहिꣳसिम । अग्निर्मा तस्मादेनसो गार्हपत्य उन्नो नेषद्दुरिता यानि चकृम, इति ।

वयमन्तरिक्षं जिहिꣳसिम हिंसितवन्त इति यत्पापमस्ति, तथा पृथिवीं जिहिꣳसिमेति यदस्ति, उतापि च द्यां जिहिंसिमेति यदस्ति । लोकत्रयवर्तिनां प्राणिनामपचारस्तद्धिंसा । तथा मातरं पितरं वा जिहिꣳसिमेति यदस्ति, तस्मात्सर्वस्मादेनसोऽस्मान्गार्हपत्योऽग्निर्गृहपतेर्यजमानस्य संबन्धी वह्निरुन्नेषदुन्नयतु, पापादुद्धतान्करोतु । यानि चान्यानि दुरितानि चकृम तेभ्योऽप्युन्नयतु ।

अथ नवमीमाह—

भूमिर्माताऽदितिर्नो जनित्रं भ्राताऽन्तरिक्षमभिशस्त्या नः । द्यौर्नः पिता पितृयाच्छं भवासि जामिमित्वा मा विवित्सि लोकात्, इति ।

येयं भूमिः सेयं नोऽस्माकं माता लोकानां सर्वेषां निर्मात्री । अदितिर्देवी

१ ग. शक्नुवंसः शक्नुत्र° । २ ग. °च्छेदेन य° । ३ ग. °युक्ते । अ° । ४ ग. वयं येऽ° । ५ ग. °कारो हिंसा । ६ ग. लोकान् ।

जनित्रं जननीस्थानीया । भूमिरचेतना निवासाधिकरणभूता, तदभिमानिनी देवताऽदितिः । यदिदमन्तरिक्षं तदस्माकं भ्राता भ्रातृस्थानीयम् । यदेनोऽस्माभिः कृतं तदभिशस्तः शत्रुस्थानीयम् । येयं द्यौः सेयं नः पिता पितृस्थानीया । यथा परमेश्वरेण संपादितः सर्वसाधारणोऽयं बन्धुवर्गः, तथा हे यजमान बन्धुवर्गसंपादनार्थं त्वं पितृयात्पितृत्वमिच्छञ्छं भवासि सुखं प्राप्नोषि । ऐहिकामुष्मिकसुखसिद्धये पुत्रानुत्पादयेत्यर्थः , जामि मित्वाऽऽलस्येन पुत्रोत्पत्तिरहित एव सन्मृत्वा लोकादृणत्रयरहितानां योग्यं लोकं मा विवित्सि नैव लप्स्यासि (से) ।

अथ दशमीमाह—

यत्रं सुहार्दः सुकृतो मदन्ते विहाय रोगं तन्वां-
१५ स्वायाम् । अश्लोणाङ्गैरह्रुताः स्वर्गे
तत्रं पश्येम पितरं च पुत्रम् , इति ।

यत्र यस्मिन्पुण्यलोके स्थिताः सुहार्दः शोभनहृदयोपेताः सुकृतः पुण्यकर्माणः स्वायां तन्वां स्वकीये शरीरे रोगं विहाय परित्यज्य मदन्ते हृष्यन्ति, अश्लोणाङ्गैः श्लोणो रोगविशेषस्तद्रहितैरङ्गैर्युक्ता अह्रुताः कौटिल्यरहिताः केनचिदप्यवञ्चिताः सर्वे वयं तत्र स्वर्गे स्थित्वा पितरं पुत्रं च पश्येम । तादृशं जन्म भूयादित्यर्थः ।

अथैकादशीमाह—

यदन्नमद्म्यनृतेन देवा दास्यन्नदास्यन्नुत वाऽकरिष्यन् । यद्देवानां चक्षुष्यागो अस्ति यदेव किंचं
प्रतिजग्राहमग्निर्मा तस्मादनृणं कृणोतु , इति ।

हे देवा अहं दास्यन्नदास्यन्प्रत्यर्पणं चिकीर्षुरचिकीर्षुर्वा, तात्कालिकेन सर्वथ प्रत्यर्पयिष्यामीत्येतादृशेनानृतवचनेन धनमादाय यदन्नमद्मि भक्षयामि, अथवा किंचित्कार्यं परकीयं करिष्यामीत्यनेनानृतेन वचनेन धनमादाय तत्कार्यमकरिष्यन्यदन्नमाद्मि, यदपि देवानां चक्षुषि दृष्टिविषये मया कृतमागः पापमस्ति, आदित्याभिमुख्येन मूत्रविसर्गादि ।

तथा च स्मर्यते—

" प्रत्यादित्यं प्रत्यनिलं प्रति गां च प्रति द्विजम् ।
मेहन्ति ये च पापिष्ठास्ते भवन्ति गतायुषः " इति ॥

---

१ क. ख. लभ्यते । २ ग. °न्ना ३ । ग. °रह्वता स्व° ४ ख. °ह्रुता स्व° । ५ ग. अह्वताः ।

किंच यदेव किंचिच्छूद्रादिधनं प्रतिजग्राहं प्रतिगृहीतवानस्मि, तस्मात्सर्वस्मादेनसो विमुच्यायमग्निरनृणमृणरहितं करोतु ।

अथ द्वादशीमाह—

यदन्नमद्मि बहुधा विरूपं वासो हिरण्यमुत गामजामविम् । यद्देवानां चक्षुष्यागो अस्ति यदेव किंच प्रतिजग्राहमग्निर्मा तस्मादनृणं कृणोतु, इति ।

बहुधा विरूपं द्रव्यदोषोत्कर्तृदोषाद्देशकालदोषादिना वा बहुप्रकारेण शास्त्रनिषिद्धं यदन्नमाद्मि तथा वस्त्रादीनपि निषिद्धान्स्वी करोमि । यद्देवानामित्यादि पूर्ववत् ।

अथ त्रयोदशीमाह—

यन्मया मनसा वाचा कृतमेनः कदाचन । सर्वस्मात्तस्मान्मेळितो[2] मोग्धि त्वꣳ हि वेत्थ यथातथम् (२), इति ।

चरेम पुत्रꣳ षट् च[3] ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके द्वितीयप्रपाठके षष्ठोऽनुवाकः ॥ ६ ॥

मया कर्त्रा कदाचनेह जन्मनि जन्मान्तरे वा यदा कदाचिदपि मनसा वाचा वा यदेनः कृतम्, हेऽग्नेऽस्माभिरीडितः स्तुतस्त्वं मां तस्मात्सर्वस्मादेनसो[4] मोग्धि मुञ्च हि यस्मात्कारणाद्धेऽग्ने त्वं यथातथं वेत्थ वस्तुनस्तथात्वमनतिक्रम्य यथातथं यस्य पापस्य यः प्रतीकारस्तस्य तत्सर्वं जानासि, तस्मान्मां पापान्मुञ्च ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्ये द्वितीयप्रपाठके षष्ठोऽनुवाकः ॥ ६ ॥

---

अथ द्वितीये सप्तमोऽनुवाकः ।

---

षष्ठेऽनुवाके कूष्माण्डहोमाङ्गमन्त्राः समापिताः । सप्तमे स होमो[6] विधीयते । तदर्थमाख्यायिकामाह—

वातरशना ह वा ऋषयः श्रमणा ऊर्ध्वमन्थिनो बभूवुस्तानृषयोऽर्थमायꣳस्ते निलायमचरꣳस्तेऽनुप्राविशुः कूश्मा-[5]

---

१ क. °षाद्दे° । २ ग. °न्मेडितो । ३ क. ख. च । ४ क. ख. °स्माद्दे° । ५ ग. कूश्मण्ड° ।
६ ख. °मे हो° ।

ण्डानि ताꣳस्तेष्वन्वविन्दञ्छ्रद्धया च तपसा च—, इति।

पूर्वप्रपाठके ततोऽरुणाः केतवो वातरशना ऋषय उदतिष्ठन्निति त्रिविधा ऋषय आख्याताः। तन्मध्ये ये वातरशनाख्या ऋषयः श्रमणास्तपस्विन ऊर्ध्वमन्थिन ऊर्ध्वरेतसो बभूवुः, तान्वातरशनाख्यानृषीन्प्रत्यन्ये केचिदृषयोऽर्थमायन्नर्थयितुमागताः। तं वृत्तान्तमादावेवावगत्य किमशक्यमेते करिष्यन्तीतिनिश्चयरहितास्ते वातरशना निलायं कुत्रचिदन्तर्हिता अचरन्। अन्तर्धानस्थानं विचार्य योगसामर्थ्यात्सूक्ष्मशरीरा भूत्वा कूश्माण्डाख्यानि मन्त्रवाक्यान्यनुप्रविष्टाः। इतरे तु महर्षयः श्रद्धापूर्वकेण तपसा शुद्धचित्ताः सन्तो ध्यानेनान्विष्य तेषु कूष्माण्डमन्त्रेष्ववस्थितान्वातरशनाख्यां-स्तानृषीन्प्रत्यक्षेणापश्यन्।

अथ तेषामुभयेषां परस्परसंवादं दर्शयति—

तानृषयोऽब्रुवन्कथा निलायं चरथेति त ऋषी-
नब्रुवन्नमो वोऽस्तु भगवन्तोऽस्मिन्धाम्नि केन वः
सपर्यामेति तानृषयोऽब्रुवन्पवित्रं नो ब्रूत येनारे
पसः स्यामेति त एतानि सूक्तान्यपश्यन्—, इति।

तान्वातरशनानृषय इतरेऽब्रुवन्, हे वातरशनाः कथा केन हेतुना निलायं निलीय चरथेति। ते च वातरशनास्तैः पृष्टाः सन्तस्तानुपचरितुमिदमब्रुवन्, हे भगवन्त ऐश्वर्यादिषड्गुणयुक्ता वो युष्मभ्यं नमस्कारोऽस्तु महात्मानो यूयमस्मदीये स्थाने समागता अतोऽत्र केन साधनेन युष्मान्परिचरेमेति। ततस्तान्वातरशनानितरेऽब्रुवन्, येन साधनेन वयमरेपसः पापरहिताः स्याम तादृशं पवित्रं शुद्धिकारणमस्मभ्यं ब्रूतेति। ते वातरशना अप्रयासेन सहसा शुद्धिप्रदं विचार्यैतानि वक्ष्यमाणानि सूक्तानि तेषां कथनयोग्यानीति निश्चितवन्तः॥

अथ तदुक्तं प्रयोगक्रमं दर्शयति—

यद्देवा देव हेळनं यददीव्यन्नृणमहं बभूवाऽऽयुष्टे विश्वतो दध-
दित्येतैराज्यं जुहुत वैश्वानराय प्रतिवेदयाम इत्युपतिष्ठत
यदर्वाचीनमेनो भ्रूणहत्यायास्तस्मान्मोक्ष्यध्व इति—, इति।

---

१ ग. °षयो य आ°। २ क. ख. °वा°। ३ ग °ना अनि°। ४ ग. °नान्वीक्ष्य ते°। ५ ख. ग. कूश्माण्ड°। ६ ग. °क्षेण किलार°। ७ ग. धाम्नि। ८ ग °नेनारे°। ९ क. ख. न्तः। °त। १० ग. हेडनं।

अनुवाकत्रयेण होमः । चतुर्थानुवाकेनोपस्थानम् । वेदत्रयविद्ब्राह्मणो भ्रूणस्तदीयहत्याया अर्वाचीनं यत्पापं तस्मात्सर्वस्मान्मुक्ता भविष्यथेति ॥

तदुत्तेरं महर्षिवृत्तान्तमाह—

त एतैरजुहवुस्तेऽरेपसोऽभवन्—, इति ।

अरेपसः पापरहिताः ॥

इदानीं विधत्ते—

कर्मादिष्वेतैर्जुहुयात्पूतो देवलोकान्समश्नुते ( १ ), इति ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके द्वितीयप्रपाठके सप्तमोऽनुवाकः ॥ ७ ॥

प्रारप्स्यमानकर्मारम्भेषु कूष्माण्डहोमेन पूतस्य देवलोकप्राप्तिर्भवति ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्ये द्वितीयप्रपाठके सप्तमोऽनुवाकः ॥ ७ ॥

---

अथ द्वितीयेऽष्टमोऽनुवाकः ।

---

सप्तमे कूष्माण्डहोमः कर्मादिषु विहितः । अष्टमे दीक्षादिकं विधीयते । तत्राऽऽदौ कर्मादिव्यतिरिक्तस्थले होमं विधत्ते—

कूश्माण्डैर्जुहुयाद्योऽपूत इव मन्येत—, इति ।

यः पुमान्संदिग्धेन पापेन स्वस्य पूतत्वं नास्तीति मनसि शङ्कते स पुमान्कूश्माण्डहोमेन पूतो भवति ।

अथ महापातकसमस्य पापस्य निवृत्त्यर्थं होमं विधत्ते—

यथा स्तेनो यथा भ्रूणहैवमेष भवति

योऽयोनौ रेतः सिञ्चति—, इति ।

अयोनौ प्रतिषिद्धयोनौ यो रेतः सिञ्चति एष सुवर्णस्तेयकारिणा भ्रूणहत्याकारिणा च समो भवति, सोऽपि कूश्माण्डैर्जुहुयात् ।

तेनोक्तेन होमेन यथोक्तपापनिवृत्तिं दर्शयति—

यदर्वाचीनमेनो भ्रूणहत्यायास्तस्मान्मुच्यते—, इति ।

---

१ ग. °ति । इतरम° । २ ख. °त्तमम° । ३ ग. प्रारप्स्यमाणकर्मप्रार° । ४ क. ग. °श्माण्ड° । ५ ख. ग कूश्माण्ड° । ६ क. ख. °श्माण्डेन जुहु° ।

भ्रूणहत्यासमस्यापि मुख्यभ्रूणहत्याया अर्वाचीनत्वात्तेन होमेन निवृत्तिर्युज्यते।

भ्रूणहत्याया अर्वाचीनमपि तारतम्यतो भवति तस्मात्कथमेकेन होमेन निवृत्तिरित्याशङ्क्य दीक्षातारतम्येनेत्युत्तरं दर्शयति—

यावदेनो दीक्षामुपैति दीक्षित एतैः संतति जुहोति—, इति।

अल्पं महद्वा यावदेनो भवति तदनुसारेणाल्पां महतीं वा दीक्षां कृत्वा तैस्तैनस उचिते काले सतति प्रतिदिनं जुहोति तत्र तारतम्येन षड्दीक्षाभेदाः।

तत्र प्रथमं दीक्षाभेदं दर्शयति—

संवत्सरं दीक्षितो भवति संवत्सरादेवाऽऽत्मानं पुनीते—, इति।

न मांसमश्नीयादितिनियमाचरणं दीक्षा पापाधिक्ये सति संवत्सरं दीक्षितो भूत्वा तस्मिन्संवत्सरे प्रतिदिनं जुहुयात्। तया संवत्सरदीक्षया स्वात्मानं शोधयति।

पापानुसारेण दीक्षायाः पक्षान्तराणि विधत्ते—

मासं दीक्षितो भवति यो मासः स संवत्सरः संवत्सरादेवाऽऽत्मानं पुनीते चतुर्विंशतिꣳ रात्रीर्दीक्षितो भवति चतुर्विंशतिरर्धमासाः संवत्सरः संवत्सरादेवाऽऽत्मानं पुनीते द्वादश रात्रीर्दीक्षितो भवति द्वादश मासाः संवत्सरः संवत्सरादेवाऽऽत्मानं पुनीते षड्रात्रीर्दीक्षितो भवति षड्वा ऋतवः संवत्सरः संवत्सरादेवाऽऽत्मानं पुनीते तिस्रो रात्रीर्दीक्षितो भवति त्रिपदा गायत्री गायत्रिया एवाऽऽत्मानं पुनीते—, इति।

पापबाहुल्ये सति संवत्सरानियमेन या शुद्धिः पापाल्पत्वे सा शुद्धिर्मासमात्रेण संमवाप्यते। एवमुत्तरेष्वपि। अतः सर्वेषां संवत्सरसाम्यम्। गायत्रीपादानां त्रित्वसाम्येन त्रिरात्रदीक्षाया गायत्रीत्वात्तयैव शुद्धिर्भवति।

अथ नियमान्विधत्ते—

न मांसमश्नीयान्न स्त्रियमुपेयान्नो-
पर्यासीत जुगुप्सेतानृतात्—, इति।

---

१ ग. ˚ते। तेन भ्रू˚। २ ग. ˚चीनानाप˚। ३ ग. ˚तम्योपेतत्वात्क˚। ४ क. तद्देन˚। ५ ग. उपाचिते। ६ ग. ˚ले प्र˚। ७ ख. षड्भेदा दीक्षाः। त˚। ग. षड्भेदाः। ८ ख. ˚दित्यदिनि˚। ९ ख. ग. दीक्षायाः। १० ग. पापह्रासानु˚। ११ ग. गायत्र्या। १२ ख. संपाद्यते। ग. समाप्यते १३ क. ˚त्तरैरपि।

उपरि खट्वादौ । स्पष्टमन्यत् ।

अथ वर्णभेदेन दीक्षादिनेषु भोजनद्रव्यविशेषं विधत्ते—

**पयो ब्राह्मणस्य व्रतं यवागू राजन्यस्याऽऽमिक्षा वैश्यस्य—इति ।**

व्रतं भोजनमित्यर्थः ।

तदेतद्व्रतं प्रशंसति—

**अथो सौम्येऽप्यध्वर एतद्व्रतं ब्रूयात्—, इति ।**

अपि च न केवलं कूश्माण्डहोमकर्मण्येवैतद्व्रतं किंतु सोमयागेऽप्येतदेव दीक्षाव्रतं कर्तव्यमित्येव **ब्रूयात्** । यस्मान्महत्यपि यज्ञे व्रतमिदमपेक्षितं तस्मादिदं प्रशस्तम् ।

अशक्तं प्रति कंचिद्विशेषं विधत्ते—

**यदि मन्येतोपदस्यामीत्योदनं धानाः सक्तून्घृतमित्यनुव्रतयेदात्मनोऽनुपदासाय (१), इति ॥**

**इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके द्वितीयप्रपाठकेऽष्टमोऽनुवाकः ॥ ८ ॥**

दीक्षितो **यथोक्तव्रतेनोपदस्याम्युपक्षीणो** भवामीति **यदि मन्येत**, तदानीं **यथोक्त**दीक्षादिव्रतमनु शरीरस्योपक्षयपरिहारार्थमोदनादिकं यत्किंचि**दनुव्रतये**द्भुञ्जीत । **धाना** भृष्टयवतण्डुलाः । **सक्तव**स्तत्पिष्टानि । इतिशब्देनेदृशमन्यदपि विवक्ष्यते ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्ये द्वितीयप्रपाठकेऽष्टमोऽनुवाकः ॥ ८ ॥

---

अथ द्वितीये नवमोऽनुवाकः ।

---

अस्य प्रपाठकस्य स्वाध्यायब्राह्मणमिति समाख्यातः स्वाध्याय एवात्र प्राधान्येन विधेयः । तस्मिंश्च शुद्धः पुमानधिकारी । अतः शुद्धिहेतून्यज्ञोपवीतसंध्यावन्दनकूश्माण्डहोमानभिधाय स्वाध्यायं विधातुमुपाख्यानमाह—

**अजान्ह वै पृश्नीँस्तपस्यमानान्ब्रह्म स्वयंभ्वभ्यानर्षत्त ऋषयोऽभवन्तदृषीणामृषित्वं तां देवतामुपातिष्ठन्त यज्ञकामास्त एतं ब्रह्मयज्ञमपश्यन्तमाहरन्तेनायजन्त—, इति ।**

---

१ ख. ग. ख्यानात्स्वाध्या° । २ क. तास्मिञ्शुद्धः ।

कल्पादावेव ब्राह्मणाः सृष्टा न ह्यस्मदादिवत्कल्पमध्ये पुनः पुनर्जायन्ते तस्मादजाः। ते च **पृश्नयः** शुक्लाः स्वरूपेणैव निर्मलाः सन्तोऽपि पुनस्तप आचरन्। तदीयेन तपसा **तुष्टं स्वयंभु ब्रह्म** जगत्कारणत्वेन स्वतः सिद्धं परब्रह्मवस्तु कांचिन्मूर्तिं धृत्वा **तपस्यमानांस्तानृषीननुग्रहीतुमभ्यानर्ष**दाभिमुख्येन प्रत्यक्षमागच्छत्। ततस्ते मुनय ऋषिधात्वर्थविषयत्वा**दृषयोऽभवन्**। तस्मादन्येषामपि ऋषीणामनयैव व्युत्पत्त्यर्षित्वं संपन्नम्। ततस्ते मुनयः सर्वकामप्रदं कंचिद्यज्ञं कामयमानाः स्वयंभुब्रह्मरूपां **तां देवतामुपासितवन्तः**। तद्देवतानुग्रहात्ते मुनय **एतं** वक्ष्यमाणं **ब्रह्मयज्ञं** सर्वकामहेतुम**पश्यन्। दृष्ट्वा च तं यज्ञमाहरन्ननु**ष्ठितवन्तः। तेन यज्ञेन देवानपूजयन्त।

ब्रह्म वेदस्तस्याध्ययनमेव संपादितं न तु यज्ञत्वमिति मतिं वारयितुं तत्राऽऽहुतीः संपादयति—

> **यदृचोऽध्यगीषत ताः पयआहुतयो देवानामभवन्यद्यजूꣳषि घृताहुतयो यत्सामानि सोमाहुतयो यदथर्वाङ्गिरसो मध्वाहुतयो यद्ब्राह्मणानीतिहासान्पुराणानि कल्पान्गाथा नाराशꣳसीर्मेदाहुतयो देवानामभवन्ताभिः क्षुधं पाप्मानमपाघ्नन्नपहतपाप्मानो देवाः स्वर्गं लोकमायन्ब्रह्मणः सायुज्यमृषयोऽगच्छन् (१)**, इति॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके द्वितीयप्रपाठके नवमोऽनुवाकः॥ ९॥

पादबद्धमन्त्रा **ऋचस्ता अध्यगीषत**[२] त ऋषयोऽधीतवन्त इति यदस्ति ता अध्ययनक्रिया **देवानां** क्षीरद्रव्याहुत**योऽभवन्**, तदाहुत्या या तुष्टिः सा तेषामृगध्ययनेन[३] संपन्ना। एतदन्यत्रापि योज्यम्। अथर्वभिरङ्गिरोभिश्च दृष्टा मन्त्रा **अथर्वाङ्गिरसः। ब्राह्मणानि** कर्मचोदनाः 'वायव्यꣳ श्वेतमालभेत" इत्यादयः। **इतिहासा** महाभारतादयः। पुराणानि। ब्रह्माण्डादीनि। यद्वा 'देवसुराः संयत्ता[४] आसन्' इत्यादय इतिहासाः। 'आत्मा वा इदमेक एवाग्र आसीन्नान्यत्किंचन[६] मिषत्' इत्यादीनि सृष्ट्यादिप्रतिपादकानि **पुराणानि। कल्पाः** कल्पसूत्राणि प्रयोगप्रतिपादकानि। **गाथा** गायतिचोदिता मन्त्रविशेषा योऽस्य कौष्ठ्येत्यादयः। यमगाथाभिः परिगा-

---

१ ग. ब्रह्मणा°। २ ग. °त. ये त। ३ क. ख. 'ने सं°। ४ ख. संयता। ५ ख. °वमम। ६ ख. °सीन्नैव किंच°। ग. °सीन्नैवेह किंचनाग्र इ°।

यतीति विधानात् । नराशंसपदोपेता नाराशंस्यो होता यक्षन्नराशंसमित्याद्याः । मन्त्रब्राह्मणान्तैःपठितानामपि पुनरुक्तिः फलातिशयद्योतनार्थम् । मेदाहुतयो मांसाहुतयः । ताभिराहुतिभिर्देवाः क्षुद्रूपं पाप्मानं विनाशितवन्तः । स्वाध्यायजन्यतृप्त्या क्षुधं विस्मृतवन्तः । ततः क्षुद्रूपपापरहिता देवाः सुखमनुभवितुं स्वर्गं गताः । ऋषयश्च पूर्वोक्तौ अध्ययनेन ब्रह्मयज्ञेन जगत्कारणस्य ब्रह्मणः सायुज्यं प्राप्ताः । ब्रह्मज्ञानोत्पादनद्वारा मुक्तिहेतुत्वं ब्रह्मयज्ञस्य युक्तम् । अत एव ज्ञानसाधनेषु प्राथम्येन वेदानुवचनं वाजसनेयिनः समामनन्ति—" तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन " इति ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्ये द्वितीयप्रपाठके नवमोऽनुवाकः ॥ ९ ॥

अथ द्वितीये दशमोऽनुवाकः ।

नवमे ब्रह्मयज्ञविधिप्रस्तावार्थमुपाख्यानमुक्तम् । इदानीं तद्विधिप्रसङ्गेन पञ्च महायज्ञान्विधत्ते—

पञ्च वा एते महायज्ञाः संतति प्रतायन्ते सतति संतिष्ठन्ते देवयज्ञः पितृयज्ञो भूतयज्ञो मनुष्ययज्ञो ब्रह्मयज्ञ इति–,इति ।

एवं यज्ञानां पाठतः पञ्चत्वं न तु स्वरूपविस्तारेण । सतति सततं दिने दिने प्रतायन्तेऽनुष्ठीयन्ते । सतति प्रतिदिनं संतिष्ठन्ते समाप्यन्ते । यस्मिन्दिन उपक्रमस्तस्मिन्नेव दिने तत्समाप्तिः, न तु यज्ञान्तरवद्दिनान्तरापेक्षा । देवयज्ञ इत्यादीनि तेषां नामानि ।

तत्र देवयज्ञस्य लक्षणमाह—

यदग्नौ जुहोत्यपि समिधं तद्देवयज्ञः संतिष्ठते–,इति ।

पुरोडाशादिहविर्मुख्यं तदलाभे समिधमप्यग्नौ देवानुद्दिश्य जुहोतीति यस्सोऽयं देवयज्ञः । स च सकृद्धोममात्रेण समाप्यते ।

पितृयज्ञस्य लक्षणमाह—

यत्पितृभ्यः स्वधा करोत्यप्यपस्तत्पितृयज्ञः संतिष्ठते—,इति ।

---

१ ग. °द्याः । ब्रा° । २ ख. ग. °णान्तप° । ३ क. °क्षाध्य° । ४ ख. अध्यापने° । ख. °ति । यत्पुरो° । ६ क °ज्ञ०° ।

तत्र पिण्डदानासंभवे जलमात्रमपि पितृभ्यः स्वधाऽस्त्विति स्वधाशब्देन यद्ददाति सोऽयं पितृयज्ञः, । तावतैव समाप्यते ।

भूतयज्ञस्य लक्षणमाह—

यद्भूतेभ्यो बलिꣳ हरति तद्भूतयज्ञः संतिष्ठते—, इति ।

वैश्वदेवानुष्ठानादूर्ध्वं बहिर्देशे वायसादिभ्यो भूतेभ्यो यद्बलिप्रदानं सोऽयं भूतयज्ञः, तावतैव समाप्यते ।

मनुष्ययज्ञस्य लक्षणमाह—

यद्ब्राह्मणेभ्योऽन्नं ददाति तन्मनुष्ययज्ञः संतिष्ठते—, इति ।

वैश्वदेवादूर्ध्वं हन्तकारार्थान्नव्यतिरिक्तमन्नमतिथिभ्योऽन्यचवरेभ्यो ब्राह्मणेभ्यो यद्दीयते स मनुष्ययज्ञः, तावतैव समाप्यते ।

ब्रह्मयज्ञस्य लक्षणमाह—

यत्स्वाध्यायमधीयीतैकामप्यृचं यजुः साम

वा तद्ब्रह्मयज्ञः संतिष्ठते—, इति ।

स्वस्यासाधारणत्वेन पितृपितामहादिपरम्परया प्राप्ता वेदशाखा स्वाध्यायः । तत्र विद्यमानमृगादीनामन्यतममेकमपि वाक्यमधीयीतेति यत्सोऽयं ब्रह्मयज्ञः, तावतैव समाप्यते ।

तत्र विशेषाकारेणाध्ययनं पृथक्पृथक्प्रशंसति—

यदृचोऽधीते पयसः कूल्या अस्य पितॄन्त्स्वधा अभिवहन्ति यद्य-
जूꣳषि घृतस्य कूल्या यत्सामानि सोम एभ्यः पवते यदथर्वाङ्गि-
रसो मधोः कूल्या यद्ब्राह्मणानीतिहासान्पुराणानि कल्पान्गाथा
नाराशꣳसीर्मेदसः कूल्या अस्य पितॄन्स्वधा अभिवहन्ति—, इति ।

कूलमर्हन्तीति कूल्या महानद्यः । ऋगध्ययनेन क्षीरपूर्णा महानद्यः स्वधाकारे दत्तं हविर्भूत्वा पितॄनभिलक्ष्य प्रवहन्ति । तथा यजुरध्ययनेन घृतपूर्णा महानद्यो वाहः । सामाध्ययनादेभ्यः पितृभ्यः सोमो धारया युक्तः पवते प्रवहति । एवम् थर्वाङ्गिरसामध्ययनेन मधुपूर्णा नद्यः प्रवहन्ति । ब्राह्मणाद्यध्ययनेन मांससंबन्धी प्रवाहः

पितृतृप्त्या ब्रह्मयज्ञं प्रशस्य देवतृप्त्याऽपि प्रशंसति—

यदृचोऽधीते पय आहुतिभिरेव तद्देवाꣳस्तर्पयति

१ ख. °शे श्वा° । २ ग. °भ्यस्स्व° । ३ क. रथस्य सा° । ४ क. °धीते° । ५ ग. प्रशंस्य ।

यद्यजूꣳषि घृताहुतिभिर्यत्सामानि सोमाहुतिभिर्यदथर्वाङ्गिरसो मध्वाहुतिभिर्यद्ब्राह्मणानीतिहासान्पुराणानि कल्पान्गाथा नाराशꣳसीर्मेदाहुतिभिरेव तद्देवाꣳस्तर्पयति त एनं तृप्ता आयुषा तेजसा वर्चसा श्रिया यशसा ब्रह्मवर्चसेनान्नाद्येन च तर्पयन्ति ( १ ), इति ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके द्वितीयप्रपाठके दशमोऽनुवाकः ॥ १० ॥

ऋगध्ययनं यदस्ति तेन क्षीराहुतिसमाना देवानां तृप्तिर्भवति । एवमुत्तरत्रापि योज्यम् । ते देवास्तृप्ताः सन्त एनं यजमानमायुरादिभिस्तर्पयन्ति । तेजः शरीरकान्तिः, वर्चो बलम् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्ये द्वितीयप्रपाठके दशमोऽनुवाकः ॥ १० ॥

---

अथ द्वितीय एकादशोऽनुवाकः ।

---

दशमे ब्रह्मयज्ञोऽभिहितः । एकादशे तत्प्रयोगोऽभिधीयते—

ब्रह्मयज्ञेन यक्ष्यमाणः प्राच्यां दिशि ग्रामादच्छदिर्दर्श उदीच्यां प्रागुदीच्यां वोदित आदित्ये दक्षिणत उपवीयोपविश्य हस्ताववनिज्य त्रिराचामेद्द्विः परिमृज्य सकृदुपस्पृश्य शिरश्चक्षुषी नासिके श्रोत्रे हृदयमालभ्य—, इति ।

यः पुमान्ब्रह्मयज्ञं करिष्यति सोऽयं ग्रामात्प्राचीमुदीचीमैशानीं वा दिशं गच्छेत् । गृहस्योपर्याच्छादनार्थानि तृणकष्ठादीनि च्छदींषि, यावति दूरे तानि न दृश्यन्ते तावद्दूरमच्छदिर्दर्श[2] तत्र गत्वा सूर्येऽभ्युदिते सति प्रथमानुवाकोक्तप्रकारेण यज्ञोपवीतं कृत्वा शुद्धप्रदेश उपविश्य हस्तद्वयं पूर्वं शुद्धमप्येतदङ्गत्वेन पुनः प्रक्षाल्योदकं त्रिः पिबेत् । द्विः परिमृज्य शुद्ध्यर्थमुदकेन तदा हस्तं प्रक्षालयेत्, तत ओष्ठौ सकृदुपस्पृश्य

१ क. ख. यक्ष्यमाणमः° । २ ग. °दर्शस्तत्र । ३ ख. °दा तदा ह° ।

शिरःप्रभृतीन्हृदयपर्यन्तानवयवान्क्रमेण स्पृष्ट्वा दर्भाणां महदित्यादिना वक्ष्यमाणेन सहान्वयः।

अथाऽऽचमनादीन्प्रशंसति—

यच्चिराचामति तेन ऋचः प्रीणाति यदद्भिः परि-
मृजति तेन यजूꣳषि यत्सकृदुपस्पृशति तेन
सामानि यत्सव्यं पाणिं पादौ प्रोक्षति यच्छिरः-
श्चक्षुषी नासिके श्रोत्रे हृदयमालभते तेनाथर्वा-
ङ्गिरसो ब्राह्मणानीतिहासान्पुराणानि कल्पा-
न्गाथा नाराशꣳसीः प्रीणाति—, इति।

अत्र सव्यपाणिपादयोः प्रोक्षणानुवादादेव प्रोक्षणविधिरुन्नेतव्यः।

हृदयस्पर्शनोत्तरभाविकर्तव्यं विधत्ते—

दर्भाणां महदुपस्तीर्योपस्थं कृत्वा प्राङासीनः
स्वाध्यायमधीयीतापां वा एष ओषधीनाꣳ
रसो यद्दर्भाः सरसमेव ब्रह्म कुरुते—, इति।

**दर्भाणां** संबन्धि **महत्**प्रभूतं यथा भवति तथाऽऽसनमास्तीर्य तस्योपर्युपस्थं **कृत्वा**। उपस्थशब्द आसनविशेषं ब्रूते। आकुञ्चितस्य सव्यजानुन उपरि दक्षिण-पादप्रक्षेपे सति यत्सुखावस्थानं भवति तत्कृत्वा। प्राङ्मुख **आसीनः** स्वकीयां शाखा-मधीयीत। दर्भाणामप्सारत्वमन्यत्राऽऽम्नातम्,—"तासां यन्मेध्यं यज्ञियꣳ सदेवमासीत्त-दपोदक्रामत्ते दर्भा अभवन्" इति। **ओषधीनां** मध्ये दर्भाणां शुद्धिहेतुत्वात्तत्सारत्वं ततो दर्भासनेनैवताऽधीयमानं **ब्रह्म सरसं** भवति—

तत्रोपक्रमे कंचिद्विशेषं विधत्ते—

दक्षिणोत्तरौ पाणी पादौ कृत्वा सपवित्रावोमिति प्रतिपद्यत
एतद्वै यजुस्त्रयीं विद्यां प्रत्येषा वागेतत्परममक्षरम्—, इति।

दक्षिणः पाणिरुत्तरो ययोस्तौ **दक्षिणोत्तरौ**। वामं पाणिं दक्षिणजानुन ऊर्ध्वमु-त्तानं कृत्वा तस्योपरि दक्षिणहस्तमवाञ्चं कुर्यात्। तादृशौ च **पाणी** पवित्रयुक्तौ कार्यौ। तथा दक्षिणपादोऽपि वामपादस्योपरि स्थापनीयः। एवं **कृत्वोमिति**प्रणवो-

१ ख. ग. °क्षणकथनादे। २ ख. ग °धीयानः। द°। ३ ग. °मपां रसत्व°। ४ ख. ग. °ध्ये शु°। ५ क. °त्वात्तत्सरसत्वं। ६ ख. °नत्वादधीयानां ब्र°। ग. °नत्वादधीयानं ब्र°। ७ ग. अत्रोपक्रमे।

च्चारणेनोपक्रमं कुर्यात्। योऽयमोमित्येवंरूपो यजुर्मन्त्रः स त्रयीं विद्यां प्रति वेदत्रयस्य प्रतिनिधिरूपः। अत एव प्रणवगतानामकारोकारमकारमात्राणां वेदत्रयरूपेणाध्ययनमाथर्वणिका आमनन्ति—"तस्य ह वै प्रणवस्य पूर्वा मात्रा पृथिव्यकारः स ऋग्भिर्ऋग्वेदोऽथ द्वितीयाऽन्तरिक्षं स उकारः स यजुर्भिर्यजुर्वेदस्तृतीया द्यौः स मकारः स सामभिः सामवेदः" इति। किंचैषा प्रणवरूपा सर्वा वागपि। अत एव च्छन्दोगा आमनन्ति—"तद्यथा शङ्कुना सर्वाणि पर्णानि संतृण्णान्येवमोंकारेण सर्वा वाक्संतृण्णा" इति। अश्वत्थपत्रे दृश्यमानास्तन्तुसदृशा अवयवाः शङ्कवः, तैर्यथा कृत्स्नानि पर्णानि व्याप्तानि तद्वदोंकारेण सर्वाऽपि वाग्व्याप्ता। ऐतरेयेऽपि[2] प्रणवादेरकारस्यैव सर्ववाग्व्याप्तिमामनन्ति—"अकारो वै सर्वा वाक्सैषा स्पर्शोष्मभिर्व्यज्यमाना बह्वी नानारूपा भवति" इति। अत एव मातृकामन्त्रे सर्वानपि ककारादीन्वर्णानकारशिरस्कानेव पठन्ति। य-(त)स्माद्युक्तं प्रणवस्य सर्वात्मकत्वम्। किंचैतत्प्रणवस्वरूपमुत्कृष्टमक्षरमविनश्वरं सर्ववेदान्तवेद्यं परब्रह्म वस्तु। अत एव पिप्पलादशाखायामधीयते—"एतद्वै सत्यकाम परं चापरं च ब्रह्म यदोंकारः" इति। कठाश्च पठन्ति—"एतदेवाक्षरं ब्रह्म एतदेवाक्षरं परम्" इति। तस्मात्प्रणवेनैव[3] स्वाध्यायप्रारम्भो युक्तः।

प्रणव[4]प्रशंसा[5]परामृचमवतारयति—

तदेतदृचाऽभ्युक्तम्—, इति।

तदेतत्परब्रह्मस्वरूपं प्रणवाक्षरं कयाचिदृचा स्पष्टमुक्तम्।

तामृचं दर्शयति—

ऋचो अक्षरे परमे व्योमन्यस्मिन्देवा अधि विश्वे निषेदुर्यस्तन्न वेद किमृचा करिष्यति य इत्तद्विदुस्त इमे समासत इति—, इति।

या एता ऋचस्ताः सर्वाः परम उत्कृष्टे व्योमन्विशेषेण रक्षकेऽक्षरे प्रणवे निषेदुराश्रिताः। अत एव कठशाखायामधीयते—

"सर्वे वेदा यत्पदमामनन्ति तपांसि सर्वाणि च यद्वदन्ति।
यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत्ते पदं संग्रहेण ब्रवीम्योमित्येतत्" इति।

न केवलमृच एव तस्मिन्प्रणवे समाश्रिताः किंतु विश्वे सर्वे देवा अपि यस्मिन्प्रणवाक्षरेऽधिनिषेदुः, अधिकत्वेन निषण्णाः। अत एवोत्तरतापनीये देवानां परमात्मध्यानार्थं प्रणवपर्यवसानमुक्तम्—"आत्मानमनुष्टुभाऽन्विष्य[6] प्रणवेनैव तस्मिन्नवस्थिताः"

---

१ क. ख. पूर्वमा°। २ ग. °रेयास्तु प्र°। ३ क. ख. °वेन स्वा°। ४ ग. °णवं प्र°। ५ ग. °शंस्याप°। ६ क °ष्टुभमन्वि°।

इति। अनेनैव प्रकारेणर्चो देवाश्च यस्मिन्प्रणवे निषेदुस्तत्प्रणवाक्षरं यो न वेद स पुमानधीयानोऽपि ऋचा किं करिष्यति, न खलु फलरहितां केवलां कृषिं केचित्प्रार्थयन्ते। य इत्थे पुनर्महात्मानस्तत्प्रणवाक्षरं विदुस्ते महर्षय इमे परिदृश्यमानाः परमहंसाः समासते सम्यगवतिष्ठन्ते। ऐहिकामुष्मिकविषयक्लेशरहिताः सुखिनो वर्तन्ते। तांश्च परमहंसाञ्जाबालशाखाध्यायिन उदाहरन्ति—"तत्र परमहंसा नाम संवर्तकारुणिश्वेतकेतुदुर्वासऋभुनिदाघजडभरतदत्तात्रेयरैवतकप्रभृतयः" इति। इत्यनेन मन्त्रेण प्रशस्तत्वात्प्रणवस्य वेदत्रयप्रतिनिधित्वं युक्तम्।

तेन प्रणवेन प्रारभ्य पश्चात्पठनीयान्मन्त्रान्दर्शयति—

त्रीनेव प्रायुङ्क्त भूर्भुवः स्वरित्याहैतद्वै वाचः
सत्यं यदेव वाचः सत्यं तत्प्रायुङ्क्त—, इति।

भूर्भुवः स्वरिति यद्व्याहृतित्रयं तल्लोकत्रयात्मकब्रह्मप्रतिपादकं तदाह पठेत्। तेन त्रीनेव वेदान्प्रयुक्तवान्भवति। व्याहृतीनां वेदत्रयसारत्वेन प्रोक्तत्वात्। एतच्च च्छन्दोगा अधीयते—"स एतां त्रयीं विद्यामभ्यतपत्तस्यास्तप्यमानाया रसान्प्रावृहद्भूरित्यृग्भ्यो भुव इति यजुर्भ्यः स्वरिति सामभ्यः" इति। [एतद्व्याहृतित्रयं] वेदत्रयसारत्वेन प्रोक्तत्वाद्वाचः संबन्धि सत्य(त्यं) स्वरूपमित्युच्यते। अतस्तत्सत्यमेव प्रयुक्तवान्भवति।

व्याहृतित्रयादूर्ध्वं पठनीयं दर्शयति—

अथ सावित्रीं गायत्रीं त्रिरन्वाह पच्छोऽर्धर्चशोऽनवानं[४]
सविता श्रियः प्रसविता श्रियमेवाऽऽप्नोत्यथो प्रज्ञातयैव
प्रतिपदा छन्दाꣳसि प्रतिपद्यते (१), इति॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके द्वितीयप्रपाठक
एकादशोऽनुवाकः॥ ११॥

अथ व्याहृत्यनन्तरं सावित्रीं सवितृदेवताकां गायत्रीछन्दस्कां तत्सवितुरित्यादिकामृचं च त्रिः पठेत्। तत्रायं प्रकारः। प्रथमं पादशः पादे पादे विरम्य पठेत्। ततोऽर्धर्चश एकैकस्मिन्नर्धे विरम्य पठेत्। ततोऽनवानं विरामरहितं यथा भवति तथा पठेत्। तस्यामृचि प्रतिपाद्यो यः सविता सोऽयं श्रियः प्रेरकः, अतो ब्रह्मयज्ञानुष्ठायी श्रियं प्राप्नोत्येव। एवमेकस्मिन्नहनि विधानमुक्तम्। अथो अनन्तरम्

१ क. पलरहितां। ग. वृषरहितां। २ क. ख. °रतात्रे°। ३ ग. इत्याङ्गिरसम°। ४ ख. °न वाचः।

तदादिदिवसेषु, प्रज्ञातयैव प्रतिपदा पूर्वस्मिन्दिवसे किंचित्पठित्वा परेद्युरनुष्ठाना-यायमुपक्रम इति या प्रतिपत्प्रज्ञाता यः प्रारम्भप्रदेशो बुद्धौ स्थापितस्तयैव प्रतिपदा प्रारम्भप्रदेशेन च्छन्दांसि वेदावयवान्परेद्युः प्रतिपद्यते प्रारभते । पूर्वेद्युर्यावद्व्यवसितं तत एवाऽऽरम्योत्तरेद्युरधीयीत न तु विप्रयुक्तं कंचिद्वेदभागम् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीय-तैत्तिरीयारण्यकभाष्ये द्वितीयप्रपाठक एकादशोऽनुवाकः ॥ ११ ॥

---

अथ द्वितीयप्रपाठके द्वादशोऽनुवाकः ।

यत्पूर्वमुक्तं प्राच्यां दिशि ग्रामाद्बहिरित्यादि । तत्राशक्तस्यानुकल्पं विधत्ते—

**ग्रामे मनसा स्वाध्यायमधीयीत दिवा नक्तं वा**—इति ।

यदा बहिर्गन्तुमशक्तो ग्रामेऽधीयते तदा मनसैवाधीयीत । उदित आदित्ये प्रारब्धुमशक्तश्चेद्दिवा नक्तं वाऽधीयीत ।

कस्यचिन्महर्षेर्मते मुख्य एवायं पक्षोऽपीति दर्शयितुं तमृषिमुदाहरति—

**इति ह स्माऽऽह शौच आह्नेयः**—, इति ।

शुचिनामकस्य महर्षेः पुत्रः शौचः, अह्निसंज्ञिताया मातुः पुत्र आह्नेयो महर्षिरिति ह स्माऽऽह ग्रामे मनसेत्यादिकमपि मुख्यपक्षमे(ए) वेत्याह ।

नियमान्तरेष्वप्यशक्तस्यानुकल्पान्विधत्ते—

**उतारण्येऽबल उत वाचोत तिष्ठन्नुत व्रजन्नुताऽऽसीन उत शयानोऽधीयीतैव स्वाध्यायं तपस्वी पुण्यो भवति य एवं विद्वान्त्स्वाध्यायमधीते**—, इति ।

ग्रामे मनसाऽध्ययनमुक्तम्, अरण्येऽप्यबलोऽशक्तश्चेन्मनसाऽधीयीत । तमेवाबलं प्रत्युत वाचेति पक्षान्तरमुच्यते । उच्चैरध्येतुमशक्तः केवलेन मनसा, यदा निद्रालस्यचिन्तादिकं भवति तदानीं वाचा जिह्वास्पन्दनमात्रेणाधीयीत । दर्भेष्वासीन इति यदुक्तं तत्राऽऽसननिर्बन्धे शक्तिरहितस्योत व्रजन्नित्यादयः पक्षाः । आलस्यपरिहारायेत-

१ ख. ग. °द्दिव° । २ क. °ष्ठायीं यत उपक्रामते सा प्रतिपत्प्रज्ञातया प्रारम्भप्रदेशेषु स्थापितया तयैव । ३ क. ख. तु यं कं° । ४ क. ख. °नसाऽधी° । ५ ख. ग. नक्तमधी° । ६ ग. °यितुमेत° । ७ क. ख. °र्षेः शौ° । ८ ग. °चः. इति । अ° । ९ ख. ग. °ष्वश° । १० घ. °चोदति° । ११ ख. °त ; बलवन्तं प्र° । १२ क. ख. °सा नि° । १३ क. °ह्वाग्द्रिस्प° । ख. °ह्वाक्ष्यादिस्प° ।

स्ततः शनैर्व्रजन्वा क्वचिदेव तिष्ठन्वा नियममन्तरेण स्वेच्छयैवोपविश्य वा शयानो वा शक्त्यनुसारेण स्वाध्यायमधीयीतैव। न त्वङ्गलोपानुसारेण प्रधानस्य लोपो न्याय्यः। तादृशस्वाध्याययुक्तोऽपि तपस्वी भवति, अध्ययनफलं प्राप्नोति। पुण्यः पङ्क्तिपावनश्च भवति।

एतस्य ब्रह्मयज्ञस्याङ्गभूतं कंचिन्मन्त्रं प्रदर्शयति—

नमो ब्रह्मणे नमो अस्त्वग्नये नमः पृथिव्यै नम ओषधीभ्यः। नमो वाचे नमो वाचस्पतये नमो विष्णवे बृहते करोमि (१), इति।

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके द्वितीयप्रपाठके द्वादशोऽनुवाकः॥ १२॥

ब्रह्मशब्देन वेदः प्रजापतिर्वोच्यते। वाक्शब्देन सरस्वती। वाचस्पतिर्बृहस्पतिः। प्रशस्तत्वाद्विष्णुर्बृहत्। अस्य मन्त्रस्य विनियोग उपरिष्टाद्भविष्यति॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्ये द्वितीयप्रपाठके द्वादशोऽनुवाकः॥ १२॥

---

अथ द्वितीये त्रयोदशोऽनुवाकः।

---

तत्रैव ब्रह्मयज्ञे कंचिदन्यं विशेषं विधत्ते—

मध्यंदिने प्रबलमधीयीतासौ खलु वावैष आदित्यो यद्ब्राह्मणस्तस्मात्तर्हि तेक्ष्णिष्ठं तपति तदेषाऽभ्युक्ता—इति।

मध्यंदिनकाले प्रबलमुच्चतरं यथा भवति तथाऽधीयीत। योऽयं ब्रह्मयज्ञानुष्ठाता ब्राह्मणोऽस्ति स एषोऽसौ दिवि दृश्यमान आदित्य एव तत्प्राप्तियोग्यत्वात्। यस्मादादित्यरूपो ब्राह्मणो मध्यंदिने प्रबलमधीयीत[1] तस्मात्तदात्मक आदित्योऽपि तर्हि मध्यंदिने काले तेक्ष्णिष्ठमतिशयेन तीक्ष्णं यथा भवति तथा तपति। तदेतदादित्यमाहात्म्यं प्रति काचिदृगभ्युक्ता।

तामेतामृचं दर्शयति—

चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः। आप्रा द्यावापृथिवी अन्तरिक्ष९ सूर्य आत्मा जगतस्तस्थुषश्चेति,—इति।

---

१ क. ख. °धीयते त°।

देवानां दीप्यमानानां रश्मीनामनीकं समूहावष्टम्भनरूपमादित्यमण्डलं चित्रं काल-भेदेनारुणशुक्लादिवर्णोपेतत्वाच्चित्रं तादृशं मण्डलमुदगात्पूर्वस्यां दिश्युदयं प्राप्नोत् । तच्च मण्डलमन्धकारनिवारणोपयुक्तत्वान्मित्रादीनां चक्षुःस्थानीयम् । तदर्थमेवायं लोक-त्रयमाप्रा रश्मिभिरापूर्य वर्तते । तन्मण्डलवर्ती सूर्यरूपः परमात्मा जगतो जङ्गमस्य तस्थुषः स्थावरस्याऽऽत्मा जीवरूपेण शरीरेष्ववस्थितः । इत्यनेन मन्त्रेणाऽऽदित्य-माहात्म्यमवगन्तव्यम् ।

ब्रह्मयज्ञस्येतरयज्ञवैलक्षण्यं दर्शयति—

स वा एष यज्ञः सद्यः प्रतायते सद्यः
संतिष्ठते तस्य प्राक्सायमवभृथः—, इति ।

अयं ब्रह्मयज्ञो यस्मिन्नहनि प्रारभ्यानुष्ठीयते तस्मिन्नेवाहनि समाप्यते नतु यज्ञा-न्तरवदितरादिनेष्वनुगच्छति तस्मात्प्राक्प्रातःकाले प्रारब्धस्य तस्य यज्ञस्य सायमव-भृथः समाप्तिः ।

समाप्तिकाले मन्त्रविशेषं विधत्ते—

नमो ब्रह्मण इति परिधानीयां त्रिरन्वाह—, इति ।

परिधीयते समाप्यते यया सेयमृक्परिधानीया । सा चात्र पूर्वानुवाक आम्नाता, ॐ नमो ब्रह्मण इत्येषा, तां त्रिः पठेत् ।

तत्पाठादूर्ध्वं कर्तव्यतां दर्शयति—

अप उपस्पृश्य गृहानेति ततो यत्किंच
ददाति सा दक्षिणा (१), इति ।

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके द्वितीयप्रपाठके
त्रयोदशोऽनुवाकः ॥ १३ ॥

सेयं दक्षिणा गृह एव न चारण्य इत्यर्थः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्ति-
रीयारण्यकभाष्ये द्वितीयप्रपाठके त्रयोदशोऽनुवाकः ॥ १३ ॥

---

१ ग. °मूहनानारू° । २ ग. °मेव लो° । ३ ख. 'वाह लो° । ४ क. ख. °र्ती प° ।
. तद्रू° ।

अथ द्वितीये चतुर्दशोऽनुवाकः ।

---

ग्रहणाध्ययने यान्यनध्यायकारणानि[1] तानि ब्रह्मयज्ञाध्ययने स्वाध्यायं न निवारयन्तीति वक्तुं तेषामनध्यायकारणानां यज्ञाङ्गतामुपचरति—

तस्य वा एतस्य यज्ञस्य मेघो हविर्धानं विद्युदग्निर्वर्षꣳ हविस्तनयित्नुर्वषट्कारो यदवस्फूर्जति सोऽनुवषट्कारो वायुरात्माऽमावास्या स्विष्टकृत्—, इति ।

अनध्यायहेतूनापस्तम्बो दर्शयति—विद्युत्स्तनयित्नुर्वृष्टिश्चापर्तौ यत्र संनिपतेयुस्त्र्यहमनध्याय इति । सोऽयमकालमेघो ग्रहणाध्ययने निषिद्धोऽपि ब्रह्मयज्ञाध्ययने स्वीकार्य एवं । यथा सोमयागे हविर्धानं न यागविरोधि तथा तत्र मेघोऽपि । एवं विद्युदादौ द्रष्टव्यम् । अग्निर्ग्रामगृहादिदाहकः । अकाले महानुत्पातरूपो वायुरात्मा यजमानस्थानीयः । स्पष्टमन्यत् ।

अनध्यायहेतूनां वर्जनीयत्वं निवार्योपादेयत्वं दर्शयति—

य एवं विद्वान्मेघे वर्षति विद्योतमाने स्तनयत्यवस्फूर्जति पवमाने वायावमावास्यायाꣳ स्वाध्यायमधीते तप एव तत्तप्यते तपो हि स्वाध्याय इति—, इति ।

मेघादयो विरोधिनो न भवन्तीति यो विद्वान्सोऽयं सत्स्वपि मेघादिनिमि स्वाध्यायमधीते तदा तपस्तप्तं भवति । यस्मादयं ब्रह्मयज्ञः स्वाध्यायः कृच्छ्रचान्द्रायणादिवत्तपोरूपस्तस्मान्न सन्त्यनध्यायाः । न हि चान्द्रायणादिकं मेघादिषु वर्ज्यं

कदाचिदप्यवर्जनेनानुष्ठितस्य ब्रह्मयज्ञस्य फलं दर्शयति—

उत्तमं नाकꣳ रोहत्युत्तमः समानानां भवति यावन्तꣳ ह वा इमां वित्तस्य पूर्णां ददत्स्वर्गं लोकं जयति तावन्तं लोकं जयति भूयाꣳसं चाक्षय्यं चाप पुनर्मृत्युं जयति ब्रह्मणः सायुज्यं गच्छति (१), इति ।

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके द्वितीयप्रपाठके चतुर्दशोऽनुवाकः ॥ १४ ॥

---

१ क. ख. 'नि म°। २ ख. घ. °वास्याः स्वि°। ३ ख. 'व । सो°। ४ ख. तद्वद्

अनेन ब्रह्मयज्ञेन मरणादूर्ध्वमुत्तमं स्वर्गमारोहति, जीवनवेलायां पङ्क्तिपावनत्वात्स-मानानां मध्य उत्तमो भवति । उत्तमः स्वर्ग एव प्रपञ्च्यते । वित्तेन पूर्णां पृथिवीं ब्राह्मणेभ्यो ददत्पुरुषो यावन्तं स्वर्गमनेकभोगोपेतं प्राप्नोति तावन्तमसौ प्राप्नोति । ततो भूयांसमधिकमपि प्राप्नोति । अक्षय्यं पुनरावृत्तिरहितं च लोकं प्राप्नोति । तस्मात्प्राप्तेरूर्ध्वं पुनर्मृत्युं न प्राप्नोति । किंतु परब्रह्मणः सायुज्यं मोक्षं गच्छति ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरी-यारण्यकभाष्ये द्वितीयप्रपाठके चतुर्दशोऽनुवाकः ॥ १४ ॥

---

अथ द्वितीये पञ्चदशोऽनुवाकः ।

---

ग्रहणस्वाध्याये यानि कारणान्यनध्यायस्य तान्यत्रापोद्य कारणान्तरमनध्यायस्य दर्शयति—

तस्य वा एतस्य यज्ञस्य द्वावन-
ध्यायौ यदात्माऽशुचिर्यद्देशः—, इति ।

उक्तस्य ब्रह्मयज्ञस्य द्वावनध्यायौ विद्येते । आत्मा ब्रह्मयज्ञस्य कर्ता स्वयमशु-चिर्यदा भवति तदानीमेकोऽनध्यायः । देशो वा मूत्रपुरीषादिभिरशुचिर्भवति स द्विती-योऽनध्यायः । न तु कश्चित्तृतीयोऽनध्यायहेतुरस्ति ।

अथ तस्य यज्ञस्य सुलभत्वं दर्शयति—

समृद्धिर्दैवतानि—, इति ।

समृद्धिः सामग्री । सा च यज्ञान्तरेषु द्रव्यार्जनादिना संपाद्यते । इह तु दैवतान्येव सामग्री न तु बाह्यसाधनं किंचिदपेक्षितमस्ति ।

ब्रह्मयज्ञेन तुष्टेषु दैवतेषु फलं भवत्येव तस्मादेवंभूते कालादिवैकल्यशङ्कां परित्यज्य तदनुष्ठाने फलसिद्धिं दर्शयति—

य एवं विद्वान्महारात्र उषस्युदिते व्रजꣳस्तिष्ठ-
न्नासीनः शयानोऽरण्ये ग्रामे वा यावत्तरसꣳ
स्वाध्यायमधीते सर्वाँल्लोकाञ्जयति सर्वाँल्लोका-
ननृणोऽनुसंचरति तदेषाऽभ्युक्ता—, इति ।

अस्य यज्ञ[स्य]निमित्तद्वयव्यतिरेकेणानध्यायकारणं नास्ति सामग्री च न प्रयाससं-

---

१ क. °हणाध्ययने या°। २ क. ख. °ह दे° । ३ ग. °कल्यश° ।

पाद्या विद्यत इत्येवं विद्वान्पुमान्कालविषय आसनादिनियमविषये देशविषये च श्रद्धाजाड्यं परित्यज्य यावत्तरसं यावद्बलं यथाशक्ति स्वाध्यायमधीयानः स्वापेक्षितान्सर्वांल्लोँकान्प्राप्नोति । तत्र तत्र लोके पुरुषान्तरवदृणयुक्तो न भवति, किंत्वनृण एवानुसंचरति, तेत्तस्मिन्ननृणस्यानुसंचारे काचिदृक्चोक्ता विद्यते ।

तामेतामृचं दर्शयति—

अनृणा अस्मिन्ननृणाः परस्मिꣳस्तृतीये लोके

अनृणाः स्याम । ये देवयाना उत पितृयाणाः

सर्वान्पथो अनृणा आक्षीयेमेति—, इति ।

अस्मिन्भूलोके परस्मिन्नन्तरिक्षे तृतीये द्युलोके च, ब्रह्मयज्ञबलादनृणाः स्याम ऋणेऽपाकृते सति देवयानाः पन्थान उत्तरमार्गविशेषाः पितृयाणाः पन्थानो दक्षिणमार्गविशेषा ऋणाभावेन प्रतिबन्धाभावात्सर्वानपि मार्गान्सर्वतः प्राप्नुयाम । ऋषीणामृणं ब्रह्मयज्ञेनापोद्यत इति तावत्सर्वेषां संमतम् । देवपितृकार्ययोरसमर्थस्य तदुभयविषयमप्यृणमनेनैवापोद्यते ।

अत एव स्मर्यते—

“जप्येनैव तु संसिध्येद्ब्राह्मणो नात्र संशयः ।

कुर्यादन्यन्न वा कुर्यान्मैत्रो ब्राह्मण उच्यते” इति ॥

ततः सर्वान्पथो अनृणा आक्षीयेमेत्येतदुपपन्नम् ।

तदेतदनृणत्वं संभावयितुं पापस्पर्शराहित्येन स्वाध्यायं प्रशंसति—

अग्निं वै जातं पाप्मा जग्राह तं देवा आहुतीभिः पाप्मानमपाघ्नन्नाहुतीनां यज्ञेन यज्ञस्य दक्षिणाभिर्दक्षिणानां ब्राह्मणेन ब्राह्मणस्य छन्दोभिश्छन्दसाꣳ स्वाध्यायेनापहतपाप्मा स्वाध्यायो देवपवित्रं वा एतत्तं योऽनूत्सृजत्यभागो वाचि भवत्यभागो नाके तदेषाऽभ्युक्ता—, इति ।

योऽयमग्निः सृष्ट्यादावुत्पन्नस्तमुत्पन्नमात्रमेव सर्वः पाप्मा जग्राह, अग्निर्हि पापशोधनाय समुत्पन्नः । अत एव स्मृतिकारा भाण्डादीनां पुनःपाकेन शुद्धिं ब्रुवं यथा लोकेऽत्यन्तमलिनं वस्त्रमल्पजलेन यदा प्रक्षाल्यते तदानीं वस्त्रमालिन्यं सर्वं

१ क. ख. °वं पुमान्विद्वान्का° । २ क. ख. तस्मि° । ३ क. °दृक्प्रोक्ता । ४ °हुतिभिः । ५ क. ख. अग्निः पा° ।

प्रविशति, तथा शोधनीयवस्तुगतः पाप्मा शोधकेऽग्नौ प्रविष्टः । तमग्निगतं पापं(प्मानं) देवा आहुतिभिर्विनाशितवन्तः । तदाहुतिगतं पापं कृत्स्नं यज्ञेन, यज्ञगतं च पापं दक्षिणाभिः, दक्षिणागतं च पापं प्रतिग्रहीत्रा ब्राह्मणेन, ब्राह्मणगतं च पापं तत्तन्मन्त्रगतैर्गायत्र्यादिच्छन्दोभिः, छन्दोगतं च पापं स्वकीयशाखारूपेण स्वाध्यायेन । न चात्र स्वाध्यायगतस्य पाप्मनो निवर्तकान्तरमन्वेष्टव्यम् । यस्मादपहतपाप्मा स्वाध्यायः, न खलु कश्चिदपि पाप्मा स्वाध्यायं स्प्रष्टुमीष्टे । यस्मादेतत्स्वाध्यायस्वरूपं देवानामपि शोधकम्, देवा हि पूर्वस्मिञ्जन्मनि मनुष्या भूत्वा स्वाध्यायमधीत्य तदर्थं चानुष्ठाय शुद्धाः सन्तो देवत्वं प्राप्ताः, [ तस्मात् ] तमीदृशं स्वाध्यायं योऽनूत्सृजाति यः पुरुषः प्रारभ्य पश्चात्त्यजति स पुमानभागो वाचि भवति । वाङ्मात्रनिष्पाद्यत्वेनाप्रयाससाध्यं स्वाध्यायाध्ययनं तथाविधायां प्रयासरहितायां महाफलहेतुभूतायां वाच्यपि भाग्यं तस्य परित्यक्तुर्नास्ति । महाप्रयासनिष्पाद्ये ज्योतिष्टोमादिसाध्ये स्वर्गे भाग्यं नास्तीति किमु वक्तव्यम् । यो हि पाणिलब्धं चिन्तामणिमग्निमध्ये प्रक्षिपति स भाग्यहीन इत्यस्मिन्नर्थे न कोऽपि विप्रतिपद्यते । तत्तस्मिंश्चिन्तामणिपरित्यागसदृशोऽयं स्वाध्यायपरित्याग इत्यस्मिन्नर्थे काचिदृगभ्युक्ता ।

तामेतामृचं दर्शयति—

> यस्तित्याज सखिविदꣳ सखायं न तस्य वाच्यपि भागो अस्ति । यदीꣳ शृणोत्यलकꣳ शृणोति न हि प्रवेद सुकृतस्य पन्थामिति—, इति ।

यः पुमान्वेदस्य वाङ्मात्रनिष्पाद्यमध्ययनं करोति तं पुमांसं वेदः समस्तपापक्षयद्वारेण मोक्षपर्यन्तोत्तमगतिप्रदानेन प्रियं सखायमिवातिस्नेहेन पालयति, तस्मादध्येतारं सखायं वेत्तीति सखिवित्स्वाध्यायः स्वयं च तस्य पुरुषस्य सखाऽत्यन्तस्नेहेन कदाचिदप्यनपायात् । नहि निरन्तराध्यायिनं स्वाध्यायः कदाचिदपि परित्यजति, किंतु दिने दिनेऽतिशयेन तस्याधीनो भवति । तादृशं सखिविदं स्वयमपि सखायं यस्तित्याज परित्यक्तवान्, तस्य परित्यक्तुर्वाच्यपि भागो नास्ति आयासरहिते महाफले पाठेऽपि भाग्यं नास्ति । किमु वक्तव्यं महाप्रयाससाध्येऽनुष्ठाने तत्फले वा । यदीं यद्यपि स्वाध्यायत्यागी कदाचिद्विद्वत्सभायामुपविश्य बहूनि शास्त्राणि शृणोति तदानीमलकमलीकमनृतमेव शृणोति पुरुषार्थपर्यवसानाभावात् । नहि काव्यनाटकालं-

---

१ ग. °यज्ञादि° । २ ग. चास्य स्वा° । ३ क. ख. °देवं स्वाध्या° । ४ ख. ग. °सखिर्दं स्वा° । ५ क. ख. महाफल° । ६ क. ख. °दृगुक्ता । ७ ग. °विद्वमाने ।

कारादिश्रवणेन वृथायुःक्षयमन्तरेण कंचित्पुरुषार्थं पश्यामः । अत एव **वाजसनेयिनः समामनन्ति**—" नानुध्यायाद्बहूञ्शब्दान्वाचो विग्लापनं हि तत् " इति । वेदव्यतिरिक्तस्य शब्दजालस्य कण्ठशोषमात्रपर्यवसायित्वमेवोपपाद्यते । यस्मादयं वेदत्यागी **सुकृतस्य पन्थां** पुण्यानुष्ठानमार्गं न जानाति तस्मात्कण्ठशोषमात्रपर्यवसानम् । द्विविधं हि पुरुषेणार्थ्यते[1], ऐहिकजीवनमामुष्मिकौ च भोगमोक्षौ । तत्र जीवनस्य कौल्यादेरपि[2] कृषिवाणिज्यादिकर्मि(देरि)वैं भवेत्साधनत्वम् । आमुष्मिकमार्गं तु वेदमन्तरेण सर्वतो न जानाति । अतः शास्त्रान्तराणि शृण्वतः कण्ठशोष एव परिशिष्यते न केवलं सुकृतज्ञानमात्राभावः प्रत्युत दुरितं च महत्संपद्यते ।

अत एव मनुना स्मर्यते—

"योऽनधीत्य द्विजो वेदानन्यत्र कुरुते मतिम् ।
स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः" इति ।

इत्थं स्वाध्यायपरित्यागे बाधं दर्शयित्वा तदनुष्ठाने श्रेयो दर्शयति—

**तस्मात्स्वाध्यायोऽध्येतव्यो यं यं क्रतुमधीते तेन तेनास्येष्टं भवत्यग्नेर्वायोरादित्यस्य सायुज्यं गच्छति तदेषाऽभ्युक्ता—,**इति ।

यस्मात्स्वाध्यायव्यतिरेकेण सुकृतमार्गो न ज्ञायते **तस्मात्स्वाध्यायोऽध्येतव्यः**,[11] ग्रहणाध्ययनं ब्रह्मयज्ञाध्ययनं च कर्तव्यम् । तच्चोभयं परमपुरुषार्थसाधनमित्युपनिषदि बहूनामृषीणां मतभेदोपन्यासप्रसङ्गेन विस्पष्टमाम्नातम्—स्वाध्यायप्रवचने एवेति नाको **मौद्गल्यः**, तद्धि तपस्तद्धि तप इति । सत्यवदनमेव परमपुरुषार्थसाधनमिति राथीतरस्य मतम् । कृच्छ्रचान्द्रायणादिरूपं तप एव तत्साधनमिति **पौरिशिष्टेर्मतम्** । **मौद्गल्यस्त्वत्यन्तरहस्यदर्शी**[13] रहस्यार्थत्वात्तदेतदुभयमुवाच । तत्र ग्रहणार्थमध्ययनं[स्वाध्यायः] गृहीतस्य वेदस्य प्रकर्षेण प्रतिदिनं ब्रह्मयज्ञरूपेण वचनं प्रवचनम् । उभे एवोत्तमे पुरुषार्थसाधने सत्यादीनामत्रार्थसिद्धत्वात् । यो हि निरन्तरं स्वाध्यायं पठति तस्यानृतवदने कः प्रसङ्गः । तपोऽप्यत्रार्थसिद्धं निषिद्धविषयप्रवणानामिन्द्रियाणां बलक्षयद्वारेणोद्धतत्वं वारयितुं कृच्छ्रचान्द्रायणादिना शरीरशोषरूपं[14] तपः क्रियते । स्वाध्यायपरस्य तु विषयमात्रचिन्तैव नास्ति कुतो दुष्टविषयेषु[15] प्रवृत्तिः ।

---

१ क. ख. °धं पु° । २ ख. कार्व्यादे° । ग काव्यादे° । ३ क. °पि वा° । ४ ग. °कमेव । ५ ख. ग. °व महत्सा° । ६ ख. ग. °नम् । ७ °शोषा ए° । ८ ख. °ध्यन्ते । न । ९ ख. ब्रह्मध्याय° । ग. ब्रह्माध्य° । १० ग. °म् । एत° । ११ ग. °र्थत्वेन सा° । १२ ग. राथान्तर° । १३ क. ख. °र्शी तदे° । १४ क. °षणरू° । १५ क. °ये पुरुषद्व° । ख. °ये पुरुषप्र° ।

तच्चिन्तापूर्वकत्वं प्रवृत्तेर्भगवतोक्तम्—

"ध्यायतो विषयान्पुंसः सङ्गस्तेषूपजायते ।
सङ्गात्संजायते कामः कामात्क्रोधोऽभिजायते ॥
क्रोधाद्भवति संमोहः संमोहात्स्मृतिविभ्रमः ।
स्मृतिभ्रंशाद्बुद्धिनाशो बुद्धिनाशात्प्रणश्यति" इति ॥

विषयध्याननिवृत्त्यर्थमेव चित्तवृत्तिनिरोधरूपं योगं वक्तुं कृत्स्नं योगशास्त्रं प्रवृत्तम् । सा च विषयध्याननिवृत्तिः स्वाध्यायनिरतस्याप्रयासेनैव सिद्धा । तत्र किमनेन योगशास्त्रेण कृच्छ्रचान्द्रायणादिना तपसा वा ।

अत एवाभिज्ञा आहुः—

" अर्के चेन्मधु विन्देत किमर्थं पर्वतं व्रजेत् ।
इष्टस्यार्थस्य संसिद्धौ को विद्वान्यत्नमाचरेत्" इति ॥

एतत्सर्वमभिप्रेत्य मौद्गल्यस्तद्धि तपस्तद्धि तप इति प्रसिद्धिवाचकेन हिशब्देन वीप्सया च स्वाध्यायप्रवचनयोरत्यादरं दर्शयति । न च स्वाध्यायपाठमात्रेण[1] यागानुष्ठानाभावान्न पुरुषार्थ इति शङ्कनीयम् । अयमध्येताऽग्निष्टोमवाजेपयराजसूयाश्वमेधादीनां[2][3] मध्ये यं यं क्रतुं[4] साङ्गमधीते, अस्याध्येतुः पुरुषस्य तेन तेन क्रतुनेष्टं भवति । त्रिविधो हि यागः । कायिको वाचिको मानसश्चेति, तत्राध्येतुर्वाचिकस्य निष्पत्तौ नास्त्येव विवादः । यद्यध्येताऽर्थमपि जानाति तदाऽध्ययनकाले तदनुसंधानान्मानसोऽपि निष्पद्यते । कायिकश्चेन्नास्ति[5] माऽस्तु नाम द्रव्यार्जनरहितस्याधिकाराभावात्[6] । यस्य त्वधिकारः[7] कायिकमप्यसौ करोत्वितरस्य[8] तु वाचिकेनैव तत्फलं लभ्यते । तस्मादयमध्येताऽग्न्यादीनां सायुज्यं गच्छति । तत्तस्मिन्वेदविदो माहात्म्ये काचिदृगभ्युक्ता ।

तामेतामृचं दर्शयति—

ये अर्वाङुत वा पुराणे वेदं विद्वाꣳसमभितो वदन्त्यादित्यमेव ते परिवदन्ति सर्वे अग्निं द्वितीयं तृतीयं च हꣳसमिति—,इति ।

अर्वाङर्वाचीनमिदानींतनमनुष्यमध्येतृरूपम्, उत वा पुराणेऽथवा पुरातनं व्यासवसिष्ठादिरूपम्[9] । वेदं विद्वांसं पाठादर्थाच्च वेदतत्त्वाभिज्ञं महात्मानम् । ये मूर्खा अभितो वदन्ति तत्र तत्र निन्दन्ति ते मूर्खाः सर्वेऽप्यादित्यमेव निन्दन्ति । ततो द्वितीयमग्निं निन्दन्ति । ततस्तृतीयं हंसं गमनशीलं वायुं निन्दन्ति । अस्य वेद-

---

१ क. ख. प्रकृतेर्भ° । २ ख. ग. °ण योगा° । ३ क. ख. °मरा° । ४ ग. क्रतुभागम° । ५ क. °नसिकश्चे° । ६ ग. °कस्य नास्ति । ७ ख. त्वस्त्यधि° । ८ ग. °रोतीत° । ९ ग. °वशिष्ठा° ।

विदोऽग्निवाय्वादित्यसायुज्ययोग्यत्वादेतन्निन्दैव तेषां निन्दा, इत्यनेनैव मन्त्रेणाऽग्न्यादि-रूपत्वलक्षणं वेदविन्माहात्म्यं दर्शितम् ।

अस्य मन्त्रस्य तात्पर्यं दर्शयति—

यावतीर्वै देवतास्ताः सर्वा वेदविदि ब्राह्मणे वसन्ति तस्माद्ब्राह्मणेभ्यो वेदविद्भ्यो दिवे दिवे नमस्कुर्यान्ना-श्लीलं कीर्तयेदेता एव देवताः प्रीणाति (१), इति ।

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके द्वितीयप्रपाठके पञ्चदशोऽनुवाकः ॥ १५ ॥

अग्निरवमो देवतानां विष्णुः परम इत्युक्तत्वादग्निप्रभृतयो विष्णुपर्यन्ता यावत्यो देवताः सन्ति ताः सर्वाः पाठतोऽर्थतश्च वेदविदि ब्राह्मणे वसन्ति । एकैकस्मिन्मन्त्र एकैको देवः प्रतिपाद्यते । ते च मन्त्राः सर्वेऽध्येतुर्वाचि[3] वेदितुर्मनसि च वर्तन्ते, अतो वेदविदां ब्राह्मणानां सर्वदेवतात्मकत्वात्तेभ्यः प्रतिदिनं नमस्कुर्यात् । अश्लीलं तदीयमशुभं किमपि विद्यमानमविद्यमानं वा न कीर्तयेत् । एतेन वेदविदो ब्राह्मणस्य सत्कारेण सर्वा अप्येता देवताः परितोषयति ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्ये द्वितीयप्रपाठके पञ्चदशोऽनुवाकः ॥ १५ ॥

---

अथ द्वितीये षोडशोऽनुवाकः ।

---

अथ कस्यचिदयाज्यस्य याजने तथा कस्यचिदयोग्यस्य पुरुषस्य द्रव्यप्रतिग्रहे प्रायश्चित्तत्वेन स्वाध्यायं विधत्ते—

रिच्यत इव वा एष प्रेव रिच्यते यो याजयति प्रति वा गृह्णाति याजयित्वा प्रतिगृह्य वाऽन-श्नन्त्रिः स्वाध्यायं वेदमधीयीत—, इति ।

यः पुमान्स्वयमापद्रहितोऽपि द्रव्यलोभादयाज्यं याजयति निषिद्धं द्रव्यं प्रतिगृह्णाति स पुमानिह लोके रिच्यत इव कीर्तिशून्य इव भवति । अहो दुरात्मा यमेवं धनिकोऽपि सन्द्रव्यलोभादन्यायं करोतीति सर्वे जनास्तं निन्दन्ति तदिदमि

---

१ ग. °णाऽऽदित्यादि° । २ ग. एको । ३ ग. °र्वाच्यध्येतु° ।

लोके रिक्तत्वम्। तथा प्रेव रिच्यते परलोकेऽपि प्रकर्षेण रिक्त इव भवति, पुण्यलोकाभाव एव रिक्तत्वम्। याजनप्रतिग्रहयोर्जीविकारूपेण शास्त्रेऽभ्युपगतत्वात्निषिद्धयाजनप्रतिग्रहविषयमिदं द्रष्टव्यम्। अतो द्रव्यलोभाद्याजयित्वा प्रतिगृह्य वा भोजनरहितस्त्रिवारं[2] स्वशाखाध्ययनरूपं वेदं जपेत्।

तत्राशक्तस्य पक्षान्तरमाह—

**त्रिरात्रं वा सावित्रीं गायत्रीमन्वातिरेचयति[3]—, इति।**

गायत्रीच्छन्दस्कां सवितृदेवताकां तत्सवितुर्वरेण्यमित्येतामृचं भोजनरहितो दिनत्रयमनुष्ठाय रेचयति, पूर्वोक्तप्रकारेण रिक्तं स्वात्मानमरिक्तं करोति। अपकीर्ति पुण्यक्षयं च निवर्तयेदित्यर्थः।

पक्षद्वयेऽपि दक्षिणां विधत्ते—

**वरो दक्षिणा वरेणैव वरꣳ स्पृणोत्यात्मा हि वरः (१), इति॥**

**इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके द्वितीयप्रपाठके षोडशोऽनुवाकः॥ १६॥**

गौर्वै वर इति सूत्रकारेणोक्तत्वाद्गौरेव दक्षिणा, वरेण श्रेष्ठेन गोद्रव्येण वरं श्रेष्ठं ब्राह्मणं स्पृणोति प्रीणयति। यस्माद्वरो गौरात्मैव तस्मात्स्वेन समानत्वात्तया दाक्षिणया स्वात्मानमेव दत्तवानिति कृत्वा तत्पापनिवृत्तिर्युक्ता॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्ये द्वितीयप्रपाठके षोडशोऽनुवाकः॥ १६॥

---

अथ द्वितीये सप्तदशोऽनुवाकः।

---

पूर्वमनापदि दुष्टयाजनस्य प्रायश्चित्तमुक्तम्। इदानीमापदि तद्याजनस्य पूर्वस्मादल्पं प्रायश्चित्तं विधत्ते—

**दुहे हवा एष छन्दाꣳसि यो याजयति**
**स येन यज्ञक्रतुना याजयेत्सोऽरण्यं परेत्य[4]**
**शुचौ देशे स्वाध्यायमेवैनमधीयन्नासीत—, इति।**

यः पुमान्धनाभावे जीवनाभावात्प्राणरक्षणायायाज्यमपि पुरुषं याजयेत्। एतच्च

---

१ ग. वाऽनश्नन्भोज°। २ ग. °हितः स्वाध्यायं त्रिवा°। ३ ग. °ति। पू°। ४ ग. परीत्य। ५ क. ख. °मान्प्राण°।

वाजसनेयके दर्शितम्—"प्राणस्य वै सम्राट्कामायायाज्यं याजयत्यप्रतिगृह्यस्य प्रतिगृह्णाति" इति । ईदृशः पुमांश्छन्दांसि दुहे स्वकीयान्मन्त्रान्रिक्ती करोति फलरहितान्करोति । तत्परिहारार्थं येन यज्ञक्रतुना याजितवानेनमेव क्रतुभागं स्वाध्यायं स पुमानरण्ये गत्वा पठन्नासीत, तेन प्रायश्चित्तं संपाद्यते ।

तत्संभावनार्थं ध्यानार्थं वा तत्र यज्ञावयवान्संपादयति—

**तस्यानशनं दीक्षा स्थानमुपसद आसनꣳ सुत्या वाग्जुहूर्मन उपभृद्धृतिर्ध्रुवा प्राणो हविः सामाध्वर्युः स वा एष यज्ञः प्राणदक्षिणोऽनन्तदक्षिणः समृद्धतरः ( १ ), इति ॥**

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके द्वितीयप्रपाठके सप्तदशोऽनुवाकः ॥ १७ ॥

तस्य प्रायश्चित्तार्थं वेदभागमध्येतुः पुरुषस्य तावति काले यो भोजनपरित्यागः सैव दीक्षा । यदेतच्छुद्धदेशरूपं स्थानं ता एवोपसदः, यत्तत्रोपवेशनं सैव सुत्या सोमाभिषवः, येयमस्य वाक्सेयं जुहूः, यन्मनः सैवोपभृत्, या धृतिरनुष्ठेयार्थावधारणा सैव ध्रुवा, यः प्राणस्तदेव हविः, यत्साम गीयमानं स एवाध्वर्युः । सोऽयं भावनारूपो यज्ञः प्राणदक्षिणः, देहान्ते प्राणपरित्याग एव दक्षिणास्थानीयः, अतोऽनन्तदक्षिणत्वादयं यज्ञोऽतिशयेन समृद्धः । उक्तयज्ञसमाप्तौ प्रभूतमन्नं देयमिति तात्पर्यार्थः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्ये द्वितीयप्रपाठके सप्तदशोऽनुवाकः ॥ १७ ॥

---

अथ द्वितीयेऽष्टादशोऽनुवाकः ।

---

प्रायश्चित्तार्थस्वाध्यायप्रसङ्गादवकीर्णिप्रायश्चित्तमुच्यते । तद्विधानार्थमादौ प्रस्तौति—

**कतिधाऽवकीर्णी प्रविशति चतुर्धेत्याहुर्ब्रह्मवादिनो मरुतः प्राणैरिन्द्रं बलेन बृहस्पतिं ब्रह्मवर्चसेनाग्निमेवेतरेण सर्वेण तस्यैतां प्रायश्चित्तिं विदांचकार सुदेवः काश्यपः—, इति ।**

---

१ ग. °कामेभ्य अयाज्यं । २ क. °हे तदीया° । ३ क. ग. गायनं ।

अवकीर्णं भग्नव्रतं ब्रह्मचारिणो रेतःस्कन्दनादिकं तद्यस्यास्ति सोऽवकीर्णी, तादृशः पुमान्स्वकीयैरेवावयवैर्देवान्प्रविशति देवास्तदीयानवयवान्विनाशयन्ति, तत्र कतिभिः प्रकारैर्देवान्प्रविशतीत्येवमनभिज्ञस्य प्रश्नः । तत्राभिज्ञा ब्रह्मवादिनश्चतुर्भिः प्रकारैरित्युत्तरमाहुः । त एव प्रकाराः स्पष्टी क्रियन्ते—स्वकीयैः प्राणैर्मरुतो देवान्प्रविशति । बलेनेन्द्रं प्रविशति । ब्रह्मवर्चसेन बृहस्पतिं प्रविशति । इतरेण सर्वेण वागादिनाऽग्निमेव प्रविशति । मरुदादयोऽस्य प्राणानपहरन्तीत्यर्थः । कश्यपस्य पुत्रः सुदेवाख्यः कश्चिदृषिस्तस्यैतस्य दोषस्य प्रायश्चित्तं निश्चितवान् ।

तदिदं प्रायश्चित्तं विधत्ते—

> यो ब्रह्मचार्यवकिरेदमावास्यायाꣳ रात्र्यामग्निं प्रणीयोपसमाधाय द्विराज्यस्योपघातं जुहोति कामावकीर्णोऽस्म्यवकीर्णोऽस्मि काम कामाय स्वाहा कामाभिद्रुग्धोऽस्म्यभिद्रुग्धोऽस्मि काम कामाय स्वाहेत्यमृतं वा आज्यममृतमेवाऽऽत्मन्धत्ते,—इति ।

आज्यस्योपघातमाज्यमुद्धरन्वोपहत्य सकृत्सकृदादाय द्विर्जुहोति । तत्र प्रथममन्त्रस्यार्थः । हे कामदेवावकीर्णोऽस्मि त्वत्प्रेरणया व्रतभ्रंशलक्षणमवकरं प्राप्तोऽस्मि । द्विरुक्तिरनुतापप्रकटनार्था । अवकरपरिहारार्थं कामाय देवाय स्वाहुतमिदमस्तु । अभिद्रुग्धो व्रतभ्रंशलक्षणाभिद्रोहं कृतवानस्मि । अन्यत्प्रथममन्त्रवत् । आज्यप्रशंसनमत्राऽऽज्यस्य देवप्रियत्वेनामृतत्वात्तद्धोमेनावकरपरिहाररूपममृतं स्वात्मनि संपादयति ।

उत्तरं कर्तव्यं विधत्ते—

> हुत्वा प्रयताञ्जलिः कवातिर्यङ्ङग्निमभिमन्त्रयेत,—इति ।

करयोः संपुटीकरणमञ्जलिः । तस्य प्रयतत्वं निश्छिद्रत्वम् । कवातिर्यगी(ङी)त्तिरश्चीनशरीरो नात्यन्तमभिमुखो नापि पराङ्मुखोऽपि तु पार्श्वे स्थितः ।

अभिमन्त्रणे मन्त्रं दर्शयति—

> सं माऽऽसिञ्चन्तु मरुतः समिन्द्रः सं बृहस्पतिः । सं माऽयमग्निः सिञ्चत्वायुषा च बलेन चाऽऽयुष्मन्तं करोत मेति—, इति ।

मरुतो देवाः प्राणैर्विशीर्णं मामासिञ्चन्तु, पुनः संभूय सिक्तमाप्यायितं कुर्वन्तु । एवमिन्द्रादिषु योज्यम् । किंचाऽऽयुषा बलेन च संयोज्य संपूर्णायुर्युक्तं कुर्वन्तु ।

---

१ क. ग. °माभि° । २ क. °हुः । ते च प्र° । ३ क. °श्चितिं नि° । ४ ख. °मुपहर° । ग. °मुपहत्योप° । ५ ख. °कृद्ग्रहणादा° । ६ क ख. °नरप्युक्ति° । ७ क. अ[व]कीर्णी(र्णि)[त्व]प्रकटनार्थं । ८ ग. °सरक° । ९ ग. °न वयः संयो° ।

अनेनोपस्थानेन पूर्वोक्तदोषसमाधानं दर्शयति—

**प्रति हास्मै मरुतः प्राणान्दधाति प्रतीन्द्रो बलं प्रति बृहस्पतिर्ब्र-**

**ह्मवर्चसं प्रत्यग्निरितरः सर्व१ँ सर्वतनुर्भूत्वा सर्वमायुरेति,—इति।**

अस्मै यजमानार्थं मरुतो देवाः प्राणान्प्रतिदधाति प्रतिष्ठापयन्ति। एवमिन्द्राद-योऽपि। ततोऽयं सर्वतनुः संपूर्णसर्वावयवो भूत्वा संपूर्णमायुः प्राप्नोति।

अभिमन्त्रणस्याऽऽवृत्तिं विधत्ते—

**त्रिरभिमन्त्रयेत त्रिषत्या हि देवाः,—इति।**

त्रिवारानुष्ठाने सत्यमिदं न तु कपटरूपमिति विश्वासो येषां देवानां ते त्रिषत्याः।

उक्तं प्रायश्चित्तं पापान्तरेऽप्यतिदिशति—

**योऽपूत इव मन्येत स इत्थं जुहुयादित्थमभिमन्त्रयेत**

**पुनीत एवाऽऽत्मानमायुरेवाऽऽत्मन्धत्ते,—इति।**

निश्चितस्यावकरस्याभावे कस्यापि पापस्य संभावनयाऽहमपूत इति यः शङ्कते सोऽपि पूर्वोक्तहोमाभिमन्त्रणे कुर्यात्। स पुमान्स्वात्मानं शोधयित्वा स्वात्मनि सर्व-मायुः संपादयति।

तत्रोभयत्र दक्षिणां विधत्ते—

**वरो दक्षिणा वरेणैव वर१ँ स्पृणोत्यात्मा हि वरः (१), इति॥**

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके द्वितीयप्रपाठ-
केऽष्टादशोऽनुवाकः॥ १८॥

पूर्ववद्व्याख्येयम्॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरी-यारण्यकभाष्ये द्वितीयप्रपाठकेऽष्टादशोऽनुवाकः॥ १८॥

---

अथ द्वितीय एकोनविंशोऽनुवाकः।

---

इदानीं सर्वयागारम्भेष्वायुष्करं ब्रह्मोपस्थानं विधित्सुस्तन्मन्त्रमाह। अथवा सा[य]-कालीनसंध्यावन्दनादूर्ध्वं ध्रुवमण्डले परब्रह्मोपस्थानार्थं मन्त्रमाह—

**भूः प्रपद्ये भुवः प्रपद्ये स्वः प्रपद्ये भूर्भुवः स्वः**

१ क. 'यित्वा स्वा°'।

प्रपंद्ये ब्रह्म प्रपंद्ये ब्रह्मकोशं प्रपंद्येऽमृतं प्रपंद्येऽमृतकोशं
प्रपंद्ये चतुर्जालं ब्रह्मकोशं यं मृत्युर्नावपश्यति तं
प्रपंद्ये देवान्प्रपंद्ये देवपुरं प्रपंद्ये परीवृतो वरीवृतो
ब्रह्मणा वर्मणाऽहं तेजसा कश्यपस्य,—इति।

य एते पृथिव्यादयस्त्रयो लोका यश्चैषां लोकानां संघस्तत्सर्वं प्रपद्ये प्राप्नोमि[1]
ब्रह्मशब्देन चतुर्मुखस्य शरीरमुच्यते। तस्य कोशस्थानीयो ब्रह्मलोकः[2]। अमृतशब्देन
विराट्कारणभूतः[3] सूत्रात्मोच्यते[4], तस्य कोशस्थानीयमव्यक्तम्[5]। एतच्चतुर्विधं प्रपद्ये[6]
भजामीत्यर्थः। चतुर्जालं चतुर्विधा अन्नमयप्राणमयमनोमयविज्ञानमयाः कोशा जाल-
वदावरका यस्य पञ्चमकोशस्य तं चतुर्जालं परब्रह्मणः कोशं यमानन्दमयं मृत्युर्नाव-
पश्यति नहि तस्य कारणरूपस्य कार्यवद्विनाशोऽस्ति, तादृशं कोशमहं प्रपद्ये। देवा-
निन्द्रादीन्, तेषां पुरं देवपुरं च प्रपद्ये। अहं तेन ब्रह्मणा वर्मणा कवचरूपेण पर-
मात्मना परीवृतः परितो वेष्टितो वरीवृतः पुनः पुनर्वेष्टितस्तथा कश्यपस्य तेजसा
कश्यपस्य प्रेक्षकस्य कश्यपः पश्यको भवतीति न्यायेन सर्वसाक्षिण ईश्वरस्य तेजसा
परिवृतः। अहमीदृशो रक्षकोऽयं ब्रह्मा तदुपस्थानेन मृत्युं तरामीत्यर्थः।

ब्रह्मोपस्थानकाले सर्वात्मकस्य परमेश्वरस्य शिशुमाराख्यजलग्र (ग्रा ?) हरूपत्वं
ध्यानार्थं दर्शयति—

यस्मै नमस्तच्छिरो धर्मो मूर्धानं ब्रह्मोत्तरा हनुर्यज्ञोऽ-
धरा विष्णुर्हृदयꣳ संवत्सरः प्रजननमश्विनौ पूर्वपादा-
वत्रिर्मध्यं मित्रावरुणावपरपादावग्निः पुच्छस्य प्रथमं
काण्डं तत इन्द्रस्ततः प्रजापतिरभयं चतुर्थꣳ—, इति।

यस्मै परब्रह्मणे नमः सर्वैर्नमस्कारः क्रियते तत्परं ब्रह्मात्र शिशुमाराख्यध्यात-
व्यस्य जलग्राहस्य[7] शिर उत्तमाङ्गस्थानम्। योऽयमनुष्ठेयो धर्मः स मूर्धानं मूर्धस्था-
नीयः, शिरसो मूर्धश्चैकस्मिन्नेवाऽऽयतन ऊर्ध्वाधोभागभेदेन भिदा। योऽयं चतुर्मुखो
ब्रह्मा सोऽयं तस्य ग्र (ग्रा ?) हस्योत्तरा हनुः। यो यज्ञः सोऽधरा हनुः। यो
विष्णुः सोऽयं हृदयस्थानीयः। यः संवत्सरः सोऽयं प्रजननेन्द्रियस्थानीयः। याव-

---

१ ग. °मि। ब्रह्म प्रपद्ये ब्रह्मकोशं प्रपद्येऽमृतं प्रपद्येऽमृतकोशं प्रपद्ये। त्र°। २ ख. ग. कोशः स्थानं जनलो°। ३ ग. °भूतं सू°। ४ ग. °त्रात्मरूपमुच्य°। ५ ख. ग. कोशः स्थानम°। ६ क. °द्ये प्राप्नोमी°। ७ क. ग. जलग्रहस्य।

श्विनौ तौ तस्य ग्र ( ग्रा ? ) हस्य पूर्वपादौ। योऽयमत्रिमुनिः सोऽयं मध्यशरीरम्। यौ **मित्रावरुणौ** देवौ तावपरपादौ। शिशुमारस्य पुच्छे बहवो भागाः। तत्राग्निः **पुच्छस्य प्रथमं काण्डं** प्रथमो भागः, ततस्तदूर्ध्वमिन्द्रो द्वितीयो भागः, ततोऽप्यूर्ध्वं प्रजापतिस्तृतीयो भागः, ततोऽपि परतोऽभयं भयरहितं परं ब्रह्म चतुर्थो भागः।

एवं ध्यातव्यानवयवान्संपाद्यावयविनं दर्शयति[२]—

**स वा एष दिव्यः शाक्करः शिशुमारस्तꣳ ह,—इति।**

यस्मै नमस्तच्छिर इत्यादिनाऽभयं चतुर्थमित्यन्तेन वाक्येन योऽयं निरूपितः स **एष दिव्यो** दिवि भवः, **शाक्करो**ऽत्यन्तशक्तिमान् शिशून्मारयति मुखेन निगिरतीति **शिशुमारो** जलग्र(ग्रा)हविशेषः, स हि जलमध्येऽत्यन्तविवृतेन मुखेन मनुष्यान्गृह्णातीति[३]।

एवं ध्यातव्यो ग्र(ग्रा?)हो निरूपितः, तद्ध्यानं तत्फलं च दर्शयति—

**य एवं वेदाप पुनर्मृत्युं जयति जयति स्वर्गं लोकं नाध्वनि प्रमीयते नाग्नौ प्रमीयते नाप्सु प्रमीयते नानपत्यः प्रमीयते लघ्वान्नो भवति,—इति।**

यः पुमान्[४] दिव्यं शिशुमारं वेद मनसा ध्यायति स पुनरपमृत्युं[५] जयति मार्गादिमरणरूपोऽपमृत्युविशेषश्च न भवति, दुर्मरणं तस्य न भवतीत्यर्थः। [ लघ्वान्नो ] लब्धान्नः सर्वत्र सुलभान्नो भवति।

अथ ध्यानानन्तरमनुमन्त्रण[६]माह—

**ध्रुवस्त्वमसि ध्रुवस्य क्षितमसि त्वं भूतानामधिपतिरसि त्वं भूतानाꣳ श्रेष्ठोऽसि त्वां भूतान्युपपर्यावर्तन्ते नमस्ते नमः सर्वं ते नमो नमः *शिशुकुमाराय नमः(१) इति॥**

**इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके द्वितीयप्रपाठक एकोनविंशोऽनुवाकः॥ १९॥**

अनेन मन्त्रेणोदङ्मुखो भूत्वा ध्रुवमण्डलं पश्यन्शिशुमाररूपेण तमुपतिष्ठेत्(त)। हे शिशुमार त्वं ध्रुवोऽसि विनाशरहितोऽसि। तथा ध्रुवस्य जगत आकाशादेः क्षितं

* ग पुस्तके टिप्पण्यां शिशुमारकुमारायेति पाठोऽन्यपुस्तकस्थो दत्तः।

१ क. ख. °त उर्ध्वं°। २ ग. संदर्शयति। ३ ख. ग. °ति। यद्वं। ४ क. °मान्दिव्यं शि°। ५ क. पुमानप° ६ ग. °णमन्त्रणा°।

निवासस्थानमसि । भूतानां सर्वेषां प्राणिनां त्वमधिपतिरसि । अत एव भूतानां मध्ये श्रेष्ठोऽसि । भूतानि सर्वाणि त्वामुपेत्य परितः सेवन्ते । तस्मात्ते तुभ्यं नमोऽस्तु यत्सर्वं जगत्त्वाधीनं तथा सति नमः सर्वं त्वदीयाय सर्वस्मै नमः । तथा ते नमः सर्वस्य स्वामिने तुभ्यमपि नमः । किं बहुना नमः शिशुकुमाराय नमः शिशुकुमारस्य जलग्र(ग्रा?) हविशेषस्य कुमारो बालकस्तदाकारो यो ध्रुवस्तस्मै नमस्कारोऽस्तु । उभयतो नमस्कारोऽयं मन्त्रः, तच्च नमस्कारद्वयमादरार्थम् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्ये द्वितीयप्रपाठक एकोनविंशोऽनुवाकः ॥ १९ ॥

---

अथ द्वितीयप्रपाठके विंशोऽनुवाकः ।

---

संध्यावन्दनाङ्गत्वेन शिशुमारोपस्थानमुक्तम्, अथ दिगुपस्थानमुच्यते । तत्र प्रथमं मन्त्रमाह —

नमः प्राच्यै दिशे याश्च देवता एतस्यां प्रतिवसन्त्येताभ्यश्च नमः,—इति ।

प्राच्यै पूर्वस्यै दिशे तदधिष्ठात्र्यै देवतायै नमोऽस्तु । याश्चैतस्यां प्राच्यां दिशि देवताः प्रतिवसन्त्येताभ्यो देवताभ्यश्च नमोऽस्तु ।

अथ द्वितीयादिमन्त्रानाह—

नमो दक्षिणायै दिशे याश्च देवता एतस्यां प्रतिवसन्त्येताभ्यश्च नमो नमः प्रतीच्यै दिशे याश्च देवता एतस्यां प्रतिवसन्त्येताभ्यश्च नमो नम उदीच्यै दिशे याश्च देवता एतस्यां प्रतिवसन्त्येताभ्यश्च नमो नम ऊर्ध्वायै दिशे याश्च देवता एतस्यां प्रतिवसन्त्येताभ्यश्च नमो नमोऽधरायै दिशे याश्च देवता एतस्यां प्रतिवसन्त्येताभ्यश्च नमो नमोऽवान्तरायै दिशे याश्च देवता एतस्यां प्रतिवसन्त्येताभ्यश्च नमः,—इति ।

एते मन्त्राः प्रथममन्त्रवद्व्याख्येयाः ।

---

१ ग. °गत्ते तथा° । २ ग. °स्कार° । ३ क. 'शुकुमा° ।

अथ मुन्युपस्थानमन्त्रं दर्शयति—

नमो गङ्गायमुनयोर्मध्ये ये वसन्ति ते मे प्रसन्नात्मान-
श्चिरं जीवितं वर्धयन्ति नमो गङ्गायमुनयोर्मुनिभ्यश्च
नमो नमो गङ्गायमुनयोर्मुनिभ्यश्च नमः ( १ ), इति ।

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके द्वितीयप्रपाठके
विंशोऽनुवाकः ॥ २० ॥

नमस्कारादिक[1] एको मन्त्र उभयतोनमस्कारौ द्वौ मन्त्रौ । गङ्गायमुनयोर्मध्ये पुण्यप्रदेशेषु तपोधिका ये केचन मुनयो वसन्ति ते सर्वेऽपि प्रसन्नचित्ता भूत्वा मम चिरमायुर्वृद्धिं कुर्वन्तु तेभ्यो नमः । उत्तरौ द्वौ मन्त्रौ भक्त्यतिशयद्योतनार्थौ । तत्रापि नमःशब्दद्वयोपेतत्वमत्यादरार्थम्[2] । तदेवमस्मिन्प्रपाठके स्वाध्यायविधिः प्राधान्येन प्रतिपादितः, तत्प्रसङ्गाच्छुद्धिकारणं संध्यावन्दनादिकं सर्वं प्रतिपादितम् ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्ये द्वितीयप्रपाठके विंशोऽनुवाकः ॥ २० ॥

सह रक्षाꣳसि यद्देवाः सप्तदश यददीव्यन्पञ्चदशाऽऽयुष्टे चतु-
स्त्रिꣳशद्वैश्वानराय षड्विꣳशतिर्वातरशना ह कूश्माण्डैरजान्ह
पञ्च ब्रह्मयज्ञेन ग्रामे मध्यंदिने तस्य वै मेघस्तस्य वै द्वौ रिच्य-
ते दुहे ह कतिधाऽवकीर्णी भूर्नमः प्राच्यै त्रिꣳशतिः * सह वात-
रशना ह दुहे ह चतुर्विंशꣳशतिः[3] ॥

अथ शान्तिः ।

नमो ब्रह्मणे नमो अस्त्वग्नये नमः पृथिव्यै
नम ओषधीभ्यः । नमो वाचे नमो वाचस्पतये

* ग. सह ब्रह्मयज्ञेन विꣳश° ।

१ क. °दिरेको । २ ख. ग. °मभ्यासार्थं° । ३ ग. °तुर्विꣳश° ।

नमो विष्णवे बृहते करोमि ॥

ॐ शान्तिः शान्तिः शान्तिः ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके द्वितीयः प्रपाठकः समाप्तः ॥ २ ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥ १ ॥

इति श्रीमद्वीरबुक्कणसाम्राज्यधुरंधरश्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्ये द्वितीयः प्रपाठकः समाप्तः ॥ २ ॥

---

अथ कृष्णयजुर्वेदीयतैत्तिरीयारण्यके तृतीयप्रपाठकस्याऽऽरम्भः ।

---

(तत्र प्रथमोऽनुवाकः ।)

हरिः ॐ ।

तच्छं योरावृणीमहे । गातुं यज्ञाय । गातुं यज्ञपतये । दैवी स्वस्तिरस्तु नः । स्वस्तिर्मानुषेभ्यः । ऊर्ध्वं जिगातु भेषजम् । शं नो अस्तु द्विपदे । शं चतुष्पदे ॥

ॐ शान्तिः शान्तिः शान्तिः ॥

इति शान्तिः ।

---

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥
स्वाध्यायब्राह्मणं प्रोक्तं द्वितीये हि प्रपाठके ।
चातुर्होत्रचितेर्मन्त्रा वक्ष्यन्तेऽस्मिन्प्रपाठके ॥ २ ॥

---

१ ख. °न्तेऽस्मिंस्तृतीयके । मा° ।

ब्राह्मणग्रन्थस्य तृतीयकाण्डे द्वादशप्रपाठके ब्रह्म वै चतुर्होतार इत्यस्मिन्ननुवाके चातुर्होत्रचितेर्ब्राह्मणमुक्तं न तु[1] तन्मन्त्रास्तत्रोक्ताः । तेषामरण्येऽध्येतव्यत्वात् । अतोऽस्मिन्प्रपाठके तन्मन्त्रा उच्यन्ते । तत्र प्रथमानुवाकोक्तमन्त्राणां विनियोगो ब्राह्मण एवं समाम्नातः पुरस्ताद्दशहोतारमुदञ्चमुपदधाति यावत्पदमिति । तत्पाठस्तु—

ॐ चित्तिः स्रुक् । चित्तमाज्यम् । वाग्वेदिः । आधीतं बर्हिः । केतो अग्निः । विज्ञातमग्निः । वाक्पतिर्होता । मन उपवक्ता । प्राणो हविः । सामाध्वर्युः, इति ।

आदौ सिसृक्षुः प्रजापतिः सृष्ट्यर्थं केनचिद्यागेनाऽऽध्यात्मिकेनेष्टवान्[3] । तद्यागवर्तिनः स्रुगादय एतेषु मन्त्रेषु प्रतिपाद्यन्ते । अत्र चित्तिचित्तशब्दाभ्यां निर्विकल्पकसविकल्पकभेदजनकावन्तःकरणवृत्तिभेदौ विवक्षितौ । वाक् प्रसिद्धा । आधीतमुच्चार्यमाणम् । केतविज्ञातशब्दाभ्यां निर्विकल्पकसविकल्पकज्ञानविषयावभिधीयेते । वाक्पतिशब्देन वाचः प्रवर्तकः कण्ठताल्वादिस्थानेषु संयुज्यमानो वायुरुच्यते । मनःप्राणौ प्रसिद्धौ । सामशब्देनाध्येतुर्वर्णोच्चारणशक्तिरुच्यते । एवं चित्त्यादयो दश शरीरगताः पदार्थविशेषाः स्रुगादयो दश पदार्था होमनिष्पादकाः । अग्निशब्दद्वयेन[5] चाऽऽहवनीयगार्हपत्यौ विवक्षितौ । उपवक्तृशब्देनानुवचनकर्तुर्होतुः[6] पुरा प्रैषवक्ता मैत्रावरुणो विवक्षितः । यद्वा प्रोक्षणादिष्वनुज्ञायां पृष्टायां ब्रह्मा समीपे स्थित[7] ॐ प्रोक्षेत्यादिना तदनुज्ञां वक्ति तस्मादयमुपवक्ता । चित्त्यादयः शरीरगतपदार्थाः स्रुगादिरूपा इति वाक्यार्थः । अस्मिन्मन्त्रे स्रुगादीनां होमसाधनानां दशानामभिहितत्वादयं मन्त्रो दशहोतेत्युच्यते । सोऽयं मन्त्रस्य पूर्वभागः । तस्य चावयवाः पृथगिष्टकामन्त्राः तत्र चित्तिः स्रुक्तया देवतयाऽङ्गिरस्वद्ध्रुवा सीदेत्येवमुपधानप्रकारो द्रष्टव्यः । एवमेता[8] दशेष्टका उपधेयाः ।

मन्त्रस्य योऽयमुत्तरो भागो ग्रहाख्यस्तेन ग्रहेष्टकामुपदध्यात्[9] । तथा च ब्राह्मणमाम्नातम्[10]—यथावकाशं ग्रहानिति । तं च ग्रहभागमाह[11]—

वाचस्पते विधे नामन् । विधेम ते नाम । विधेस्त्वमस्माकं नाम । वाचस्पतिः सोमं पिबतु । आऽस्मासु नृम्णं धात्स्वाहा (१), इति ।

---

१ ख. तु मन्त्रा° । २ क. °वाकम° । ३ ग. °न विधानेनाऽऽ° । ४ ख. ग. °तद्धेतुः स्वरोच्चा° । ५ क. ख. °येनाऽऽह° । ६ ख. ग. °र्तुर्ज्ञातुः । ७ क. स्थित्वो प्रो° । ८ ग. एता । ९ ग. °दधाति । त° । १० ख. °ह्मणे समा° । ११ ख. °हमा° ।

अध्वर्युः पञ्च च ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके तृतीयप्रपाठके प्रथमोऽनुवाकः ॥ १ ॥

हे **वाचस्पते** वाचः पालक हे **विधे** जगद्विधातः, हे **नामन्**सर्वस्य वशीकर्तः, **ते** तव **नाम विधेम** । अस्मदनुग्रहकारी देवोऽयमित्येवं प्रसिद्धिं कुर्मः । यद्वा नमनं प्रह्वीभावं संपादयामः । **त्वमप्यस्माकं नाम विधेः**, देवानां मध्ये यजमानोऽयं यथाशास्त्रं हुतवानिति प्रसिद्धिं कुरु । अयं **वाचस्पतिर्**मदीयेषु यागेषु **सोमं** सोमसदृशमाज्यं **पिबतु** । **अस्मासु** होमकर्तृषु **नृम्णम्**पेक्षितं धनमाधात्संपादयतु । इमं वृत्तान्तमुद्दिश्य जुहुधीति स्वकीया वागाह । अत्र वाचस्पत इत्यादि नृम्णं धादित्यन्तो ग्रहभागः । एतेषां मन्त्राणामुपधाने विनियोगैः प्रकरणसिद्धः, चातुर्होत्रब्राह्मणे वाचनिकश्च । इतरे तु विनियोगास्तत्र तत्र वाचनिकाः । ते च ब्राह्मणे द्वितीयकाण्डे द्वितीयतृतीयप्रपाठकयोः प्रपञ्चिताः । तेषु होमाहोमविषयभेदेन कश्चिद्विषय **आपस्तम्बेन** दर्शितः— "यत्र होमार्थाः सग्रहाः सस्वाहाकाराः, यत्राहोमार्था अग्रहा अस्वाहाकाराः" इति । सोऽयं न्याय उत्तरेष्वपि मन्त्रेष्वनुसंधेयः । तदेवमस्मिन्ननुवाके दशहोतृमन्त्रोऽभिहितः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्ये तृतीयप्रपाठके प्रथमोऽनुवाकः ॥ १ ॥

---

अथ तृतीये द्वितीयोऽनुवाकः ।

---

अथ चतुर्होतृमन्त्र उच्यते । तस्य च विनियोगो ब्राह्मणेनैवाभिहितः—दक्षिणतः प्राञ्चं चतुर्होतारमिति । तत्पाठस्तु—

पृथिवी होता । द्यौरध्वर्युः । रुद्रोऽग्नीत् । बृहस्पतिरुपवक्ता, इति ।

सोऽयं होतृभागः । तत्र पृथिव्यादयः प्रसिद्धाः, तथा होत्रादयश्च । उपवक्तृशब्देन समीपे स्थित्वा तत्तत्कर्मस्वनुजानानो ब्रह्मा विवक्षितः ।

अथ ग्रहभागमाह—

वाचस्पते वाचो वीर्येण । संभृततमेनाऽऽयक्ष्यसे । यजमा-

---

१ ख. ग. सोम° । २ ख. नृम्णं ध° । ३ ग. °मपिजितं धनमधा° । ४ ग. °गः । तत्र । ५ ग. ब्राह्मणस्य । ६ ग. संग्रहाः । ७ ग. °हाः स्वा° । ८ ग. °हाश्चास्वा° । ९ क. तत्क° ।

नाय वार्यम् । आ सुवस्करस्मै । वाचस्पतिः सोमं पिबति । जजनदिन्द्रमिन्द्रियाय स्वाहा ( १ ), इति ।

पृथिवी होता दश ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके तृतीयप्रपाठके द्वितीयोऽनुवाकः ॥ २ ॥

हे वाचस्पतेऽत्यन्तसंपादितेन मन्त्रात्मिकाया वाचः सामर्थ्येन त्वमा समन्ताद्यक्ष्यसे । अस्मै यजमानाय वार्यं वरणीयं सुवः स्वर्गमाकरा समन्तात्कुरु । अयं वाचस्पतिरस्मदीयेषु यागेषु सोमं पिबति । इन्द्रं देवमिन्द्रियसमृद्ध्यर्थं जजनज्जनयतु प्रेरयात्वित्यर्थः । तदेतदुद्दिश्य जुहुधीति स्वकीया वागाह ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्ये तृतीयप्रपाठके द्वितीयोऽनुवाकः ॥ २ ॥

अथ तृतीये तृतीयोऽनुवाकः ।

अथ पञ्चहोतुर्मन्त्र उच्यते । तद्विनियोगो ब्राह्मण एवमाम्नातः—पश्चादुदञ्चं पञ्चहोतारमिति । तत्पाठस्तु—

अग्निर्होता । अश्विनाऽध्वर्यू । त्वष्टाऽग्नीत् । मित्र उपवक्ता, इति ।

अग्न्यादयः प्रसिद्धाः । अध्वर्युः प्रतिप्रस्थाता चेत्येवमध्वर्युद्वित्वेन होतृपञ्चकं पूरणीयम् ।

अथ ग्रहभागमाह—

सोमः सोमस्य पुरोगाः । शुक्रः शुक्रस्य पुरोगाः । श्रातास्त इन्द्र सोमाः । वातापेर्हवनश्रुतः स्वाहा ( १ ), इति ॥

अग्निर्होताऽष्टौ ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके तृतीयप्रपाठके तृतीयोऽनुवाकः ॥ ३ ॥

१ ग. °माकः स° । २ क. °मन्त्रा उच्यन्ते । त° ।

योऽयं देवतात्मकः **सोमः** सोऽयं लतात्मकस्य यागदेशं प्रत्यागमने पुरतो गच्छति। शुक्रो भासको देवतादिप्रकाशको मन्त्रः **शुक्रस्य** गृह्यमाणतया भासमानस्य सोमस्य पुरतो गच्छति। आदौ मन्त्रं पठित्वा पश्चात्सोमो गृह्यते। हे इन्द्र ते त्वदर्थमेते **सोमाः श्राताः** पक्वाः, आश्रिता वा। कीदृशस्य ते। वातवदाप्नोति रंहसा गच्छतीति वाता-पिस्तस्य। हवनमाह्वानं शृणोतीति हवनश्रुत्तस्य। एतदर्थं जुहुधीति स्वकीया वागाह॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्ये तृतीयप्रपाठके तृतीयोऽनुवाकः॥ ३॥

---

अथ तृतीये चतुर्थोऽनुवाकः।

---

अथ षड्ढोतृमन्त्र[1] उच्यते। द्विविधस्तन्मन्त्रः। अस्मिंश्चतुर्थानुवाके प्रोक्तः सूर्यं ते चक्षुरित्येकः। षष्ठानुवाके प्रोक्तो वाग्घोतेत्यपरः। स एव चातुर्होत्रचयने प्रयोक्तव्यः। वाग्घोता षड्ढोतॄणामित्येवं तद्ब्राह्मणे निर्देशात्। सूर्यं त इत्यस्य तु पशुबन्धादौ विनि-योगः। स च होतृब्राह्मणकाण्डे पठ्यते। पशुबन्धेन यक्ष्यमाणः षड्ढोतारं मनसाऽनु-द्रुत्याऽऽहवनीये जुहुयादिति। तन्मन्त्रपाठस्तु—

**सूर्यं ते चक्षुः। वातं प्राणः। द्यां पृष्ठम्। अन्तरि-क्षमात्मा। अङ्गैर्यज्ञम्। पृथिवीꣳ शरीरैः, इति।**

हे पशो योऽयं **सूर्यः** स **ते चक्षुः**, यो वायुः स ते **प्राणः**। तथा[2] च पशुविषयेऽ-ध्रिगुप्रैषे[4] समाम्नायते—सूर्यं चक्षुर्गमयतात्। वातं प्राणमन्ववसृजतादिति। या द्यौः स पृष्ठभागः, उपरिवर्तित्वसाम्यात्। यदिदमन्तरिक्षं तत्त्वदीयो जीवात्मा, मध्यवर्तित्व-साम्यात्। यानि हृदयादीन्यङ्गानि तैर्यज्ञं संपादयसीति शेषः। यान्यन्यान्यस्थ्यादीनि शरीरगतानि तैः **पृथिवीं** प्राप्नुहीति शेषः। सूर्यं ते चक्षुरित्यादावपि त्वदीयं चक्षुः सूर्यं प्राप्नोत्विति वा योजनीयम्। अथ वा वक्ष्यमाणं वाचस्पतिसंबोधनमनूद्य ते चक्षुः सूर्यं प्राप्नोत्विति वा योजनीयम्। अथ वा वक्ष्यमाणं वाचस्पतिसंबोधनमनूद्य ते चक्षुः सूर्यं रूपं जानीयादित्येवं वाचस्पतिपरतया मन्त्रे योज्यम्। होमानिष्पादकस्य पशोश्चक्षु-रादीनि षडङ्गान्यत्रोक्तानीत्यस्य मन्त्रस्य षड्ढोतृत्वम्।

अथ ग्रहभागमाह—

**वाचस्पतेऽच्छिद्रया वाचा। अच्छिद्रया जुह्वा।**

---

१ ख. ग. वायुर°। क. °मन्त्रा उच्यन्ते। द्वि°। ३ ग. °था प°। ४ ग. °ये दिगु°। ५ क. °यत्विति। ग. °यतीति। ६ क. °म्यस्थ्या°। ७ ग. सूर्यरू°। ८ क. मन्त्रो। ९ क. योज्यः।

दिवि देवावृधꣳ होत्रामेरयस्व स्वाहा ( १ ), इति ॥

सूर्यं ते नव ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके तृतीयप्रपाठके चतुर्थोऽनुवाकः ॥ ४ ॥

हे वाचस्पतेऽच्छिद्रया वाचा स्वराक्षरसंपूर्णेन मन्त्रेण, अच्छिद्रया जुह्वा घृतसंपूर्णया स्रुचा, देवावृधं देवानां वर्धयित्रीं होत्रां होमक्रियां दिवि द्युलोक एरयस्व सर्वतः प्रेरय । एतमर्थमुद्दिश्य जुहुधीति स्वकीयां वागाह ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्ये तृतीयप्रपाठके चतुर्थोऽनुवाकः ॥ ४ ॥

---

अथ तृतीये पञ्चमोऽनुवाकः ।

---

अथ सप्तहोतृमन्त्र[1] उच्यते । तस्य च[2] विनियोगश्चातुर्होत्रब्राह्मण एवमाम्नातः—“उपरिष्टात्प्राञ्चꣳ सप्तहोतारम्” इति । तत्पाठस्तु—

महाहविर्होता । सत्यहविरध्वर्युः । अच्युतपाजा अग्नीत् । अच्युतमना उपवक्ता । अनाधृष्यश्चाप्रतिधृष्यश्च यज्ञस्याभिगरौ । अयास्य उद्गाता, इति ।

महाहविः सत्यहविरित्याद्या अयास्यान्ताः सप्तसंख्याका महर्षयः । तन्महर्षिस्वरूपा अत्रत्या होत्रादयः । यज्ञस्य सोमयागस्य । अभिगरौ, अभित उद्गातुः पुरस्तात्पश्चाच्च गृहीतप्रस्तारप्रतिहारभागौ गायेते इति प्रस्तोतृप्रतिहर्तारावभिगरौ । होताऽध्वर्युराग्नीध्रो ब्रह्मा प्रस्तोता प्रतिहर्तोद्गातेति सप्तसंख्याका होमनिष्पादका अत्रोक्ता इत्ययं मन्त्रः सप्तहोतेत्युच्यते ।

अथ ग्रहभागमाह—

वाचस्पते हृद्विधे नामन् । विधेम ते नाम । विधेस्त्वमस्माकं नाम । वाचस्पतिः सोममपात् । मा दैव्यस्तन्तुश्छेदि मा मनुष्यः । नमो दिवे । नमः पृथिव्यै स्वाहा ( १ ), इति ।

---

१ क. एवम° । २ क. °मन्त्रा उच्यन्ते । त° ।

अपाचीनि च ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके तृतीयप्रपाठके पञ्चमोऽनुवाकः ॥ ५ ॥

हे वाचस्पते हे हृद्विधे हृदयस्य विधातः चित्तप्रेरकेत्यर्थः। हे नामन्सर्वजगत्सं-बन्धिप्रणामयुक्त ते तुभ्यं नाम नामनं प्रणतिं विधेम कुर्मः। त्वं चास्माकं नाम वेधेः, देवानां मध्ये ऽस्म्यग्रपष्टवानिति प्रसिद्धं नामधेयं कुरु। अयं वाचस्पतिः सोममपात्पीतवान्। दैव्यस्तन्तुर्मदूहे हविःस्वीकारार्थमागतो देवसंबन्धी संतानो मा च्छेदि कदाचिदपि विच्छिन्नो मा भूत्। तथा मनुष्यस्तन्तुर्ऋत्विक्प्रवाहोऽपि विच्छिन्नो मा भूत्। द्यावापृथिवीभ्यां नमोऽस्तु। तमिममर्थमुद्दिश्य जुहुधीति स्वकीया गाह ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीय-तैत्तिरीयारण्यकभाष्ये तृतीयप्रपाठके पञ्चमोऽनुवाकः ॥ ५ ॥

---

अथ तृतीये षष्ठोऽनुवाकः।

---

अथ द्वितीयः षड्ढोतृमन्त्र[1] उच्यते[2]। तस्य च विनियोगश्चातुर्होत्रब्राह्मणे समाम्नातः—"उत्तरतः प्राञ्च[4] षड्ढोतारम्" इति। तत्पाठस्तु—

वाग्घोता। दीक्षा पत्नी। वातोऽध्वर्युः। आपोऽभिगरः। मनो हविः। तपांसि जुहोमि, इति।

येयं यजमानस्य वाक्सेयं होतृस्थानीया। येयं दीक्षा सा पत्नीस्थानीया। योऽयं वातः प्राणरूपः सोऽध्वर्युस्थानीयः। याः प्रोक्षणाद्यर्था आपस्ता अभिगरो ब्रह्मस्थानीयाः। अभितो गिरति कर्तव्यमनुजानातीत्यभिगरः। यन्मनस्तद्धविःस्थानीयम्। तपस्यग्निस्थानीये तन्मनोहविर्जुहोमि स्थापयामि। अत्र वागादीनां षण्णां होत्रादिरूपेण होमनिष्पादकानामभिधानात्षड्ढोतृत्वम्।

अथ ग्रहभागमाह—

भूर्भुवः सुवः। ब्रह्म स्वयंभु।
ब्रह्मणे स्वयंभुवे स्वाहा (१), इति।

---

१ ग 'बन्धप्रमाणयु'। २ क. अथापरे ष'। ३ क. 'मन्त्रा उच्यन्ते। त'। ४ क. प्राग एवमा'। ख. प्राग एव स'।

ब्रह्मघोता नवं ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके तृतीयप्रपाठके षष्ठोऽनुवाकः ॥ ६ ॥

ये एते भूरादयस्त्रयो लोकास्तेषां यत्कारणं स्वयंभु स्वतः सिद्धं परं ब्रह्म तस्मै स्वयंभुवे परब्रह्मणे जुहुधीति स्वकीया वागाह ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्ये तृतीयप्रपाठके षष्ठोऽनुवाकः ॥ ६ ॥

---

अथ तृतीये सप्तमोऽनुवाकः ।

---

अनन्तरभाविनोऽनुवाकस्य चातुर्मास्येषु केशनिवर्तनेषु तद्दतं तत्सत्यमिति जपि पश्चोज्जपमापस्तम्ब आह—"ब्राह्मण एकहोतेति चानुवाकम्" इति । तथा ब्रह्मेमे नुपद्रवतोऽजस्यानुमन्त्रणे विनियोगं भरद्वाज आह—ब्राह्मण एकहोतेति चेति एतदनुवाकगतेषु दशसु पर्यायेषु प्रथमं पर्यायमाह—

ब्राह्मण एकहोता । स यज्ञः । स मे ददातु प्रजां पशून्पुष्टिं यशः । यज्ञश्च मे भूयात्, इति ।

योऽयं वेदविद्ब्राह्मणः सोऽयमेकेन स्वकीयेन तपसा जुहोति सर्वस्य जगत उ करोतीत्येकहोता । स एव ज्योतिष्टोमादिनिष्पादकत्वाद्यज्ञस्वरूपश्च । स ईदृ ब्राह्मणो मह्यं प्रजादिचतुष्टयं ददातु । तत्प्रसादाद्यज्ञोऽपि मे सर्वदा भूयात् ।

अथ द्वितीयं पर्यायमाह—

अग्निर्द्विहोता । स भर्ता । स मे ददातु प्रजां पशून्पुष्टिं यशः । भर्ता च मे भूयात्, इति ।

द्वाभ्यां पाकहविर्वहनाभ्यामुपकरोतीति द्विहोता । अत एव पोषकत्वाद्भर्ता अन्यत्पूर्ववद्व्याख्येयम् ।

अथ तृतीयमाह—

पृथिवी त्रिहोता । स प्रतिष्ठा (१) । स मे ददातु प्रजां पशून्पुष्टिं यशः । प्रतिष्ठा च मे भूयात्, इति ।

---

१ क. यतो भू° । २ ख. °श्चाऽऽपनमा° । ३ क. °मेवेऽनु।° । ४ ख. °तो मेक्षणस्या°

भिरन्यन्नयागैरुपकरोतीति त्रिहोतृत्वं सर्वप्राण्याधारत्वेन प्रतिष्ठात्वं च ।

अथ चतुर्थमाह—

अन्तरिक्षं चतुर्होता । स विष्ठाः । स मे ददातु प्रजां पशून्पुष्टिं यशः । विष्ठाश्च मे भूयात्, इति ।

चतुर्भिर्वाग्वृष्टच्यवकाशस्थानैरुपकाराच्चतुर्होतृत्वं यक्षगन्धर्वादीनामाश्रयत्वाद्विविधस्थि-हेतुत्वं च ।

अथ पञ्चममाह—

वायुः पञ्चहोता । स प्राणः । स मे ददातु प्रजां पशून्पुष्टिं यशः । प्राणश्च मे भूयात् (२), इति ।

पञ्चभिः प्राणवृत्तिभिरुपकरोतीति पञ्चहोतृत्वम् । वायोः प्राणरूपत्वं प्रसिद्धम् ।

अथ षष्ठमाह—

चन्द्रमाः षड्ढोता । स ऋतून्कल्पयाति । स मे ददातु प्रजां पशून्पुष्टिं यशः । ऋतवश्च मे कल्पन्ताम्, इति ।

षण्णामृतूनां निष्पादकत्वेन षड्ढोतृत्वम् । चन्द्रमा[1] हि वृद्धिक्षयाभ्यां शुक्ल-[2]पक्षद्वारर्तून्कल्पयति । अत एवान्यत्राऽऽम्नातम्—“ ऋतूनन्यो विदधज्जायते [3]: ” इति ।

अथ सप्तममाह—

अन्नꣳ सप्तहोता । स प्राणस्य प्राणः । स मे ददातु प्रजां पशून्पुष्टिं यशः । प्राणस्य च मे प्राणो भूयात्, इति ।

सप्तानां शीर्षण्यानां प्राणवृत्तीनां पोषकत्वेन सप्तहोतृत्वम् । अत एव प्राणपोषक-प्राणस्य प्राण इत्युच्यते ।

अथाष्टममाह—

द्यौरष्टहोता । सोऽनाधृष्यः (३) । स मे ददातु प्रजां पशून्पुष्टिं यशः । अनाधृष्यश्च भूयासम्, इति ।

आरोगादिभिः कश्यपान्तैरष्टभिः सूर्यैरुपकरोतीत्यष्टहोतृत्वम् । द्युलोकस्य केनापि कर्तुमशक्यत्वादनाधृष्यत्वम् ।

---

१ ख. ग. °मा अपि वृ° । २ ख. वृद्ध्यपक्ष° । ग. वृद्धचपक्षयकराभ्यां । ३ क° °ति । °।

अथ नवममाह—

आदित्यो नवहोता । स तेजस्वी । स मे ददातु प्रजां

पशून्पुष्टिं यशः । तेजस्वी च भूयासम् , इति ।

पूर्वोक्तैरष्टभिर्मूर्तिभिस्तत्रानुगतेन सामान्यरूपेण च नवधोपकारान्नवहोतृत्वम् । तेजस्वित्वं चाऽऽदित्यस्य प्रसिद्धम् ।

अथ दशममाह—

प्रजापतिर्दशहोता । स इद५ सर्वम् । स मे ददातु प्रजां

पशून्पुष्टिं यशः । सर्वं च मे भूयात् ( ४ ), इति ।

प्रतिष्ठा प्राणश्च मे भूयादनाधृष्यः सर्वं च मे भूयात् ॥

ब्राह्मणो यज्ञोऽग्निर्भर्ता पृथिवी प्रतिष्ठाऽन्तरिक्षं विष्ठा वायुः प्राणश्चन्द्रमा स ऋतूनन्न५ स प्राणस्य प्राणो द्यौरनाधृष्य आदित्यः स तेजस्वी प्रजापतिः स इद५ सर्वं च मे भूयात् ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके तृतीयप्रपाठके सप्तमोऽनुवाकः ॥ ७ ॥

नव वै पुरुषे प्राणा नाभिर्दशमीति श्रुतानि शरीरगतानि दश च्छिद्राण्युत्पाद्योपकारित्वाद्दशहोतृत्वम् । सर्वजगत्कारणत्वेन सर्वात्मकत्वं प्रजापतेः प्रसिद्धम् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्ये तृतीयप्रपाठके सप्तमोऽनुवाकः ॥ ७ ॥

---

अथ तृतीयेऽष्टमोऽनुवाकः ।

---

अथ संभारयजूंष्युच्यन्ते । तेषां चेष्टकोपधाने विनियोगश्चातुर्होत्रीयब्राह्मणे हितः—" हृदयं यजू५षि पत्न्यश्च " इति । तेषामेकविंशतिसंख्याकानां पाठस्तु—

अग्निर्यजुर्भिः । सविता स्तोमैः । इन्द्र उक्थामदैः । मित्रावरुणावाशिषा । अङ्गिरसो धिष्णियैरग्निभिः मरुतः सदोहविर्धाना-

---

१ ख. °भिर्मूर्तिभि° । ग. °भिर्होतृभि° । २ ख. ग. °ण न° । ३ ग. °भा ह्य° । °पकरोतीति दश° । ४ क. °णत्वं स° ।

भ्याम् । आपः प्रोक्षणीभिः । ओषधयो बर्हिषा । अदितिर्वेद्या । सोमो दीक्षया (१) । त्वष्टेध्मेन । विष्णुर्यज्ञेन । वसव आज्येन । आदित्या दक्षिणाभिः । विश्वे देवा ऊर्जा । पूषा स्वगाकारेण । बृहस्पतिः पुरोधया । प्रजापतिरुद्गीथेन । अन्तरिक्षं पवित्रेण । वायुः पात्रैः । अहꣳ श्रद्धया (२), इति ।

दीक्षया पात्रैरेकं च ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके तृतीयप्रपाठकेऽष्टमोऽनुवाकः ॥ ८ ॥

अत्राग्निसवित्रादयो देवा यजुःस्तोमादीनि यज्ञे संभरणीयान्यङ्गानि । एते देवास्तैः संभरणीयैः सहास्मिन्कर्मण्यागच्छन्त्विति वाक्यार्थः । उक्थामदशब्दः शस्त्रवाची । यज्ञशब्दो हविष्प्रक्षेपवाची । स्वगाकारः शंयुवाकमन्त्रः । पुरोधा ग्रहणकाले पठनीया ऋक्पुरोवाक् । पवित्रशब्दो दशापवित्रवाची । अहं यजमानः श्रद्धया सहाऽऽगच्छामि । स्पष्टमन्यत् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्ये तृतीयप्रपाठकेऽष्टमोऽनुवाकः ॥ ८ ॥

अथ तृतीयप्रपाठके नवमोऽनुवाकः ।

अथ देवपत्न्याख्या मन्त्रा उच्यन्ते । तेषां च विनियोगः पूर्ववद्द्रष्टव्यः । पत्न्यग्रत्येवं तत्र पत्नीष्टकानामभिधानात् । पाठस्तु—

सेनेन्द्रस्य । धेना बृहस्पतेः । पथ्या पूष्णः । वाग्वायोः । दीक्षा सोमस्य । पृथिव्यग्नेः । वसूनां गायत्री । रुद्राणां त्रिष्टुक्* । आदित्यानां जगती । विष्णोरनुष्टुक्* (१) । वरुणस्य विराट् । यज्ञस्य पङ्क्तिः । प्रजापतेरनुमतिः ।

* अत्राग्ने चानुष्टुगित्यत्र ग. पुस्तके त्रिष्टुबनुष्टुबित्यनुक्रमेण शोधितः पाठः । स च न वैदिकप्रसिद्धः ।

१ ख. ग. संभर° । २ ख. ग. एतैर्देवा° । ३ क. °वास्तैर्भर° ४ ग °च्छन्त्वति । ५ ख. °मदः श° । ६ क. °त् । तत्पाठ° ।

मित्रस्य श्रद्धा। सवितुः प्रसूतिः। सूर्यस्य मरीचिः। चन्द्रमसो रोहिणी। ऋषीणामरुन्धती। पर्जन्यस्य विद्युत्। चतस्रो दिशः। चतस्रोऽवान्तरदिशाः। अहश्च रात्रिश्च। कृषिश्च वृष्टिश्च। त्विषिश्चापचितिश्च। आपश्चौषधयश्च। ऊर्क्च सूनृता च देवानां पत्नयः (२), इति।

अनुष्टुग् दिशः षट् च ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके तृतीयप्रपाठके नवमोऽनुवाकः ॥ ९ ॥

देवजाताविन्द्रादयः पतयः, सेनादयः पत्न्यः। दिग्विदिगादयोऽपि केषांचिद्देवानां पत्न्यः। एताः सर्वा आगत्य यज्ञमविकलं कुर्वन्त्विति वाक्यार्थः। अत्राऽऽम्नातैः षड्विंशतिवाक्यैः षड्विंशतिसंख्याकाः पत्नीष्टका उपदध्यात् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्ये तृतीयप्रपाठके नवमोऽनुवाकः ॥ ९ ॥

---

अथ तृतीये दशमोऽनुवाकः।

---

अथ प्रतिग्रहमन्त्रा उच्यन्ते[1]। तैश्च प्रतिग्रहेष्टकोपधानं[2] चातुर्होत्रीयब्राह्मण एवमाम्नातम्—"यथावकाशं प्रतिग्रहाँल्लोकं पृणाश्च" इति। तत्र प्रथमं[3] मन्त्रमाह—

देवस्य त्वा सवितुः प्रसवे। अश्विनोर्बाहुभ्याम्। पूष्णो हस्ताभ्यां प्रतिगृह्णामि। राजा त्वा वरुणो नयतु। देवि दक्षिणेऽग्नये हिरण्यम्। तेनामृतत्वमश्याम्[4]। वयो दात्रे। मयो मह्यमस्तु प्रतिग्रहीत्रे[5]। क इदं कस्मा अदात्। कामः कामाय। कामो दाता (१)। कामः प्रतिग्रहीता। कामꣳ समुद्रमाविश। कामेन त्वा प्रतिगृह्णामि। कामैतत्ते। एषा ते काम दक्षिणा। उत्तानस्त्वाऽऽङ्गीरसः प्रतिगृह्णातु, इति।

हे प्रतिगृह्यमाणद्रव्य सवितुर्देवस्य प्रेरणे सत्यश्विसंबाधिभ्यां बाहुभ्यां पूषसं

---

१ क. °न्ते। तच्च प्र°। २ ग. °ग्रहेष्टि°। ३ ग. °थममा°। ४ ग. °मश्याम्। ५ °ग्रहित्रे।

निभ्यां हस्ताभ्यां त्वां प्रतिगृह्णामि। हे दक्षिणे देवि वरुणो राजा हिरण्यरूपां त्वामग्नये प्रापयतु। तेनाग्निप्रापणेन प्रतिग्रहदोषाभावादहममृतत्वं नरकाभावरूपं प्राप्नुयाम्। इयं च दक्षिणा दात्रे वयोऽस्तु पक्षिरूपिणी भूत्वा दातारं स्वर्गं नयत्वित्यर्थः। प्रतिग्रहीत्रे मह्यं मयः सुखमस्तु। इदं द्रव्यं कः प्रजापतिः कस्मै प्रजापतयेऽदाद्दत्तवान्, अन्तर्यामिरूपेण दातृप्रतिग्रहीत्रोः प्रेरकत्वात्। तथा कामः कामाय दत्तवान्। यथा प्रजापतिरदृष्टप्रेरकस्तथा कामस्य दृष्टप्रेरकत्वात्। तस्मात्काम एव दाता प्रतिग्रहीता च। स्वर्गादिफलविषयः कामो दाता, ऐहिकसुखविषयः कामः प्रतिग्रहीता। ततो हे दक्षिणे समुद्रसमं कामं प्रविश। कामेन निमित्तेन त्वां प्रतिगृह्णामि। हे मद्धृदयवर्तिकाम तदेतद्द्रव्यं तुभ्यं भवति। हे काम ते त्वत्प्रीतय एवैषा दक्षिणा प्रवृत्ता। अङ्गिरोगोत्रे समुत्पन्न उत्तानाख्यो महर्षिस्त्वां प्रतिगृह्णातु।

अथ वस्त्रादिद्रव्यविषयान्षोडश मन्त्रानाह—

सोमाय वासः। रुद्राय गाम्। वरुणायाश्वम्। प्रजापतये पुरुषम् (२)। मनवे तल्पम्। त्वष्ट्रेऽजाम्। पूष्णेऽविम्। निर्ऋत्या अश्वतरगर्दभौ। हिमवतो हस्तिनम्। गन्धर्वाप्सराभ्यः स्रगलंकरणे। विश्वेभ्यो देवेभ्यो धान्यम्। वाचेऽन्नम्। ब्रह्मण ओदनम्। समुद्रायापः (३)। उत्तानायाऽऽङ्गीरसायानः। वैश्वानराय रथम्, इति।

एतेषु सर्वेषु मन्त्रेषु देवि दक्षिण इत्यन्तः पूर्वानुषङ्गः। तेनामृतत्वादिकमित्युत्तरानुषङ्गः।

तस्य रथप्रतिग्रहमन्त्रस्य शेषभूतामुत्तरानुषङ्गात्पूर्वभाविनीं कांचिदृचमाह—

वैश्वानरः प्रत्नथा नाकमारुहत्। दिवः पृष्ठं भन्दमानः सुमन्मभिः। स पूर्ववज्जनयञ्जन्तवे धनम्। समानमज्मा परियाति जागृविः, इति।

वैश्वानराख्यो देवः प्रत्नथा पुरातनशरीरधारी सन्स्वर्गमारूढवान्। स च दिवः पृष्ठे द्युलोकस्योपरिभागे मन्मभिर्मननविशेषैर्भन्दमानः कल्याणं कुर्वन्वर्तते। अयं यजमान इमां दक्षिणां दत्तवानित्येवं वदन्देवानामग्रे स्मारयतीत्यर्थः। स वैश्वानरो

---

१ क. पक्षी भू°। २ ग. स्वर्गं। ३ ख. ग. °व्यं प्र°। ४ ख. ग. °तिः प्र°। ५ ग. °ये दत्त°। ६ क. ख. त्वदर्थमेवै°। ७ क. ग. °भागं म°।

जन्तवे प्राणिरूपाय यजमानाय धनं पूर्ववज्जनयत्, यजमानः पूर्वं यथा दक्षिणां दत्तवांस्तथैव तदनुरूपं फलं जनयति। स वैश्वानरो जागृविः सावधानः सन्नज्मा स्वर्गगमनशीलः समानं परियाति, यावद्दाक्षिणार्थं द्रव्यं तेन सदृशं तद्योग्यं फलं परिप्रापयति।

अस्या ऋच उपरितनं रथप्रतिग्रहमन्त्रशेषमाह—

राजा त्वा वरुणो नयतु देवि दक्षिणे वैश्वानराय रथम्। तेनामृतत्वमश्याम्। वयो दात्रे। मयो मह्यमस्तु प्रतिग्रहीत्रे (४)। क इदं कस्मा अदात्। कामः कामाय। कामो दाता। कामः प्रतिग्रहीता। कामꣳ समुद्रमाविश। कामेन त्वा प्रतिगृह्णामि। कामैतत्ते। एषा ते काम दक्षिणा। उत्तानस्त्वाऽऽङ्गीरसः प्रतिगृह्णातु (५), इति ॥

दाता पुरुषमापः प्रतिग्रहीत्रे नव च ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके तृतीयप्रपाठके दशमोऽनुवाकः ॥ १० ॥

अत्र तेनामृतत्वमश्यामित्यादिरुत्तरानुषङ्गः सर्वमन्त्रसाधारण इति दर्शयितुं प्रथममन्त्रे पठितोऽपि पुनराम्नातो राजा त्वेत्यादिर्वैश्वराय रथमित्यन्तः पूर्वोक्तायां ऋच उपरि रथमन्त्रे पुनः पठनीयः, इत्येतावान्विशेषः। एतैर्मन्त्रैः प्रतिग्रहेष्टका उपदध्यात्॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्ये तृतीयप्रपाठके दशमोऽनुवाकः ॥ १० ॥

अथ तृतीय एकादशोऽनुवाकः।

अथ होतृहृदयाख्या मन्त्रा अभिधीयन्ते। तेषां त्विष्टकोपधाने विनियोगश्चातुर्होत्रीयब्राह्मण एवमाम्नायते—'हृदयं यजूꣳषि पत्न्यश्च' इति। तत्र दशहोतृहृदयाख्यं मन्त्रमाह—

सुवर्णं घर्मं परिवेद वेनम्। इन्द्रस्याऽऽत्मानं दशधा चरन्तम्।

१ ध °ग्रहित्रे (४)। २ ग. °त्रे। क°। ३ ग (४)। ४ ख °वमन्त्रे सा°। ग. °वत्र सा°। ५ ख. ग. दर्शयति। ६ ख. ग. °का या ऋ°। ७ क. ख. तेषामिष्ट°। ८ ख. °व एमा°। ९ क. ख. °म्नातः। ह°।

अन्तः समुद्रे मनसा चरन्तम् । ब्रह्माऽन्वविन्दद्दशहोतारमर्णे ।
अन्तः प्रविष्टः शास्ता जनानाम् । एकः सन्बहुधा विचारः ।
शत१ँ शुक्राणि यत्रैकं भवन्ति । सर्वे वेदा यत्रैकं भवन्ति ।
सर्वे होतारो यत्रैकं भवन्ति । स मानसीन आत्मा जनानाम् (१) । अन्तः प्रविष्टः शास्ता जनाना१ँ सर्वात्मा ।
सर्वाः प्रजा यत्रैकं भवन्ति । चतुर्होतारो यत्र संपदं
गच्छन्ति देवैः । स मानसीन आत्मा जनानाम्, इति ।

चित्तिः स्रुगित्यादीनां होतृमन्त्राणां हृदयं रहस्यं तत्त्वं परमात्मस्वरूपं प्रतिपादयतीत्ययमनुवाको हृदयमित्युच्यते । तत्रानेन मन्त्रेण दशहोतृहृदयं परमात्मतत्त्वमुच्यते[1] । अहं मन्त्रद्रष्टा, इन्द्रस्य परमेश्वरस्याऽऽत्मानं निजस्वरूपं परिवेद परितः सर्वत्रावस्थितं जानामि । कीदृशमात्मानम् । सुवर्णं सुवर्णसदृशं यथा सुवर्णं स्वत एव प्रकाशमानं भवति तथा स्वयंप्रकाशम् । घर्ममन्यस्य वस्तुनो दीपकम्[4], 'तस्य भासा सर्वमिदं विभाति' इति श्रुतेः । वेनं कान्तं सर्वदुःखराहित्येन तस्य कमनीयत्वम् । दशधा चित्तिः स्रुगित्यादिदशहोतृमन्त्रे प्रतिपादितैराकारैः । चरन्तं लोके व्यवहरन्तम् । अन्तः समुद्रे ब्रह्माण्डसृष्टेः पुरा सर्वत्र व्याप्यावस्थितो योऽयं जलसंघः सोऽयं समुद्रस्तस्य मध्ये मनसा चरन्तम्, इदं सर्वं जगत्सृजेयेत्येवंरूपेण मनोवृत्तिविशेषेण सह प्रवर्तमानम् । अत एवान्यत्रोक्तम्— "आपो वा इदमासन्सलिलमेव । स प्रजापतिरेकः पुष्करपर्णे समभवत् । तस्यान्तर्मनसि कामः समवर्तत । इद१ँ सृजेयमिति" इति । ब्रह्मा चतुर्मुखः प्रजापतिरर्णेऽर्णवे यथोक्तसमुद्रे दशहोतारं दशहोतृमन्त्रं तत्प्रतिपाद्यरूपेणाऽऽविर्भूतं परमात्मानमन्वविन्दत् । सृष्टिसाधनत्वेनान्विष्य लब्धवान् । तथा च ब्राह्मणे समाम्नातम्—"प्रजापतिरकामयत प्रजाः सृजेयेति । स एतं दशहोतारमपश्यत्" इति[6] । सोऽयमेवंविधः परमात्मा जनानां सर्वेषां शास्ताऽन्तर्यामिरूपेण नियामकः सन्हृदये प्रविश्यावस्थितः । तथा च स्मर्यते[5] ।

"ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति ।
भ्रामयन्सर्वभूतानि यन्त्रारूढानि मायया" इति ।

---

१ ख. °नां दशहो° । २ क. °ते । अस्मिन्मन्त्रे द्वितीया द्विपदेतरास्त्रिपदा इत्यृचां विवेकः । तत्र प्रथमामृचमाह—सुवर्णं घर्मं परिवेद वेनम् । इन्द्रस्याऽऽत्मानं दशधा चरन्तम् । अन्तः समुद्रे मनसा चरन्तम् । ब्रह्माऽन्वविन्दद्दशहोतारमर्णे, इति । ३ हं । ३ क ख. भासमानं । ४ क. प्रकाशकम् । ५ ग. °ह्मणमा° । ६ क. °ति । द्वितीयामाह—अन्तः प्रविष्टः शास्ता जनानाम् । एकः सन्बहुधा विचारः, इति । सोऽ° ।

स चान्तर्यामी स्वकीयेनेश्वररूपेणैक एव सन्पुनर्जीवरूपेण बहुधा भूत्वा विचारो विविधचरणवान्भवति। अत एवान्यत्रोपनिषदि श्रूयते—

"एक एव हि भूतात्मा भूते भूते व्यवस्थितः।
एकधा बहुधा चैव दृश्यते जलचन्द्रवत्॥" इति।

**शतं शुक्राणि** शतसंख्योपलक्षितान्यनन्तानि सूर्यचन्द्रनक्षत्ररूपाणि ज्योतींषि **यत्र** यस्मिन्परमात्मन्येकं भवन्ति, एकत्वं प्राप्नुवन्ति। तथा **सर्वे वेदा** ऋग्वेदप्रभृतयश्चत्वारो वेदा नानाविधशाखोपेता विलीय यस्मिन्नेकी भवन्ति। होतारश्च होमकर्तारः **सर्वे** यजमाना दशहोत्रादिमन्त्रा वा यस्मिन्परमात्मन्येकत्वं प्राप्नुवन्ति। यथा बुद्बुदा जलमध्ये समुत्पद्य कंचित्कालमवस्थाय विलीयमाना जल एवैक्यं प्राप्नुवन्ति। तथा सर्वे भावाः परब्रह्मण एवोत्पद्य तत्रैव स्थित्वा विलीयमाना एकतां गच्छन्ति। अत एवोपनिषदि श्रूयते—"यतो वा इमानि भूतानि जायन्ते। येन जातानि जीवन्ति। यत्प्रयन्त्यभिसंविशन्ति। तद्विजिज्ञासस्व। तद्ब्रह्मेति" इति। **स** तादृश ईश्वरः सर्वेषां जनानामात्मा स्वरूपभूतः **सन्मानसीनो** योगयुक्तेन मनसोपलभ्यो भवति। तथाच कठा अधीयते—"मनसैवेदमाप्तव्यं नेह नानाऽस्ति किंचन" इति। ततो योगिनां मानसप्रत्यक्षगम्यत्वात्। अन्तः प्रविष्टः शास्ता जनानामिति योऽयमुक्तः सोऽयं **सर्वात्मा** सर्वेषां प्राणिनामात्मा स्वरूपभूतः। तं हि जना योगेन निरुद्धचित्ताः सन्तो जगदीश्वरं स्वस्वरूपत्वेनैव साक्षात्कुर्वन्ति न तु भेदेन पश्यन्ति, अतः पूर्वोक्तः सर्वोऽप्यर्थ उपपन्न इत्युपसंह्रियते। **सर्वाः प्रजा** देवमनुष्यादयो **यत्र** यस्मिन्योगिप्रत्यक्षगम्ये चैतन्यैकरसे परमात्मन्येकी **भवन्ति**, चतुर्होतृमन्त्राश्च सर्वे यस्मिन्स्वप्रतिपाद्यैर्देवैः सह यस्मिन्ब्रह्मणि **संपदं** सम्यगेकीभावं प्राप्नुवन्ति। **स** तादृशो ब्रह्मस्वरूपो **मानसीनो** मानसप्रत्यक्षः सर्वेषां **जनानामात्मा**। ऋचां भेदादपुनरुक्तिर्द्रष्टव्या। द्वितीया द्विपदेतरास्तिस्रश्चतुष्पदा इत्यृचां विवेकः। अत्र चतुर्होतृशब्देन दशहोत्रादयः सर्वेऽपि मन्त्रा विवक्ष्यन्ते तथा च ब्राह्मणे चतुर्होतृदेवं प्रति प्रजापतिर्वरं दत्तवान्—"त्वं वै मे नेदिष्ठ

१ क. °ति। अथ तृतीयामाह—शतꣳ शुक्राणि यत्रैकं भवन्ति। सर्वे वेदा यत्रैकं भवन्ति सर्वे होतारो यत्रैकं भवन्ति। स मानसीन आत्मा जनानाम्, इति। शतं। २ क. ग. °क्षत्राणि ३ ख. ग. °न्येकी भ°। ४ क. °ता य°। ५ क. °न्ति। तथा हो°। ६ क. °त्। अथ चतुर्थीमाह—अन्तः प्रविष्टः शास्ता जनानाꣳ सर्वात्मा। सर्वाः प्रजा यत्रैकं भवन्ति। चतुर्होतारो यत्र संपदं गच्छन्ति देवैः। स मानसीन आत्मा जनानाम्, इति। अ°। ७ क. ख. सर्वे। ८ °र्वोक्त एवार्थ। ९ क. व्या। अ°।

तः प्रत्यश्रौषीः । त्वयैनानाख्यातार इति । तस्मात्तु हैनाꣳश्चतुर्होतार इत्याचक्षते "
ति ।

तदेवं दशहोतृहृदयाख्यो मन्त्रोऽभिहितः । अथ चतुर्होतृहृदयाख्यो मन्त्रोऽभिधी-
ते । तत्र तिस्र ऋचस्तासु प्रथमामाह—

**ब्रह्मेन्द्रमग्निं जगतः प्रतिष्ठाम् । दिव आत्मानꣳ**
**सवितारं बृहस्पतिम् । चतुर्होतारं प्रदिशोऽनुक्लृप्तम् ।**
**वाचो वीर्यं तपसाऽन्वविन्दत् , इति ।**

ब्रह्मा चतुर्मुख इन्द्रं परमैश्वर्ययुक्तं परमात्मानं तपसाऽन्वविन्दत्, अन्विष्य लब्ध-
न् । दर्शपूर्णमाससृष्टिसाधनं किमिति विचार्य चतुर्होतृमन्त्ररूपेणावस्थितं परमात्मानं
ोश्चितवानित्यर्थः । तथा च ब्राह्मण आम्नायते—"प्रजापतिरकामयत दर्शपूर्ण-
ासौ सृजेयेति । स एतं चतुर्होतारमपश्यत्" इति । कीदृशमिन्द्रम् । जगतः
तिष्ठाम्, अग्निं सर्वस्य जगत आधाररूपो योऽयं चातुर्होत्रीयचितिरूपोऽग्निस्त-
द्रूपम्, दिव आत्मानं सवितारं द्युलोकस्य प्रकाशकत्वेनाऽऽत्मैवदवस्थितो यः
विता तद्रूपम्, तथा बृहस्पतिं योऽयं देवगुरुस्तद्रूपेणावस्थितम्, प्रदिशः सर्वान्प्रदे-
ानुक्लृप्तं सर्वेषु प्रदेशेष्ववस्थितम्, चतुर्होतारं पृथिवी होतेत्यादिमन्त्रस्वरूपम्,
ाचो वीर्यं सर्वस्वं देवरूपाया वाचः सारभूतम् ॥

अथ द्वितीयामृचमाह—

**अन्तः प्रविष्टं कर्तारमेतम् । त्वष्टारꣳ रूपाणि विकुर्वन्तं**
**विपश्चिम् ( २ ) । अमृतस्य प्राणं यज्ञमेतम् । चतु-**
**र्होतॄणामात्मानं कवयो निचिक्युः , इति ।**

कवयो विद्वांसो वेदशास्त्रपारंगताश्चतुर्होतॄणां चतुर्होतृशब्देनाभिधीयमानानां
तेषां होतृमन्त्राणामात्मानं स्वरूपभूतं परमेश्वरं निचिक्युः, निश्चितवन्तः । कीदृश-
त्मानम्—अन्तः प्रविष्टं जीवरूपेण शरीरेषु प्रविश्यावस्थितम् । अत एवाऽऽम्नायते—
अनेन जीवेनाऽऽत्मनाऽनुप्रविश्य" इति । कर्तारमेतमित्यनेन मानसप्रत्यक्षेण प्रती-
ानं लौकिकवैदिकसर्वक्रियानिष्पादकम् । एतच्चान्यत्राऽऽम्नातम्—"एष हि द्रष्टा
ष्टा श्रोता घ्राता रसयिता मन्ता बोद्धा कर्ता विज्ञानात्मा पुरुषः" इति । रूपाणि
कुर्वन्तं त्वष्टारं गर्भेषु देवतिर्यङ्मनुष्यादिरूपाणि विविधं निष्पादयन्तं त्वष्टृदेवस्वरू-

१ क. ख. 'णमाम्ना' । २ क. 'त्मप्रायो योऽग्रमवस्थि॰' । ३ ग. 'तमहमि॰' । ४ क.
ऽम्नायते । ए॰ । ५ ग. 'ष्टा श्रोता पृष्टा घ्रा॰' । ६ ग. 'न्तं विपश्चितं त्व' । ७ ग. '॰दिरू-
रू' ।

पम् । एतदप्याम्नातम्—"यावच्छो वै रेतसः सिक्तस्य त्वष्टा रूपाणि विकरोति तावच्छो वै तत्प्रजायते" इति । **विपश्चिं** विपश्चितं तत्तद्रूपनिर्माणप्रकाराभिज्ञम्, **अमृतस्य प्राणं** मरणरहितस्य परमात्मनो व्यवहारहेतुभूतप्राणोपाधिस्वरूपम् । एतदप्याथर्वणिका आमनन्ति—"कस्मिन्न्वहमुत्क्रान्त उत्क्रान्तो भविष्यामि कस्मिन्वा प्रतिष्ठिते प्रतिष्ठास्यामीति स प्राणमसृजत" इति । यज्ञं सर्वैरनुष्ठीयमानत्वेन दृश्यमानमेतं दर्शपूर्णमासयज्ञस्वरूपं चतुर्होतृमन्त्रस्य तद्यज्ञसृष्टिसाधनत्वात्तद्रूपत्वं युक्तम् । तद्यज्ञसाधनत्वं ब्राह्मणे समाम्नातम्—'स एतं चतुर्होतारमपश्यत् । तं मनसाऽनुद्रुत्याऽऽहवनीयेऽजुहोत् । ततो वै स दर्शपूर्णमासावसृजत" इति ॥

अथ तृतीयामाह—

**अन्तः प्रविष्टं कर्तारमेतम् । देवानां बन्धु**
**निहितं गुहासु । अमृतेन क्लृप्तं यज्ञमेतम् ।**
**चतुर्होतृणामात्मानं कवयो निचिक्युः, इति ।**

योऽयं परमात्मा सोऽयं **देवानां** बन्धुवत्प्रियस्तादृशम् । तेषु देवेषु पक्षपातेन विजयहेतुत्वं **तलवकारा** आमनन्ति—" ब्रह्म ह देवेभ्यो विजिग्ये " इति । **गुहासु** बुद्धिषु **निहितं** साक्षित्वेनावस्थितम् । " यो वेद निहितं गुहायाम् " इत्यादिश्रुतेः । **अमृतेन** स्वर्गफलनिमित्तेन **क्लृप्तं** संपादितम् । **एतं यज्ञमि**त्यादि पूर्ववत् ।

तदेवमृक्त्रयरूपं चतुर्होतृहृदयमुक्तम् । अथ पञ्चहोतृहृदयाख्यो मन्त्रोऽभिधीयते । तत्र तिस्र ऋचस्तासु प्रथमामाह—

**शतं नियुतः परिवेद विश्वा विश्ववारः । विश्वमिदं वृणाति ।**
**इन्द्रस्याऽऽत्मा निहितः पञ्चहोता । अमृतं देवानामायुः प्रजानाम्(३), इति**

**पञ्चहोता**ऽग्निर्होतेत्यादिपञ्चहोतृमन्त्ररूप आत्मा स च **विश्ववारः** सर्वैर्वरणीयो वायुरूपः सञ्शतं **नियुतः** शतसंख्याकान्स्वकीयाँन्स्वा (?) न्**परिवेद** परितः संचारित्वेन जानाति । अत एवेदं **विश्वं** जगद्वृणाति व्याप्नोति । सोऽयम**िन्द्रस्याऽऽत्मा** परमेश्वरस्य स्वरूपभूतः **सन्निहितः** सर्वत्रावस्थितः । स च **देवानाममृतं प्रजानां चाऽऽयुः** प्रयच्छतीति शेषः ।

---

१ ख. ग यज्ञमेव स° । २ ख. ग. °षु प° । ३ ख. ग °पातत्वेन । ४ क. °वमुक्त° ५ क. ख. °त्र प्र° । ६ ख. ग. स वि° । ७ क. °यानश्वान्प° । ख. °यान्विश्वा परि° । ८ ग. °तं प्रयच्छति । प्र° ।

अथ द्वितीयामाह—

इन्द्रꣳ राजानꣳ सवितारमेतम् । वायोरात्मानं कवयो निचिक्युः । रश्मिꣳ रश्मीनां मध्ये तपन्तम् । ऋतस्य पदे कवयो निपान्ति, इति ।

एवं पञ्चहोतृदेवं **कवयः** पण्डिता **निचिक्युः**, विनिश्चितवन्तः । कीदृशम् । **इन्द्रं** परमैश्वर्ययुक्तम् । **राजानं** दीप्यमानम् । **सवितारं** प्रेरकम् । **वायोरात्मानं** स्वरूपभूतम् । ते कवय एतं पञ्चहोतृदेवमृतस्य **पदे** ब्रह्मणः स्थाने **निपान्ति** नितरां पालयन्ति, तद्रूपत्वेन पश्यन्तीत्यर्थः । कीदृशम् । **रश्मीनां** दृश्यमानानां किरणानां मध्ये स्थित्वा **तपन्तं** जगतस्तापं कुर्वन्तम् । **रश्मिं** प्रौढरश्मिरूपम् । आदित्यमित्यर्थः ।

अथ तृतीयामाह—

य आण्डकोशे भुवनं बिभर्ति । आनिर्भिण्णः सन्नथ लोकान्विचष्टे । यस्याऽऽण्डकोशꣳ शुष्ममाहुः प्राणमुल्बम् । तेन क्लृप्तोऽमृतेनाहमस्मि, इति ।

यः पञ्चहोतृदेव **आण्डकोशे** ब्रह्माण्डमध्येऽनिर्भिण्णः सन्नभेदेनावस्थितः सन्भुवनं कृत्स्नं भूतजातं **बिभर्ति** धारयति । **अथ** ब्रह्माण्डभेदानन्तरं तदन्तःस्थितान्भूरादिलोकान्विचष्टे विशेषेण प्रख्यापयति । यस्य पञ्चहोतृरूपस्य परमात्मनः शुष्ममाण्डकोशं प्रबलं ब्रह्माण्डावकाशस्थं **प्राणं** वायुविशेषमुल्बमाहुः, गर्भवेष्टनस्थानीयमाहुः । यथा लोके गर्भ उल्बेन वेष्ट्यते तथा सूत्रात्मशरीरं प्राणवायुना ब्रह्माण्डस्थेन वेष्टितं भवति । **तेनामृतेन** पञ्चहोतृरूपेण परमात्मनाऽहं क्लृप्तो व्यवहारसमर्थत्वेनोत्पादितोऽस्मि ।

अथ षड्ढोतृहृदयमन्त्रः । तत्र प्रथमामृचमाह—

सुवर्णं कोशꣳ रजसा परीवृतम् । देवानां वसुधानीं विराजम् (४) । अमृतस्य पूर्णां तामु कलां विचक्षते । पादꣳ षड्ढोतुर्न किलाऽऽविवित्से, इति ।

वाग्घोतेति मन्त्रोऽत्र षड्ढोता, स च ब्रह्माण्डकोशमध्ये चन्द्ररूपेणावस्थितः । तं

---

१ ख. ग. °वं चतुर्होतृ° । २ ख. ग. °तं चतुर्होतृ° । ३ ग °न्नथो लो° । ४ क. °स्थितो भुव° । ५ ख. ग. °स्य चतुर्होतृ° । ६ क. °तृदेवस्याऽऽण्डकोशं शुष्मं प्र° । ७ क °स्रस्थप्रा° । ८ ग. सूक्ष्मशरीरेण प्रा° । ९ ख. °रीरेग प्रा° । १० ख. ग. °ह्माण्डं वे° । ११ ग. °मन्त्राः । त° ।

न्द्ररूपं षड्ढोतृदेवं कवयोऽभिज्ञाः सुवर्णत्वादिगुणयुक्तमाचक्षते । सुवर्णं शोभनवर्णो- पेतं चन्द्रमण्डलं हिरण्मयवर्णोपेतं भासते । कोशं ब्रह्माण्डकोशमध्यगम् । रजसा रञ्जनात्मकेनामृतेन परीवृतं सर्वतो व्याप्तम् । तथाविधं चन्द्रम् । तामु कलां तादृ- शीमेव भागरूपां विचक्षत आचक्षते । कीदृशीमिति तदुच्यते—देवानां वसुधानीं वह्निरव्यादीनां देवतानामपेक्षितं यद्वस्वमृतरूतं तस्य धारयित्रीम् । अत एव स्मर्यते— "प्रथमां पिबते वह्निर्द्वितीयां पिबते रविः" इत्यादि । विराजं विशेषेण राजमानाम् । अमृतस्य पूर्णां पीयूषेण पूरिताम् । एवंरूपं षड्ढोतृदेवमभिज्ञा आचक्षते । प्राकृतस्तु जनः षड्ढोतुः पादं षड्ढोतृदेवस्यांशभूतं चन्द्रं न किलाऽऽविवित्से नैव जानाति ।

अथ द्वितीयामाह—

येनर्तवः पञ्चधोत क्लृप्ताः । उत वा षड्धा मन- सोत क्लृप्ताः । तꣳ षड्ढोतारमृतुभिः कल्पमा- नम् । ऋतस्य पदे कवयो निपान्ति, इति ।

येन चन्द्ररूपेण षड्ढोतृदेवेन वसन्ताद्यृतवः पञ्चप्रकाराः क्लृप्ताः संपादिताः । हेम- न्तशिशिरयोः समासेन पञ्चत्वम् । उत वा षड्ढाऽ(धाऽ)थवा हेमन्तशिशिरयोर्वि- भागेन षट्प्रकाराः क्लृप्ताः । उतापि च मनसा क्लृप्ताः, संकल्पमात्रेण संपादिताः । तं चन्द्ररूपं षड्ढोतृदेवमृतुभिः कल्पमानं पञ्चधा षोढा वा भिन्नैर्वसन्तादिभिः सर्वव्यव- हारसमर्थमृतस्य पदे सत्यस्य परब्रह्मणः स्थाने कवयो वेदरहस्याभिज्ञा निपान्ति नितरां पालयन्ति, परब्रह्मैवायं चन्द्ररूपः षड्ढोतेत्येवमुपासत इत्यर्थः ।

अथ तृतीयामाह—

अन्तः प्रविष्टं कर्तारमेतम् । अन्तश्चन्द्रमसि मनसा चरन्तम् । सहैव सन्तं न विजानन्ति देवाः । इन्द्रस्याऽऽत्मानꣳ शतधा चरन्तम् ( ५ ), इति ।

देवाः सर्वे सहैव सन्तं स्वकीयहृदये स्वेन जीवात्मना सहैवावस्थितमेतं षड्ढोतृ- देवं परमात्मानं न विजानन्ति, वेदान्ताभ्यासमन्तरेण हृदयेऽवस्थियोऽयं परमात्मै- वेति विशेषेण न जानन्ति । कीदृशं परमात्मानम् । अन्तःप्रविष्टमन्तर्यामिरूपेण सर्वेषां पृथिव्यादिपदार्थानां मध्येऽवस्थितम् । एतच्च वाजसनेयिनोऽन्तर्यामिब्राह्मणे—"यः पृथिव्यां तिष्ठन्" इत्यादिना बहुप्रपञ्चेनाऽऽमनन्ति । कर्तारं नियामकत्वेन सर्वस्य निष्पा-

---

१ ग. °वं विराजमभि° । २ ग. °वर्णमेतं । ३ ग. °पेतम् । को° । ४ ख. °रूपामाचक्षते । ५ ग. षड्ढा । ६ ग. वाऽथ । ७ क. °पञ्चमाम° ।

दकम्। अन्तश्चन्द्रमसि चन्द्रमण्डलमध्ये मनसा संकल्पमात्रेण चरन्तम्। एतच्चो-पलक्षणं सर्वेष्वपि वस्तुषु चरन्तमित्यर्थः। एतदेव स्पष्टीकर्तुं शतधा चरन्तमित्युक्तम्। इन्द्रस्य परमैश्वर्ययुक्तस्य देवादेरात्मानं स्वरूपभूतम्।

अथ सप्तहोतृहृदयाख्यो मन्त्रः। तत्र प्रथमामृचमाह—

**इन्द्रो राजा जगतो य ईशे।**

**सप्तहोता सप्तधा विक्लृप्तः,** इति।

महाहविर्होतेत्ययं मन्त्रः सप्तहोता। स च सप्तधा विक्लृप्तः, होत्रध्वर्युप्रमुखैः सप्तभिः प्रकारैः संपादितः। स किंरूप इति तदुच्यते—इन्द्रः परमैश्वर्ययुक्तः। राजा दीप्यमानः। यः परमात्मा जगत ईशे स्वामी भवति। स एवायं सप्तहोतृरूप इत्यर्थः।

अथ—द्वितीयामाह—

**परेण तन्तुं परिषिच्यमानम्। अन्तरादित्ये मनसा**

**चरन्तम्। देवानाꣳ हृदयं ब्रह्माऽन्वविन्दत्,** इति।

ब्रह्मा प्रजापतिर्देवानामिन्द्रादीनां हृदयं हृदयस्थितं परमात्मानमन्वविन्दत्। अन्विष्य लब्धवान्। कीदृशम्। तन्तुं परेणाविच्छिन्नस्य यज्ञस्य परस्तात्फलदशायां परिषिच्यमानं वृष्टिरूपेण परितः सिच्यमानम्। अन्तरादित्य आदित्यमण्डलमध्ये मनसा संकल्पमात्रेण चरन्तम्।

अथ तृतीयामाह—

**ब्रह्मैतद्ब्रह्मण उज्जभार। अर्कꣳ श्चोतन्तꣳ सरिरस्य मध्ये,** इति।

ब्रह्मा चतुर्मुखः प्रजापतिर्ब्रह्मणो वेदस्य सकाशादेतत्सप्तहोतृस्वरूपमुज्जभार ारत्वेनोद्धृतवान्। कीदृशम्। अर्कं सूर्यरूपेणावस्थितं, सरिरस्य मेघस्थजलस्य मध्ये श्मिद्वारा प्रविश्य श्चोतन्तं वर्षयन्तम्।

अथ चतुर्थीमाह—

**आ यस्मिन्त्सप्त पेरवः। मेहन्ति बहुलाꣳ**

**श्रियम्। बह्वश्वामिन्द्र गोमतीम् (६),** इति।

यस्मिन्सप्तहोतृरूपं आदित्ये पेरवो वृष्टिप्रदानेन लोकस्य पातारः सप्तसंख्याका श्मय आश्रिताः। रश्मिसप्तकं च साकंजानां सप्तथमाहुरेकजमित्यत्र प्रपञ्चितम्।

---

१ क. °कस्याऽऽत्मा°। २ ख. ग. °रात्मभूतं स्वरूपम्। ३ क. °तृस्वरू°। ४ क. ालकाः। ५ ग. °श्मयः प्रापिताः।

ते च सप्त रश्मयो बहुलां श्रियं प्रभूतां सस्यादिसंपदं मेहन्ति वृष्टिसेचनद्वारेण संपादयन्ति। हे इन्द्र सप्तहोतृदेवरूप परमेश्वर बह्वश्वां बहुभिरश्वैरुपेतां गोमतीं बहुभिर्गोभिरुपेतां तां श्रियं प्रयच्छेति शेषः।

अथ पञ्चमीमाह—

अच्युतां बहुलाᳪं श्रियम्। स हरिर्वसु-
वित्तमः। पेरुरिन्द्राय पिन्वते, इति।

स देवः सप्तहोत्राख्य इन्द्राय कर्मस्वामिने यजमानाय श्रियं पिन्वते सिञ्चति, प्रयच्छतीत्यर्थः। कीदृशः स देवः, हरिः पापहरणशीलः, वसुवित्तमोऽतिशयेन धनस्य लब्धा, पेरुः पालकः। कीदृशीं श्रियम्, अच्युतां विनाशरहितां, बहुलां गवाश्वादिभिः प्रभूताम्।

अथ षष्ठीमाह—

बह्वश्वामिन्द्र गोमतीम्। अच्युतां बहुलाᳪं
श्रियम्। मह्यमिन्द्रो नियच्छतु, इति।

इन्द्रः परमैश्वर्ययुक्तः सप्तहोतृदेवः। स्पष्टमन्यत्।

अथ सप्तमीमाह—

शतᳪं शता अस्य युक्ता हरीणाम्। अर्वाङायातु
वसुभी रश्मिरिन्द्रः। प्रमᳪंहमाणो बहुलाᳪं श्रियम्।
रश्मिरिन्द्रः सविता मे नियच्छतु (७), इति।

अस्याऽऽदित्यरूपस्य सप्तहोतृदेवस्य हरीणामन्धकारहरणशीलानां रश्मीनां शतᳪं शता शतसंख्याकानि शतानि, अयुतसंख्याकानीत्यर्थः। युक्ता युक्तानि संपादितानि। इन्द्रः परमैश्वर्ययुक्तो रश्मिर्बहुविधरश्मियुक्त आदित्यो वसुभिर्धनैः सहार्वाङायातु आभिमुख्येनाऽऽगच्छतु। आगतश्च सविता बहुलां श्रियं प्रभूतां[1] धनादिसंपदं[2] मे मह्यं नियच्छतु नितरां ददातु। कीदृशः सविता, प्रमᳪंहमाणोऽस्मदीयस्तुतिभिः प्रकर्षेण वर्धमानः रश्मिर्बहुविधरश्मियुक्तः इन्द्रः परमैश्वर्ययुक्तः।

अथाष्टमीमाह—

घृतं तेजो मधुमदिन्द्रियम्। मय्ययमग्निर्दधातु, इति।

---

१ ख. प्रधानभू°। २ ज ग °तां धनादि°।

अयं सप्तहोतृदेवोऽग्न्यात्मकः सन्मयि यजमाने मधुमद्घृतं मधुररसोपेतं घृतादि-द्रव्यं तेजः कान्तिमिन्द्रियं चक्षुरादिसामर्थ्यं च दधातु संपादयतु।

अथ नवमीमाह—

हरिः पतङ्गः पटरी सुपर्णः। दिविक्षयो नभसा य एति। स न इन्द्रः कामवरं ददातु, इति।

हरिरन्धकारहरणशीलः पतङ्गः सूर्यरूपः पटरी तेजःपटलवान्सुपर्णः पक्षिस-दृशो दिविक्षयः स्वर्गनिवासी यः सप्तहोतृदेवो नभसाऽऽकाशमार्गेणैति गच्छति। स देवो नोऽस्माकं कामवरं कामानां मध्ये श्रेष्ठं ददातु।

अथ दशमीमाह—

पञ्चारं चक्रं परिवर्तते पृथु। हिरण्यज्योतिः सरिरस्य मध्ये। अजस्रं ज्योतिर्नभसा सर्पदेति। स न इन्द्रः कामवरं ददातु, इति।

ऋतुपञ्चकात्मका अरा यस्य कालचक्रस्य तत्पञ्चारं पृथु विस्तृतं चक्रं संवत्स-रात्मकं कालचक्रं परिवर्तते परितः प्रवर्तते। सरिरस्य मध्ये मेघवर्तिजलस्य मध्ये रण्यज्योती रश्मिसंचारेण विद्युद्रूपपरिणामे सति सुवर्णसमानं ज्योतिर्यस्य मण्डलस्य हिरण्यज्योतिस्तादृशं ज्योतिरादित्यमण्डलं संवत्सरचक्रनिष्पादकमजस्रं निरन्तरं भसाऽऽकाशमार्गेण सर्पदेति शनैः संचरन्ग (माणं ग) च्छति। स ज्योतिर्मण्डलात्मा ऽस्माकं कामवरं ददातु।

अथैकादशीमाह—

सप्त युञ्जन्ति रथमेकचक्रम् (८)। एको अश्वो वहति सप्तनामा। त्रिनाभि चक्रमजरमनर्वम्। येनेमा विश्वा भुवनानि तस्थुः, इति।

सप्तसंख्याकाः साकंजानामित्यत्रोक्ता मुख्यरश्मिविशेषा अश्वसदृशा एकचक्र-रूपकारपरिवर्ति कालचक्रं युञ्जन्ति प्रवर्तयन्ति। तदेव स्पष्टी क्रियते—सप्तनामा सप्तसंख्यानि नामानि नमनयोग्यानि वश्यानि रश्मिरूपाणि यस्यासौ सप्तनामा। अश्वो व्यापक एकः सूर्यस्तत्कालचक्रं वहति। कीदृशं चक्रम्—त्रिनाभि तिस्रः सत्त्वरज-स्तमोगुणरूपा भूतभविष्यद्वर्तमानरूपा वा नाभयो यस्य तत्त्रिनाभि। अजरं विनाशरहि-

---

१ क. °वोऽग्निर्मयि। ग. °वो द्रव्यात्म°। २ ग. °नर्वाम्। ये°।

तम्, न हि कालः संसारमध्ये कदाचिद्विनश्यति । अनर्वम्, अर्वा विरोधी विनाशको भ्रातृव्यो वा अर्वेति श्रुतेः, तद्रहितम्, न हि कालचक्रस्य कश्चिद्विनाशकोऽस्ति । येन कालचक्रेणेमा विश्वा भुवनानि दृश्यमानानि सर्वाणि भूतजातानि तस्थुस्तिष्ठन्ति सुखेन वर्तन्ते, तस्य[३] कालचक्रस्य निर्वाहकोऽयं सप्तहोतृदेव आदित्यः ।

अथ द्वादशीमाह—

भद्रं पश्यन्त उपसेदुरग्रे । तपो दीक्षामृषयः सुवर्विदः । ततः क्षत्रं बलमोजश्च जातम् । तदस्मै देवा अभिसंनमन्तु, इति ।

सुवर्विदः स्वर्गमार्गाभिज्ञा[४] ऋषयो भद्रं कल्याणं सप्तहोतृरूपमादित्यं पश्यन्तः प्राप्यत्वेन निश्चिन्वानास्तपोऽनशनादिरूपं दीक्षां नियमविशेषं चोपसेदुरनुष्ठितवन्तः । तत आदित्यसकाशात्क्षत्रं क्षतात्त्राणमनिष्टनिवारणं बलं शरीरशक्तिरोजः कान्तिश्चेत्येतत्सर्वं जातं संपन्नम् । तत्क्षत्रादित्रयमस्मै[६] यजमानाय देवा अभिसंनमन्तु अभितः संपादयन्तु ।

अथ त्रयोदशीमाह—

श्वेतꣳ रश्मिं बोभुज्यमानम् । अपां नेतारं भुवनस्य गोपाम् । इन्द्रं निचिक्युः परमे व्योमन् (९), इति ।

परमे व्योमन्नुत्कृष्टे हृदयाकाश इन्द्रं परमैश्वर्ययुक्तं सप्तहोतृदेवमादित्यं निचिक्युर्निश्चितवन्तः, ध्यातवन्त इत्यर्थः । कीदृशमिन्द्रम्—श्वेतं प्रकाशरूपत्वेन शुक्लवर्णम् । रश्मिं रश्मियुक्तम् । बोभुज्यमानं सर्वैः प्राणिभिर्वृष्टिद्वारेण पुनः पुनर्भुज्यमानम् । एतदेव स्पष्टी क्रियते—अपां नेतारम्, आदित्याज्जायते वृष्टिरिति स्मृत्या सूर्यो जलस्य नेता तादृशम्, भुवनस्य गोपां भुवनस्य पालकम् ।

अथ चतुर्दशीमाह—

रोहिणीः पिङ्गला एकरूपाः । क्षरन्तीः पिङ्गला एकरूपाः । शतꣳ सहस्राणि प्रयुतानि नाव्यानाम्, इति ।

रोहिणी[९] रोहितवर्णाः पिङ्गलाः पिङ्गलवर्णाश्च या आपस्तत्तद्भूमिसंबन्धेन बहुविधा दृश्यन्ते, ताः सर्वा अपि सप्तहोतृरूपस्याऽऽदित्यस्य रश्मिसंबन्धे सति मेघे

१ ग. अनर्वाम् । २ ग. 'श्चिन्नाश° । ३ क. यस्य । ४ क. °र्गलोकमा° । ५ ग. 'न्तिरिति° । ६ ख. ग. तच्च क्षत्रा° । ७ क. °तृरूपमा° । ८ क. 'पां गोप्तारं भूतजातस्य ९ ग. °हिण्य° । १० क. °तृदेवस्याऽऽ° ।

नानारूपत्वं परित्यज्यैकरूपा भवन्ति । तथा क्षरन्तीर्वृष्टिरूपेण भूमौ पतन्त्यस्ताः पिङ्गलादिवर्णा आप एकरूपा भवन्ति । वृष्टिबाहुल्येन भूमौ नाव्यानां नावा तरणीयानामपां शतं सहस्राणि प्रयुतानि शतसंख्या बहुविधसहस्रसंख्या बहुविधलक्षसंख्या च संपद्यते । वृष्टिकाले तत्र तत्रानेकप्रवाहा भवन्ति । तदेतत्सर्वं सप्तहोतृमाहात्म्यम् ।

अथ पञ्चदशीमाह—

अयं यः श्वेतो रश्मिः । परि सर्वमिदं जगत् ।
प्रजां पशून्धनानि । अस्माकं ददातु, इति ।

अयमादित्यः श्वेतः श्वेतवर्णो रश्मी रश्मियुक्तोऽस्ति । सोऽयं सर्वमिदं जगत्परिव्याप्य वर्तमानोऽस्माकं प्रजादिकं ददातु ।

अथ षोडशीमाह—

श्वेतो रश्मिः परि सर्वं बभूव । सुवन्मह्यं पशून्विश्वरूपान्, इति ।

श्वेतः शुक्लवर्णो रश्मी रश्मियुक्त आदित्यः सर्वं जगत्परिबभूव परितो व्याप्तवान्, तादृश आदित्यो मह्यं विश्वरूपान्गोमहिष्यादिरूपेण बहुविधान्पशून्सुवत्सौतु, प्रेरयत्वित्यर्थः ।

अथ सप्तदशीमाह—

पतङ्गमक्तमसुरस्य मायया (१०) । हृदा पश्यन्ति
मनसा मनीषिणः । समुद्रे अन्तः कवयो विचक्षते । मरीचीनां पदमिच्छन्ति वेधसः, इति ।

असून्प्राणान्राति ददातीत्यसुरः परमात्मा, तस्य माययाऽचिन्त्यशक्त्याऽक्तम् युक्तं पतङ्गमादित्यं हृदा मनसा हृत्पुण्डरीकगतेन नियमितेनान्तःकरणेन मनीषिणो वेदशास्त्राभिज्ञा महर्षयः पश्यन्ति ध्यात्वा साक्षात्कुर्वन्ति । कवयो लौकिकवार्ताभिज्ञाः पुरुषाः समुद्रे अन्तः समुद्रसमानेऽन्तरिक्षमध्ये विचक्षते विशेषेण कथयन्ति, अयमादित्य उदितो मध्याह्ने समागत इत्यादिव्यवहारं कुर्वन्ति । वेधसो विधातारोऽनुष्ठानकुशलाः केचिद्यजमाना मरीचीनां पदं रश्मीनां स्थानमादित्यमिच्छन्ति । आदित्यसायुज्यप्राप्त्यर्थमनुतिष्ठन्तीत्यर्थः ।

---

१ ख. °न नाव्या° । २ क. °मौ नानारूपे(पा)णामेकरूपाणां च नावा । ३ ग. °क्षल° । ४ ...ख्याकाश्च सं° । ५ क. °हात्म्यमित्यर्थः । अ° । ६ क. ख. °वन्सौतु । ७ क. °कवृत्तास्ताभि° ।

अथाष्टादशीमाह—

पतङ्गो वाचं मनसा बिभर्ति । तां गन्धर्वोऽव-
दद्गर्भे अन्तः । तां द्योतमानाᳬ स्वर्यं मनी-
षाम् । ऋतस्य पदे कवयो निपान्ति, इति ।

पतङ्ग आदित्यो मनसा स्वकीयेन प्राणिनां वाचं बिभर्ति धारयति, अन्तर्यामिरूपेण वाचं प्रेरयतीत्यर्थः । तथाच पौराणिका आहुः—"योऽन्तः प्रविश्य मम वाचमिमां प्रसुप्तां संजीवयत्यखिलशक्तिधरः स्वधाम्ना" इति । तामादित्यप्रेरितां वाचं गर्भे अन्तः शरीरस्य मध्ये गन्धर्वनामको वायुरवददुच्चारयति । गन्धान्वहतीति व्युत्पत्त्या गन्धर्वशब्दो वायुमाचष्टे । वायुर्हि ताल्वादिसंयुक्तो वाचमुच्चारयति । तां वायुनोच्चारितां द्योतमानां प्रकाशमानां स्वर्यं स्वर्गस्य हेतुभूतां मनीषां मनस ईशित्रीमाह्लादकारीमित्यर्थः । तादृशीं वाचं कवयः शास्त्राभिज्ञा ऋतस्य पदे सत्यस्य परब्रह्मणः स्थाने निपान्ति नितरां पालयन्ति । परब्रह्मविषयाणि वेदवाक्यानि सर्वदा पठन्तीत्यर्थः । तदेतत्सर्वं वाचः प्रेरकस्याऽऽदित्यस्य माहात्म्यम् ।

अथैकोनविंशीमाह—

ये ग्राम्याः पशवो विश्वरूपाः । विरूपाः सन्तो
बहुधैकरूपाः । अग्निस्ताᳬ अग्रे प्रमुमोक्तु
देवः (११) । प्रजापतिः प्रजया संविदानः, इति ।

ये पशवो ग्राम्या ग्रामे भवा गवाश्वादयो विश्वरूपा जातिभेदैर्बहुविधा विरूपा वर्णादिभेदेन विविधाकारा एवं बहुधा दृश्यमानाः सन्तोऽपि पुनः पशुत्वाकारेणैकरूपास्तान्सर्वानग्निरूपः सप्तहोतृदेवोऽग्रे प्रमुमोक्तु प्रथमं तत्तत्स्थानात्प्रमुञ्चतु, प्रमुच्यास्मभ्यं ददात्वित्यर्थः । प्रजापतिश्च स्वकीयया प्रजया संविदान ऐकमत्यं गतोऽस्मभ्यं पशून्ददात्विति शेषः ।

अथ विंशीमाह—

वीतᳬ स्तुके स्तुके । युवमस्मासु नियं-
च्छतम् । प्र प्र यज्ञपतिं तिर, इति ।

हेऽग्निप्रजापती युवमुभौ युवां स्तुके स्तुके तत्तद्वाद्यपत्ये वीतं प्रजननमुत्पा

---

१ क. °न्धर्वो वायुस्ताल्वा° । २ ख. ग. °दिस्थानेषु सं° । ३ ख. ब्रह्मणः । ४ क. °वाद° । ५ क. ग. तिरः ।

मस्मासु नियच्छतं नियमेन संपादयतम् । यज्ञपतिं यजमानं प्रप्रतिरात्यन्तं प्रकर्षेण वर्धयतम् ।

अथैकविंशीमाह —

ये ग्राम्याः पशवो विश्वरूपाः । विरूपाः सन्तो बहुधैकरूपाः । तेषां सप्तानामिह रन्तिरस्तु । रायस्पोषाय सुप्रजास्त्वाय सुवीर्याय, इति ।

ग्राम्यादिशब्दाः पूर्ववद्योज्याः । तेषां ग्राम्यपशूनां सप्तानां गोश्वाजाविपुरुषगर्दभोष्ट्ररूपाणां सप्तसंख्याकानामिहास्मद्गृहे रन्तिः क्रीडाऽस्तु । तच्च धनपुष्टिशोभनापत्यशोभनवीर्यार्थं संपद्यते ।

अथ द्वाविंशीमाह—

य आरण्याः पशवो विश्वरूपाः । विरूपाः सन्तो बहुधैकरूपाः । वायुस्तां अग्रे प्रमुमोक्तु देवः । प्रजापतिः प्रजया संविदानः, इति ।

अरण्ये भवा आरण्या द्विखुराः श्वापदादयस्तानरण्याधिपतिर्वायुः प्रमुमोक्तु । अन्यत्पूर्ववत् ।

अथ त्रयोविंशीमाह—

इडायै सृप्तं घृतवच्चराचरम् । देवा अन्वविन्दन्गुहाहितम् , इति ।

इडायै गोसंपादनार्थं सृप्तं प्राप्तं घृतवद्घृतयुक्तं घृताकारमित्यर्थः । तादृशं चराचरं स्थावरजङ्गमरूपं जगदनुग्रहीतुं गुहाहितं प्राणिनां बुद्धाववस्थितं सप्तहोतृदेवं देवा अन्वविन्दन्नन्विष्य लब्धवन्तः ।

अथ चतुर्विंशीमाह—

य आरण्याः पशवो विश्वरूपाः । विरूपाः सन्तो बहुधैकरूपाः । तेषां सप्तानामिह रन्तिरस्तु । रायस्पोषाय सुप्रजास्त्वाय सुवीर्याय (१२), इति ।

आत्मा जनानां विकुर्वन्तं विपश्चिं प्रजानां वसुधानीं विराजं चरन्तं गोमतीं मे नियच्छत्वेकचक्रं व्योमन्मायया देव एकरूपा अष्टौ च ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके तृतीयप्रपाठक एकादशोऽनुवाकः ॥ ११ ॥

---

१ ग. °तिरोऽत्य°। २ ख. °श्वावि°। ३ ख. °ष्ट्रमाहिषरू°। ४ क. °पुष्ट्यर्थं शोभनप्रजार्थं शोभन°।

सप्तानां द्विखुरश्वापदपक्षिसरीसृपहस्तिमर्कटनादेयानाम् । अन्यत्पूर्ववत् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्ये तृतीयप्रपाठक एकादशोऽनुवाकः ॥ ११ ॥

अथ तृतीये द्वादशोऽनुवाकः ।

एतैरेकादशभिरनुवाकैश्चातुर्होत्रीयचयनमन्त्रा उक्ताः । नारायणनाम्ना पुरुषसूक्तनाम्ना च व्यवह्रियमाणोऽनुवाक उच्यते । तस्य विनियोगं महाग्नावापस्तम्ब आह—"पुरस्तात्प्रतीचीं पुरुषाकृतिं चिनोति पुरुषशिरोऽस्याः शिरो भवति, सहस्रशीर्षा पुरुष इत्युपहितां पुरुषेण नारायणेन यजमान उपतिष्ठते" इति । ब्रह्ममेधेऽपि प्रेतदाहोपस्थाने विनियोगं भरद्वाज आह—"नारायणाभ्यामुपस्थानम् " इति । अयं चोत्तरश्चेत्युभावनुवाकौ नारायणसंज्ञौ नारायणाख्येन केनचिदृषिणा दृष्टत्वात्, जगत्कारणस्य नारायणाख्यस्य पुरुषस्य प्रतिपादकत्वाच्च । तत्रास्मिन्द्वादशेऽनुवाके प्रथमामृचमाह—

सहस्रशीर्षा पुरुषः । सहस्राक्षः सहस्रपात् ।
स भूमिं विश्वतो वृत्वा । अत्यतिष्ठद्दशाङ्गुलम्, इति ।

सर्वप्राणिसमष्टिरूपो ब्रह्माण्डदेहो विराडाख्यो यः पुरुषः सोऽयं सहस्रशीर्षा, सहस्रशब्दस्योपलक्षणत्वादनन्तैः शिरोभिर्युक्त इत्यर्थः । यानि सर्वप्राणिनां शिरांसि तानि सर्वाणि तद्देहान्तःपातित्वात्तदीयान्येवेति सहस्रशीर्षत्वम् । एवमक्षिषु पादेष्वपि योजनीयम् । स पुरुषो भूमिं ब्रह्माण्डगोलकरूपां विश्वतो वृत्वा सर्वतः परिवेष्ट्य दशाङ्गुलपरिमितं देशमत्यतिष्ठदतिक्रम्य स्थितः । दशाङ्गुलमित्युपलक्षणं ब्रह्माण्डाद्बहिरपि सर्वतो व्याप्यावस्थित इत्यर्थः ।

अथ द्वितीयामाह—

पुरुष एवेदꣳ सर्वम् । यद्भूतं यच्च भव्यम् ।
उतामृतत्वस्येशानः । यदन्नेनातिरोहति, इति ।

यद्भूतमतीतं जगत्, यच्च भव्यं भविष्यज्जगत् । यदपीदं वर्तमानं जगत्, तत्सर्वं पुरुष एव । यथाऽस्मिन्कल्पे वर्तमानाः प्राणिदेहाः सर्वेऽपि विराट्पुरुषस्यावयवाः,

१ क. °होत्रिय° । २ क. ख. अभिहिताः । ३ ख. ग. °शिरो भ° । ४ ग. °तिष्ठेत° । ५ क. °गं भार° । ६ क. रश्चेतावुभा° । ७ क. °ख्यो योऽयं पु° । ८ क. °क्षिपा° ।

ण्येवातीतागामिनोरपि कल्पयोर्द्रष्टव्यम् । उतापि चामृतत्वस्य देवत्वस्यायमीशानः स्वामी । यद्यस्मात्कारणादन्नेन प्राणिनां भोग्येनान्नेन निमित्तभूतेनातिरोहति स्वकीयकारणावस्थामतिक्रम्य परिदृश्यमानां जगदवस्थां प्राप्नोति । तस्मात्प्राणिनां कर्मफलभोगाय जगदवस्थास्वीकारान्नेदं तस्य वस्तुतत्त्वमित्यर्थः ।

अथ तृतीयामाह—

एतावानस्य महिमा । अतो ज्यायाꣳश्च
पूरुषः ( १ ) । पादोऽस्य विश्वा
भूतानि । त्रिपादस्यामृतं दिवि, इति ।

अतीतानागतवर्तमानरूपं जगद्यावदस्त्येतावान्सर्वोऽप्यस्य पुरुषस्य महिमा स्वकीयसामर्थ्यविशेषो न तु तस्य वास्तवं स्वरूपम्, वास्तवस्तु पुरुषः, अतो महिम्नोऽपि ज्यायानतिशयेनाधिकः । एतच्चं स्पष्टी क्रियते । विश्वा भूतानि कालत्रयवर्तीनि प्राणिजातानि अस्य पुरुषस्य पादश्चतुर्थोंऽशः । अस्यावशिष्टं त्रिपात्स्वरूपममृतं विनाशरहितं सद्दिवि द्योतनात्मके स्वप्रकाशरूपेऽवतिष्ठते । यद्यपि सत्यं ज्ञानमनन्तं ब्रह्मेत्याम्नातस्य परब्रह्मण इयत्ताया अभावादंशचतुष्टयं न निरूपयितुं शक्यं तथाऽपि जगदिदं ब्रह्मस्वरूपापेक्षयाऽत्यल्पमिति विवक्षितत्वा पादत्वोपन्यासः ।

अथ चतुर्थीमाह—

त्रिपादूर्ध्व उदैत्पुरुषः । पादोऽस्येहाऽऽभवात्पुनः ।
ततो विष्वङ्व्यक्रामत् । साशनानशने अभि, इति ।

योऽयं त्रिपात्पुरुषः संसारस्पर्शरहितब्रह्मस्वरूपः सोऽयमूर्ध्व उदैदस्मादज्ञानकार्यात्संसाराद्बहिर्भूतः सन्नत्रत्यैर्गुणदोषैरस्पृष्ट उत्कर्षेण स्थितवान् । तस्य योऽयं पादो लेशः सोऽयमिह मायायां पुनराभवत् । सृष्टिसंहाराभ्यां पुनः पुनरागच्छति । अस्य सर्वस्य जगतः परमात्मांशत्वं भगवताऽप्युक्तम्—"विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत्" इति । ततो मायायामागत्यानन्तरं विष्वङ्देवतिर्यगादिरूपेण विविधः सन्व्यक्रामद्व्याप्तवान् । किं कृत्वा साशनानशने अभिलक्ष्य साशनं भोज-

---

१ ग. पुरुषः । २ ख. °स्तवं वस्तु । ग °स्तववस्तु । ३ क. ख. °तच्चोभयं स्प° । ४ क. । सर्वभू° । ख. °ते । सर्वाणि भू° । ५ ख. °तं तच्च दिवि । ६ क. °त्ताभा° । ७ ग. °क्षित त्वाद्° । ८ ग. तवह्वलस्व° । ९ क. °र्वेगावास्थि° । १० क. °मात्मजेश° । ११ ग. माय- ऽऽग° । १२ ख. °यामा° ।

नादिव्यवहारोपेतं चेतनं प्राणिजातमनशनं तद्रहितमचेतनं गिरिनद्यादिकं तदुभयं यथा स्यात्तथा स्वयमेवंविधो भूत्वा व्याप्तवानित्यर्थः ।

**अथ पञ्चमीमाह—**

**तस्माद्विराडजायत । विराजो अधि पूरुषः ।**

**स जातो अत्यरिच्यत । पश्चाद्भूमिमथो पुरः (२),** इति ।

विष्वङ्व्यक्रामदिति यदुक्तं तदेव प्रपञ्च्यते—**तस्मादा**दिपुरुषा**द्विराडजायत** ब्रह्माण्डदेह उत्पन्नः । विविधं राजन्ते वस्तून्यत्रेति विराट् । **विराजो अधि** विराड्देहस्योपरि स्थितमेव देहमधिकरणं कृत्वा **पुरुष**स्तद्देहाभिमानी कश्चित्पुमानजायत । योऽयं सर्ववेदान्तवेद्यः परमात्मा स एव स्वकीययैा मायया विराड्देहं ब्रह्माण्डं सृष्ट्वा तत्र जीवरूपेण प्रविश्य ब्रह्माण्डाभिमानी देवतात्मा जीवोऽभवत् । एतच्चाऽऽथर्वणिका उत्तरतापनीये स्पष्टमामनन्ति—"स वा एष भूतानीन्द्रियाणि विराजं देवताः कोशांश्च सृष्ट्वा प्रविश्यामूढो मूढ इव व्यवहरन्नास्ते माययैव" इति । **स जातो** विराट्पुरुषो**ऽत्यरिच्यत**ातिरिक्तोऽभूत्, विराड्व्यतिरिक्तो देवतिर्यङ्मनुष्यादिरूपोऽभूत् । **पश्चा**द्देवादिजीवभावादूर्ध्वं **भूमिं** ससर्जेति शेषः । **अथो** भूमिसृष्टेरनन्तरं तेषां जीवानां **पुरः ससर्ज** । पूर्यन्ते सप्तभिर्धातुभिरिति पुरः शरीराणि ।

**अथ षष्ठीमाह—**

**यत्पुरुषेण हविषा । देवा यज्ञमतन्वत । वसन्तो**

**अस्याऽऽसीदाज्यम् । ग्रीष्म इध्मः शरद्धविः,** इति ।

पूर्वोक्तक्रमेण देवशरीरेषूत्पन्नेषु ते **देवा** उत्तरसृष्टिसिद्ध्यर्थं तत्साधनत्वेन **यज्ञमतन्वत** कंचिद्यज्ञमन्वतिष्ठन् । बाह्यद्रव्यस्याद्याप्यनिष्पन्नत्वेन हविरन्तरासंभवात्पुरुषस्वरूपमेव मनसा हविष्ट्वेन संकल्प्य तेन **पुरुषा**ख्येन(ण) **हविषा** यद्यदा मानसं यज्ञमकुर्वत तदानीम**स्य** यज्ञस्य वसन्तर्तुरेवाऽऽज्यमभूत्, तमेवाऽऽज्यत्वेन संकल्पितवन्तः । एवं **ग्रीष्म** इध्मत्वेन संकल्पितः । **शरत्**पुरोडाशादिहविष्ट्वेन संकल्पिता । पूर्वं पुरुषस्य हविःसामान्यरूपत्वेन संकल्पो वसन्तादीनां त्वाज्यादिविशेषरूपत्वेनेति द्रष्टव्यम् ।

**अथ सप्तमीमाह—**

**सप्तास्याऽऽसन्परिधयः । त्रिः सप्त समिधः कृताः । देवा**

**यद्यज्ञं तन्वानाः । अबध्नन्पुरुषं पशुम्,** इति ।

---

१ क. 'यमा°' । २ ग. जीवोऽ° । ३ ख. °ण व्र° । ४ क. °मानो दे° । ५ ख. °ये साधु समा° । गं. °ये समा° । ६ ख. °राडति° ।

अस्य सांकल्पिकयज्ञस्य गायत्र्यादीनि **सप्त** च्छन्दांसि **परिधय आसन्,** ऐष्टिक्याऽऽहवनीयस्य त्रयः परिधय औत्तरवेदिकास्त्रय आदित्यश्च सप्तमः परिधिप्रतिनिधिरूपः । अत एवाऽऽम्नायते—"न पुरस्तात्परिदधात्यादित्यो ह्येवोद्यन्पुरस्ताद्रक्षाꣳस्यपहन्ति"[1] इति । त एत आदित्यसहिताः सप्त परिधयोऽत्र सप्तच्छन्दोरूपाः । तथा समिधस्त्रिः**सप्त** त्रिगुणितसप्तसंख्याका एकविंशतिः **कृताः** । "द्वादश मासाः पञ्चर्तवस्त्रय इमे लोका असावादित्य एकविꣳशः" इति श्रुताः पदार्था एकविंशतिदारुयुक्तेध्मत्वेन भाविताः । यैद्यः पुरुषो वैराजोऽस्ति तं **पुरुषं देवाः** प्रजापतिप्राणेन्द्रियरूपा यज्ञं तन्वाना मानसयज्ञं कुर्वाणाः **पशुमबध्नन्**विराट्पुरुषमेव पशुत्वेन भावितवन्तः । एतदेवाभिप्रेत्य पूर्वत्र—"पुरुषेण हविषा" इत्युक्तम् ।

अथाष्टमीमाह—

तं यज्ञं बर्हिषि प्रौक्षन् । पुरुषं जातमग्रतः ( ३ ) ।

तेन देवा अयजन्त । साध्या ऋषयश्च ये, इति ।

यज्ञं यज्ञसाधनभूतं तं पुरुषं पशुत्वभावनया यूपे बद्धं **बर्हिषि** मानसे यज्ञे **प्रौक्षन्** प्रोक्षितवन्तः । कीदृशम्, **अग्रतः** सर्वसृष्टेः पूर्वं **पुरुषं जातं** पुरुषत्वेनोत्पन्नम् । एतच्च पूर्वमेवोक्तम्—'तस्माद्विराडजायत विराजो अधि पुरुषः' इति । **तेन** पुरुषरूपेण पशुना **देवा अयजन्त** मानसयागं निष्पादितवन्तः । के ते देवा इति त एवोच्यन्ते **साध्याः** सृष्टिसाधनयोग्याः प्रजापतिप्राणरूपास्तदनुकूला **ऋषयो** मन्त्रद्रष्टारश्च **ये** सन्ति ते सर्वेऽप्ययजन्त ।

अथ नवमीमाह—

तस्माद्यज्ञात्सर्वहुतः संभृतं पृषदाज्यम् । पशूꣳस्ताꣳश्चक्रे वायव्यान् । आरण्यान्ग्राम्याश्च ये, इति ।

**सर्वहुतः** सर्वात्मकः पुरुषो यस्मिन्यज्ञे हूयते सोऽयं सर्वहुतस्तादृशात्पूर्वोक्तान्मानसाद्यज्ञात्**पृषदाज्यं संभृतं** संपादितम् । दधि चाऽऽज्यं चेत्येवमादिभोग्यजातं संपादितमित्यर्थः । तथा **वायव्यान्**वायुदेवताकाँल्लोकप्रसिद्धानारण्यान्**पशूंश्चक्र** उत्पादितवान् । **आरण्या** द्विखुरादयस्तथा **ये ग्राम्या** गवाश्वादयस्तानप्युत्पादितवान् । पशूनामन्तरिक्षद्वारा वायुदेवत्यत्वं मन्त्रान्तरव्याख्याने समाम्नातम्—'वायवस्थेत्याह वायुर्वा अन्तरिक्षस्याध्यक्षः । अन्तरिक्षदेवत्याः खलु वै पशवः । वायव एवैनान्परिददाति' इति ।

---

१ क. ङ. 'ति । ते ह्यादि' । २ ग. यः । ३ क. ख. 'नसं यज्ञं नि' ।

अथ दशमीमाह—

तस्माद्यज्ञात्सर्वहुतः । ऋचः सामानि जज्ञिरे ।
छन्दाꣳसि जज्ञिरे तस्मात् । यजुस्तस्मादजायत (४), इति ।

छन्दांसि गायत्र्यादीनि । स्पष्टमन्यत् ।

अथैकादशीमाह—

तस्मादश्वा अजायन्त । ये के चोभयादतः । गावो
ह जज्ञिरे तस्मात् । तस्माज्जाता अजावयः, इति ।

अश्वव्यतिरिक्ता गर्दभा अश्वतराश्च ये केचिदूर्ध्वाधोभागयोरुभयोर्दन्तयुक्ताः सन्ति तेऽप्यश्ववदजायन्त । तथा गावोऽजाश्चावयश्च ते सर्वेऽप्युत्पन्नाः ।

अथ द्वादशीमाह—

यत्पुरुषं व्यदधुः । कतिधा व्यकल्पयन् । मुखं
किमस्य कौ बाहू । कावूरू पादावुच्येते, इति ।

प्रश्नोत्तररूपेण ब्राह्मणादिसृष्टिं वक्तुमत्र ब्रह्मवादिनां प्रश्ना उच्यन्ते—प्रजापतेः प्राणरूपा देवा यद्यदा पुरुषं विराड्रूपं व्यदधुः संकल्पेनोत्पादितवन्तः । तदानीं कतिधा कातिभिः प्रकारै[1]र्व्यकल्पयन्विविधं कल्पितवन्तः[2] । एष सामान्यरूपः प्रश्नः । मुखं किमित्यादयो विशेषप्रश्नाः[3] । अन्यत्स्पष्टम् ।

अथ त्रयोदशीमाह—

ब्राह्मणोऽस्य मुखमासीत् । बाहू राजन्यः कृतः (५)
ऊरू तदस्य यद्वैश्यः । पद्भ्याꣳशूद्रो अजायत, इति ।

योऽयं ब्राह्मणत्वजातिविशिष्टः पुरुषः सोऽयमस्य प्रजापतेर्मुखमासीत्, मुखादुत्पन्न इत्यर्थः । योऽयं राजन्यः क्षत्रियजातिः स बाहुत्वेन निष्पादितः बाहुभ्यामुत्पादित इत्यर्थः । तत्तदानीं यौ प्रजापतेरूरू तद्रूपो वैश्यः संपन्नः, ऊरुभ्यामुत्पन्न इत्यर्थः । तथा प[4]द्भ्यां शूद्र उत्पन्नः । इयं च मुखादिभ्यो ब्राह्मणादीनामुत्पत्तिः सप्तमकाण्डे "स मुखतस्त्रिवृतं निरमिमीत" इत्यादौ विस्पष्टमाम्नाता । अतः प्रश्नोत्तरे उभे अपि तत्परत्वेनैव योजनीये ।

अथ चतुर्दशीमाह—

चन्द्रमा मनसो जातः । चक्षोः सूर्यो अजायत ।

---

१ क. ख. °कारैः क° । २ ख. °न्तः । अ° । ३ ग. °श्नाः । अथ । ४ क. ख. पाद्भ्यां ।

मुखादिन्द्रश्चाग्निश्च । प्राणाद्वायुरजायत, इति ।

यथा दध्याज्यादिद्रव्याणि गवादिपशव ऋगादिवेदा ब्राह्मणादिमनुष्याश्च तस्मादुत्पन्नाः, एवं चन्द्रादयो देवा अपि तस्मादेवोत्पन्नाः । चक्षोश्चक्षुषः ।

अथ पञ्चदशीमाह—

नाभ्या आसीदन्तरिक्षम् । शीर्ष्णो द्यौः समवर्तत । पद्भ्यां भूमिर्दिशः श्रोत्रात् । तथा लोकाꣳ अकल्पयन् ( ६ ), इति ।

यथा देवास्तस्मादुत्पन्नास्तथा लोकानप्यन्तरिक्षादीन्प्रजापतेर्नाभ्याद्यवयवेभ्योऽकल्पन्नुत्पादितवन्तः ।

अथ षोडशीमाह—

वेदाहमेतं पुरुषं महान्तम् । आदित्यवर्णं तमसस्तु पारे । सर्वाणि रूपाणि विचित्य धीरः । नामानि कृत्वाऽभिवदन्यदास्ते, इति ।

यथोक्तविराट्पुरुषध्यानमत्र प्रतिपाद्यते । तत्र मन्त्रद्रष्टा स्वकीयं ध्यानानुभवं प्रकटयति—यद्यः पुरुषः सर्वाणि रूपाणि देवमनुष्यशरीराणि विचित्य विशेषेण सृष्ट्वा नामानि च देवोऽयं[1] मनुष्योऽयं पशुरयमित्यादीनि कृत्वाऽभिवदंस्तैर्नामभिर्व्यवहरन्नास्ते, एतं पुरुषं विराजं महान्तं सर्वगुणैरधिकमादित्यवर्णमादित्यवत्प्रकाशमानं वेदाहं जानामि, ध्यानेन सर्वदाऽनुभवामीत्यर्थः । स च पुरुषस्तमसोऽज्ञानात्परस्ताद्वर्तते । अतो गुरुशास्त्रोपदेशरहितैर्मूढैरनुभवितुमशक्य इत्यर्थः ।

अथ सप्तदशीमाह—

धाता पुरस्ताद्यमुदाजहार । शक्रः प्रविद्वान्प्रदिशश्चतस्रः । तमेवं विद्वानमृत इह भवति । नान्यः पन्था अयनाय विद्यते, इति ।

धाता प्रजापतिर्यं विराट्पुरुषमुदाजहार ध्यातृणामुपकारार्थं प्रख्यापितवान्[2] । चतस्रः प्रदिशश्चतुर्दिक्षु वर्तिनः सर्वान्प्राणिनः प्रविद्वान्प्रकर्षेण जानञ्शक्र इन्द्रस्तदर्थं प्रख्यापितवान् । धातुरिन्द्रस्योपदेशात्तं विराट्पुरुषमेवमुक्तप्रकारेण विद्वान्साक्षात्कुर्वन्निहास्मिन्नेव जन्मन्यमृतो मरणरहितो भवति । यदा विराट्पुरुषोऽहमिति साक्षात्करोति तदानीं वर्तमानदेहस्य[3] तत्स्वरूपत्वाभावात्तन्मरणेनायमुपासको न

१ ग. 'यं प' । २ क. 'ख्यमित्य' । ३ क. 'स्य स्वस्वरू' । ४ ख. तत्प्रत्यक्षरू' ।
५ 'वान्न्यमर' ।

म्रियते । अयनायामृतत्वप्राप्तयेऽन्यः पन्था यथोक्तविराट्पुरुषसाक्षात्कारमन्तरेणान्यो मार्गो न विद्यते । न हि कर्मसहस्रैरप्यमृतत्वं संपादयितुं शक्यते । 'न कर्मणा न प्रजया धनेन' इत्यादिशास्त्रात् ।

अथाष्टादशीमाह—

यज्ञेन यज्ञमयजन्त देवाः । तानि धर्माणि प्रथमान्यासन् । ते ह नाकं महिमानः सचन्ते । यत्र पूर्वे साध्याः सन्ति देवाः ( ७ ), इति ।
पुरुषः पुरोऽग्रतोऽजायत कुतोऽकल्पयन्नासन्द्वे च ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके तृतीयप्रपाठके द्वादशोऽनुवाकः ॥ १२ ॥

अत्र कृत्स्नानुवाकतात्पर्यं संक्षिप्योपन्यस्यति—देवाः प्रजापतिप्राणरूपा यज्ञेन यथोक्तेन मानसेन संकल्पेन यज्ञं यथोक्तयज्ञस्वरूपं प्रजापतिमयजन्त पूजितवन्तः । तस्मात्पूजनात्तानि प्रसिद्धानि धर्माणि जगद्रूपविकाराणां धारकाणि प्रथमानि मुख्यभूतान्यासन् । एतावता सृष्टिप्रतिपादकोऽनुवाकभागार्थः संगृहीतः । अथोपासन-तत्फलरूपोऽनुवाकभागार्थः संगृह्यते—यत्र यस्मिन्विराट्प्राप्तिरूपे नाके पूर्वे साध्याः पुरातना विराडुपास्तिसाधका देवाः सन्ति तिष्ठन्ति तं नाकं विराट्प्राप्तिरूपं स्वर्गं ते महिमानस्तदुपासका महात्मानः सचन्ते [1]समवयन्ति प्राप्नुवन्ति ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्ये तृतीयप्रपाठके द्वादशोऽनुवाकः ॥ १२ ॥

---

अथ तृतीये त्रयोदशोऽनुवाकः ।

---

अथोत्तरनारायणाख्यः कश्चिदनुवाकस्तस्य च विनियोगं पुरुषमेध आपस्तम्ब आह—"उत्तरनारायणेनाऽऽदित्यमुपस्थाय" इति । तत्र प्रथमामृचमाह—

अद्भ्यः संभूतः पृथिव्यै रसाच्च । विश्वकर्मणः समवर्तताधि । तस्य त्वष्टा विदधद्रूपमेति । तत्पुरुषस्य विश्वमाजानमग्रे, इति ।

१ क. ख. 'राडूपोपा°' । २ ख. ग. समयन्ति ।

योऽयं विराड्रूपो नारायणाख्यः पुरुषः सोऽयमद्भ्यः संभूतः सर्वत्र व्याप्तेषु जलेषु क्षीरमध्ये मण्डवद्ब्रह्माण्डगोलकमुत्पन्नम्। न केवलमद्भ्य एव किंतु पृथिव्यै रसाच्च पृथिव्याः संबन्धी योऽयं रसः सारस्तस्मादप्युत्पन्नः। "मण्डस्य योऽयं घनीभावः स पार्थिवः, ये च तन्मध्ये द्रवांशास्त आप्याः, यत्कठिनं सा पृथिवी, यद्द्रवं तदापः" इत्यादिश्रुतेः। विश्वकर्मणो जगत्कर्तुः परमेश्वरादधिसमवर्तताऽऽधिक्येन निष्पन्नो योऽयं ब्रह्माण्डाभिमानी चेतनः पुमान्सोऽयमीश्वरांशस्तस्य विराट्पुरुषस्य रूपं चतुर्दश-लोकरूपावयवसंस्थानं विदधन्निष्पादयंस्त्वष्टा विश्वकर्मा जगदीश्वरः। एति प्रवर्तते। पुरुषस्य विराडाख्यस्य संबन्धि तद्विश्वं प्रसिद्धं देवमनुष्यादिरूपं सर्वं जगदग्रे सृष्ट्या-दावाजानं सर्वत उत्पन्नम्।

अथ द्वितीयामाह—

वेदाहमेतं पुरुषं महान्तम्। आदित्यवर्णं
तमसः परस्तात्। तमेवं विद्वानमृत इह
भवति। नान्यः पन्था विद्यतेऽयनाय, इति।

पूर्ववद्व्याख्येयम्।

अथ तृतीयामाह—

प्रजापतिश्चरति गर्भे अन्तः। अजायमानो बहुधा
विजायते (१)। तस्य धीराः परिजानन्ति
योनिम्। मरीचीनां पदमिच्छन्ति वेधसः, इति।

ब्रह्माण्डरूपे गर्भेऽन्तर्मध्ये प्रजापतिर्विग्रहवान्भूत्वा चरति। स च वास्तवेन रूपेण सत्यं ज्ञानमनन्तं ब्रह्मेत्यादिश्रुत्या प्रतिपादनादजायमान एव तथाऽपि मायिकेन रूपेण बहुधा स्थावरजङ्गमादिबहुप्रकारो विशेषेण जायते। तस्य प्रजापतेर्योनिं जगत्कारणं रूपं वास्तवं स्वरूपं धीरा धैर्यवन्तो योगेन निरुद्धेन्द्रिया महात्मानो जानन्ति। वेधसो विधातारः सृष्टिकर्तारस्तमेवोपास्य मरीचीनां मरीच्यत्रिप्रमुखानां(णां)महर्षीणां पदं जगदुत्पादकत्वलक्षणमिच्छन्ति।

अथ चतुर्थीमाह—

यो देवेभ्य आतपति। यो देवानां पुरोहितः। पूर्वो यो

---

१ क. ख. सर्वतो। २ क. °द्भ्यम्। म°। ३ ख. °लोका°। ४ क. °र्मा सर्वं ज°। ५ ख. °ह्मेत्येतादृशत्वादजा°। ६ ख. °तारस्तमेव°।

देवेभ्यो जातः । नमो रुचाय ब्राह्मये , इति ।

यः परमेश्वरो देवेभ्यो देवार्थमातपति सर्वत्र प्रकाशते, देवानां देवत्वसिद्ध्यै तत्तद्धृदयेषु चैतन्यरूपेण प्रविश्याऽऽविर्भवति । यश्च देवानां पुरोहितो बृहस्पतिर्बभूव "बृहस्पतिर्देवानां पुरोहितः" इति श्रुतेः । यश्च देवेभ्यः पूर्वो जातः प्रथमभावी हिरण्यगर्भरूपेणोत्पन्नः "हिरण्यगर्भः समवर्तताग्रे" इति श्रुतेः । तादृशाय रुचाय रोचमानाय स्वयंप्रकाशाय ब्राह्मये परब्रह्मस्वरूपाय ब्रह्मणा वेदेन प्रतिपाद्याय वा नमो नमस्कारोऽस्तु ।

अथ पञ्चमीमाह—

रुचं ब्राह्मं जनयन्तः । देवा अग्रे
तदब्रुवन् । यस्त्वैवं ब्राह्मणो
विद्यात् । तस्य देवा असन्वशे, इति ।

देवाः सर्वेऽग्रे सृष्ट्यादौ ब्रह्मविद्यासंप्रदायप्रवर्तनकाले[1] ब्राह्मं रुचं परब्रह्मसंबन्धि चैतन्यं जनयन्तो विद्यया प्रादुर्भावयन्तस्तद्ब्रह्मतत्त्वं संबोध्याब्रुवन्वक्ष्यमाणं वाक्यमुक्तवन्तः । किं तद्वाक्यमिति तदुच्यते—हे परमात्मन्यः कश्चिद् ब्राह्मणः पुमांस्त्वामेवं यथोक्तप्रकारेण विद्यात्तस्य ब्रह्मविदः सर्वे देवा वशेऽसन्नधीना भवन्ति, स्वयं हि तेषां देवानामन्तर्यामी परमात्मा भवति, तस्माद्देवा एतदधीना न त्वस्य देवा ईश्वराः । एतमेवार्थं वाजसनेयिनो विस्पष्टमामनन्ति—" य एवं वेदाहं ब्रह्मास्मीति स इद९ सर्वं भवति तस्य देवाश्च नाभूत्या ईशते, आत्मा ह्येषा९ स भवति " इति ।

अथ यजुरात्मानं कंचिन्मन्त्रमाह—

ह्रीश्च ते लक्ष्मीश्च पत्न्यौ । अहोरात्रे पार्श्वे । नक्षत्राणि रूपम् । अश्विनौ व्यात्तम् । इष्टं मनिषाण । अमुं मनिषाण । सर्वं मनिषाण ( २ ), इति ॥

जायते वशे सप्त च ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके तृतीयप्रपाठके
त्रयोदशोऽनुवाकः ॥ १३ ॥

ह्रीर्लज्जाभिमानिनी देवता । लक्ष्मीरैश्वर्याभिमानिनी देवता । हे परमात्मन् ह्रीश्च लक्ष्मीश्च ते तव पत्न्यौ भार्यास्थानीये । ये चाहोरात्रे ते पार्श्वे पार्श्वद्वयस्थानीये

---

१ ख. °र्तका ब्रा° ।

नक्षत्राण्याकाशे दृश्यमानानि रूपं तव शरीरस्थानीयम् । अश्विनौ यौ देवौ तौ तव व्यात्तं विवृतमुखस्थानीयम् । तथाविध हे विराट्पुरुषेष्टमस्मदपेक्षितमात्मबोधं मनिषाणानुमन्यस्व देहीत्यर्थः । अमुं लोके दृश्यमानं गवाश्वादिकं मनिषाण प्रयच्छ । किं बहुना सर्वं मनिषाणैहिकमामुष्मिकं वा सर्वमिष्टं देहि ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्ये तृतीयप्रपाठके त्रयोदशोऽनुवाकः ॥ १३ ॥

---

अथ तृतीयप्रपाठके चतुर्दशोऽनुवाकः ।

---

अथ भर्तृसूक्ताख्यः कश्चिदनुवाकोऽभिधीयते । तस्य च मृत्यवे वेहतमित्यस्मिन्पशौ नारिष्ठहोमानन्तरमुपहोमार्थत्वेन विनियोगो द्रष्टव्यः । तथा चाऽऽपस्तम्ब आह— " मृत्यवे वेहतं तत्र भर्तारमुपजुहुयात् " इति । तत्र प्रथमामाह—

**भर्ता सन्भ्रियमाणो बिभर्ति । एको देवो बहुधा निविष्टः । यदा भारं तन्द्रयते स भर्तुम् । निधाय भारं पुनरस्तमेति, इति ।**

योऽयं प्राणाभिमानी देवः सोऽयं भर्ता पोषकः सन्भ्रियमाणोऽन्तर्यामिणा परमेश्वरेण स्वयं धार्यमाणः सन्बिभर्ति देहान्धारयति । स च सूत्रात्मरूपेण स्वयमेक एव देवस्तत्तच्छरीरेषु बहुधा शरीरानुसारेण बहुप्रकारो निविष्टोऽवस्थितः । अत एव प्राणविद्याप्रकरणे तत्तच्छरीरानुसारेण प्राणस्यावस्थितिं काण्वा आमनन्ति—" समः प्लुषिणा समो मशकेन समो नागेन सम एभिस्त्रिभिर्लोकैः " इत्यादि । स प्राणो यदा भारं देहरूपं भर्तुं धारयितुं तन्द्रयते तन्द्रीमालस्यं प्राप्नोति, आयुषोऽवसाने हि तस्याऽऽलस्यं भवति । तदानीं भारं देहरूपं निधाय क्वचिदुत्सृज्य पुनरस्तमेति, अदर्शनं गच्छति । यथा देहोत्पत्तेः पूर्वमदर्शनं गतस्तथा देहपातादूर्ध्वमपीत्याभिप्रेत्य पुनरित्युक्तम् ।

अथ द्वितीयामाह—

**तमेव मृत्युममृतं तमाहुः । तं भर्तारं तमु गोप्तारमाहुः । स भृतो भ्रियमाणो बिभर्ति । य एनं वेद सत्येन भर्तुम्, इति ।**

---

१ ए. °नि तव रूपस्थानीयानि . अ° । ५ ख. °त्मकत्वेन स्व° ।

वेदरहस्याभिज्ञाः पुरुषास्तमेव प्राणं मृत्युमाहुः, यदा प्राणो देहान्निर्गच्छति तदैव देहो म्रियतेऽतो मृत्युहेतुत्वान्मृत्युत्वम्[1]। यदा प्राणो देहेऽवस्थितस्तदाऽमृतो देह इत्यमृतत्वहेतुत्वात्तं प्राणममृतमाहुः। शरीरस्थापनहेतुत्वात्तमेव प्राणं भर्तारं देहस्य धारयितारमाहुः। तथा च कौषीतकिनः समामनन्ति—"अथ खलु प्राण एव प्रज्ञात्मेदं शरीरं परिगृह्योत्थापयति" इति। तथा तमेव प्राणमन्नपानादिस्वीकारहेतुत्वाद्भोक्तारं पोषकमाहुः। तथा च च्छन्दोगा अन्नपानस्वीकारसाधनत्वं प्राणस्याऽऽमनन्ति—"यदश्नाति यत्पिबति तेनेतरान्प्राणानवति" इति। यः पुमानेनं प्राणं सत्येन श्रुतिस्मृत्युदितेन सम्यङ्मार्गेण भर्तुं ध्यानकाले चित्ते धारयितुं वेद जानाति स उपासकः पुमान्भृतः परमेश्वरेणाऽऽदौ पोषितो भ्रियमाणोऽनेन प्राणवायुना धार्यमाणः सन्बिभर्ति स्वयमितरान्प्राणिनश्च पोषयितुं समर्थो भवति।

अथ तृतीयामाह—

सद्योजातमुत जहात्येषः। उतो जरन्तं न जहात्येकम् (१)। उतो बहूनेकमहर्जहार।
अतन्द्रो देवः सदमेव प्रार्थः, इति।

एष प्राणदेवः स्वतन्त्रः सन्सद्योजातमुत तदानीमेवोत्पन्नमपि[2] पुरुषमल्पायुषं जहाति परित्यजति। एकमन्यं वा कंचित्पुरुषमुतो जरन्तं दीर्घेणाऽऽयुषा[3] जरां प्राप्तमपि न जहाति। एकमहरेकस्मिन्नेव दिन उतो बहूननेकानपि पुरुषाञ्जहार संहरति। सोऽयं प्राणदेवः सदमेव सर्वदैवातन्द्र उच्छ्वासनिश्वासमरणामरणबहुमरणविषयव्यापारेष्वालस्यरहितोऽतोऽयं प्रार्थोऽस्माभिः प्रार्थनीयः, उपास्य इत्यर्थः।

अथ चतुर्थीमाह—

यस्तद्वेद यत आबभूव। संधां च यां संदधे ब्रह्मणैषः।
रमते तस्मिन्नुत जीर्णे शयाने। नैनं जहात्यहस्सु पूर्व्येषु, इति।

यतो यस्मात्करणादयं प्राण आबभूवाऽऽविर्बभूव। तत्कारणं यः पुमान्वेद जानाति। तथा संधां च संबन्धमपि यो वेद। कीदृशी संधेति सैव विशेष्यते। एष प्राणो ब्रह्मणाऽऽत्मना सह यां संधां संदधे यं संबन्धं प्राप्तवान्। इत्थमिह देहे वस्तव्यमियन्तं कालमिह वस्तव्यमित्येतादृशी संधा तां यो वेद तस्मिन्पुरुषे प्राणाकारं प्राणात्मसंबन्धं वाऽभिजानान उत जीर्णे शयाने तादृशे पुरुषे जरां प्राप्य

१ ख ग. °म् तथा देहेऽवस्थितेऽमृ°। २ ग. °दानीं चोत्प°। ३ ग. °न्तं यतो दीर्घायु°।

ायने सत्यपि तत्रायं प्राणो रमते क्रीडते(ति) । पूर्वेषु पूर्वकृतैः कर्मभिः संपादि-
तेष्वहस्सु बहुष्वपि दिवसेषु नैनं जहाति, एनं जीर्णं पुरुषं स प्राणो न परित्यजति ।

अथ पञ्चमीमाह—

त्वामापो अनु सर्वाश्चरन्ति जानतीः । वत्सं
पयसा पुनानाः । त्वमग्निꣳ हव्यवाहꣳ समि-
न्त्से त्वं भर्ता मातरिश्वा प्रजानाम् ( २ ), इति ।

हे प्राण त्वां वायुरूपं सर्वा आपोऽनुसंचरन्ति, यत्र वायुः प्रबलं वाति तत्रै-
ाधिकं सद्वृष्टिजलं प्रवर्तते । तत्र दृष्टान्तः—यथा जानतीः स्वस्ववत्साभिज्ञा गावः
पयसा पुनानाः स्वकीयेन क्षीरेण स्रवन्त्यः पोषयन्त्यो वत्समनुसंचरन्ति तद्वदिति
ष्टव्यम् । हे प्राण त्वं हव्यवाहं हविषां वोढारमग्निं समिन्त्से सम्यग्दीपयसि ।
ायुना ह्यग्निर्दीप्यते । तथा त्वमेव मातरिश्वा वायुरूपः सन्प्रजानां भर्ता धार-
येताऽसि ।

अथ षष्ठीमाह—

त्वं यज्ञस्त्वमु वेवासि सोमः । तव देवा हवमायन्ति सर्वे ।
त्वमेकोऽसि बहूननुप्रविष्टः । नमस्ते अस्तु सुहवो म एधि, इति ।

हे प्राण त्वं यज्ञप्रवर्तकत्वेन यज्ञरूपोऽसि । प्राणस्य वायुरूपत्वाद्यज्ञप्रवर्तकत्वम् ।
तच्चान्यत्राऽऽम्नातम्—'वाताद्वा अध्वर्युर्यज्ञं प्रयुङ्क्ते' इति । सोमं उ सोमयागोऽपि
त्वमेव सर्वक्रियाणां वायुप्रेरितत्वात् । किंच सर्वे देवास्तव हवं त्वदीयमाह्वानं प्रत्या-
न्त्यागच्छन्ति । वायुना यागक्रियायां प्रवर्तितायां हविरर्थं देवा आगच्छन्ति ।
च देवतारूपेण त्वमेकोऽसि तथाऽपि बहून्देहाननुप्रविष्टः, तत्तदानुकूल्येन पृथ-
ग्रूपाणि धृत्वा तत्र तत्र स्थितः । हे प्राण ते तुभ्यं नमोऽस्तु । मे मम सुहव एधि,
ह्वातु सुलभो भव ।

अथ सप्तमीमाह—

नमो वामस्तु शृणुतꣳ हवं मे । प्राणापानाव-
जिरꣳ संचरन्तौ । ह्वयामि वां ब्रह्मणा तूर्तमे-
तम् । यो मां द्वेष्टि तं जहितं युवाना, इति ।

---

१ ख. ग. °त्रैव वाय्वधीनं स° । २ क. ख. 'मया° । ३ क. हविरर्थे ।

अजिरमेजनशीलं गमनस्वभावं शरीरं संचरन्तौ सम्यक्प्रवर्तयन्तौ हे प्राणापानौ वां युवाभ्यां नमोऽस्तु नमस्कारोऽस्तु । मे हवं मदीयमाह्वानं शृणुतम् । ब्रह्मणा मन्त्रेण वां ह्वयामि युवामाह्वयामि । तूर्तं तूर्णं शीघ्रमेतमागच्छतम् । युवानौ तरुणौ युवां यः शत्रुर्मा द्वेष्टि तं जहितं विनाशयतम् ।

अथाष्टमीमाह—

प्राणापानौ संविदानौ जहितम् । अमुष्यासुना

मा संगसाथाम् ( ३ ) । तं मे देवा ब्रह्मणा

संविदानौ । वधाय दत्तं तमहꣳ हनामि, इति ।

हे प्राणापानौ वायू संविदानौ परस्परमैकमत्यं गतौ जहितमस्मच्छत्रुं परित्यजतम् । अमुष्य मदीयशत्रोरसुना प्राणेन मा संगसाथां संगतौ मा भूताम् । ये ब्रह्मणा मदीयेन मन्त्रेण संविदाना वैकमत्यं गतौ देवा प्राणापानदेवौ युवां तं मदीयं शत्रुं वधाय वधार्थं दत्तं मह्यं प्रयच्छतं तं शत्रुमहं हनामि विनाशयामि ।

अथ नवमीमाह—

असज्जजान सत आबभूव । यं यं जजान

स उ गोपो अस्य । यदा भारं तन्द्रयते

स भर्तुम् । परास्य भारं पुनरस्तमेति, इति ।

असदव्यक्तं जगत्कारणं जजान प्रथममाकाशात्मनाऽव्यक्तरूपेणोत्पन्नं तस्मात्सतोऽव्यक्तत्वेन सद्रूपादाकाशाद्वायुरूपोऽयं प्राण आबभूवाऽऽभिमुख्येनोत्पन्नः । स वायुरूपः प्राणो यं यं देवमनुष्यादिदेहं जजानोत्पादितवान्स उ स सर्वोऽपि देहोऽस्य प्राणस्य गोपो रक्षकोऽभवत् । प्राणो हि शरीरे प्रविश्य गुप्तो वर्तते, [ स ] यावदायुस्तावन्तं कालं तत्रावस्थाय यदा देहरूपं भारं भर्तुं तन्द्रयते धारयितुमलसो भवति तदानीमेव तं भारं परास्य परित्यज्य पुनरपि देहोत्पत्तेः प्रागवस्थायामस्तमदर्शनं गच्छति ।

अथ दशमीमाह—

तद्वै त्वं प्राणो अभवः । महान्भोगः प्रजापतेः ।

भुजः करिष्यमाणः । यद्देवान्प्राणयो नव ( ६ ) इति ।

---

१ ग. °ना नित्यं त° । २ क. देवा देवौ प्राणापानवायू यु° । ३ क. °णं बीजं सत्त्वं° ४ क. °णोत्पादितवान्स त° । ५ क. °क्षको भवेत् । ६ ग. ( ३ )

एकं प्रजानां गसाथां नवं ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके तृतीयप्रपाठके चतुर्दशोऽनुवाकः ॥ १४ ॥

यद्यदा त्वं भुजो भोगान्करिष्यमाणः सन्नवदेवान्नवच्छिद्रवर्तिनश्चक्षुरादीन्दी-प्यमानान्पदार्थान्प्राणयः प्रकर्षेण चेष्टितवानसि तद्वै तदानीमेव त्वं प्राणोऽभवः प्राण-यति प्रकर्षेण चेष्टयतीति व्युत्पत्त्या प्राणनामकोऽभूः। कीदृशस्त्वम्—प्रजापतेर्महा-न्भोगोऽत्यन्तभोगहेतुः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरी-यारण्यकभाष्ये तृतीयप्रपाठके चतुर्दशोऽनुवाकः ॥ १४ ॥

---

अथ तृतीये पञ्चदशोऽनुवाकः।

---

अथ मृत्युसूक्ताख्योऽनुवाकोऽभिधीयते। इत आरभ्य सप्तानामनुवाकानां ब्रह्ममेधे विनियोगं भरद्वाज[1] आह—"मृत्युसूक्तेनानुशंसनं[2] सौर्येणाऽऽदित्योपस्थानं[3] सौम्या संग-हनमीयुष्ट[4] इत्यवगाहनं ज्योतिष्मतीभिरुपोषणं चित्त४ संतानेनेति हविराहुतीः प्रया-साय स्वाहेति स्रुवाहुतीः" इति। तत्र मृत्युसूक्ते प्रथमामृचमाह—

हरि४ हरन्तमनुयन्ति देवाः। विश्वस्ये-
शानं वृषभं मतीनाम्। ब्रह्म सरूपमनु मेद-
मागात्। अयनं मा विवधीर्विक्रमस्व, इति।

हरिं हरणशीलं प्राणापहर्तारं मृत्युदेवं सर्वे देवा अनुयन्ति, आनुकूल्येन गच्छन्ति। न कोऽपि देवो मृत्युमुल्लङ्घयितुं क्षमते। कीदृशं हरिम्—हरन्तमायु-षोऽवसाने प्राणा[5]नपहरन्तम्, अत एव विश्वस्येशानं सर्वस्य जगतः स्वामिनम्, मतीनां मननीयानां देवानां मध्ये वृषभं श्रेष्ठम्। अस्मिंस्तु कर्मणि सरूपं समा-नरूपमनुकूलमिदं ब्रह्म मन्त्रजातं मामनु यजमानमनुलक्ष्याऽऽगात्, आभिमुख्येन प्राप्नोत्। अतो हे मृत्यो ब्रह्मणा तुष्टः सन्नयनं मा विवधीर्मदीयं मार्गं मा विना-शय, किंतु विक्रमस्व मच्छत्रुविनाशार्थं पराक्रमं कुरु।

अथ द्वितीयामाह—

मा छिदो मृत्यो मा वधीः। मा मे बलं

---

१ ग. भारद्वाज। २ ग. °नुशास°। ३ ग. °नं सौम्यासंगाहनं सौ°। ४ ग °नं हापुष्माव°। ५ ख. °पुष्याऽव°। ६ ख ग °णाप्रकमप°।

विब्र्हो मा प्रमोषीः । प्रजां मा मे रीरिष आयु-
रुग्र । नृचक्षसं त्वा हविषा विधेम, इति ।

हे मृत्यो त्वं मा छिदो मदीयस्य कस्याप्यवयवस्य च्छेदं मा कार्षीः । माव धीर्मम वधमपि मा कार्षीः । मे मदीयं बलं मा विब्र्हो मा विनाशय । मा प्रमोषी अन्यदपि मदीयं वस्तु चौर्येण माऽपहर । मे मदीयां प्रजां पुत्रपौत्रादिकां मा रीरिषं हिंसितां मा कुरु । हे उग्र देव मदीयमायुश्च मा रीरिषो मा विनाशय । नृचक्षा मनुष्येषु प्रख्यातं त्वां हविषा विधेम परिचरेम ।

अथ तृतीयामाह—

सद्यश्चकमानाय । प्रवेपानाय मृत्यवे (१) । प्रास्मा
आशा अशृण्वन् । कामेनाजनयन्पुनः, इति ।

सद्यस्तस्मिन्नेव क्षणे, चकमानाय भयहेतवे प्रवेपानाय तेन भयेन प्राणिनां कम्प-यित्रे, प्राणिनो हि मृत्योर्नामग्रहणेनैव भीताः कम्पन्ते । अस्मा ईदृशाय मृत्यव आशाः सर्वा दिशः प्राशृण्वञ्शृण्वन्ति । सर्वदिग्वर्तिनः प्राणिनो मृत्युदेवस्य महिमानं प्राज्ञेभ्यः प्रकर्षेण शृण्वन्ति । कामेन मृत्योरिच्छया पुनरजनयन्पुनः पुनरपत्यानि जन-यन्ति । मृत्यौ प्रतिकूले सत्युत्पादितान्यपत्यानि तदानीमेव म्रियन्तेऽतो मृत्युमाराध्य तदिच्छानुवर्तिनोऽपत्यान्युत्पादयन्ति ।

अथ चतुर्थीमाह—

कामेन मे काम आगात् । हृदयाद्धृदयं मृत्योः ।
यदमीषामदः प्रियम् । तदैतूप मामभि, इति ।

कामेन मृत्योरिच्छया मे काम आगान्मदीयमभीष्टं वस्त्वागच्छतु । मदीयं हृदयं मृत्योर्हृदयान्मृत्युचित्तानुकूल्येन वर्ततामिति शेषः । अतो मृत्योरनुग्रहे सत्यमीषां मदीयानामिन्द्रियाणां यददः प्रियं यदिदं वस्त्वभीष्टं तद्वस्तु मामभिलक्ष्योप समीप ए(ऐ)त्वागच्छतु ।

अथ पञ्चमीमाह—

परं मृत्यो अनुपरेहि पन्थाम् । यस्ते स्व इतरो
देवयानात् । चक्षुष्मते शृण्वते ते ब्रवीमि ।
मा नः प्रजाꣳ रीरिषो मोत वीरान्, इति ।

१ क. पुत्रा° । २ क. °त्युम° । ३ क. °ले युत्पा° । ४ क. समुत्पा° । ५ ग. °त्यप्यप° ।

हे मृत्यो देवयानादितरो यः पन्थास्ते स्वस्तव स्वभूतः, तं परं पन्थां देवयानादितरं तं मार्गमनुपरेहि, अनुक्रमेण प्राप्नुहि । चक्षुष्मते साधुदर्शिने शृण्वतेऽस्मद्विज्ञप्तीनां श्रोत्रे, ते तुभ्यमेकं वचनं ब्रवीमि । नोऽस्मदीयां प्रजां पुत्रादिरूपां, मा रीरिषो मा विनाशय । उतापि च वीराञ्शूरान्भृत्यानपि मा रीरिषः ।

अथ षष्ठीमाह—

प्र पूर्व्यं मनसा वन्दमानः । नाधमानो वृषभं
चर्षणीनाम् । यः प्रजानामेकराण्मानुषीणाम् ।
मृत्युं यजे प्रथमजामृतस्य ( २ ) इति ॥
मृत्यवे वीराँश्चत्वारि च ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके तृतीयप्रपाठके
पञ्चदशोऽनुवाकः ॥ १५ ॥

यो मृत्युर्मानुषीणां मनुष्यजातियुक्तानां प्रजानामेकराडेक एव राजा तादृशं मृत्युमहं यजे पूजयामि । कीदृशोऽहम्—मनसा [प्र]वन्दमानः प्रकर्षेण नमस्कुर्वाणः, नाधमानोऽपेक्षितं फलं याचमानः । कीदृशं मृत्युम् । प्रपूर्व्यं (पूर्व्यं) प्राणिभ्यः पूर्वस्मिन्कल्पे भवम् । चर्षणीनां मनुष्याणां वृषभं कामादिवर्षणक्षमम् । ऋतस्य प्रथमजां सत्यस्य परब्रह्मणः प्रथमोत्पन्नंकार्यम् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्ये तृतीयप्रपाठके पञ्चदशोऽनुवाकः ॥ १५ ॥

---

अथ तृतीये षोडशोऽनुवाकः ।

---

अथ सूर्योपस्थाने विनियुक्तं मन्त्रमाह—

तरणिर्विश्वदर्शतो ज्योतिष्कृदसि सूर्य । विश्वमाभासि
रोचनम् । उपयामगृहीतोऽसि सूर्याय त्वा भ्राज-
स्वत एष ते योनिः सूर्याय त्वा भ्राजस्वते, इति ।

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके तृतीयप्रपाठके
षोडशोऽनुवाकः ॥ १६ ॥

---

१ क. 'भम् ।

हे सूर्य त्वं तरणिरन्धकारोत्तरणहेतुः, विश्वदर्शतो विश्वैः सर्वैः प्राणिभिर्दर्शनीयः ज्योतिष्कृत्सर्वस्मिँल्लोके प्रकाशकृच्चासि । विश्वं सर्वं जगद्रोचनं दीप्यमानं यथा भवति तथाऽऽभासि सर्वतः प्रकाशयसि । अग्निष्टोमे योऽयमतिग्राह्याख्यो ग्रहोऽस्ति तादृश हे ग्रह भ्राजस्वते दीप्तियुक्ताय यथोक्तमहिमोपेताय सूर्याय त्वां गृह्णामि, अतस्त्वं तदर्थमुपयामगृहीत उपयामेन पृथिवीकार्येण पात्रेण गृहीतोऽसि । एष हविर्धानमण्डपस्थः खरप्रदेशस्ते तव योनिः स्थानम्, अतो भ्राजस्वते दीप्तिमते सूर्याय, त्वां तत्र प्रदेशे सादयामि, ईदृशोऽयमतिग्राह्यो यस्मै सूर्याय गृह्यते किमु वक्तव्यं तस्य माहात्म्यमित्यर्थमुपस्थानकाले स्तु .र्थो ग्रहोपन्यासो लिङ्गबलात्तस्यातिग्राह्यस्य ग्रहणेऽप्ययं मन्त्रो विनियुज्यते ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्ये तृतीयप्रपाठके षोडशोऽनुवाकः ॥ १६ ॥

---

अथ तृतीये सप्तदशोऽनुवाकः ।

---

प्रेतदाहस्थानसमीपेऽवटं खात्वा जलं प्रक्षिप्य तेन सेचनं संगाहनं तत्र विनियुक्तां सौमीमृचमाह—

आप्यायस्व मदिन्तम सोम विश्वाभिरू-
तिभिः । भवा नः सप्रथस्तमः, इति ।

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके तृतीयप्रपाठके
सप्तदशोऽनुवाकः ॥ १७ ॥

हे मदिन्तमातिशयेन हर्षयुक्त सोम विश्वाभिरूतिभिः सर्वप्रकारैरस्मदीयरक्षणैराप्यायस्व सर्वतो वर्धस्व । नोऽस्मान्प्रति सप्रथस्तमोऽतिशयेन प्रथायुक्तो भव ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्ये तृतीयप्रपाठके सप्तदशोऽनुवाकः ॥ १७ ॥

---

१ क. यो नियमेनाति° । २ ख. °दृशं ग्रहं भ्रा° । ३ क. °कः । अथ प्रे° । ४ क. वर्धयस्व

अथ तृतीयेऽष्टादशोऽनुवाकः ।

अथावगाहने[2] विनियुक्तामृचमाह—

ईयुष्टे[4] ये पूर्वतरामपश्यन्व्युच्छन्तीमुषसं मर्त्यासः । अस्माभिरू नु प्रतिचक्ष्याऽभूदो ते यन्ति ये अपरीषु पश्यान्, इति ॥

**इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके तृतीयप्रपाठकेऽष्टादशोऽनुवाकः ॥ १ ॥**

ये मर्त्यासो मनुष्या व्युच्छन्तीं प्रभातं कुर्वतीमुषसमुषःकालदेवतां पूर्वतरामितरेभ्योऽत्यन्तं पूर्वामपश्यन्पश्यन्ति, ते मनुष्या ईयुस्तां देवतां प्राप्नुवन्ति। [सा] अस्माभिरू नु अस्माभिरपि[5] नु क्षिप्रं प्रतिचक्ष्याऽभूत्प्रत्यक्षं दर्शनीयाऽभूत्[6] । येऽन्येऽप्यपरीष्वपररात्रिषु रात्रीणामवसानेषु पश्यान्पश्यन्ति ते ओ यन्ति तेऽपि तां देवतां सर्वथा[8] प्राप्नुवन्ति ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्ये तृतीयप्रपाठकेऽष्टादशोऽनुवाकः ॥ १८ ॥

अथ तृतीय एकोनविंशोऽनुवाकः ।

अथोपोषणे[9] दाहे विनियुक्तानि यजूंष्याह—

ज्योतिष्मतीं त्वा सादयामि ज्योतिष्कृतं त्वा सादयामि ज्योतिर्विदं त्वा सादयामि भास्वतीं त्वा सादयामि ज्वलन्तीं त्वा सादयामि मल्मला भवन्तीं त्वा सादयामि दीप्यमानां त्वा सादयामि रोचमानां त्वा सादयाम्यजस्रां त्वा सादयामि बृहज्ज्योतिषं त्वा सादयामि बोधयन्तीं त्वा सादयामि जाग्रतीं त्वा सादयामि, इति ॥

**इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके तृतीयप्रपाठक एकोनविंशोऽनुवाकः ॥ १९ ॥**

१ ख. ग. अव°। २ ग. °नेऽष्टादशीमा°। ३ ख. °कामौषसीं द्वितीयाम्°। ४ घ. °युष्टे। ५ ग. °ष्या इयु°। ६ ख. °स्माभिः साऽनुक्षणं प्र°। ७ ग. °भिरु नु। ८ क. सर्वदा। ९ क. °णे वि°।

प्रेतं दग्धुं या समित्प्रक्षिप्यते तां संबोध्योच्यते—हे समित्त्वामस्य प्रेतस्योपरि **सादयामि** स्थापयामि । ज्योतिष्मतीमित्यादिभिर्विशेषणैस्तत्समिन्निष्ठाया ज्वालाया उत्तरोत्तराभिवृद्ध्याऽवस्थाविशेषा उच्यन्ते । अत्यल्पप्रकाशोपेता **ज्योतिष्मती** । ईषदधिकप्रकाशोपेता **ज्योतिष्कृत्** । ततोऽप्यधिकप्रकाशोपेता **ज्योतिर्वित्** । एवं भास्वत्यादिषु योजनीयम् । मल्मलेति दह्यमानकाष्ठध्वनेरनुकरणम् । लिङ्गानुसारेणायं मन्त्र इष्टकोपधानेऽपि विनियोक्तव्यः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्ये तृतीयप्रपाठक एकोनविंशोऽनुवाकः ॥ १९ ॥

---

अथ तृतीये विंशोऽनुवाकः ।

---

अथ स्रुवाहुतिमन्त्रा उच्यन्ते । तत्र द्वादश मन्त्रानाह—

**प्रयासाय स्वाहाऽऽयासाय स्वाहा वियासाय स्वाहा संयासाय स्वाहोद्यासाय स्वाहाऽवयासाय स्वाहा शुचे स्वाहा शोकाय स्वाहा तप्यत्वै स्वाहा तपते स्वाहा ब्रह्महत्यायै स्वाहा सर्वस्मै स्वाहा, इति ॥**

**इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके तृतीयप्रपाठके विंशोऽनुवाकः ॥ २० ॥**

प्रेतस्य यमलोके बाधका देवताविशेषाः प्रयासादिशब्दवाच्याः, तन्निर्वचनानि तु यथायोगमुन्नेयानि । तस्यै तस्यै देवतायै स्रुवेण गृहीतमिदमाज्यं स्वाहुतमस्तु ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्ये तृतीयप्रपाठके विंशोऽनुवाकः ॥ २० ॥

---

अथ तृतीय एकविंशोऽनुवाकः ।

---

अथ राजगवीहविषो होमार्थोऽयमनुवाक उच्यते । तत्र नव मन्त्रानाह—

**चित्तꣳ संतानेन भवं यक्ना रुद्रं तनिम्ना पशुपतिꣳ स्थूलहृदयेनाग्निꣳ हृदयेन रुद्रं लोहि-**

---

१ क. °षगैः सामि° । २ क. अत्य° । ३ क. ज. °नेवि° । ४ क. °न्त्रानुवाक उच्यते । त° । ५ ग. तपत्यै ६ क. °गवि ह° । ७ क. °वीयो हो° । ८ क. °मार्थमन्त्रानु° ।

तेन शर्वं मतस्नाभ्यां महादेवमन्तःपार्श्वेनौषि-

ष्ठहन५ शिङ्गीनिकोश्याभ्याम् ( १ ), इति ॥

चित्तमेकम् ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके तृतीयप्रपाठके

एकविंशोऽनुवाकः ॥ २१ ॥

अत्र द्वितीयान्ताश्चित्तादिशब्दा देवताविशेषवाचिनः । तृतीयान्ताः संतानादिशब्दाः पशोर्मांसविशेषवाचिनः । संतानाख्येन मांसविशेषेण चित्ताख्यं देवताविशेषं परितोषयाम इति वाक्यशेषः । एवं सर्वत्र योजनीयम् । तदेवमस्मिन्प्रपाठके ब्रह्मचितिब्रह्ममेधयोरङ्गभूता मन्त्रा उक्ताः । चातुर्होत्रियचितिर्ब्रह्मचितिः । ब्रह्म वै चतुर्होतार इत्याम्नातत्वात् । तस्यां ब्रह्मचितौ चित्तिः स्रुगित्यादयः सुवर्णं घर्ममित्येवमन्ता अनुवाका विनियुक्ताः । ब्रह्ममेधे तु कृत्स्नोऽपि प्रपाठको विनियुक्तः । आहिताग्नेर्यो दहनादिसंस्कारः सोऽयं पितृमेधः । आहिताग्नित्वे सति यो ब्रह्मतत्त्वं जानाति तस्य दहनादिसंस्कारो ब्रह्ममेध इत्युच्यते । तस्मिन्ब्रह्ममेधेऽस्य प्रपाठकस्य विनियोगं भरद्वाज आह—“ अथात उत्तरं पितृमेधं व्याख्यास्यामो ब्रह्ममेध इत्याचक्षते । तथाऽप्युदाहरन्ति द्विजातीनामपवर्गार्थैस्तत्त्वदर्शिभिः(?) । ऋषिभिस्तपसो योगाद्दृष्टिं[४] पुरुषोत्तमम्[५] । होतृंश्च[६] पितृमेधं च संसृज्य[७] विधिरुत्तरः । विहितस्तु समासेन क्रतूनामुत्तमः क्रतुः ” इति । तस्य सग्रहैर्होतृभिर्होमो भर्तृसूक्तेन भरणं पत्नीभिरुपसादनं दक्षिणाप्रतिग्रहैर्निर्मार्गो[९] हृदयैर्हैरण्यशकलान्संभारयजुर्भिः पात्रचयनं[१०] ज्योतिष्मतीभिरुपोषणं नारायणाभ्यामुपस्थानं ब्राह्मण एकहोतेति चानुमन्त्रणं चित्त५ संतानेनेति हविराहुतीः प्रयासाय स्वाहेति स्रुवाहुतीर्मृत्युसूक्तेनानुशंसनं सौम्या संगाहनं सौर्येणाऽऽदित्योपस्थानमीर्युष्ट[११] इत्यवगाहनं स्मानमेत[१२] ऊर्ध्वं पैतृमेधिकमाथर्वौदनप्राशनात्परं[१३] ब्रह्मेत्याचक्षते तांनसाधारणे[१४] श्मशाने कुर्वीत[१५] *नानाचार्याय[१६] द्विजातीनामेव[१७] संतिष्ठते ब्रह्ममेधः[१८] ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्ये तृतीयप्रपाठक एकविंशोऽनुवाकः ॥ २१ ॥

---

* ग. पुस्तके टिप्पण्यां तानाचार्यो य इति पाठः ।

---

१ ग °तस्नाभ्यां । २ ख ग. °हौत्रीयचि° । ३ क. °वर्गोऽर्थ° । ४ ख. ग. °ष्टिनं पु° । ५ क. °म५ हो° । ६ ग. °दोह्यश्च । ७ क. स५सृ° । ग. मंसृत्य । ८ क. °पसंवेशनं । ९ ग. °र्गौहृद° । १० क. °त्रापनं । ११ ख. °युष्टयाऽव° । ग. °युष्णाव° । १२ ख. °नमेतदूर्ध्वं । १३ ख. °थर्वद° । १४ क. °ते तां न° । १५ ग. तानाचा° । १६ ख. °चार्योऽयं द्वि° । १७ ग. °मेवं सं° । १८ क पितृमेधः ।

चित्तिः पृथिव्यग्निः सूर्यं ते चक्षुर्महाहविर्होता वाग्घोता ब्रह्मण एकहोताऽग्निर्यजुर्भिः सेनेन्द्रस्य देवस्य सुवर्णं घर्मः सहस्रशीर्षाऽद्भ्यो भर्ता हरिं तरणिराप्यायस्वेयुष्टे ये ज्योतिष्मतीं प्रयासाय त्विषमेकाविंशतिः ॥ २१ ॥

चित्तिरग्निर्यजुर्भिरन्तःप्रविष्टः प्रजापतिः प्रजया संविदानमस्य धीरा ज्योतिष्मतीं त्रिपश्चाशत् ॥ ५३ ॥

अथ शान्तिः ।

तच्छं योरावृणीमहे । गातुं यज्ञाय । गातुं यज्ञपतये । दैवी स्वस्तिरस्तु नः । स्वस्तिर्मानुषेभ्यः । ऊर्ध्वं जिगातु भेषजम् । शं नो अस्तु द्विपदे । शं चतुष्पदे ॥

ॐ शान्तिः शान्तिः शान्तिः ॥

इति शान्तिः ।

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके तृतीयः प्रपाठकः समाप्तः ॥ ३ ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥ १ ॥

इति श्रीमद्वीरबुक्कणसाम्राज्यधुरंधरश्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्ये तृतीयः प्रपाठकः समाप्तः ॥ ३ ॥

---

१ ग. °या भर्ता प्रयासाय द्विपं° ।

## अथ कृष्णयजुर्वेदीयतैत्तिरीयारण्यके चतुर्थप्रपाठकस्याऽऽरम्भः ।

( तत्र प्रथमोऽनुवाकः । )

यस्य निश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥
तृतीये कथिता मन्त्रा ब्रह्माग्निब्रह्ममेधयोः ।
प्रवर्ग्यमन्त्राः प्रोच्यन्ते चतुर्थेऽस्मिन्प्रपाठके ॥ २ ॥
तद्ब्राह्मणं पञ्चमे स्यात्तावन्योन्याभिकाङ्क्षिणौ ।
तेन प्रपाठकावेतौ व्याख्यास्ये सह सर्वशः ॥ ३ ॥

तत्र चतुर्थस्य प्रथमेऽनुवाके शान्तिपाठार्थो मन्त्रोऽभिधीयते, तस्य च प्रवर्ग्यकर्मादौ महावीरनिष्पत्तेः पूर्वं पाठं बौधायन[1] आह—"अ(आ)मावारयेनैं वा हविर्वेष्ठा नक्षत्रे वा पूर्वां शान्तिमुपयन्ति नमो वाचे" इति । आपस्तम्बस्तु प्रवर्ग्यप्रचारादौ महावीरनिष्पत्तेरूर्ध्वं शान्तिपाठमाह—"प्रवर्ग्येण प्रचारिष्यन्तः संवृण्वन्ति द्वाराणि परिश्रयन्ति पत्न्याः पश्चाद्धोतोपविशति पुरस्तादध्वर्युर्दक्षिणतो ब्रह्मा यजमानः प्रस्तोता चोत्तरतः प्रतिप्रस्थाताऽऽग्नीध्रश्च मदन्तीरुपस्पृश्य प्रथमेनानुवाकेन शान्तिं कृत्वा" इति । तस्यानुवाकस्य प्रथमभागे स्वाभीष्टानां देवतानामृषीणां च नमस्कारमाह—

हरिः ॐ ।

**नमो वाचे या चोदिता या चानुदिता तस्यै वाचे**
**नमो नमो वाचे नमो वाचस्पतये नम ऋषिभ्यो मन्त्र-**
**कृद्भ्यो मन्त्रपतिभ्यो मा मामृषयो मन्त्रकृतो मन्त्रपतयः ।**
**परादुर्माऽहमृषीन्मन्त्रकृतो मन्त्रपतीन्परादाम्,** इति ।

अनुष्ठेयस्य कर्मणो मन्त्राधीनत्वान्मन्त्राणां च वाग्देवताशरीरस्वरूपत्वात्तस्यै देवतायै प्रथमं नमस्कारः क्रियते । वाक्च द्विविधा, काचित्पूर्वमुदिता व्यवहृता काचिदनुदिता व्यवहरिष्यमाणा । तयोर्मध्ये या च वागुदिता तस्या अपि नमोऽस्तु । या पूर्वमनुदिता तस्यै वाचेऽपि नमोऽस्तु । विभज्य नमस्कृत्य पुनः समुदायात्मना नमस्क्रियते । वाचे भागद्वयेऽप्यनुगतायै वाग्देवतायै नमोऽस्तु । सेयं वाग्देवता येन स्वपतिरूपेण पाल्यते तस्मै वाचस्पतये नमोऽस्तु । यथा देवतानमस्कारस्तद्वदृषि-

१ ख. ग. बोधायन । २ ग. अथामा॰ । ३ ग. ॰न वो हविर्ज्येष्ठान॰ । ४ ग. प्रवणाश्रि॰ । ५ ग. ॰स्काराः क्रियन्ते । वा॰ । ६ क. गता॰ ।

भ्योऽपि नमस्कारोऽस्तु । कीदृशेभ्यः—मन्त्रकृद्भ्यः, मन्त्रं कुर्वन्तीति मन्त्रकृतः यद्यप्यपौरुषेये वेदे कर्तारो न सन्ति तथाऽपि कल्पादावीश्वरानुग्रहेण मन्त्राणां लब्धारो मन्त्रकृत इत्युच्यन्ते । तल्लाभश्च स्मर्यते—

"युगान्तेऽन्तर्हितान्वेदान्सेतिहासान्महर्षयः ।
लेभिरे तपसा पूर्वमनुज्ञाताः स्वयंभुवा" इति ।

त एव महर्षयः संप्रदायप्रवृत्त्या मन्त्राणां पालनान्मन्त्रपतय इत्युच्यन्ते । तथाविधा महर्षयो मां यजमानं मा परादुः परादानमवज्ञां मा कुर्वन्तु, किंत्वनुगृह्णन्तु । अहमपि तान्महर्षीन्मा परादामवज्ञां न करोमि, किंत्वादरेण भजामि ।

द्वितीयभागेन नमस्कारप्रयोजनं दर्शयति—

वैश्वदेवीं वाचमुद्यास५ शिवामदस्तां जुष्टां देवेभ्यः, इति ।

अहं वाचमुद्यासं *तत्त्वरूपया वाचा वदिता भूयासम् । कीदृशीं वाचम् वैश्वदेवीं सर्वदेवविषयाम् । शिवां स्तुतिरूपेण देवेभ्यः सुखप्रदाम् । अदस्तामनुपक्षीणां संपूर्णाम्, देवेभ्यो जुष्टां देवानां प्रियाम् ।

तृतीयभागे देवतानुग्रहप्रार्थनारूपामृचं दर्शयति—

शर्म मे द्यौः शर्म पृथिवी शर्म विश्वमिदं जगत् ।
शर्म चन्द्रश्च सूर्यश्च शर्म ब्रह्मप्रजापती, इति ।

जौर्लो(द्यौर्द्योलो)कात्मको देवो मे मम शर्म सुखरूपो भवतु । अनुष्ठेये कर्मणि विघ्नपरिहारेणानुगृह्णात्वित्यर्थः । एवं पृथिव्यादिषु योज्यम् । ब्रह्म जगत्कारणं वस्तु प्रजापतिश्चतुर्मुखः ।

यदुक्तं पूर्वत्र वैश्वदेवीं वाचमुद्यासमिति तस्या वाचो विषयभूतानर्थानस्य चतुर्थभागेन दर्शयति—

भूतं वदिष्ये भुवनं वदिष्ये तेजो वदिष्ये यशो वदिष्ये
तपो वदिष्ये ब्रह्म वदिष्ये सत्यं वदिष्ये, इति ।

भूतमाकाशादिपञ्चमहाभूतरूपम् । भुवनं पृथिव्यादिलोकस्वरूपम् । तेजः शरीरकान्तिः । यशः कीर्तिः । तपो व्रतादिनियमविशेषः । ब्रह्म स्वाध्यायः । सत्यं यथार्थकथनम् । एतत्सर्वं वदिष्ये ममानुकूलं भवत्वित्येतत्प्रार्थयिष्ये ।

* मन्त्ररूपाया वाच इति पाठ इति ग. पुस्तकटिप्पणी ।

१ ग. °रूपाया वाचो व° । २ ग °नर्थास्तस्य । ३ ग. °गे द° ।

यथोक्तमन्त्राभिवदनसिद्ध्यर्थं तदाधारभूतं कर्म पञ्चमभागेन प्रार्थयते—

तस्मा अहमिदमुपस्तरणमुपस्तृण उप-
स्तरणं मे प्रजायै पशूनां भूयादुपस्तरण-
महं प्रजायै पशूनां भूयासम्, इति ।

तस्मै पूर्वोक्तभूतादिवदनसिद्ध्यर्थमहमिदं प्रवर्ग्याख्यं कर्मोपस्तरणं तदाधारभूतमुपस्तृणे संपादयामि । मे मदीयानां प्रजानां पशूनां चोपस्तरणमाधारभूतं वस्तु भूयात् । अन्याधारासंभवेऽप्यहमेव प्रजानां पशूनां चोपस्तरणमाधारो भूयासम् ।

यथोक्तकर्मसिद्ध्यर्थं विघ्नरूपान्मृत्योः परिपालनं षष्ठभागेन प्रार्थ्यते—

प्राणापानौ मृत्योर्मा पातं प्राणा-
पानौ मा मा हासिष्टम्, इति ।

हे प्राणापानावुभौ वायू मृत्योः सकाशान्मां पालयतम् । तस्मिन्पालनेऽयमुपायः । हे प्राणापानौ मां यजमानं मा हासिष्टं मा परित्यजतम् ।

अपमृत्युपरिहारे सति प्रयोजनं सप्तमभागेन दर्शयति—

मधु मनिष्ये मधु जनिष्ये मधु वक्ष्यामि मधु वदिष्यामि
मधुमतीं देवेभ्यो वाचमुद्यास शुश्रूषेण्यां मनुष्येभ्यस्तं
मा देवा अवन्तु शोभायै पितरोऽनुमदन्तु, इति ।

अपमृत्युपरिहारेण लब्धायुरहं मधु मधुरं समीचीनफलसाधनं प्रवर्ग्याख्यं कर्म मनिष्ये मनसि संकल्पयिष्ये । संकल्पादूर्ध्वं मधु तन्मधुरं कर्म जनिष्ये प्रादुर्भावयिष्ये, अनुष्ठातुं प्रारप्स्ये । प्रारम्भादूर्ध्वं तन्मधु मधुरं कर्म वक्ष्यामि, वहनं करिष्यामि, समाप्तिपर्यन्तं निर्वहिष्यामि । तत्सिद्ध्यर्थं मधु मधुरं मन्त्रजातं वदिष्यामि कथयिष्यामि । न केवलं मन्त्रपाठं किंतु वाचमप्युद्देशत्यागरूपामुद्यासं वाचो वदिता भूयासम् । कीदृशीं वाचम् । देवेभ्यो मधुमतीं देवानामतिप्रियाम्, मनुष्येभ्यः शुश्रूषेण्यां मनुष्योपलक्षितानां पितॄणां श्रोतुमत्यन्तमधुराम् । तमेतादृशं मां यजमानं शोभायै शोभनफलप्राप्त्यर्थं देवाः सर्वेऽवन्तु रक्षन्तु । पितरोऽप्यनुमदन्तु, अनुजानन्तु ॥

---

१ ग. °थोक्तं म° । २ क. ख. °भिवाद° । ३ ग. महदा° । ४ ग. °थ मु° । ५ क. मधुरं ।

अथाष्टमभागेन स्वाभीष्टसिद्धिहेतुं परमात्मानं प्रणवेनानुस्मृत्य विघ्नत्रयपरिहारार्थं त्रिः शान्तिं पठति—

ॐ शान्तिः शान्तिः शान्तिः ॥

* इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके चतुर्थप्रपाठके प्रथमोऽनुवाकः ॥ १ ॥

आध्यात्मिकानां विघ्नानां ज्वरादिरूपाणां शान्तिरस्तु । आधिभौतिकानां रोगोपद्रवादीनां शान्तिरस्तु । आधिदैविकानां यक्षराक्षसोपद्रवादीनां शान्तिरस्तु ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्ये चतुर्थप्रपाठके प्रथमोऽनुवाकः ॥ १ ॥

---

अथ चतुर्थे द्वितीयोऽनुवाकः ।

---

प्रथमानुवाके शान्त्यर्थं मन्त्रमुक्त्वा द्वितीयानुवाके महावीरनिर्माणार्था मन्त्रा उच्यन्ते। कल्पः—"प्रवर्ग्यं५ संभरिष्यन्नमावास्यायां पौर्णमास्यामापूर्यमाणपक्षस्य वा पुण्ये नक्षत्रे तूष्णीं काण्टकीं समिधमाधाय युञ्जते मन इति चतुर्गृहीतं जुहोत्यथ यदि दीक्षितः काण्टकीमेवैतया समिधमादध्याद्यजुरेव वदेदित्येके" इति । पाठस्तु—

युञ्जते मनं उत युञ्जते धियः । विप्रा विप्रस्य
बृहतो विपश्चितः । वि होत्रा दधे वयुनाविदेक
इत् । मही देवस्य सवितुः परिष्टुतिः, इति ।

विप्रस्य ब्राह्मणस्य यजमानस्य संबन्धिनो **विप्रा** ऋत्विजो **मनो युञ्जते**, प्रथमं स्वकीयं मनो विषयेभ्यो निवर्त्य समाहितं कुर्वन्ति । **उतापि च धियः** प्रवर्ग्यविषयाणि ज्ञानानि **युञ्जते** संपादयन्ति । कीदृशस्य विप्रस्य—**बृहतः** प्रभूताग्निचयनोद्योगे[१]न प्रवृद्धप्रवर्ग्योद्योगेनाभिवृद्धस्य । **विपश्चितो** विदुषः प्रयोगाभिज्ञस्य । कीदृशा विप्राः । **होत्रा** होमशीलाः, कर्मण्यालस्यरहिता इत्यर्थः । **एक इदेक** एव सविता **विदधे** सर्वमिदं निर्मितवान् । कीदृशः— **वयुनावित्**, ऋत्विग्यजमानाभिप्रायाभिज्ञः[३] । कथमेक एव सर्वमिदं कृतवानिति न विस्मेतव्यम्[२] । त (य) तः **सवितुर्देवस्य परिष्टुतिर्मही** परितः सर्वेषु[४] देवेषु श्रूयमाणा स्तुतिर्महती ।

---

* घ. पुस्तकेऽत्रानुवाकसमाप्तिर्नास्ति । किंचाग्रे द्वितीयानुवाकसमाप्तिस्थले प्रथमानुवाकसमाप्तिर्वर्तते । एवं तृतीयाद्यनुवाकसमाप्तिस्थले द्वितीयाद्यनुवाकसमाप्तिः कृताऽस्ति

---

१ ग. °न प्रव° । २ ग. °नातिवृ° । ३ क. ख °भिज्ञः । ४ ग. वेदेषु ।

अथ ब्राह्मणप्रपाठकस्य द्वितीयानुवाके सोऽयं मन्त्रो विनियुज्यते । तस्योपोद्घातत्वेन प्रथमानुवाके प्रवर्ग्यनिष्पत्तिर्निरूप्यते । तत्राऽऽदौ स्तुत्यर्थमुपाख्यानमाह—

देवा वै सत्रमासत । ऋद्धिपरिमितं यशस्कामाः । तेऽब्रुवन् । यन्नः प्रथमं यश ऋच्छात् । सर्वेषां नस्तत्सहासदिति । तेषां कुरुक्षेत्रं वेदिरासीत् । तस्यै खाण्डवो दक्षिणार्ध आसीत् । तूर्घ्नमुत्तरार्धः । परीणज्जघनार्धः । मरव उत्करः ( १ ) । तेषां मखं वैष्णवं यश आर्च्छत्, इति ।

( प्र० ५ । अ० १ । * वि० १ )

पुरा कदाचिद्देवा यशस्कामाः सन्त ऋद्धिपरिमितं साधनद्रव्यसमृद्ध्या परितो निर्मितं प्रौढं सत्रमनुष्ठितवन्तः । अनुष्ठातुं प्रवर्तमानास्ते देवाः परस्परं समयरूपमिदं वाक्यमब्रुवन् । प्रथमं यज्ञफलस्योपक्रमे यद्यशः कीर्तिरूपं नोऽस्मानृच्छात्प्राप्नुयात्तद्यशो नोऽस्माकं सर्वेषां सहासत्साधारणमेवास्तु, न त्वेकस्यैव साधारणमिति । एवं परस्परं भाषां कृत्वा प्रवृत्तानां तेषां देवानां यत्कुरुक्षेत्रं पुराणप्रसिद्धं सैव वेदिरासीत् । तस्यै कुरुक्षेत्ररूपायास्तस्या वेदेः खाण्डवतूर्घ्नपरीणच्छब्दवाच्याः पुण्यदेशविशेषा दक्षिणादिदिग्भागा अभवन् । मरवो जलरहिता भूप्रदेशा उत्कररूपा अभवन् । वेदेरुत्तरभागे पांशुतृणादयो यत्र प्रक्षिप्यन्ते सोऽयमुत्करः । तस्यां वेद्यामुपविष्टानां तेषां देवानां मध्ये वैष्णवं मखं विष्णुस्वामिकं सत्रं यशः प्राप्नोत् । तस्मिन्सत्रे विष्णुशब्दवाच्यो यज्ञाभिमानी देवो गृहपतित्वेन दीक्षितः, अतो विष्णुः सत्रं कृतवानित्येवं विष्णुनाम्ना यश आसीत् ।

तस्मिन्सत्रे विष्णुनामकस्य पुरुषस्येतरदेवैः सह यशोनिमित्तं कलहं दर्शयति—

तन्न्यकामयत । तेनापाक्रामत् । तं देवा अन्वायन् । यशोऽवरुरुत्समानाः । तस्यान्वागतस्य । सव्याद्धनुरजायत । दक्षिणादिषवः । तस्मादिषुधन्वं पुण्यजन्म । यज्ञजन्मा हि ( २ ) । तमेकःº सन्तम् । बहवो नाभ्यधृष्णुवन् । तस्मादेकमिषुधन्विनम् । बहवोऽनिषुधन्वा नाभिधृष्णुवन्ति, इति ।

( प्र० ५ । अ० १ । वि० २ )

विष्णुः सत्रं कृतवानित्येतादृशं यद्यशस्तस्मिन्सत्र आसीत्, तद्यशो ममैवास्तु नान्येषामित्येवं विष्णुर्नितरामकामयत । कामयित्वा च तेन यशसा सहेतरदेवसकाशात्स्वयमपाक्रामत् । तदानीमन्ये देवास्तद्यशोऽवरोद्धुमिच्छन्तस्तं विष्णुमन्वगच्छन् । तैर्देवैरन्वागतस्य विष्णोः सव्यहस्तादेकं धनुरुत्पन्नम् । दक्षिणहस्ताद्बहवो बाणा उत्पन्नाः । विष्णोः संकल्पमात्रेण तदुत्पत्तिः । यस्मात्कारणाद्यज्ञजन्मा यज्ञा-

* वि० इति चिह्नेन भाष्यकृत्कृतानुवाकविभागो ज्ञातव्यः ।

१ क. ख. °त्सन्तं ।

जन्मोत्पत्तिर्यस्येषुधन्वसमूहस्य सोऽयं यज्ञजन्मा । यज्ञो वै विष्णुरिति श्रुतेर्यज्ञस्यैव विष्णुरूपत्वाद्विष्णोरुत्पन्नं यज्ञादेवोत्पन्नं भवति । तस्माद्यज्ञजन्मत्वादिषुधन्वस्वरूपं पुण्यजन्मेत्युच्यते यज्ञस्य पुण्यरूपत्वात् । * वामहस्ते धनुर्दक्षिणहस्ते बाणान्धृत्वाऽवस्थितं तं यज्ञपुरुषमेकमेव सन्तमितर इषुधन्वरहिता देवा बहवः सन्तोऽपि नाभ्यधृष्णुवन्, अभिभवितुं नाशक्नुवन् । यस्मादेवमत्र तस्माल्लोकेऽपीषुभिर्धनुषा चोपेतमेकं पुरुषं तद्रहिता बहवः पुरुषा अभिभवितुं न शक्नुवन्ति ।

अथ यज्ञपुरुषस्य गर्वप्रसङ्गेन दीक्षितानियमं विधत्ते—

> सोऽस्मयत । एकं मा सन्तं बहवो नाभ्यधर्षिषुरिति । तस्य सिष्मियाणस्य तेजोऽपाक्रामत् । तद्देवा ओषधीषु न्यमृजुः । ते श्यामाका अभवन् । स्मयाका वै नामैते ( ३ ) । तत्स्मयाकानाꣳ स्मयाकत्वम् । तस्माद्दीक्षितेनापिगृह्य स्मेतव्यम् । तेजसो धृत्यै, इति ।
>
> ( प्र० । ५ । अ० १ । वि० ३ )

स धन्वी यज्ञपुरुषोऽस्मयत स्मयं[२] हास्यं कृतवान् । हास्याभिप्रायश्च तेनैवोच्यते—अहमेक एवैते तु देवाः शतसहस्रसंख्याकास्तथाऽपि मामभिभवितुं न शक्ताः, इत्येवं सिष्मियाणस्य गर्वेण स्मयं कृतवतस्तस्य यज्ञपुरुषस्य सकाशात्तदीयं तेजोऽपाक्रामत्, गर्वेण प्रयत्ने शिथिले सति सामर्थ्यमपगतम् । पुनरपि कथंचित्तत्स्वी करिष्यतीति मत्वा ते देवास्तत्तेजोऽन्यत्र नीत्वा तेन यथा न ज्ञायते तथा गूढं कर्तुं कासुचिदोषधीषु निमृष्टवन्तः । ते चौषधिविशेषा यज्ञसंबन्धिना तेजसा युक्ताः [ श्यामाका अभवन् । ते च ] श्यामकाभिधा धान्यविशेषाः स्मयाका इत्येतादृशं नामार्हन्ति । यस्मादेतस्य नाम्नो योग्यास्तस्मात्स्मयाकानां स्मयादुत्पन्नानां धान्यानां स्मयाकत्वम् । स्मयाकनामाभिज्ञव्यवहारे प्रसिद्धम् । यस्मादत्र स्मयं कुर्वतो यज्ञपुरुषात्तेजोऽपक्रान्तं तस्मात्कारणात्तेजसः स्वस्मिन्नेवावधारणार्थं[६] मुखमपिधाय दीक्षितेन स्मेतव्यम् । यद्यपि दीक्षाप्रकरणे कृष्णविषाणया कण्डूयतेऽपिगृह्य स्मयत इति विधिरस्ति तथाऽपि प्रसङ्गादत्र स एवानूद्यत इत्यवगन्तव्यम् ।

अथ प्रवर्ग्यधर्ममहावीरसम्राट्शब्दानां निर्वचनानि प्रस्तोष्यमाणहविष्प्रशंसार्थं दर्शयति—

> स धनुः प्रतिष्कभ्यातिष्ठत् । ता उपदीका अब्रुवन्वरं वृणामहै । अथ व इमꣳ रन्धयाम । यत्र क्व च खनाम । तदपोऽभितृणदामेति । तस्मा-

* अत्र सकलादर्शपुस्तकेषु वामहस्ते दधद्धनुरित्येव पाठः ।

१ क. ख. °तरे दे° । २ क. ख. °यं कृ° । ३ क. °याक° । ४ ख. नां स्म° । ५ ख. °रेण प्र° । ६ क. ख. °स्मिन्नव° ।

दुपदीका यत्र क्व च खनन्ति। तदपोऽभितृन्दन्ति (४)।
वारे वृतꣳ ह्यासाम्। तस्य ज्यामप्यादन्। तस्य धनुर्विप्रवमाणꣳ
शिर उदवर्तयत्। तद्द्यावापृथिवी अनुप्रावर्तत। यत्प्रावर्तत।
तत्प्रवर्ग्यस्य प्रवर्ग्यत्वम्। यद्घ्राꣳ३ इत्यपतत्। तद्घर्मस्य
घर्मत्वम्। महतो वीर्यमपप्तदिति। तन्महावीरस्य महावीरत्वम्
(५)। यदस्याः समभरन्। तत्सम्राज्ञः सम्राट्त्वम्, इति।
(प्र० ५। अ० १। वि० ४.)

स यज्ञपुरुषो युयुत्सून्देवानितस्ततः प्रतीक्षमाणो धनुः प्रतिष्कभ्य स्वकीयस्य
य ऊर्ध्वकोटिं चिबुकस्याधस्तात्कण्ठसमीपे दृढमवष्टभ्य तथैव स्थितवान्। तदानीमे-
य प्रतीकारमन्विष्यतो देवान्प्रति ताः प्रसिद्धाः उपदीकाः पिपीलिकासमानाः
जन्तवो वल्मीकस्य निर्मातार इदमब्रुवन्। हे देवाः प्रथमं तावद्वयमिममेकं वरं
र्येयामहे। अथानन्तरं वो युष्मदर्थमिमं यज्ञपुरुषं रन्धयामः साधयामः। कोऽसौ
इति सोऽभिधीयते—भूमौ यत्र क्वापि वयं मुखेन खनाम तत्रापोऽभिप्राप्य तृण-
। द्रवी करवामेति। तस्मात्कारणादुपदीका वल्मीकनिष्पादका जीवा यत्र क्वापि
नन्ति तत्क्षेत्रमपोऽभिप्राप्य तृन्दन्ति द्रवी कुर्वन्ति। हि यस्मात्कारणादासामुप-
कानां तद्द्रवीकरणसामर्थ्यं वारे वृतं वरेण संपादितं तस्मात्तद्युक्तम्। ततो लब्ध-
। उपदीकाः शनैर्भूमौ तत्समीपे समागत्य तस्य धनुषोऽधः क्वापि लग्नां ज्यामपि[3]
चाऽऽदन्भक्षितवत्यः। ततस्तद्धनुर्विप्रवमाणं विस्तारेणोर्ध्वं प्रवर्तमानं धनुस्तस्य
पुरुषस्य शिर उदवर्तयत्, छित्त्वोर्ध्वं प्रावर्तयत्। तच्च शिर ऊर्ध्वं द्युलोकपर्यन्तं
ग ततो भारेण भूमावधः पतितं, तस्मादिदं शिरो द्यावापृथिवी उभे अप्यनुक्रमेण
र्तत। तस्मादनयैव व्युत्पत्त्या तस्य यज्ञशिरसः प्रवर्ग्यनाम संपन्नम्। भूमौ पतन-
यामुत्पन्नस्य ध्वनेरनुकरणे यो 'घ्राँ' इति शब्दस्तथाविधशब्दोपेतत्वादस्य शिरसो
नाम संपन्नम्। महतो यज्ञपुरुषस्य सकाशाद्वीर्यमपप्तत्सारभूतं शिरः पतितं
ऽनयैव व्युत्पत्त्या महावीरनाम संपन्नम्। यद्यस्मात्कारणादस्याः पृथिव्याः
ाशात्समभरन्देवास्तच्छिरः समादाय प्रोषितवन्तस्तस्मात्सम्यग्राजमानत्वात्सम्राडिति
। संपन्नम्।

एवं यज्ञशिरसो नामचतुष्टयनिर्वचनमुक्त्वाऽवशिष्टस्य यज्ञशरीरस्य फलं[6] प्रत्यप्रयो-
(क)त्वकथनेन तच्छिरः प्रशंसति—

तꣳ स्तृतं देवतास्त्रेधा व्यगृह्णत। अग्निः प्रातःसवनम्। इन्द्रो[7] माध्यं-
दिनꣳ सवनम्। विश्वे देवास्तृतीयसवनम्। तेनापशीर्ष्णा यज्ञेन

१ ग. °वष्टभ्य त। २ क. ख. 'षो ज्या°। ३ क. ख. °पि चाऽऽद°। ४ क. तच्छिर°।
तच्चापि शि°। ५ क. ग. °रणे यो। ६ ग. फलप्रयो°। ७ क. °न्द्रो मध्यं°।

यजमानाः नाऽऽशिषोऽवारुन्धत । न सुवर्गं लोकमभ्यजयन्, इति ।
(प्र० ५ । अ० १ । वि० ५)

तं स्तुतं शिरोराहित्येन हिंसितं तं यज्ञपुरुषदेहमग्न्यादयो देवास्त्रेधा गृहीतवन्तः तत्राग्निः प्रातःसवनं जग्राह । इन्द्रस्तु माध्यंदिनं सवनं गृहीतवान् । विश्वे देवास्तु तृतीयसवनं जगृहुः । अपशीर्ष्णा प्रवर्ग्याख्यशिरोरहितेन पूर्वोक्तसवनत्रययुक्तेन तेन यज्ञेन यजमाना अग्न्यादयो देवा आशिषः स्वापेक्षितानि कर्मफलानि नावारुन्धत न प्राप्तवन्तः स्वर्गलोकमपि नाभ्यजयन् ।

अथ प्रवर्ग्यसहितस्य यज्ञस्य फलहेतुत्वं दर्शयति—

ते देवा अश्विनावब्रुवन् (६) । भिषजौ वै स्थः । इदं यज्ञस्य शिरः प्रतिधत्तमिति । तावब्रूतां वरं वृणावहै । ग्रह एव नावत्रापि गृह्यतामिति । ताभ्यामेतमाश्विनमगृह्णन् । तावेतद्यज्ञस्य शिरः प्रत्यधत्ताम् । यत्प्रवर्ग्यः । तेन सशीर्ष्णा यज्ञेन यजमानाः । अवाऽऽशिषोऽरुन्धत । अभि सुवर्गं लोकमजयन्, इति ।
(प्र० ५ । अ०१ । वि० ६)

प्रवर्ग्यरहितेन यज्ञेन फलमलभमानास्ते देवा अश्विनौ प्रत्येतदब्रुवन् । हेऽश्विनौ युवामस्माकं मध्ये चिकित्सकौ स्थः, तस्मादिदं यज्ञस्य शिरः प्रतिधत्तं पुनरपि यज्ञशरीरे । प्रवर्त( त्यर्प )यतमिति । तावश्विनौ प्रत्यर्पणार्थं वरमुत्कोचरूपं लाभविशेषं वृणावहै, इत्युक्त्वा कोऽसौ वर इत्याशङ्क्य तं वरमुक्तवन्तौ । अत्रास्मिन्सोमयागे नावपि चिकित्सकयोरावयोरपि युष्मत्साम्येन ग्रह एव गृह्यताम्, न तु यत्किंचित्तुच्छं लेपादिकमिति[3] । ततस्ताभ्यामश्विभ्यामेतमाश्विनं ग्रहमगृह्णन्, तौ चाश्विचिकित्सया यज्ञस्य शिरः प्रत्यर्पयता(धत्ता)म् । प्रतिधानं नाम शरीरे पुनः संधानम् । प्रवर्ग्य इ(र्ग्यै)त्येतन्नामकं यत्कर्म तदेव यज्ञशरीरे प्रतिहितं शिरः, तेन तादृशेन [स]शीर्ष्णा प्रवर्ग्याख्यशिरोयुक्तेन यज्ञेन यजमाना देवाः स्वापेक्षितान्यन्यफलानि स्वर्गं च प्राप्नुवन् ।

देवा वै सत्रमासतेत्यारभ्यैतावता महता प्रबन्धेन प्रवर्ग्याख्यं कर्म +प्रसाध्य तदेव कर्म विधत्ते—

यत्प्रवर्ग्यं प्रवृणक्ति । यज्ञस्यैव तच्छिरः प्रतिदधाति । तेन सशीर्ष्णा यज्ञेन यजमानः अवाऽऽशिषो रुन्धे । अभि सुवर्गं लोकं जयति ।

---

+ प्रशंस्येति तै० पाठ इति ग. पुस्तकटिप्पणी । स्म° । ग.

---

१ क. °स्तु मध्यं° । २ ग. °वास्त्री° । ३ ग. लेशादि°

तस्मादेष आश्विनप्रवया इव । यत्प्रवर्ग्यः (७), इति ।

(प्र० ५ । अ० १ । वि० ७)

उत्करो ह्येते तृन्दन्ति महावीरत्वमब्रुवन्नजयन्सप्त च ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके पञ्चमप्रपाठके प्रथमोऽनुवाकः ॥ १ ॥

---

यदि प्रवर्ग्याख्यं कर्मानुतिष्ठेत् । तर्हि यज्ञस्य शिर एव प्रतिसमाहितवान्भवति । सशीर्ष्णा शिरःसहितेन यज्ञेन यजमानः पुमानाशासनीयान्यन्यफलानि प्राप्नोति चाभिजयति । यस्मादश्विभ्यां समाधानं कृतं तस्मात्कारणाद्यः प्रवर्ग्याख्यः कर्म- णोऽस्ति स एष आश्विनप्रवया इति । आश्विनमन्त्राः प्रवयसः प्रवृद्धा अस्मिन्प्रवर्ग्ये समाश्विनप्रवयाः । इवशब्द एवकारार्थः ।

एतदेव ब्राह्मणरूपे प्रपाठके प्रथमानुवाके प्रवर्ग्याख्यं कर्म विधाय द्वितीयानुवा- युञ्जते मन इत्येतन्मन्त्रसाध्यं होमं विधत्ते—

सावित्रं जुहोति प्रसूत्यै, इति ।

(प्र० ५ । अ० २ वि० १)

मन्त्रे देवस्य सवितुः परिष्टुतिरित्युक्तत्वादयं मन्त्रः सावित्रः, तद्धोमः प्रसूत्यै प्रस- संपद्यते ।

त्र द्रव्यं विधत्ते—

चतुर्गृहीतेन जुहोति । चतुष्पादः पशवः । पशूने- वावरुन्धे । चतस्रो दिशः । दिक्ष्वेव प्रतितिष्ठति, इति ।

(प्र० ५ । अ० २ । वि० २)

वेण जुह्वां चतुर्वारं गृहीतं यदाज्यं तेन जुहुयात् । चतुःसंख्यासाम्यात्पशुप्राप्ति- प्रतिष्ठा च ।

नरपि चतुःसंख्यां प्रकारान्तरेण प्रशंसति—

छन्दाꣳसि देवेभ्योऽपाक्रामन् । न वो भागानि हव्यं वक्ष्याम इति । तेभ्य एतच्चतुर्गृहीतमधारयन् । पुरोनुवाक्यायै याज्यायै (१) । देवतायै वषट्काराय । यच्चतुर्गृहीतं जुहोति । छन्दाꣳ- स्येव तत्प्रीणाति । तान्यस्य प्रीतानि देवेभ्यो हव्यं वहन्ति, इति ।

(प्र० ५ । अ० २ । वि० ३)

नाविधच्छन्दोयुक्तपुरोनुवाक्याद्यभिमानिनो देवा हविर्भाग्भ्यो देवेभ्योऽपरक्ताः [illegible]गच्छन् । किं ब्रुवन्तो गता इति तदुच्यते—हे देवा भागरहितानि वयं [illegible]मदीयानि हवींषि न वक्ष्यामो हविर्वहनं न करिष्याम इति ब्रुवन्तः । [illegible] होमकाले यच्चतुर्ग्रहणं तच्छन्दसां प्रीतिकरं भवतीति तेषां

भागमकल्पयन्। तत्र प्रथमग्रहणं पुरोनुवाक्याख्याया गायत्रीदेवतायास्तुष्टिकरम्। द्वितीयग्रहणं याज्याख्यायास्त्रिष्टुब्देवतायास्तुष्टिकरम्। तृतीयग्रहणं देवताख्याया जगतीदेवतायास्तुष्टिकरम्। चतुर्थग्रहणं वषट्काराख्याया अनुष्टुब्देवतायास्तुष्टिकरम्। अतश्चतुर्गृहीतेन होमे सति छन्दोदेवताः प्रीणन्ति। ताश्च प्रीताः सत्यो हव्यं वहन्ति।

तत्र द्वौ पक्षौ। सोमयागसंकल्पादिकं कृत्वा दीक्षणीयेष्टेः प्रागेव प्रवर्ग्यसाधनं महावीरादिकं संपादनीयमित्येकः पक्षः। दीक्षायां समाप्तायां प्रवर्ग्यानुष्ठानकाल एव संपादनीयमित्यपरः पक्षः। तत्र प्रथमपक्षे सावित्रहोमो विहितः। द्वितीयपक्षे मीमांसया होमं निवार्य केवलमन्त्रपाठं विधत्ते—

ब्रह्मवादिनो वदन्ति। होतव्यं दीक्षितस्य गृहा३ इ न होतव्या३मिति। हविर्वै दीक्षितः। यज्जुहुयात्। हविष्कृतं यजमानमग्नौ प्रदध्यात्। यन्न जुहुयात्। (१), इति।[5]

(प्र० ५ । अ० २ । वि० ४)

तत्र होमपक्षो न युज्यते। दीक्षितो हविःसंपादकत्वाद्धविरेव। तथा सति यदि हविर्जुहुयात्तदानीं हविःसंपादकं यजमानमेवाग्नौ प्रक्षिपेत्।

अहोमपक्षे तु—

यज्ञपरुरन्तरियात् यजुरेव वदेत्। न हविष्कृतं यजमानमग्नौ प्रदधाति। न यज्ञपरुरन्तरेति, इति।

(प्र० ५ । अ० २ । वि० ५)

यज्ञस्य होमलक्षणमङ्गमन्तरितं भवेत्। ततो दोषद्वयपरिहारायाऽऽहुतिप्रक्षेपं परित्यज्य यजुरेव पठेत्। यद्यपि युञ्जते मन इत्येषर्गेव तथाऽपि यजुर्वेदपठितत्वात् यज्यतेऽनुष्ठान इति व्युत्पत्त्या वा यजुरित्युच्यते। अत्र होमाभावाद्यजमानस्य प्रक्षेपो न भवति। मन्त्रस्य पठितत्वाद्यज्ञाङ्गमपि नान्तरितं भवति।

कल्पः—"देवस्य त्वा सवितुः प्रसव इत्यभ्रिमादत्ते" इति। पाठस्तु—

देवस्य त्वा सवितुः प्रसवे। अश्विनोर्बाहुभ्याम्। पूष्णो हस्ताभ्यामाददे, इति।

हेऽभ्रे प्रेरकस्यान्तर्यामिणो देवस्य प्रेरणे सत्यश्विनोः संबन्धिभ्यां बाहुदण्डाभ्यां पूष्णः संबन्धिभ्यां हस्ताभ्यां च त्वामाददे स्वी करोमि।

---

१ क. ख. °क्याया। २ ग. °म्। दे°। ३ क. ख. °णं ज°। ४ ग. °यागे सं°। ५ ग. °ति। यन्न जुहुयात्पुनस्तत्र। ६ क. °तू। य°। ७ क. ख. इति ऋगेषा त°। ८ ख. °युञ्ज°।

तस्या अभ्रेः खादिरत्वं विधत्ते—

गायत्री छन्दाꣳस्यत्यमन्यत । तस्यै वषट्कारोऽभ्यद्रुत्य शिरोऽच्छिनत् । तस्यै द्वेधा रसः परापतत् । पृथिवीमर्धः प्राविशत् । पशूनर्धः । यः पृथिवीं प्राविशत् ( ३ ) । स खदिरोऽभवत् । यः पशून् । सोऽजाम् । यत्खादिर्यभ्रिर्भवति । छन्दसामेव रसेन यज्ञस्य शिरः संभरति, इति ।

( प्र० ५ । अ० २ । वि० ६ )

गायत्रीदेवता सोमाहरणगर्वेणेतराणि च्छदांसि त्रिष्टुबादीन्यहमतिलङ्घितवती-त्यमन्यत । तदा वषट्काराभिमानी देवः क्रुद्धः सन्नभ्यद्रुत्याऽऽभिमुख्येन प्राप्य तस्या गायत्र्याः शिरोऽच्छिनत् । तस्माच्छिन्नप्रदेशान्निर्गतो रसो द्वेधा भूत्वा पृथिवीं पशूंश्च प्राविशत् । पृथिव्यां प्रविष्टः स भागः खदिरवृक्षोऽभूत् । पशुषु प्रवेष्टुं गतो भागोऽजां प्राविशत् । अतोऽभ्रिः खादिरी कर्तव्या । तथा सति च्छन्दसां संबन्धिना रसेन यज्ञस्य शिरः प्रवर्ग्यरूपं संपादितं भवति । गायत्र्यां हि त्रिष्टुप्संबद्धं जगतीसंबद्धं चाक्षरद्वयमन्तर्भूतमिति कद्रूश्चेत्यत्र प्रतिपादितम् । ततो गायत्रीरसः सर्वच्छन्दसां रसो भवति । महावीराख्यं पात्रं निष्पादयितुं मृत्खननार्थेऽभयतस्तीक्ष्णा व्याममात्री काष्ठकुद्दालरूपाऽभ्रिरित्युच्यते । व्याममात्रत्वादिलक्षणानि पञ्चमकाण्ड उखासंभरणप्रस्तावे दर्शितानि । अत एव सूत्रकारेण तल्लक्षणमतिदिश्यते— साग्निक्या व्याख्यातेति ।

खदिरेण सह विकल्पार्थं पक्षत्रयं विधत्ते—

यदौदुम्बरी । ऊर्ग्वा उदुम्बरः । ऊर्जैव यज्ञस्य शिरः संभरति । यद्वैणवी । तेजो वै वेणुः ( ४ ) । तेजसैव यज्ञस्य शिरः संभरति । यद्वैकङ्कती । भा एवावरुन्धे, इति ।

( प्र० ५ । अ० २ । वि० ७ )

औदुम्बरफलस्योपदंशरूपेण भक्ष्यत्वादूर्ग्रूपत्वम् । 'अग्निर्देवेभ्यो निलायत स वेणुं प्राविशत्' इत्युक्तत्वाद्वेणोस्तेजोरूपत्वम् । 'अग्नेः सृष्टस्य यतः । विकङ्कतं भा आर्च्छत्' इत्युक्तत्वाद्वैकङ्कतत्वेन भा दीप्तिः प्राप्नोति ।

अभ्र्यादाने मन्त्रं विनियुज्य व्याचष्टे—

देवस्य त्वा सवितुः प्रसव इत्यभ्रिमादत्ते प्रसूत्यै । अश्विनोर्बाहुभ्यामित्याह । अश्विनौ हि देवानामध्वर्यू आस्ताम् । पूष्णो हस्ताभ्यामित्याह यत्यै, इति ।

( प्र० ५ । अ० २ । वि० ८ )

अभ्रिरसि नारिरसि । अध्वरकृद्देवेभ्यः ।

---

१ क. ख. खादिरेण । २ क. ख. °यं क्रमेण वि° ।

कल्पः—'अभ्रिरसि नारिरसीत्यभ्रिं मन्त्रयते' इति। अध्वरकृद्देवेभ्य इत्येतावान्मन्त्रशेषः। हे खननहेतो त्वं केनापि न ह्रियसे न भज्यस इत्यभ्रिः, असि। नृणां महावीरार्थिनामुपकार(रि)त्वान्नारिरसि। देवेभ्यो देवार्थेऽध्वरकृद्यागनिष्पादिकाऽसि।

अस्मिन्मन्त्रे पूर्वभागस्य तात्पर्यं दर्शयति—

वज्र इव वा एषा। यदभ्रिः। अभ्रिरसि
नारिरसीत्याह शान्त्यै। (९), इति।
(प्र० ५। अ० २। वि० ९)

तीक्ष्णाग्रत्वाद्वज्रसमानत्वम्। न ह्रियसे नृणामुपकर्त्री चेत्युपलालनादुग्रस्य शान्तिः। अथवाऽरिर्न भवसीति नारिरित्युपलालनम्।

उत्तरभागस्य तात्पर्यं दर्शयति—

अध्वरकृद्देवेभ्य इत्याह। यज्ञो वा अध्वरः।
यज्ञकृद्देवेभ्य इति वावैतदाह, इति।
(प्र० ५। अ० २। वि० १०)

कल्पः—"उत्तिष्ठ ब्रह्मणस्पत इति ब्रह्माणमामन्त्रयत उपोत्तिष्ठति ब्रह्मो[१]भावुत्तरमर्धर्चं[२] जपतः" इति। तस्या ऋचः पाठस्तु—

उत्तिष्ठ ब्रह्मणस्पते (१)। देवयन्तस्त्वेमहे। उपप्र-
यन्तु मरुतः सुदानवः। इन्द्र प्राशूर्भवा सचा, इति।

हे ब्रह्मणस्पते मन्त्रस्य पालक मृत्खननदेशं प्रति गन्तुमस्मात्स्थानादुत्तिष्ठ। देवयन्तो देवानिच्छन्तो वयं त्वां ब्रह्माणमीमहे प्रार्थयामहे। सुदानवः शोभनस्य फलस्य दातारो मरुतो देवा उपप्रयन्तु समीपे प्रकर्षेण गच्छन्तु। हे इन्द्र सचाऽस्माभिः सह प्राशूः प्रकर्षेण शीघ्रगामी भव।

मन्त्रस्य तात्पर्यं दर्शयति—

उत्तिष्ठ ब्रह्मणस्पत इत्याह। ब्रह्मणैव यज्ञस्य शिरोऽच्छैति, इति।
(प्र० ५। अ० २। वि० ११)

ऋत्विजा ब्रह्मा[३]ख्येनै(णै)व सह यज्ञस्य शिरोरूपं प्रवर्ग्यपात्रमच्छ प्राप्तुमेति गच्छति।

कल्पः—"आददते कृष्णाजिनमनुनयन्त्यजां पुँच्छगलाम[४]श्वं वृषाणमिति प्रैतु ब्रह्मणस्पतिरिति प्राञ्चोऽश्वप्रथमा अभिप्रव्रजन्ति यत्र मृदं खनिष्यन्तः स्युः" इति।

पाठस्तु—

प्रैतु ब्रह्मणस्पतिः। प्र देव्येतु सूनृता। अच्छा वीरं

---

१ क. °भा उत्त°। २ क. °मर्धं च जप इ°। ३ ग. क्रियते। ४ ख. पूंगछला°। ग. पुंछ लम°। ५ ग. °मामभि°।

नर्यं पङ्क्तिराधसम् । देवा यज्ञं नयन्तु नः, इति ।

ब्रह्मणस्पतिर्मन्त्रस्य पालक ऋत्विग्ब्रह्मा प्रैतु प्रथमतो गच्छतु । सूनृता यज्ञसंबन्धिनी मन्त्रगतप्रियवाक्यरूपा देवी प्रकर्षेणैतु गच्छतु । किमर्थमिति तदुच्यते—नर्यं नृभ्यो यजमानेभ्यो हितं पङ्क्तिराधसं पाङ्क्तस्य यज्ञस्य साधकं वीरं महावीराख्यं पात्रमच्छ प्राप्तुं देवाः सर्वे नोऽस्मदीयं यज्ञं नयन्तु ।

प्रथमपादे प्रैतुशब्दस्य तात्पर्यं दर्शयति—

प्रैतु ब्रह्मणस्पतिरित्याह । प्रेत्यैव यज्ञस्य शिरोऽच्छैति, इति ।
( प्र० ५ । अ० २ । वि० १२ )

प्रेत्यैव प्रथमतो गत्वैव ।

द्वितीयपादे सूनृताशब्देन प्रियवाक्ययुक्तस्य यज्ञस्य विवक्षां दर्शयति—

प्र देव्येतु सूनृतेत्याह । यज्ञो वै सूनृता, इति ।
( प्र० ५ । अ० २ । वि० १३ ) ।

तृतीयपादे पङ्क्तिराधसशब्देन धानाकरम्भादिपञ्चहविर्युक्तस्य यज्ञस्य विवक्षां दर्शयति—

अच्छा वीरं नर्यं पङ्क्तिराधसमित्याह ( ६ ) । पाङ्क्तो हि यज्ञः, इति ।
( प्र० ५ । अ० २ । वि० १४ )

चतुर्थपादे देवा यज्ञं नयन्तु न इत्यस्य तात्पर्यं दर्शयति—

देवा यज्ञं नयन्तु न इत्याह । देवानेव यज्ञनियः कुरुते, इति ।
( प्र० ५ । अ० २ । वि० १५ )

यज्ञनियो यज्ञस्य नेतॄन्प्रवर्तकान् ।

देवी द्यावापृथिवी अनु मेऽमꣳसाथाम् ।

कल्पः—"उत्तरेण मृत्खननं कृष्णाजिनं प्राचीनग्रीवमुत्तरलोमाऽऽस्तीर्य देवी द्यावापृथिवी इति मृत्खननमभिमन्त्रयते" इति । अनु मेऽमꣳसाथामिति मन्त्रशेषः । हे द्यावापृथिव्यौ मे मदीयं व्यापारमन्वमꣳसाथां युवयोरनुमतं कुरुतम् ।

मन्त्रस्य देवतयोरभ्यनुज्ञायां तात्पर्यं दर्शयति—

देवी द्यावापृथिवी अनु मेऽमꣳसाथामित्याह ।
आभ्यामेवानुमतो यज्ञस्य शिरः संभरति, इति ।
( प्र० ५ । अ० २ । वि० १६ )

ऋध्यासमद्य । मखस्य शिरः ( २ ) ॥

कल्पः—"ऋध्यासमद्येति मृत्खनेऽभ्रिया प्रहृत्य मखस्य शिर इत्युपादाय" इति। अद्यास्मिन्यज्ञ ऋध्यासं कर्मणा समृद्धो भूयासम् । इदं मृद्रूपं मखस्य शिरो यज्ञस्य शिरःस्थानीयं प्रवर्ग्यपात्ररूपम् ।

मन्त्रद्वयं सहैव[3] व्याचष्टे—

ऋध्यासमद्य मखस्य शिर इत्याह । यज्ञो वै मखः ।
ऋध्यासमद्य यज्ञस्य शिर इति वावैतदाह, इति ।
( प्र० ५ । अ० २ । वि० १७ )

**मखाय त्वा । मखस्य त्वा शीर्ष्णे ।**

कल्पः—"मखाय त्वेति हरति मखस्य त्वा शीर्ष्णे इति कृष्णाजिने निवपति[4]" इति। मृत्तिके त्वां **मखाय** यज्ञार्थं हरामीति शेषः । तथा त्वां **मखस्य** यज्ञस्य **शीर्ष्णे** शिरोरूपप्रवर्ग्यार्थं निर्वपामीति शेषः ।

मन्त्रद्वयं सहैव व्याचष्टे—

मखाय त्वा मखस्य त्वा शीर्ष्ण इत्याह । निर्दिश्यैवैनद्धरति (७) इति ।
( प्र० ५ । अ० २ । वि० १८ )

**निर्दिश्यैव** यज्ञार्थमिह हरणनिर्वपणे कथयित्वैवैनन्मृत्स्वरूपं **हरति** निर्वपति चेति द्रष्टव्यम् ।

यदुक्तं **सूत्रकारेण**—"एवं द्वितीयं तृतीयं च हरति तूष्णीं चतुर्थं यावतीं मृदं प्रवर्ग्यपात्रेभ्य आप्तां मन्यते" इति । तदिदं विधत्ते—

त्रिर्हरति । त्रय इमे लोकाः । एभ्य एव लोकेभ्यो
यज्ञस्य शिरः संभरति । तूष्णीं चतुर्थं हरति ।
अपरिमितादेव यज्ञस्य शिरः संभरति, इति ।
( प्र० ५ । अ० २ वि० १९ )

वक्ष्यमाणसंभारेभ्यो मृदः प्राथम्यं विधत्ते—

मृत्खनादग्रे हरति । तस्मान्मृत्खनः करुण्यतमः । इति ।
( प्र० ५ । अ० २ । वि० २० )

ये च वराहविहतादयः संभारास्तेभ्योऽग्रे प्रथममेव, मृदं खात्वा **तस्मान्मृत्खनाद्ग**र्तान्मृदं **हरेत्**। यस्मादयं **मृत्खनः** स्वकीयां वेदनामगणयित्वा यजमानोपकारार्थं मृदं प्रयच्छति। तस्मादयमतिशयेन **करुण्यः** कृपालुः । ततो मृत्खनादेव मृदं हरेत् । न त्वन्यतो यतः कुतश्चिन्मृदानेया ।

---

१ क. ख इन्यग°। २ ग °स्मिन्द्विन ऋ°. ३ ख. ग. °यं द्वा । ४ ग. निर्वप°।

इयत्यग्र आसीः ।

कल्पः—"एवमितरान्संभारानभिमन्त्रणे विकारः, इयत्यग्र आसीरिति वराहविहतम्" इति । येन प्रकारेण मृदो हरणमुक्तं तेनैव प्रकारेणेतरे सर्वे संभाराः संपादनीयाः । अभिमन्त्रणे तु तत्र तत्र मन्त्रविशेषोऽस्ति । 'देवी द्यावापृथिवी' इति पूर्वत्र मृदोऽभिमन्त्रणम् । इह त्वियत्यग्र आसीरिति मन्त्रः । वराहो दंष्ट्रया यं मृद्विशेषं संपादयति तन्मृत्स्वरूपं वराहविहतम् । हे वराहविहतेयत्यग्र एतावति पुरोदेशे त्वमासीः ।

अभिमन्त्रितस्य वराहविहतस्याऽऽहरणे मन्त्रान्दर्शयति—

ऋध्यासमद्य । मखस्य शिरः । मखाय त्वा । मखस्य त्वा शीर्ष्णे, इति ।

एते मन्त्राः पूर्ववद्व्याख्येयाः ।

एतेषां वराहविहतसंभारमन्त्राणां तात्पर्यं दर्शयति—

इयत्यग्र आसीरित्याह । अस्यामेवाच्छम्ब- × ट्कारं यज्ञस्य शिरः संभरति, इति ।

( प्रपा० ५ । अनु० २ । विभा० २१ )

यावद्वराहविहतमस्ति, एतावती सर्वा भूमिर्वराहेणोद्धृतत्वात् । एतच्चाऽऽधानब्राह्मणे—'वराहो रूपं कृत्वा' इत्यादिना विस्पष्टमाम्नातम् । अतो वराहविहतसंभारेणास्यामेव अस्यामपि पृथिव्यामच्छम्बट्कारमल्पोऽप्यंशो व्यर्थो यथा न भवति तथा कृत्वा यज्ञस्य शिरः संपादितं भवति ।

कल्पः—"देवीर्वम्रीरिति वल्मीकवपाम्" इति । अभिमन्त्रयत इति शेषः ।

पाठस्तु—

देवीर्वम्रीरस्य भूतस्य प्रथमजा ऋतावरीः, इति ।

वल्मीकस्य निष्पादिकाः क्षुद्रजन्तुस्वरूपा वम्र्यः । हे वम्र्यो देव्यो यूयमस्य भूतस्य प्राणिजातस्य प्रथमजाः प्रथमत उत्पन्नाः । ऋतावरीर्यज्ञवत्यः संभाररूपेण यज्ञनिष्पादकत्वात्तादृश्यो भवथेति शेषः ।

अनेन मन्त्रेणाभिमन्त्रितायाः वल्मीकवपायाः संभरणमन्त्रानाह—

ऋध्यासमद्य । मखस्य शिरः ( ३ ) मखाय

---

× अच्छं वषट्कारमिति ग. पुस्तके शोधितः पाठः ।

---

१ क. मन्त्रे वि° । २ क. ख. °संभरणेनास्या° । ३ ग. °तान्वल्मी° ।

त्वा । मखस्य त्वा शीर्ष्णे, इति ।

पूर्ववद्व्याख्येयम् ।

वल्मीकवपायाः संभरणं विधत्ते—

ऊर्जं वा एतꣳ रसं पृथिव्या उपदीका उद्दिहन्ति (८) । यद्वल्मीकम् । यद्वल्मीकवपासंभारो भवति । ऊर्जमेव रसं पृथिव्या अवरुन्धे । अथो श्रोत्रमेव । श्रोत्रꣳ ह्येतत्पृथिव्याः । यद्वल्मीकः, इति ।

(प्रपा० ९ । अनु० २ । विभा० २२)

वल्मीकं यद्विद्यते तदेतदुपदीकाः पूर्वोक्ता वम्र्यः, पृथिव्याः सकाशादन्नहेतुमेव रसं मृदमुद्धृत्य निष्पादयन्ति । अतो वल्मीकवपायाः संभरणेन भूमिसारमूर्जमेव प्राप्नोति । अपि च कर्णशष्कुल्याकारसाम्याद्वल्मीको भूमेः श्रोत्रमेव । तस्माद्वल्मीकवपा प्रशस्ता ।

श्रोत्रवेदनं प्रशंसति—

अबधिरो भवति । य एवं वेद, इति ।

(प्रपा० ९ । अनु० २ । विभा० २३)

इन्द्रस्यौजोऽसि ।

कल्पः—"इन्द्रस्यौजोऽसीति पूतीकान्" इति । हे पूतीकसमूहेन्द्रस्यौजो बलमसि अनेन मन्त्रेणाभिमन्त्रितानां पूतीकानां संभरणमन्त्रानाह—

ऋध्यासमद्य । मखस्य शिरः । मखाय त्वा । मखस्य त्वा शीर्ष्णे, इति ।

पूर्ववद्व्याख्येयम् ।

पूतीकसंभरणं विधत्ते—

इन्द्रो वृत्राय वज्रमुदयच्छत् । स यत्र यत्र पराक्रमत (९) । तन्नाध्रियत । स पूतीकस्तम्बे पराक्रमत । सोऽध्रियत । सोऽब्रवीत् । ऊतिं वै मे धा इति । तदूतीकानामूतीकत्वम् । यदूतीका भवन्ति । यज्ञायैवोतिं दधाति, इति ।

(प्रपा० ९ । अनु० २ । विभा० २४)

पुरा कदाचिदिन्द्रो वृत्रवधार्थं वज्रमुद्यम्य प्रेरितवान् । तदानीं स इन्द्रो यत्र यत्र देशे पराक्रमत वज्रप्रक्षेपलक्षणं पराक्रमं कृतवांस्तत्र सर्वत्र नाध्रियत पलायनं

१ क. ख. °कर्ण° । २ ग. अथैनं । ३ ग. पूतिक° ।

स्तेन वज्रेण भृतः प्रहृतो नाऽऽसीत् । ततः स इन्द्रो विचार्य पूतीकस्तम्बसमीपे क्वचिदवस्थितं वृत्रं प्रति पराक्रमत वज्रप्रक्षेपलक्षणं पराक्रमं कृतवान् । तदानीं स : पूतीकस्तम्बेनावरुद्धमार्गः पलायितुमशक्तस्तेन वज्रेणाम्रियत प्रहृतोऽभून् । तदानीं तुष्टः स इन्द्रोऽब्रवीत्पूतीकस्तम्बं प्रत्येवमब्रवीत् । हे पूतीकस्तम्ब म ऊतिं मदीय- क्रमरक्षां धा धृतवानसि इत्यूतिधारकत्वात्तेषां * पूतीकानामूतीकेति नाम संपन्नम् । ां संभरणे सति यज्ञस्य रक्षां ते संपादयन्ति ।

अग्निजा असि प्रजापते रेतः ।

कल्पः— "अजलोमानि कृष्णाजिनलोमानि च संसृज्याग्निजा असि प्रजापते रेतः" । । हे द्विविधलोमसंघ त्वमग्निजा असि । आग्नेयी वा एषा यदजेत्याम्नाया आग्ने- श्रवणात्, अग्निर्देवेभ्यो निलायत कृष्णो रूपं कृत्वेति श्रवणाच्चोभयस्याग्नि- भिप्रेत्य तल्लोम्नामग्निजत्वमुक्तम् । महावीरदार्ढ्यहेतुत्वात्प्राजापत्ये(त्य)सृष्टौ लोम्नां त्वम् ।

अनेनाभिमन्त्रितस्य द्विविधलोमसंघस्य संभरणमन्त्रानाह—

ऋध्यासमद्य । मखस्य शिरः (४) ।
मखाय त्वा । मखस्य त्वा शीर्ष्णे, इति ।

पूर्ववद्व्याख्येम्य ।

प्रजापते रेत इत्यनेन प्रजापतिसृष्टाया गायत्र्या रसोऽजां प्राविशत्, स एव विध- इत्येतद्दर्शयति—

अग्निजा असि प्रजापते रेत इत्याह । य एव रसः
पशून्प्राविशत् ( १० ) । तमेवावरुन्धे, इति ।
( प्रपा० ५ । अनु० २ । विभा० २९ )

पूर्वोक्तानां मृत्तिकावराहविहतवल्मीकवपापूतीकाजकृष्णाजिनलोमरूपाणां संभाराणां संख्यां प्रशंसति—

पञ्चैते संभारा भवन्ति । पाङ्क्तो यज्ञः । यावा-
नेव यज्ञः । तस्य शिरः संभरति, इति ।
( प्रपा० ५ । अनु० २ । विभा० २१ )

धानाकरम्भादिहविष्पञ्चकयोगात्पाङ्क्तो यज्ञो यावानस्ति तस्य सर्वस्य शिरः रगतया पञ्चसंख्यया संपादितं भवति ।

---

* मूलस्थोतीकानामिति पदस्य व्याख्यानमेतदिति भाति ।

---

१ ख. पूितक° । २ ख. पूतिक° । ३ ख. °त्पूतिक° । ४ ग. °कानां पूतीक इति ।

**एतेषां** संभारद्रव्याणां कृष्णाजिने संभरणं विधत्ते—

यद्ग्राम्याणां पशूनां चर्मणा संभरेत् । ग्राम्यान्पशूञ्शुचाऽर्पयेत् । कृष्णाजिनेन संभरति । आरण्यानेव पशूञ्शुचाऽर्पयति । तस्मात्समावत्पशूनां प्रजायमानानाम् (११) । आरण्याः पशवः कनीयाꣳसः । शुचा ह्यताः, इति ।

(प्रपा० ५ । अनु० २ । विभा० २७।)

**ग्राम्याणां** गवादिपशूनां **चर्मणा** संभरणे सति तान्पशूञ्शुचा शोकेन रोगादिजनितेन योजयेत् । तन्मा भूदिति **कृष्णाजिनेनैव** सर्वं संभरणीयम्, कृष्णमृगस्यारण्यजत्वादारण्यानेव पशून्महावीरजनितेन संतापेन योजयति । यस्मादारण्येनैव संभरणादारण्याः पशवः शुचा योजिताः, **तस्मात्समावत्प्रजायमानानां** साम्येनोत्पद्यमानानामपि द्विविधानां **पशूनां** मध्य **आरण्या** एव **पशवः** कनिष्ठाः न हि जना गवाश्वादिषु यावन्तमादरं तावन्तं कृष्णाजिनमृगेषु कुर्वन्ति ।

कृष्णाजिनस्य सलोमके भागे संभरणं विधत्ते—

लोमतः संभरति । अतो ह्यस्य मेध्यम्, इति ।

(प्रपा० ५ । अनु० २ । विभा० २८ ।)

**लोमतो** लोमवति प्रदेशे संभरेत् । **अतो** लोम[व]तः प्रदेशादस्य कृष्णाजिनमेध्यं यागयोग्यः संभारः संपद्यते ।

**कल्पः**—"आयुर्धेहि प्राणं धेहीत्यश्वेनावघ्राप्य" इति । पाठस्तु—

आयुर्धेहि प्राणं धेहि । अपानं धेहि व्यानं धेहि । चक्षुर्धेहि श्रोत्रं धेहि । मनो धेहि वाचं धेहि । आत्मानं धेहि प्रतिष्ठां धेहि । मां धेहि मयि धेहि, इति ।

हे, अश्व मृदमाघ्राय यजमानस्याऽऽयुरादीन्संपादय । **मां** यजमानं **धेहि** पोषय अपेक्षितं धनादिकं **मयि** यजमाने **धेहि** स्थापय ।

यदुक्तं **सूत्रकारेण**—"बहव आर्याः परिगृह्य हरन्त्युत्तरेण विहारमुद्धते च सिकतोपोप्ते परिश्रिते निदधति" इति । तदेतदार्यैर्नयनमार्याणां च बहुत्वं स्थापनविशेषं च क्रमेण विधत्ते—

परिगृह्याऽऽयन्ति । रक्षसामपहत्यै । बहवो हरन्ति । अपचिति-

१ क समेध्यं ।

मेवास्मिन्दधाति । उद्धते सिकतोपोप्ते परिश्रिते निदधति शान्त्यै, इति ।

( प्रपा० ५ । अनु० २ । विभा० २९ )

आयन्त्यागच्छेयुः । आर्याणां परिग्रहणेन रक्षांस्यपहतानि भवन्ति । तेषां बहुत्वेनास्मिन्द्रव्ये पूजा कृता भवति । भूमेरुद्धननेन सिकतावापेन परितस्तिरोधानकरणेन च तस्मिन्देशेऽवस्थापितस्य द्रव्यस्योपद्रवपरिहाररूपा शान्तिर्भवति ।

**मधु त्वा मधुला करोतु ।**

कल्पः—"मधु त्वा मधुला करोत्विति मदन्तीभिरुपसृजति" इति[2] । हे संभारसमूहरूप द्रव्य **मधु त्वा** पूर्वमपि मधुरं महावीरनिष्पादनयोग्यं मृदुरूपं त्वामयं मदन्तीसंसर्गः पुनरपि **मधुला** माधुर्ययुक्तं सौकार्य्य(कुमार्य)युक्तं[3] **करोतु** ।

अनेन मन्त्रेण साध्यं मदन्तीमेलनं विधत्ते—

मदन्तीभिरुपसृजति ( १२ ) । तेज एवास्मिन्दधाति, इति ।

( प्रपा० ५ । अनु० २ । विभा० ३० )

तप्ता आपो मदन्त्यः, तन्मेलनादस्मिन्द्रव्ये तेजः संपादितं भवति ।

यद्यपि जलमेलनादेव महावीरनिष्पादनसामर्थ्यरूपं तेजः संपद्यते । तथाऽपि मन्त्रेणैव सामर्थ्यातिशयाय मन्त्रपाठ इत्येतद्दर्शयति—

मधु त्वा मधुला करोत्वित्याह । ब्रह्मणैवास्मिन्तेजो दधाति , इति ।

( प्रपा० ५ । अनु० २ विभा० ३१ )

अथास्मिन्द्रव्ये मेलयितव्यं द्रव्यान्तरं विधत्ते—

यद्ग्राम्याणां पात्राणां कपालैः सꣳसृजेत् । ग्राम्याणि
पात्राणि शुचाऽर्पयेत् । अर्मकपालैः सꣳसृजति । एतानि
वा अनुपजीवनीयानि । तान्येव शुचाऽर्पयति, इति ।

( प्रपा० ५ । अनु० २ । विभा० ३२ )

गृहेषु पाकाद्यर्थानि भाण्डानि ग्राम्यपात्राणि तदीयकपालैः संसर्गे सति तानि शुचा शोकेन स(भ)ङ्गरूपेण योजितानि भवन्ति । तस्मा भूदित्यर्मकपालैर्मिश्रयेत । अर्मशब्देन चिरंतने जीर्णग्रामदेशे[4]ऽवस्थिता भाण्डांशा उच्यन्ते । तानि प्राणिभिरुपजीवितुमयोग्यान्यतस्तेषां शुचा योजनेऽपि न कश्चिद्बाधः ।

द्रव्यान्तरं विधत्ते—

शर्कराभिः सꣳसृजति धृत्यै । अथो शंत्वाय, इति ।

( प्रपा० ५ । अनु० २ । विभा० ३३ )

---

१ ग. 'पतꣳसृ° । २ क. . 'ति । सं° । ३ क ख. 'कं क° । ४ क. ख. °शे भा° ।

**शर्कराः** क्षुद्रपाषाणाः, तत्संसर्गे सति महावीरस्य **धृति**र्दार्ढ्यं भवति । अपि च शं सुखं कुर्वन्तीति शर्करानामनिरुक्तेस्तद्योगः **शंत्वाय** सुखसिद्धये भवति । एतच्चाऽऽधानप्रकरणे समाम्नातम्—'शं वै नोऽभूदिति । तच्छर्कराणाꣳ शर्करत्वम्' इति ।

द्रव्यान्तरं विधत्ते—

अजलोमैः सꣳसृजति । एषा वा अग्नेः प्रिया तनूः । यदजा । प्रिययैवैनं तनुवा सꣳसृजति । अथो तेजसा, इति ।

( प्रपा० ५ । अनु० २ । विभा० ३४ )

अजाग्न्योः प्रजापतिमुखजत्वेन सोदरत्वात्प्रियत्वम् । अपि चाग्नेः स्वेनैव तेजोरूपत्वात्तेजसा द्रव्यं संसृष्टं भवति—

द्रव्यान्तरं विधत्ते—

कृष्णाजिनस्य लोमभिः सꣳसृजति । यज्ञो वै कृष्णाजिनम् । यज्ञेनैव यज्ञꣳ सꣳसृजति, इति ।

( प्रपा० ५ । अनु० २ । विभा० ३५ )

अवघ्रातप्रस्तावे यज्ञो देवेभ्यो निलायत कृष्णो रूपं कृत्वेत्युक्तत्वात्कृष्णाजिनस्य यज्ञत्वम् । तल्लोमरूपेण **यज्ञेनैव** महावीरद्रव्यरूपो **यज्ञः संसृष्टो** भवति ।

याज्यायै न जुहुयादविशद्वेणुः शान्त्यै पङ्क्तिराधसमित्याह हरति दिहन्ति पराक्रमताविशत्प्रजायमानानाꣳ सृजति शंत्वायाष्टौ च ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके पञ्चमप्रपाठके द्वितीयोऽनुवाकः ॥ २ ॥

---

महावीरनिर्माणाय देशविशेषं ब्राह्मणगततृतीयानुवाके विधत्ते—

परिश्रिते करोति । ब्रह्मवर्चसस्य परिगृहीत्यै, इति ।

( प्रपा० ५ । अ० ३ । विभा० १ )

योऽयं देशः परिश्रितः कटादिभिरावृतस्तस्मिन्परिश्रिते महावीरं **करोति** । तदेतद्ब्रह्मवर्चसपरिग्रहाय भवति ।

तत्र नियमं कंचिद्विधत्ते—

न कुर्वन्नभिप्राण्यात् । यत्कुर्वन्नभिप्राण्यात् । प्राणाञ्शुचाऽर्पयेत् । अपहाय प्राणिति । प्राणानां गोपीथाय, इति ।

( प्रपा० ५ । अनु० ३ । विभा० २ )

सोऽयं तदानीं **नाभिप्राण्या**त्तदाभिमुख्येन श्वासं न कुर्यात् । तत्करणे स्वकीय **प्राणा** दुःखेन योजिता भवन्ति । तस्मान्मुख**मपहाय** परतो नीत्वा श्वासं कुर्यात् । त **प्राणानां** रक्षणाय भवति ।

निगमान्तरं विधत्ते—

न प्रवर्ग्यं चाऽऽदित्यं चान्तरेयात् । यदन्तरेयात् । दुश्चर्मा स्यात् । (१) । तस्मान्नान्तराय्यम् । आत्मनो गोपीथाय, इति ।

( प्रपा० ५ । अनु० ३ । विभा० ३ )

यत्र प्रवर्ग्यपात्राणि तिष्ठन्ति तत्र सूर्यश्चेत्प्राच्यां वसेत्तदानीं स्वयं प्रतीच्यां तिष्ठेत् । सूर्यस्य प्रतीच्यामवस्थाने स्वयं प्राच्यां तिष्ठेत् । एवं सति प्रवर्ग्यादित्ययोर्मध्येऽन्तरायो न भवेत् । अन्तराये तु कुष्ठरोगी स्यात् । अतः स्वशरीररक्षार्थमन्तरायं न कुर्यात्[१] ।

मृत्पात्रनिर्माणे साधनं विधत्ते—

वेणुना करोति । तेजो वै वेणुः । तेजः प्रवर्ग्यः । तेजसैव तेजः समर्धयति, इति ।

( प्रपा० ५ । अनु० ३ । विभा० ४ )

कुम्भनिर्माणार्थं कुम्भकाराः काष्ठेन यं व्यापारं कुर्वन्ति तमत्र वेणुना कुर्यान्नतु दारुणा । "अग्निर्देवेभ्यो निलायत स वेणुं प्राविशत्" इति श्रुत्या वेणोस्तेजस्त्वं तप्तघृताधारत्वात्प्रवर्ग्यपात्रमपि तेजः । अतो वेणुरूपेण तेजसा प्रवर्ग्यरूपं तेजः समृद्धं करोति ।

मखस्य शिरोऽसि (५) ।

कल्पः—" संपिष्ट्य[२] मृदं मखस्य शिरोऽसीति पिण्डं कृत्वा " इति । हे मृत्पिण्ड त्वं यज्ञस्य शिरःस्थानीयोऽसि ।

प्रवर्ग्यार्थस्य द्रव्यस्य शिरःस्थानीयत्वं विशदयति—

मखस्य शिरोऽसीत्याह । यज्ञो वै मखः । तस्यैतच्छिरः । यत्प्रवर्ग्यः (२) । तस्मादेवमाह, इति ।

( प्रपा० ५ । अनु० ३ । विभा० ५ )

प्रथमानुवाके धनुष्कोट्योच्छिन्नं यज्ञपुरुषस्य शिरो द्यावापृथिव्योरनुवर्तनात्प्रवर्ग्यनाम संपन्नमित्युक्तम् । तस्मान्मखस्य शिरोऽसीतिमन्त्रोक्तमुपपन्नम् ।

यज्ञस्य पदे स्थः ।

कल्पः—" यज्ञस्य पदे स्थ इत्यङ्गुष्ठाभ्यां निगृह्य " इति । आर्द्रस्य पिण्डस्योर्ध्वङ्गुष्ठद्वयग्रहेण निष्पन्नबिन्दुद्वयाकारे हे लाञ्छने युवां यज्ञस्य पादौ भवथः ।

एतयोर्यज्ञपादत्वे शास्त्रप्रसिद्धिं दर्शयति—

यज्ञस्य पदे स्थ इत्याह । यज्ञस्य ह्येते पदे । अथो प्रतिष्ठित्यै, इति ।

( प्रपा० ५ । अनु० ३ । विभा० ६ )

---

१ ख. 'रक्षणार्थं' । २ क. सपाक्षिष्य । ख. संप्रक्ष्य ।

समानरूपत्वेन द्वित्वेन च पादसादृश्यादित्थं कर्तव्यम् । अपि च पादद्वयसादृश्येन प्रतिष्ठार्थमेतद्भवति ।

कल्पः—" महावीरं करोति त्र्युद्धिं पञ्चोद्धिमपरिमितोद्धिं वा प्रादेशमात्रमूर्ध्वसानुमुपरिष्टादासेचनवन्तं मध्ये संनतं वार्यैव्यप्रकारं गायत्रेण त्वा छन्दसा करोमीति प्रथमं त्रैष्टुभेनेति द्वितीयं जागतेनेति तृतीयमपि वा सर्वैरेकैकम्" इति । पाठस्तु—

**गायत्रेण त्वा छन्दसा करोमि । त्रैष्टुभेन त्वा छन्दसा करोमि । जागतेन त्वा छन्दसा करोमि, इति ।**

हे प्रथम महावीर त्वां गायत्रच्छन्दोदेवतासामर्थ्येन निष्पादयामि । एवं द्वितीयतृतीययोर्महावीरयोस्त्रैष्टुभजागतमन्त्रौ व्याख्येयौ ।

मन्त्रेषु गायत्रादिपदानामुपयोगं दर्शयति—

गायत्रेण त्वा छन्दसा करोमीत्याह । छन्दोभिरेवैनं करोति, इति ।

( प्रपा० ५ । अनु० ३ । विभा० ७ )

एतेषां मन्त्राणां पाठेन महावीरस्य च्छन्दोदेवताभिर्निष्पादनं भवति ।

एकैकस्मिन्महावीरे कक्ष्यात्रयं विधत्ते—

त्र्युद्धिं करोति । त्रय इमे लोकाः । एषां लोकानामाप्त्यै, इति ।

( प्रपा० ५ । अनु० ३ । विभा० ८ )

भाण्डस्योपरि भाण्डान्तरप्रक्षेपे यादृश आकारो भवति तादृश आकार उद्धिरित्युच्यते । ऊर्ध्वाधोभावेनावस्थितभाण्डत्रयवत्त्रिविधा उद्ध्यो(द्धयो) यस्य महावीरस्य सोऽयं त्र्युद्धिः । तत्र त्रित्वसाम्याल्लोकत्रयप्राप्तिः पूर्वं व्याख्याता ।

छन्दःप्रतिपादकैर्मन्त्रैस्तन्निष्पादनं विधत्ते—

छन्दोभिः करोति (३) । वीर्यं वै छन्दाꣳसि । वीर्येणैवैनं करोति, इति ।

( प्रपा० ५ । अनु० ३ । विभा० ९ )

वीर्यप्रदत्वाद्गायत्र्यादिच्छन्दसां वीर्यरूपत्वम् ।

**मखस्य रास्नाऽसि ।**

कल्पः—"मखस्य रास्नाऽसीत्युपबिलं रास्नां करोति" इति ।

बिलस्य समीपे वर्तमान हे वलयाकर त्वं यज्ञस्य रास्ना रशनाऽसि । यथा काञ्चीदाम कण्ठाभरणं वा तद्वत् ।

---

१ ख. °यव्यं प्र° । २ ग. °रस्येदं छ° । ३ ग. °ताद्भिभि° । ४ ग. °व्यावितं भ° । ५ °मिः ॥ पू° । ६ ग °रुणातैश्छन्दः° । ७ ग. रसना° ।

अदि॑तिस्ते॒ बिलं॑ गृह्णातु। पाङ्क्ते॑न॒ छन्द॑सा।

कल्पः—"अदितिस्ते बिलं गृह्णात्विति वेणुपर्वणा बिलं करोति" इति। पाङ्क्तेन छन्दसेति मन्त्रशेषः। हे महावीर पङ्क्तिच्छन्दोदेवतया सहादितिर्भूमिदेवी[1] ते तव बिलं गृह्णातु स्वी करोतु।

तमेतं मन्त्रं विनियुङ्क्ते—

यजुषा बिलं करोति व्यावृत्त्यै, इति।

( प्रपा० ९। अनु० ३। विभा० १० )

लौकिकेषु मृत्पात्रेषु मन्त्रमन्तरेणैव कुम्भकारा बिलं कुर्वन्ति। अत्र तु मन्त्रेणेति व्यावृत्तिः।

महावीरस्य प्रादेशपरिमाणं हस्ताभिनयेन विधत्ते—

इयन्तं करोति। प्रजापतिना यज्ञमुखेन संमितम्, इति।

( प्रपा० ९। अनु० ३। विभा० ११ )

यज्ञपुरुषस्य शिरश्चिबुकयोर्मध्यवर्ति प्रादेशमात्रम्। प्रजापतिश्च वैश्वानरविद्यायां प्रादेशमात्रत्वेनोपास्यः[2]। यस्त्वेतदेवं प्रादेशमात्रमिति च्छन्दोगैराम्नातत्वात्। अतः प्रादेशमात्रो महावीरः प्रजापतिना यज्ञमुखेन च सदृशो भवति।

तदेव[3] परिमाणमनूद्य प्रशंसति—

इयन्तं करोति। यज्ञपरुषा। संमितम्, इति।

( प्रपा० ९। अनु० ३। विभा० १२ )

यज्ञस्य परुरङ्गमैन्द्रवायवादिग्रहपात्रं तेन सादृश्यं प्रादेशमात्रत्वे संपद्यते। पुनरप्यनूद्य प्रशंसति—

इयन्तं करोति। एतावद्वै पुरुषे वीर्यम्। वीर्यसंमितम् ( ४ ), इति।

( प्रपा० ९। अनु० ३। विभा० १३ )

पुरुषशरीरे वीर्यं दर्शनश्रवणादिसामर्थ्यं प्रादेशपरिमिते मुखे विद्यते। अतो वीर्यसादृश्यमेतस्य भवति।

अथ[4] परिमाणाभावरूपं पक्षान्तरं विधत्ते—

अपरिमितं करोति। अपरिमितस्यावरुद्ध्यै, इति।

( प्रपा० ९। अनु० ३। विभा० १४ )

परिमाणनियत्यभावेनापि निमित्तेन[5] बहुलं फलं संपद्यते।

---

१ ख. ग. °मिर्देवी। २ ग. प्राजापत्यत्वे°। ३ ग. °देवं प°। ४ ग. यतः. ५ ग. °मित्तत्वब

यदुक्तं सूत्रकारेण—' उपबिलं ग्रीवां करोति ' इति, तदत्र विधत्ते—

परिग्रीवं करोति धृत्यै, इति ।

( प्रपा० ५ । अनु० ३ । विभा० १५ )

ग्रीवायाः परितः परिग्रीवं तत्र वलयाकारो धारणायोपयुज्यते ।

**सूर्यस्य हरसा श्राय ।**

कल्पः—" सूर्यस्य हरसा श्रायेत्युत्तरतः सिकतासु प्रतिष्ठाप्य " इति । हे महावीर **सूर्यस्य हरसा** तेजसाऽऽतपेन **श्राय** पक्वः शुष्को भव ।

मन्त्रस्य स्पष्टार्थतां दर्शयति—

सूर्यस्य हरसा श्रायेत्याह । यथा यजुरेवैतत्, इति ।

( प्रपा० ५ । अनु० ३ । विभा० १६ )

**मखोऽसि ( ६ ) ॥**

कल्पः—" मखोऽसीत्यनुवीक्षते " इति । हे महावीर त्वं यज्ञसाधनत्वान्मख यज्ञस्वरूपोऽसि ।

**एते शिरं ऋतावरीरृध्यास्मद्य मखस्य शिरः शिरः**

**शिरोऽसि नवं च ॥**

**इयति देवीरिन्द्रस्यौजोऽस्याग्निजा अस्यायुर्धेहि प्राणं पञ्च ॥**

**इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके चतुर्थप्रपाठके**
**द्वितीयोऽनुवाकः ।**

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीय-
तैत्तिरीयारण्यकभाष्ये चतुर्थप्रपाठके द्वितीयोऽनुवाकः ॥ २ ॥

---

अथ चतुर्थे तृतीयोऽनुवाकः।

---

द्वितीये महावीरनिर्माणमुक्तं तृतीये तत्संस्कारा उच्यन्ते । कल्पः—"वृष्णो अ[1]श्वस्येति सकृद्गार्हपत्ये प्रदीप्य प्रथमकृतं महावीरं शफाभ्यां परिगृह्य धूपयति वृ[ष्णो] अश्वस्य निष्पदसि " इति । पाठस्तु—

**वृष्णो अश्वस्य निष्पदसि । वरुणस्त्वा धृतव्रत**

**आधूपयतु । मित्रावरुणयोर्ध्रुवेण धर्मणा, इति ।**

---

१ ग. 'य कृष्णद्वक्के भ° ।

हे महावीर त्वं **वृष्णः** सेचनसमर्थस्याश्वस्य संबन्धि **निष्पत्तिःसृतं यच्छकृत्त-** ोन तद्रूपोऽसि । **तादृशं त्वां धृतव्रतः** स्वीकृतनियमो **वरुणो देव आधूपयतु सर्वतो** तं करोतु । **मित्रावरुणयोः** संबन्धी **ध्रुवो धर्मा**स्थितः पुण्यविशेषस्तद्रूपेण **द्रव्येण** यत्वित्यन्वयः ।

अनेन मन्त्रेण साध्यं धूपनं विधत्ते—

अश्वशकेन धूपयति । प्राजापत्यो वा अश्वः सयोनित्वाय, इति ।

( प्रपा० ९ । अनु० ३ । विभा० १७ )

शकशब्देन शकृदुच्यते । **अश्वस्य** प्रजापत्यक्षिजन्यत्वात्**प्राजापत्यत्वम्** । अतोऽ- बन्धिधूपेन सर्वकारणभूतप्रजापतिसंबन्धसिद्धेः **सयोनित्वं** भवति ।

मन्त्रोक्तमश्वं शकृच्चाऽऽदित्यरूपेण च्छन्दोरूपेण च प्रशंसति—

वृष्णो अश्वस्य निष्पदसीत्याह । असौ वा आदित्यो वृषाऽश्वः तस्य च्छन्दाꣳसि निष्पत् । ( ९ ) । छन्दोभिरेवैनं धूपयति, इति ।

( प्रपा० ९ । अनु० ३ । विभा० १८ )

कल्पः—"अग्रेण गार्हपत्यमवटं खात्वा लोहितपचनीयैः संभारैरवस्तीर्य तेषु महावी- पावहरति, लोहितपचनीयैः संभारैः प्रच्छाद्य गार्हपत्ये मुञ्जानादीप्योपोषत्यर्चिषे तैः प्रतिमन्त्रं प्रतिदिशमपि वा सर्वैः सर्वतः" इति । पाठस्तु—

अर्चिषे त्वा । शोचिषे त्वा ।

ज्योतिषे त्वा । तपसे त्वा, इति ।

अर्चिरादयः शब्दा ज्वालाविशेषवाचिनः । हे महावीर त्वामर्चिरादिभ्यः समर्प- ि ।

एतैर्मन्त्रैर्यजमानस्य शरीरकान्तिः संपद्यत इति दर्शयति—

अर्चिषे त्वा शोचिषे त्वेत्याह । तेज एवास्मिन्दधाति, इति ।

( प्रपा० ९ । अनु० ३ । विभा० १९ )

कल्पः—"पच्यमानान्मैत्र्योपचरत्यभीमं महिना दिवमित्युत्तरया वा" इति । तयो- ोर्ऋचोः पाठस्तु—

अभीमं महिना दिवम् । मित्रो बभूव सप्रथाः । उत श्रवसा पृथिवीम् ( १ ) । मित्रस्य चर्षणीधृतः । श्रवो देवस्य सानसिम् । द्युम्नं चित्रश्रवस्तमम्, इति ।

१. °स्य प्राजापत्याद्दिज° । २ ग. °न्दाꣳसीति नि° । ३ क. मुञ्जानाद्दीप°।

दिवं दीप्यमानमिमं महावीरमभिलक्ष्य मित्रो देवः सप्रथा विस्तारसहितो बभूव। स्वकीयां मैत्रीं विस्तृतवान् । उतापि च पृथिवीमभिलक्ष्य श्रवसा कीर्त्या सप्रथा बभूव। अस्यां सर्वस्यां पृथिव्यां महावीरस्य कीर्तिं विस्तृतवानित्यर्थः । दिवं दिवि द्युलोक इति वा व्याख्येयम् । चर्षणीधृतो मनुष्यान्मैत्र्या धारयतो मित्रस्य देवस्य सानसिं दानशीलं श्रवः श्रवणं कीर्तिरूपं सर्वे वदन्तीति शेषः । द्युम्नं मित्रेण दत्तं धनं चित्रश्रवस्तममतिशयेन विचित्रकीर्तियुक्तं वर्तते ।

मन्त्रयोः फलं दर्शयति—

वारुणोऽभीद्धः । मैत्रियोपैति शान्त्यै, इति ।

( प्रपा० ५ । अनु० ३ । विभा० २० )

सिद्ध्यै त्वा ।

कल्पः—"पक्वेषु सिद्ध्यै त्वेति धृष्टीमादाय भस्मापोह्य" इति । हे महावीर त्वा सिद्ध्यै समीचीनस्वरूपसिद्ध्यै महावीरगतभस्मापोहनसिद्ध्यर्थं त्वां स्वी करोमीति शेषः ।

मन्त्रस्य स्पष्टार्थतां दर्शयति—

सिद्ध्यै त्वेत्याह । यथा यजुरेवैतत्, इति ।

( प्रपा० ५ । अनु० ३ । विभा० २१ )

कल्पः—"प्रथमकृतं महावीरं शफाभ्यां परिगृह्योद्वासयति देवस्त्वा सवितोद्वपतु" इति । पाठस्तु—

देवस्त्वा सवितोद्वपतु । सुपाणिः

स्वङ्गुरिः । सुबाहुरुत शक्त्या, इति ।

हे महावीर त्वां सविता देवः स्वशक्त्योद्वपतु । इतोऽवटादूर्ध्वं नयतु । कीदृशः सविता सुपाणिः शोभनाभ्यामुद्यमनकुशलाभ्यां पाणिभ्यां युक्तः । स्वङ्गुरिः शोभनाभिरुद्वपनक्षमाभिरङ्गुलीभिर्युक्तः । उतापि च सुबाहुः शोभनाभ्यां बाहुभ्यां युक्तः । पाणिशब्देन मणिबन्धादूर्ध्वमङ्गुल्याधारभाग उच्यते । बाहुशब्देन मणिबन्धादर्वाचीनभागः ।

सवितृशब्दस्य तात्पर्यं दर्शयति—

देवस्त्वा सवितोद्वपत्वित्याह । सवितृप्रसूत

एवैनं ब्रह्मणा देवताभिरुद्वपति, इति ।

( प्रपा० ५ । अनु० ३ । विभा० २२ )

---

१ ख. धृष्टिमा° । २ क. °मनानुकूलकु° । ख. °मनानुकूला° ।

सवित्रा प्रेरितः सन्मन्त्रेण देवताभिश्च सहोद्वपनं कृतवान्भवति ।

कल्पः—"उद्वास्यापद्यमानः पृथिव्यामाशा दिश आपृणेत्युत्तरतः सिकतासु प्रतिष्ठाप्य" इति । पाठस्तु—

**अपद्यमानः पृथिव्याम् । आशा दिश आपृण ।**

**उत्तिष्ठ बृहन्भव (२) । ऊर्ध्वस्तिष्ठ ध्रुवस्त्वम्,** इति ।

हे महावीर त्वं **पृथिव्यां** भूमावपद्यमानोऽसि । भङ्गमप्राप्नुवन्नाशा दिशः प्राच्याद्या मुख्यदिश आग्नेय्याद्या अमुख्यदिशश्चाऽऽपृण सर्वतः पूरय, सर्वत्र प्रसिद्धो भव । उत्तिष्ठोत्सहस्व । **बृहन्भव** स्वव्यापारेण प्रख्यातो भव । इह सिकतासूर्ध्वमुखः स्थिरस्त्वं तिष्ठ ।

दिश आपृणेत्यस्य तात्पर्यं दर्शयति—

अपद्यमानः पृथिव्यामाशा दिश आपृणेत्याह (६) ।
तस्मादग्निः सर्वा दिशोऽनुविभाति, इति ।

( प्रपा० ५ । अनु० ३ । विभा० २३ )

यस्मान्महावीरस्य सर्वदिक्पू(क्पू)र्तिः प्रार्थ्यते तस्मान्महावीरेणाभिन्नोऽग्निः स्वतेजसा सर्वा दिशः प्रकाशयति—

ऊर्ध्वस्तिष्ठेत्यस्य तात्पर्यं दर्शयति—

उत्तिष्ठ बृहन्भवोर्ध्वस्तिष्ठ ध्रुवस्त्वमित्याह प्रतिष्ठित्यै, इति ।

( प्रपा० ५ । अनु० ३ । विभा० २४ )

कल्पः—"सूर्यस्य त्वा चक्षुषाऽन्वीक्ष इत्यनुवीक्षते" इति । पाठस्तु—

**सूर्यस्य त्वा चक्षुषाऽन्वीक्षे । ऋजवे त्वा ।**

**साधवे त्वा । सुक्षित्यै त्वा भूत्यै त्वा,** इति ।

हे महावीर त्वां **सूर्यस्य** चक्षुषाऽहमनुक्रमेण वीक्षे । **ऋजवे** आर्जवयुक्तायै भूम्यै त्वामीक्षे । **साधवे** समीचीनायान्तरिक्षाय त्वामीक्षे । **सुक्षित्यै** शोभननिवासाय द्युलोकाय त्वामीक्षे । **भूत्या** ऐश्वर्ययुक्ताभ्यो दिग्भ्यस्त्वामीक्षे । त्वद्वीक्षणेन सर्वे लोकाः स्वस्वकार्यक्षमा भवन्तीत्यर्थः ।

सूर्यस्य चक्षुषेत्यस्य तात्पर्यं दर्शयति—

ईश्वरो वा एषोऽन्धो भवितोः । यः प्रवर्ग्यमन्वीक्षते । सूर्यस्य त्वा चक्षुषाऽन्वीक्ष इत्याह । चक्षुषो गोपीथाय, इति ।

( प्रपा० ५ । अनु० ३ । विभा० २५ )

---

१ क ख. प्राप्यते ।

स्वचक्षुषा प्रवर्ग्यं पश्यन्नन्धो भवितुं समर्थो भवति, अतः स्वचक्षुषो गोपीथाय सूर्यस्य चक्षुषेत्युक्तम् ।

ऋज्वादिशब्दैः पृथिव्यादयो वक्ष्यन्त इत्येतद्दर्शयति—

ऋजवे त्वा साधवे त्वा सुक्षित्यै त्वा भूत्यै त्वेत्याह । इयं वा ऋजुः । अन्तरिक्षꣳ साधु । असौ सुक्षितिः (७) । दिशो भूतिः । इमानेवास्मै लोकान्कल्पयति । अथो प्रतिष्ठित्यै, इति ।

( प्रपा० ५ । अनु० ३ । विभा० २६ )

इदमहममुमामुष्यायणं विशा पशुभिर्ब्रह्मवर्चसेन पर्यूहामि ।

कल्पः—" अथैनान्प्रदक्षिणं सिकताभिः पर्यूहति । इदमहममुमामुष्यायणं विशा पशुभिर्ब्रह्मवर्चसेन पर्यूहामीति । विशेति राजन्यस्य पशुभिरिति वैश्यस्य " इति । अहमध्वर्युः, आमुष्यायणममुष्य देवदत्तस्य पुत्रम् । अमुं यज्ञदत्तनामानं महावीररूपेणावस्थितम् । विशा प्रजया पशुभिर्ब्रह्मवर्चसेन चैतत्त्रितयरूपाभिः सिकताभिरिदं प्रत्यक्षं यथा भवति तथा पर्यूहामि परितः स्थिरं करोमि ।

मन्त्रपाठेन तदर्थस्तथैव फलतीत्येतद्दर्शयति—

इदमहममुमामुष्यायणं विशा पशुभिर्ब्रह्मवर्चसेन पर्यूहामीत्याह । विशैवेनं पशुभिर्ब्रह्मवर्चसेन पर्यूहति, इति ।

( प्रपा० ५ । अनु० ३ । विभा० २७ )

क्षत्रियवैश्ययोर्मन्त्रप्रयोगे विशेषं दर्शयति—

विशेति राजन्यस्य ब्रूयात् । विशैवेनं पर्यूहति । पशुभिरिति वैश्यस्य । पशुभिरेवैनं पर्यूहति, इति ।

( प्रपा० ५ । अनु० ३ । विभा० २८ )

पशुभिर्ब्रह्मवर्चसेनेत्येतावत्क्षत्रियं प्रति परित्यजेत् । वैश्यं प्रति तु विशा ब्रह्मवर्चसेनेत्येतावत्परित्यजेदित्यर्थः ।

कल्पः—" अथैनान्प्रभूतेनाजापयसाऽऽच्छृणत्ति गायत्रेण त्वा छन्दसाऽऽच्छृणद्मीत्येतैस्त्रिभिस्त्रिभिरेकैकमपि वा सर्वैरेकैकम् " इति । पाठस्तु—

गायत्रेण त्वा छन्दसाऽऽच्छृणद्मि । त्रैष्टुभेन त्वा छन्दसाऽऽच्छृणद्मि । जागतेन त्वा छन्दसाऽऽच्छृणद्मि । छृणत्तु त्वा वाक् । छृणत्तु त्वोर्क् । छृणत्तु त्वा हविः । छृन्धि वाचम् । छृन्ध्यूर्जम् । छृन्धि हविः, इति ।

---

१ क त्रिभिरे ।

हे महावीर त्वां गायत्रच्छन्दोदेवतारूपेणाजक्षीरेणाऽऽच्छृणद्मि सर्वतः सिञ्चामि। एवं त्रैष्टुभजागतमन्त्रयोरपि योज्यम्। तथा वागन्नहविरभिमानिन्यो देवतास्त्वां सिञ्चन्तु त्वमपि वागादीन्सिञ्च।

एतन्मन्त्रसाध्यं सेचनं विधत्ते—

अमुर्यं पात्रमनाच्छृण्णम् (८)। आच्छृणत्ति। देवत्राऽकः, इति।

(प्रपा० ५। अनु० ३। विभा० २९)

अनाच्छृण्णं क्षीरसेचनरहितं पात्रमसुर्यमुष्णत्वेनात्युग्रत्वादसुरेभ्यो हितं न तु देवेभ्योऽतो देवार्थमासिञ्चेत्। तेन शान्तं शीतलं पात्रं देवेषु करोति।

तत्र द्रव्यं विधत्ते—

अजक्षीरेणाऽऽच्छृणत्ति। परमं वा एतत्पयः। यदज-
क्षीरम्। परमेणैवैनं पयसाऽऽच्छृणत्ति, इति।

(प्रपा० ५। अनु० ३। विभा० ३०)

सर्वव्याधिहरत्वादजक्षीरस्य परमत्वम्। तत्र सेचने देवस्त्वा सवितेत्यादिकं यजुर्वि-नियुङ्क्ते—

यजुषा व्यावृत्त्यै, इति।

(प्रपा० ५। अनु० ३। विभा० ३१)

उष्णशान्त्यर्थे लौकिके सेचने मन्त्रो नास्ति। अत्र तु यजुषा मन्त्रेण सिञ्चेदिति तद्व्यावृत्तिः।

मन्त्रगतांश्छन्दोवाचकशब्दान्प्रशंसति—

छन्दोभिराच्छृणत्ति। छन्दोभिर्वा एष क्रियते।
छन्दोभिरेव छन्दाᳲस्याच्छृणत्ति, इति।

(प्रपा० ५। अनु० ३। विभा० ३२)

पूर्वं गायत्रेण च्छन्दसा करोमीत्येवं छन्दोयुक्तैर्मन्त्रैरेष महावीरः कृतः, अतोऽय-मेव च्छन्दांसि। अत्रापि च्छन्दोवाचकशब्दयुक्तैर्मन्त्रैः सेचने सत्यत्रत्यैश्छन्दोभिरिव पूर्वोक्तानि च्छन्दांसि सिक्तानि भवन्ति।

वागादिदेवता महावीरं सिञ्चन्तीत्येतद्युक्तं महावीरस्तु वागादीन्सिञ्चतीत्यत्र प्रयो-जनं दर्शयति—

छृन्धि वाचमित्याह। वाचमेवावरुन्धे। छृन्ध्यूर्जमित्याह।
ऊर्जमेवावरुन्धे। छृन्धि हविरित्याह। हविरेवाकः, इति।

(प्रपा० ५। अनु० ३। विभा० ३३)

---

१ क. ख. °णाजाक्षी°। २ ग. °वागूर्क्शब्दा°। ३ क. तत्रापि। ४ ग. °वागूर्क्शब्द°।

तैरेतैर्मन्त्रैर्वागन्नप्राप्तिर्विघ्नसिद्धिश्च भवति ।

देव पुरश्चर सघ्यासं त्वा ( ३ ) ।

पृथिवीं भव वाक्षट् च ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके चतुर्थप्रपाठके तृतीयोऽनुवाकः ॥ ३ ॥

कल्पः—"अथैनान्कृष्णाजिन उपानह्याऽऽसजति देव पुरश्चर सघ्यासं त्वा" इति। पुरश्चर पुरतोवर्तमान हे महावीर देव द्योतनात्मक त्वां सघ्यासं कृष्णाजिने बद्ध्वा क्वचिदूर्ध्वदेशे सक्तं कुर्याम् ।

मन्त्रस्य स्पष्टार्थतां दर्शयति—

देव पुरश्चर सघ्यासं त्वेत्याह । यथा यजुरेवैतत् ( ९ ), इति ।

( प्रपा० ५ । अनु० ३ । विभा० ३४ )

स्याद्यत्प्रवर्ग्यश्छन्दोभिः करोति वीर्यसंमितं छन्दाꣳसि निष्पत्पृणेत्याह सुक्षितिरनाच्छृण्णं छन्दाꣳस्याच्छृणत्त्यष्टौ च ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके पञ्चमप्रपाठके तृतीयोऽनुवाकः ॥ ३ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्ये चतुर्थप्रपाठके तृतीयोऽनुवाकः ॥ ३ ॥

---

अथ चतुर्थप्रपाठके चतुर्थोऽनुवाकः ।

---

तृतीये महावीरसंस्कारा उक्ताः । चतुर्थे प्रैषा उच्यन्ते । कल्पः—"प्रोक्षणीनामावृत्त्या प्रोक्षणीः सꣳस्कृत्य ब्रह्माणमामन्त्रयते ब्रह्मन्प्रवर्ग्येण" इति । पाठस्तु—

ब्रह्मन्प्रवर्ग्येण प्रचरिष्यामः । होतर्घर्ममभिष्टुहि । अग्नीद्रौहिणौ पुरोडाशावधिश्रय । प्रतिप्रस्थातर्विहर । प्रस्तोतः सामानि गाय, इति ।

हे ब्रह्मन्वयं सर्वे प्रवर्ग्याख्येण कर्मणा प्रचरिष्यामोऽनुष्ठानं संपादयिष्यामः। होतस्त्वं घर्मं प्रवर्ग्यं ब्रह्मजज्ञानमित्यादिभिर्मन्त्रैरभिष्टुतं कुरु । आग्नीध्र रौहिणाख्यौ पुरोडाशावधिश्रय श्रपणार्थं कपालस्योपरि स्थापय । हे प्रतिप्रस्थातर्विहरणं कुरु तच्च विहरणं बौधायनेन दर्शितम्—"अथ प्रतिप्रस्थाता प्रवर्ग्यं विहरत्याहवनीकार्ष्म(ष्म)र्यमयान्परिधीन्परिदधाति" इत्यादि । दे प्रस्तोतः प्रवर्ग्यर्थानि सामानि गाय

१ क. ख. °थैनान्कृ° । २ क. ख. °वृत्ता प्रो° । ३ क. प्रचारमनु° । ४ ग. °धीन्प्रहरति ।

कल्पः—"यजुर्युक्त५ सामभिराक्तखं त्वेत्युपांशूक्त्वोमिन्द्रवन्तः प्रचरतेत्युच्चैरनुजानाति" इति । पाठस्तु—

यजुर्युक्त५ सामभिराक्तखं त्वा । विश्वैर्देवै-
रनुमतं मरुद्भिः । दक्षिणाभिः प्रततं पार-
यिष्णुम् । स्तुभो वहन्तु सुमनस्यमानम् ।
स नो रुचं धेह्यहृणीयमानः । भूर्भुवः सुवः ।
ओमिन्द्रवन्तः प्रचरत ( १ ), इति ॥

अहृणीयमानो द्वे च ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके चतुर्थप्रपाठके
चतुर्थोऽनुवाकः ॥ ४ ॥

हे प्रवर्ग्य त्वां स्तुभः सामसु प्रयुज्यमानाः स्तोभा वहन्तु विघ्नपरिहारेण समाप्तिं नितं निर्वहन्तु । कीदृशं त्वाम् । यजुर्युक्तं यजुरुपलक्षितैर्मन्त्रैः संबद्धम् । सामभिक्तखमाक्तान्याप्यायितानि खानीन्द्रियाण्यवयवा यस्य प्रवर्ग्यस्य सोऽयमाक्तखस्तादृशम् । सामगानेन हि प्रवर्ग्य आप्यायितो भवति । तथा विश्वैर्देवैर्मरुद्भिरनुमतमङ्गीकृतम् । प्रवर्ग्यमुद्वासयिष्यन्नजामग्नीधे ददातीत्यादिभिर्दक्षिणाभिः प्रततं विस्तीर्णम् । पारयिष्णुं निर्विघ्नेन समाप्तिं गन्तुं शक्तम् । सुमनस्यमानं यजमाने स्नेहातिशयेन मनस्ययुक्तम् । हे प्रवर्ग्य स त्वमहृणीयमानः केनाप्यहिंस्यमानो नोऽस्मदर्थं रुचं धेहि महतीं ज्वालां धारय । भूरादयस्त्रयो लोका अनुगृह्णन्तु । प्रणवशब्दवाच्यः परमात्माऽप्यनुगृह्णातु । हे, ऋत्विजो यूयमिन्द्रवन्त इन्द्रदेवतास्वामिकाः सन्तः प्रचरत कर्मानुतिष्ठत। अयमनुवाकः स्पष्टार्थबुद्ध्या ब्राह्मणेनोपेक्षितः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्ये चतुर्थप्रपाठके चतुर्थोऽनुवाकः ॥ ४ ॥

---

अथ चतुर्थे पञ्चमोऽनुवाकः ।

---

चतुर्थे प्रैषा उक्ताः । पञ्चमे तु खरगतेष्वङ्गारेषु महावीरस्थापनमुच्यते । तत्राऽऽदौ प्रैषमन्त्रे पाठान्तरं दर्शयति—

ब्रह्मन्प्रचरिष्यामः । होतर्घर्ममभिष्टुहि, इति ।

---

१ ग. °स्मदर्थो रु° ।

पूर्वमाम्नाते मन्त्रे प्रवर्ग्येणेति शब्दोऽस्ति । अस्मिंस्त्वसौ नास्तीत्येतावान्पाठ विशेषः ।

ब्रह्मन्निति संबोधनस्य तात्पर्यं दर्शयति--

ब्रह्मन्प्रचरिष्यामो होतर्घर्ममभिष्टुहीत्याह । एष वा एतर्हि बृहस्पतिः । यद्ब्रह्मा । तस्मा एव प्रतिप्रोच्य प्रचरति । आत्मनोऽनार्त्यै, इति ।

( प्रपा० ९ । अनु० ४ । विभा० १ )

**एतर्हि** कर्मकाले यो ब्रह्माऽस्ति एष एव बृहस्पतिस्थानीयः । **तस्मै** बृहस्पतये **कथयित्वा** प्रचारे सति स्वस्याऽऽर्तिर्वैकल्यनिमित्तापराधो न भवति ।

कल्पः—" यमाय त्वा मखाय त्वेति सर्वं परिघर्म्यमभिपूर्वं त्रिः प्रोक्षति " इति पाठस्तु—

**यमाय त्वा मखाय त्वा । सूर्यस्य हरसे त्वा, इति ।**

हे घर्म पात्रसमूह **यमाय** नियमार्थं त्वां प्रोक्षामीति शेषः । तथा **मखाय** यज्ञा त्वां प्रोक्षामि । **सूर्यस्य हरसे** सूर्यसंबन्धितेजोर्थं सूर्यमण्डलपर्यन्तं ज्वालोद्गमार्थं त्व प्रोक्षामि ।

यममखसूर्यशब्दैः सूचिताभिः प्रवर्ग्यदेवताभिः सर्वाभिः संपादितां प्रवर्ग्यसमृ दर्शयति—

यमाय त्वा मखाय त्वेत्याह । एता वा एतस्य देवताः । ताभिरेवैनꣳ समर्धयति, इति ।

( प्रपा० ९ । अनु० ४ । विभा० २ )

प्रोक्षणद्रव्यं विधत्ते—

मदन्तीभिः प्रोक्षति । तेज एवास्मिन्दधाति ( १ ), इति ।

( प्रपा० ९ । अनु० ४ । विभा० ३ )

तप्ता आपो मदन्त्यः, ताभिः प्रोक्षणे यजमाने कान्तिः संपद्यते ।

तत्रानुक्रमं विधत्ते —

अभिपूर्वं प्रोक्षति । अभिपूर्वमेवास्मिन्तेजो दधाति, इति ।

( प्रपा० ९ । अनु० ४ । विभा० ४ )

पूर्वं प्रथमं महावीरमभिलक्ष्याभिपूर्वं तदादिकमेव प्रोक्षेत्, न तु विपर्ययेण । सति यजमाने पितृपुत्रादिक्रमेणैव तेजः संपद्यते ।

---

१ ग. घर्म्य ।

आवृत्तिं विधत्ते—

त्रिः प्रोक्षति । त्र्यावृद्धि यज्ञः । अथो मेध्यत्वाय, इति ।

( प्रपा० ५ । अनु० ४ । विभा० ५ )

अग्नित्रयसाध्यत्वेन सवनत्रयरूपत्वेन वा यज्ञस्याऽऽवृत्तित्रयोपेतत्वम्, अपि च क्षणावृत्त्यां सिध्यतीत्या(त्यति)शये सति यज्ञयोग्यता संपद्यते ।

होतर्घर्ममभिष्टुहीति प्रैषस्योक्तत्वाद्धोतृकृत्यमनुवचनं विधत्ते—

होताऽन्वाह । रक्षसामपहत्यै, इति ।

( प्रपा० ५ । अनु० ४ । विभा० ६ )

होतुरनुवचनं यज्ञविघातिनां रक्षसां वधाय भवति ।

अयं चानुवाकप्रकार आश्वलायनेन स्पष्टमभिहितः—"स्पृष्टोदकं प्रवर्ग्येण चारिन्सूत्तरेण खरं परिव्रज्य पश्चादस्योपविश्य प्रेषितोऽभिष्टुयाद्गावार्नमृचमृचमनवानमुक्त्वा त्यावँस्येद्ब्रह्मजज्ञानम्" इत्यादिः ।

तत्रैकस्या ऋचो मध्ये श्वासराहित्यं विधत्ते—

अनवानम् । प्राणाना संतत्यै, इति ।

( प्रपा० ५ । अनु० ४ । विभा० ७ )

अवानः श्वासस्तद्रहितं यथा भवति तथा पठेत् । तच्च यजमानप्राणानामविच्छेय भवति ।

तास्वृक्षु गायत्रीधर्ममतिदिशति—

त्रिष्टुभः सतीर्गायत्रीरिवान्वाह (२) । गायत्रो हि प्राणः । प्राणमेव यजमाने दधाति, इति ।

( प्रपा० ५ । अनु० ४ । विभा० ८ )

यद्यपि ब्रह्मजज्ञानमित्यादयस्त्रिष्टुभस्तथाऽपि गायत्रीवदनुवचनं कुर्यात् । गायरूपं ध्यात्वा पठेदित्यर्थः । प्राणस्य गायत्रत्वाद्गायत्रीसमानानुवचनेन यजमाने णं स्थैर्येण स्थापयति । गायत्र्या रक्ष्यमाणत्वात्प्राणस्य गायत्रत्वम् । तद्रक्ष्यत्वं च गस्य वाजसनेयिनः समामनन्ति—"प्राणा वै गयास्तत्प्राणांस्तत्रे तद्यद्गयांस्तत्रे माद्गायत्री नाम" इति ।

अनुवचनकाले व्यापारान्तरेण व्यवधानं निवारयति—

संततमन्वाह । प्राणानामन्नाद्यस्य संतत्यै । अथो रक्षसामपहत्यै, इति ।

( प्रपा० ५ । अनु० ४ । विभा० ९ )

१ ग. त्या मध्यत्वातिश°। २ ख. एवं चानुवचनप्रकार। ३ क. ख. °ध्यत्सूत्त° ४ क. मृ° । ५ ग. °मन्ववा° । ६ ख °णुद्याव° । ७ ग. °वस्येद्ब्र° । ८ ख. त्यादि । त° । ९ ख. तासु गा° । १० ख. °रूपत्वं ध्या° ।

एकामृचमुक्त्वा[1] प्राणानामवसानं कृत्वाऽपि पुनरप्यन्यामृचमेव ब्रूयात्, न त्वन्यं वाग्व्यापारं कुर्यात्। तदिदं सांतत्यम्। एतेन प्राणा अविच्छिन्ना भवन्ति, अन्नं च न विच्छिद्यते, रक्षांसि चापहन्यन्ते।

ऋचां बहुत्वं विधत्ते—

यत्परिमिता अनुब्रूयात्। परिमितमवरुन्धीत। अप-
रिमिता अन्वाह। अपरिमितस्यावरुद्ध्यै, इति।
(प्रपा० ५। अनु० ४। विभा० १०)

ऋचामल्पत्वे फलमप्यल्पं स्यात्। अतः फलबाहुल्याय बह्वीरनुब्रूयात्।

यदुक्तं सूत्रकारेण—"अथैतं प्रचरणीयं महावीरं शफाभ्यां परिगृह्याविच्छिन्नाग्रे वेदेनोपरिष्टात्संमार्ष्टि" इति। तत्र वेदस्य दर्भमयत्वं वारयितुं मौञ्जत्वं विधत्ते—

शिरो वा एतद्यज्ञस्य (३)। यत्प्रवर्ग्यः ऊर्ङ्मुञ्जाः। यन्मौञ्जो
वेदो भवति। ऊर्जैव यज्ञस्य शिरः समर्धयति, इति।
(प्रपा० ५। अनु० ४। विभा० ११)

प्रवर्ग्यस्य यज्ञशिरस्त्वं प्रथमानुवाके प्रपञ्चितम्। मुञ्जास्तृणविशेषाः, तेषां प[शुभि]र्भक्ष्यत्वादूर्ग्रूपत्वम्। अतो वेदस्य मौञ्जत्वे सत्यूर्ग्रूपेण वेदेन यज्ञस्य शि[रः] समृद्धं करोति।

कल्पः—"प्राणाय स्वाहा व्यानाय स्वाहेति स्रुवेणाऽऽहवनीये सप्तैकादश प्राणाहुतीर्हुत्वा" इति। पाठस्तु—

प्राणाय स्वाहा व्यानाय स्वाहाऽपानाय स्वाहा।
चक्षुषे स्वाहा श्रोत्राय स्वाहा। मनसे स्वाहा
वाचे सरस्वत्यै स्वाहा। दक्षाय स्वाहा क्रतवे
स्वाहा। ओजसे स्वाहा बलाय स्वाहा, इति।

प्राणादिदेवेभ्यः स्वाहुतमिदमस्तु। वाच इत्यनेन सरस्वती विशेष्यते, शब्दा[त्मि]काया वाग्देवताया इत्यर्थः। दक्ष उत्साहः। क्रतुः संकल्पः। ओजोऽष्टमो धा[तुः] तत्कार्यं बलम्।

एतैर्मन्त्रैः साध्यान्होमान्विधत्ते—

प्राणाहुतीर्जुहोति। प्राणानेव यजमाने दधाति, इति।
(प्रपा० ५। अनु० ४। विभा० १२)

---

१ ख. °क्त्वा प्रणवेनाव°। २ ग. प्राणनाव°। ३ क. °न्नामच्छि°। ४ क. ख. °स्य।

तत्र सप्तसंख्यापक्षं विधत्ते—

सप्त जुहोति । सप्त वै शीर्षण्याः प्राणाः । प्राणानेवास्मिन्दधाति, इति ।

( प्र० ५ । अ० ४ । वि० १३ )

शिरोगतसप्तच्छिद्रवर्तिप्राणानां सप्तत्वात्संख्यया तत्प्राप्तिः ।

देवस्त्वा सविता मध्वाऽनक्तु ( १ ) ।

कल्पः—"देवस्त्वा सविता मध्वाऽनक्त्विति स्रुवेणोपर्याहवनीये महावीरमक्त्वा" इति । हे महावीर त्वां सविता देवो मध्वा मधुरेण घृतेनानक्तु अक्तं करोतु ।

मध्वेति प्रयोगाद्यजमानस्य तेजोव्याप्तिं दर्शयति—

देवस्त्वा सविता मध्वाऽनक्त्वित्याह ( ४ ) । तेजसैवैनमनक्ति, इति ।

( प्र० ५ । अ० ४ वि० १४ )

पृथिवीं तपसस्त्रायस्व ।

कल्पः—"पृथिवीं तपसस्त्रायस्वेत्यपरस्मिन्खरे राजतं रुक्मं निधाय" इति । हे रुक्म पृथिवीमेतां तपसस्त्रायस्व, अग्निसंतापाद्रक्ष ।

मन्त्रस्य तात्पर्यं दर्शयति—

पृथिवीं तपसस्त्रायस्वेति । हिरण्यमुपास्यति । अस्या अनतिदाहाय, इति ।

( प्र० ५ । अ० ४ । वि० १५ )

अस्याः पृथिव्या इत्यर्थः ।

रुक्मस्योपरि प्रदीप्तानां मुञ्जानां प्रक्षेपं विधत्ते—

शिरो वा एतद्यज्ञस्य । यत्प्रवर्ग्यः । अग्निः
सर्वा देवताः । प्रलवानादीप्योपास्यति ।
देवतास्वेव यज्ञस्य शिरः प्रतिदधाति, इति ।

( प्र० ५ । अ० ४ । वि० १६ )

अग्नेः सर्वदेवतात्वं ते देवा अग्नौ तनूः संन्यदधतेति श्रुतेरवगन्तव्यम् । प्रलवाः कर्षेण लूना मुञ्जामुष्टयः, तानग्नौ सर्वतः प्रदीप्य रुक्मस्योपरि निदध्यात् । एवं सत्य ग्निरूपासु देवतास्वेव प्रवर्ग्यरूपं यज्ञशिरः स्थापनं भवति । प्रदीपनप्रकारस्तु सूत्रकारेण स्पष्टमुक्तः—"द्वयान्मुञ्जप्रलवानादाय दक्षिणेषामग्राणि[1] गार्हपत्ये प्रदीपयत्यर्चिषे[2] त्वेति, षामग्रैरुत्तरेषां मूलानि शोचिषे त्वेति, तेषां मूलैर्दक्षिणेषां[3] मूलानि ज्योतिषे त्वेति, तेषां लैरुत्तरेषामग्राणि तपसे त्वा" इति ।

---

१ ख. °णि तप'। २ ग. 'पयाम्यार्चि°'। ३ क. तेषां मूलैरु°।

प्रदीप्तमुञ्जस्थापने कंचिद्विशेषं विधत्ते—

अप्रतिशीर्णाग्रं भवति । एतद्वै बर्हिर्ह्येषः (९), इति ।

( प्रपा० ९ । अनु० ४ । विभा० १७ )

दीप्तमुञ्जानामग्रं प्रतिशीर्णमितस्ततो विप्रसृतं यथा न भवति तथा समुद्यैव स्थापयेत् । यस्मादयं प्रवर्ग्य एतद्बर्हिर्मुञ्जरूपबर्हिर्युक्तः, तस्माद्वेद्यास्तरणबर्हिष इवाप्रतिशीर्णत्वं युक्तम् ।

अर्चिरसि शोचिरसि ज्योतिरसि तपोऽसि ।

कल्पः—"तान्व्यत्यस्तानुपरि रुक्मे निदधाति, अर्चिरसि शोचिरसि ज्योतिरसि तपोऽसि" इति । हे दक्षिणमुञ्जाग्रभाग त्वमर्चिर्ज्वालारूपोऽसि । हे उत्तरमुञ्जमूलभाग त्वं शोचिः शुचिरूपोऽसि । हे दक्षिणमुञ्जमूलभाग त्वं ज्योतिः प्रकाशरूपोऽसि । हे, उत्तरमुञ्जाग्रभाग त्वं तपः संतापरूपोऽसि ।

मन्त्रतात्पर्यं दर्शयति—

अर्चिरसि शोचिरसीत्याह । तेज एवास्मिन्ब्रह्मवर्चसं दधाति, इति ।

( प्रपा० ९ । अनु० ४ । विभा० १८ )

शरीरकान्तिः श्रुताध्ययनसंपत्तिश्चेत्युभयविधप्रकाशस्तेन मन्त्रेण यजमाने संपद्यते[1]

कल्पः—"सꣳसीदस्व महाꣳ असीति तेषु महावीरं प्रतिष्ठाप्य" इति । पाठस्तु—

सꣳसीदस्व महाꣳ असि । शोचस्व देववीतमः । विधूममग्ने अरुषं मियेध्य । सृज प्रशस्त दर्शतम्, इति ।

हे महावीर सꣳसीदस्व त्वमेतेषु प्रदीप्तमुञ्जेषु सम्यगुपविश । महाꣳ असि गुणैरधिकोऽसि, अतो देववीतमोऽतिशयेन देवैः काम्यो भूत्वा शोचस्व दीप्यस्व[2] हे मियेध्य मेधार्ह, प्रशस्तोत्कृष्टाग्रे, अरुषमरोषणमनुग्रं दर्शतं द्रष्टुं शक्यं शाधूमं विशेषेण सृज ।

प्रौढस्य कर्मणो हेतुत्वान्महच्छब्दार्थः प्रसिद्ध इत्येतद्दर्शयति—

सꣳसीदस्व महाꣳ असीत्याह । महान्ह्येषः, इति ।

( प्रपा० ९ । अनु० ४ । विभा० १९ )

कल्पः— " अञ्जन्ति यं प्रथयन्त इति स्रुवेण महावीरमनक्त्याभिपूरयति च "[3] इति पाठस्तु—

अञ्जन्ति यं प्रथयन्तो न विप्राः । वपावन्तं

१ ग °माने सं° । २ ग. °द्स्वात एतं° । ३ क. ख. °ति वा " इ° ।

नाग्निना तपन्तः । पितुर्न पुत्र उपासि प्रेष्ठः ।
आघर्मो अग्निमृतयन्नसादीत् (२), इति ।

विप्रा ब्राह्मणा ऋत्विजो वपावन्तं मध्ये रन्ध्रयुक्तं यं महावीरं प्रथयन्तो न ख्यापयन्त इवाञ्जन्ति घृतेनाक्तं कुर्वन्ति । कीदृशा विप्राः । अग्निना न तपन्तः ज्वालयाऽत्यन्तं दाहमकुर्वन्तः । अञ्जनाभावे ह्यतितापेन महावीरस्य भङ्गोऽपि प्रसज्येत । स घर्मो विप्रैरक्तो महावार ऋतयन्नृतं यज्ञं निष्पादयन्नग्निमेतमसादीदासन्नम् प्राप्तवान् । तत्र दृष्टान्तः—पितुरुपसि, उपान्तिके, प्रेष्ठः पुत्रो न प्रियतमः पुत्र इव ।

कल्पः—"अध्यधि महावीरमसंस्पृशन्यजमानः प्राञ्चं प्रादेशं धारयमाणो जपत्यनाधृष्या पुरस्तादित्येतैर्यथालिङ्गम्" इति । पाठस्तु—

अनाधृष्या पुरस्तात् । अग्नेराधिपत्ये । आयुर्मे दाः ।
पुत्रवती दक्षिणतः । इन्द्रस्याऽऽधिपत्ये । प्रजां मे दाः ।
सुषदा पश्चात् । देवस्य सवितुराधिपत्ये । प्राणं मे दाः ।
आश्रुतिरुत्तरतः (३) । मित्रावरुणयोराधिपत्ये । श्रोत्रं
मे दाः । विधृतिरुपरिष्टात् । बृहस्पतेराधिपत्ये । ब्रह्म
मे दाः क्षत्रं मे दाः । तेजो मे धा वर्चो मे
धाः । यशो मे धास्तपो मे धाः । मनो मे धाः, इति ।

पुरस्तात्पूर्वस्यां दिशि वर्तमाने हे देवतेऽनाधृष्या केनाप्यतिरस्कार्या त्वमग्नेराधिपत्ये वर्तमाना सती, आयुर्मे दा मे देहि । एवं दिगन्तरेषु योज्यम् । पुत्रवती पुत्रयुक्ता देवता । सुषदा सुखेनोपविष्टा । आश्रुतिः सर्वत्र प्रख्याता । विधृतिः सर्वस्य विधारयित्री । ब्रह्म मन्त्रजातं, क्षत्रं बलं तत्सर्वंशो देहि । तेजः शरीरकान्तिः, वर्चो दीप्तिः, यशः ख्यातिः, तपो नियमविशेषः, मनश्चित्तदार्ढ्यम् । एतत्सर्वं धाः सम्पादय ।

मन्त्रस्य तात्पर्यं दर्शयितुमादौ[२] ब्रह्मवादिनां प्रश्नोत्तरमाह—

ब्रह्मवादिनो वदन्ति । एते वाव त ऋत्विजः । ये दर्शपूर्णमासयोः ।
अथ कथा होता यजमानायाऽऽशिषो नाऽऽशास्त इति । पुरस्ता-

१ ख. °था मन्तं । २ ग. °दौ तावद्ब्रह्म° ।

दाशीः खलु वा अन्यो यज्ञः । उपरिष्टादशीरन्यः ( ६ ), इति ।
( प्रपा० ५ । अनु० ४ । विभा० २० )

दर्शपूर्णमासयोर्ब्रह्मा होताऽध्वर्युरग्नीदित्याम्नाता ऋत्विजो ये सन्ति त ऋत्विजः सर्वेऽप्येत एवात्रापि वर्तन्ते । अथैवं सति तत्र होता यजमानस्याऽऽयुराद्याशिषः प्रार्थितवान्, सूक्तवाकमाशास्तेऽयं यजमानोऽसावित्यादिमन्त्रपाठात् । अत्र तु स एव होता कथा कथमाशिषो नाऽऽशास्त इति ब्रह्मवादिनां प्रश्नः । तत्राभिज्ञस्यैतदुत्तरम् । द्विविधो हि यज्ञः पुरस्तादाशीरुपरिष्टादाशीश्चेति । तथा सति यत्र प्रधानकर्मण ऊर्ध्वमाशीराशासनीया तत्रैव होतुस्तत्कर्तव्यता, इह तु पुरस्तादाशीरिति कृत्वा होता नाऽऽशास्ते ।

अथ मन्त्रतात्पर्यं दर्शयति—

अनाधृष्या पुरस्तादिति यदेतानि यजूंष्याह ।
शीर्षत एव यज्ञस्य यजमान आशिषोऽवरुन्धे, इति ।
( प्रपा० ५ । अनु० ४ । विभा० २१ )

महावीरस्योपरि प्रादेशधारणेनैतेषु यजुःषु यजमानेन पठितेषु यज्ञशिरोरूपमहावीरसकाशादेव यजमानः सर्वा अप्याशिषः प्राप्नोति । एतेषां च यजुषां प्रधानकर्मणः पुरा पठनीयत्वादयं यज्ञः पुरस्तादाशीः ।

कास्ता मन्त्रोक्ता आशिष इत्याशङ्क्य दिग्भेदेन व्यवस्थितांस्ता दर्शयति—

आयुः पुरस्तादाह । प्रजां दक्षिणतः । प्राणं पश्चात् । श्रोत्रमुत्तरतः । विधृतिमुपरिष्टात् । प्राणानेवास्मै समीचो दधाति, इति ।
( प्रपा० ५ । अनु० ४ । विभा० २२ )

विधृतिशब्देन ब्रह्मक्षत्रादयः सर्वेऽपि विधेयत्वादुपलक्ष्यन्ते । अनेन मन्त्रपाठेन यजमानोऽस्मै स्वदेहार्थं प्राणान्समीचोऽनुकूलानवस्थापयति ।

कल्पः—"मनोरश्वाऽसि भूरिपुत्रेत्युत्तरतः पृथिवीमभिमृशति" इति । पाठस्तु—

मनोरश्वाऽसि भूरिपुत्रा । विश्वाभ्यो
मा नाष्ट्राभ्यः पाहि ( ४ ) । सूपसदा
मे भूया मा मा हिꣳसीः, इति ।

हे भूमे त्वं मनोरश्वा मनुष्यजातेर्व्यापिका सती, भूरिपुत्रा बहुभिः पुत्रैर्युक्ताऽसि । ये प्राणिनो भूमेरुत्पन्नास्ते सर्वेऽपि भूमेः पुत्राः । तादृशी त्वं विश्वाभ्यो नाष्ट्रा-

१ क. ख. °र्युराग्नीध्र इत्या° । २ क. ख. मन्त्रार्थता° । ३ क. ख. °ता द° । ४ म. वि-र्येत्वा° । ५ क. ख. °हाय पा° ।

…नाशकारणेभ्यः सर्वेभ्यो मां पाहि, मे मम सूपसदा सुखेन सेवितुं योग्या भूयाः, …ं मा हिꣳसीः, हिंसितं मा कुरु।

अनेन मन्त्रेण साध्यं भूमिस्पर्शं विधत्ते——

ईश्वरो वा एष दिशोऽनून्मदितोः। यं दिशोऽनुव्यास्थापयन्ति (७)। मनोरश्वाऽसि भूरिपुत्रेतीमामभिमृशति। इयं वै मनोरश्वा भूरिपुत्रा। अस्यामेव प्रतितिष्ठत्यनुन्मादाय, इति।

( प्रपा० ९ | अनु० ४ | विभा० २३ )

लोके यं पुरुषं मनुष्या दिशो व्यास्थापयन्ति बह्वीर्दिशोऽनुक्रमेण विविधं संचा…यन्ति, एष संचारी पुरुषो दिशोऽनुलक्ष्योन्मदितोरीश्वर उन्मत्तो भवितुं समर्थो …वति, दिग्भ्रमं प्राप्नोतीत्यर्थः। तस्यानेन मन्त्रेण भूमिस्पर्शे सत्युन्मादो न भवति।

मा हिꣳसीरित्यस्य तात्पर्यं दर्शयति——

सूपसदा मे भूया मा मा हिꣳसीरित्याहाहिꣳसायै, इति।

( प्रपा० ९ | अनु० ४ | विभा० २४ )

कल्पः——"तपो ष्वग्ने अन्तराꣳ अमित्रानिति गार्हपत्यादुदीचोऽङ्गारान्निरुह्य" इति। …ठस्तु——

तपो ष्वग्ने अन्तराꣳ अमित्रान्। तपा शꣳसमररुषः परस्य। तपा वसो चिकितानो अचित्तान्। वि ते तिष्ठन्तामजरा अयासः इति।

हे …ग्नेऽन्तरान्देवयजनमध्ये गूढत्वेन वर्तमानानमित्रान्रक्षोरूपाञ्शत्रून्सुतपः(पो) …ष्ठु तपस्तप्तान्कुरु( वेव )। अररुषः, अररुर्वै नामासुर आसीदिति श्रुतस्याररुनाम…स्य परस्य शत्रोः शꣳसं संस्तवं तप विनाशय। हे वसो वासहेतो वह्ने चिकि…तानोऽभिज्ञस्त्वमचित्तानस्मासु चित्तरहितान्विरोधिनस्तप। ते सर्वेऽप्यमित्रा विति…ष्ठन्तां परस्परमेलनं परित्यज्य विविधं यथा भवति तथा तिष्ठन्तु। ततो वयमजरा …योहानिरहिताः, अयास आयासरहिताश्च भूयास्मेति शेषः।

चितः स्थ परि चितः। स्वाहा मरुद्भिः परिश्रयस्व।

कल्पः—"चितः स्थ परिचित इति प्रदक्षिणमङ्गारैः पर्यू(र्यु)ह्य" इति। स्वाहा …रुद्भिः परिश्रयस्वेति मन्त्रशेषः।

हेऽङ्गारा यूयं गार्हपत्यात्पृथक्कृताः सन्तश्चितो महावीरसमीपे संचिताः परिचितः

स्थ परितः समूहरूपा भवथ । हे महावीर मरुद्भिरङ्गाररूपैर्देवैः स्वाहा परिश्रयस्व सुष्ठु परितो व्याप्तो भव । स्वाहाशब्दो निपातत्वादनेकार्थवाची ।

मन्त्रे पूर्वभागस्य तात्पर्यं दर्शयति—

चितः स्थ परि चित इत्याह । अपचितिमेवास्मिन्दधाति, इति ।

( प्रपा० ९ । अनु० ४ । विभा० २९ )

अङ्गारेषु परितः सेवकवत्स्थितेषु मध्ये स्थितस्य महावीरस्य राज्ञ इव पूजा संपद्यते। उत्तरभागे मैरुच्छब्देन विवक्षितमर्थं दर्शयति—

शिरो वा एतद्यज्ञस्य । यत्प्रवर्ग्यः । असौ खलु वा आदित्यः प्रवर्ग्यः । तस्य मरुतो रश्मयः ( ८ ) । स्वाहा मरुद्भिः परिश्रयस्वेत्याह । अमुमेवाऽऽदित्यꣳ रश्मिभिः पर्यूहति । तस्मादसावादित्योऽमुष्मिँल्लोके रश्मिभिः पर्यूढः । तस्माद्राजा विशा पर्यूढः । तस्माद्ग्रामणीः सजातैः पर्यूढः, इति ।

( प्रपा० ९ । अनु० ४ । विभा० २६ )

यज्ञशिरोरूपः प्रवर्ग्य आदित्यस्थानीयः, देवतात्वेन भाविता अङ्गारा रश्मिस्थानीया अतो महावीरस्याङ्गारैः पर्यूहणेनात्राऽऽदित्यमेव रश्मिभिः परितो व्यापयति यस्मादेवं तस्मात्स्वर्गे लोकेऽप्यादित्यो रश्मिभिर्व्याप्तो दृश्यते । तथा भूलोकेऽपि महावीरवन्मुख्यो राजाऽङ्गारवदुपसर्जनभूतया प्रजया व्याप्तो भवति एकस्मिन्ग्रामे ग्रामणीर्मुख्यः पुरुषः सजातैः सहोत्पन्नैरुपसर्जनैः पुरुषैः परि व्याप्तो दृश्यते ।

कल्पः—" वैकङ्कतैः परिधिभिः परिधत्तो मा असीति प्राञ्चावध्वर्युर्निदधाति ... असीत्युदञ्चौ प्रतिप्रस्थाता । एवमवशिष्टानां पूर्वेण पूर्वेण मन्त्रेणाध्वर्युरुत्तरोत्तरेण प्रतिप्रस्थाताऽध्वर्युरेव दक्षिणतस्त्रयोदशं निदधात्यन्तरिक्षस्यान्तर्धिरसि " इति

पाठस्तु—

मा अ॑सि । प्रमा अ॑सि । प्रतिमा अ॑सि ( ५ ) । संमा अ॑सि । विमा अ॑सि । उन्मा अ॑सि । अन्तरि॑क्षस्यान्तर्धिर॑सि, इति ।

हे परिधे प्रागग्रत्वेन दक्षिणदिग्वर्ती, उत्तरदिग्वर्ती वा त्वं मा असि महास्थानं मातुमियत्तया परिच्छेत्तुं समर्थोऽसि । तथा हे परिधे, उदगग्रत्वेन प्राग्दि

१ ग. 'चीति । म' । २ क. ख. महच्छ° । ३ ग. 'धातीति । ४ ख. ग. पूर्वपू° । °ग्वत्युत्तरदि° ।

पश्चिमदिग्वर्ती वा त्वं **प्रमा असि** प्रकर्षेण मातुं समर्थोऽसि। तृतीयपञ्चममन्त्रौ प्रथममन्त्रवद्व्याख्येयौ। चतुर्थषष्ठमन्त्रौ द्वितीयमन्त्रवद्व्याख्येयौ। एवं त्रिभिर्मन्त्रैर्विषमसंख्योपेतैरध्वर्युर्दिग्द्वये प्रागग्रान्षट्परिधीन्परिदधाति। समसंख्योपेतैर्मन्त्रैः प्रतिप्रस्थाता दिग्द्वय उदगग्रान्षट्परिधीन्परिदधाति। हे[1] त्रयोदशपरिधे त्व**मन्तरिक्षस्य** लोकस्यान्तर्धिरसि महावीराद्व्यवधानकरोऽसि। अनेन मन्त्रेणोर्ध्वलोकदिग्व्यवधानबुद्ध्या दाक्षिणभागेऽध्वर्युरेकं परिधिं परिदध्यात्।

तैर्मन्त्रैः परिधेयानां परिधीनां वृक्षविशेषं विधत्ते—

अग्नेः सृष्टस्य यतः। विकङ्कतं भा आर्च्छत्। यद्वैकङ्कताः परिधयो भवन्ति। भा एवावरुन्धे, इति।
(प्रपा० ९। अनु० ४। विभा० २७)

प्रजापतिसृष्टस्य पलायमानस्याग्नेस्तेजो **विकङ्कतं** वृक्षं[2] प्रति प्राविशत्, अतो वैकङ्कतपरिधिभिस्तत्तेजः प्राप्नोति।

परिधीनां संख्यां विधत्ते—

द्वादश भवन्ति (९)। द्वादश मासाः संवत्सरः। संवत्सरमेवावरुन्धे, इति।
(प्रपा० ९। अनु० ४। विभा० २८)

अधिकमेकं परिधिं विधत्ते—

अस्ति त्रयोदशो मास इत्याहुः। यत्त्रयोदशः परिधिर्भवति। तेनैव त्रयोदशं मासमवरुन्धे, इति।
(प्रपा० ९। अनु० ४। विभा० २९)

ज्योतिःशास्त्रविदः कदाचित्कदाचित्[3]संक्रान्तिरहितोऽधिकमासस्त्रयोदशोऽस्तीत्येवः। त्रयोदशेन परिधिना तन्मासप्राप्तिर्भवति।

अन्तर्धेरेव तात्पर्यं दर्शयति—

अन्तरिक्षस्यान्तर्धिरसीत्याह व्यावृत्त्यै, इति।
(प्रपा० ९। अनु० ४। विभा० ३०)

एतावती महावीरस्य सीमा, इत ऊर्ध्वमन्तरिक्षलोक इति विभागो व्यावृत्तिः।

**दिवं तपसस्त्रायस्व।**

कल्पः—"दिवं तपसस्त्रायस्वेति सौवर्णेन रुक्मेणापिधाय" इति। महावीरस्योपरि ानत्वेन स्थाप्यमान हे **रुक्म दिवं** द्युलोकं **तपसो** वह्नितापा**त्त्रायस्व** पालय।

---

१ क. ख. एवं। २ ग. °क्षं प्रा°। ३ क. °चित्सं°।

एतन्मन्त्रसाध्यं रुक्मस्थापनं विधत्ते—

दिवं तपसस्त्रायस्वेत्युपरिष्टाद्धिरण्यमधि निदधाति। अमुष्या अनतिदाहाय। अथो आभ्यामेवैनमुभयतः परिगृह्णाति, इति।

(प्रपा० ९। अनु० ४। विभा० ३१)

उपरितनरुक्मव्यवधानेन द्युलोकस्यातिदाहो न भवति। अपि चोर्ध्वाधोगताभ्यां रुक्माभ्यामेनं महावीरमुभयतो दृढं परिगृह्णाति।

कल्पः—"आभिर्गीर्भिरिति तिसृभिरभिमन्त्र्य" इति। तत्र प्रथमामाह—

आभिर्गीर्भिर्यदतो न ऊनम्। आप्यायय हरिवो
वर्धमानः। यदा स्तोतृभ्यो महि गोत्रा रुजासि।
भूयिष्ठभाजो अध ते स्याम, इति।

हे हरिवोऽश्वयुक्तेन्द्रत्वेन स्तूयमान महावीराऽऽभिर्गीर्भिरस्मदीयस्तुतिभिर्वर्धमानस्त्वमतोऽस्मात्कर्मण ऊनं यदङ्गं नोऽ(तन्नोऽ)स्मदर्थमाप्याययाभिवर्धय। यदा यस्मिन्काले स्तोतृभ्यः स्तोत्रनुग्रहार्थं महि गोत्रा महतो मेघान्रुजासि भग्नान्करोषि अध तदा वयं ते तवानुग्रहाद्भूयिष्ठभाजः स्याम प्रभूतधनानां लब्धारो भूयास्म।

अथ द्वितीयामाह—

शुक्रं ते अन्यद्यजतं ते अन्यत् (६)। विषुरूपे
अहनी द्यौरिवासि। विश्वा हि माया अवसि
स्वधावः। भद्रा ते पूषन्निह रातिरस्तु, इति।

हे पूषन्पोषक महावीराऽऽदित्यत्वेन स्तूयमान ते तव शुक्रं शुद्धं स्वरूपमनेकप्रकारम्। उदयकाले रक्तवर्णं रूपमन्यत्, मध्याह्नकाले श्वेतवर्णं रूपम इत्येवमनेकप्रकारत्वम्। तथा ते तव यजतं पूजनमप्यन्यत्। प्रातःकाले मित्रस्य चर्षणी धृत इत्यादिभिर्मन्त्रैः पूज्यसे, मध्याह्न आ सत्येनेत्यादिभिः। तथाविधया दिते अहनी अपि विषुरूपे नानारूपे। अहःशब्दश्छत्रिन्यायेन रात्रिमप्युपलक्षयति अहः प्रकाशोपेतं रात्रिस्तमोयुक्तेति नानारूपत्वम्। एवं विचित्रकार्यकृदपि[1] त्वं द्यौरिवासि, आकाशं यथैकरूपं तद्वत्त्वमपि सर्वत्र पक्षपातराहित्यादेकरूपोऽसि। प्रमीयन्ते पदार्था आभिश्चित्तवृत्तिभिस्ताश्चित्तवृत्तयो मायाः। कव्यदानवाचिना शब्देन कृत्स्नमप्यन्नमुपलक्ष्यते। हे स्वधावोऽन्नवन्विश्वा हि मायाः सर्वा अप्ययचित्तवृत्तीरवासि रक्षसि। हे पूषंस्ते तव रातिर्भद्राऽस्तु फलप्रदानं समीचीनं

१ क. °कार्ये कदाऽपि।

अथ तृतीयामाह—

**अर्हन्बिभर्षि सायकानि धन्व । अर्हन्निष्कं यजतं विश्वरूपम् । अर्हन्निदं दयसे विश्वमभ्भुवम् । न वा ओजीयो रुद्र त्वदस्ति, इति ।**

हे रुद्र महावीर रुद्रत्वेन स्तूयमान, अर्हन्योग्यः सन्सायकानि बाणान्धन्व धनुश्च भर्षि हस्तयोर्धारयासि । तथैवार्हन्योग्यः सन्यजतं पूजासाधनं विश्वरूपं नानाविधं ष्कमाभरणं बिभर्षि कर्णकण्ठहस्तादौ धारयासि । तथैवार्हन्योग्यः सन्नभ्भुवमबादिभ्यः भूतेभ्य उत्पन्नमिदं जगद्दयसे पालयसि । अतो हे रुद्र त्वदोजीयस्त्वत्तो बलवत् किमपि नैवास्ति ।

एतन्महावीरस्य सायकादिधारणासंभवमाशङ्क्य स्तुतित्वेन परिहरति—

अर्हन्बिभर्षि सायकानि धन्वेत्याह (१०) । स्तौत्येवैनमेतत्, इति ।

( प्रपा० ५ । अनु० ४ विभा० ३२ )

अनेनैव न्यायेन पूर्वोक्तमन्त्रद्वयार्थासंभवशङ्काऽपि परिहर्तव्या ।

**गायत्रमसि । त्रैष्टुभमसि । जागतमसि ।**

कल्पः—"धवित्राण्यादत्ते गायत्रमसीति प्रथमं त्रैष्टुभमसीति द्वितीयं जागतमसीति तृतीयम्" इति । वायुना ज्वालोत्पादकं व्यजनं धवित्रम् । हे प्रथमधवित्र त्वं गायत्रमसि गायत्रीछन्दोदेवतारूपमसि । एवमुत्तरयोरपि योज्यम् ।

एतैर्मन्त्रैः साध्यमादानं विधत्ते—

गायत्रमसि त्रैष्टुभमसि जागतमसीति धवित्राण्यादत्ते । छन्दोभिरेवैनान्यादत्ते, इति ।

( प्रपा० ५ । अनु० ४ विभा० ३३ )

गायत्रादिशब्दैर्महावीरस्य व्यवहारश्छन्दोदेवताभिरादानसिद्ध्यर्थो द्रष्टव्यः ॥

**मधु मधु मधु ( ७ ) ।**

**अनक्त्वसादीदुत्तरतः पाहि प्रतिमा असि यजतं ते अन्यज्जागतमस्येकं च ॥**

**इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके चतुर्थप्रपाठके पञ्चमोऽनुवाकः ॥ ५ ॥**

---

१ क. °जाध° । २ ग. °व्या । एवमुत्तरयोरपि योज्यम् । क° । ३ ग. °ति । मतै° ।
° यत्र्यादि° ।

कल्पः—"तैरेनं त्रिरूर्ध्वमुपवीजयतीति मधु मधु" इति । तृतीयो मधुशब्दो मन्त्रशेषः । हे धवित्रत्रय मधु समीचीनं ज्वालोत्पादनं यथा भवति तथा वायुं कुर्वीति शेषः।

एतन्मन्त्रसाध्यां क्रियां विधत्ते—

मधु मध्विति धूनोति । प्राणो वै मधु
प्राणमेव यजमाने दधाति, इति ।
( प्रपा० ५ । अनु० ४ । विभा० ३४ )

समीचीनवायुरूपत्वात्प्राणस्य मधुत्वम् ।

यदुक्तं सूत्रकारेण—" तेषामेकं प्रतिप्रस्थात्रे प्रयच्छत्येकमाग्नीध्रायाऽऽग्नीध्रप्रथमास्त्रिः प्रदक्षिणमूर्ध्वं धून्वन्तः परियन्ति" इति । तदिदं विधत्ते—

त्रिः परियन्ति । त्रिवृद्धि प्राणः, इति ।
( प्रपा० ५ । अनु० ४ । विभा० ३५ )

प्राणापानव्यानाख्यवृत्तिभेदात्प्राणस्य त्रैगुण्यं प्रदक्षिणत्रयेण सिध्यति ।

तमेव विधिमनूद्य पुनः प्रशंसति—

त्रिः परियन्ति । त्र्यावृद्धि यज्ञः ( ११ ) । अथो रक्षसामपहत्यै, इति।
( प्रपा० ५ । अनु ४ । विभा० ३६ )

सवनत्रयानुष्ठानेन यज्ञस्याऽऽवृत्तित्रयम् । अपि च प्रदक्षिणत्रयेण रक्षांस्यपहन्यन्ते।

यदुक्तं सूत्रकारेण—"अध्वर्युप्रथमा अनभिधून्वन्तास्त्रिः परियन्ति" इति । तदिदं विधत्ते —

त्रिः पुनः परियन्ति । षट्संपद्यन्ते । षड्वा
ऋतवः । ऋतुष्वेव प्रतितिष्ठन्ति, इति ।
( प्रपा० ५ । अनु० ४ । विभा० ३७ )

पूर्वोक्ताः प्रदक्षिणावृत्तयस्तिस्र एताश्च विपरीतावृत्तयस्तिस्र इत्येवं षट्संपत्तिः।

चतुर्थावृत्तिं निषेधति—

यो वै घर्मस्य प्रियां तनुवमाक्रामति । दुश्चर्मा
वै स भवति । एष ह वा अस्य प्रियां तनुवमाक्रा-
मति। यस्त्रिः परीत्य चतुर्थं पर्येति । एताꣳह वा
अस्योग्रदेवो राजानिराचक्राम ( १२ ) । ततो वै
स दुश्चर्माऽभवत् । तस्मात्त्रिः परीत्य न चतुर्थं
परीयात् । आत्मनो गोपीथाय, इति ।
( प्रपा० ५ । अनु० ४ । विभा० ३८ )

---

१ क. ख. °था कु° । २ क. ख. °तास्त्रि° ।

घर्मस्य महावीरस्य प्रियशरीराक्रमणे त्वग्दोषः स्यात् । यः पुमानपेक्षितं प्रदक्षिणत्रयं कृत्वा ततश्चतुर्थं प्रदक्षिणमनपेक्षितमपि कुर्यात्, स एव प्रियशरीरमाक्रामतीति त्वग्दोषं प्राप्नुयात् । न चैतद्वार्तामात्रं किंतु कश्चिद्राजनिनामकः पुरुष उग्रदेव उग्राणामृत्विजां शास्त्रार्थमुल्लङ्घयतां स्वामी सन्कदाचिदेतां प्रियतनूमाचक्राम । ततोऽपराधात्कुष्ठरोगवानभूत् । अतः स्वदेहरक्षार्थं चतुर्थावृत्तिं न कुर्यात् ।

पवित्राणि प्रशंसति—

प्राणा वै पवित्राणि, इति ।

( प्रपा० ५ । अनु० ४ । विभा० ३९ )

यदुक्तं सूत्रकारेण—" तमभिमुखाः पर्युपविशन्ति पुरस्तादध्वर्युर्दक्षिणतः प्रतिप्रस्थातोत्तरत आग्नीध्रोऽव्यतिषङ्गमूर्ध्वं धून्वन्तः " इति । तत्र पवित्रदण्डानां यः परस्परसंश्लेषाभावस्तामिमं विधत्ते—

अव्यतिषङ्गं धून्वन्ति । प्राणानामव्यतिषङ्गाय क्लृप्त्यै, इति ।

( प्रपा० ५ । अनु० ४ । विभा० ४० )

प्राणादिवृत्तीनां सांकर्यपरिहारेण स्वव्यापारसामर्थ्यार्थो पवित्राणामयमव्यतिषङ्गः । तमभिमुखाः पर्युपविशन्तीति यदुक्तं तद्विधत्ते—

विनिषद्य धून्वन्ति । दिक्ष्वेव प्रतितिष्ठन्ति, इति ।

( प्रपा० ५ । अनु० ४ । विभा० ४१ )

पुरस्तादध्वर्युरित्याद्यभिधानाद्दिक्षु प्रतिष्ठा ।

ऊर्ध्वाभिमुखत्वेन वायूत्पादनं विधत्ते—

ऊर्ध्वं धून्वन्ति । सुवर्गस्य लोकस्य समष्ट्यै, इति ।

( प्रपा० ५ । अनु० ४ । विभा० ४२ )

स्वर्गस्योर्ध्ववर्तित्वादूर्ध्वधूननेन तत्प्राप्तिः ।

सर्वासु दिक्षु धूननं विधत्ते—

सर्वतो धून्वन्ति । तस्मादय५ सर्वतः पवते, इति ।

( प्रपा० ५ । अनु० ४ । विभा० ४३ )

दशातीवान्याह यज्ञस्याऽऽहैष उपरिष्टादाशीरन्यो व्यास्थापयन्ति रश्मयो भवन्ति धन्वेत्याह यज्ञश्चक्राम समष्ट्यै द्वे च ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके पञ्चमप्रपाठके चतुर्थोऽनुवाकः ॥ ४ ॥

---

१ ग. 'षं स प्रा' । २ क. ख. 'र्थ्यार्थं थ' ।

यस्मान्महावीरस्य सर्वासु दिक्षु वायुमुत्पादयन्ति तस्माल्लोकेऽप्ययं वायुः सर्वासु दिक्षु संचरति ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्ये चतुर्थप्रपाठके पञ्चमोऽनुवाकः ॥ ५ ॥

---

अथ चतुर्थे षष्ठोऽनुवाकः ।

---

पञ्चमे महावीरस्थापनमुक्तम् । षष्ठे तस्याभिमन्त्रणमुच्यते । कल्पः—"अध्वर्युर्महावीरमभिमन्त्रयते दश प्राचीर्दश भासि दक्षिणेत्यनुवाकेन" इति । तत्राऽऽदावेकामृचमाह-

दश प्राचीर्दश भासि दक्षिणा । दश प्रतीचीर्दश भास्युदीचीः । दशोर्ध्वा भासि सुमनस्यमानः । स नो रुचं धेह्यहृणीयमानः, इति ।

हे महावीर प्राचीः प्राग्दिग्वर्तिन्यो ज्वाला दशसंख्याका यथा भवन्ति तथा भासि त्वं दीप्यसे । एवं दक्षिणादिषु योज्यम् । ताभिरेताभिः सर्वाभिर्ज्वालाभिः सौमनस्यं प्राप्त(प्तः), स त्वमहृणीयमानः केनाप्यहिंस्यमानः सन्नोऽस्मदर्थं रुचं धेहि तेजो धारय ।

अथ दिग्भेदेन देवताविशेषप्रतिपादकानि पञ्च यजूंषि तत्र प्रथमं यजुराह—

अग्निष्ट्वा वसुभिः पुरस्ताद्रोचयतु गायत्रेण छन्दसा । स मा रुचितो रोचय, इति ।

हे महावीर त्वां पूर्वस्यां दिशि वसुभिर्देवैर्गायत्रीछन्दोदेवतया च सहाग्निर्दे रोचयतु दीपयतु । पुरतो रुचितो दीपितः स त्वं मां रोचय प्रकाशय ।

अस्मिन्मन्त्रे यदग्नेर्दीपकत्वं तन्मुख्यमेव न तूपचारितमित्येवकारेण दर्शयति—

अग्निष्ट्वा वसुभिः पुरस्ताद्रोचयतु गायत्रेण छन्दसेत्याह । अग्निरेवैनं वसुभिः पुरस्ताद्रोचयति गायत्रेण छन्दसा, इति ।

( प्रपा० ५ । अनु० ५ । विभा० १ )

रोचयेत्ययं लोट्प्रत्ययो न विध्यर्थः किंत्वाशीरर्थ इत्येतद्दर्शयति—

स मा रुचितो रोचयेत्याह । आशिषमेवैतामाशास्ते, इति ।

( प्रपा० ५ । अनु० ५ । विभा० २ )

---

१ ग. °चयतित्वत्य° ।

अथ दक्षिणादिदिग्देवताविषयाणि चत्वारि यजूंष्याह—

इन्द्रस्त्वा रुद्रैर्दक्षिणतो रोचयतु त्रैष्टुभेन छन्दसा । स मा रुचितो रोचय । वरुणस्त्वाऽऽदित्यैः पश्चाद्रोचयतु जागतेन छन्दसा । स मा रुचितो रोचय (१) । द्युतानस्त्वा मारुतो मरुद्भिरुत्तरतो रोचयत्वानुष्टुभेन छन्दसा । स मा रुचितो रोचय । बृहस्पतिस्त्वा विश्वैर्देवैरुपरिष्टाद्रोचयतु पाङ्क्तेन छन्दसा । स मा रुचितो रोचय, इति ।

पूर्वोक्ताग्निविषययजुर्वदिन्द्रादिविषयाणि चत्वारि यजूंषि व्याख्येयानि । तेषु चतुर्ष्वपि यजुःषूच्चारव्यावृत्तिमेवकारेण लोट्प्रत्ययस्याऽऽशीरर्थत्वं च पूर्ववद्दर्शयति

इन्द्रस्त्वा रुद्रैर्दक्षिणतो रोचयतु । त्रैष्टुभेन छन्दसेत्याह । इन्द्र एवैनꣳ रुद्रैर्दक्षिणतो रोचयति त्रैष्टुभेन छन्दसा । स मा रुचितो रोचयेत्याह । आशिषमेवैतामाशास्ते । वरुणस्त्वाऽऽदित्यैः पश्चाद्रोचयतु जागतेन छन्दसेत्याह । वरुण एवैनमादित्यैः पश्चाद्रोचयति जागतेन छन्दसा (१)। स मा रुचितो रोचयेत्याह । आशिषमेवैतामाशास्ते । द्युतानस्त्वा मारुतो मरुद्भिरुत्तरतो रोचयत्वानुष्टुभेन छन्दसेत्याह । द्युतान एवैनं मारुतो मरुद्भिरुत्तरतो रोचयत्यानुष्टुभेन छन्दसा । स मा रुचितो रोचयेत्याह। आशिषमेवैतामाशास्ते । बृहस्पतिस्त्वा विश्वैर्देवैरुपरिष्टाद्रोचयतु पाङ्क्तेन छन्दसेत्याह । बृहस्पतिरेवैनं विश्वैर्देवैरुपरिष्टाद्रोचयति पाङ्क्तेन छन्दसा । स मा रुचितो रोचयेत्याह । आशिषमेवैतामाशास्ते, (२) । इति ।

( प्रपा० ५ । अनु० ५ । विभा० । ३ )

अथ यजुरन्तरमाह—

रोचितस्त्वं देव घर्म देवेष्वसि ।
रोचिषीयाहं मनुष्येषु, इति ।

हे देव द्योतमान घर्म महावीर त्वं देवेषु मध्ये रोचितः प्रकाशितोऽसि । अतत्प्रसादादहमपि मनुष्येषु मध्ये रोचिषीय प्रकाशितो भूयासम् । तन्मन्त्रे भागद्वयगतयोरर्थयोः प्रसिद्धिमवश्यंभावित्वं च हिशब्देनैवकारेण[च?]दर्शयति-

रोचितस्त्वं देव घर्म देवेष्वसीत्याह । रोचितो ह्येष देवेषु । रोचिषीयाहं मनुष्येष्वित्याह । रोचत एवैष मनुष्येषु, इति ।

( प्रपा० ५ । अनु० ५ । विभा० ४ )

अथ यजुरन्तरमाह—

सम्राड्घर्म रुचितस्त्वं देवेष्वायुष्माꣳस्तेजस्वी ब्रह्मवर्चस्यसि । रुचितोऽहं मनुष्येष्वायुष्माꣳस्तेजस्वी ब्रह्मवर्चसी भूयासम्, इति ।

हे घर्म महावीर त्वं देवेषु मध्ये बहुगुणयुक्तोऽसि। के ते गुणा इति त उच्यन्ते सम्राट्साम्राज्ययुक्तः, रुचितः प्रकाशितः, आयुष्मान्दीर्घेणाऽऽयुषा युक्तः, तेजस्वी महत्या कान्त्या युक्तः, ब्रह्मवर्चसी श्रुताध्ययनसंपन्नः । त्वत्प्रसादादहमपि मनुष्येषु मध्ये रुचितत्वादिगुणयुक्तो भूयासम् ।

अत्रापि हिशब्दैवकाराभ्यां मन्त्रभागौ पूर्ववद्व्याचष्टे—

सम्राड्घर्म रुचितस्त्वं देवेष्वायुष्माꣳस्तेजस्वी ब्रह्मवर्चस्यसीत्याह । रुचितो ह्येष देवेष्वायुष्माꣳस्तेजस्वी ब्रह्मवर्चसी । रुचितोऽहं मनुष्येष्वायुष्माꣳस्तेजस्वी ब्रह्मवर्चसी भूयासमित्याह । रुचित एवैष मनुष्येष्वायुष्माꣳस्तेजस्वी ब्रह्मवर्चसी भवति, इति ।

( प्रपा० ९ । अनु० ९ । विभा०९ )

अथ यजुरन्तरमाह—

रुगसि । रुचं मयि धेहि[1] ( २ ) । मयि रुक्, इति ।

हे महावीर रुगसि त्वमेव दीप्तिरूपोऽसि । अतो मयि रुचं दीप्तिं धेहि सं त्वदनुग्रहाद्रुग्दीप्तिर्मयि तिष्ठत्विति शेषः ।

धेहीत्यस्य लोट्प्रत्ययस्याऽऽशीरर्थत्वं दर्शयति—

रुगसि रुचं मयि धेहि मयि रुगित्याह । आशिषमेवैतामाशास्ते, इति ।

( प्रपा० ९ अनु० ९ विभा० ६ )

अथ यजुरन्तरमाह—

दश पुरस्ताद्रोचसे । दश दक्षिणा । दश प्रत्यङ् । दशोदङ् । दशोर्ध्वो[2] भासि सुमनस्यमानः । स

१ ग. °हि। म° । २ ग. °शोर्ध्वा भा° ।

नः सम्राडिषमूर्जं धेहि । वाजी वाजिने पवस्व ।

रोचितो घर्मो रुचीय (२), इति ॥

रोचय धेहि नवं च ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके चतुर्थप्रपाठके षष्ठोऽनुवाकः ॥ ६ ॥

अनुवाकादौ दश प्राचीरिति योऽर्थ उक्तः सोऽत्रोपसंह्रियते । हे महावीर पुरस्तात्पूर्वस्यां दिशि दश दीप्तयो यथा भवन्ति तथा त्वं रोचसे दीप्यसे । एवं दक्षिणादिषु दिक्षु द्रष्टव्यम् । अतः सुमनस्यमानः सौमनस्यं प्राप्तः सम्राट्साम्राज्यं प्राप्तः त्वं नोऽस्माकमिषमूर्जं च धेहि संपादय । वाजी समृद्धान्नस्त्वं वाजिने अन्नाय मह्यं पवस्व सर्वं भोग्यं शोधय । एवमनेन प्रकारेण घर्मो महावीरो रोचितोऽस्माभिः प्रकाशितः, अतस्त्वत्प्रसादादहमपि रुचीय प्रकाशवान्भूयासम् ।

यदुक्तं सूत्रकारेणोपोत्तिष्ठन्नध्वर्युराह रुचितो घर्म इति तदिदं कालसहितं दर्श्यते—

तं यदेतैर्यजुर्भिररोचयित्वा । रुचितो घर्म इति प्रब्रूयात् ।
अरोचुकोऽध्वर्युः स्यात् । अरोचुको यजमानः । अथ
यदेनमेतैर्यजुर्भी रोचयित्वा । रुचितो घर्म इति प्राह ।
रोचुकोऽध्वर्युर्भवति । रोचुको यजमानः (३), इति ।
(प्रपा० ५ । अनु० ५ । विभा० ७)

पश्चाद्रोचयति जागतेन छन्दसा स मा रुचितो रोचयेत्याहाऽऽशिषमेवैतामाशास्ते शास्तेऽष्टौ च ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके पञ्चमप्रपाठके पञ्चमोऽनुवाकः ॥ ५ ॥

तं महावीरं यद्येतैरनुवाकोक्तैर्यजुभिर्मन्त्रैररोचयित्वा प्रकाशितमकृत्वा प्रथमत एव घर्मो महावीरो रुचितः प्रकाशित इति प्रब्रूयात्तदाऽध्वर्युयजमानौ दीप्तिरहितौ स्याताम् । यजुष्पाठादूर्ध्वं तु नायं दोषः, तस्मादुत्तरकाल एव रुचितो घर्म इति वाक्यमध्वर्युर्ब्रूयात् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्ये चतुर्थप्रपाठके षष्ठोऽनुवाकः ॥ ६ ॥

---

१ घ. (३) । २ घ. ॥ ५ ॥ ३ क. ख. सर्वभो°

अथ चतुर्थे सप्तमोऽनुवाकः ।

षष्ठे महावीराभिमन्त्रणमुक्तम् । अथ सप्तमे महावीरावेक्षणमुच्यते । कल्पः— "यथालोकमवस्थाय सर्व ऋत्विजो यजमानश्चाधीयन्तो महावीरमवेक्षन्ते, अपश्यं गोपाम्" इति । तस्यानुवाकस्याऽऽदावेकामृचमाह—

अपश्यं गोपामनिपद्यमानम् । आ च परा च पथिभिश्चरन्तम् । स सध्रीचीः स विषूचीर्वसानः । आवरीवर्ति भुवनेष्वन्तः, इति ।

अहं महावीरमपश्यं दृष्टवानस्मि । कीदृशम् । गोपां कर्मनिष्पादनेन रक्षकम् अनिपद्यमानं विनाशरहितम्, अथवाऽऽदित्यरूपेण पतनरहितम् । तथा पथिभि र्नानामार्गैराचरन्तं च पराचरन्तं च, आदित्यरूपः सन्नाभिमुख्येन प्रातःकाले सम् गच्छन्तं सायंकाले पराङ्मुखत्वेन गच्छन्तम् । स महावीर आदित्यरूपः सध्रीची सहावस्थिता अपि विषूचीर्नानादेशेषु विभज्य गच्छन्तीरपि प्रजाः सर्वा वसानः स्वकीयरश्मिभिराच्छादयन्निव वर्तते । अथवैकत्रावस्थितास्तत्र तत्र पृथगवस्थिता मरीचीः स्वस्मिन्नाच्छादयन्वर्तते । स च भुवनेष्वन्तः सर्वेषु लोकेषु मध्य आवरी वर्ति पुनः पुनरावर्तते । सोऽयं मन्त्र उपरिष्टाद्व्याख्यास्यते ।

तत्र प्रथमं तावत्प्रवर्ग्यस्य कालं विधत्ते—

शिरो वा एतद्यज्ञस्य । यत्प्रवर्ग्यः । ग्रीवा उपसदः । पुरस्तादुपसदां प्रवर्ग्यं प्रवृणक्ति । ग्रीवास्वेव यज्ञस्य शिरः प्रतिदधाति, इति ।

( प्रपा० ९ । अनु० ६ । विभा० १ )

प्रवर्ग्यस्य यज्ञशिरोरूपत्वादुपसदां च यज्ञग्रीवारूपत्वादुभयोः सामीप्यायो दनुष्ठानात्प्रागेव प्रवर्ग्यकर्मानुतिष्ठेत् । तप्ते घृते पयःप्रक्षेपः प्रवृञ्जनं तद्यस्मिन्कर्मवि विद्यते सोऽयं प्रवर्ग्यः, स कर्मविशेषो यथा संपद्यते तथा प्रवृञ्जनं कुर्यादित्यर्थः। प्रवर्ग्योपसदोः सामीप्ये सति यथा लोके ग्रीवायां शिरः प्रतिहितं भवति तथैतत् द्यते । ग्रीवास्विति वचनव्यत्ययः ।

प्रवर्ग्यस्याऽऽवृत्तिं विधत्ते—

त्रिः प्रवृणक्ति । त्रय इमे लोकाः । एभ्य एव लोकेभ्यो यज्ञस्य शिरोऽवरुन्धे, इति ।

( प्रपा० ९ । अनु० ६ । विभा० २ )

१ ग. °ध्रीचीरेकत्र स° । २ क. ख. 'षूचीः खननदे' । ३ क. ख. °श्च स° । °सदोऽनु° । ५ म. °वर्ग्यं क° ।

उपसदां दिनत्रयेऽनुष्ठेयत्वात्तत्समीपवर्ती प्रवर्ग्योऽपि दिनत्रयेऽनुष्ठेयः । तथा सति लोकत्रयार्थं यज्ञशिरः प्रतिहितं भवति ।

सायं प्रातश्चेति कालद्वयानुष्ठानं प्रशंसति—

षट्संपद्यन्ते । षड्वा ऋतवः ( १ ) ।
ऋतुभ्य एव यज्ञस्य शिरोऽवरुन्धे, इति ।

( प्रपा० ५ । अनु० ६ । विभा० ३ )

एकैकस्मिन्दिने कालभेदेन द्विरनुष्ठानात्षट्संख्या संपद्यते[1] । तत ऋतुभ्यः सकाशा-द्यज्ञशिरः संपादितं भवति ।

दिनषट्कपक्षं विधत्ते—

द्वादशकृत्वः प्रवृणक्ति । द्वादश मासाः संवत्सरः ।
संवत्सरादेव यज्ञस्य शिरोऽवरुन्धे, इति ।

( प्रपा० ५ । अनु० ६ । विभा० ४ )

षट्सु दिनेषु कालद्वयानुष्ठानेन द्वादशत्वम् ।

द्वादशसु दिनेष्वनुष्ठानाविधिमभिप्रेत्य प्रशंसति—

चतुर्विꣳशतिः संपद्यन्ते । चतुर्विꣳशतिरर्धमासाः ।
अर्धमासेभ्य एव यज्ञस्य शिरोऽवरुन्धे, इति ।

( प्रपा० ५ । अनु० ६ । विभा० ५ )

द्वादशस्वपि दिनेषु कालद्वयानुष्ठानेन चतुर्विंशतिसंपत्तिः । अग्निष्टोमे त्रिष्वेव दिने-ष्वुपसदोऽग्निचयने षट्सु दिनेष्वहीने सत्रे[2] च द्वादशसु दिनेषु तदनुसारेण प्रवर्ग्यावृत्तिः । तच्च सूत्रकारेण संगृहीतम्—"त्र्युपसत्के षट्कृत्वः षडुपसत्के द्वादशकृत्वो द्वादशो-पसत्के चतुर्विंशतिकृत्वः" इति ।

विकल्पितं पक्षान्तरं विधत्ते—

अथो खलु । सकृदेव प्रवृज्यः । एकꣳ हि शिरः ( २ ), इति ।

( प्रपा० ५ । अनु० ६ । विभा० ६ )

पक्षान्तरोपन्यासायाथोशब्दः शिरस एकत्वात्तत्स्थानीयोऽयं[3] प्रवर्ग्यः सकृदेवानुष्ठेयो नत्वावृत्त्येति केषांचित्पक्षः । एतच्च सूत्रकारेण विस्पष्टमुदाहृतम्—"सुत्यायां प्रवृञ्ज-न्तमेके समामनन्ति । तत्र मीमांसा । यदा पुरस्तादरुणः स्यादथ प्रवृज्य उपकाश उप-स्त्युषं समयाविषित[4] उदितानुदित उदिते वा प्रातः संगवे मध्यंदिने[5] वा पवमाने[6] स्तुत आग्नीध्रागारे प्रवृञ्ज्यः सकृदेव प्रवृज्य इति विज्ञायते" इति ।

---

[1] क ख. संपद्यन्ते । [2] ग. °त्रे द्वा° [3] ग. °नीयः प्र° । [4] ग. °यास्तविषि° । [5] ग. °मे । [6] ग. माध्यंदिने ।

प्रवर्ग्यस्याग्निष्टोमसंबन्धं विधत्ते—

अग्निष्टोमे प्रवृणक्ति । एतावान्वै यज्ञः । यावानग्निष्टोमः ।
यावानेव यज्ञः । तस्य शिरः प्रतिदधाति, इति ।
( प्रपा० ५ । अनु० ६ । विभा० ७ )

यावन्तः सोमयागाः सन्ति तेषु सर्वेष्वप्यग्निष्टोमः संचार्यतः सर्वयज्ञात्मकः, तत्रा- नुष्ठिते सति कृत्स्नेऽपि यज्ञे शिरः प्रतिहितं भवति । अनारम्याधीतस्य प्रवर्ग्यस्य यद्यपि पुरस्तादुपसदामितिवाक्येनैव प्रकृतिभूताग्निष्टोमसंबन्धः प्राप्तः, तथाऽपि शाखान्तरगतं न प्रथमयज्ञे प्रवृञ्ज्यादिति निषेधमपोद्य प्रतिप्रसवार्थं पुनर्विधानम् । निषेधस्त्वतिरात्रेऽपि चारितार्थो भविष्यति, तस्यापि विकल्पितः प्रथमयज्ञत्वात् । तथाचाऽऽपस्तम्ब आह— "अग्निष्टोमः प्रथमयज्ञोऽतिरात्रमेके पूर्वं समामनन्ति" इति ।

पुरस्तादुपसदामितिवाक्येनोक्थ्येऽप्युपसद्भावात्पूर्वं प्रवर्ग्यस्यापि प्राप्तौ निषेधयति—

नोक्थ्ये प्रवृञ्ज्यात् । प्रजा वै पशव उक्थानि ।
यदुक्थ्ये प्रवृञ्ज्यात् । प्रजां पशूनस्य निर्दहेत्, इति ।
( प्रपा० ५ । अनु० ६ । विभा० ८ )

एह्यू षु ब्रवाणीत्यादीनि शास्त्राण्यत्रोक्थशब्देनावि(भि)धीयन्ते तान्यर्हतीत्युक्थ्य क्रतुः, तत्र प्रवृञ्जनेनोक्थशास्त्रसाध्याः प्रजाः पशवश्च दह्येयुः (रन्), तस्मात्तत्र [न] प्रवृञ्ज्यात् ।

उक्थ्याविशेषे प्रतिप्रसवं विधत्ते—

विश्वजिति सर्वपृष्ठे प्रवृणक्ति ( ३ ) । पृष्ठानि वा अच्युतं
च्यावयन्ति । पृष्ठैरेवास्मा अच्युतं च्यावयित्वाऽवरुन्धे, इति ।
( प्रपा० ५ । अनु० ६ । विभा० ९ )

रथंतरबृहद्वैरूपवैराजशाक्वररैवतसामसाध्यानि पृष्ठस्तोत्राणि सर्वाण्यपि यस्मिन्वि- श्वजिद्यागे विद्यन्ते सोऽयं सर्वपृष्ठः । यद्यपि विश्वजिदुक्थ्यसंस्थो नात्र प्रसिद्धः, तथा- शाखान्तरे तत्सद्भावमभिप्रेत्य नोक्थ्ये प्रवृञ्ज्यादिति निषेधं वारयितुं पुनर्विधि- सर्वत्र पृष्ठस्तोत्राणि अच्युतं न च्युतमपि दोषं च्यावयन्ति विनाशयन्ति । अत्र पृष्ठस्तोत्रैरेवाच्युतं निषेधप्रयुक्तं प्रबलमपि दोषं च्यावयित्वा प्रवर्ग्यफलमपि प्राप्नोति

तदेवं बुद्धिस्थं प्रवर्ग्यविधिविचारं परिसमाप्य प्रकृतस्यैव मन्त्रस्य प्रथमपादे भागं व्याचष्टे—

अपश्यं गोपामित्याह । प्राणो वै गोपाः ।

---

१ ग. °नोक्तोऽप्यु° । २ क. निषेधति ३ क. ख. °ब्देन वि° । ४ क. ख. °तं प्रच्यु°

प्राणमेव प्रजासु वियातयति, इति ।
( प्रपा० ९ । अनु० ६ । विभा० १० )

प्राणो हि स्वावस्थानेन शरीराणि गोपायतीति गोपाः । मन्त्रे च प्राणत्वेन स्तुतिभिप्रेत्य महावीरे गोपाशब्दः प्रयुक्तः । अतो गोपामपश्यमित्युक्ते सति सर्वासु प्रजासु णमेव प्रसारितवान्भवति ।

आदित्यरूपेण स्तुतिमभिप्रेत्य पुनरपि व्याचष्टे—

अपश्यं गोपामित्याह । असौ वा आदित्यो गोपाः । स हीमाः प्रजा गोपायति । तमेव प्रजानां गोप्तारं कुरुते, इति ।
( प्रपा० ९ । अनु० ६ । विभा० ११ )

आदित्यो ह्युदयेन प्रकाशं कृत्वा सर्वाः प्रजा गोपायतीति गोपाः, तद्रूपत्वेन तुतत्वान्महावीरो गोपाः । एतत्पाठेन यजमानमेव प्रजानां गोप्तारं करोति ।

प्रथमपादस्योत्तरभागोक्तादित्यरूपेणावस्थितस्य महावीरस्य भूमौ पतनाभावः प्रसिद्ध ते दर्शयति—

अनिपद्यमानमित्याह ( ४ ) । न ह्येष निपद्यते, इति ।
(प्रपा० ९ । अनु० ६ । विभा० १२ )

द्वितीयपादोक्तं नानामार्गैरादित्यस्याऽऽगमनं परागमनं च प्रसिद्धमिति दर्शयति—

आ च परा च पथिभिश्चरन्तमित्याह ।
आ च ह्येष परा च पथिभिश्चरति, इति ।
( प्रपा० ९ । अनु० ६ । विभा० १३ )

यदाऽयमादित्य उदयं प्राप्तः सर्वाः प्रजा अभितो विशेषेण पश्यति तदानीं स्वेन ह वर्तमाना दूरे विविधं प्रसृताश्च मरीचीर्वस्त्रै[1]वद्वसानो वर्तत इत्येतत्प्रसिद्धमित्येतादृशं तीयपादाभिप्रायं दर्शयति—

स सध्रीचीः स विषूचीर्वसान इत्याह । सध्रीचीश्च ह्येष विषूचीश्च वसानः प्रजा अभिविपश्यति, इति ।
( प्रपा० ९ । अनु० ६ । विभा० १४ )

चतुर्थपादोक्ता भुवनमध्ये सूर्यस्याऽऽवृत्तिः प्रसिद्धेति दर्शयति—

आ वरीवर्ति भुवनेष्वन्तरित्याह । आ ह्येष वरीवर्ति भुवनेष्वन्तः, इति ।
( प्रपा० ९ । अनु० ६ । विभा० १५ )

---

१ क. °रीचीः शस्त्रद्वयं वसा° । २ ख. °स्त्रद्वयं वसा° ।

अथ वसन्तर्तुरूपेण स्तावकं मन्त्रमाह—

अत्र प्रावीः। मधुमाध्वीभ्यां मधुमाधूचीभ्याम् । अनु वां देववीतये, इति ।

हे महावीरात्रास्मिन्कर्मणि मधुमाध्वीभ्यां सहितस्त्वं प्रावीरस्मान्प्रकर्षेण रक्षितवानसि । मधुशब्दो वसन्तावयवचैत्रमासाभिमानिदेवमाचष्टे, माध्वीशब्दस्तत्पत्नीम् । तथा द्वितीयो मधुशब्दो वसन्तावयववैशाखमासाभिमानिदेवमाचष्टे, माधूचीशब्दस्तत्पत्नीम् । ताभ्यां सहितस्त्वं प्रावीरित्यन्वयः । वां वसन्तदेवौ युवामनुसृत्य देववीतये देवप्राप्त्यर्थम्, महावीरमवेक्षे इति शेषः ।

मन्त्रस्य वसन्तर्तुपरतां दर्शयति—

अत्र प्रावीर्मधुमाध्वीभ्यां मधुमाधूचीभ्यामित्याह ।
वासान्तिकावेवास्मा ऋतू कल्पयति, इति ।
( प्रपा० ५ । अनु० ६ । विभा० १६ )

अस्मै यजमानार्थं वसन्तसंबन्धिनावृत्ववयवौ चैत्रवैशाखमासौ स्वोचितभोगप्रदानसमर्थौ करोति ।

अथ ग्रीष्मर्तुरूपेण स्तावकं मन्त्रमाह—

समग्निरग्निना गत । सं देवेन सवित्रा ।
सꣳ सूर्येण रोचते ( १ ), इति ।

अग्निशब्दाभ्यामत्युष्णौ ग्रीष्मावयवौ ज्येष्ठाषाढमासौ विवक्षितौ । तत्रैकोऽग्निर्ज्येष्ठमासरूपो द्वितीयेनाग्निनाऽऽषाढमासरूपेण संगतोऽभूत् । तदुभयमासवर्तिनावादित्यं सवितृसूर्यशब्दाभ्यां विवक्ष्येते । अयं महावीराख्यो देवो ज्येष्ठमासे सवित्रा संगत आषाढमासे सूर्येण संगत्य रोचते ।

अस्य मन्त्रस्य ग्रीष्मर्तुपरतां दर्शयति—

समग्निरग्निना गतेत्याह ( ५ ) । ग्रैष्मावेवास्मा ऋतू कल्पयति, इति ।
( प्रपा० ५ । अनु० ६ । विभा० १७ )

वसन्तवाक्यवद्व्याख्येयम् ।

तस्यैव मन्त्रस्यार्थान्तरं दर्शयति—

समग्निरग्निना गतेत्याह । अग्निर्ह्येवैषोऽग्निना संगच्छते, इति ।
( प्रपा० ५ । अनु० ६ । विभा० १८ )

---

१ क. ख. °यवार्थवै° । २ क. ख. °वतामा° । ३ क. °म्, अवे° । ४ ग. °क्षत ।
५ ग. गतः । ६ क. °मासरूपेण वि° । ७ ख. तत्रैव । ८ ख. °स्यार्थं द° ।

एष महावीररूपोऽग्निरादित्यरूपेणाग्निना संगच्छत इत्ययमर्थः प्रसिद्धः ।

पुनरपि ग्रीष्मर्तुरूपेणैव स्तावकं मन्त्रान्तरमाह—

**स्वाहा समग्निस्तपसा गत । सं देवेन सवित्रा । सꣳ सूर्येणारोचिष्ट, इति ।**

स्वाहाशब्दो निपातत्वादनेकार्थः । अग्निवदुष्णरूपो ज्येष्ठमासस्तपसा तापयुक्ते-नाऽऽषाढमासेन स्वाहा सुष्ठु समागतः संगतोऽभूत् । सं देवेनेत्यादि पूर्ववत् ।

अस्य मन्त्रस्य पूर्वमन्त्रेण सह समानार्थतां दर्शयति—

स्वाहा समग्निस्तपसा गतेत्याह । पूर्वमेवोदितम् । उत्तरेणाभिगृणाति, इति ।

( प्रपा० ५ । अनु० ६ । विभा० १९ । )

ग्रीष्मविषयत्वं पूर्वस्मिन्मन्त्रेऽभिहितमेव ग्रीष्ममुत्त(मेवोत्त)रमन्त्रेणापि श्रुतिर्ब्रूते ।

अथ वर्षर्तुरूपेण स्तावकं मन्त्रमाह—

**धर्ता दिवो विभासि रजसः । पृथिव्या धर्ता । उरोरन्तरिक्षस्य धर्ता । धर्ता देवो देवानाम् । अमर्त्यस्तपोजाः, इति ।**

हे महावीर वर्षर्तुरूपेण दिवो द्युलोकस्य रजसो मेघादिरञ्जनोपेतस्य धर्ता [धा]रको विभासि प्रकाशसे । तथौषधीजननेन पृथिव्या अपि धर्ता, स्वकीयवृष्टिप्र-[दा]रणेनोरोर्विस्तीर्णस्यान्तरिक्षस्यापि धर्ता, हविर्द्वारेणोपकारकत्वाद्देवानामपि धर्ता [पो]षको देवः । अत एवामर्त्यो मरणरहितः, दीक्षादिरूपेण तपसा जायते सिध्यतीति [त]पोजाः ।

अस्य मन्त्रस्य वर्षर्तुपरतां दर्शयति—

धर्ता दिवो विभासि रजसः पृथिव्या इत्याह । वार्षिकावेवास्मा ऋतू कल्पयति, इति ।

वसन्तमन्त्रवद्व्याख्येयम् ।

( प्रपा० ५ अनु० ६ । विभा० २० )

शारदर्तु(शरदृतु)रूपेण स्तावकं मन्त्रमाह—

**हृदे त्वा मनसे त्वा । दिवे त्वा सूर्याय त्वा ( २ ) । ऊर्ध्वमिममध्वरं कृधि । दिवि देवेषु होत्रा यच्छ, इति ।**

हे महावीर त्वां हृदे हृदयार्थमवेक्ष इति शेषः । मनसे मनोर्थं त्वामवेक्षे । अत्र [हृन्]मनःशब्दाभ्यामनुकूलभोगार्थत्वेन चिन्त्यमानावाश्वयुजकार्तिकमासावुपलक्ष्येते । तन्मा-

ग. गतः ।

सद्वयोचितभोगसिद्ध्यर्थमित्यर्थः। तथा **दिवे** द्युलोकप्राप्त्यर्थं, **सूर्याय** सूर्यप्राप्त्यर्थं त्वामवेक्षे। **इममस्मदीयमध्वरं** यागमूर्ध्वं **कृधि**, उन्नतं कुरु। **होत्रा इमा** होमक्रि **दिवि** द्युलोके **देवेषु** मध्ये **यच्छ** देहि कथयेत्यर्थः।

अस्य मन्त्रस्य शारदर्तु(शरदृतु)परतां दर्शयति—

हृदे त्वा मनसे त्वेत्याह। शारदावेवास्मा ऋतू कल्पयति (६), इति।

(प्रपा० ५। अनु० ६। विभा० २१)

वसन्तवाक्यवद्व्याख्येयम्।

मन्त्रचरमभागेन(ण)सर्वेषां लोकानां होमक्रियाभिसंबन्धं दर्शयति—

दिवि देवेषु होत्रा यच्छेत्याह। होत्राभिरेवेमाँल्लोकान्संदधाति, इति।

(प्रपा० ५। अनु० ६। विभा० २२)

अथ हेमन्तर्तुरूपेण स्तावकं मन्त्रमाह—

**विश्वासां भुवां पते। विश्वस्य भुवनस्पते।**
**विश्वस्य मनसस्पते। विश्वस्य वचसस्पते।**
**विश्वस्य तपसस्पते। विश्वस्य ब्रह्मणस्पते।**

जम्बूद्वीपादयो या भुवस्तासां **भुवां विश्वासां** सर्वासां हे **पते** पालक हेमन्तर्तुरू महावीर त्वामवेक्ष इति शेषः। **भुवनो** भवनस्य लोकजातस्य, **मनसो**ऽन्तःकरणजातस्य **वचसो** वाक्यजातस्य, **तपसस्**तपोजातस्य, **ब्रह्मणो** वेदजातस्य, **पते** पालक त्वामवेक्षे।

अस्य मन्त्रस्य हेमन्तर्तुपरतां दर्शयति—

विश्वासां भुवां पत इत्याह। हैमन्तिकावेवास्मा ऋतू कल्पयति, इति।

(प्रपा० ५। अनु० ६। विभा० २३)

वसन्तवाक्यवद्व्याख्येयम्।

शै(शि)शिरर्तुरूपेण स्तावकं मन्त्रमाह—

**देवश्रूस्त्वं देव घर्म देवान्पाहि,** इति।

हे **घर्म** प्रवर्ग्य **देव** शै(शि)शिरर्तुरूप, **देवश्रूर्**देवेषु श्रूयमाण**स्त्वं देवान्**हविर्दानेन **पाहि** रक्ष।

अस्य मन्त्रस्य शै(शि)शिरर्तुपरतां दर्शयति—

देवश्रूस्त्वं देव घर्म देवान्पाहीत्याह। शैशि-
रावेवास्मा ऋतू कल्पयति, इति।

(प्रपा० ५। अनु० ६। विभा० २४)

---

१ क. ख. °न्तरू°।

वसन्तवाक्यवद्व्याख्येयम्।

अथ बहूनि वाक्यानि नानाविधैः स्तावकान्युच्यन्ते। तत्रैकवाक्यतामाह—

**तपोजां वाचमस्मे नियच्छ देवायुवम् (३), इति।**

हे महावीरास्मेऽस्मभ्यं **तपोजां** तपस उत्पन्नां **देवायुवं** देवानिच्छन्तीं **वाचं** मन्त्ररूपां **नियच्छ** नितरां देहि।

तपोजामित्यनेन यज्ञयोग्या मन्त्ररूपा वाग्विवक्ष्यते तस्यास्तपस्विना पुरुषेण लभ्यमानत्वादित्येतद्दर्शयति—

तपोजां वाचमस्मे नियच्छ देवायुवमित्याह। या वै मेध्या वाक्। सा तपोजाः। तामेवावरुन्धे, (७), इति।

(प्रपा० ५। अनु० ६। विभा० २५)

वाक्यान्तरमाह—

**गर्भो देवानाम्, इति।**

अयं महावीरो **देवानां** संबन्धी **गर्भ**रूपः, देवैरपेक्षितस्य हविषोऽत्र गर्भरूपेणावस्थानात्।

मन्त्रार्थस्य प्रसिद्धिं दर्शयति—

गर्भो देवानामित्याह। गर्भो ह्येष देवानाम्, इति।

(प्रपा० ५। अनु० ६। विभा० २६)

वाक्यान्तरमाह—

**पिता मतीनाम्, इति।**

देवैर्हविष्प्रदानार्थं तदा तदा मन्यन्त इति मतयः प्रजास्तासां प्रजानां महावीरः प्रदानेन पालकत्वात्पिता।

मतिशब्देन प्रजाविवक्षां दर्शयति—

पिता मतीनामित्याह। प्रजा वै मतयः। तासामेष एव पिता। यत्प्रवर्ग्यः। तस्मादेवमाह, इति।

(प्रपा० ५। अनु० ६। विभा० २७)

वाक्यान्तरमाह—

**पतिः प्रजानाम्, इति।**

अयं महावीरः पूर्वोक्तरीत्या पालकत्वात्प्रजानां स्वामी।

---

१ क. °म्। मन्त्रान्तरमा°। २ ख. °नां पाता म°। ग. °नां मातुं म°।

अस्य वाक्यस्यार्थप्रसिद्धिं दर्शयति—

पतिः प्रजानामित्याह । पतिर्ह्येष प्रजानाम्, इति ।

( प्रपा० ५ । अनु० ६ । विभा० २८ )

वाक्यान्तरमाह—

**मतिः कवीनाम्**, इति ।

ये कवयः शास्त्रार्थाभिज्ञाः, तेषामभिज्ञानसाधनबुद्धिरूपोऽयं महावीरः । अ[स्मिन्] कर्मण्यनुष्ठिते तेन सुकृतेन प्रज्ञोदयात् ।

अस्मिन्नर्थे प्रसिद्धिं दर्शयति—

मतिः कवीनामित्याह ( ८ ) । मतिर्ह्येष कवीनाम्, इति ।

( प्रपा० ५ । अनु० ६ । विभा० २९ )

वाक्यान्तरमाह—

**सं देवो देवेन सवित्राऽयतिष्ट । सꣳ सूर्येणारुक्त**, इति ।

अयं महावीरो **देवो देवेन सवित्रा संयुज्यायतिष्ट** यजमानमनुग्रहीतुं प्र[य]त्नं कृतवान् । तथा **सूर्येण संयुज्यारुक्त** दीप्तवान् ।

अत्र देवशब्दद्वयेनाऽऽदित्यमहावीरौ विवक्षिताविति दर्शयति—

सं देवो देवेन सवित्राऽयतिष्ट सꣳ सूर्येणारुक्तेत्याह ।

अमुं चैवाऽऽदित्यं प्रवर्ग्यं च सꣳशास्ति, इति ।

( प्रपा० ५ । अनु० ६ । विभा० ३० )

सम्यक्कथयतीत्यर्थः ।

वाक्यान्तरमाह—

**आयुर्दास्त्वमस्मभ्यं घर्म वर्चोदा असि**, इति ।

हे **घर्म** महावीर **त्वमस्मभ्यमायुस्तेजसोः प्रदाताऽसि** ।

अस्य वाक्यस्याऽऽयुष्परतां दर्शयति—

आयुर्दास्त्वमस्मभ्यं घर्म वर्चोदा असी-

त्याह । आशिषमेवैतामाशास्ते, इति ।

( प्रपा० ५ । अनु० ६ । विभा० ३१ )

वाक्यान्तरमाह—

**पिता नोऽसि पिता नो बोध**, इति ।

---

१ ख. ग. °स्यार्थे प्र° । २ क. °र्मणाऽनु° ।

हे महावीर नोऽस्माकं पालकत्वात्पिताऽसि अतः पिता जनक एव भूत्वा नोऽस्मान्बोध, इदं कुर्विति सन्मार्गं बोधय ।

महावीरे प्रवृत्तस्योत्तरकर्तव्यताया बुध्यमानत्वाद्बोधकत्वमस्यावश्यमस्तीत्येतद्दर्शयति—

पिता नोऽसि पिता नो बोधेत्याह । बोधयत्येवैनम्, इति ।

( प्रपा० ५ । अनु० ६ । विभा० ३२ )

वाक्यान्तराण्याह—

आयुर्धास्तनूधाः पयोधाः । वर्चोदा वरिवोदा द्रविणोदाः ( ४ ) । अन्तरिक्षप्रा उरोर्वरीयान् । अशीमहि त्वा मा मा हिꣳसीः, इति ।

अयं महावीरो दीर्घमायुः शरीरपाटवं क्षीरसमृद्धिं च संपादयति । तथा कान्तिं पूजां धनं च प्रयच्छति । अन्तरिक्षं स्वोत्पन्नया ज्वालया प्र(प्रा)ति पूरयतीत्यन्तरिक्षप्रः । अत एवोरोर्विशालादपि वस्तुनो वरीयानतिशयेन *विवृत्तः(तः) । तादृश हे महावीर त्वामशीमहि व्याप्नुयाम व्याप्नुवन्तं मां मा हिꣳसीर्हिंसितं मा कुरु ।

अथाग्निरूपेण +[१]स्तुतये कांचिद्देवता(दृच?)माह—

त्वमग्ने गृहपतिर्विशामसि । विश्वासां मानुषीणाम् । शतं पूर्भिर्यविष्ठ पाह्यꣳहसः । समेद्धारꣳ शतꣳ हिमाः । तन्द्राविणꣳ हार्दिवानम् । इहैव रातयः सन्तु, इति ।

हेऽग्ने त्वं मानुषीणां मनुष्यजातियुक्तानां विश्वासां सर्वासां विशां प्रजानां गृहपतिरसि गृहस्वामी भवसि । हे यविष्ठ युवतम पूर्भिर्धनादीनां पूरणैः शतं शतसंवत्सरमायुः पाहि रक्ष । तथा शतꣳ हिमाः शतसंवत्सरान्समेद्धारं सम्यगभियुक्तं मामंहसः पाहि पापाद्रक्ष । कीदृशं माम् । तन्द्राविणं त्वत्पालनात्पूर्वं तन्द्रा[३]र्कर्मण्यलसम् । हार्दिवानं त्वत्पालनादूर्ध्वं हृदयगतकर्मोत्साहवन्तम् । रातयो दानीयानि फलदानानीहैवास्मिन्नेव कर्मणि सन्तु ।

---

* "विस्तृत" इति ते० पु० पाठः, इति ग. पुस्तकटिप्पणी । + "स्तुतामिकामृचमाह" इति पु पाठः, इति ग. पुस्तके टिप्पणी ।

---

१ ग. इदमिदं । २ क. स्तूयते । ख. स्तुयते । ३ ग. तन्द्रीयु° ।

कल्पः—"अनुवाकशेषं तु परिश्रिते प्रतिप्रस्थाता पत्नीं वाचयति त्वष्टीमती ते सपेय" इति। पाठस्तु—

त्वष्टीमती ते सपेय। सुरेता रेतो दधाना। वीरं विदेय तव संदृशि। माऽहꣳ रायस्पोषेण वियोषम् (५), इति॥

रोचते सूर्याय त्वा देवायुवं द्रविणोदा दधाना द्वे च॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके चतुर्थप्रपाठके सप्तमोऽनुवाकः॥ ७॥

हे महावीर ते तव प्रसादादहं पत्नी त्वष्टीमती सिक्ते रेतसि रूपाणां विकर्त्री *त्वष्टृशब्देन युक्ता सती सपेय पत्या संगच्छेय। ततः संगमादूर्ध्वं सुरेताः शोभनेन पुत्रोत्पादने(के)न रेतसा युक्ता सती रेतो दधाना तादृशमेव पतिसंबद्धं रेतो धारयन्ती तव संदृशि त्वदीयकटाक्षे सति वीरं विदेय कर्मणि शूरं पुत्रं लभेय। अहं त्वत्प्रसादाद्रायस्पोषेण धनपुष्ट्या मा वियोषं वियुक्ता मा भूवम्।

अस्मिन्ननुवाके मन्त्रसंख्यां दर्शयति—

नवैतेऽवकाशा भवन्ति। पत्नियै दशमः। नव वै पुरुषे प्राणाः (९)। नाभिर्दशमी। प्राणानेव यजमाने दधाति। अथो दशाक्षरा विराट्। अन्नं विराट्। विराजैवान्नाद्यमवरुन्धे, इति।

(प्रपा० ५। अनु० ६। विभा० ३३)

अवकाशयन्तेऽर्थं प्रकाशयन्त इत्यवकाशा मन्त्राः। ते चात्र नवसंख्याका भवन्ति अपश्यं गोपामित्येको मन्त्रः, अत्र प्रावीरित्याद्या ऋतुविषयाः षण्मन्त्राः, तपोजामित्यादि मा मा हिꣳसीरित्यन्तं वाक्यजातमेको मन्त्रः, त्वमग्न इत्यादिको रातयः सन्विंत्यन्त एको मन्त्रः। एवं नवसंख्याकाः। त्वष्टीमतीत्यादिकः पत्न्या दशमो मन्त्रः पुरुषशरीरेऽपि च्छिद्रगताः प्राणा नवसंख्याकास्तदपेक्षया नाभिर्दशमी, अतो मन्त्रगतसंख्यासाम्याद्यजमाने प्राणानेव सुस्थितान्करोति। अपि च विराड्द्वाराऽन्नमाप्नोति।

एतैर्मन्त्रैः साध्यं महावीरावेक्षणं विधत्ते—

यज्ञस्य शिरोऽच्छिद्यत। तद्देवा होत्राभिः प्रत्यदधुः। ऋत्विजोऽवेक्षन्ते।

* "त्वष्ट्रा देवेन" इति तै पु० पाठः, इति ग. पुस्तकटिप्पणी।

१ ग. त्वष्ट्रीम°। २ ग. त्वष्ट्रीम°। ३ ग. त्वष्ट्रीम°। ४ ग. °का ऋत्विजां भ°। ५ °न्विवत्यन्तिको मन्त्र एकः। ए°। ६ ग °स्थितान्क°।

एता वै होत्राः । होत्राभिरेव यज्ञस्य शिरः प्रतिदधाति ( १० ), इति ।

( प्रपा० ५ । अनु० ६ । विभा० ३४ )

यदा धनुष्कोट्या यज्ञपुरुषस्य शिरश्छिन्नं तदा देवास्तच्छिरो होत्राभिर्यज्ञशरीरे प्रतिहितवन्तः । होमनिष्पादिका ऋत्विजां याः प्रत्यवेक्षणादिक्रिया एता एव होत्रास्तस्मादृत्विजामवेक्षणेन होत्राभिरेव यज्ञस्यः शिरः प्रतिहितं भवति ।

अग्निष्ट्वेत्यादिमन्त्रैरुपस्थानादूर्ध्वकालीनत्वमवेक्षणस्य विधत्ते—

रुचितमवेक्षन्ते । रुचिताद्वै प्रजापतिः प्रजा असृजत । प्रजानाꣳ सृष्ट्यै, इति ।

( प्रपा० ५ । अनु० ६ । विभा० ३५ )

रुचिधात्वर्थप्रतिपादकैरग्निष्ट्वेत्यादिकैर्मन्त्रैरभिमन्त्रितो महावीरो रुचितः, तादृशं पश्चादवेक्षेरन् । पुरा प्रजापतिः प्रवर्ग्याद्रुचितादेव प्रजाः सृष्टवान्, अतोऽत्रापि सृष्ट्यै तद्भवति ।

पूर्वोक्तमेवानूद्य पुनः प्रशंसति—

रुचितमवेक्षन्ते । रुचिताद्वै पर्जन्यो वर्षति । वर्षुकः पर्जन्यो भवति । सं प्रजा एधन्ते, इति ।

( प्रपा० ५ । अनु० ६ । विभा० ३६ )

पूर्वोक्ताद्रुचितात्प्रवर्ग्यादेव कर्मानुष्ठानद्वाराऽऽदित्यप्राप्त्या मेघो वर्षति, अतोऽत्रापि रुचितावेक्षणे पर्जन्यो वर्षणशीलो भवति, प्रजाश्च सम्यग्वर्धन्ते ।

पुनरपि प्रकारान्तरेण प्रशंसति—

रुचितमवेक्षन्ते । रुचितं वै ब्रह्मवर्चसम् । ब्रह्मवर्चसिनो भवन्ति ( ११ ), इति ।

( प्रपा० ५ । अनु० ६ । विभा० ३७ )

ब्रह्मवर्चसं श्रुताध्ययनसंपत्ती रुचितं विद्वत्सभायां प्रकाशितं भवति । अतो रुचितावेक्षणेन ब्रह्मवर्चसयुक्ता भवन्ति ।

अवेक्षणे पूर्वोक्तमन्त्रान्विधत्ते—

अधीयन्तोऽवेक्षन्ते । सर्वमायुर्यन्ति, इति ।

( प्रपा० ५ । अनु० ६ । विभा० ३८ )

अधीयन्तोऽपश्यं गोपामित्यादिमन्त्रान्पठन्त ऋत्विजोऽवेक्षेरन्, ततो मन्त्रसामर्थ्यात्सर्वायुष्प्राप्तिः ।

---

क. ख. °ति प्रत्यवे° । २ ग. वर्धते ।

पत्न्याः कंचिद्विशेषं विधत्ते—

न पत्न्यवेक्षेत । यत्पत्न्यवेक्षेत । प्रजायेत । प्रजां त्वस्यै निर्दहेत् । यन्नावेक्षेत । न प्रजायेत । नास्यै प्रजां निर्दहेत् । तिरस्कृत्य यजुर्वाचयति । प्रजायते । नास्यै प्रजां निर्दहति, इति ।

( प्रपा० ५ । अनु० ६ । विभा० ३९ )

अत्रायं विचारः, किं **पत्न्यवेक्षेत न** वेति । अवेक्षणपक्षे प्रजोत्पत्तिलक्षणे गुणे सत्यपि तदीयां **प्रजां** महावीरो **निर्दहेदि**त्येष महान्दोषः, अतो **नावेक्षेते**त्येकः पक्षः। अनवेक्षणपक्षे निर्दाहाभावेऽपि प्रजोत्पत्तिर्न स्यादित्यन्यो दोषः, अतो दोषद्वयनिवृत्तये पत्नीं केनचिद्व्यवधानेन **तिरस्कृत्य त्वष्टीमतीति** मन्त्रं पठेत्(पाठयेत्) ।

तस्मिन्मन्त्रे सपेयेत्यस्य तात्पर्यं दर्शयति—

त्वष्टीमती ते सपेयेत्याह । सपाद्धि प्रजाः प्रजायन्ते ( १२ ), इति ।

( प्रपा० ५ । अनु० ६ । विभा० ४० )

ऋतवो हि शिरः सर्वपृष्ठे प्रवृणक्त्यनिपद्यमानमित्याह गतेत्याह शारदावेवास्मा ऋतू कल्पयति रुन्धे कवीनामित्याह प्राणाः प्रतिदधाति भवन्ति वाचयति चत्वारि च ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके पञ्चमप्रपाठके षष्ठोऽनुवाकः ॥ ६ ॥

स्त्रीपुरुषयोः समवायात्प्रजोत्पत्तिः प्रसिद्धा तस्मात्सपेयेत्युच्यते ।

अत्र मीमांसा । तृतीयाध्यायस्य तृतीयपादे चिन्तितम्—

"न प्रवृञ्ज्यादाद्ययज्ञे क्रतौ सोऽनुष्ठितावुत ।
प्रतिषेधः क्रतौ युक्त उक्ता ह्यस्याऽऽद्ययज्ञता ॥
प्रवृणक्त्युपसद्भ्यः प्रागिति वाक्यात्*क्रतौ विधेः ।
आद्यप्रयोगे प्राथम्यान्निषेधः क्वचिदेव सः" ॥

ज्योतिष्टोमे प्रवर्ग्याख्यं कर्म प्रकृत्य श्रूयते—न प्रथमयज्ञे प्रवृञ्ज्यादिति । सोऽयं निषेधो ज्योतिष्टोमक्रतौ द्रष्टव्यो न तु तदीयप्रथमप्रयोगे । कुतः । एष वाव प्रथमो यज्ञो यज्ञानां यज्ज्योतिष्टोम इति तस्य प्रथमयज्ञत्वाभिधानादिति चेत् । मैवम् । पुरस्तादुपसदां प्रवर्ग्यं प्रवृण[1]क्तीति वाक्ये क्रतौ प्रवर्ग्यस्य विहितत्वात् । न

* न्यायमालानुरोधेनायं पाठः । अत्र तु भाष्यपुस्तकेषु क्रतोर्विधेरित्येव पाठ उपलभ्यते स च नातीव समञ्जसः ।

१ ग. °णक्तीति ।

धिनिषेधवाक्ययोः समानबलत्वादनिर्णये, प्रतिषेधवाक्ये प्रथमशब्देन * निषेधस्य योगपरत्वनिर्णयात् । प्रथमद्वितीयादिशब्दाः क्रियाया आवृत्तौ मुख्याः, तत्संबन्धाद्द्रव्येषूपचर्यन्ते । प्रथममध्येतव्यत्वात्प्रथम(मं) काण्डं तदनन्तरमध्येतव्यत्वाद्द्वितीय(य)-काण्डम् । एवमादावुत्पन्नत्वात्प्रथमः पुत्रः, तदनन्तरमुत्पन्नत्वाद्द्वितीयः पुत्रः । तथाऽपि (तथा सति) प्रयोगक्रियाया आवृत्तिविशेषे प्रथमशब्दो मुख्यः, तदावृत्तिविशेष(षय, तया) यज्ञशब्दो(यज्ञे) लाक्षणिकः । त्वत्पक्षे क्रतौ मुख्यो यज्ञशब्दः प्रयोगे लाक्षणिकः स्यादिति चेत् । बाढम् । तथाऽप्यसंजातविरोधिनि लाक्षणिकत्वकल्पनात्काम(द्वर)मुत्तरपदे तत्कल्पनं, तस्माज्ज्योतिष्टोमस्य प्रथमप्रयोगे प्रवर्ग्यस्य निषेधः । ननु सप्तसंस्थाकस्य ज्योतिष्टोमस्य प्रथमसंस्थारूपोऽग्निष्टोमः, तत्रायं निषेधः पर्यवस्यति । विधिश्च श्रूयते—अग्निष्टोमे प्रवृणक्तीति । एवं तर्ह्यधिकारिभेदेन विधिनिषेधयोर्व्यवस्थाऽस्तु । तथा च श्रूयते—कामं तु योऽनूचानः स्यात्तस्य प्रवृञ्ज्यादिति । तस्मादनूचानव्यतिरिक्त[=कर्तृके]प्रथमप्रयोग एवायं निषेधः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यके चतुर्थप्रपाठके सप्तमोऽनुवाकः ॥ ७ ॥

---

अथ चतुर्थेऽष्टमोऽनुवाकः ।

---

सप्तमे महावीरावेक्षणमुक्तम् । अष्टम आज्ययुक्ते महावीरे+ पयःप्रक्षेपणं प्रवृञ्जनमुच्यते । कल्पः—"सावित्रेण रशनामादाय" इति । पाठस्तु—

देवस्य त्वा सवितुः प्रसवे । अश्विनोर्बाहुभ्याम् । पूष्णो हस्ताभ्यामाददे, इति ।

द्वितीयानुवाके (प्रपा० ४ अनु० २ पृ० २२४) व्याख्यातोऽयं मन्त्रः । अनेन मन्त्रेण साध्यमादानं विधत्ते—

देवस्य त्वा सवितुः प्रसव इति रशनामादत्ते प्रसूत्यै ।

---

* निषेधस्येति पदं न्यायमालाविस्तरानुसारेण स्थापितमादर्शपुस्तकेषु तु नास्ति । एतच्चिह्नान्तर्गतं न्यायमालाविस्तरानुरोधेन स्थापितमादर्शपुस्तकेषु तु नोपलभ्यते । + पयःप्रक्षेपणमुच्यत इति तै० पु० पाठ इति ग. पुस्तकटिप्पणी ।

---

१ क. ख. ग. 'दयं नि°। २ क. ख. ग. °यः । तथा सति प्र° । ३ क. ख. °यः । त° । ४ ख. यागक्रियाया । ५ क. ख. ग. °षेऽपि प्रं° । ६ ख. ग. प्रयोगो । ७ ख. °र्ग्यनि° । ८ ग. °सं° । ९ ग. °णक्त्विति । १० ख. °कारभे° । ११ ख. ग. आज्ये म° । १२ ग °णं विधत्ते प्र° ।

अश्विनोर्बाहुभ्यामित्याह । अश्विनौ हि देवानामध्वर्यू
आस्ताम् । पूष्णो हस्ताभ्यामित्याह यत्यै, इति ।

( प्रपा० ५ । अ० ७ । विभा० १ )

अदित्यै रास्नाऽसि ।

कल्पः—" अदित्यै रास्नाऽसीत्यभिमन्त्र्य " इति । हे रशने त्वमदित्यै भूमिरूपा धेन्वै रास्ना बन्धनार्था रशनाऽसि ।

मन्त्रतात्पर्यं दर्शयति—

आददेऽदित्यै रास्नाऽसीत्याह यजुष्कृत्यै, इति ।

( प्रपा० ५ । अनु० ७ । विभा० २ )

आदद इत्येष पूर्वमन्त्रशेषः स्पष्टार्थत्वात्पाठ एव तस्य व्याख्यानम् । यजु मन्त्रेण कृतिर्निष्पादनं यजुष्कृतिः, तत्सिद्ध्यर्थमनेनाभिमन्त्रणम् ।

इड एहि । अदित एहि । सरस्वत्येहि ।

कल्पः—"पूर्वया द्वारोपनिष्क्रम्य त्रिरुपांशु घर्मदुघामाह्वयति । इड एहि । अ एहि । सरस्वत्येहि" इति । इडादीनि गोनामधेयानि तैः संबोध्येहीत्याह्वयति ।

मन्त्रतात्पर्यं दर्शयति—

इड एह्यदित एहि सरस्वत्येहीत्याह । एतानि वा
अस्यै देवनामानि । देवनामैरेवैनामाह्वयति, इति ।

( प्रपा० ५ । अनु० ७ । विभा० ३ )

वक्ष्यमाणाह्वानेन पुनरुक्तिं वारयितुं देवनामानीति विशेष्यते । इडादीनि दे प्रसिद्धानि गोनामानि, मन्त्रपाठे सति तैरेवेयमाहूता भवति ।

असावेहि । असावेहि । असावेहि ( १ ) ।

कल्पः—" प्रत्येत्य दोग्ध्रे निदान इत्यादाय दक्षिणया द्वारोपनिष्क्रम्य त्रि सावेहि । असावेहि । असावेहि " इति । घर्मदुघामाह्वयतीत्यनुवर्तते । मनुष्ये व्यव संकेतितं गङ्गादिकं धेनुनाम 'असौ' इति शब्देन निर्दिश्यते, हे गङ्गे समागच्छ ।

पूर्वाह्वानाद्व्यावृत्तिमन्त्रं दर्शयति—

असावेह्यसावेह्यसावेहीत्याह । एतानि वा अस्यै मनुष्य-
नामानि ( १ ) । मनुष्यनामैरेवैनामाह्वयति, इति ।

( प्रपा० ५ । अनु० ७ । विभा० ४

१ क. °न्त्रविशे° । २ क. ख. °दुघमा° । ३ क. ख गोर्नाम° । ४ क. °हि
५ क. ख. °दुघमा° । ६ क. साङ्केतिकं ।

द्विविधाह्वानगतां संख्यां प्रशंसति—

षट्संपद्यन्ते । षड्वा ऋतवः । ऋतुभिरेवैनामाह्वयति, इति ।

( प्रपा० ५ । अनु० ७ । विभा० ५ )

त्रीणि देवनामानि त्रीणि मनुष्यनामानीत्येवं षट्संपत्तिः ।

**अदि॑त्या उ॒ष्णीष॑मसि ।**

कल्पः—"अदित्या उष्णीषमसीति रशनया घर्मदुघामभिदधाति" इति । हे रशनेऽ-या भूमिरूपाया धेनोरुष्णीषस्थानीयाऽसि ।

मन्त्रस्य स्पष्टार्थतां दर्शयति—

अदित्या उष्णीषमसीत्याह । यथा यजुरेवैतत्, इति ।

( प्रपा० ५ । अनु० ७ । विभा० ६ )

**वा॒युर॑स्यै॒डः ।**

कल्पः—"वायुरस्यैड इति वत्सम्" इति । अभिदधातीत्यनुवर्तते । इडाया अपत्यं वत्सः, तादृशस्त्वं वायुस्वरूपोऽसि ।

वायुत्वमुपपादयति—

वायुरस्यैड इत्याह । वायुदेवत्यो वै वत्सः, इति ।

( प्रपा० ५ । अनु० ७ । विभा० ७ )

वत्सापाकरणे वायवः स्थेत्याम्नानाद्वायुदेवत्यत्वम् । अत एवान्यत्र ब्राह्मणे वायु-इत्युक्तम् ।

**पू॒षा त्वोपाव॑सृजतु । अ॒श्विभ्यां॒ प्रदा॑पय ।**

कल्पः—"पूषा त्वोपावसृजत्वित्युपावसृज्य" इति । अश्विभ्यां प्रदापयेति मन्त्र- । हे वत्स त्वां पूषाख्यो देवः स्तनपानार्थं मुञ्चतु, त्वं चाश्विदेवार्थं पयः प्रदापय ।

मन्त्रस्य पूर्वभागे पूषेत्यस्य तात्पर्यं दर्शयति—

पूषा त्वोपावसृजत्वित्याह । पौष्णा वै देवतया

पशवः ( २ ) । स्वयैवैनं देवतयोपावसृजति, इति ।

( प्रपा० ५ । अनु० ७ । विभा० ८ )

पोषकत्वादेवायं पशूनां देवः ।

उत्तरभागेऽश्विशब्दतात्पर्यं दर्शयति—

अश्विभ्यां प्रदापयेत्याह । अश्विनौ वै देवानां

भिषजौ । ताभ्यामेवास्मै भेषजं करोति, इति ।

( प्रपा० ५ । अनु० ७ । विभा० ९ )

---

१ क. ख. °दुघम° ।

अस्मै वत्साय क्षीरं भेषजमित्येतत्प्रत्यक्षम् । अश्विभ्यां तु हविष्प्रदानद्वारा भेषजम् ।

कल्पः—"यस्ते स्तनः शशय इति घर्मदुघामभिमन्त्रयते" इति । पाठस्तु—

यस्ते स्तनः शशयो यो मयोभूः । येन विश्वा
पुष्यसि वार्याणि । यो रत्नधा वसुविद्यः
सुदत्रः । सरस्वति तमिह धातवेऽकः, इति ।

हे धेनो ते तव यः स्तनः शशयः शयानः स्थैर्येणावस्थितः, यश्च स्तनो मयोभूः सुखस्य भावयिता, येन च स्तनेन विश्वा सर्वाणि वार्याणि वैरणीयानि वत्सादिशरीराणि पुष्यसि पुष्टानि करोषि, यश्च स्तनो रत्नधा रत्नवन्महार्घं क्षीरं धारयति अत एव वसुविदुत्तमं वस्तु लभते, यश्च स्तनः सुदत्रः शोभनदानशीलः, बहुक्षीरं ददातीत्यर्थः । हे सरस्वति, एतन्नामयुक्ते धेनो तं स्तनमिह कर्मणि धातवे धा देवानां क्षीरं पातुमकर्योग्यं कुरु ।

स्तनवर्णनेन धेनोरेव स्तुतिः संपद्यत इत्येतद्दर्शयति—

यस्ते स्तनः शशय इत्याह । स्तौत्येवैनाम्, इति ।

( प्रपा० ९ । अनु० ७ । विभा० १० )

उस्र घर्मꣳ शिꣳष । उस्र घर्मं
पाहि ( २ ) । घर्माय शिꣳष ।

कल्पः—"उस्र घर्मꣳ शिꣳष । उस्र घर्मं पाहि । घर्माय शिꣳषेति निदाय वत्स इति । निदाय बद्ध्वेत्यर्थः । हे उस्र वत्स घर्मम(मं क्ष)*रणयोग्यं क्षीरं शिंवशेषय । हे उस्र क्षीराख्यं घर्मं पाहि पालय यथा सुरक्षितं भवति तथा कुरु किमर्थमिति तदुच्यते—घर्माय प्रवर्ग्यार्थं शिंषावशेषय ।

घर्मायेत्येतच्चतुर्थ्यन्तस्य तात्पर्यं दर्शयति—

उस्र घर्मꣳ शिꣳषोस्र घर्मं पाहि घर्माय शिꣳषे-
त्याह । यथा ब्रूयादमुष्मै देहीति । तादृगेव तत्, इति ।

( प्रपा० ९ । अनु० ७ । विभा० ११ )

---

* "रक्षणयोग्यम्" इति तै० पु० पाठ इति ग. पुस्तकटिप्पणी ।

---

१ क. ख. °द्वारेण भे° । २ क. ख. °दुघम° । ३ ग. विश्वाः । ४ ग. विश्वाः । ५ प्रेरणीयानि । ६ क. घर्मं भवण° । ख. घर्मं श्रयण° ।

लोके हि बालपुत्रार्थं क्षीरं देहीति गृहस्वामिनं बालस्य माता याचते तद्वदिदं [द्र]ष्टव्यम् ।

**बृहस्पतिस्त्वोपसीदतु ।**

कल्पः—"बृहस्पतिस्त्वोपसीदत्वित्युपसीदति" इति । हे धेनो त्वा त्वां दोग्धृरूपो [बृह]स्पतिरुपसीदतु समीपे प्राप्नोतु ।

बृहस्पतिशब्दतात्पर्यं दर्शयति—

बृहस्पतिस्त्वोपसीदत्वित्याह ( ३ ) । ब्रह्म वै देवानां बृहस्पतिः । ब्रह्मणैवैनामुपसीदति, इति ।

( प्रपा० ५ । अनु० ७ । विभा० १२ )

देवानां मध्ये बृहस्पतेः परब्रह्मरूपत्वात्तेनैवोपसदनं कृतं भवति ।

**दानवः स्थ पेरवः । विष्वग्वृतो लोहितेन ।**

कल्पः—"दानवः स्थ पेरव इति स्तनान्संमृश्य" इति । विष्वग्वृतो लोहितेनेति [मन्त्र]शेषः । हे स्तना यूयं दानवः क्षीरदानकुशलाः, पेरवो वत्सेन पातुं योग्याः, लोहि[ते]न रक्तेन विष्वग्वृतः पृथग्भूत्वा वर्तमानाः स्थ । न हि स्तनदोहने रक्तमायाति ।

पानयोग्यत्वकथनेन शुद्धिः सूचितेत्येतद्दर्शयति—

दानवः स्थ पेरव इत्याह । मेध्यानेवैनान्करोति, इति ।

( प्रपा० ५ । अनु० ७ । विभा० १३ )

विष्वग्वृत इत्यनेन क्षीरस्य रक्ताद्व्यावृत्तिर्विवक्षितेति दर्शयति—

विष्वग्वृतो लोहितेनेत्याह व्यावृत्त्यै, इति ।

( प्रपा० ५ । अनु० ७ । विभा० १४ )

**अश्विभ्यां पिन्वस्व । सरस्वत्यै पिन्वस्व । पूष्णे पिन्वस्व । बृहस्पतये पिन्वस्व । इन्द्राय पिन्वस्व । इन्द्राय पिन्वस्व ( ३ ) ।**

कल्पः—"अश्विभ्यां पिन्वस्व सरस्वत्यै पिन्वस्व पूष्णे पिन्वस्व बृहस्पतये पिन्वस्वेति [स्थवी]यसि दोग्ध्रे दोग्धि" इति । स्थूले दोहनपात्रे दुह्यादित्यर्थः । इन्द्राय पिन्वस्व । [इन्द्र]ाय पिन्वस्वेति मन्त्रशेषः । हे धेनोऽश्विसरस्वत्यादिदेवार्थं पिन्वस्व हविः प्रभूतं देहि ।

प्रभूतदातृत्वं धेनोः प्रसिद्धमित्येतद्दर्शयति—

अश्विभ्यां पिन्वस्व सरस्वत्यै पिन्वस्व पूष्णे पिन्वस्व बृहस्पतये

१ ग. वत्सेन । २ ग. वृष्णीयसि ।

पिन्वस्वेत्याह । एताभ्यो ह्येषा देवताभ्यः पिन्वते, इति ।
( प्रपा० ९ । अनु० ७ । विभा० १५)

बृहस्पत्यादिवदिन्द्रस्य संबन्धमात्रेण परितोषो न भवति किंतु हविर्भागोऽप्यस्तीत्येतद्दर्शयति —

इन्द्राय पिन्वस्वेन्द्राय पिन्वस्वेत्याह । इन्द्रमेव भागधेयेन समर्धयति, इति ।
( प्रपा० ९ । अनु० ७ । विभा० १६)

भागाधिक्येनेन्द्रमन्त्रावृत्तिं दर्शयति—

द्विरिन्द्रायेत्याह ( ४ ) । तस्मादिन्द्रो देवतानां भूयिष्ठभाक्तमः, इति ।
( प्रपा० ९ । अनु० ७ । विभा० १७ )

**गायत्रोऽसि । त्रैष्टुभोऽसि । जागतमसि ।**

कल्पः—"उपोत्तिष्ठन्तावग्नौ धे पयसी प्रदाय *पूर्वावैतिद्रुत्य शफोपयमानादत्ते गायत्रोऽसीति प्रथमं त्रैष्टुभोऽसीति द्वितीयं जागतमसीति तृतीयमित्यु(मु)पयमनं प्रतिप्रस्थाता" इति । तप्तस्य महावीरस्य हस्ताभ्यां ग्रहीतुमशक्यत्वात्संदंशवदुभयतः काष्ठद्वयमध्ये महावीरं संदष्टं कृत्वा काष्ठद्वयस्य मूलद्वयमग्रद्वयं च धृत्वाऽध्वर्युप्रतिप्रस्थातारावानयतः, तौ काष्ठविशेषौ शफावित्युच्येते । महावीरस्याधस्ताद्धार्यमाणः काष्ठविशेष उपयमँ इत्युच्यते । हे प्रथमशफ त्वं गायत्रीछन्दःसंबन्ध्यसि । हे द्वितीयशफ त्वं त्रिष्टुप्छन्दःसंबन्ध्यसि । हे उँपयम त्वं जगतीछन्दःसंबन्ध्यसि ।

एतन्मन्त्रसाध्यमादानं विधत्ते—

गायत्रोऽसि त्रैष्टुभोऽसि जागतमसीति शफोपयमानादत्ते । छन्दोभिरेवैनानादत्ते, इति ।
( प्रपा० ९ । अनु० ७ । विभा० १८ )

गायत्रादिशब्दप्रयोगेण च्छन्दोभिरादानं सिध्यति ।

**सहोर्जो भागेनोप मेहि ।**

कल्पः—" सहोर्जो भागेनोप मेहीति पय आह्रियमाणं प्रतीक्षते " इति । आग्नीध्रेणाऽऽनीयमान हे पय ऊर्जो रसस्य भागेन सह मामुपेहि मत्समीपे समागच्छ ।

एतन्मन्त्रबलेनोर्जो रसस्य भागः संपादितो भवतीति दर्शयति—

सहोर्जो भागेनोप मेहीत्याह । ऊर्जं एवैनं भागमकः, इति ।
( प्रपा० ९ । अनु० ७ । विभा० १९ )

* " पूर्व( र्वे )वद्रु[ त्? ]त्य " इति तै० पु० पाठ इति ग. पुस्तकटिप्पणी ।

१ ग. °ग्नीध्रे प° । २ ख. °वभिद्रु° । ग. °वभिद्रुत्य । ३ क. 'मनमित्यु' । ४ उपयमन ।

इन्द्राश्विना मधुनः सारघस्य ।
घर्मं पात वसवो यजता वट् ।

कल्पः—" इन्द्राश्विना मधुनः सारघस्येति महावीरे गोपय आनयति " इति । र्मं पात वसवो यजता वडिति मन्त्रशेषः । हे इन्द्र हेऽश्विनौ यूयं त्रयोऽपि मधुनः बन्धिनं घर्मं घृतसहितं क्षीरं पात पिबत । कीदृशस्य मधुनः, सारघस्य सरघा धुमक्षिकास्ताभिर्निष्पादितं सारघं तादृशस्य । मधुनः संबन्धेन हविषस्तद्वन्मधुररस-वम् । हे वसवो देवा यजत यागं कुरुत । वट्, इदं हविर्दत्तमस्तु ।

अस्मिन्मन्त्र इन्द्रशब्देन सहाश्विशब्दस्य प्रयोगाभिप्रायं दर्शयति—

अश्विनौ वा एतद्यज्ञस्य शिरः प्रतिदधतावब्रूताम् । आवाभ्या-मेव पूर्वाभ्यां वषट्क्रियाता इति । इन्द्राश्विना मधुनः सारघस्येत्याह । अश्विभ्यामेव पूर्वाभ्यां वषट्करोति । अथो अश्विनावेव भागधेयेन समर्धयति ( ९ ), इति ।

( प्रपा० ५ । अनु० ७ । विभा० २० )

धनुष ऊर्ध्वकोटया छिन्नमेतद्यज्ञस्य शिरः पुनस्तद्देहे प्रतिदधतावश्विनौ तस्मि-काल इदं वचनमब्रूताम् । पूर्वभाविभ्यामावाभ्यामेव वषट्कारेण हविः प्रदातव्य-मिति । अतस्ताभ्यां प्रार्थितत्वादश्विनाविति मन्त्र उच्यते । तेनैताभ्यां प्रथमतो हविर्दत्तं वति । अपि च पूर्वं भागरहितावश्विनाविदानीं भागेन समृद्धं ( द्धौ ) करोति । शिरःप्रतिधानवेलायामितरदेवान्प्रति पूर्वाभ्यामिति वरस्य वृतत्वाद्देवान्तरापेक्षयाऽ-श्विनोः पूर्वत्वमतो नान्येभ्यो देवेभ्यो घर्मो दीयते किंत्विन्द्रसहिताश्विभ्यामेव ।

मन्त्रस्योत्तरभागे वसुशब्देन वसूनामपि भागसिद्धिं दर्शयति—

घर्मं पात वससो यजता वडित्याह ।
वसूनेव भागधेयेन समर्धयति, इति ।

( प्रपा० ५ । अनु० ७ । विभा० २१ )

अत्र मीमांसया वषट्शब्दं ( वट्शब्दं ) प्रशंसति —

यद्वषट्कुर्यात् । यातयामाऽस्य वषट्कारः स्यात् । यन्न वष-ट्कुर्यात् । रक्षाꣳसि यज्ञꣳ हन्युः । वडित्याह । परोक्ष-मेव वषट्करोति नास्य यातयामा वषट्कारो भवति । न यज्ञꣳ रक्षाꣳसि घ्नन्ति ( ६ ), इति ।

( प्रपा० ५ । अनु० ७ । विभा० २२ )

अत्रेदं विचार्यते—वषट्शब्दः प्रयोक्तव्यो न वेति । तत्प्रयोगे सतीदानीमेव

१ क. ख. सति नीरसमे' ।

गतसारत्वात्सोमयागे[1] भविष्यति वषट्कारो निःसारो भवेत् । तदप्रयोगे वज्रो वै वषट्कार इति श्रुतस्य वज्रस्याभावाद्रक्षांसि यज्ञं विनाशयेयुः । अत उभयदोषपरिहाराय द्वितीयाक्षरं परित्यज्य वडित्येव प्रयोक्तव्यम् । तथा सति संपूर्णत्वाभावात्प्रत्यक्षो वषट्कारो न भवति । अंश एव ततः ( अंशत एव ) सद्भावात्परोक्षस्तिरोहितो वषट्कारो भवति । ततः संपूर्णवषट्कारो न गतसारः, एकदेशस्यापि विद्यमानत्वाद्वज्रसद्भावेन रक्षांस्यपि यज्ञं न विनाशयन्ति ।

**स्वाहा त्वा सूर्यस्य रश्मये वृष्टिवनये जुहोमि ।**

कल्पः—"स्वाहा त्वा सूर्यस्य रश्मये वृष्टिवनये जुहोमीत्युद्यन्तमूष्माणमनुमन्त्रयते" इति । **वृष्टिवनये** वृष्टिप्रदानाय **सूर्यस्य रश्मये** हे ऊष्मंस्त्वां **स्वाहा जुहोमि** स्वाहाकारयोग्यामाहुतिमाहुतिद्रव्यं[2] कृत्वा जुहोमि ।

सूर्यायेत्यनुक्त्वा रश्मय इत्युक्तेस्तात्पर्यं दर्शयति —

स्वाहा त्वा सूर्यस्य रश्मये वृष्टिवनये जुहोमीत्याह । यो वा अस्य पुण्यो रश्मिः । स वृष्टिवनिः । तस्मा एवैनं जुहोति, इति ।

( प्रपा० ९ । अनु० ७ । विभा० २३ )

सूर्यो न साक्षाद्वृष्टिं प्रयच्छति किंतु पुण्यरश्मिद्वाराऽतः साक्षाद्रश्मय एव वृष्टिप्रदानायाऽऽहुतिर्युक्ता ।

**मधु हविरसि ।**

कल्पः— "मधु हविरसीत्यजापयः" इति । महावीर आनयतीत्यनुवर्तते । हेऽजापयस्त्वं मधुरं **हविरसि** ।

स्वादु कर्तुं मधुशब्दप्रयोग इति दर्शयति—

मधु हविरसीत्याह । स्वदयत्येवैनम्, इति ।

( प्रपा० ९ । अनु० ७ । विभा० २४ )

**सूर्यस्य तपस्तप ।**

कल्पः—"सूर्यस्य तपस्तपेत्यूष्माणम्" इति । उद्यन्तमनुमन्त्रयत इत्यनुवर्तते ऊष्मन्**सूर्यस्य तपः** सूर्यसंबन्धिनं तापमपि तप त्वमतिशयेन तप्तं कुरु ।

मन्त्रस्य स्पष्टार्थतां दर्शयति—

सूर्यस्य तपस्तपेत्याह । यथा यजुरेवैतत्, इति ।

( प्रपा० ९ । अनु० ७ । विभा० २५ )

---

१ क. ख. °यागो भ° । २ ग. °हुतिं द्र° ।

द्यावापृथिवीभ्यां त्वा परिगृह्णामि ( ४ ) ।

कल्पः—"द्यावापृथिवीभ्यां त्वा परिगृह्णामीति शफाभ्यां महावीरं परिगृह्य" इति । हे महावीर त्वां द्यावापृथिवीदेवतारूपाभ्यां शफाभ्यां परिगृह्णामि ।

मन्त्रबलाद्द्यावापृथिवीपरिग्रहः सिध्यतीति दर्शयति—

द्यावापृथिवीभ्यां त्वा परिगृह्णामीत्याह । द्यावा-
पृथिवीभ्यामेवैनं परिगृह्णाति ( ७ ), इति ।
( प्रपा० ५ । अनु० ७ । विभा० २६ )

अन्तरिक्षेण त्वोपयच्छामि ।

कल्पः—"प्रच्छिन्नाग्रेण वेदेन भस्म प्रमृज्यान्तरिक्षेण त्वोपयच्छामीत्युपयमनेन प्रतिप्रस्थातोपयच्छति" इति । हे महावीर त्वामन्तरिक्षदेवतारूपेणोपयमनाख्यकाष्ठपात्रेणोपयच्छामि, शफनामकाभ्यां काष्ठाभ्यामुद्ध्रियमाणे त्वयि तयोः सहायरूपेणानेनाधस्तादुद्यच्छामि ।

मन्त्रबलादन्तरिक्षदेवतासाहाय्यं सिध्यतीति दर्शयति—

अन्तरिक्षेण त्वोपयच्छामीत्याह । अन्तरिक्षेणैवैन-
मुपयच्छति । न वा एतं मनुष्यो भर्तुमर्हति, इति ।
( प्रपा० ५ । अनु० ७ । विभा० २७ )

देवानां त्वा पितृणामनुमतो भर्तुꣳ शकेयम् ।

कल्पः—"देवानां त्वा पितृणामनुमतो भर्तुꣳ शकेयमित्यादायोत्थाय" इति । हे महावीर देवानां पितृणां वाऽनुमतिं प्राप्तोऽहं त्वां भर्तुं धारयितुं शक्तो भूयासम् ।

एतत्पाठेनोभयानुमतिसिद्धिं दर्शयति—

देवानां त्वा पितृणामनुमतो भर्तुꣳ शकेयमित्याह ।
देवैरेवैनं पितृभिरनुमत आदत्ते, इति ।
( प्रपा० ५ । अनु० ७ । विभा० २८ )

कल्पः—" तेजोऽसि तेजोऽनुप्रेहीति हरति " इति । पाठस्तु—

तेजोऽसि तेजोऽनुप्रेहि । दिविस्पृङ्मा मा हिꣳसीः । अन्त-
रिक्षस्पृङ्मा मा हिꣳसीः । पृथिविस्पृङ्मा मा हिꣳसीः । सुवरसि

---

१ ग. °मि । अ° । २ ख. °दुपयच्छा° । ३ क. ख. °ति । इ° । ४ क. ख. °ति । न एतं मनुष्यो भर्तुमर्हति । दे° ।

सुवर्मे यच्छ । दिवं यच्छ दिवो मा पाहि (५), इति ॥
एहि पाहि पिन्वस्व गृह्णामि नव च ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके चतुर्थप्रपाठकेऽ-
ष्टमोऽनुवाकः ॥ ८ ॥

हे प्रवर्ग्य त्वं तेजोरूपोऽसि । अतस्तेजोरूपमाहवनीयमनुलक्ष्य प्रेहि प्रकर्षेण गच्छ। अत्युष्णस्त्वं द्युलोकादीन्स्पृशन्नपि मा [मा] हिꣳसीः, तापं मा कुरु । सुवरसि त्वमेव स्वर्गरूपोऽसि । अतः स्वर्गसुखं मे प्रयच्छ । तत्सुखाधारं दिवं द्युलोकं मे प्रयच्छ। दिवो द्युलोकान्मां पाहि । तत्र राक्षसप्रवेशं निवार्य पालय ।

मन्त्रस्य पूर्वभागे तेजोऽनुप्रेहीत्यस्य तात्पर्यं दर्शयति—

वि वा एनमेतदर्धयन्ति । यत्पश्चात्प्रवृज्य पुरो जुह्वति ।
तेजोऽसि तेजोऽनुप्रेहीत्याह । तेज एवास्मिन्दधाति, इति ।
( प्रपा० ५ । अनु० ७ । विभा० २९ )

आहवनीयस्य पश्चिमभागे गार्हपत्यस्योत्तरदेशे प्रवर्ग्यं कृत्वा पुरः पूर्वस्यां दिश्या-हवनीये जुह्वतीति यदस्ति एतेनैनं प्रवर्ग्यं [व्यर्धयन्ति] समृद्धिरहितं कुर्वन्ति प्रवृञ्जनेनैव तेजसो गतत्वात् । अतस्तेजोऽनुप्रेहीत्युक्त्या द्रव्ये तेजः संपादितं भवति

मध्यमभागस्याहिंसापरत्वं दर्शयति—

दिविस्पृङ्मा मा हिꣳसीरन्तरिक्षस्पृङ्मा मा हिꣳसीः पृथि-
विस्पृङ्मा मा हिꣳसीरित्याहाहिꣳसायै (८), इति ।
( प्रपा० ५ । अनु० ७ । विभा० ३० )

तृतीयभागस्याऽऽशीःपरत्वं दर्शयति—

सुवरसि सुवर्मे यच्छ दिवं यच्छ दिवो
मा पाहीत्याह । आशिषमेवैतामाशास्ते, इति ।
( प्रपा० ५ । अनु० ७ विभा० ३१ )

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरी-
यारण्यके चतुर्थप्रपाठकेऽष्टमोऽनुवाकः ॥ ८ ॥

१ ग. (४)। २ क. ख. °सि स्व°। ३ ग. °र्गसुखरू°। ४ क. ख. स्वर्ग्यं सु°। ५ ख. यच्छ । ६ क. तत्राक्षिशब्दम°। ख. तत्र क्ष१(अ१)शब्दम°। ७ क. ख. पुनः। ८ °सोऽग्ग°

अथ चतुर्थे नवमोऽनुवाकः ।

अष्टमे महावीरे घृतयुक्ते क्षीरप्रक्षेपलक्षणं प्रवृञ्जनमुक्तम् । नवमे तस्य प्रवर्ग्यद्रव्य-स्याऽऽहवनीये याग उच्यते । कल्पः—“ प्रवृञ्जनवानं पञ्च वातनामानि व्याचष्टे समुद्राय त्वा वाताय स्वाहेत्यपान्य पञ्चोत्तराण्यग्नये त्वा वसुमते स्वाहा ” इति । पाठस्तु—

समुद्राय॑ त्वा वाता॑य स्वाहा॑ । सलिलाय॑ त्वा वाता॑य स्वाहा॑ । अनाधृष्याय॑ त्वा वाता॑य स्वाहा॑ । अप्रतिधृष्याय॑ त्वा वाता॑य स्वाहा॑ । अवस्यवे॑ त्वा वाता॑य स्वाहा॑ । दुवस्वते त्वा वाता॑य स्वाहा॑ । शिमिद्वते त्वा वाता॑य स्वाहा॑ । अग्नये॑ त्वा वसुमते स्वाहा॑ । सोमा॑य त्वा रुद्रवते स्वाहा॑ । वरुणाय त्वाऽऽदित्यवते स्वाहा॑ (१) बृहस्पतये त्वा विश्वदे॑व्यावते स्वाहा॑ । सवित्रे त्व॑र्भुमते॑ विभुमते॑ प्रभुमते वाजवते स्वाहा॑ । यमाय त्वाऽङ्गिरस्वते पितृमते स्वाहा॑, इति ।

अत्र वातायेति विशेष्यनिर्देशः । समुद्रादिशब्दा विशेषणभूता नामधेयविशेषवाचिनः । हे प्रवर्ग्य त्वां समुद्रनामकाय वाताय स्वाहा कथयामीत्यर्थः । निपातानामनेकार्थत्वात् । एवमुत्तरेष्वपि योज्यम् । षष्ठसप्तमौ मन्त्रौ विकल्पार्थौ । वसुयुक्ताऽग्नयेऽग्निनामकाय वातविशेषाय त्वां स्वाहा कथयामि । एवमुत्तरत्रापि योज्यम् । ऋभ्वादिभिर्युक्ताय सवितृनामकाय वाताय कथयामि । अङ्गिरोभिः पितृभिश्च युक्ताय यमनामकाय वाताय कथयामि । अयमपि मन्त्रो विकल्पार्थः ।

एतैर्मन्त्रैः साध्यं वातनामकथनं विधत्ते—

शिरो वा एतद्यज्ञस्य । यत्प्रवर्ग्यः । आत्मा वायुः । उद्यत्य वातनामान्याह । आत्मन्नेव यज्ञस्य शिरः प्रतिदधाति, इति ।

( प्रपा० ५ । अनु० ७ । विभा० ३२ )

आहवनीयं प्रति नेतुं प्रवर्ग्यमुद्यत्य वातनामकथनेन वायोरात्मत्वादात्मन्येव =यज्ञस्य प्रतिहितो(तं) भवति ।

= 'यज्ञशिरः प्रतिहितं भवति' इति तै० पुस्तकपाठ इति ग. पुस्तकटिप्पणी ।

१ ख. °ल्पः—“वृञ° । म. °ल्प.—“प्रभञ्जनावानं । २ ग. °त्यपि प° । ३ ग °श° । ४ ग. विकल्पौ । ५ ख. ग. साध्यवा° । ६ म. °मुद्धृत्य । ७ ख. ग. °ज्ञस्याग्निः प्र° ।

तत्कथनमध्ये श्वासं वारयति—

अनवानम्। प्राणाना५ संतत्यै, इति।

( प्रपा० ९। अनु० ७। विभा० ३३ )

अवानं श्वासः स यथा न भवति तथा पठेत्। तच्च प्राणानामविच्छेदाय भवति

मन्त्रसंख्यां विधत्ते—

पञ्चाऽऽह (९)। पाङ्क्तो यज्ञः। यावानेव यज्ञः। तस्य शिरः प्रतिदधाति, इति।

( प्रपा० ९। अनु० ७। विभा० ३४ )

धानाकरम्भादिहविष्पञ्चकयोगेन **यज्ञः पाङ्क्तः**। स च **यावानस्ति तस्य** सर्वं **शिरो** नामपञ्चकेन प्रतिहितं भवति।

उत्तरपञ्चकस्य प्रथममन्त्रेऽग्निशब्देनाऽऽदित्यो विवक्षित इति दर्शयति—

अग्नये त्वा वसुमते स्वाहेत्याह। असौ वा आदित्योऽग्निर्वसुमान्। तस्मा एवैनं जुहोति, इति।

( प्रपा० ९। अनु० ७। विभा० ३५ )

हविष्प्रक्षेपाभावेऽपि स्वाहाशब्दप्रयोगमात्रेण जुहोतीत्युच्यते।

द्वितीयमन्त्रादौ सोमादिशब्दैः प्रसिद्धार्थतामेव विवक्षितां दर्शयति—

सोमाय त्वा रुद्रवते स्वाहेत्याह। चन्द्रमा वै सोमो रुद्रवान्। तस्मा एवैनं जुहोति। वरुणाय त्वाऽऽदित्यवते स्वाहेत्याह (१०)। अप्सु वै वरुण आदित्यवान्। तस्मा एवैनं जुहोति। बृहस्पतये त्वा विश्वदेव्यावते स्वाहेत्याह। ब्रह्म वै देवानां बृहस्पतिः। ब्रह्मण एवैनं जुहोति, इति।

( प्रपा० ९। अनु० ७। विभा० ३६ )

अनन्तरमन्त्रे सवितृशब्देन संवत्सरस्य विवक्षां दर्शयति—

सवित्रे त्वर्भुमते विभुमते प्रभुमते वाजवते स्वाहेत्याह। संवत्सरो वै सवितर्भुमान्विभुमान्प्रभुमान्वाजवान्। तस्मा एवैनं जुहोति, इति।

( प्रपा० ९। अनु० ७। विभा० ३७ )

अनन्तरमन्त्रे यमशब्देन प्राणस्य विवक्षां दर्शयति—

यमाय त्वाऽङ्गिरस्वते पितृमते स्वाहेत्याह। प्राणो वै यमोऽङ्गिरस्वान्पितृमान् (११)। तस्मा एवैनं जुहोति, इति।

( प्रपा० ९। अनु० ७। विभा० ३८ )

वातानां मन्त्रानुपसंहरति—

एताभ्य एवैनं देवताभ्यो जुहोति, इति।

( प्रपा० ९। अनु० ७। विभा० ३९ )

समुद्रादिभ्यो यमान्तेभ्यस्त्रयोदशमन्त्रोक्ताभ्यो देवताभ्यो होमः कृतो भवति ।
अनुष्ठेयमन्त्रसंख्यां प्रशंसति—

दश संपद्यन्ते । दशाक्षरा विराट् । अन्नं विराट् । विराजैवान्नाद्यमवरुन्धे, इति ।
( प्रपा० ५ । अनु० ७ । विभा० ४० )

*त्रयोदशसु त्रयाणां विकल्पार्थत्वेन पूर्वपञ्चकमुत्तरपञ्चकं चेत्येवमनुष्ठेयमन्त्राणां
[द]शत्वसंपत्तिः, अतो विराजाऽन्नप्राप्तिः ।

अथ रौहिणपुरोडाशौ विधत्ते—

रौहिणाभ्यां वै देवाः सुवर्गं लोकमायन् । तद्रौहिणयो रौहिणत्वम् । यद्रौहिणौ भवतः । रौहिणाभ्यामेव तद्यजमानः सुवर्गं लोकमेति, इति ।
( प्रपा० ५ । अनु० ७ । विभा० ४१ )

स्वर्ग(र्गे) रोहत्याभ्यां पुरोडाशाभ्यामिति रौहिणौ ताभ्यां स्वर्गप्राप्तिः ।
रौहिणपुरोडाशयोर्दक्षिणोत्तरयोरपि होममन्त्रावुत्तरानुवाक आम्नास्यमानावपि पुरो-
[डा]शविधिप्रसङ्गादिहैवोपहृत्य व्याख्यास्ये(ये)ते —

अहर्ज्योतिः केतुना जुषताꣳ सुज्योतिर्ज्योतिषाꣳ स्वाहा रात्रिर्ज्योतिः केतुना जुषताꣳ सुज्योतिर्ज्योतिषाꣳ स्वाहेत्याह । आदित्यमेव तदमुष्मिँल्लोकेऽह्ना परस्ताद्दाधार । रात्रिया अवस्तात् । तस्मादसावादित्योऽमुष्मिँल्लोकेऽहोरात्राभ्यां धृतः (१२), इति ।
( प्रपा० ५ । अनु० ७ । विभा० ४२ )

मनुष्यनामानि पशवः सीदन्त्वित्याहेन्द्रायेत्याहार्धयति घ्नन्ति गृह्णात्याहिꣳसावै
पञ्चाऽऽहाऽऽदित्यवते स्वाहेत्याह पितृमानेति चत्वारि च ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके पञ्चमप्रपाठके सप्तमोऽनुवाकः ॥ ७ ॥

अहर्देवता केतुनाऽध्यक्षरूपेणाऽऽदित्यमण्डलेन सह ज्योतिर्जुषतां प्रकाशं सेव-
[ता]ं ज्योतिषां मध्ये सुज्योतिः शोभनज्योतीरूपमहरुद्दिश्य स्वाहुतमिदमस्तु ।
रात्रिदेवतामन्त्रोऽपि व्याख्येयः । तत्तेन मन्त्रद्वयेन स्वर्गलोकात्परस्तादुपरिभागेऽ-
[ह्दे]तया सहितमादित्यं धारयति । अवस्तादधोभागे रात्रिदेवतया सहितमादित्यं
[धार]यति । यस्मादेवं तस्मात्स्वर्गेऽसावादित्यो देवताद्वयेन धृतो वर्तते ।

विश्वा आशा दक्षिणसत् ।

कल्पः—"अपरेणाऽऽहवनीयं दाक्षिणोऽतिक्रामन्विश्वा आशा दाक्षिणसदिति

* 'त्रयोदशमन्त्रेषु' इति ते. पुस्तकपाठ इति ग. पुस्तकटिप्पणी ।

ग. °ऽद्दाराऽन्नत्वप्रा° । २ ख. °न्नत्वप्रा° । ३ क. °हणमाभ्यां । ४ क. ख. °न्त्रेण्य। ५ ग. णाऽभिक्रा° । ६ क. दिक्रम° । ख. °तिक्रम्य विश्वा ।

ब्रह्माणमीक्षते" इति। दक्षिणदेशे सीदतीति **दक्षिणसद्ब्रह्मा सोऽयं विश्वा आशाः** सर्वदिग्वर्तिनो देवान्प्रीणात्विति शेषः।

उक्तार्थपरत्वं मन्त्रस्य दर्शयति—

विश्वा आशा दक्षिणसदित्याह। विश्वानेव देवान्प्री-
णाति। अथो दुरिष्ट्या एवैनं पाति, इति।

( प्रपा० ५ । अनु० ८ । विभा० १ )

अनेन मन्त्रेण देवप्रीतिर्भवति। यागे संभावितदोषाच्च यजमानं पालयति।

**विश्वान्दे॒वान॑याडि॒ह।**

कल्पः—"विश्वान्देवानयाडिहेति होतारम्" इति। ईक्षत इत्यनुवर्तते। इ कर्मणि होता **विश्वान्देवानयाडिष्टवान्।**

अयाट्शब्देन सर्वदेवानां भागसमृद्धिं दर्शयति—

विश्वान्देवानयाडिहेत्याह। विश्वानेव
देवान्भागधेयेन समर्धयति, इति।

( प्रपा० ५ । अनु० ८ । विभा० २ )

कल्पः—"स्वाहाकृतस्य घर्मस्येति घर्ममभिमन्त्र्य" इति। पाठस्तु—

**स्वाहा॑कृतस्य घ॒र्मस्य॑। मधोः॑ पिबतमश्विना।**
**स्वाहा॒ऽग्नये॑ य॒ज्ञिया॑य। शं यजु॑र्भिः, इति।**

**अश्विना** हेऽश्विनौ **स्वाहाकृतस्य** स्वाहाकारेण समर्पितस्य **मधोर्मधुरस्य घर्म** प्रवर्ग्यद्रव्यस्य रसं **पिबतम्। यजुर्भिर्यजुर्देवताभिः** सहिताय **यज्ञियाय** यज्ञयोग्या **ग्नये शं** सुखं यथा भवति तथा स्वाहुतमस्तु।

मन्त्रस्य पूर्वभागेणाश्विनोर्भागसमृद्धिं दर्शयति—

स्वाहाकृतस्य घर्मस्य मधोः पिबतमश्विनेत्याह।
अश्विनावेव भागधेयेन समर्धयति, इति।

( प्रपा० ५ । अनु० ८ । विभा० ३

उत्तरभागे स्वाहेत्युच्चारेण प्रवर्ग्येऽभिघारणं हविष्ट्वं च संपद्यत इति दर्शयति—

स्वाहाऽग्नये यज्ञियाय शं यजुर्भिरित्याह। अभ्येवैनं
घारयति। अथो हविरेवाकः ( १ ), इति।

( प्रपा० ५ । अनु० ८ । विभा० ४

कल्पः—"अश्विना घर्मं पातमिति वषट्कृते जुहोति" इति। पाठस्तु—

**अश्विना घ॒र्मं पा॑त॒ꣳ॒ हार्दि॑वानम् ( २ )।**

**अहर्दिवाभिरूतिभिः । अनु वां द्यावा-**
**पृथिवी मꣳसाताम् । स्वाहेन्द्राय, इति ।**

हेऽश्विनौ **घर्मं** प्रवर्ग्यहविः **पातं** पिबतम् । कीदृशम् । **हार्दिवानं** हृदयप्रिया-तेशयो हार्दी सोऽस्यास्तीति हार्दिवा तादृशम् । **अहरह्न्यस्मिन्दिने दिवाभिर्द्योत-**नाभि**रूतिभि**रस्मद्विषयल(र १)क्षणाक्रियाभिर्निमित्तभूताभिः **पात**मिति पूर्वत्रा-न्वयः । हेऽश्विनौ **वां** युवां द्यावापृथिव्यौ देवते **अनुमंसाता**मनुमतौ कुरुताम् । इन्द्रा-येदं स्वाहुतमस्तु ।

**स्वाहेन्द्रा वट् ।**

कल्पः—"स्वाहेन्द्रां वडित्यनुवषट्कृते" इति । जुहोतीत्यनुवर्तते । ईन्द्रेत्ययं शब्दः परमैश्वर्ययोगात्स्विष्टकृदग्निमाचष्टे । स्वाहाशब्द आहुतियोग्यतामाह । तादृशाय वषडिदं हविः समर्पितम् ।

अश्विना घर्मं पातमित्युक्त्या तयोर्भोगसमृद्धिं दर्शयति—

अश्विना घर्मं पातꣳ हार्दिवानमहर्दिवाभिरूतिभि-
रित्याह । अश्विनावेव भागधेयेन समर्धयति, इति ।
( प्रपा० ५ । अनु० ८ । विभा० ५ )

अनुमꣳसातामिति पदेन द्यावापृथिव्योरनुज्ञा प्रार्थ्यत इति दर्शयति—

अनु वां द्यावापृथिवी मꣳसातामित्याहानुमत्यै, इति ।
( प्रपा० ५ । अनु० ८ । विभा० ६ )

चतुर्थ्यन्तस्येन्द्रशब्दस्य प्रथमतः प्रयोगे कारणं दर्शयति—

स्वाहेन्द्राय स्वाहेन्द्रा वडित्याह ।
इन्द्राय हि पुरो हूयते, इति ।
( प्रपा० ५ । अनु० ८ । विभा० ७ )

यस्मात्प्रधानदेवतारूपायेन्द्राय प्रथमत आहुतिः पश्चात्स्विष्टकृद्देवताया आहुतिर्युक्ता, तस्मादिन्द्रायेति मुख्यदेवताविवक्षया प्रथमप्रयोगः ।

अत्रानुष्ठानक्रमं विधत्ते—

आश्राव्याऽऽह घर्मस्य यजेति । वषट्कृते जुहोति ।
रक्षसामपहत्यै । अनुयजति स्वगाकृत्यै, इति ।
( प्रपा० ५ । अनु० ८ । विभा० ८ )

---

१ ग. °वर्ग्य ह° । २ क. °याभिः पा° । ३ ग. °न्द्राय व° । ४ ग. इन्द्र इत्य° । ५ क. ख. °न्द्रपदस्य ।

प्रथममाश्रावणं कृत्वा ततो **घर्मस्य यजेति** ब्रूयात्। हे होतर्घर्मस्य प्रवर्ग्यस्यानुष्ठानार्थं **यज** याज्यां पठ। एवं प्रैषमुक्त्वा ततो होत्रा याज्यापाठेन **वषट्कृते** सत्यश्विना घर्ममित्यनेन मन्त्रेण जुहुयात्। एतच्च रक्षसामपघाताय भवति। ततोऽनुवषट्कारे होत्रा प्रयुक्ते सति स्वाहेन्द्रा वडिति मन्त्रेण यजेत्। तच्च **स्वगाकृत्यै** स्वाधीनकरणायोपयुज्यते।

कल्पः—"घर्ममपातमश्विनेत्यनुवाकशेषेणोपस्थाय" इति। पाठस्तु—

**घर्ममपातमश्विना हार्दिवानम्। अहर्दिवाभिरूतिभिः। अनु वां द्यावापृथिवी अमꣳसाताम्। तं प्राव्यं यथावट्। नमो दिवे। नमः पृथिव्यै (३)। दिवि धा इमं यज्ञम्। यज्ञमिमं दिवि धाः। दिवं गच्छ। अन्तरिक्षं गच्छ। पृथिवीं गच्छ। पञ्च प्रदिशो गच्छ। देवान्घर्मपान्गच्छ। पितॄन्घर्मपान्गच्छ (४) इति॥**

**आदित्यवते स्वाहा हार्दिवानं पृथिव्या अष्टौ च॥**

**इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके चतुर्थप्रपाठके नवमोऽनुवाकः॥ ९॥**

हेऽश्विनावस्मिन्नहनि द्योतमानैरक्षणक्रियानिमित्तं हृदयप्रियातिशययुक्तं प्रवर्ग्यद्रव्यमपातं युवां पीतवन्तौ। द्यावापृथिव्यौ च युवयोरनुमतिं दत्तवत्यौ। प्रकृष्टरक्षाहेतुं **तं प्राव्यं** [प्रवर्ग्यद्रव्यं?] **यथावट्** स्विष्टकृद्देवतायै यथावद्दत्तवानस्मि। द्यावापृथिव्योः प्रसादादस्य कर्मणो निष्पत्तेस्ताभ्यां **नमोऽस्तु**। हेऽश्वीन्द्ररूप प्रवर्ग्य देवास्मदीयमिमं **यज्ञं दिवि धा** द्युलोके स्थापय। द्विरुक्तिरादरार्था। हे प्रवर्ग्य द्युप्रभृतिकं लोकत्रयं प्राप्नुहि। तथोर्ध्वदिक्सहिताः प्राच्यादिपञ्च दिग्देवताः प्राप्नुहि। प्रवर्ग्यस्य पातारो ये देवा ये च पितरस्तानुभयान्प्राप्नुहि।

होममन्त्रेण सहोपस्थानमन्त्रस्य समानार्थतां दर्शयति—

घर्ममपातमश्विनेत्याह (२)। पूर्वमेवोदितम्। उत्तरेणाभिगृणाति, इति।

(प्रपा० ५। अनु० ८। विभा० ९)

---

१ ग. °व्यै। दि°। २ क. ख. ग पितॄन्व°। ३ ग. °च्छ (१)। ४ ख. °नलक्ष° ५ ग. °त्यौ। प्राव्यं प्र°।

[अ]मꣳस्तातामित्यस्यातीतार्थवाचिशब्दस्य सिद्धानुज्ञापरत्वं दर्शयति—

अनु वां द्यावापृथिवी अमꣳस्तातामित्याहानुमत्यै, इति ।

( प्रपा० ५ । अनु० ८ । विभा० १० )

अनन्तरमन्त्रभागस्य स्पष्टार्थतां दर्शयति—

तं प्राव्यं यथावण्णमो दिवे नमः पृथिव्या इत्याह । यथायजुरेवैतत्, इति ।

( प्रपा० ५ अनु० ८ । विभा० ११ )

हविषः स्वर्गप्राप्तिपरत्वमनन्तरभागस्य दर्शयति—

दिवि धा इमं यज्ञं यज्ञमिमं दिवि धा

इत्याह । सुवर्गमेवैनं लोकं गमयति, इति ।

( प्रपा० ५ । अनु० ८ । विभा० १२ )

दिवं गच्छेति प्रार्थनाया हविषो लोकत्रयप्रतिष्ठापनार्थतां दर्शयति—

दिवं गच्छान्तरिक्षं गच्छ पृथिवीं गच्छेत्याह ।

एष्वेवैनं लोकेषु प्रतिष्ठापयति, इति ।

( प्रपा० ५ । अनु० ८ । विभा० १३ )

अथोत्तरवाक्यानां सर्वदिक्षु देवेषु पितृषु च हविषः प्रतिष्ठापनार्थतां दर्शयति—

पञ्च प्रदिशो गच्छेत्याह ( ३ ) । दिक्ष्वेवैनं प्रतिष्ठापयति । देवान्घर्मपा-न्गच्छ । पितॄन्घर्मपान्गच्छेत्याह । उभयेष्वेवैनं प्रतिष्ठापयति, इति ।

( प्रपा० ५ । अनु० ८ । विभा० १४ )

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वे-दीयतैत्तिरीयारण्यके चतुर्थप्रपाठके नवमोऽनुवाकः ॥ ९ ॥

अथ चतुर्थे दशमोऽनुवाकः ।

[आह]वनीये प्रवर्ग्यद्रव्येण होमो नवमेऽभिहितः । दशमे तद्द्रव्यशेषेणाग्निहोत्रहो-[म्यते ... क्र]ियते । तत्राऽऽदौ किंचिदनुमन्त्रणमुच्यते । कल्पः—"उपर्याहवनीये धार्य-[माणं प्र]तिप्रस्थाता शृतदध्ना पूरयतीषे पीपिह्यूर्जे पीपिहीति विक्षरन्तमनुमन्त्रयते" इति ।

इषे पीपिहि । ऊर्जे पीपिहि । ब्रह्मणे पीपिहि । क्षत्राय पीपिहि । अद्भ्यः पीपिहि । ओषधीभ्यः पीपिहि । वनस्पतिभ्यः पीपिहि ।

१ क. °चिनः श° । २ घ. पितॄन्घ° । ३ ग. °ये धार्य° । ४ ख. शृतं द° । ५ ग. °
६ क. घ. उर्जे ।

द्यावापृथिवीभ्यां पीपिहि । सुभूताय पीपिहि । ब्रह्मवर्चसाय पीपिहि (१) । यजमानाय पीपिहि । मह्यं ज्यैष्ठ्याय पीपिहि, इति ।

आहवनीयस्योपरि महावीरं धारयित्वा तत्रत्ये तप्ते घृते तप्तस्य दध्नः प्रक्षेपे सति प्रवर्ग्यो विक्षरति विशेषेण पात्रस्योर्ध्वं यदोद्गच्छति तदानीमुद्गच्छन्तं प्रवर्ग्यं संबोध्येद मुच्यते—हे प्रवर्ग्य, इषेऽन्नार्थं पीपिहि त्वं प्रवृद्धो भव । तथोर्जे रसार्थं ब्राह्मणाय च प्रवृद्धो भव । सुभूतं शोभनं प्राणिजातम् । मह्यं ज्यैष्ठ्यायाध्वर्योर्मम प्रशस्तत्वाय प्रवर्ग्यस्याभिवृद्ध्या सर्वमिदमभिवर्धेत इत्यर्थः ।

एतस्याभिवृद्धेर्मन्त्रोक्ताया वृष्टिहेतुत्वं दर्शयति—

यत्पिन्वते । वर्षुकः पर्जन्यो भवति । तस्मात्पिन्वमानः पुण्यः, इति ।

( प्रपा० ९ । अनु० ८ । विभा० १९ )

पिन्वते वर्धते पात्रस्योपर्युद्गच्छतीत्यर्थः ।

हविष उद्गमनं दिग्विशेषेण प्रशंसति—

यत्प्राङ्पिन्वते । तद्देवानाम् । यद्दक्षिणा । तत्पितृणाम् ( ४ ) ।
यत्प्रत्यक् । तन्मनुष्याणाम् । यदुदङ् । तद्रुद्राणाम्, इति ।

( प्रपा० ९ । अनु० ८ । विभा० १६ )

इत्थमभिवृद्धिं प्रशस्य प्रागुदग्दिशोः संधौ क्षरणं विधत्ते—

प्राञ्चमुदञ्चं पिन्वयति । देवत्राऽकः, इति ।

( प्रपा० ९ । अनु० ८ । विभा० १७ )

प्रागुदङ्मध्यवर्तिनमेतं प्रवर्ग्यमिष्टं पिन्वयति, अभिवृद्धं कुर्यात् । महावीरे तस्मिन्प्रदेशे दधिप्रक्षेपेणाभिवर्धयेत् । तेन देवत्रा देवेष्वकरेतं प्रवर्ग्यं करोति ।

पक्षान्तरं विधत्ते—

अथो खलु । सर्वा अनुदिशः पिन्व-
यति । सर्वा दिशः समेधन्ते, इति ।

( प्रपा० ९ । अनु० ८ । विभा० १८ )

पात्रमध्ये सर्वा दिशोऽनुलक्ष्य दधिप्रक्षेपेण तद्धविरुद्गमयेत् । तेन सर्वा अपि सम्यग्वर्धन्ते ।

पात्रादुद्गतस्य हविषः परिधिभ्यो बहिर्देशे पतनं वारयितुं विधत्ते—

अन्तःपरिधि पिन्वयति (५) । तेजसोऽस्कन्दाय, इति ।

( प्रपा० ९ । अनु० ८ । विभा० १९ )

१ ग. वारयित्वा । २ क. ख. °र्ग्यद्रव्यं पि° । ३ क. °दुद्धृत° ।

परिधीनामन्तरेव यथा पतति तथाऽभिवर्धयेत् । तथा सत्यविनाशितं तेजो भवति ।
इषु चतुर्थीविभक्तेस्तात्पर्यं दर्शयति—

इषे पीपिह्यूर्जे[1] पीपिहीत्याह । इषमेवोर्जं यजमाने दधाति, इति ।
( प्रपा० ९ । अनु० ८ । विभा० २० )

उत्तरमन्त्रेष्वप्येतदनुसंधेयम् ।

सर्वेषां यजमानार्थत्वे समाने सति पुनर्यजमानायेत्युक्तेस्तात्पर्यमाह—
यजमानाय पीपिहीत्याह । यजमानायैवैतामाशिषमाशास्ते,[2] इति ।
( प्रपा० ९ । अनु० ८ । विभा० २१ )

यजमानस्य फलान्तरानुशासनायेयमुक्तिरित्यर्थः ।

अध्वर्योः स्वार्थं मह्यमित्युक्तिरिति दर्शयति—

मह्यं ज्यैष्ठ्याय पीपिहीत्याह । आत्मन एवैतामाशिषमाशास्ते, इति ।
( प्रपा० ९ । अनु० ८ । विभा० २२ )

त्विष्यै त्वा । द्युम्नाय त्वा । इन्द्रियाय त्वा भूत्यै त्वा ।

कल्पः—"अथैनं दिशोऽनुप्र[3]ह्लावयति त्विष्यै त्वा द्युम्नाय त्वेन्द्रियाय त्वा [भूत्यै] त्वा" इति । हे प्रवर्ग्य त्विष्यै दीप्तिसिद्धये त्वां प्राच्यां दिशि हुतं करोमि । [द्युम्न]ाय धनाप्तिसिद्धये[4] त्वां दक्षिणस्यां दिशि हुतं करोमि । इन्द्रियाभिवृद्धये[5] त्वां [प्रती]च्यां दिशि हुतं करोमि । भूत्या ऐश्वर्यसिद्ध्यर्थमुदीच्यां दिशि हुतं करोमि ।

मन्त्रस्य स्पष्टार्थतां दर्शयति—

त्विष्यै त्वा द्युम्नाय त्वेन्द्रियाय त्वा
भूत्यै त्वेत्याह । यथायजुरेवैतत्, इति ।
( प्रपा० ९ । अनु० ८ । विभा० २३ )

धर्माऽसि सुधर्मा मे न्यस्मे । ब्रह्माणि धारय । क्षत्राणि धारय । विशं धारय । नेत्त्वा वातः स्कन्दयात् ( २ ) ।

कल्पः—"प्रत्याक्रम्योपयमने शेषमानीयान्तर्वेद्युपयमनं निधाय[6] पूर्वस्मिन्खरे राजतं [रुक्मं] निधाय तस्मिन्महावीरं प्रतिष्ठापयाति धर्माऽसि सुधर्मा मे न्यस्मे ब्रह्माणि धारयेति [ब्राह्]मणस्य[7] क्षत्राणि धारयेति राजन्यस्य विशं धारयेति वैश्यस्य" इति । नेत्त्वा वातः

१ ग. °पिह्यूर्जे । २ घ. °मानमेवै° । ३ ग. °प्रजाव° । ४ ख. ग. धनाप्ति° । ५ ग. °वीर्यवृ° । ६ क. ख. विधाय । ७ क. °नि । हे ।

स्कन्दयादिति [मन्त्रशेषः]। हे महावीर **धर्माऽसि** त्वं धारणशक्तियुक्तोऽसि **मे** मम **सुधर्मा** सुष्ठु धारको भवेति शेषः । **अस्मे** अस्मासु **ब्रह्माणि** ब्राह्मणजात्युचितानि कर्माणि [नि]**धारय** नितरां संपादय । **क्षत्राणि** क्षत्रियजात्युचितानि कर्माणि **धारय**। **विशं** प्रजां **धारय**। **वातो** वायुस्त्वां **नेत्स्कन्दयान्नैव** शोषयतु ।

मन्त्रपाठेन ब्राह्मणजात्युचिते कर्मणि यजमानस्य स्थापनं दर्शयति—

धर्माऽसि सुधर्मा मे न्यस्मे ब्रह्माणि धारये-
त्याह ( ६ )। ब्रह्मन्नेवैनं प्रतिष्ठापयति, इति ।
( प्रपा० ९ । अनु० ८ । विभा० २४ )

मन्त्रशेषस्य निगदव्याख्यातत्वमभिप्रेत्य तत्स्वरूपमात्रमुपदर्शयति—

नेत्त्वा वातः स्कन्दयादिति, [इति]।
( प्रपा० ९ । अनु० ८ । विभा० २५ )

ब्राह्मणादिविषयेषु मन्त्रत्रयेष्वनुषङ्गद्योतनाय पृथगुपदर्शनम् ।

कल्पः—"यद्यभिचरेदमुष्य त्वा प्राणे सादयामीति सादयेत्" इति। पाठस्तु—

**अमुष्य त्वा प्राणे सादयामि । अमुना सह निरर्थं गच्छ । योऽस्मान्द्वेष्टि । यं च वयं द्विष्मः , इति।**

हे महावीर द्वेष्टा द्वेष्यश्चेत्युभयविधस्यामुष्य शत्रोः **प्राणे** त्वां **सादयामि** **अमुना शत्रुणा सह** त्वं **निरर्थं गच्छ** प्रयोजनाभावं प्राप्नुहि, तदीयं प्रयोजनं कुर्वित्यर्थः ।

अनेन मन्त्रेणाभिचारप्रयोगं विधत्ते—

यद्यभिचरेत् । अमुष्य त्वा प्राणे सादयाम्यमुना
सह निरर्थं गच्छेति ब्रूयाद्यं द्विष्यात् । यमेव
द्वेष्टि । तेनैनꣳ[1] सह निरर्थं गमयति, इति ।
( प्रपा० ९ । अनु० ८ । विभा० २६ )

यं शत्रुं यजमानो **द्विष्यात्**, शत्रुश्च **यमेव** यजमानं **द्वेष्टि**, **एनं** द्वेष्यं द्वेष्टा चेत्युभयविधं शत्रुं स यजमानस्तेन महावीरेण **सह निरर्थं** पुरुषार्थाभावं प्रापयति ।

कल्पः—"अथैताञ्शकलानुपयमने जुहोति पूष्णे शरसे स्वाहेत्येतैः प्रतिमन्त्रम्" इति । पाठस्तु—

**पूष्णे शरसे स्वाहा । ग्रावभ्यः स्वाहा । प्रतिरेभ्यः स्वाहा । द्यावापृथिवीभ्याꣳ**

---

१ क. ख. निरन्तरं ।

**स्वाहा । पितृभ्यो घर्मपेभ्यः स्वाहा, इति ।**

अनिष्टस्य हिंसकः शराः, तादृशाय **शरसे पूष्णे** पोषकाय देवाय स्वाहुतमिदमस्तु । **ग्रावभ्यः** पाषाणजन्यध्वनिरूपाभ्यो वाग्देवताभ्यः । **प्रतिरेभ्योऽ**भिवृद्धिहेतुभ्यः प्राणदेवेभ्यः ।

प्रथममन्त्रे पूषञ्श(श)ब्देन बहुदेवताविवक्षां दर्शयति—

पूष्णे शरसे स्वाहेत्याह । या एव देवता
हुतभागाः । ताभ्य एवैनं जुहोति, इति ।

( प्रपा० ५ । अनु० ८ । विभा० २७ )

द्विविधा हि **देवता** हुतभागा अहुतभागाश्चेति । तथा चान्यत्राऽऽम्नातम्—"हुतादो वा अन्ये देवा अहुतादोऽन्ये" इति । तासु **हुतभागाः** सर्वा अप्यत्रोपलक्षितास्**ताभ्यः** सर्वाभ्य एनमुक्तं शकलं **जुहोति** ।

ग्रावशब्देन तज्जन्यध्वनिविवक्षां दर्शयति—

ग्रावभ्यः स्वाहेत्याह । या एवान्तरिक्षे
वाचः (७) । ताभ्य एवैनं जुहोति, इति ।

( प्रपा० ५ । अनु० ८ । विभा० २८ )

प्रतिरशब्देन प्राणविवक्षां दर्शयति—

प्रतिरेभ्यः स्वाहेत्याह । प्राणा वै देवाः
प्रतिराः । तेभ्य एवैनं जुहोति, इति ।

( प्रपा० ५ । अनु० ८ । विभा० २९ )

द्यावापृथिवीशब्देन मुख्यार्थविवक्षां दर्शयति—

द्यावापृथिवीभ्याꣳ स्वाहेत्याह । द्यावा-
पृथिवीभ्यामेवैनं जुहोति, इति ।

( प्रपा० ५ । अनु० ८ । विभा० ३० )

घर्मपेभ्य इति विशेष्येण[2](षणेन) सोमयागं कृत्वा पितृलोकगतानां पितृणां विवक्षां दर्शयति—

पितृभ्यो घर्मपेभ्यः स्वाहेत्याह । ये वै यज्वानः । ते
पितरो घर्मपाः । तेभ्य एवैनं जुहोति (८), इति ।

( प्रपा० ५ । अनु० ८ । विभा० ३१ )

यज्वनां स्वकीययागकाले प्रवर्ग्यपानमस्तीति ते घर्मपाः ।

**रुद्राय रुद्रहोत्रे स्वाहा ( ३ ) ।**

---

१ ङ 'नमक्तश' । २ क. °शेषेण ।

कल्पः—"षष्ठं शकलं सर्वेषु लेपेष्वङ्क्त्वाऽनन्वीक्षमाण उदञ्चं निरस्यति रुद्राय रुद्रहोत्रे स्वाहा" इति। रुद्राः सहस्रसंख्याका होतार आह्वातारो यस्य मुख्यरुद्रस्य तस्मै रुद्रहोत्रे मुख्यरुद्राय स्वाहुतमिदं शकलमस्तु।

अनेन मुख्यरुद्रस्य भागसमृद्धिं दर्शयति—

रुद्राय रुद्रहोत्रे स्वाहेत्याह। रुद्र-
मेव भागधेयेन समर्धयति, इति।

(प्रपा० ६ । अनु० ८ । विभा० ३२)

अस्य शकलस्याऽऽज्यपयःपिष्टलेपेषु सर्वेष्वञ्जनं विधत्ते—

सर्वतः समनक्ति। सर्वत एव रुद्रं निरवदयते, इति।

(प्रपा० ६ । अनु० ८ । विभा० ३३)

सर्वाञ्जनेन क्रूरदेवस्य रुद्रस्य सर्वतोऽपसारणं कृतं भवति।

शकलपरित्यागस्य दिग्विशेषं विधत्ते—

उदञ्चं निरस्यति। एषा वै रुद्रस्य दिक्।
स्वायामेव दिशि रुद्रं निरवदयते, इति।

(प्रपा० ६ । अनु० ८ । विभा० ३४)

ऐशान्याः समीपे वर्तत इत्युदीच्यपि रुद्रस्य दिग्भवति।

हस्तेन जलस्पर्शनं विधत्ते—

अप उपस्पृशति मेध्यत्वाय, इति।

(प्रपा० ६ । अनु० ८ । विभा० ३५)

रुद्रार्थशकलस्पर्शेन यज्ञयोग्यत्वं विनष्टं पुनर्जलस्पर्शेन तद्योग्यता संपद्यते।

शकलपरित्यागकाले तद्दर्शनं निषेधति—

नान्वीक्षेत। यदन्वीक्षेत (९)। चक्षुरस्य
प्रमायुकꣳ स्यात्। तस्मान्नान्वीक्ष्यः, इति।

(प्रपा० ६ । अनु० ८ । विभा० ३६)

प्रमायुकं विनश्वरम्।

अहर्ज्योतिः केतुना जुषताम्। सुज्योति-
र्ज्योतिषाꣳ स्वाहा। रात्रिर्ज्योतिः केतुना
जुषताम्। सुज्योतिर्ज्योतिषाꣳ स्वाहा।

कल्पः—"प्रतिप्रस्थाता दक्षिणं रौहिणं प्रतिष्ठितं जुहोत्यहर्ज्योतिः के

१ ग. 'ध्वक्त्वा'। २ ग प्रतितिष्ठन्तं।

जुषतां सुज्योतिर्ज्योतिषाꣳ स्वाहा । रात्रिर्ज्योतिः केतुना जुषतां सुज्योतिर्ज्योतिषाꣳ स्वाहा " इति । तावेतौ मन्त्रौ पूर्वस्मिन्ननुवाके ब्राह्मणोदाहरणप्रसङ्गेन व्याख्यातौ ।

**अपीपरो माऽह्नो रात्रियै मा पाहि । एषा ते अग्ने समित् । तया समिध्यस्व । आयुर्मे दाः । वर्चसा माऽऽञ्जीः । अपीपरो मा रात्रिया अह्नो मा पाहि ( ४ ) । एषा ते अग्ने समित् । तया समिध्यस्व । आयुर्मे दाः । वर्चसा माऽऽञ्जीः ।**

कल्पः—" अपीपरो माऽह्नो रात्रियै मा पाह्येषा ते अग्ने समित्तया समिध्यस्वाऽऽयुर्मे दा वर्चसा माऽऽञ्जीरिति सायं समिधमादधाति, अपीपरो मा रात्रिया अह्नो मा पाहीति प्रातः " इति । तन्मन्त्रशेषस्तु—" एषा ते अग्ने समित् । तया समिध्यस्व । आयुर्मे दाः । वर्चसा माऽऽञ्जीः " इति । हेऽग्ने मां यजमानमपीपरः पारं नीतवानसि । तस्मादह्नो रात्रेश्च सकाशान्मां पाहि । हेऽग्ने ते तवैषा समिदाधीयते, तया समिधा त्वं समिध्यस्व संदीप्तो भव । मे मह्यमायुः, दा देहि । वर्चसा तेजसा मां यजमानमाञ्जीः, अक्तं कुरु । संयोजयेत्यर्थः । अपीपरो मा रात्रिया इति मन्त्रोऽपि तद्वद्व्याख्येयः । अहःशब्दस्य रात्रिशब्दस्य च पाठे पौर्वापर्यमात्रं विशेषः ।

मन्त्रद्वयेऽपि यजमानस्याऽऽयुर्वर्चःप्राप्तिं दर्शयति—

अपीपरो माऽह्नो रात्रियै मा पाह्येषा ते अग्ने समित्तया समिध्यस्वाऽऽयुर्मे दा वर्चसा माऽऽञ्जीरित्याह । आयुरेवास्मिन्वर्चो दधाति । *अपीपरो मा रात्रिया अह्नो मा पाह्येषा ते अग्ने समित्तया समिध्यस्वाऽऽयुर्मे दा वर्चसा माऽऽञ्जीरित्याह । आयुरेवास्मिन्वर्चो दधाति, इति ।

( प्रपा० ९ । अनु० ८ । विभा० ३७ )

**अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहा । सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहा ।**

कल्पः—" अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहेति सायमग्निहोत्रं जुहोति सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहेति प्रातः " इति । योऽयमग्निः स ज्योतिःस्वरूपः, यश्च ज्योतिः-

---

* एतदादि दधातीत्यन्तं घ. पुस्तके त्रुटितम् ।

---

१ ग. °दधाति । २ ग. पाठपौ° । ३ ग. °होतीति ।

स्वरूपः सोऽप्यग्निः । अग्नेर्ज्योतिषश्चात्यन्तमभेदं द्योतयितुं व्यतिहारेण द्विरुपन्यासः। तस्मादग्नये स्वाहुतमिदमस्तु । सूर्यमन्त्रोऽप्येवं व्याख्येयः ।

मन्त्रद्वयस्य स्पष्टार्थतां दर्शयति—

अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहा सूर्यो ज्योतिर्ज्योतिः
सूर्यः स्वाहेत्याह । यथायजुरेवैतत्, इति ।
( प्रपा० ९ । अनु० ८ । विभा० ३८ )

भूः स्वाहा ।

कल्पः—“अथाप उपस्पृश्य तूष्णीं काण्टकीं समिधमाधायैतस्मादेव शेषादुपयमनेनाग्निहोत्रं जुहोति[2] भूः स्वाहा” इति । भूः सत्तास्वभावः सदेवं[3] सौम्येदमग्र आसीदित्यादिशास्त्रप्रतिपाद्यस्य परमात्मनः स्वरूपभूतो योऽग्निस्तस्मै स्वाहुतमिदमस्तु ।

अत्र मीमांसया भूः स्वाहेति मन्त्रं प्रथमप्रवर्ग्यकालीनाग्निहोत्रविषयत्वेन व्यवस्थापयति—

ब्रह्मवादिनो वदन्ति । होतव्यमग्निहोत्रां३ न होतव्या३मिति
( १० ) । यद्यजुषा जुहुयात् । अयथापूर्वमाहुती[4] जुहुयात् ।
यन्न जुहुयात् । अग्निः पराभवेत् । भूः स्वाहेत्येव होतव्यम् ।
यथापूर्वमाहुती[6] जुहोति । नाग्निः पराभवति, इति ।
( प्रपा० ९ । अनु० ८ । विभा० ३९ )

अत्र प्रथमप्रवर्ग्ये प्रातःकालीने तदीयद्रव्येणाग्निहोत्रं जुहुयान्न वेति विचारः। होमपक्षे प्रथमाम्नातेनाग्निर्ज्योतिरिति मन्त्रेण होतव्यम् । स च मन्त्रो नित्याग्निहोत्रे सायंकालीनः, अतो यथापूर्वमनुष्ठानं न स्यात् । अहोमपक्षे स्वाहुत्यभावात्क्षुधया पराभूतो भवेत् । अतो दोषद्वयपरिहाराय भूः स्वाहेति मन्त्रेण प्रथमप्रवर्ग्यकाले जुहुयात् । ततः सायमग्निर्ज्योतिरिति मन्त्रः । परेद्युः प्रातः सूर्यो ज्योतिरिति मन्त्रः । एवं सति यथापूर्वं नित्याग्निहोत्रवदेवेमा[7] आहुतीर्जुहोति[5] । अग्निश्चाऽऽहुतिसद्भावान्न पराभवति ।

कल्पः—“हुतꣳ हविर्मधु हविरिति भक्षयित्वा” इति । पाठस्तु—

**हुतꣳ हविः । मधु हविः । इन्द्रतमेऽग्नौ । पिता नोऽसि**
**मा मा हिꣳसीः । अश्याम ते देव घर्म । मधुमतो**

१ ग. °यमेना° । २ ग. ‘होतीति । ३ क. ख. °व सोम्ये’ । ४ क. ख. द्विति । ५ क. ख. ग. °तीर्जुहु’ । ६ ग. °तीर्जुहो° ७ क. ख. °देवायमिमा ।

**वाजवतः पितुमतः । अङ्गिरस्वतः स्वधाविनः ।**
**अशीमहि त्वा मा मा हिꣳसीः,** इति ।

इदं प्रवर्ग्याख्यं **हविरुत्तराग्नौ हुतम्** । तच्च **हविर्मधु** स्वादुभूतम् । कुत्र हुतमिति उच्यते—**इन्द्रतमेऽग्नावतिशयेन** परमैश्वर्ययुक्ते जाठरे प्राणरूपेऽग्नौ । हे प्रवर्ग्य त्वं ऽस्माकं **पिता** पालकोऽ**सि**, अतो मां **मा हिंसीः** । हे **घर्म** प्रवर्ग्य **देव मधुमतो** धुर्ययुक्तस्य **वाजवतः** शरीरव्यापित्वेन गतियुक्तस्य **पितुमतो**ऽन्नसाधनत्वेनान्नयुक्त- ङ्गिरस्वतो**ऽङ्गसौष्ठवहेतोः **स्वधाविनो**ऽमृतयुक्तस्य **ते** तव सार**मश्याम** भक्षयेम । ग्वा **स्वधाविन** इत्युत्तरत्रान्वेतव्यम् । यस्मात्स्वधाविनोऽमृतत्वार्थिनो वयं त्वाम- महि तस्मान्मां **मा हिंसीः** ।

मधुशब्देन स्वादुत्वं विवक्षितमिति दर्शयति—

हुतꣳ हविर्मधु हविरित्याह । स्वदयत्येवैनम्, इति ।
( प्रपा० ५ । अनु० ८ । विभा० ४० )

अग्निशब्देन प्राणविवक्षां दर्शयति—

इन्द्रतमेऽग्नावित्याह ( ११ ) । प्राणो वा इन्द्र-
तमोऽग्निः । प्राण एवैनमिन्द्रतमेऽग्नौ जुहोति, इति ।
( प्रपा० ५ । अनु० ८ । विभा० ४१ )

मा मा हिꣳसीरिति प्रार्थनायाः क्षरणादिहिंसापरिहारार्थत्वं दर्शयति—

पिता नोऽसि मा मा हिꣳसीरित्याहाहिꣳसायै, इति ।
( प्रपा० ५ । अनु० ८ । विभा० ४२ )

अश्यामेत्यस्य लिङ्प्रत्ययस्याऽऽशीरर्थविवक्षां दर्शयति—

अश्याम ते देव घर्म मधुमतो वाजवतः
पितुमत इत्याह । आशिषमेवैतामाशास्ते, इति ।
( प्रपा० ५ । अनु० ८ । विभा० ४३ )

मा हिꣳसीरित्यनेन देवताशरीरभक्षणप्रयुक्तहिंसानिवारणविवक्षां दर्शयति—

स्वधाविनोऽशीमहि त्वा मा मा हिꣳसीरित्याहाहिꣳसायै, इति ।
( प्रपा० ५ । अनु० ८ । विभा० ४४ )

क्तमन्त्रसाध्यं भक्षणं विधत्ते—

तेजसा वा एते व्यृध्यन्ते । ये प्रवर्ग्येण चरन्ति ।

---

१ ख. °के मजठ° । २ क. भक्षयाम । ३ क. °नोऽग्ने त्वा° । ४ ख. ग. °नाया अक्ष° ।

प्राश्नन्ति । तेज एवाऽऽत्मन्दधते ( १२ ), इति ।

( प्रपा० ९ । अनु० ८ । विभा० ४५ )

प्रवर्ग्यप्रचरणप्रयासेन क्षीणा शक्तिर्हविर्भक्षणेन समाहिता भवति ।

नियमान्विधत्ते—

संवत्सरं न मा᳘ᳲसमश्नीयात् । न रामामुपेयात् । न मृन्मयेन पिबेत् । नास्य राम उच्छिष्टं पिबेत् । तेज एव तत्स᳘ᳲश्यति, इति ।

( प्रपा० ९ । अनु० ८ । विभा० ४६ )

प्रवर्ग्यानुष्ठायी संवत्सरमात्रं मांसं न भक्षयेत् । स्त्रियं नोपेयात् । मृन्मये कारकादिना जलं न पिबेत् । अस्य यजमानस्योच्छिष्टं रामो रमणीयः पुत्रो न पिबेत् । तत्तेन नियमेन स्वकीयं तेज एव सम्यक्तीक्ष्णी करोति ।

यथोक्तं संवत्सरमांसवर्जनादिव्रतं प्रशंसति—

देवासुराः संयत्ता आसन् । ते देवा विजयमुपयन्तः । विभ्राजि सौर्ये ब्रह्म संन्यदधत । यत्किंच दिवाकीर्त्यम् । तदेतेनैव व्रतेनागोपायत् । तस्मादेतद्व्रतं चार्यम् । तेजसो गोपीथाय । तस्मादु हैतानि यजू᳘ᳲषि विभ्राजः सौर्यस्येत्याहुः, इति ।

( प्रपा० ९ । अनु० ८ । विभा० ४७ )

देवाश्चासुराश्च यदा परस्परं योद्धुं संनद्धा आसंस्तदानीं ते देवा विजयं प्राप्तुमिच्छन्तः सूर्यस्य पुत्रे विभ्राण्नामके देवे ब्रह्म वेदजातं सम्यङ्निहितवन्तः । स विभ्राड्देवो वेदे यत्किंचिद्दिवाकीर्त्यमहन्येव पठनीयमनुवाकजातमस्ति, तत्सर्वमेतं पूर्वोक्तनिरूपणेनैव व्रतेन युक्तो रक्षितवान्, तस्मात्कारणाद्दिवाकीर्त्येन प्रवर्ग्येण येनानुष्ठानं कुर्वता पुरुषेण पूर्वोक्तमेतद्व्रतं चरणीयम् । यस्माद्विभ्राण्नामको देवो दिवाकीर्त्यानि नमो वाचे या चोदितेत्यादीनि यजूंषि रक्षितवान्, तस्मादेतानि यजूंषि सूर्यपुत्रस्य विभ्राड्देवस्य संबन्धीनीत्येवमभिज्ञाः कथयन्ति । तदीयानुष्ठाने तेजोरक्षणाय व्रतचरणम् ।

स्वाहा त्वा सूर्यस्य रश्मिभ्यः ।

स्वाहा त्वा नक्षत्रेभ्यः ( ९ ) ॥

ब्रह्मवर्चसाय पीपिहि स्कन्दयाद्रुद्राय रुद्रहोत्रे स्वाहाऽग्नौ

१ ग. मृण्मये । २ ग. मृण्मये° । ३ घ. °देनानि । ४ क. स्पर्धया । ५ क. °भ्यकुन्यदधत । स° ।

मा पाशप्रो सप्त च ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके चतुर्थप्रपाठके दशमोऽनुवाकः ॥ १० ॥

कल्पः—“ अग्रेणाऽऽहवनीयं पर्याहृत्य सम्राडासन्द्यां संसादयति स्वाहा त्वा सूर्यस्य रश्मिभ्य इति प्रातः स्वाहा त्वा नक्षत्रेभ्य इति सायम् ” इति । हे घर्मपात्रसमूह त्वां सूर्यस्य रश्मिभ्यः स्वाहा समर्पयामि । ततस्त्वां नक्षत्रेभ्यः समर्पयामि ।

एतन्मन्त्रद्वयसाध्यं घर्मपात्रसाधनं विधत्ते—

स्वाहा त्वा सूर्यस्य रश्मिभ्य इति प्रातः सꣳसादयति ।
स्वाहा त्वा नक्षत्रेभ्य इति सायम् । एता वा एतस्य
देवताः । ताभिरेवैनꣳ समर्धयति ( १३ ), इति ।
( प्रपा० ५ । अनु० ८ । विभा० ४८ )

अकरश्विनेत्याह प्रादिशो गच्छेत्याह पितृणामन्तःपरिधि पिन्वयति धारयेत्याह
वाचो घर्मपास्तेभ्य एवैनं जुहोत्यन्वीक्षेत होतव्या३मित्यग्ना-
वित्याह दधतेऽगोपायत्सप्त च ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके पञ्चमप्रपाठकेऽष्टमोऽनुवाकः ॥ ८ ॥

सूर्यो नक्षत्राणि चेत्येताः प्रवर्ग्यपात्रसमूहस्य स्वामिभूताः, अतस्ताभिरेव देवताभिरेनं पात्रसमूहं समृद्धं करोतीति ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्ये चतुर्थप्रपाठके दशमोऽनुवाकः ॥ १० ॥

---

अथ चतुर्थ एकादशोऽनुवाकः ।

---

दशमे प्रवर्ग्यशेषेणाग्निहोत्रहोम उक्तः, एकादशे प्रवर्ग्योद्वासनमुच्यते । कल्पः—“ प्रवर्ग्यमुद्वासयिष्यन्नजामग्नीधे ददाति पष्ठौही(हीं) ब्रह्मणे धेनुं होत्रे रुक्ममध्वर्यवेऽपरं पूर्वस्मिन्खरे न्युप्योच्छिष्टखरं संकृष्योत्तरेणाऽऽहवनीयं सम्राडासन्दीं प्रतिष्ठाप्य तां सर्वं परिघर्मं समाधायौदुम्बर्यां स्रुचि चतुर्गृहीतं गृहीत्वा घर्म या ते दिवि शुगित्येतया पालिङ्गं जुहोत्यपि वा प्रतिप्रस्थाता त्रीन्सन्नखाञ्शलाकान्मु(मु)ष्टीनादाय तेषामेकमाह-

१ ग. °सद्यां संपाद° । २ क. ख. °रोमीति । ३ ग. °नजमग्नीध्रे द° । ४ ग. °दाल्यहौ° । ५ ग. °वे यऽप° । ६ ग. °रे न्वस्योच्छि° । ७ क. ख. परिघर्म्यं । ८ क. °हीत्वा ।

वनीये प्रदीप्याऽऽस्यदघ्ने धारयति तमध्वर्युरभिजुहोति घर्म या ते दिवि शुक्" इति। पाठस्तु—

घर्म या ते दिवि शुक्। या गायत्रे छन्दसि। या ब्राह्मणे।
या हविर्धाने। तां त एतेनावयजे स्वाहा, इति।

हे घर्म प्रवर्ग्य ते तव संबन्धिनी शुक्संतापः। या दिवि द्युलोके या गायत्रे छन्दसि या ब्राह्मणे पुरुषे या हविर्धाने मण्डपे च विद्यते, तां सर्वां ते त्वदीयां शुचमेतेन होमेनाहमवयजे नाशयामि।

कल्पः—"तस्मिन्नपरं प्रदीप्याऽऽहवनीये पूर्वं प्रत्हृत्य नाभिदघ्ने धारयति तमध्वर्युरभिजुहोति घर्म या तेऽन्तरिक्षे शुगिति, तस्मिन्नपरं प्रदीप्याऽऽहवनीये पूर्वं प्रहृत्य जानुदघ्ने धारयति तमध्वर्युरभिजुहोति घर्म या ते पृथिव्या॰ शुक्" इति। पाठस्तु—

घर्म या तेऽन्तरिक्षे शुक्। या त्रैष्टुभे छन्दसि। या राजन्ये। याऽऽग्नीध्रे। तां त एतेनावयजे स्वाहा (१)।
घर्म या ते पृथिव्या॰ शुक्। या जागते छन्दसि। या वैश्ये। या सदसि। तां त एतेनावयजे स्वाहा, इति।

एतौ मन्त्रौ प्रथममन्त्रवद्व्याख्येयौ।

एतन्मन्त्रसाध्यं होमं विधत्ते—

घर्म या ते दिवि शुगिति तिस्र आहुतीर्जुहोति।
छन्दोभिरेवास्यैभ्यो लोकेभ्यः शुचमवयजते, इति।

(प्रपा० ५। अनु० ९। विभा० १)

अस्य घर्मस्य संबन्धिनीं शुचं छन्दोदेवताभिरेव सहायभूताभिर्लोकत्रयादपनयति। प्रदीप्यमानस्य शलाकामुष्टेर्धारणे क्रमेण मुखनाभिजानुप्रमाणानि हस्तेनाभि विधत्ते—

इयत्यग्रे जुहोति। अथेयत्यथेयति। त्रय इमे लोकाः। एभ्य एव लोकेभ्यः शुचमवयजते, इति।

(प्रपा० ५। अनु० ९। विभा० २

अग्रे प्रथममियत्यास्यदघ्ने देशे [धारयित्वा] जुहोति। अथानन्तरमि नाभिदघ्ने देशे धारयित्वा जुहोति। अथानन्तरमियति जानुदघ्ने देशे धार जुहोति। एते च त्रयो देशा लोकत्रयरूपाः, अतो लोकेभ्यः शुचं निराकरो

अनु नोऽद्यानुमतिः। अन्विदनुमते त्वम्।

कल्पः—"आहवनीय एवैनमनुप्रहरत्यनु नोऽद्यानुमतिरिति परिश्रिते प्रतिप्रस्थाता पत्नीमुदानयत्यन्विदनुमते त्वम्" इति। अनु नोऽद्यानुमतिरित्येकस्या ऋचः प्रतीकम्। अन्विदनुमते त्वमित्यपरस्या ऋचः प्रतीकम्। एते ऋचाविदं वामास्ये हविरित्यनुवाके व्याख्याते।

अनयोर्देवतानुरूपतां दर्शयति—

अनु नोऽद्यानुमतिरित्याहानुमत्यै, इति।

( प्रपा० ५। अनु० ९। विभा० ३ )

कल्पः—"दिवस्त्वा परस्या(स्पा)या इति। प्रथमेऽभिप्रव्रजन्ति" इति। पाठस्तु—

दिवस्त्वा परस्पायाः। अन्तरिक्षस्य तनुवः पाहि। पृथिव्यास्त्वा धर्मणा (२)। वयमनुक्रामाम सुविताय नव्यसे, इति।

सर्वे मिलित्वा प्रवर्ग्योद्वासनदेशं प्रति यदा गच्छन्ति तदा मार्गं त्रेधा विभज्य प्रथमे भागे मन्त्रेणानेन प्रव्रजन्ति। हे प्रवर्ग्य **दिवो** द्युलोकस्य **परस्या(स्पा)या** अतिशयेन पालननिमित्तं त्वां **वयमनुक्रामाम**, त्वं **चान्तरिक्षस्य** संबन्धिनीस्**तनुवः** प्राणिशरीराणि **पाहि** रक्ष। तथा **पृथिव्या धर्मणा** धारणनिमित्तं त्वां **वयमनुक्रामाम**, तदनुक्रमग्रहणं **नव्यसे** नूतनाय **सुविताय** शोभनगमनाय संपद्यताम्।

अस्य मन्त्रस्य लोकत्रयधारणे तात्पर्यं दर्शयति—

दिवस्त्वा परस्पाया इत्याह। दिव एवेमाँल्लोकान्दाधार, इति।

( प्रपा० ५। अनु० ९। विभा० ४ )

दिवो द्युलोकदेवताया रक्षणेन लोकत्रयं धृतं भवतीत्यर्थः।

कल्पः—"ब्रह्मणस्त्वा परस्या(स्पा)या इति द्वितीये" इति। अनेन मन्त्रेण द्वितीयभागे प्रव्रजेयुरित्यर्थः। पाठस्तु—

ब्रह्मणस्त्वा परस्पायाः। क्षत्रस्य तनुवः पाहि। विशस्त्वा धर्मणा। वयमनुक्रामाम सुविताय नव्यसे, इति।

---

१ ग. व्याख्यास्येते। २ क. °तारू°। ३ ग. °न्ति। पा°। ४ क. ख. ग. परस्यायाः। ख. °म, त°। ६ क. ख. ग परस्याया। ७ क. ख. ग. परस्यायाः।

पूर्ववद्व्याख्येयम् ।

लोकविषयमन्त्रानन्तरं ब्राह्मणादिजातिविषयमन्त्रेण लोकेषु प्रजानां धारणं सिध्यतीति दर्शयति—

ब्रह्मणस्त्वा परस्पाया इत्याह । ( १ ) । एष्वेव लोकेषु प्रजा दाधार, इति ।
( प्रपा० ५ । अनु० ९ । विभा० ५ )

कल्पः—"प्राणस्य त्वा परस्पाया इति तृतीये" इति। अनेन मन्त्रेण मार्गस्य तृतीयभागे प्रव्रजेयुः । पाठस्तु—

प्राणस्य त्वा परस्पायै । चक्षुषस्तनुवः पाहि । श्रोत्रस्य
त्वा धर्मणा । वयमनुक्रामाम सुवितायं नव्यसे, इति ।

चक्षुषस्तनुव इत्यनेन चक्षुष्मन्ति शरीराणीत्यर्थो विवक्षितः । अन्यत्पूर्ववद्व्याख्येयम् ।

ब्रह्मक्षत्रादिप्रजाविषया(य)[मन्त्रा]नन्तरं प्राणचक्षुरादिविषयमन्त्रेण प्रजासु प्राणधारणसिद्धिं दर्शयति—

प्राणस्य त्वा परस्पाया इत्याह । प्रजास्वेव प्राणान्दाधार इति ।
( प्रपा० ५ । अनु० ९ । विभा० ६ )

प्रवर्ग्यस्य पूर्वदिश्युद्वासनं विधत्ते—

शिरो वा एतद्यज्ञस्य । यत्प्रवर्ग्यः । असौ खलु वा आदित्यः प्रवर्ग्यः ।
तं यद्दक्षिणा प्रत्यञ्चमुदञ्चमुद्वासयेत् । जिह्मं यज्ञस्य शिरो हरेत् ।
प्राञ्चमुद्वासयति । पुरस्तादेव यज्ञस्य शिरः प्रतिदधाति ( २ ) ।
प्राञ्चमुद्वासयति । तस्मादसावादित्यः पुरस्तादुदेति, इति ।
( प्रपा० ५ । अनु० ९ । विभा० ७ )

प्रवर्ग्यस्य यज्ञशिरोरूपस्य दक्षिणादिषु तिसृषु दिक्षूद्वासने सति शिरो जिह्मं कुटिलं यथा भवति तथा हृतं स्यात् । अतः पुरस्तादेवाऽऽर्जवेन यज्ञशिरःप्रतिधानाय प्रवर्ग्यं प्राङ्मुखमेवोद्वासयेत् । किंच प्रवर्ग्यस्याऽऽदित्यरूपत्वादादित्यस्य च पुरस्तादेवोदयात्प्रागुद्वासनं युक्तम् ।

शफादीनां तत्र नयनं विधत्ते—

शफोपयमान्धवित्राणि धृष्टी इत्यन्ववहरन्ति ।

---

१ क. ख. ग. °रस्याया । २ क. ख ग. °रस्याया । ३ क. ख ग. °रस्यायै । ४ क. ग °रस्याया । ५ घ °स्य प्र° । ६ ग. तत्राऽऽन° ।

सात्मानमेवैन॑ सतनुं करोति, इति ।

( प्रपा० ५ । अनु० ९ । विभा० ८ )

तप्तस्य महावीरस्य हस्तेन स्प्रष्टुमशक्यत्वात्तद्धारणार्थौ काष्ठविशेषौ शफौ । उपयमः पात्रविशेषः । धृष्टी अङ्गारनिर्हरणाद्यर्थौ साधनविशेषौ । साधनान्तराणामप्युपदर्शनार्थ इतिशब्दः । एतानि सर्वाण्यपि महावीरमनुप्रवर्ग्योद्वासनदेशे हरेयुः । तेनैनं प्रवर्ग्यमात्मसहितं शरीरसहितं करोति ।

एतद्वेदनं प्रशंसति—

सात्माऽमुष्मिँल्लोके भवति । य एवं वेद, इति ।

( प्रपा० ५ । अनु० ९ । विभा० ९ )

साधनानां कारणं वृक्षविशेषं विधत्ते—

औदुम्बराणि भवन्ति । ऊर्ग्वा उदुम्बरः । ऊर्जमेवावरुन्धे, इति ।

( प्रपा० ५ । अनु० ९ । विभा० १० )

उदुम्बरफलस्य भक्ष्यत्वेनोर्ग्रूपत्वात्तद्वृक्षेणोर्क्प्राप्तिः ।

गमनकाले साधनभूतं सामगानं विधत्ते—

वर्त्मना वा अन्वित्य ( ३ ) । यज्ञ॑ रक्षा॑सि जिघा॑सन्ति । साम्ना प्रस्तोताऽन्ववैति । साम वै रक्षोहा । रक्षसामपहत्यै, इति ।

( प्रपा० ५ । अनु० ९ । विभा० ११ )

गमनवेलायां प्रस्तोतुं सामगानेन सहितः × प्रस्तोता तान्सर्वाननुगच्छेत् । साम्नो रक्षोघ्नत्वात्तद्गानं रक्षोपघाताय भवति ।

यदुक्तं सूत्रकारेण—" सर्वे सहपत्नीकास्त्रिः साम्नो निधनमुपयन्त्यधोध्वे द्वितीयं प्राप्यापरेणोत्तरवेदिं तृतीयम् " इति । तदिदं विधास्यन्नादौ प्रस्तोतुर्निधनावृत्तिं विधत्ते—

त्रिर्निधनमुपैति । त्रय इमे लोकाः । एभ्य एव लोकेभ्यो रक्षाँ॑स्यपहन्ति, इति ।

( प्रपा० ५ । अनु० ९ । विभा० १२ )

पञ्चभागयुक्तस्य साम्नश्चरमो भागो निधनं तत्रिवारं पठेत् । तेन लोकत्रयाद्रक्षसामपहतिर्भवति ।

---

× रक्षांसि चोरवन्मार्गेणैव पृष्ठत आगत्य यज्ञं हन्तुं गच्छन्ति । अतस्तत्परिहाराय सामगानेन सहित इति तै० पुस्तकपाठः । इति ग. पुस्तके ।

---

१ ख. °त्मन ( ना ) स° । २ क. घ. उर्ग्वा । ३ क. व. °रः । उर्ज° । ४ क. ख. °म वि° । ५ ग. °धोध्वे द्वि° । ६ ग. °दिदमुत्तरं वि° । ७ घ. °क्षा॑सि ह° ।

पत्नीसहितानां सर्वेषां प्रस्तोतृनिधनभागोच्चारणं विधत्ते—

पुरुषः पुरुषो निधनमुपैति । पुरुषः पुरुषो
हिं रक्षस्वी । रक्षसामपहत्यै ( ४ ), इति ।
( प्रपा० ५ । अनु० ९ । विभा० १३ )

सर्वेष्वपि पुरुषेषु बाधकानि रक्षांस्यनुगच्छन्ति, अतः सर्वोऽपि **पुरुषो रक्षस्वी**। निधनपाठेन तानि रक्षांस्यपहन्यन्ते ।

उद्वासनदेशे हिरण्यस्थापनं विधत्ते—

यत्पृथिव्यामुद्वासयेत् । पृथिवीꣳ शुचाऽर्पयेत्[१] । यदप्सु । अपः शुचाऽर्पयेत् । यदोषधीषु । ओषधीः शुचाऽर्पयेत् । यद्वनस्पतिषु । वनस्पतीञ्छुचाऽर्पयेत् । हिरण्यं निधायोद्वासयति । अमृतं वै हिरण्यम् ( ५ ) । अमृत एवैनं प्रतिष्ठापयति, इति ।
( प्रपा० ५ । अनु० ९ । विभा० १४ )

प्रवर्ग्यस्य दाहकत्वात्पृथिव्यादीनां दाहो मा भूदिति हिरण्ये तदुद्वासनम् । अग्निसंयोगेऽपि विनाशाभावाद्धिरण्यममृतम् । अतस्तत्रैव प्रवर्ग्यं प्रतिष्ठापयति ।

कल्पः—"उदकुम्भमादायाध्वर्युर्वल्गुरसि शंयुधाया इति त्रिः प्रदक्षिणमुत्तरवेदिं परिषिञ्चन्पर्येति" इति । पाठस्तु—

वल्गुरसि शंयुधायाः ( ३ ) । शिशुर्जनधायाः, इति ।

हे परिषेक त्वं **शंयुधायाः** सुखप्राप्तेर्दुःखवियोगस्य धारको **वल्गुः** सुन्दरोऽसि । **जनधाया** जनस्य धारकः **शिशुर्**बालवदुपलालनीयोऽसि । उत्तरवेदिपरत्वेन व्याख्येयम् ।

एतन्मन्त्रसाध्यं परिषेचनं विधत्ते—

वल्गुरसि शंयुधाया इति त्रिः परिषिञ्चन्पर्येति । त्रिवृद्वा अग्निः । यावानेवाग्निः । तस्य शुचꣳ शमयति, इति ।
( प्रपा० ५ । अनु० ९ । विभा० १५ )

आहवनीयादिरूपेणाग्नेस्त्रिगुणत्वात्त्रिर्वारपरिषेचनेन सर्वस्याग्नेः शोकः शाम्यति ।

**शं च वक्षि परि च वक्षि[२] ।**

कल्पः—"निधाय कुम्भं शं च वक्षि परि च वक्षीति त्रिः परिषिञ्चन्प्रतिपर्येति" इति । हे उत्तरवेदे[३] **शं च वक्षि** सुखमपि वहसि, **परि च वक्षि** दुःखपरिहारमपि वहसि ।

---

१ ब °त् । यद्ो° । २ क. °वारं प° । ३ ग. °वेदि शं ।

एतन्मन्त्रसाध्यां प्रदक्षिणावृत्तिं विधत्ते—

त्रिः पुनः पर्येति । षट्संपद्यन्ते । षड्वा ऋतवः । ऋतुभिरेवास्य शुचꣳ शमयति, इति ।
( प्रपा० ५ । अनु० ९ । विभा० १६ )

त्रीणि प्रदक्षिणानि त्रीण्यप्रदक्षिणानीति षट्संपत्तिः ।

**चतुःस्रक्तिर्नाभिर्ऋतस्य ।**

कल्पः—"चतुःस्रक्तिर्नाभिर्ऋतस्येत्युत्तरवेदिमभिमृश्य" इति । **चतुःस्रक्तिः** कोणचतुष्टयोपेतोत्तरवेदिः, इयमृतस्य यज्ञस्य नाभिस्थानीया । यद्वा, **ऋतस्य** सत्यभूताया भूमेर्नाभिस्थानीया ।

मन्त्रस्य भूमिनाभिपरत्वं दर्शयति—

चतुःस्रक्तिर्नाभिर्ऋतस्येत्याह (६) इयं वा ऋतम् । तस्या एष एव नाभिः । यत्प्रवर्ग्यः । तस्मादेवमाह, इति ।
( प्रपा० ५ । अनु० ९ । विभा० १७ )

प्रवर्ग्यहोमाधारत्वादुत्तरवेदिः **प्रवर्ग्य** इत्युच्यते ।

**सदो विश्वायुः शर्म सप्रथाः ।**

कल्पः—" सदो विश्वायुरित्युत्तरेणोत्तरवेदिं खरौ न्युप्यानुव्यूहति " इति । शर्म सप्रथा इति मन्त्रशेषः । **सदो** भूप्रदेशविशेष उत्तरवेद्युत्तरदेशरूपः । **विश्वायुः** विश्वायुर्हेतुः । अत एव **सप्रथाः** ख्यातियुक्तः । **शर्म** सुखहेतुः ।

सदःशब्देन भूमिविवक्षां दर्शयति—

सदो विश्वायुरित्याह । सदो हीयम्, इति ।
( प्रपा० ५ । अनु० ९ । विभा० १८ )

**अप द्वेषो अप ह्वरः । अन्यद्व्रतस्य सश्चिम ।**

कल्पः—"अप द्वेषो अप ह्वर इति मार्जालीयदेश उच्छिष्टखरम् " इति । न्युप्येतीत्यनुवर्तते । अन्यद्व्रतस्य सश्चिमेति मन्त्रशेषः । **द्वेषो** द्वेष्टा शत्रुरपनीतः, **ह्वरः** कौटिल्यकारी चापनीतः । **व्रतस्या**नुष्ठीयमानस्य कर्मणोऽन्यत्सश्चिम[3] पूर्वोक्तद्वेषकौटिल्यामतिरिक्तं क्षेमेणानुष्ठानं वयं संपादितवन्तः ।

अनेन मन्त्रेण शत्रुनिराकरणं दर्शयति—

अप द्वेषो अप ह्वर इत्याह भ्रातृव्यापनुत्त्यै, इति ।
( प्रपा० ५ । अनु० ९ । विभा० १९ )

---

१ ग. शर्मशब्देन । २ ग सश्चिमः । ३ ग 'श्चिम. पू° ।

कल्पः—"घर्मैतत्तेऽन्नमेतत्पुरीषमिति दध्ना मधुमिश्रेणे पूरयति" इति । पाठस्तु—

घर्मैतत्तेऽन्नमेतत्पुरीषम् । तेन वर्धस्व चाऽऽ च प्यायस्व । वर्धिषीमहि च वयम् । आ च प्यासिषीमहि (४), इति ।

हे घर्मैतन्मधुमिश्रं दधि ते तवान्नम् । एतच्च पुरीषं संपूर्णम् । तेन मधुमिश्रेण दध्ना त्वं वर्धस्वाऽऽप्यायस्व च । अभिवृद्धिः स्वरूपबाहुल्यम् । आप्यायनं मैनसः पारितोषः । त्वत्प्रसादाद्वयमपि वृद्धिमाप्यायनं च प्राप्नवाम ।

एतन्मन्त्रसाध्यं पूरणं विधत्ते—

घर्मैतत्तेऽन्नमेतत्पुरीषमिति दध्ना मधुमिश्रेण पूरयति । ऊर्ग्वा अन्नाद्यं दधि । ऊर्जैवैनमन्नाद्येन समर्धयति (७), इति ।

(प्रपा० ५ । अनु० ९ । विभा० २०)

ऊर्क्शब्देन स्वादुत्वमुच्यते । अन्नाद्यशब्देनोदरपूर्तिहेतुत्वम् ।

वेदनं प्रशंसति—

अनशनायुको भवति । य एवं वेद इति, ।

(प्रपा० ५ । अनु० ९ । विभा० २१)

अशनेच्छाशीलोऽशनायुको दरिद्रः । अनशनायुकस्तृप्तः ।

कल्पः—"अथैनमुपतिष्ठन्ते रन्तिर्नामासि दिव्यो गन्धर्वः" इति । रन्तिरित्यादयः पारि जानादहीनामित्यन्ता बहवो मन्त्राः । तेषु प्रथमं मन्त्रमाह—

रन्तिर्नामासि दिव्यो गन्धर्वः । तस्य ते पद्वद्धविर्धानम् । अग्निरध्यक्षाः । रुद्रोऽधिपतिः, इति ।

रन्तिनामको द्युलोकवर्ती यो गन्धर्वोऽस्ति हे प्रवर्ग्य तद्रूपस्त्वमसि । तस्य ते ता शस्य गन्धर्वरूपस्य तव हविर्धानं पद्वद्धविर्धानाख्यमण्डपाद्विसदृशम् । उत्तरवे प्राक्शिरस्त्वेनावस्थितस्य तवाधोभागवर्तित्वात् । योऽयमग्निरुत्तरवेदिगतः सोऽयमध्यक्षास्तव स्वामी । योऽयं रुद्रः क्रूरो देवः सोऽयमधिपतिरनिष्टनिवारणेनाधिकपालकः

मन्त्राक्षरैः प्रवर्ग्यमहिम्नः स्पष्टप्रतिभानं दर्शयति—

रन्तिर्नामासि दिव्यो गन्धर्व इत्याह । रूपमेवास्यैतन्महिमान रन्तिं बन्धुतां व्याचष्टे, इति ।

(प्रपा० ५ । अनु० ९ । विभा० २२)

---

१ ग. °ण पात्राणि पू° । २ ग. °वृद्धिस्व° । ३ ग. मानसः । ४ ख. उर्वा । ५ क. अनश° । ६ क. °ष्ठते र° । ७ ग. °ह । पाठस्तु—र° ८ ग. ते यद्द° । ९ ग. °नं ह° १० ग. °वेदिंग° ।

रन्तिर्बन्धुत्वं रमणहेतुत्वात् । मन्त्रस्य यत्स्वरूपमस्ति रन्त्यादिशब्दोपेतमेतदेव प्रवर्ग्यस्य बन्धुत्वलक्षणं महिमानं प्रकाशयति ।

द्वितीयं मन्त्रमाह—

**समहमायुषा । सं प्राणेन । सं वर्चसा । सं पयसा । सं गौपत्येन । सꣳ रायस्पोषेण (५), इति ।**

अहमस्य प्रवर्ग्यस्य प्रसादादायुरादिना रायस्पोषान्तेन फलषट्केन संगतो भूयासम् ।

मन्त्रस्याऽऽशीरर्थतां दर्शयति—

समहमायुषा सं प्राणेनेत्याह । आशिषमेवैतामाशास्ते, इति ।

( प्रपा० ५ । अनु० ९ । विभा० २३ )

तृतीयं मन्त्रमाह—

**व्यसौ । योऽस्मान्द्वेष्टि । य च वयं द्विष्मः, इति ।**

योऽस्माकं द्वेष्टा यश्चास्माभिर्द्वेष्य उभयविधोऽसौ शत्रुः प्रवर्ग्येण विनाशितः ।

मन्त्रस्य परविनाशपरत्वेनाभिचाररूपतां दर्शयति —

व्यसौ योऽस्मान्द्वेष्टि यं च वयं द्विष्म इत्याह । अभिचार एवास्यैषः, इति ।

( प्रपा० ५ । अनु० ९ । विभा० २४)

अस्य शत्रोरेष मन्त्रपाठो यजमानेन कृतोऽभिचारः । तेनासौ विनश्यतीत्यर्थः ।

चतुर्थं मन्त्रमाह—

**अचिक्रदद्वृषा हरिः । महान्मित्रो न दर्शतः । सꣳ सूर्येण रोचते, इति ।**

अयं प्रवर्ग्यो वृषा कामानां वर्षयिता हरिः पापस्य हर्ता तादृशः सन्नचिक्रदत् । क्रन्दनमुत्साहेनाऽऽक्रन्दनं कृतवान् । स च प्रवर्ग्यो महान्गुणैरधिकः । मित्रो न मित्र इव दर्शतो दर्शनीयः । तादृशः सूर्येण संभूय रोचते प्रकाशयति ।

प्रथमपादे विशेषणयोः प्रसिद्धिं दर्शयति—

अचिक्रदद्वृषा हरिरित्याह । वृषा ह्येषः ( ८ ) । वृषा हरिः, इति ।

( प्रपा० ५ । अनु० ९ । विभा० २५ )

यथा वृषत्वं प्रसिद्धं तथा हरित्वमपीति वक्तुं द्विरेति पुनरुक्तिः ।

---

१ क. °तः । परस्पर° । २ ख. °नाऽऽस्कन्द° । ग. °नाऽऽस्फोटनं । ३ ग. वृष इति ।

द्वितीयपादस्य स्तुतिपरतां दर्शयति—

महान्मित्रो न दर्शत इत्याह । स्तौत्येवैनमेतत्, इति ।

( प्रपा० ५ अनु० ९ । विभा० २६ )

पञ्चमं मन्त्रमाह—

**चिदसि समुद्रयोनिः । इन्दुर्दक्षः श्येन ऋतावा । हिरण्यपक्षः शकुनो भुरण्युः । महान्त्सधस्थे ध्रुव आनिषत्तः ( ६ ) । नमस्ते अस्तु मा मां हिꣳसीः, इति ।**

हे प्रवर्ग्य त्वं चिदादिविशेषणविशिष्टोऽसि । चिदभिज्ञः । **समुद्रयोनि**र्योगद्वारा समुद्रस्यापि कारणभूतः । इन्दुश्चन्द्रवदाह्लादकारी । दक्ष उत्साहवान् । **श्येनः** श्येनवद्वेगवान् । **ऋतावा** कर्मफलयुक्तः । **हिरण्यपक्षः**, चित्याग्नावनुष्ठीयमानः सन्सुवर्णसमानपक्षोपेतः । **शकुनः** पक्ष्याकारः । **भुरण्यु**र्जगद्भरणसमर्थः । **महा**न्गुणैरधिकः । **सधस्थे** कर्मकर्तृभिः सहावस्थानप्रदेशे **ध्रुवः** स्थिरः । **आनिषत्त** आभिमुख्येनोपविष्टः । हे प्रवर्ग्य ते तुभ्यं **नमो**ऽस्तु **मा मा हिंसीः** ।

समुद्रयोनिशब्दस्य तात्पर्यं दर्शयति—

चिदसि समुद्रयोनिरित्याह । स्वामेवैनं योनिं गमयति, इति ।

( प्रपा० ५ । अनु० ९ । विभा० २७ )

समुद्रादिकं जगत्कर्मरूपां स्वकीयां **योनिं** प्रापयति । यद्वा समुद्रो योनिर्यस्य प्रवर्ग्यस्येति बहुव्रीहिः । समुद्रसदृशः परमात्मा तस्य कारणम्, ततो मन्त्रपाठे स्वकीययोनिप्राप्तिः ।

वैकल्यप्रयुक्तहिंसापरिहारार्थतां नमस्कारस्य दर्शयति—

नमस्ते अस्तु मा मा हिꣳसीरित्याहाहिꣳसायै, इति ।

( प्रपा० ५ । अनु० ९ । विभा० २८ )

षष्ठं मन्त्रमाह—

**विश्वावसुꣳसोमगन्धर्वम् । आपो ददृशुषीः । तदृतेना व्यायन् । तदन्ववैत् । इन्द्रो रारहाण आसाम् । परि सूर्यस्य परिधीꣳरपश्यत्, इति ।**

सोमस्य परिमोषको गन्धर्वः **सोमगन्धर्वः** । स च **विश्वावसुनामकः** । अत एव

१ ख. °त्तः(६)॥१४॥ न° । २ ग. ऋतवा । ३ क ख. चित्यग्ना° । ४ ग. ते नमः । मां ।

सोमप्रकरणे श्रूयते—"तꣳ सोममाह्रियमाणं गन्धर्वो विश्वावसुः पर्यमुष्णात्" इति। सोमस्यापहर्तारं तं विश्वावसुमापो ददृशुषीः, अब्देवता दृष्टवत्यः। ताभ्योऽब्देवता ऋतेन यज्ञेन निमित्तेन तत्तदा ध्यायन्विशेषेण गन्धर्वसमीपं प्रत्यागच्छन्। इन्द्रो देवस्तदर्पां गमनमन्ववैदनुक्रमेण ज्ञातवान्। स चेन्द्र आसामपां समीपे रारहाणी भृशं गच्छन्सूर्यस्य परिधीन्परिधिसदृशान्रश्म्यभिमानिनो देवान्पर्यपश्यत्परितो वेष्टयितृनवलोकितवान्। यदा गन्धर्वः सोमं मुष्णाति तदानीमापो दृष्ट्वा तत्र गताः। इन्द्रश्च तदभिज्ञायापां सहायार्थं गन्धर्वमवरोद्धुं सूर्यरश्मीन्प्रेषितवानित्यर्थः।

विश्वावसुवृत्तान्तस्मरणस्य विकलाङ्गसमाधानार्थत्वं दर्शयति—

विश्वावसुꣳ सोमगन्धर्वमित्याह। यदेवास्य क्रियमाणस्यान्तर्यन्ति। तदेवास्यैतेनाऽऽप्याययति, इति।

( प्रपा० ५। अनु० ९। विभा० २९ )

अनुष्ठीयमानस्य प्रवर्ग्यस्य यदङ्गमृत्विजोऽन्तर्हितं कुर्वन्ति, तदङ्गमेतेन वृत्तान्तस्मरणेन समृद्धं करोति। गन्धर्वेणाऽऽपादितस्य वैकल्यस्याद्भिरिन्द्रेण च समाहितत्वात्तदनुस्मरणस्य समाधानार्थत्वं युक्तम्।

सप्तमं मन्त्रमाह—

विश्वावसुरभि तन्नो गृणातु। दिव्यो गन्धर्वो रजसो विमानः। यद्वा घा सत्यमुत यन्न विद्म (७)। धियो हिन्वानो धिय इन्नो अव्यात्, इति।

अस्मिन्कर्मणि यद्वा घ यदेव किंचिदङ्गं यथाशास्त्रमनुष्ठितम्, उतापि च यदङ्गं न विद्म वयं विस्मृतवन्तः, तत्सर्वं नोऽस्मभ्यं विश्वावसुर्गृ(रभिगृ)णातु कथयतु। कीदृशः। दिव्यो गन्धर्वः, दिवि भवो गन्धर्वजातिः। अतः सर्वज्ञ इत्यर्थः। रजसो विमानः, रञ्जकस्य गीतस्य विशेषेण निर्माता। धियो हिन्वानः, बुद्धेः प्रीणयिता। स गन्धर्वो नोऽस्मदीया धिय इद्बुद्धीः सर्वा अप्यव्याद्रक्षतु।

पूर्वमन्त्रे यथाऽङ्गवैकल्यसमाधानहेतुत्वं तद्वदस्यापि वैकल्यसमाधानहेतुतां दर्शयति—

विश्वावसुरभि तन्नो गृणात्वित्याह (९)। पूर्वमेवोदितम्। उत्तरेणाभिगृणाति, इति।

( प्रपा० ५। अनु० ९। विभा० ३० )

---

१ क. ख. ता अब्दे॰। २ क. ॰प्रेरित॰। ३ ग ॰द्वा य स॰। ४ ग. ॰द्वा घ य॰। ५ ग. ॰गातु। इ॰।

चतुर्थपादे धीरक्षणेनर्तुसमृद्धिर्विवक्षितेति दर्शयति—

धियो हिन्वानो धिय इन्नो अव्यादित्याह । ऋतूनेवास्मै कल्पयति, इति ।

( प्रपा० ५ । अनु० ९ । विभा० ३१ )

ऋतवो यदा स्वस्वकार्यकरास्तदा प्राणिनां बुद्धयः स्वस्था भवन्ति । अतो धीरक्षणमृतुषु प्रवाहरूपेण प्रवर्तते ।

अष्टममन्त्रमाह —

सस्निमविन्दच्चरणे नदीनाम् । अपावृणोद्दुरो अश्मव्रजानाम् । प्राऽऽसां गन्धर्वो अमृतानि वोचत् । इन्द्रो दक्षं परिजानादहीनम्, इति ।

यः पूर्वो गन्धर्वोऽस्ति सोऽयं **नदीनां** गङ्गायमुनादीनां **चरणे** प्रवाहरूपे प्रवर्तके **सस्निमविन्दच्छुद्धिं** लब्धवान् । नदीप्रवहणेन पङ्कादिप्रक्षालनाच्छुद्धिं दृष्टवान् । अश्मसु पाषाणेषु व्रजन्ति प्रवहन्तीत्यश्मव्रजा नद्यः । तासां **दुरो** द्वाराण्य**पावृणो**दपनीतवान् । नदीषु प्रवेष्टुं द्वारस्थानीयास्तीर्थभूता मार्गा अश्मभिर्येऽवरुद्धास्तत्र पाषाणानपनीय नदीः सेवितुं योग्याः कृतवान् । तत **आसां** नदीनाम**मृतानि** शुद्धिकारणानि जलानि स **गन्धर्वः प्रवोचत्**प्राणिनामग्रे कथितवान् । तत **इन्द्रो दक्षं** कुशलं गन्धर्व**महीनं** क्वापि वैकल्यरहितं **परिजानात्**परितो ज्ञातवान् ।

अत्र जलवाचिनाऽमृतशब्देन मरणरहितानां प्राणानामपि सूचनं दर्शयति—

प्राऽऽसां गन्धर्वो अमृतानि वोचदित्याह । प्राणा वा अमृताः । प्राणानेवास्मै कल्पयति, इति ।

( प्रपा० ५ । अनु० ९ । विभा० ३२ )

अमृतशब्दपाठेन यजमानस्य प्राणान्सुस्थितान्करोति ।

एतत्त्वं देव घर्म देवो देवानुपागाः ।

कल्पः—" एतत्त्वं देव घर्म देवो देवानुपागा इत्यभिमन्त्र्य " इति । हे घर्म देव त्वं **देवो** देवतारूपः सन्नेतदस्माकं प्रत्यक्षं यथा भवति तथा **देवानुपागाः** प्राप्तवानसि।

अत्र प्रवर्ग्यस्य देवत्वं सर्वदेवप्रापणं च प्रसिद्धमित्येतद्दर्शयति—

एतत्त्वं देव घर्म देवो देवानुपागा इत्याह । देवो ह्येष सन्देवानुपैति, इति ।

( प्रपा० ५ । अनु० ९ । विभा० ३३ )

---

१ क. स्नात्रं ।

कल्पः—" इदमहं मनुष्यो मनुष्यानिति प्रदक्षिणमावृत्य " इति । पाठस्तु—

इदमहं मनुष्यो मनुष्यान् । सोमपीथानु मेहि । 
सह प्रजया सह रायस्पोषेण, इति ।

अहं यजमानो **मनुष्यः** सन्निदं प्रत्यक्षं यथा भवति तथा **मनुष्या**न्प्राप्नोमीति शेषः । हे **सोमपीथ** सोमपान [ मा ] मामाभिमुख्येनान्विहि प्राप्नुहि । न केवलं त्वमेव किं तु **प्रजया रायस्पोषेण** च **सह**, तदुभयमपि मां प्राप्नोतु ।

यजमानस्य मनुष्यत्वं मनुष्यप्राप्तिश्च प्रसिद्धेत्येतद्दर्शयति—

इदमहं मनुष्यो मनुष्यानित्याह ( १० ) । 
मनुष्यो हि । एष सन्मनुष्यानुपैति, इति ।

( प्रपा० ५ । अनु० ९ । विभा० ३४ )

सोमपानप्रार्थनायां कारणं दर्शयति—

ईश्वरो वै प्रवर्ग्यमुद्वासयन् । प्रजां पशून्त्सोमपीथ-
मनूद्वासः सोमपीथानु मेहि । सह प्रजया सह राय-
स्पोषेणेत्याह । प्रजामेव पशून्त्सोमपीथमात्मन्धत्ते, इति ।

( प्रपा० ५ । अनु० ९ । विभा० ३५ ) ।

यः प्रवर्ग्यमुद्वासयति, असौ तदानीं तं **प्रवर्ग्यमनु** स्वकीयां **प्रजां** पुत्रादिकां पशून्गवादीन्**सोमपीथं** करिष्यमाणं सोमपानं चो**द्वास ईश्वरे** उद्वासयितुं समर्थो भवति । प्रवर्ग्योद्वासनमनु सर्वमिदं नश्यतीत्यर्थः । अतः सोमपीथेत्यादिमन्त्रपाठेन प्रजादिकं मात्मनि संपादयति ।

कल्पः—" सुमित्रा न आप ओषधय इति मार्जालीयदेश उच्छिष्टखरे मार्जयित्वा " इति । पाठस्तु—

सुमित्रा न आप ओषधयः सन्तु । दुर्मित्रास्तस्मै 
भूयासुः । योऽस्मान्द्वेष्टि । यं च वयं द्विष्मः, इति ।

एता **आपः**, तत्कार्या ( र्यभूता ) **ओषधयश्च नोऽ**स्माकं **सुमित्राः** सुस्निग्धाः **सन्तु** । यो द्वेष्टा यश्च द्वेष्यः, **तस्मा** उभयस्मै **दुर्मित्राः** शत्रवः **सन्तु** ।

प्रथमपादस्याऽऽशीःपरतां दर्शयति—

सुमित्रा न आप ओषधयः सन्त्वित्याह । आशिषमेवैतामाशास्ते, इति ।

( प्रपा० ५ । अनु० ९ । विभा० ३६ )

---

१ ग. °ष्यत्वप्रा° ।

उत्तरभागस्य शत्रुविषयाभिचारत्वं दर्शयति—

दुर्मित्रास्तस्मै भूयासुर्योऽस्मान्द्वेष्टि यं च वयं द्विष्म इत्याह । अभिचार एवास्यैषः, इति ।

( प्रपा० ५ । अनु० ९ । विभा० ३७ )

उद्वयं तमसस्परि । उदु त्यं चित्रम् ।

कल्पः—" उद्वयं तमसस्परीत्यादित्यमुपस्थायोदु त्यं चित्रमिति द्वाभ्यां गार्हपत्ये जुहोत्युपतिष्ठेत इत्येके " इति । उद्वयमिति मन्त्रः समास्त्वाऽग्न इत्यनुवाके व्याख्यातः । उदु त्यं जातवेदसं चित्रं देवानामिति मन्त्रद्वयमुदु त्यमित्यनुवाके व्याख्यातम् ।

एतन्मन्त्रद्वयसौध्यं होमं विधत्ते—

प्र वा एषोऽस्माल्लोकाच्च्यवते । यः प्रवर्ग्यमुद्वासयति । उदु त्यं चित्रमिति सौरीभ्यामृग्भ्यां पुनरेत्य गार्हपत्ये जुहोति । अयं वै लोको गार्हपत्यः । अस्मिन्नेव लोके प्रतितिष्ठति । असौ खलु वा आदित्यः सुवर्गो लोकः । यत्सौरी भवतः । तेनैव सुवर्गाल्लोकान्नैति(११), इति ।

( प्रपा० ५ । अनु० ९ । विभा० ३८ )

प्रवर्ग्यस्योद्वासनेन स्वयमेवास्माल्लोकाद्भ्रष्टो भवति । गार्हपत्यस्यैतल्लोकरूपत्वे तत्र होमे सति स्वयमस्मिँल्लोके प्रतिष्ठितो भवति । आदित्यस्य स्वर्गलोकरूपत्वात्संस्मरणेन स्वर्गादपि भ्रंशो न भवति ।

ब्रह्मणस्त्वा परस्पाया इत्याह दधात्यन्वित्य रक्षस्वी रक्षसामपहत्यै वै हिरण्यमाहाधयाति ह्येष गृणात्वित्याह मनुष्यानित्याहास्यैषोऽष्टौ च ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके पञ्चमप्रपाठके नवमोऽनुवाकः ॥ ९ ॥

कल्पः—"इममू षु त्यमस्मभ्यमित्याहवनीये जुहोत्युपतिष्ठन्त(तः) इत्येके" इ[ति]

पाठस्तु—

इममू षु त्यमस्मभ्यꣳ सनिम् । गायत्रं नवीयाꣳसम् । अग्ने देवेषु प्रवोचः ( ८ ), इति ।

याऽऽग्नेः तां त एतेनावयजे स्वाहा घर्मेणा शंयुधायाः प्यासिषीमहि पोषेण निषत्तो विश्व संन्त्वष्टौ च ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके चतुर्थप्रपाठक एकादशोऽनुवाकः ॥ ११ ॥

---

१ ख. °ष्ठन्त इ° । २ ग. इति । ३ ग. °साध्यहो° । ४ ग. °रस्याया । ५ ख.ग. °होती

हेऽग्ने देवेषु मध्येऽस्मभ्यं सनिं फलदानं प्रवोचः प्रकर्षेण कथय । न केवलं फलदानं किं तु त्यामिमम् षुं तं शास्त्रप्रसिद्धमिममस्माभिरिदानीमनुष्ठितं प्रवर्ग्यमपि सुष्ठु देवेषु क्षेपय(कथय?) । कीदृशं प्रवर्ग्यम् । गायत्रं गायत्र्यादिच्छन्दोयुक्तम् । अत एव पूर्वत्राऽऽम्नातम्— "छन्दोभिर्वा एष क्रियते" इति । नवीयांसमतिशयेन नूतनं सर्वाङ्गसंपूर्णमित्यर्थः ।

शाखान्तरे यानि प्रवर्ग्यसामानि तेषामाधारभूता ये मन्त्रास्तान्विधत्ते—

प्रजापतिं वै देवाः शुक्रं पयोऽदुह्रन् । तदेभ्यो न व्यभवत् । तदग्निर्व्यकरोत् । तानि शुक्रियाणि सामान्यभवन् । तेषां यो रसोऽत्यक्षरत् । तानि शुक्रयजूꣳष्यभवन् । शुक्रियाणां वा एतानि शुक्रियाणि । सामपयसं वा एतयोरन्यत् । देवानामन्यत्पयः । यद्गोः पयः (१) । तत्साम्नः पयः । यदजायै पयः । तद्देवानां पयः । तस्माद्यत्रैतैर्यजुर्भिश्चरन्ति । तत्पयसा चरन्ति । प्रजापतिमेव तद्देवान्पयसाऽन्नाद्येन समर्धयन्ति, इति ।

( प्रपा० ९ । अनु० १० । विभा० १ )

पुरा कदाचिद्देवाः सर्वे प्रजापतिं कामधेनुं कृत्वा शुक्रं पयः प्रवर्ग्यरूपं क्षीरं [illegible]धवन्तः । तदेकमेव भूत्वा देवेभ्यो न व्यभवत्, बहूनां देवानामर्थे विविधं नाभूत् । [illegible]तः सर्वेषां भोगाय न पर्याप्तम् । तदानीमग्निस्तदेकं पयो विविधमकरोत् । तानि [illegible]विधानि पयांसि शुक्रियाणि प्रवर्ग्यसंबन्धीनि सामान्यभवन् । तेषां च पयोरू[illegible]णां साम्नां यो रसोऽत्यक्षरत्तेभ्योऽस्रवत्, तानि सामभ्यः स्रुतानि साराणि [illegible]क्रयजूंषि प्रवर्ग्यसंबन्धिनो मन्त्रा आसन् । शुक्रियाणां प्रवर्ग्यसंबन्धिनां साम्नां [illegible]बन्धीनि प्रवर्ग्ययोग्याण्येतानि यजूंषि । इत्थं प्रवर्ग्याङ्गमन्त्रोत्पत्तिरुक्ता, अथ द्रव्य[illegible]च्यते—एतयोर्वक्ष्यमाणयोर्द्वयोः पयसोर्मध्येऽन्यदेकं सामपयसं साम्नां प्रियं [illegible]रम् । अन्यद्देवानां प्रियम् । तदुभयं विभज्य प्रदर्श्यते— तत्र गव्यं सामदेवतायाः [illegible]यम् । अजाक्षीरं देवानां प्रियम् । यस्मादेवं मन्त्रोत्पत्तिः क्षीरद्वयं चैतादृशं तस्मा[illegible]त्र कर्मण्येतैर्यजुर्भिः प्रवर्ग्यमन्त्रैश्चरन्त्यनुतिष्ठन्ति, तत्तत्र कर्माणि द्विविधेन पयसा [illegible]रन्ति । शुक्रियमन्त्रैः क्षीरद्वयं जुहुयादिति मन्त्रद्रव्यविशिष्टकर्मविधिरयं द्रष्टव्यः । [illegible]न कर्मणा प्रजापतिं देवांश्चान्नसमृद्धान्कुर्वन्ति ।

तद्वेदनं प्रशंसति—

एष ह त्वै साक्षात्प्रवर्ग्यं भक्षयति । यस्यैवं

१ क. ख. 'पु शा° । २ ख. क्षेपय । ३ ग. 'दुह्रन् । ४ क. ग. °न्यद्दे° । ५ ख. 'देदनं । ग. तत्तद्दे' ।

विदुषः प्रवर्ग्यः प्रवृज्यते, इति ।

( प्रपा० ५ । अनु० १० । विभा० २ )

**एवं विदुषः** प्रवर्ग्यमाहात्म्यविदो **यस्य प्रवर्ग्य**म(र्ग्योऽ)नुष्ठीयते स **एष** साक्षान्मुख्यं प्रवर्ग्यफलमनुभवति ।

तस्य प्रवर्ग्यस्य काम्यमुद्वासनदेशं विधत्ते—

उत्तरवेद्यामुद्वासयेत्तेजस्कामस्य । तेजो वा उत्तरवेदिः ।
(२)। तेजः प्रवर्ग्यः । तेजसैव तेजः समर्धयति, इति ।

( प्रपा० ५ । अनु० १० । विभा० ३ )

उत्तरवेदेरग्न्याधारत्वात्प्रवर्ग्यहविषश्च तत्स्वरूपत्वादुभयोस्तेजस्त्वम् ।

तमेव देशं फलान्तराय विधत्ते—

उत्तरवेद्यामुद्वासयेदन्नकामस्य । शिरो वा एतद्यज्ञस्य ।
यत्प्रवर्ग्यः । मुखमुत्तरवेदिः । शीर्ष्णैव मुखꣳ
संदधात्यन्नाद्याय । अन्नाद एव भवति, इति ।

( प्रपा० ५ । अनु० १० । विभा० ४ )

प्रवर्ग्यस्य शिरोरूपत्वादुत्तरवेदेर्मुखत्वात्तत्रास्योद्वासने सत्यन्नं भोक्तुं शिरसा मुखस्य संधानं[1] कृतं भवति । ततोऽयम**न्नादो भव**त्येव ।

उत्तरवेद्यामुद्वासनं प्रशंसति—

यत्र खलु वा एतमुद्वासितं वयाꣳसि पर्यासते । पारि वै
ताꣳ समां प्रजा वयाꣳस्यासते ( ३ ) । तस्मादुत्तर-
वेद्यामेवोद्वासयेत् । प्रजानां गोपीथाय , इति ।

( प्रपा० ५ । अनु० १० । विभा० ५ )

**यत्र** यस्मिन्संवत्सरे क्वचिद्देशविशेष **उद्वासितमेतं** प्रवर्ग्यं **वयांसि** पक्षिणः पर्यासते परित आगत्योपविशन्ति, **तां समां** तं संवत्सरं सर्वमपि पक्षिणः **प्रजाः** पुत्रा**न्पर्यासते** पुत्रादिशवदेहेषु[3] प्रविशन्ति, प्रजा म्रियन्त इत्यर्थः । अतस्तेजोन्नकामरात्येऽपि प्रजारक्षणार्थ**मुत्तरवेद्यामेवोद्वासयेत्** ।

तत्रापि देशविशेषं विकल्पितं विधत्ते—

पुरो वा पश्चाद्वोद्वासयेत् । पुरस्ताद्वा एतज्ज्योतिरुदेति ।
तत्पश्चान्निम्रोचति । स्वामेवैनं योनिमनूद्वासयति, इति ।

( प्रपा० ५ । अनु० १० । विभा० ६ )

---

१ क. ख एव । २ ग. साधनं ३ ख. °दिग्देहे° ।

उत्तरवेदेः पूर्वभागे पश्चिमभागे वा प्रवर्ग्यमुद्वासयेत् । प्रवर्ग्यस्वरूपमिदमादित्य-
ज्योतिः पुरस्तादुदेति पश्चादस्तमेति । ततस्तयोरुभयोरपि तदीयस्थानत्वात्स्वकीय-
व स्थानमनुसृत्योद्वासयति ।

अन्यं देशविशेषं विधत्ते—

अपां मध्य उद्वासयेत् । अपां वा एतन्मध्याज्ज्यो-
तिरजायत । ज्योतिः प्रवर्ग्यः । स्व एवैनं
योनौ प्रतिष्ठापयति ( ४ ), इति ।

( प्रपा० ५ । अनु० १० । विभा० ७ )

एतदौर्वविद्युत्स्वरूपं ज्योतिरपां मध्यादजायत । प्रवर्ग्यश्च ज्योतिःस्वरूपः ।
स्मादेनं प्रवर्ग्यं स्वकीय एव स्थाने प्रतिष्ठापयति ।

देशान्तरं विधत्ते—

यं द्विष्यात् । यत्र स स्यात् । तस्यां दिश्युद्वासयेत् । एष वा अग्निर्वै-
श्वानरः । यत्प्रवर्ग्यः । अग्निनैवैनं वैश्वानरेणाभिप्रवर्तयति, इति ।

( प्रपा० ५ । अनु० १० । विभा० ८ )

यजमानो यं पुरुषं द्विष्यात्स द्वेष्यो यस्यां दिशि तिष्ठति तस्यां दिशि प्रवर्ग्य-
द्वासयेत् । प्रवर्ग्यस्य वैश्वानराग्निरूपत्वादेनं द्वेष्यमभिलक्ष्य वैश्वानराग्निनैव प्रवर्तयति ।
नाग्निना तमभितो दहतीत्यर्थः ।

तत्रैव कंचिद्विशेषं विधत्ते—

औदुम्बर्यां[१] शाखायामुद्वासयेत्[२] । ऊर्ग्वा उदुम्बरः । अन्नं
प्राणः । शुग्घर्मः ( ५ ) । इदमहममुष्याऽऽमुष्या-
यणस्य शुचा प्राणमपिदहामीत्याह । शुचैवास्य
प्राणमपिदहति । ताजगार्तिमार्च्छति, इति ।

( प्रपा० ५ । अनु० १० । विभा० ९ )

उदुम्बरवृक्षस्य येयं शाखा तस्यां प्रवर्ग्यमुद्वासयेत् । उदुम्बरस्यान्नरूपत्वात्,
स्य प्राणस्थितिहेतुत्वात्, घर्मस्य च संतापरूपत्वात्, तदनुसारेणोद्वासनकाल इद-
यादिमन्त्रं पठेत् । आमुष्यायणस्य देवदत्तपुत्रस्यामुष्य यज्ञदत्तस्य प्राणमिदं
क्षं यथा भवति तथा शुचा संतापेनापिदहामि सर्वतो दग्धं करोमि । एतन्मन्त्र-
नास्य द्वेष्यस्य प्राणं संतापेन दहत्येव । तदानीमेवासावार्तिं प्राप्नोति ।

देशान्तरं विधत्ते—

यत्र दर्भा उपदीकसंतताः स्युः । तदुद्वासयेद्वृष्टिकामस्य । एता

---

१ क. °तद्देव वि° । २ क. ग. यक्ष्यमाणो । ३ क. ग. °त् । उर्ग्वा

वा अपामनू*ज्ञावर्यो नाम । यद्दर्भाः । असौ खलु वा आदित्य
इतो वृष्टिमुदीरयति । असावेवास्मा आदित्यो वृष्टिं निय-
च्छति । ता आपो नियता धन्वना यन्ति ( १ ), इति ।

( प्रपा० ९ । अनु० १० । विभा० १० )

गोः पय उत्तरवेदिरासते स्थापयति घर्मो यन्ति ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके पञ्चमप्रपाठके दशमोऽनुवाकः ॥ १० ॥

यस्मिन्देशे दर्भा उपदीकसंतताः स्तम्बैरविच्छिन्ना भवन्ति । वृष्टिकामस्तत्रोद्वास-
येत् । य एते दर्भा एता एवापाम[1]नुज्ञावर्य इत्येतन्नामभाजो भवन्ति । अनुज्ञा[2]
अनुक्रमगताः प्रवाहाः, तद्युक्ता नद्यो[3]ऽनूज्ञावर्यः । आपो वै दर्भा इति श्रुत्यन्तराद्द-
र्भाणामविच्छिन्नप्रवाहोपेतनदीरूपत्वम् । प्रवर्ग्यश्चा[4]ऽऽदित्यरूपत्वादादित्यवद्वृष्टिप्रदः
अतो दर्भेषु तदुद्वासने सत्यादित्यो द्युलोकाद्वृष्टिं प्रेरयति । ताश्चाऽऽपो धन्वन
मरुदेशेन सह नियताः प्रवर्तन्ते ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरी-
यारण्यकभाष्ये चतुर्थप्रपाठक एकादशोऽनुवाकः ॥ ११ ॥

---

अथ चतुर्थे द्वादशोऽनुवाकः ।

---

एकादशे प्रवर्ग्योद्वासनमुक्तम् । तत्र महावीरे द्रव्यपूरणावसरे घर्मैतत्तेऽन्नमि
मन्त्रात्पूर्वं त्रयो मन्त्रा अपेक्षिताः, तेऽत्र द्वादशेऽभिधीयन्ते ।

महीनां पयोऽसि विहितं देवत्रा ।

कल्पः—"महीनां पयोऽसीति महावीरे गोपय आनयति" इति । विहितं देवत्रा
मन्त्रशेषः । हे द्रव्य देवत्रा देवनिमित्तं विहितं संपादितं महीनां गवां पयोऽसि ।

ज्योतिर्भा असि वनस्पतीनामोषधीना[5]ꣳ रसः ।

कल्पः—"ज्योतिर्भा असि वनस्पतीनामोषधीनाꣳ रस इति मधु" इति । महा
वीरेऽनयतीत्यनुवर्तते । हे मधुद्रव्य वनस्पतीनामोषधीनां च रसभूतस्त्वं ज्योति
ज्योतिषा प्रकाशकोऽसि ।

---

*अत्र ग. पुस्तके मूले टीकायां च 'अनुज्जावर्यः' इति पाठः ।

---

१ ग. °मनुज्जाव । २ ग. अनुज्जा । ३ ग. °द्योऽनुज्जाव । ४ ग. °र्ग्यस्याऽऽदि
५ ग. °तर्षा प्र° ।

वाजिनं त्वा वाजिनोऽवनयामः। ऊर्ध्वं मनः सुवर्गम्।

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके चतुर्थप्रपाठके
द्वादशोऽनुवाकः ॥ १२ ॥

कल्पः—"वाजिनं त्वा वाजिनोऽवनयाम इति दधि" इति। महावीर आनयतीत्यनुवर्तते। ऊर्ध्वं मनः सुवर्गमिति मन्त्रशेषः। ऊर्ध्वमुपरि वर्तमानं मनो मननीयं स्वर्गं प्राप्तुं हे दधिद्रव्य वाजिनमन्नवन्तं त्वां वाजिनोऽन्नवन्तो वयमवनयामो महावीरे प्रक्षिपामः॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्ये चतुर्थप्रपाठके द्वादशोऽनुवाकः ॥ १२ ॥

---

अथ चतुर्थे त्रयोदशोऽनुवाकः।

---

त्रयोदशमारभ्य प्रायेण घर्मप्रायश्चित्तान्युच्यन्ते। कल्पः—"यदि घर्मः स्कन्देत्। अस्कान्द्यौः पृथिवीमिति द्वाभ्यामभिमन्त्रयते" इति। तत्र प्रथमामाह—

अस्कान्द्यौः पृथिवीम्। अस्कानृषभो युवा गाः। स्कन्नेमा विश्वा भुवना। स्कन्नो[1] यज्ञः प्रजनयतु, इति।

द्यौर्द्युलोकाख्यो देवः पृथिवीं देवतां प्रत्यस्कान्स्ववीर्यं स्कन्दितवान्। तथा युवा यौवनोपेत ऋषभो गा बह्वीः प्रत्यस्कान्स्वकीयं वीर्यं स्कन्दितवान्। इमा विश्वा भुवनैतानि सर्वाणि भूतजातानि, स्कन्ना स्कन्नवीर्यरूपाणि। अतोऽत्रापि स्कन्नो द्रव्यस्कन्दनयुक्तो यज्ञः प्रजनयतु प्रजामुत्पादयतु॥

अथ द्वितीयामाह—

अस्कानजनि प्राजनि। आ स्कन्नाज्जायते वृषा। स्कन्नात्प्रजनिषीमहि, इति॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके चतुर्थप्रपाठके
त्रयोदशोऽनुवाकः॥ १३ ॥

अस्कान्द्रव्यं स्कन्नमभूत्, तेनाजनि किंचिदपत्यमुत्पन्नम्। प्राजनि प्रकर्षेणापत्यस्यापत्यमुत्पन्नम्। स्कन्नाद्द्रव्याद्वृषा सेचनसमर्थः पुत्र आजायते। अतो वयं स्कन्नाद्द्रव्यात्प्रजनिषीमहि प्रकर्षेणापत्यमुत्पादयामः॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्ये चतुर्थप्रपाठके त्रयोदशोऽनुवाकः॥ १३ ॥

---

१ ग. चस्कन्नो। २ ङ. °तु। अ°।

अथ चतुर्थे चतुर्दशोऽनुवाकः ।

---

कल्पः—"यदि घर्मेण चरत्सु विद्युदापतेद्या पुरस्ताद्विद्युदापतदित्येतैर्यथालिङ्गं जुहुयात्" इति । पाठस्तु—

**या पुरस्ताद्विद्युदापतत् । तां त एतेनावयजे स्वाहा । या दक्षिणतः । या पश्चात् । योत्तरतः । योपरिष्टाद्विद्युदापतत् । तां त एतेनावयजे स्वाहा, इति ।**

**इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके चतुर्थप्रपाठके चतुर्दशोऽनुवाकः ॥ १४ ॥**

या विद्युदशनिरूपा पुरस्तात्पूर्वस्यां दिश्यापतत्पतितवती, तां विद्युतं ते तव संबन्धिनैतेन होमेनावयजे नाशयामि । अत्र त इत्यभिधानाद्घर्मः संबोधनीयः । या दक्षिणत इत्यादिषु त्रिषु विद्युदित्यादिकमनुषञ्जनीयम् । अनुषङ्गद्योतनायैवोत्तमे मन्त्रे पुनः पठ्यते ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्ये चतुर्थप्रपाठके चतुर्दशोऽनुवाकः ॥ १४ ॥

---

अथ चतुर्थे पञ्चदशोऽनुवाकः ।

---

कल्पः—"प्राणाय स्वाहा पूष्णे स्वाहेत्येतावनुवाकौ घर्मप्रायश्चित्तानि" इति । घर्मविषये यद्वैकल्यं तद्वारयितुमनुवाकद्वयहोमः । तत्रैकमनुवाकमाह—

**प्राणाय स्वाहा व्यानाय स्वाहाऽपानाय स्वाहा । चक्षुषे स्वाहा श्रोत्राय स्वाहा । मनसे स्वाहा वाचे सरस्वत्यै स्वाहा, इति ॥**

**इति कृष्णयजुर्वेदीयतैत्तिरीयारण्के चतुर्थप्रपाठके पञ्चदशोऽनुवाकः ॥ १५ ॥**

वाक्शब्देन वक्तव्यशब्दमात्रत्वशङ्कां वारयितुं देवतावाचकस्य सरस्वतीशब्दस्य प्रयोगः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्ये चतुर्थप्रपाठके पञ्चदशोऽनुवाकः ॥ १५ ॥

---

१ म. ैती, इति तां । २ ग. नाशयाम ।

अथ चतुर्थे षोडशोऽनुवाकः ।

अनुवाकान्तरमाह—

पूष्णे स्वाहा पूष्णे शरसे स्वाहा । पूष्णे प्रपथ्याय स्वाहा पूष्णे नरंधिषाय स्वाहा । पूष्णेऽङ्घृणये स्वाहा पूष्णे नरुणाय स्वाहा । पूष्णे साकेताय स्वाहा, इति ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके चतुर्थप्रपाठके षोडशोऽनुवाकः ॥ १६ ॥

पोषको देवः **पूषा** । स एव विशेषणभेदाद्भिद्यते । **शरसे** शत्रूणां हिंसकाय । प्रपथ्याय प्रकृष्टस्वर्गमार्गहिताय । नरान्मनुष्यान्धिनोति प्रीणयतीति **नरंधिषः**, तस्मै । अङ्घृणिरञ्जनेन दीप्यमानः, तस्मै । नॄ नय इति धातोर्नरुणशब्दः । प्राणिनां स्वस्वमार्गेषु नेता **नरुणः**, तस्मै । आ समन्ताज्ज्ञानमाकेतस्तेन सह वर्तत इति **साकेतः**, तस्मै ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्ये चतुर्थप्रपाठके षोडशोऽनुवाकः ॥ १६ ॥

अथ चतुर्थे सप्तदशोऽनुवाकः ।

कल्पः—"घर्मेष्टकामुपदधात्युदस्य शुष्माद्भानुरित्यनुवाकेन" इति । एतच्च महाग्निचयने द्रष्टव्यम् । तथा च तत्र सूत्रकारेणोक्तम्—"घर्मेष्टकामुपधाय कुलायिनी तयोः योगे मन्त्रौ" इति । पाठस्तु—

* उदस्य शुष्माद्भानुर्नाऽऽर्त बिभर्ति । भारं पृथिवी न भूम । प्र शुक्रैतु देवी मनीषा । अस्मत्सुतष्टो रथो न वाजी । अर्चन्त एके महि साम मन्वत । तेन सूर्यमधारयन् । तेन सूर्यमरोचयन् । घर्मः शिरस्तदयमग्निः । पुरीषमासि सं

* उदस्येत्यादिभूमेत्यन्तस्य वाक्यस्यार्थ ऋग्वेदभाष्येऽप्युक्त स यथा—"अस्य यज्ञस्य शुष्मादुद्गाद्भानुः सूर्य उद्गात्योच्छ्रयति । भूम भूतानि पृथिवीव भारं लोकस्यायं यज्ञो बिभर्ति च" इति । तत्र प्रकरणानुरोधेन यज्ञप्रशंसाऽत्र त्वग्निप्रशंसेति विशेषः ।

१ ख. ग. प्रवर्ग्ये ।

प्रियं प्रजया पशुभिर्भुवत् । प्रजापतिस्त्वा सादयतु ।
तया देवतयाऽङ्गिरस्वद्ध्रुवा सीद इति ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके चतुर्थप्रपाठके सप्तदशोऽनुवाकः ॥ १७ ॥

भानुः सूर्योऽस्याग्नेः शुष्माद्बलादुदेति । उच्छब्देनाऽऽकाङ्क्षितत्वादेतीत्यध्याहर्तव्यः । स च भानुर्नाऽऽर्तं । आर्तिं *न प्राप्तः । पुनः पुनरुदयं गच्छतोऽप्यग्निबलसाहाय्यादार्तिस्तस्य न विद्यते । पृथिवी न भूमिरिव भूमिप्रयातं(?) भारं बिभर्ति । यथा पृथिवी प्राणिनां भारं सहते तथाऽयं रश्मिभारं सहते । तस्याग्नेः प्रसादाच्छुभ्रा निर्मला मनीषा देवी कर्मणि मनः प्रेरयन्ती देवता प्रकर्षेणैतु प्राप्नोतु । किंनिमित्तमित्येतदुच्यते । अस्मत् । निमित्तार्थे पञ्चमी, अस्माननुग्रहीतुमित्यर्थः । बुद्धिप्राप्तौ दृष्टान्तः । सुतष्टो वर्धकिना सुष्ठुतक्षणेन निष्पादितो वाजी वेगवान्रथो न रथ इव । एके महात्मानस्तमग्निमर्चन्तो महि पूजार्हं साम सर्वेषु समं मन्वत मनसि निश्चितवन्तः । तेनाग्नितेजसा सूर्यमधारयन्पोषितवन्तः । "उद्यन्तं वावाऽऽदित्यमग्निरनु समारोहति" इति श्रुतम् । तेनाग्नितेजसा सूर्यमरोचयन्दीप्तियुक्तमकुर्वन् । घर्मः शिरो यदिदं प्रवर्ग्यरूपं यज्ञस्य शिरोऽस्ति, तदयं चीयमानोऽग्निरेव । अतो हेऽग्ने त्वं पुरीषमिष्टकोपादानमृत्स्वरूपमसि । तच्च स्वरूपं प्रजया पशुभिः समेत्य प्रियं भुवत् । यजमानानां प्रियं भवति । तथाविधाग्निरूपे हे घर्मेष्टके प्रजापतिस्त्वामत्र क्षेत्रे सादयतु स्थापयतु । अङ्गिरस्वदङ्गिरोभिरिव तया प्रजापतिदेवतयोपाहिता सती ध्रुवा सीद स्थिरा भूत्वा तिष्ठ ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्ये चतुर्थप्रपाठके सप्तदशोऽनुवाकः ॥ १७ ॥

---

अथ चतुर्थेऽष्टादशोऽनुवाकः ।

---

कल्पः—"कुलायिनीं यास्ते अग्न आर्द्रा योनय इत्यनुवाकेन" इति । उपदधातीत्यनुवर्तते । पाठस्तु—

यास्ते अग्न आर्द्रा योनयो याः कुलायिनीः ।

---

* एतदादिदेवित्यन्तो ग्रन्थः क. ख पुस्तकयोस्त्रुटितः ।

---

१ क. ख. ह्रदे पा° ।

ये ते अग्ने इन्दवो या उ नाभयः । यास्ते अग्ने तनुव ऊर्जो नाम । ताभिस्त्वमुभयीभिः संविदानः । प्रजाभिरग्ने द्रविणेह सीद । प्रजापतिस्त्वा सादयतु । तया देवतयाऽङ्गिरस्वद्ध्रुवा सीद इति ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके चतुर्थप्रपाठकेऽष्टादशोऽनुवाकः ॥ १८ ॥

हेऽग्ने ते त्वदीया आर्द्रा योनयोऽश्वत्थवृक्षादिरूपा आर्द्राः कारणविशेषाः सन्ति । "अश्वत्थाद्धव्यवाहाद्धि जातामग्नेस्तनुं यज्ञियां संभरामि" इति श्रुतेः । याश्च शालायिनीराहवनीयादिस्थानविशेषाः सन्ति । हेऽग्ने ते त्वदीया इन्दवश्चन्द्रप्रभृतयः स्थानविशेषा ये सन्ति । या उर्णुना (उ ना)भयो याश्चोर्णुना(याश्च ना)भ्यन्यादिस्थानविशेषाः सन्ति । हेऽग्ने ते त्वदीया याश्चान्यास्तनुव ऊर्जो नामौषध्यादिरूपाकत्वेनोर्ङ्नामधारिण्यः सन्ति । ताभिः सर्वाभिर्युक्तस्त्वमुभयीभिर्दैवीभिर्मानुषीभिश्च प्रजाभिः संविदान ऐकमत्यं गतस्त्वमिह क्षेत्रे द्रविणास्माकं धनमिमिसं हेऽग्ने सीद तिष्ठ । प्रजापतिरित्यादि पूर्ववत् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्ये चतुर्थप्रपाठकेऽष्टादशोऽनुवाकः ॥ १८ ॥

---

अथ चतुर्थ एकोनविंशोऽनुवाकः ।

---

कल्पः—"अध्वर्युराग्निमभिमृशत्यग्निरसि वैश्वानरोऽसीत्यनुवाकेन" इति । पाठस्तु—

अग्निरसि वैश्वानरोऽसि । संवत्सरोऽसि । परिवत्सरोऽसि । इदावत्सरोऽसीदुवत्सरोऽसि । इद्वत्सरोऽसि वत्सरोऽसि । तस्य ते वसन्तः शिरः । ग्रीष्मो दक्षिणः पक्षः । वर्षाः पुच्छम् । शरदुत्तरः पक्षः । हेमन्तो मध्यम् । पूर्वपक्षाश्चितयः । अपरपक्षाः पुरीषम् । अहोरात्राणीष्टकाः । तस्य ते मासाश्चार्धमासाश्च कल्पन्ताम् । ऋतवस्ते

---

१ ग उर्णुना° । २ क, ख. °न्ति । हेऽ° । ३ क. ख. °ग्ने त इ° । ४ क. ख. °भ्यन्यो भान्या° । ५ क. ख °हाः । ऐष्टिकया चित्याऽध्व° ।

**कल्पन्ताम् । संवत्सरस्ते कल्पताम् । अहोरात्राणि ते कल्पन्ताम् । एति प्रेति वीति समित्युदिति । प्रजापतिस्त्वा सादयतु । तया देवतयाऽङ्गिरस्वद्ध्रुवः सीद, इति ।**

**इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके चतुर्थप्रपाठक एकोनविंशोऽनुवाकः ॥ १९ ॥**

इष्टकाभिर्निष्पन्न हे देव त्वमग्निरसि । अङ्गारैर्विनेष्टकाशरीरमात्रेणैवाग्नित्वम् । **वैश्वानरो** विश्वेषां नराणामुपकारकोऽसि । प्रभवादीनामेकैकपञ्चके वर्तमानाः शब्दाः संवत्सरादयः । सर्वेष्वनुगतो वत्सरः । त्वमेवं षड्विधोऽसि । **तस्य** तथाविधस्य ऊर्जरूपस्य वसन्ताद्यृतवः शिरआद्यवयवाः । चैत्रादिमासेषु ये शुक्लपक्षास्ते चितिरूपाः । ये च कृष्णपक्षास्ते पुरीषरूपाः । यान्यहोरात्राणि तानीष्टकारूपाणि । **तस्य ते** तादृशस्य तव मासादयः स्वस्वकार्यक्षमा भवन्तु । इतिशब्दशिरस्का आप्रविसमुद उपसर्गा अत्र निर्दिष्टाः । तैरुचितक्रियां संयोज्याग्निः स्तोतव्य इति तात्पर्यार्थः । उचितक्रियाणां च बहूनां संभवान्महती स्तुतिः संपद्यते । प्रजापतिरित्यादि पूर्ववत् । अग्निविशेषणत्वाद्ध्रुव इति (पुं)लिङ्गनिर्देशः ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्ये चतुर्थप्रपाठक एकोनविंशोऽनुवाकः ॥ १९ ॥

---

अथ चतुर्थे विंशोऽनुवाकः ।

---

**भूर्भुवः सुवः ।**

[कल्पः—]"भूर्भुवः सुवः, इति सर्वप्रायश्चित्तानि" इति । त्रयो लोकाः सुखप्रदा भवन्त्विति मन्त्रत्रयस्यार्थः ।

कल्पः—"यदि महावीरः पद्येतोर्ध्व ऊ षु ण ऊतय इति द्वाभ्यामुच्छ्रयीत" इति पाठस्तु—

**ऊर्ध्व ऊ षु ण ऊतये । ऊर्ध्वो नः पाह्य१ꣳहसः, इति ।**

एतच्च मन्त्रयोः प्रतीकद्वयम् । तौ च मन्त्रावञ्जन्ति त्वामध्वरे देवयन्त इत्यनुवाके व्याख्यातौ ।

---

१ ग. °ज्याग्निहोत्रं स्तोत०मिति । २ ख. °ति । क्र° ।

कल्पः—"यदि भिद्येत विधुं दद्राणमिति संदध्यात्" इति। पाठस्तु—

विधुं दद्राणꣳ समने बहूनाम्। युवानꣳ सन्तं पलितो जगार। देवस्य पश्य काव्यं महित्वाऽद्या ममार। स ह्यः समान, इति।

बहूनां कर्मणां समने समीचीनचेष्टारूपेऽनुष्ठाने दद्राणं भूयः प्रवर्तमानं विधुमनुष्ठानस्य विधातारं महावीरं युवानं यौवनोपेतपुरुषवद्दृढमेव सन्तं पलितो वयोहीनसदृशः शैथिल्यविशेषो जगार निगीर्णवान्। देवस्य जगद्विधातुः परमेश्वरस्य काव्यमभिज्ञानरूपं महित्वा महिमानं पश्य हे जनसमूहावलोकय। किं तन्माहात्म्यमिति तदुच्यते। स महावीरो ह्यः पूर्वेद्युः समान सम्यक्चेष्टितवान्। अद्यास्मिन्दिने ममार भग्नोऽभूत्, ईदृशं खल्वीश्वरस्य माहात्म्यम्।

कल्पः—"ततो यानि दृढार्थे संश्लेषणानि स्युस्तैरेनमभिसंदध्यात्, यदन्यन्मासाप्राषेभ्यश्च। यदृते चिदभिश्रिष इति। भिन्नं महावीरं विधुं दद्राणमिति मन्त्रेण संधाय यदृते चिदिति मन्त्रेण संश्लेषणसाधनैरुपलिम्पेत्" [इति]। पाठस्तु—

यदृते चिदभिश्रिषः। पुरा जर्तृभ्य आतृदः। संधाता संधिं मघवा पुरोवसुः (१)। निष्कर्ता विहृतं पुनः, इति।

यन्महावीरस्वरूपं जर्तृभ्यः पुरा कपालजरणेभ्यः कपालानां चूर्णीभावेभ्यः पूर्वमभिश्रिष ऋतेऽभितः संश्लेषणसाधनानि द्रव्याणि विनाऽऽतृदस्तर्दनं भङ्गं प्राप्नोत्। महावीरस्य मघवेन्द्रः संधिं संधानं [संधाता] करिष्यति। कीदृशो। पुरोवसुः पुरतोऽवस्थितानि वसूनि संश्लेषणसाधनानि द्रव्याणि यस्यासौ पुरोवसुः। इत्थं स इन्द्रो विहृ(हृ)तं विशेषेण भग्नं महावीरं पुनर्निष्कर्ता पुनरपि करिष्यति।

पुनरूर्जा सह रय्या।

कल्पः—"यदि घर्ममतिपरीयुर्न वा प्रतिपरीयुः पुनरूर्जा सह रय्येत्येताभ्यामेनं परीयुः" इति। त्रिः परिषिञ्चन्पर्येतीति यदुक्तं तत्राधिकपर्यावर्तने, त्रिः पुनः [प्रति]परीतीति विपरीतावर्तनं यदुक्तं तदकरणेऽप्येतत्प्रायश्चित्तम्। तत्र मन्त्रेणोदितं

१ ग. संदृह्यात्' इ°। २ ग. 'मेवं स°। ३ ग. °सदृह्यात्;। ४ क. °म्येत। पा°। विहृतं। ६ क. ख. °लक्षर°। ७ क. ख. °नां भूतिभावस्य पू°। ८ ग. मन्त्रयोर्गादिर्ं प्र°।

प्रतीकद्वयम् । पुनरूर्जा निवर्तस्वेत्येको मन्त्रः, सह रय्या निवर्तस्वेत्यपरो मन्त्रः। एतावुभावपि भूमिर्भूम्नेत्यत्र व्याख्यातौ ।

कल्पः—"मा नो घर्म व्यथित इत्यष्टौ घर्मे व्यथिते प्रायश्चित्तानि" इति । घर्मस्याऽऽज्यपयोरूपद्रव्यस्य व्यथनं (ने) चलनं (ने) संतापाधिक्येन पात्रस्योपर्युद्गमने सति तत्प्रायश्चित्तम् । तत्र प्रथमामृचमाह—

**मा नो घर्म व्यथितो विव्यधो नः । मा नः परमधरं मा रजोऽनैः[1] । मोष्वस्माꣳस्तमस्यन्तराधाः । मा रुद्रियासो अभिगुर्वृधानः, इति ।**

नोऽस्मदीय हे घर्म हविर्द्रव्य त्वं व्यथितश्चलितो भूत्वा नोऽस्मान्मा विव्यधः स्वस्थानान्मा विचालय । नोऽस्माकं परमुत्कृष्टं कर्माधरं निकृष्टं मा कुरु । रजो माऽनैः, अस्मान्रजोगुणं मा प्रापय । तथा तमस्यन्तस्तमोगुणमध्येऽस्मान्मुष्ठु माऽऽधाः, मा स्थापय । वृधानो वर्धमाना उद्दान्ता[2] रुद्रियासो रुद्रसंबन्धिनः क्रूरा देवा माऽभिगुः[3], अस्मिन्कर्मण्याभिमुख्येन माऽऽगच्छन्तु ।

अथ द्वितीयामाह—

**मा नः क्रतुभिर्हीडितेभिरस्मान् । द्विषा सुनीते मा परादाः । मा नो रुद्रो निर्ऋतिर्मा नो अस्ता । मा द्यावापृथिवी हीडिषाताम् ( २ ), इति ।**

हे घर्म हीडितेभिरपराधयुक्तैर्नोऽस्मदीयैः क्रतुभिः कुपितस्त्वमस्मान्व्य[illegible] द्वेषेण सुनीते सुष्ठु संपादिते फले मा परादा निराकरणं मा कुरु । एता[illegible] काले महता स्वक्लेशेन संपादितं कर्मफलमीषदपराधद्वेषेण मा विनाशयेत्यर्थः । रुद्रः क्रूरो देवो नोऽस्मान्माऽस्ता मैवास्यतु, मा निराकरोतु । निर्ऋतिरपि [illegible] देवता नोऽस्मान्माऽस्ता माऽस्यतु, मा निराकरोतु । द्यावापृथिव्यावपि [illegible] मा हीडिषातामस्मद्विषये क्रोधं मा कुरुताम् ।

अथ तृतीयामाह—

**उप नो मित्रावरुणाविहावतम् । अन्वादीध्याथामिह नः सखाया । आदित्यानां प्रसितिर्हेतिः ।**

---

१ ग °नैः । मा स्वस्मा° । २ क. उद्दाशो । ३ क. ख. °गुः, माऽस्मिन्कर्मण्याभिमुख्येन माऽऽगच्छ° ।

**उग्रा शतापाष्ठा घ विषा परि णो वृणक्तु, इति ।**

हे मित्रावरुणौ नोऽस्मान्धर्मापराधरहितानिह कर्मणि, उपावतमुपेत्य रक्षतम् । हे सखाया सखिवदत्यन्तस्निग्धौ युवामिह कर्माणि नोऽस्मानन्वादीध्याथामनुक्रमेण सर्वतो दीप्तान्कुरुतम् । आदित्यानां संबन्धिनी हेतिः पापिषु हिंसाकरणमायुधं नोऽस्मान्परिवृणक्तु सर्वतो वर्जयतु । कीदृशी हेतिः । प्रसितिः प्रकृष्टबन्धा । उग्रा तीक्ष्णाघाता । शतापाष्ठा बहुस्पर्शा, बहुभिरवयवैः प्रहर्तुं समर्थेत्यर्थः । विषा व्यापिनी । घशब्दो यथोक्तविशेषणसमुच्चयार्थः ।

चतुर्थादीनामष्टमान्तानां पञ्चानां प्रतीकानि दर्शयति—

**इमं मे वरुण तत्त्वा यामि । त्वं नो अग्ने**

**स त्वं नो अग्ने । त्वमग्ने अयासि, [इति] ।**

तत्राऽऽद्यं मन्त्रद्वयमिन्द्रं वो विश्वतस्परीन्द्रं नर इत्यत्र व्याख्यातम् । अनन्तरं तु मन्त्रद्वयमायुष्ट आयुर्दा अग्न इत्यत्र व्याख्यातम् । अन्तिमो जुष्टो दमूना इत्यत्र व्याख्यातः ।

**उद्वयं तमसस्परि । उदु त्यं**

**चित्रम् । वयः सुपर्णाः ( ३ ) ।**

**पुरोवसुर्हीडिषाता८ सुपर्णाः ॥**

**इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके चतुर्थप्रपाठके**

**विंशोऽनुवाकः ॥ २० ॥**

कल्पः—"यदि घर्मेण चैरत्स्वादित्योऽस्तमियादपरस्यां द्वारि दर्भेण हिरण्यं प्रबध्योद्वयं तमसस्परीत्यादित्यमुपस्थायोदुत्यं चित्रमिति द्वाभ्यां गार्हपत्ये हुत्वा प्रवृज्य श्वोभूते वयः सुपर्णा इत्यादित्यमुपतिष्ठन्ते" इति । चतसृणामेतासामत्र प्रतीकान्याम्नातानि । उद्वयमिति मन्त्रः समास्त्वाऽग्न इत्यनुवाके व्याख्यातः । उदु त्यं चित्रमिति द्वयमुदु त्यं जातवेदस इत्यनुवाके व्याख्यातम् । वयः सुपर्णा इति व्याख्यास्यते ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्ये चतुर्थप्रपाठके विंशोऽनुवाकः ॥ २० ॥

---

१ ग. °ष्ठाऽय वि° । २ ग. °सा इार° । ३ क. ख. °बन्धना । उ° । ४ ग. अवशब्दो । ५ ग. चरंस्त्वादि° । ६ ग. °रीत्युप° । ७ ख. ग. °ष्ठन इ° । ८ ग. °ति मन्त्रः स ई पाहीत्यनुवाके व्याख्यातः । इ° ।

अथ चतुर्थ एकविंशोऽनुवाकः ।

---

कल्पः—"दधिघर्मं भक्षयन्ति भूर्भुवः सुवरित्यनुवाकेन" इति । पाठस्तु—

भूर्भुवः सुवः । मयि त्यदिन्द्रियं महत् । मयि दक्षो मयि क्रतुः । मयि धायि सुवीर्यम् । त्रिशुग्घर्मो विभातु मे । आकूत्या मनसा सह । विराजा ज्योतिषा सह । यज्ञेन पयसा सह । ब्रह्मणा तेजसा सह । क्षत्रेण यशसा सह । सत्येन तपसा सह । तस्य दोहमशीमहि । तस्य सुम्नमशीमहि । तस्य भक्षमशीमहि । तस्य त इन्द्रेण पीतस्य मधुमतः । उपहूतस्योपहूतो भक्षयामि (१), इति ।

* इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके चतुर्थप्रपाठके एकविंशोऽनुवाकः ॥ २१ ॥

भूरादिलोकदेवता अनुगृह्णन्त्विति शेषः । त्यत्प्रसिद्धं महदिन्द्रियसामर्थ्यं मयि धायि धीयतां स्थाप्यताम् । तथा दक्ष उत्साहः क्रतुरनुष्ठानं सुवीर्यं सर्वेषु कार्येषु शोभनं सामर्थ्यं तत्सर्वं मयि स्थाप्यताम् । त्रिशुगग्निविद्युदात्मना त्रेधाभिन्नदीप्तिर्घर्मो मदर्थमाकूत्यादिभिः सह विभातु विविधं दीप्यताम् । आकूतिः संकल्पः । मनः संकल्पसाधनम् । विराडन्नम् । ज्योतिस्तेजः । यज्ञः क्रतुः । पयः क्षीरम् । ब्रह्म ब्राह्मणजातिः । तेजः शरीरकान्तिः । क्षत्रं क्षत्रियजातिः । यशः कीर्तिः । सत्यमनृतवर्जितम् । तपः कृच्छ्रचान्द्रायणादिकम् । तस्य तैराकूत्यादिभिर्युक्तस्य घर्मस्य दोहं वृष्ट्यादिसमृद्धिं वयमशीमहि । तस्य सुम्नं तन्निमित्तं सुखं चाशीमहि । तस्य प्रवर्ग्यस्य प्रसादाद्भक्षं चाशीमहि व्याप्नुयाम । हे घर्म तस्य तादृशस्य ते तव रसमुपहूतोऽनुज्ञातोऽहं भक्षयामि । कीदृशस्य तव । इन्द्रेण प्रथमं पीतस्य । मधुमतो माधुर्ययुक्तस्य । उपहूतस्यानुज्ञातस्य ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्ये चतुर्थप्रपाठक एकविंशोऽनुवाकः ॥ २१ ॥

---

* अस्मात्प्राग्ग. पुस्तके ' यशसा सह षट् च ' इति प्रतीकग्रहणं वर्तते ।

१ ग. °कः । यदि ध° ।

अथ चतुर्थे द्वाविंशोऽनुवाकः ।

कल्पः—" व्याख्याता घोरास्तन्वोऽरण्येऽनुवाक्यो गण उत्तरौ चानुवाकौ " इति । घोरतनूनां प्रतिपादकौ द्वावनुवाकौ, तत्रोक्तास्तन्व आधानप्रतिपादके सूत्रे व्याख्याताः । अरण्येऽनुवाक्या भवन्तीति हि तत्र सूत्रेऽभिहितम् । तथा द्वयोरनुवाकयोर्मरुद्गण उक्तः, स च विकल्पितः । तस्य विनियोगो राजसूयप्रकरणे सूत्रकारेणाभिहितः—" मारुतमेकविंशतिकपालं निर्वपति वैश्वदेवीमामिक्षां तस्यारण्येऽनुवाक्यैर्गणैः कपालानुपदधाति " इति । ब्राह्मणं चाऽऽम्नातम्—" योऽरण्येऽनुवाक्यो गणस्तं मध्यत उपदधाति " इति । तत्र घोरतनुप्रतिपादकं प्रथममनुवाकमाह—

यास्ते अग्ने घोरास्तनुवः । क्षुच्च तृष्णा च । अस्नुक्चानाहुतिश्च । अशनया च पिपासा च । सेदिश्चामतिश्च । एतास्ते अग्ने घोरास्तनुवः । ताभिरमुं गच्छ । योऽस्मान्द्वेष्टि । यं च वयं द्विष्मः, इति ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके चतुर्थप्रपाठके द्वाविंशोऽनुवाकः ॥ २२ ॥

हेऽग्ने ते तव संबन्धिन्यो घोरा अत्युग्रास्तनुवो याः सन्ति । कास्ता इति चेत् । [क्षु]दादिभिरत्यन्तैरष्टाभिः शब्दैः प्रतिपादिताः । हेऽग्ने ते तव संबन्धिन्य एता उक्ता [घोरा] स्तनुवः, ताभिस्तनुभिः सह योऽस्माकं द्वेष्टा यश्च द्वेष्योऽमुं द्विविधं पुरुषं [ग]च्छ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्ये चतुर्थप्रपाठके द्वाविंशोऽनुवाकः ॥ २२ ॥

अथ चतुर्थे त्रयोविंशोऽनुवाकः ।

अथ घोरतनुप्रतिपादकं द्वितीयमनुवाकमाह—

स्निक्च स्नीहितिश्च स्निहितिश्च । उष्णा च शीता च । उग्रा च भीमा च । सदाम्नी सेदिरनिरा । एतास्ते अग्ने घोरास्तनुवः ।

१ ख. 'वाक्यो भ' । २ ख. ग. 'तनम' ।

ताभिरमुं गच्छ । योऽस्मान्द्वेष्टि । यं च वयं द्विष्मः, इति ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके चतुर्थप्रपाठके त्रयोविंशोऽनुवाकः ॥ २३ ॥

स्रिगादीन्यनिरान्तानि तनुनामानि । अन्यत्पूर्ववत् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्ये चतुर्थप्रपाठके त्रयोविंशोऽनुवाकः ॥ २३ ॥

---

अथ चतुर्थे चतुर्विंशोऽनुवाकः ।

---

मरुद्गणप्रतिपादकं प्रथममनुवाकमाह—

धुनिश्च ध्वान्तश्च ध्वनश्च ध्वनयंश्च ।
निलिम्पश्च विलिम्पश्च विक्षिपः, इति ।

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके चतुर्थप्रपाठके चतुर्विंशोऽनुवाकः ॥ २४ ॥

धुन्यादीनि सप्त पदानि गणगतानां मरुद्विशेषाणां नामधेयानि । एतद्रूपेण कपालान्यवतिष्ठन्त[1] इत्यर्थः ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्ये चतुर्थप्रपाठके चतुर्विंशोऽनुवाकः ॥ २४ ॥

---

अथ चतुर्थे पञ्चविंशोऽनुवाकः ।

---

मरुद्गणप्रतिपादकमनुवाकान्तरमाह—

उग्रश्च धुनिश्च ध्वान्तश्च ध्वनश्च ध्वनयंश्च । सहसह्वांश्च सहमानश्च सहस्वांश्च सहीयांश्च । एत्य प्रेत्य विक्षिपः, इति ।

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके चतुर्थप्रपाठके पञ्चविंशोऽनुवाकः ॥ २५ ॥

---

१ ग. °तिष्ठामीत्य° ।

उग्रादीनि सहमानान्तानि सप्त पदानि गणगतानां मरुद्विशेषाणां नामधेयानि। सह-
ादीनि विक्षिप इत्यन्तानि षण्णा(पञ्चना?)मानि विकल्पितानि। अनुवाकद्वयोक्तं गणद्वयं
पालोपधाने विकल्पितम्। उत्तरगणे च नामषट्कं पुनर्विकल्पितम्॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरी-
यारण्यकभाष्ये चतुर्थप्रपाठके पञ्चविंशोऽनुवाकः॥ २५॥

---

अथ चतुर्थे षड्विंशोऽनुवाकः।

---

कल्पः—"यदि घर्मदुघं वा महावीरं वा स्तेनोऽपहरेद्गार्हपत्ये स्रुवाहुतिं जुहुयात्,
होरात्रे त्वोदीरयतामिति" [इति]। पाठस्तु—

**अहोरात्रे त्वोदीरयताम्। अर्धमासास्त्वोदीं**
**जयन्तु। मासास्त्वा श्रपयन्तु। ऋतवस्त्वा**
**पचन्तु। संवत्सरस्त्वा हन्त्वसौ, इति।**

**इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके चतुर्थप्रपाठके**
**षड्विंशोऽनुवाकः॥ २६॥**

चोरस्य नामनिर्देशार्थोऽसाविति शब्दः। हे देवदत्तनामक चोर त्वामहोरात्र
े उदीरयतामुद्गमयताम्। अर्धमासदेवतास्त्वामुदीं जयन्तूत्कर्षेणैव जयन्तु। मास-
तास्त्वां श्रपयन्तु वह्नौ पक्तुं प्रवर्तन्ताम्। ऋतुदेवतास्त्वां सम्यक्पक्कं कुर्वन्तु। संव-
देवस्त्वां हन्तु मारयतु॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरी-
यारण्यकभाष्ये चतुर्थप्रपाठके षड्विंशोऽनुवाकः॥ २६॥

---

अथ चतुर्थे सप्तविंशोऽनुवाकः।

---

अभिचारप्रकरणे ब्राह्मणे[2] यदुक्तं यद्वाचः क्रूरं तेन वषट्करोतीति, तदेतत्क्रूरम[3]ाह—

**खट् फट् जहि। छिन्धी[4] भिन्धी हन्धी**
**कट्। इति वाचः क्रूराणि इति।**

---

[1] क. °मुद्गीमुन्क°। [2] क ख ब्राह्मणेन। [3] ख. °देव क्रूर°। [4] क. छिन्धि।

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके चतुर्थप्रपाठके
सप्तविंशोऽनुवाकः ॥ २७ ॥

भर्त्सनद्योतकाः खडादयस्त्रयोऽनुकरणशब्दाः । * हननच्छेदनभेदनवाचकानि क्रियापदानि । इत्येतानि षड्विधानि वाचः क्रूराणि ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्ये चतुर्थप्रपाठके सप्तविंशोऽनुवाकः ॥ २७ ॥

---

अथ चतुर्थेऽष्टाविंशोऽनुवाकः ।

---

कल्पः—"यदि घर्मेण चरत्स्वेकवृक उत्तिष्ठेद्विगा इन्द्र विचरन्त्स्पाशयस्वेत्येनम मन्त्रयते" इति । पाठस्तु —

विगा इन्द्र विचरन्त्स्पाशयस्व । स्वपन्तमिन्द्र पशुमन्तमिच्छ ।
वज्रेणामुं बोधय दुर्विदत्रम् । स्वपतोऽस्य प्रहर भोजनेभ्यः, इति ।

एकाकित्वेनारण्ये संचरन्वत्सान्मारयति योऽरण्यश्वा सोऽयमेकवृकः, तद्बाध प्रार्थ्यते । हे, इन्द्र विगा वत्सानेकवृकाद्वियोज्य तद्रक्षार्थं विशेषेण चरन्स्पाश तमेकवृकं बाधितं कुरु । हे, इन्द्र पशुमन्तं वत्सान्भक्षयितुमायातैः पशुभिर्युक्तं त वृकं स्वपन्तं निद्राणं गच्छ । गत्वा च दुर्विदत्रं दुर्बुद्धिशीलममुमेकवृकं वज्रेण युधेन बोधय । यथा + स्वपन्तं सुप्तं प्रहारेण बोधयन्ति, तथा वज्रप्रहारेण बे बोधयेत्यस्यैवार्थः स्पष्टमुच्यते । स्वपन्तमेनमेकवृकं भोजनेभ्यो वत्सभक्षणेभ्यो रयितुं प्रहर मारयेत्यर्थः ।

कल्पः—"उभयत आदीप्योल्मुकमस्मै प्रत्यस्येत् । अग्ने अग्निना संवदस्व [इ इति । पाठस्तु—

अग्ने अग्निना संवदस्व । मृत्यो मृत्युना
संवदस्व । नमस्ते अस्तु भगवः, इति ।

हेऽग्न उल्मुकस्य मूलभागवर्तिन्नग्निनोल्मुकाग्रभागवर्तिना सह संवदस्व, ए हन्तुमैकमत्यं प्राप्नुहि । हे मृत्यो मूलभागस्थिताग्निप्रेरित मृत्युनाऽग्रभागस्थित

---

* छेदनभेदनहननवाचकानीति युक्तं पठितुम् । + इदं पदमधिकम् ।

---

१ क. °कसृक । २ क. °कसृकः । ३ क. ख. °नमन्त्रं प्रार्थयते । ४ क. °कसृ ५ क. °कसृकं । ६ क. °कसृकं । ७ क. °कसृकं । ८ ख. सुप्तप° । ९ क. °कसृकं ।

तेन सह **संवदस्व**, एकवृकं हन्तुं संवादमनुमतिं कुरु । हे **भगव** ऐश्वर्यादिगुणयुक्ते, ते तुभ्यं **नमोऽस्तु** ।

कल्पः—"अथैनमनुतिष्ठन्ते सकृत्ते अग्ने नम इत्यनुवाकशेषेण" इति । पाठस्तु—

**सकृत्ते अग्ने नमः । द्विस्ते नमः । त्रिस्ते नमः । चतुस्ते नमः । पञ्चकृत्वस्ते नमः । दशकृत्वस्ते नमः । शतकृत्वस्ते नमः । आसहस्रकृत्वस्ते नमः । अपरिमितकृत्वस्ते नमः । नमस्ते अस्तु मा मा हिꣳसीः*, इति ।**

**इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके चतुर्थप्रपाठकेऽष्टाविंशोऽनुवाकः ॥ २८ ॥**

वृकदर्शनावृत्त्यनुसारेण नमस्कारावृत्तिवाक्यानि योजनीयानि । यद्वा सकृद्दर्शनेऽपि मनो मन्त्रः प्रयोक्तव्यः । नमस्कारावृत्त्युक्तिरादरार्था ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्ये चतुर्थप्रपाठकेऽष्टाविंशोऽनुवाकः ॥ २८ ॥

---

अथ चतुर्थ एकोनत्रिंशोऽनुवाकः ।

---

कल्पः—"अथ यदि गृध्रः शालावृको[1] भयेडको दीर्घमुख्युलूको भूतोपसृष्टः शकुनिर्वदेत्, "असृङ्मुखः" "यदेतत्" "यदीषितः" "दीर्घमुखि" "इत्थाः" "यदेतद्भूतान्यन्वाविश्य" "प्रसार्य सक्थ्यौ" इत्येतैर्यथालिङ्गमभिमन्त्र्यो प्रत्यसनादि समानम्" इति । तत्र गृध्रविषयमनुवाकमाह—

**असृङ्मुखो रुधिरेणाव्यक्तः । यमस्य दूतः श्वपाद्विधावसि । गृध्रः सुपर्णः कुणपं निषेवसे । यमस्य दूतः प्रहितो भवस्य चोभयोः, इति ।**

**इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके चतुर्थप्रपाठक एकोनत्रिंशोऽनुवाकः ॥ २९ ॥**

---

*एतदग्रे ग. पुस्तके "१॥ त्रिस्ते नमः सप्त च" इत्यधिकम् ।

---

१ ख सालावृको ।

गृध्रः पक्षिविशेषः। हे गृध्र त्वं विधावसि विविधं धावनं करोषि, शवमन्वि च्छन्सर्वत्र संचरसि। कीदृशः। असृङ्मुखोऽसृग्रक्तं मुखे यस्यासौ तादृशः। पा स्वीकृतेन रुधिरेण मुखस्य सर्वस्य लेपितत्वादव्यक्तः, ईदृग्जातिरिति निश्चेतुमशक्यः यमस्य दूतो यमो हि मारयितुं गृध्रं प्रेषयति। श्ववत्पद्यते शवं गच्छतीति श्वपात् त्वं रक्तमांसयोर्गन्धेन तृषया युक्तत्वाद्गृध्रः। शोभनौ पर्णौ शीघ्रपतनक्षमौ यस्या सुपर्णः। तादृशस्त्वं कुणपं शवं निषेवसे नितरां सेवसे। सोऽयं गृध्रो यम प्रेताधिपतिदेवस्य भवस्य परमेश्वरस्यान्तर्यामिण उभयोरेतयोर्दूतः। भवो हि प्रेषयति यमश्च गृध्रम्। अतः साक्षात्परम्परया चोभयोर्दूतः सन्निह प्रहितः प्रेषितः

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्ये चतुर्थप्रपाठक एकोनत्रिंशोऽनुवाकः ॥ २९ ॥

---

अथ चतुर्थे त्रिंशोऽनुवाकः।

---

अथ शालावृकविषयमनुवाकमाह—

यदेतद्वृकसो भूत्वा। वाग्देव्यभिरायसि। द्विषन्तं मेऽभिराय। तं मृत्यो मृत्यवे नय। स आर्त्याऽऽर्तिमार्च्छतु, इति।

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके चतुर्थप्रपाठके त्रिंशोऽनुवाकः ॥ ३० ॥

वृकः क्रोष्टा। हे वाग्देवि ध्वनिदेवते वृकसो भूत्वा वृकादुत्पद्याभिराय भिमुख्येन शब्दं करोषीति यत्तदेतन्मे द्विषन्तमभिलक्ष्य राय शब्दं कुरु मृत्यो वृकरूपं तं द्विषन्तं मृत्यवे मारकाय देवाय नय प्रापय। स द्विषन्नार्त्या णाऽऽर्तिं दुःखमार्च्छतु प्राप्नोतु ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्ये चतुर्थप्रपाठके त्रिंशोऽनुवाकः ॥ ३० ॥

---

१ ग. °पित्वा°। २ क. ख. °ति। शवव°। ३ ग. शीघ्रं। ४ क. ख. °थ स ५ क. ख. °ति तदे°।

अथ चतुर्थ एकत्रिंशोऽनुवाकः ।

भयेडकविषयमनुवाकमाह —

यदीषितो यदि वा स्वकामी । भयेडको
वदति वाचमेताम् । तामिन्द्राग्नी ब्रह्मणा
संविदानौ । शिवामस्मभ्यं कृणुतं गृहेषु, इति ।

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके चतुर्थप्रपाठक
एकत्रिंशोऽनुवाकः ॥ ३१ ॥

एडको मेषः, स च युद्धव्यसनयुक्तो भयेडकः । तं दृष्ट्वैव भीत्या मनुष्याः पलायन्ते । स च यदि केनचिदीषितः प्रवर्तितो यदि वा स्वकामी स्वेच्छावर्ती सन्नेतां श्रूयमाणां वाचं वदति ध्वनिं करोति । हे इन्द्राग्नी ब्रह्मणा परमेश्वरेण सह संविदानावैकमत्यं गतावस्मभ्यमस्मदर्थं गृहेष्वस्मदीयेषु तां वाचं शिवां सुखकरीं कृणुतं कुरुतम् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्ये चतुर्थप्रपाठक एकत्रिंशोऽनुवाकः ॥ ३१ ॥

अथ चतुर्थे द्वात्रिंशोऽनुवाकः ।

दीर्घमुखीविषयमनुवाकमाह —

दीर्घमुखि दुर्हणु । मा स्म दक्षिणतो वदः ।
यदि दक्षिणतो वदाद्द्विषन्तं मेऽवबाधासै,[1] इति ।

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके चतुर्थप्रपाठके
द्वात्रिंशोऽनुवाकः ॥ ३२ ॥

दीर्घमुखी काकस्त्री गर्दभी वा । दुष्टा हनूर्यस्याः सा दुर्हणूः । हे दुर्हणु दीर्घमुखि दक्षिणतो दक्षिणभागे मा स्म वदो ध्वनिं मा कार्षीः । यदि दक्षिणभागे वदाच्छब्दं कुर्यास्तदा मे द्विषन्तमवबाधासै(सा)[2] [अ]वबाधस्व[3] विनाशय ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्ये चतुर्थप्रपाठके द्वात्रिंशोऽनुवाकः ॥ ३२ ॥

---

१ ग. °बाधस्व, इ° । २ क. ख. हद्दारीभिवा । ३ क. ग. °बाधस्व ।

अथ चतुर्थे त्रयस्त्रिंशोऽनुवाकः ।

उलूकविषयमनुवाकमाह—

इत्थादुलूक आपप्तत् । हिरण्याक्षो अयोमुखः ।

रक्षसां दूत आगतः । तमितो नाशयाग्ने, इति ।

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके चतुर्थप्रपाठके त्रयस्त्रिंशोऽनुवाकः ॥ ३३ ॥

उलूकः काकविरोधी घूकः । सोऽयमुलूक इत्थादनेन प्रकारेणाऽऽपप्तत्प्राप्नोत्[1] । कीदृशः । हिरण्यवद्रक्ते अक्षिणी यस्यासौ हिरण्याक्षः । अयोवत्कृष्णवर्णं मुखं यस्यासावयोमुखः । स च यज्ञविघातिनां रक्षसां दूतः सन्निह समागतः । हेऽग्ने तमुलूकमितः स्थानान्नाशय ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्ये चतुर्थप्रपाठके त्रयस्त्रिंशोऽनुवाकः ॥ ३३ ॥

अथ चतुर्थे चतुस्त्रिंशोऽनुवाकः ।

अथ भूतोपसृष्टविषयमनुवाकमाह—

यदेतद्भूतान्यन्वाविश्य । दैवीं वाचं वदसि । द्विषतो नः परावद । तान्मृत्यो मृत्यवे नय । त आर्त्याऽऽर्तिमाच्छन्तु । अग्निनाऽग्निः संवदताम्, इति ।

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके चतुर्थप्रपाठके चतुस्त्रिंशोऽनुवाकः ॥ ३४ ॥

यक्षराक्षसग्रहाविष्टो मनुष्यो यद्वदति तद्विषयमिदमुच्यते । यक्षादिभूतानि प्राणिनो मनुष्याननुप्रविश्य दैवीं वाचं मनुष्याणामयोग्यां कांचिद्वाचं वदसीति यदेतदेतेन वचनेन नोऽस्माकं द्विषतः शत्रून्परावद पराभूता यथा भवन्ति तथा वद । हे मृत्यो यक्षादिरूप मृत्यवे परमृत्युरूपाय देवाय तान्द्विषतो नय प्रापय । ते द्विषन्त आर्त्या रोगेणाऽऽर्तिं दुःखमाच्छन्तु प्राप्नुवन्तु । अस्मिन्नर्थेऽग्निनोल्मुकमूलभागवर्तिनाऽग्निरुल्मुकाग्रवर्ती संवदतां संवादमनुमतिं करोतु ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्ये चतुर्थप्रपाठके चतुस्त्रिंशोऽनुवाकः ॥ ३४ ॥

१ ग. 'रमप्न'

अथ चतुर्थे पञ्चत्रिंशोऽनुवाकः।

अथ शकुनिविषयमनुवाकमाह—

प्रसार्य सक्थ्यौ पतसि । सव्यमक्षिं निपेपि च । मेह कस्यचनाममत्, इति ।

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके चतुर्थप्रपाठके पञ्चत्रिंशोऽनुवाकः ॥ ३५ ॥

ग्रामगमनादौ शुभाशुभसूचकः पक्षी शकुनिः । हे शकुने सक्थ्यौ प्रसार्योरू प्रसृतौ कृत्वेह पतसि । सव्यमक्षि वामं चक्षुर्निपेपि च पुनः पुनर्निमीलयसि च । तेन दोषेणेहास्मिन्देशे कस्यचन कस्यापि पुरुषस्य माऽममत्, रोगो मा भवतु ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्ये चतुर्थप्रपाठके पञ्चत्रिंशोऽनुवाकः ॥ ३५ ॥

अथ चतुर्थे षट्त्रिंशोऽनुवाकः ।

कल्पः—“ यदि घर्मधुक्क्रिमिणा स्यात्, अत्रिणा त्वा क्रिमे हन्मीत्यनुवाकेनास्याः क्रिमीन्हन्यात् । अपि वा सार्वत्रिकमेतत्प्रायश्चित्तं क्रि[1]येत ” इति । पाठस्तु—

अत्रिणा त्वा क्रिमे हन्मि । कण्वेन जमदग्निना । विश्वावसोर्ब्रह्मणा हतः । क्रिमीणाꣳ राजा । अप्येषाꣳ स्थपतिर्हतः । अथो माताऽथो पिता । अथो स्थूरा अथो क्षुद्राः । अथो कृष्णा अथो श्वेताः । अथो आशातिका हताः । श्वेताभिः सह सर्वे हताः, इति ।

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके चतुर्थप्रपाठके षट्त्रिंशोऽनुवाकः ॥ ३६ ॥

हे क्रिमे घर्मधुगादिवर्तिन्नत्रिणा कण्वेन जमदग्निना च महर्षिणाऽनुगृहीतोऽहं त्वां हन्मि । विश्वावसोर्ब्रह्मणा विश्वावसुसंज्ञकस्य गन्धर्वस्य मन्त्रेण क्रिमीणां राजा स्वामी हतः । अपि चैषां क्रिमीणां स्थपतिरन्योऽपि राजव्यतिरिक्तः प्रभुर्हतः । अपि च तव माता हता । तव पिता [ हतः ] । अन्येऽपि क्रिमयः स्थूलाः क्षुद्राः कृष्णाः श्वेताश्च नानाविधा हताः । अपि चाऽऽशातिका आगत्य शात्यमाना

१ क. क्रियेत पा° ख क्रिमे । पा° । २ क ग. °स्य म° ।

अस्माभिरेव बाध्यमाना गवाश्वादिशरीरेषु वर्तमाना दंशयूकादयः सर्वेऽपि श्वेताभिः क्रिमिजातिभिः सह मारिताः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीय-तैत्तिरीयारण्यकभाष्ये चतुर्थप्रपाठके षट्त्रिंशोऽनुवाकः ॥ ३६ ॥

अथ चतुर्थे सप्तत्रिंशोऽनुवाकः ।

कल्पः—" यमभिचरेत्तस्य लोहितमवदानं कृत्वाऽऽहरावद्य शृतस्येत्यनुवाकेन जुहुयात् " इति । पाठस्तु—

आहरावद्य । शृतस्य हविषो यथा । तत्सत्यं यदमुं यमस्य जम्भयोः । आदधामि तथा हि तत् । खण्फण्म्रसि, इति ।

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके चतुर्थप्रपाठके सप्तत्रिंशोऽनुवाकः ॥ ३७ ॥

यथा यागकाले शृतस्य हविषः पक्वं हविरवद्यावदा*य जुहु इति (जुहुयामिति)। तथा हे शत्रो लोहितं द्वितीयमाहराऽऽनय । अमुं शत्रुं यमस्य जम्भयोर्दन्तयोर्मध्य आदधामि स्थापयामीति यत्तत्सत्यम् । तत्कार्यं तथा हि तथैवास्तु । दंशनध्वनेरनुकरणरूपौ खण्फण्शब्दौ तौ यथा भवतस्तथा शत्रो मारितोऽसि ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्ये चतुर्थप्रपाठके सप्तत्रिंशोऽनुवाकः ॥ ३७ ॥

अथ चतुर्थेऽष्टात्रिंशोऽनुवाकः ।

कल्पः—" यमभिव्याहरिष्यन्स्यात्त्रिरात्रावरं ब्रह्मचर्यं चरि[1]त्वा गत्वैनमभिव्याहरेत् ब्रह्मणा त्वा शपामीत्यनुवाकेन " इति । पाठस्तु—

ब्रह्मणा त्वा शपामि । ब्रह्मणस्त्वा शपथेन शपामि । घोरेण त्वा भृगूणां चक्षुषा प्रेक्षे ।

* एतदादितावित्यन्तो ग्रन्थस्त्रुटितः क. ख. पुस्तकयोः ।

१ ग. रित्वाऽऽगत्यैन° ।

रौद्रेण त्वाऽङ्गिरसां मनसा ध्यायामि । अघस्य त्वा धारया विध्यामि । अधरो मत्पद्यस्वासौ, इति ।

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके चतुर्थप्रपाठकेऽष्टात्रिंशोऽनुवाकः ॥ ३८ ॥

हे शत्रो त्वां देवदत्तनामानं ब्रह्मणा मन्त्रेण शपामि शापयुक्तं करोमि । ब्रह्मणः परमात्मवस्तुनः शपथेन शापसामर्थ्येन त्वां शपामि । भृगूणां महर्षीणां संबन्धिना घोरेणोग्रेण चक्षुषा त्वां प्रेक्षे । अङ्गिरसां महर्षीणां संबन्धिना रौद्रेणोग्रेण मनसा त्वां ध्यायामि । अघस्य पापरूपस्य क्रूरस्याऽऽयुधस्य खड्गरूपस्य धारया त्वां विध्यामि । असौ हे देवदत्तरूप त्वं मदभिचरितुः पुरुषादधरः पद्यस्वार्वाचीनः पतितो भव ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्ये चतुर्थप्रपाठकेऽष्टात्रिंशोऽनुवाकः ॥ ३८ ॥

---

अथ चतुर्थ एकोनचत्वारिंशोऽनुवाकः ।

कल्पः— "यं द्विष्यात्तस्य गोष्ठे[2] स्वयमोषधीं[3] निखनेत्, उत्तुद शिमिजावरीत्यनुवाकेन । अपि वा गोष्ठस्यैवादक्षिणं[4] द्वार्बाहुमेतेनैव विचालयेत्" इति । पाठस्तु—

उत्तुद शिमिजावरि । तल्पेजे तल्प उत्तुद । गिरीꣳरनुप्रवेशय । मरीचीरुप संनुद । यावदितः पुरस्तादुदयाति सूर्यः । तावदितोऽमुं नाशय । योऽस्मान्द्वेष्टि । यं च वयं द्विष्मः, इति ।

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके चतुर्थप्रपाठक एकोनचत्वारिंशोऽनुवाकः ॥ ३९ ॥

कृषिमन्तरेण स्वयमेवोत्पन्ना शिमिजावरी । हे तथाविधौषध उत्तुद शत्रुमुत्कृत्य व्यथितं कुरु । हे तल्पेजे तस्य शयनस्थाने समुत्पन्न ओषधे तदीये तल्पे प्रविश्य समुत्तुद । ततो गृहाद्भ्रष्टं कृत्वा गिरीननुप्रवेशय । ततो मरीचीर्दावाग्निरश्मीनुप

१ ग. त्वां ब्र° । २ ग. °ष्ठेऽन्वक्षतमो° । ३ क. ख. °यमौष° । ४ क. ख. °स्यैव दक्षिणां द्वा° ।

प्रापय्य संनुद सम्यङ्निराकुरु । सूर्यो यावता कालेनेतो देशात्पुरस्तात्पूर्वस्यां दिशि देति तावता कालेनेतो देशादमुं द्वेष्टारं द्वेष्यं च नाशय ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्ये चतुर्थप्रपाठक एकोनचत्वारिंशोऽनुवाकः ॥ ३९ ॥

---

अथ चतुर्थे चत्वारिंशोऽनुवाकः ।

---

कल्पः—"यद्युद्गाता पुरुषः साम न गायेत्, अध्वर्युरेवैतेन साम्नोद्गायेत् । भूर्भुवः सुवरित्यनुवाकेन" इति । पाठस्तु—

भूर्भुवः सुवो भूर्भुवः सुवो भूर्भुवः सुवः ।
भुवोऽद्धायि भुवोऽद्धायि भुवोऽद्धायि । नृम्णायि
नृम्णं नृम्णायि नृम्णं नृम्णायि नृम्णम् ।
निधाय्योऽवायि निधाय्योऽवायि निधाय्योऽवायि । ए अस्मे अस्मे । सुवर्नज्योतीः, इति ।

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके चतुर्थप्रपाठके चत्वारिंशोऽनुवाकः ॥ ४० ॥

एते सर्वे स्तोभविशेषाः । ऋचमन्तरेण स्तोभैरेव स्वरविशिष्टैः साम गायेत् । गानार्था तत्र तत्राऽऽवृत्तिः । भूरादयस्त्रयो लोका इष्टार्थप्रदाः सन्तु । विशेषतो भुवः सकाशादधायि सर्वमिष्टं संपादितम् । नृभिर्मनुष्यैर्मन्यतेऽभीष्टत्वेन स्मर्यत इति नृम्णं सुखम् । नृम्णे सुखे सत्यपि पुनर्नृम्णं सुखमस्तु । निधाय्यो नितरां संधानीयो भागः, अवायि प्राप्तः । गत्यर्थो वातिधातुः । एकारो देवतासंबोधनार्थः हे देवतेऽस्मे अस्मासु सुवर्णज्योतिः सुवर्णसमानं ज्योतिः संपद्यताम् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्ये चतुर्थप्रपाठके चत्वारिंशोऽनुवाकः ॥ ४० ॥

---

१ ग. °म गा° । २ ग. °वोऽधायि भुवोऽधायि भुवोऽधायि । नृ° । ३ ग. °वायि नि° । ४ ग. °वायि नि° । ५ ग. °वायि । ए° । ६ ख. सुवर्ज्योतिः । ग. सुवर्णज्योतिः । ७ ग. प्राप्तम् । ग° ।

अथ चतुर्थे एकचत्वारिंशोऽनुवाकः ।

---

सूत्रेऽवान्तरदीक्षां व्याख्यास्याम इत्युपक्रम्याभिहितम्—"चतस्र औदुम्बरीः समिधो तान्वक्ता अभ्यादधाति पृथिवी समिदित्येतैर्मन्त्रैः" इति । तत्र प्रथमं मन्त्रमाह—

पृथिवी समित् । तामग्निः समिन्धे । साऽग्नि॒ समिन्धे । तामह॒ समिन्धे । सा मा समिद्धा । आयुषा तेजसा । वर्चसा श्रिया । यशसा ब्रह्म-वर्चसेन । अन्नाद्येन समिन्ता॒ स्वाहा, इति ।

पृथिवी देवता सम्यग्दीप्यमानत्वात्समिदित्युच्यते । तां पृथिव्याख्यां समिधम-ग्निर्देवः समिन्धे सम्यग्दीपितवान् । सा च पृथिव्याख्या समिदग्निं देवं समिन्धे सम्यग्दीपयति । तां पृथिवीरूपां समिधमहं समिन्धे सम्यक्प्रकाशयामि । सा च देवता मया समिद्धा सती मामायुरादिभिः समिन्तां सम्यक्प्रकाशयतु । तेजः शरी-रकान्तिः । वर्चो बाह्यदीप्तिः ।

अथ द्वितीयतृतीयमन्त्रावाह—

अन्तरिक्ष॒ समित् (१) । तां वायुः समिन्धे । सा वायु॒ समिन्धे । तामह॒ समिन्धे । सा मा समिद्धा । आयुषा तेजसा । वर्चसा श्रिया । यशसा ब्रह्मवर्चसेन । अन्नाद्येन समिन्ता॒ स्वाहा । द्यौः समित् । तामादित्यः समिन्धे (२) । साऽऽदित्य॒ समिन्धे । तामह॒ समिन्धे । सा मा समिद्धा । आयुषा तेजसा । वर्चसा श्रिया । यशसा ब्रह्मवर्चसेन । अन्नाद्येन समिन्ता॒ स्वाहा, इति ।

पूर्ववद्व्याख्येयौ ।

चतुर्थं मन्त्रमाह—

प्राजापत्या मे समिदसि सपत्नक्षयणी । भ्रातृव्यहा मेऽसि स्वाहा, इति ।

हे समित्त्वं प्राजापत्या प्राजापतिसंबन्धिनी सपत्नक्षयणी वैरिविनाशनी मे

**समिदसि** सम्यग्दीपिकाऽसि । तस्मान्मे मम **भ्रातृव्यहाऽसि** शत्रुघातिनी भवसि स्वाहुतमिदमस्तु ।

कल्पः—"अथ देवता उपतिष्ठते, अग्ने व्रतपते व्रतं चरिष्यामि" इति । पाठस्तु–

**अग्ने व्रतपते व्रतं चरिष्यामि ( ३ ) । तच्छकेयं तन्मे राध्यताम् । वायो व्रतपत आदित्य व्रत पते । व्रतानां व्रतपते व्रतं चरिष्यामि । तच्छकेयं तन्मे राध्यताम् , इति ।**

हे **व्रतपते**ऽवान्तरदीक्षारूपस्य व्रतस्य पालकाग्ने **व्रतमिदमहं चरिष्यामि** । त्वत्प्रसादात्तद्व्रतं कर्तुं **शकेयं** शक्तो भूयासम् । **मे** मदीयं **तद्**व्रतं **राध्यतां** समृद्धिं गच्छतु । **वायो व्रतपत** इत्येतस्मिन्नुत्तरस्मिंश्च व्रतं चरिष्यामीत्यादिकमनुषज्यते एतदर्थमेव चतुर्थमन्त्रे पुनराम्नातम् । व्रतपत इत्युक्तस्य पुनरपि व्रतानामित्युक्तिः कृत्स्नव्रतस्वीकारार्था ।

कल्पः—"आवृत्तैर्मन्त्रैः समिध आधायाऽऽवृत्तैर्देवता उपस्थाय" इति । पाठस्तु–

**द्यौः समित् । तामादित्यः समिन्धे । साऽऽदित्यꣳ समिन्धे । तामहꣳ समिन्धे । सा मा समिद्धा । आयुषा तेजसा ( ४ ) । वर्चसा श्रिया । यशसा ब्रह्मवर्चसेन । अन्नाद्येन समिन्ताꣳ स्वाहा । अन्तरिक्षꣳ समित् । तां वायुः समिन्धे । सा वायुꣳ समिन्धे । तामहꣳ समिन्धे । सा मा समिद्धा । आयुषा तेजसा । वर्चसा श्रिया ( ५ ) । यशसा ब्रह्मवर्चसेन । अन्नाद्येन समिन्ताꣳ स्वाहा । पृथिवी समित् । तामग्निः समिन्धे । साऽग्निꣳ समिन्धे । तामहꣳ समिन्धे । सा मा समिद्धा । आयुषा तेजसा । वर्चसा श्रिया । यशसा ब्रह्मवर्चसेन ( ६ ) । अन्नाद्येन समिन्ताꣳ स्वाहा । प्राजापत्या मे समिदसि सपत्नक्षयणी । भ्रातृव्यहा मेऽसि स्वाहा । आदित्य व्रतपते व्रतमचारिषम् । तदशकं तन्मेऽराधि । वायो व्रतपतेऽग्ने व्रतपते । व्रतानां व्रत-**

---

१ क. ख. हे प्रजाप° । २ ग. °न । अ° ।

पते व्रतमचारिषम्। तदशकं तन्मेऽराधि (७), इति।
समित्समिन्धे व्रतं चरिष्यामि तेजसा श्रियो यशसा
ब्रह्मवर्चसेनाद्यौ च॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके चतुर्थप्रपाठक
एकचत्वारिंशोऽनुवाकः॥ ४१॥

व्रतावसाने कर्तव्यत्वादचारिषमित्यादिभूतार्थवाचिशब्दप्रयोगः। तद्धि चतुर्षु वेदव्रतेषु सौम्यव्रतमित्यभिधीयते। एतस्य प्रवर्ग्याङ्गत्वाभावेऽपि शुक्रियकाण्डोक्तमन्त्रसापेक्षत्वादत्राऽऽम्नातम्। एतच्च सूत्रकारेण दर्शितम्—"अथैनं सर्वेषामनुवाकानां प्रभृतीरभिव्याहारयति, प्रथमोत्तमयोर्वोत्तमेनानुवाकेन शान्तिं कृत्वा" इति॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्ये चतुर्थप्रपाठक एकचत्वारिंशोऽनुवाकः॥ ४१॥

---

अथ चतुर्थे द्विचत्वारिंशोऽनुवाकः।

---

कल्पः—"गामवसृज्य मदन्तीरुपस्पृश्योत्तमेनानुवाकेन शान्तिं कुर्वन्ति, एवं सायं प्रातः प्रवर्ग्योपसद्भ्यां चरन्ति" इति। तस्मिन्ननुवाके प्रथमं मन्त्रमाह—

शं नो वातः पवतां मातरिश्वा शं नस्तपतु सूर्यः। अहानि
शं भवन्तु नः शः रात्रिः प्रतिधीयताम्, इति।

मातरिश्वाऽन्तरिक्षनिवासी वातो नोऽस्माकं शं सुखं यथा भवति तथा पवताम्। सूर्योऽपि तथैव तपतु। अहान्यपि नोऽस्माकं सुखकराणि भवन्तु। रात्रिश्च सुखकरी संपद्यताम्।

द्वितीयं मन्त्रमाह—

शमुषा नो व्युच्छतु शमादित्य उदेतु नः। शिवा नः शंतमा
भव सुमृडीका सरस्वति। मा ते व्योम संदृशि, इति।

उषा देवी नोऽस्माकं सुखकरी प्रभातं करोतु आदित्यश्चास्माकं सुखैकर उदेतु। हे सरस्वति त्वं नोऽस्मान्प्रति शिवाऽनुकूला शंतमाऽतिशयेन सर्वोपद्रवशमनी सुमृडीका सुष्ठु सुखकरी च भव। ते संदृशि तव कटाक्षे सति व्योम सुखशून्यत्वं मा भूत्।

---

१ ग. ॥ ६ ॥ २ घ. °या म° । ३ क. ख. तच्च । ४ क. ख. °खकार्युदे° ।

तृतीयं मन्त्रमाह—

इडा॑यै वास्त्व॑सि वास्तु॒मद्वा॑स्तु॒मन्तो॑ भूयास्म॒ मा वास्तो॑श्छित्स्म

ह्यवास्तुः स भू॑या॒द्यो॑ऽस्मान्द्वेष्टि॒ यं च॑ व॒यं द्वि॒ष्मः, इति ।

हे भूमे त्वमिडायै धेनुरूपाया इडादेव्या वास्त्वसि निवासस्थानमसि । सर्वं जग-त्त्वत्प्रसादाद्वास्तुमन्निवासस्थानयुक्तं भवतु । वयमपि त्वत्प्रसादाद्वास्तुमन्तो निवास-स्थानयुक्ता भूयास्म । वास्तोर्निवासस्थानान्मा छित्स्मै विच्छिन्ना मा भूयास्म । हि यस्माद्वयमेवंविधास्तस्मादस्माकं विपरीतो यो द्वेष्टा यश्च द्वेष्यः सोऽयमवास्तुर्निवास-स्थानरहितो भूयात् ।

अथ चतुर्थं मन्त्रमाह—

प्र॒ति॒ष्ठाऽसि॑ प्रति॒ष्ठाव॑न्तो भूयास्म॒ मा प्र॑ति॒ष्ठाया॑श्छित्स्म

ह्यप्रति॒ष्ठः स भू॑या॒द्यो॑ऽस्मान्द्वे॒ष्टि॒ यं च॑ व॒यं द्वि॒ष्मः, इति ।

प्रतिष्ठाऽऽधारः । अन्यत्पूर्ववत् ।

अथ पञ्चमं मन्त्रमाह—

आ वा॑त वाहि भेष॒जं वि वा॑त वाहि॒ यद्रपः॑ ।

त्वꣳ हि वि॒श्वभे॑षजो दे॒वाना॑ं दू॒त ईय॑से, इति ।

हे वात वायो मे भेषजं यथा भवति तथाऽऽवाहि । अस्मान्प्रति सर्वतो वातं कुरु । हे वात यद्रपः पापमस्ति तद्विवाहि विश्लेष्य गच्छ । यस्मात्त्वं विश्वभेषज इत्नं विश्वस्य चिकित्सको देवानां दूतश्च सन्नीयसे गच्छसि ।

अथ षष्ठं मन्त्रमाह—

द्वावि॒मौ वातौ॑ वात॒ आसिन्धो॒राप॑राव॒तः ( १ ) ।

द॒क्षं॑ मे अ॒न्य आवा॑तु॒ परा॒ऽन्यो वा॑तु॒ यद्रप॑ः, इति ।

इमौ लोके दृश्यमानौ द्वौ वातावासिन्धोः समुद्रसहिते प्रदेश आपरावतो दूर-वर्तिलोकयुक्ते देशे वातः संचरतः । शान्तो वायुरेकस्तीव्रोऽपरः । तयोर्मध्येऽन्य एकः शान्तो मे मम दक्षमावातु सुखं संपादयतु । अन्यस्तीव्रो वायुर्यद्रपो मम यत्पापमस्ति तत्परावातु विनाशयतु ।

अथ सप्तमं मन्त्रमाह—

य॒द्दो वा॑त ते गृ॒हेऽमृत॑स्य नि॒धिर्हि॑तः । ततो॑ नो देहि जी॒वसे॒

१ क. ख. °हरणाहि वि° ।

**ततो नो धेहि भेषजम् । ततो नो मह आवह,** इति ।

हे **वात ते गृहे यददो** योऽसावमृतस्य **निधिर्हितः** स्थापितः, **ततो** निधेः सकाशा-न्नोऽस्माकं **जीवसे** जीवनाय **देहि** कियदप्यमृतं प्रयच्छ । **ततो**ऽमृतान्नोऽस्माकं **भेषजं** दे ( धे ) **हि,** औषधं संपादय । ततस्तस्मान्नोऽस्माकं **मह आवह** तेजः संपादय ।

अथाष्टमं मन्त्रमाह—

**वात आवातु भेषजꣳ शंभूर्मयोभूर्नो**
**हृदे । प्र ण आयूꣳषि तारिषत्,** इति ।

अयं **वातो भेषजं** यथा भवति तथाऽऽवातु । **नो**ऽस्माकं **हृदे** मनसे **शंभू**रनिष्ट-शान्तिं भावयन्**मयोभूः** सुखं च भावयन्वर्तताम् । **नो**ऽस्माक**मायूंषि** चिरकालजीवनानि **प्र**तारिषत्प्रकर्षेण वर्धयतु ।

अथ नवमं मन्त्रमाह—

**इन्द्रस्य गृहोऽसि तं त्वा प्रपद्ये सगुः**
**साश्वः । सह यन्मे अस्ति तेन,** इति ।

अत्रेन्द्रशब्देन परमैश्वर्ययोगादादित्य उच्यते । तथा च ब्राह्मणम्—"असौ वा आदित्य इन्द्र एष प्रजापतिः" इति । हे आदित्यमण्डल त्वामिन्द्रस्य **गृहोऽसि,** आदि-त्यस्य निवासस्थानमसि । तं तादृशमादित्यगृहं त्वां **प्रपद्ये** प्राप्नोमि । कीदृशोऽहम् । **सगु**र्गोसहितः । **साश्वो**ऽश्वसहितः । अन्यदपि **मे** यद्वस्तु विद्यते **तेन सह** त्वां प्रविशामि ।

अथ दशमं मन्त्रमाह—

**भूः प्रपद्ये भुवः प्रपद्ये सुवः प्रपद्ये भूर्भुवः सुवः प्रपद्ये**
**वायुं प्रपद्येऽनार्तां देवतां प्रपद्येऽश्मानमाखणं प्रपद्ये**
**प्रजापतेर्ब्रह्मकोशं ब्रह्म प्रपद्य ॐ प्रपद्ये,** इति ।

**भूः प्रपद्ये** भूर्लोकदेवतां प्रपन्नोऽस्मि । एवमुत्तरत्रापि । यथा व्यस्तानां प्रपत्ति-स्तथा समस्तानामपि प्रपत्तिः । **अनार्ते**त्यनेनाऽऽरोग्यकरी देवतोच्यते । **आखणं** खनि-तुमशक्यम**श्मानं** दृढं पाषाणं **प्रपद्ये** । पाषाणवद्दार्ढ्यं ममास्त्वित्यर्थः । **प्रजापतेः**

---

१ घ. आयुश्षि. २ ग. °नार्तामित्य° । ३ ग. °द्दार्ढ्यमश्मास्त्वित्य° ।

संबन्धि ब्रह्मकोशं सर्वमन्त्राधारभूतं ब्रह्म वेदस्वरूपं प्रपद्ये। ओंकारेण परमात्मो-च्यते, तमपि प्रपद्ये।

अथैकादशं मन्त्रमाह—

**अन्तरिक्षं म उर्वन्तरं बृहदग्नयः पर्वताश्च यया वातः**
**स्वस्त्या स्वस्ति मां तया स्वस्त्या स्वस्ति मानसानि, इति।**

यदिदमन्तरिक्षमस्ति तन्मे मदर्थमुर्वन्तरं विस्तीर्णावकाशो भूयात्। तस्मिन्नन्तरिक्षेऽ-ग्नयो गार्हपत्यादयः पर्वता मेर्वादयश्च बृहदधिकं सुखं यथा भवति तथा वर्तता(न्ता)-मिति शेषः। अत्रान्तारिक्षे संचरन्वातो यया स्वस्त्या क्षेमहेतुभूतया क्रियया मां प्रति स्वस्ति क्षेमं करोतीति शेषः। तया स्वस्त्या क्षेमहेतुभूतया क्रियया मानसा-न्यस्मदीयान्यन्तःकरणानि स्वस्ति क्षेमं प्रापयत्विति शेषः।

अथ द्वादशं मन्त्रमाह—

**प्राणापानौ मृत्योर्मा पातं प्राणापानौ मा मा हासिष्टम्,—इति।**

हे प्राणापानदेवौ मृत्योः सकाशान्मां पातं रक्षतम्। हे प्राणापानौ युवां मा कदाचिदपि मा हासिष्टं मा परित्यजतम्।

अथ त्रयोदशं मन्त्रमाह—

**मयि मेधां मयि प्रजां मय्यग्निस्तेजो दधातु मयि मेधां**
**मयि प्रजां मयीन्द्र इन्द्रियं दधातु मयि मेधां मयि प्रजां**
**मयि सूर्यो भ्राजो दधातु (२), इति।**

ग्रन्थतदर्थधारणशक्तिर्मेधा, प्रजा पुत्रादिः, तेजः शरीरकान्तिः, तत्सर्वमग्निर्मयि संपादयतु। इन्द्रियं चक्षुरादिपाटवम्। भ्राजो दीप्तिजातम्। अन्यत्पूर्ववत्।

अथ चतुर्दशं मन्त्रमाह—

**द्युभिरक्तुभिः परिपातमस्मानरिष्टेभिरश्विना**
**सौभगेभिः। तन्नो मित्रो वरुणो मामहन्ता-**
**मदितिः सिन्धुः पृथिवी उत द्यौः, इति।**

हेऽश्विनौ सौभगेभिः सौभाग्यैः (सौभाग्यापादकैः) सूक्तैरस्मान्पातम् कीदृशैः। द्युभिर्द्योतमानैः। अक्तुभिरञ्जनहेतुघृतादिद्रव्ययुक्तैश्च। अरिष्टेभिर्हि

---

१ ग. 'दशम°। २ ख. °स्तीर्णोऽत्र°। ३ ग. °मं प्रापयति। ४ क. दशम°। ५ °त्यक्षत°।

ाहितैः । नोऽस्माकं तदश्विनोः पालनं मित्रादयो मामहन्तामतिशयेन पूजयन्तु ।
सिन्धुः समुद्रः ।

अथ पञ्चदशं मन्त्रमाह—

कया नश्चित्र आभुवदूती सदावृधः
सखा । कया शचिष्ठया वृता, इति ।

कस्य प्रजापतेः संबन्धिनीत्यस्मिन्नर्थे केति शब्दः स्त्रीलिङ्गो वर्तते । ऊतीशब्दो
ावाची । कयोत्या प्रजापतिसंबन्धिना रक्षणेन चित्र आभुवत्, चित्रोऽयं यज्ञो
ोऽस्मान्प्रत्यागतः । कीदृशो यज्ञः । सदावृधः सर्वदा वर्धमानः । सखा सखि-
त्प्रियतमः । स च यज्ञः कया प्रजापतिसंबन्धिन्या शचिष्ठयाऽतिशयितया शक्त्या
ता वर्तते ।

अथ षोडशं मन्त्रमाह—

कस्त्वा सत्यो मदानां मꣳहिष्ठो मत्स-
दन्धसः । दृढाचिदारुजे वसु, इति ।

हे प्रवर्ग्य त्वां कः प्रजापतिर्मत्सन्मदयतु हर्षयतु । कीदृशः प्रजापतिः । सत्यः
रमार्थभूतः । मदानां हर्षकारणानामायुरादीनामन्धसोऽन्नस्य च मंहिष्ठोऽतिशयेन
र्धयिता । आरुजे सर्वतोऽनिष्टभङ्गार्थं वस्वपेक्षितं धनं दृढाचिद्दृढमेव करो-
त्विति शेषः ।

अथ सप्तदशं मन्त्रमाह—

अभी षु णः सखीनामविता जरि-
तृणाम् । शतं भवास्यूतिभिः, इति ।

हे प्रजापते जरितृणां जरणशीलानां सखीनां सखिवत्प्रियाणां नोऽस्माकं शत-
ूतिभिः शतसंख्याकै रक्षणैः, अभी षु सर्वतः सुष्ठु आविता भवासि रक्षिता भव ।

अथाष्टादशं मन्त्रमाह—

वयः सुपर्णा उपसेदुरिन्द्रं प्रियमेधा ऋषयो
नाधमानाः । अप ध्वान्तमूर्णुहि पूर्धि चक्षुर्मु-
मुग्ध्यस्मान्निधयेव बद्धान् ( ३ ), इति ।

केचिदृषय इन्द्रमुपसेदुः । कार्यार्थं प्राप्तिरुपसत्तिः । कीदृशा ऋषयः । वयः

पक्षिमूर्तिधारिणः । अत एव **सुपर्णाः** शोभनपक्षोपेताः । **प्रियमेधा** अधीतस्य श्रुतस्य धारणशक्तिर्मेधा तस्यां प्रीतियुक्ताः । **नाधमानाः** किंचित्कार्यं याचमानाः । स एव याच्ञाप्रकारः स्पष्टी क्रियते । हे इन्द्र **ध्वान्तम**ज्ञानलक्षणमन्धकार**मपोर्णुहि,** अपसारय । **चक्षु**र्ज्ञानलक्षणां दृष्टिं **पूर्धि** पूरय । **निधयेव** शृङ्खलयेवाज्ञानेन **बद्धानस्मान्मुमुग्धि** तस्मादज्ञानाद्बन्धनान्मोचय ।

अथैकोनविंशं मन्त्रमाह—

शं नो॑ दे॒वीर॒भिष्ट॑य॒ आपो॑ भवन्तु

पी॒तये॑ । शं योर॒भिस्र॑वन्तु नः, इति ।

**आपो** देव्यो **नोऽस्माकमभिष्टये पीतये**ऽभीष्टाय पानाय **शं** सुखहेतवो **भवन्तु** । किं च **नो**ऽस्माकं **शं** सुखं यथा भवति तथा, **यो**र्दुःखवियोगो यथा भवति तथा**ऽभिस्रवन्तु** सर्वतः प्रवहन्तु ।

अथ विंशं मन्त्रमाह—

ईशा॑ना॒ वार्या॑णां॒ क्षय॑न्तीश्चर्षणी॒नाम् ।

अ॒पो याचामि भेषजम्, इति ।

अहमपो देवीः प्रति **भेषजं** पापविनाशकारणमौषधं **याचामि** । कीदृशीरपः **वार्याणां** वरणीयानां कामानामीशाना दातुं समर्थाः । **चर्षणीनां** मनुष्याणां **क्षयन्तीः** निवासहेतुभूता इति ।

अथैकविंशं मन्त्रमाह—

सु॒मि॒त्रा न॒ आप॒ ओष॑धयः सन्तु दु॒र्मि॒त्रास्तस्मै

भूयासु॒र्योऽस्मान्द्वेष्टि॒ यं च॑ व॒यं द्वि॒ष्मः, इति ।

आप **ओषधयश्च**ेत्येता द्विविधा देवता **नोऽ**स्मान्प्रति **सुमित्राः** सुष्ठु स्निग्धाः **सन्तु** । **यो**ऽस्मदीयः शत्रुस्तस्मै **दुर्मित्रा** दुर्हृदया विध्वंसिन्यः **सन्तु** ।

अथ द्वाविंशं मन्त्रमाह—

आपो॒ हि ष्ठा म॑यो॒भुव॒स्ता न॑ ऊ॒र्जे

द॑धातन । म॒हे रणा॑य॒ चक्ष॑से, इति ।

**हि**शब्द एवकारार्थः प्रसिद्धयर्थो वा । हे **आपो** यूयमेव **मयोभुवः स्थ** सुख

---

१ क. °तधा° । २ क. ख. ध्वान्तं स्वाज्ञा° । ३ म. °चामीति । की° । ४ ग. °भूता अ° । ५ ग. °विरोधिनः ।

वयित्र्यो भवत । स्नानपानादिहेतुत्वेन सुखोत्पादकत्वं प्रसिद्धम् । तास्तादृश्यो यूयं ऽस्मानूर्जे रसाय भवदीयरसानुभवार्थं दधातन स्थापयत । किंच महे महते रणाय णीयाय चक्षसे दर्शनीयाय दधातन । अस्मान्परतत्त्वसाक्षात्कारयोग्यान्कुरुतेत्यर्थः ।

अथ त्रयोविंशं मन्त्रमाह—

यो वः शिवतमो रसस्तस्यं भाजय-
तेह नः । उशतीरिव मातरः, इति ।

वो युष्माकं शिवतमः शान्ततमः सुखैकहेतुर्यो रसोऽस्ति, इहास्मिन्कर्मणि ऽस्मांस्तस्य भाजयत रसं प्रापयत । तत्र दृष्टान्तः—उशतीरिव मातर इति । मयमानाः प्रीतियुक्ता मातरो यथा स्वकीयस्तन्यरसं प्रापयन्ति तद्वत् ।

अथ चतुर्विंशं मन्त्रमाह—

तस्मा अरं गमाम वो यस्य क्षयाय
जिन्वथ (४) । आपो जनयथा च नः, इति ।

यस्य रसस्य क्षयाय क्षयेण निवासेन जिन्वथ यूयं प्रीता भवथ तस्मै रसाय वो मानरं गमाम, अलं भृशं प्राप्नुमः । किंच हे आपो यूयं नोऽस्माञ्जनयथ प्रजो- त्पादकान्कुरुत ।

अथ पञ्चविंशं मन्त्रमाह—

पृथिवी शान्ता साऽग्निना शान्ता सा
मे शान्ता शुचꣳ शमयतु, इति ।

येयं पृथिवी देवता सेयं शान्ता सर्वोपद्रवशमनयुक्ता । न केवलं स्वयमेव किं ग्निना देवेन सह शान्ता । तादृशी शान्ता देवता मे मम शुचं शोकं शमयतु न्तं करोतु ।

अथ षड्विंशसप्तविंशौ मन्त्रावाह—

अन्तरिक्षꣳ शान्तं तद्वायुना शान्तं तन्मे
शान्तꣳ शुचꣳ शमयतु । द्यौः शान्ता साऽऽदित्येन[2]
शान्ता सा मे शान्ता शुचꣳ शमयतु, इति ।

पृथिवीमन्त्रवद्व्याख्येयम् ।

१ क. °तरः । का° । २ ग. °ति । अन्तर्यौः शान्ता मन्त्रद्वयं पृ° ।

अथाष्टाविंशं मन्त्रमाह —

पृथिवी शान्तिरन्तरिक्षꣳ शान्तिर्द्यौः शान्तिर्दिशः
शान्तिरवान्तरदिशाः शान्तिरग्निः शान्तिर्वायुः
शान्तिरादित्यः शान्तिश्चन्द्रमाः शान्तिर्नक्षत्राणि
शान्तिरापः शान्तिरोषधयः शान्तिर्वनस्पतयः
शान्तिर्गौः शान्तिरजा शान्तिरश्वः शान्तिः
पुरुषः शान्तिर्ब्रह्म शान्तिर्ब्राह्मणः शान्तिः
शान्तिरेव शान्तिः शान्तिर्मे अस्तु शान्तिः, इति ।

पृथिव्यादयः सर्वदेवता अस्मदनिष्टशमनहेतुत्वाच्छान्तिदेवतारूपाः । ब्रह्म वे
पृथिव्यादीनामुपचरितं शान्तिदेवतारूपत्वम् । या तु शान्त्यभिमानिनी देवता
शान्तिरेव मुख्यमेव तस्याः शान्तित्वम्, अतः सा शान्तिदेवता मे शान्तिरस्तु
निष्टशमनहेतुरस्तु ।

अथैकोनत्रिंशं मन्त्रमाह—

तयाऽहꣳ शान्त्या सर्वशान्त्या मह्यं द्विपदे चतुष्पदे
च शांतिं करोमि शान्तिर्मे अस्तु शांतिः, इति ।

अहं यजमानः सर्वशान्त्या सर्वानिष्टशमनहेतुतया पूर्वोक्तगुणविशिष्टया शान
शान्तिदेवतया मह्यं मच्छरीरार्थं द्विपदे मदीयाय मनुष्यार्थं चतुष्पदे मदीयाय
च शान्तिं सर्वानिष्टशमनं करोमि । अतः शान्तिदेवता मे मदर्थं शान्तिः सर्वा
ष्टशमनहेतुरस्तु ।

अथ त्रिंशं मन्त्रमाह—

एह श्रीश्च ह्रीश्च धृतिश्च तपो मेधा प्रतिष्ठा
श्रद्धा सत्यं धर्मश्चैतानि मोत्तिष्ठन्तमनूत्तिष्ठन्तु
मा माꣳ श्रीश्च ह्रीश्च धृतिश्च तपो मेधा प्रतिष्ठा
श्रद्धा सत्यं धर्मश्चैतानि मा मा हासिषुः, इति ।

श्रीप्रभृतयो धर्मान्ता या देवताः सन्ति, एतानि देवशरीराणीह कर्मसमाप्
त्तिष्ठन्तं मामन्वा समन्तादुत्तिष्ठन्तु । यानि श्रीप्रभृतीनां स्वरूपाण्येतानि मा [
मा हासिषुर्मा परित्यजन्तु । पुनरपि मा मा हासिषुः, द्विरुक्तिरादरार्था ।

अथैकत्रिंशं मन्त्रमाह--

उदायुषा स्वायुषोदोषधीनाꣳ रसेनोत्पर्जन्यस्य शुष्मेणोदस्थाममृताꣳ अनु, इति ।

अहममृतान्देवाननुलक्ष्याऽऽयुरादिविशेषणविशिष्टेन सोमेन सहोदस्थामुत्तिष्ठामि । चिरजीवनमायुः, तत्रापि रोगाद्युपद्रवरहितं स्वायुः । तदुभयप्रदत्वाद्रसस्य तद्रूपत्वम् । ओषधीनां पर्जन्यस्य च रसः सारम् । चतुर्भिर्विशेषणैः पृथक्क्रियापदमन्वेतुं चत्वार उच्छब्दाः ।

अथ द्वात्रिंशं मन्त्रमाह--

तच्चक्षुर्देवहितं पुरस्ताच्छुक्रमुच्चरत् । पश्येम शरदः शतं जीवेम शरदः शतं नन्दाम शरदः शतं मोदाम शरदः शतं भवाम शरदः शतꣳ शृणवाम शरदः शतं प्रब्रवाम शरदः शतमजीताः स्याम शरदः शतं ज्योक्च सूर्यं दृशे, इति ।

पुरस्तात्पूर्वस्यां दिश्युच्चरदुदयं गच्छच्छुक्रं ज्योतिःस्वरूपं देवहितं सर्वेभ्यो देवेभ्यो हितकारि चक्षुर्दृष्टेरनुग्राहकं तदादित्यमण्डलं शरदः शतं शतसंख्याकान्संवत्सरान्सर्वदा पश्येम । तत्प्रसादाज्जीवनादिव्यापारांश्च प्राप्नवाम । नन्दाम द्रव्यैः समृद्धा भूयास्म । मोदाम तद्भोगेन हृष्टाः स्म । भवाम स्वस्थाने निवसाम । शृणवाम वेदशास्त्ररहस्यं गुरुमुखादवगच्छाम । प्रब्रवाम शिष्येभ्यः प्रकर्षेण कथयाम । अजीताः शत्रुणा केनाप्यजिताः । किंच ज्योग्दीर्घं कालं सूर्यं दृशे द्रष्टुं समर्था भूयास्म ।

अथ त्रयस्त्रिंशं मन्त्रमाह--

य उदगान्महतोऽर्णवाद्विभ्राजमानः सरिरस्य मध्यात्स मा वृषभो लोहिताक्षः सूर्यो विपश्चिन्मनसा पुनातु, इति ।

यः सूर्यो महतः प्रौढादर्णवात्पूर्वसमुद्रात्तत्रापि विशेषतः सरिरस्य जलस्य मध्याद्विभ्राजमानो विशेषेण दीप्यमान उदगादुदयं गच्छति, स सूर्यो मनसा मां पुनातु शोधयतु । कीदृशः सूर्यः । वृषभः कामानां वर्षयिता । लोहिताक्षो रक्तवर्णाक्षियुक्तः । विपश्चित्सर्वज्ञः ।

१ घ. शे ॥ ५ ॥ २ क. ख. स्थले । ३ ख. ग. °गच्छेम ।

अथ चतुस्त्रिंशं मन्त्रमाह—

ब्रह्मणः श्रोतन्यसि ब्रह्मण आणी स्थो ब्रह्मण आव-
पनमसि धारितेयं पृथिवी ब्रह्मणा मही धारितमेनेन
महदन्तरिक्षं दिवं दाधार पृथिवीꣳ सदेवां यदहं
वेद तदहं धारयाणि मा मद्वेदोऽधि विस्रसत्, इति ।

अत्र वेदः संबोध्यते । हे श्रुते त्वं ब्रह्मणः परमात्मवस्तुनः श्रो(श्रो)तनं श्र(स्र)वणहेतुभूताऽसि ब्रह्मतत्त्वं बोधयसीत्यर्थः । हे मदीये श्रोत्रे युवां ब्रह्मणो वेदस्याऽऽणी स्थो नेतृणी भवथः, वेदं शृणुथ इत्यर्थः । हे मनो * ब्रह्मणो वेदस्याऽऽवपनं धारणस्थानमसि । इयं मही महती पृथिवी ब्रह्मणा वेदप्रतिपाद्येन परमात्मना धारिता । महत्प्रौढमन्तरिक्षमेनेन परमात्मना धारितम् । पृथिवीं विस्तीर्णां सदेवां देवसहितां दिवं दाधार परमात्मा धृतवान् । यत्परमात्मतत्त्वं तत्प्रतिपादकं वेदवाक्यं वाऽहं यजमानो वेद जानामि । तदुभयमहं सर्वदा मनसि धारयाणि । स वेदो मन्मत्तः सकाशादध्याधिक्येन मा विस्रसत्, विस्रस्तो मा भूत् ।

अथ पञ्चत्रिंशं मन्त्रमाह—

मेधामनीषे माऽऽविशताꣳ समीची भूतस्य भव्य-
स्यावरुद्ध्यै सर्वमायुरयाणि सर्वमायुरयाणि, इति ।

मेधा धारणशक्तिः, मनीषा ग्रहणशक्तिः, ते उभे समीची अनुकूले सत्यौ मा यजमानमाविशतां सर्वतः प्रविशताम् । किमर्थम् । भूतस्य पूर्वमधीतस्य भव्यस्याध्येष्यमाणस्य चावरुद्ध्यै स्वीकारार्थम् । एतत्सिद्ध्यर्थमेव सर्वमायुरयाणि प्राप्नवानि । द्विरुक्तिरादरार्था ।

अथ षट्त्रिंशं मन्त्रमाह—

आभिर्गीर्भिर्यदतो न ऊनमाप्यायय हरिवो वर्धमानः । यदा
स्तोतृभ्यो महि गोत्रा रुजासि भूयिष्ठभाजो अध ते स्याम, इति ।

हे हरिवोऽश्वयुक्तेन्द्राऽऽभिर्गीर्भिरस्मदीयस्तुतिभिर्वर्धमानस्त्वमतोऽस्मत्कर्मण ऊनमङ्गं नोऽस्मदर्थमाप्याययाभिवर्धय । यदा यस्मिन्काले स्तोतृभ्यः स्तोत्रनुप्र-

* एतदन्तो ग्रन्थो भाष्ये त्रुटितः क. ख. पुस्तकयोः ।

१ ग. °ह्मणश्रोत° ।

हार्थं माहि गोत्रा महतो मेघान्रुजासि भग्नान्करोषि । अथ तदा वयं ते तवानुग्रहाद्भूयिष्ठभाजः स्याम प्रभूतधनानां लब्धारो भूयास्म ।

अथ सप्तत्रिंशं मन्त्रमाह—

ब्रह्म प्रावादिष्म तन्नो मा हासीत् । ॐ

शान्तिः शान्तिः शान्तिः (५[1]), इति ॥

परावतो दधातु बद्धाञ्जिन्वथं दृशे सप्त च ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके चतुर्थप्रपाठके द्वाचत्वारिंशोऽनुवाकः ॥ ४२ ॥

एवमुक्तेन प्रकारेण ब्रह्म परमात्मप्रतिपादकमन्त्रजातं प्रावादिष्म प्रकर्षेण वयं कथितवन्तः । तद्ब्रह्मतत्त्वं तस्य प्रतिपादकं वाक्यं च नोऽस्मान्मा हासीत्, कदाचिदपि मा परित्यजतु । हे प्रणवप्रतिपाद्य परमात्मन्, आध्यात्मिकानां ज्वरशिरोव्यथादिकृतानां विघ्नानां शान्तिरस्तु आधिभौतिकानां चोरव्याघ्रादिकृतानां विघ्नानां शान्तिरस्तु । आधिदैविकानां यक्षराक्षसादिकृतानां विघ्नानां शान्तिरस्तु ।

अथ नमो वाच इत्यारभ्य शं नो वातः पवतामित्यन्तैरनुवाकैः संपाद्यं प्रवर्ग्यं स्तोतुं तस्य प्रवर्ग्यस्य नामानि दर्शयति—

प्रजापतिः संभ्रियमाणः । सम्राट्संभृतः । घर्मः प्रवृक्तः ।
महावीर उद्वासितः । असौ खलु वावैष आदित्यः ।
यत्प्रवर्ग्यः । स एतानि नामान्यकुरुत, इति ।

( प्रपा० ५ । अनु० ११ । विभा० १ )

अस्य प्रवर्ग्यस्य तत्तदवस्थाभेदेन प्रजापत्यादीनि नामानि संपद्यन्ते । यदा मृद्वराहविहतवल्मीकवपादिसंभारैः संभ्रियमाणत्वदशापन्नो भवति तदा प्रजापतिरित्येतस्य नाम । सर्वात्मना संभृतत्वदशापन्नस्य सम्राडिति नाम । प्रवृञ्जनदशापन्नस्य घर्म इति नाम । उद्वासनदशापन्नस्य महावीर इति नाम । एताभिर्दशाभिरवस्थावद्यत्स्वरूपं तेन रूपेणाऽऽदित्य इति नाम । स प्रवर्ग्य एवमेतानि नामान्यकुरुत संपादितवान् ।

नामवेदनं प्रशंसति—

य एवं वेद । विदुरेनं नाम्ना, इति ।

( प्रपा० ५ । अनु० ११ । विभा० २ )

देवदत्तोपाध्याय इत्येवं तदीयं नाम सर्वैर्ज्ञातं भवति ।

---

१ घ. ॥ ६ ॥ । २ क. ख. ग. ज्वरादिशि° । ३ क. ग. °त्यादिना° । ४ ख. °णद° । ५ ग. °त्येवास्य । ६ ख. °तद° । ७ क. ख. प्रवर्ग्यं ।

अथ नामविशेषव्यवहारप्रदर्शनेन प्रशंसति—

ब्रह्मवादिनो वदन्ति (१)। यो वै वसीयाꣳसं यथानामसुपचरति। पुण्यार्तिं वै स तस्मै कामयते। पुण्यार्तिमस्मै कामयन्ते। य एवं वेद। तस्मादेवं विद्वान्। घर्म इति दिवाऽऽचक्षीत। सम्राडिति नक्तम्। एते वा एतस्य प्रिये तनुवौ। एते अस्य प्रिये नामनी। प्रिययैवैनं तनुवा (२)। प्रियेण नाम्ना समर्धयति। कीर्तिरस्य पूर्वा गच्छति जनतामायतः, इति।

(प्रपा० ५। अनु० ११। विभा० ३)

**यो वै** यः कोऽपि पुमान्भृत्यो **वसीयाꣳसम**तिशयेन वसुमन्तं धनिकं राजानममात्यादिकं वा **यथानामं** तदीयं नामानतिक्रम्य नामकरणकाले संपादितेनैव नाम्नो**पचरति,** अधिपते स्वामिन्नित्यादिशब्दैर्विना भो देवदत्तेत्यादिकेनैव मुख्येन नाम्ना तमाह्वयति। **स** भृत्य**स्तस्मै** धनिकाय **पुण्यार्तिं वै** भाग्यहानिमेव **कामयते**। उत्तमोपचारयोग्ये नीचव्यवहारात्। अथवा **स** धनिको राजादि**स्तस्मै** स्वाभाविकनाम्ना व्यवहरते भृत्याय **पुण्यार्तिं** धनादिहानिं **कामयते** दण्डयितुमिच्छति। न केवलं राजादिरेव किंतु **यो** मूढ **एवं वेद** स्वाभाविकनाम्नैव व्यवहारं निश्चिनोति, अस्मै मूढाय राजादिप्रभुपारिसरवर्तिनः सर्वेऽपि पुरुषाः **पुण्यार्तिं** ताडनधनहान्यादिकं **कामयन्ते**। एवं **ब्रह्मवादिन** आहुः। यस्मादेवं **तस्मादेवं विद्वा**न्नामान्तरेणैव प्रभुर्व्यवहरणीय इत्येवं जानन्पुरुषः प्रवर्ग्यं प्रत्यहनि **घर्म इ**ति नाम्ना व्यवहरेत्। रात्रौ तु **सम्राडिति नाम्ना**। तत्र घर्मशब्देनोच्यमाना दीप्यमाना या तनूः सम्राट्शब्देनोच्यमाना सम्यग्राजमाना या तनूरेते उभे अप्येत**स्य** प्रवर्ग्यस्य **प्रिये** शरीरे। अस्य घर्मसम्राट्शब्दरूपे **अस्य** प्रवर्ग्यस्य **प्रिये नामनी**। तस्मादेताभ्यां शब्दाभ्यां व्यवहरन्पुरुषः **प्रिययैव तनुवा** देवादिरूपेण **प्रियेण** च **नाम्ना** तच्छरीरोचितेनैव प्रवर्ग्यं समृद्धं करोति। तथा सति **जनतामायतो** जनसमूहं सभां प्रत्यागच्छतो**ऽस्य** घर्मादिनामभिर्व्यवहारिणः पुरुषस्य **कीर्तिः पूर्वा**ऽस्मादपि पुरुषात्पूर्वभाविनी **गच्छति**। अस्य पुरुषस्याऽऽगमनात्प्रागेव सर्वेऽपि सभानिष्ठा यतचित्ता(त्तोऽ)भिज्ञोऽयं महात्मेत्येवमेनं प्रशंसन्ति।

घर्मादिनामविशेषद्वारा प्रवर्ग्यस्य प्रशंसां कृत्वा गायत्रीछन्दोगतसंख्यासाम्येनापि प्रशंसति—

गायत्री देवेभ्योऽपाक्रामत्। तां देवाः प्रवर्ग्येणैवानुव्यभवन्। प्रवर्ग्येणाऽऽप्नुवन्। यच्चतुर्विꣳशतिकृत्वः प्रवर्ग्यं

१ क. ख. °रणे पुरु°। २ ग. °ष्ठा जना रुचिताभि°। ३ क. ख. °भिज्ञायं°।

प्रवृणक्ति । गायत्रीमेव तदनु विभवति । गायत्रीमा-
प्नोति । पूर्वाऽस्य जनं यतः कीर्तिर्गच्छति, इति ।

( प्रपा० ५ । अनु० ११ । विभा० ४ )

पुरा कदाचिदपरक्ता सती गायत्री देवी देवेभ्यः सकाशादपाक्रामत् । तदा देवाः प्रवर्ग्यमनुष्ठाय तेनैव प्रवर्ग्येण तां गायत्रीमन्वभवन्, अन्वेष्टुं विभवः समर्था अभवन् । अन्विष्य च तेन प्रवर्ग्येण तां गायत्रीं प्राप्नुवन् । अतो यदि द्वादशसु दिनेष्वेकैकस्मिन्दिने द्विर्द्विरित्येवं चतुर्विंशतिकृत्वः प्रवर्ग्यमनुतिष्ठेत्, तत्तदा गायत्रीमेवानुगन्तुं समर्थो भवति । चतुर्विंशतिसंख्याया गायत्र्यक्षरानिदत्वात् । अतः संख्यासामान्याद्गायत्रीं प्राप्नोति । जनं यतः सभां गच्छतोऽस्य चतुर्विंशतिवारं प्रवर्ग्यानुष्ठायिनः पुरुषस्य कीर्तिस्तस्मादपि पूर्वभाविनी सती सभां प्राप्नोति ।

पुनरपि प्रकारान्तरेणावस्थाविशेषगतैर्नामभिः प्रशंसति—

वैश्वदेवः सꣳसन्नः ( ३ ) । वसवः प्रवृक्तः । सोमोऽ-
भिकीर्यमाणः । आश्विनः पयस्यानीयमाने । मारुतः
क्वथन् । पौष्णं उदन्तः । सारस्वतो विष्यन्दमानः । मैत्रः
शरो गृहीतः । तेज उद्यतो वायुः । ह्रियमाणः प्रजा-
पतिः । हूयमानो वाग्घुतः ( ४ ) । असौ खलु वावैष
आदित्यः । यत्प्रवर्ग्यः । स एतानि नामान्यकुरुत, इति ।

( प्रपा० ५ । अनु० ११ विभा० ५ )

संसन्नः सम्यगासादनदशां प्राप्तो यः प्रवर्ग्यस्तस्य वैश्वदेव इति नाम, तेन हि विश्वे देवास्तुष्यन्ति । प्रवृञ्जनदशोपन्नस्य वसव इति नाम, वसूनां प्रीतिहेतुत्वात् । प्रवृञ्जने सति पात्रस्यान्तेर इतस्ततश्चलनमभिकीर्यमाणत्वं तद्दशापन्नस्य सोम इति नाम, सोमप्रीतिहेतुत्वात् । आनीयमानक्षीरत्वदशापन्नस्याऽऽश्विन इति नाम, तेन ह्याश्विनौ प्रीयेते । पयसा सह क्वथनदशापन्नस्य मारुत इति नाम । पात्रस्यान्तपर्यन्तमुद्गमनमुदन्तः, तदवस्थापन्नस्य पौष्ण इति नाम । पात्रादप्युन्नततत्वं विष्यन्दनं तद्दशापन्नस्य सारस्वत इति नाम । पचनबाहुल्येन घनीभावात्प्रतीयमानः शरः शराकारप्राप्तदशापन्नस्य मैत्र इति नाम । शफाभ्यां खरादुद्यमनदशापन्नस्य तेज इति नाम । आहवनीयं प्रति ह्रियमाणत्वदशापन्नस्य वायुरिति नाम । आहवनीये हूयमानत्वदशापन्नस्य प्रजापतिरिति नाम । हुतत्वदशापन्नस्य वागिति नाम । इत्येताभिर्दशा-

१ ख. °शतिकृ° । २ घ. °द्गमुद्द° । ३ क. ग. 'विष्यन्द° । ४ क. ख. °शायां तस्य । ख. °न्तरे निवसतश्चल° । ६ ग. °रद° । ७ क. °त्वं निष्य° । ८ ग. विष्यन्द° । ९ क. ख. । पाकेन घ° । १० ख. ग. °भाववत्प्र° । ११ ग. °म एता° ।

भिरवस्थावान्यः प्रवर्ग्यस्तस्याऽऽदित्य इति नाम । स प्रवर्ग्य एवं तत्तद्देवताप्रीतिहेतुत्वात्स्वस्यैतानि नामान्यकुरुत संपादितवान् ।

नामवेदनं प्रशंसति—

य एवं वेद । विदुरेनं नाम्ना, इति ।

( प्रपा० ५ । अनु० ११ । विभा० ६ )

अथ प्रश्नोत्तराभ्यां *मृन्मयस्य महावीरस्य होमसाधनत्वमुपपादयति—

ब्रह्मवादिनो वदन्ति । यन्मृन्मयमाहुतिं नाश्नुतेऽथ । कस्मादेषोऽश्नुत इति । वागेष इति ब्रूयात् । वाच्येव वाचं दधाति (५) । तस्मादश्नुते, इति ।

( प्रपा० ५ । अनु० ११ । विभा० ७ )

दारुमयस्य होमसाधनत्वं सर्वत्र दृष्टं न तु क्वचिदपि मृन्मयस्य । अत एव साकंप्रस्थायीयप्रकरणे समाम्नायते—"दारुपात्रेण जुहोति नहि मृन्मयमाहुतिमानशे" इति एवं सत्यत्र कस्मात्कारणादेव महावीर आहुतिसाधनत्वं प्राप्नोतीति ब्रह्मवादिनां प्रश्नः तत्राभिज्ञः पुरुषो वागेष इत्युत्तरं ब्रूयात् । एष महावीरो मन्त्रैर्निष्पादितत्वाद्वागात्मकः । अतोऽनेन होमे सति [1]वाचि मन्त्रनिष्पन्ने महावीर एव वाचं मन्त्रनिष्पादितामाहुतिं संपादयति । तस्मात्कारणान्मृन्मयोऽप्ययं महावीर आहुतिमर्हति ।

प्रकारान्तरेण द्वादशधा विभागमुपजीव्य प्रशंसति—

प्रजापतिर्वा एष द्वादशधा विहितः । यत्प्रवर्ग्यः । यत्प्रागवकाशेभ्यः । तेन प्रजा असृजत । अवकाशैर्देवासुरानसृजत । यदूर्ध्वमवकाशेभ्यः । तेनान्नमसृजत । अन्नं प्रजापतिः । प्रजापतिर्वावैषः ( ६ ), इति ।

( प्रपा० ५ । अनु० ११ । विभा० ८ )

वदन्ति तनुवा स॰सन्नो हूयमानो वाग्घुतो दधात्येषः ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके पञ्चमप्रपाठक एकादशोऽनुवाकः ॥ ११ ॥

योऽयं प्रवर्ग्यः स एष द्वादशधा विभक्तः प्रजापतिरेव । तत्कथमिति तदुच्यते । अवकाशमन्त्रेभ्यः प्राचीनो यो भागस्तेन भागेन प्रजापतिः प्रजाः सृष्टवान् अपश्यं गोपामित्यनुवाके समाम्नाता दश मन्त्रा अवकाशनामकाः[2] । एतच्च तद्ब्राह्मणे समाम्नातम्—"नवैतेऽवकाशा भवन्ति पत्निये दशमः" इति । नमो युञ्जत इत्यादिभिः षड्भिरनुवाकैरुक्तो मन्त्रसमूहोऽवकाशेभ्यः प्राचीनो भागस्तेन प्रजासृष्टिः । अव

* अत्राग्रे च ग. पुस्तके मृण्मयेतिमूर्धन्यवाटेन एव पाठ उपलभ्यते ।

१ ग. वाचो । २ क. ग. °काः । ततश्च तद्ब्रा°

ाख्यैस्तु दशभिर्मन्त्रैर्देवासुरानसृजत देवस्य त्वा सवितुः प्रसव इत्यादिकोऽव-
ाशेभ्य ऊर्ध्वो मन्त्रभागः, तेन प्रजापतिरन्नमसृजत । एवं पूर्वोत्तरभागौ द्वौ, मध्ये
शावकाशा इति द्वादशप्रकारो मन्त्रसंग्रहः प्रजापतिस्वरूपः । अन्नं च प्रजापति
ष्टत्वात्प्रजापतिस्वरूपम् । तादृशः प्रजापतिरेवैष प्रवर्ग्यरूपः । एवमस्य प्रशस्तत्वं
ष्टव्यम् ।

अथ दिनविशेषेषु फलविशेषकथनेन प्रवर्ग्यं प्रशंसति—

सविता भूत्वा प्रथमेऽहन्प्रवृज्यते । तेन कामाꣳ एति ।
यद्द्वितीयेऽहन्प्रवृज्यते । अग्निर्भूत्वा देवानेति । यत्तृ-
तीयेऽहन्प्रवृज्यते । वायुर्भूत्वा प्राणानेति । यच्चतुर्थेऽह-
न्प्रवृज्यते । आदित्यो भूत्वा रश्मीनेति । यत्पञ्चमेऽह-
न्प्रवृज्यते । चन्द्रमा भूत्वा नक्षत्राण्येति ( १ ) ।
यत्षष्ठेऽहन्प्रवृज्यते । ऋतुर्भूत्वा संवत्सरमेति । यत्स-
प्तमेऽहन्प्रवृज्यते । धाता भूत्वा शक्वरीमेति । यदष्टमेऽ-
हन्प्रवृज्यते । बृहस्पतिर्भूत्वा गायत्रीमेति । यन्नवमेऽ-
हन्प्रवृज्यते । मित्रो भूत्वा त्रिवृत इमाꣳल्लोकानेति । यद्द-
शमेऽहन्प्रवृज्यते । वरुणो भूत्वा विराजमेति ( २ ) ।
यदेकादशेऽहन्प्रवृज्यते । इन्द्रो भूत्वा त्रिष्टुभमेति । यद्-
द्वादशेऽहन्प्रवृज्यते । सोमो भूत्वा सुत्यामेति, इति ।

( प्रपा० ९ । अनु० १२ । विभा० १ )

प्रथमे दिवसे प्रवृज्यत इति यत्तेनानुष्ठानेनायं सवितृदेवो भूत्वा कामान्प्राप्नोति ।
मुत्तरेष्वपि वाक्येषु योजनीयम् ।

द्वादशादिनात्मकं प्रशस्योपसद्भ्यः प्राचीनप्रतीचीनकालानुष्ठाने प्रशंसति—

यत्पुरस्तादुपसदां प्रवृज्यते । तस्मादितः पराङ-
मूꣳल्लोकाꣳस्तपन्नेति । यदुपरिष्टादुपसदां प्रवृज्यते ।
तस्मादमुतोऽर्वाङिमाꣳल्लोकाꣳस्तपन्नेति, इति ।

( प्रपा० ९ । अनु० १२ । विभा० २ )

प्रवर्ग्य आदित्यस्वरूपः । उपसदो लोकस्वरूपाः । तथा सति प्रतिदिनं प्रवर्ग्या-
ानात्पश्चादुपसदोऽनुष्ठानादादित्योऽधोभागवर्ती पराङूर्ध्वाभिमुखः सन्नितोऽप्युपरि-
ानमूꣳस्वर्गादिलोकांस्तपन्नेति प्रकाशयन्संचरति । तथा पूर्वपूर्वदिनगतेभ्य उपसद्भ्य
रोत्तरदिनगतः प्रवर्ग्य उपरिष्टाद्वर्तते । तस्मादसावादित्य ऊर्ध्वलोकवर्ती सन्नमुतोऽ-
स्वर्गलोकादधोमुखो भूत्वेमान्भूरादीꣳल्लोकान्प्रकाशयन्संचरति ।

---

१ क. ख. °सुरांश्चासृ° । २ ग. मध्यदेशोऽवकाश इ° । ३ क. ख. °वृजन । ४ क. °नहा° । ५ क. ज. °यन्य च° ।

वेदनं प्रशंसति—

य एवं वेद । ऐव तपति ( ३ ), इति ।

( प्रपा० ९ । अनु० १२ । विभा० ३ )

नक्षत्राण्येति विराजमेति तपति ।

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके पञ्चमप्रपाठके द्वादशोऽनुवाकः ॥ १२ ॥

देवा वै सत्रꣳ सावित्रं परिश्रिते ब्रह्मन्प्रचरिष्यामोऽ-
ग्निष्ठा शिरो ग्रीवा देवस्य रशनां विश्वा आशा घर्म या ते
प्रजापतिꣳ शुक्रं प्रजापतिः संभ्रियमाणः सविता द्वादश ( १२ )।

देवा वै सत्रꣳ स खदिरः परिश्रितेऽभिपूर्वमथो
रक्षसां ग्रैष्मावेव ब्रह्म वै देवानामश्विना घर्मं
प्राणो वा इन्द्रतमोऽग्निर्वृषा हरिर्यो वै वसीयाꣳसं
यथानाममष्टोत्तरशतम् ( १०८ ) ।

शं नः०तन्नो मा हासीत् ।

ॐ शान्तिः शान्तिः शान्तिः ।

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके पञ्चमप्रपाठकः समाप्तः ।

हरिः ॐ

यः पुमानेवमुक्तेन प्रकारेण प्रवर्ग्यस्याधस्तादुपरिष्टाच्चावस्थानं जानाति सोऽयं सर्वतः प्रकाशि(शी)त एव । तदेवं ब्राह्मणगताभ्यामेका*दशद्वादशानुवाकाभ्यां द्विचत्वारिंशदनुवाकोक्तमन्त्रैरनुष्ठेयः प्रवर्ग्यः प्रशस्तः ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्ये चतुर्थप्रपाठके द्विचत्वारिंशोऽनुवाकः ॥ ४२ ॥

नमो युञ्जते वृष्णो अश्वस्य ब्रह्मन्प्रवर्ग्येण ब्रह्मन्प्रच[१] (इति) ष्यामो
दश प्राचीरपश्यं गोपां देवस्य समुद्रायेषे पीपिहि घर्म या ते
महीनां चत्वार्यस्कान्या पुरस्तात्सप्त सप्त प्राणाय त्रीणि पूष्णे
चत्वार्युदस्यैकादश यास्ते सप्ताग्निर्ध्रुवः सीदैकोनविꣳशतिर्भूरूर्ध्व-
स्त्रिꣳशदूर्मायि षोडश यास्ते घोरा नव स्निक्चाष्टौ धुनिश्च द्वे
उग्रश्च त्रीण्यहोरात्रे पञ्च खट्त्रीणि विगाः सप्तदशासृङ्मुखश्च-
त्वारि यदेतदद्रुक्सः पञ्च यदीषितश्चत्वारि दीर्घमुखि त्रीणीत्था
चत्वारि यदेतद्भूतानि षट्प्रसार्थ त्रीण्यत्रिणा दशाऽऽहरावद्य

* अत्राऽऽदर्शपुस्तकेषु "एकादशद्वादशानुवाकगताभ्याम्" इत्येव पाठ उपलभ्यते

१ क. ख. °ष्याद्याऽव° ।

ब्रह्मणा षट्षड्डत्तदाष्टौ भूः षट्पृथिव्यष्टषष्टिः शं नः सप्तपञ्चाश-द्विचत्वारिंशत् ।

नमो युञ्जते *ब्रह्मन्प्रवर्ग्येण मयि रुगन्तरिक्षेण घर्म या ते प्राणाय त्रिवचेत्था दक्षं मे पञ्चाशीतिः ॥ ८५ ॥

नमो वाचे या चोदिता या चानुदिता तस्यै वाचे नमो नमो वाचे नमो वाचस्पतये नम ऋषिभ्यो मन्त्रकृद्भ्यो मन्त्रपतिभ्यो मा मामृषयो मन्त्रकृतो मन्त्रपतयः परादुर्माऽ-हमृषीन्मन्त्रकृतो मन्त्रपतीन्परादां वैश्वदेवीं वाचमुद्यास॰ शिवामदस्तां जुष्टां देवेभ्यः शर्म मे द्यौः शर्म पृथिवी शर्म विश्वमिदं जगत् । शर्म चन्द्रश्च सूर्यश्च शर्म ब्रह्मप्रजापती । भूतं वदिष्ये भुवनं वदिष्ये तेजो वदिष्ये यशो वदिष्ये तपो वदिष्ये ब्रह्म वदिष्ये सत्यं वदिष्ये तस्मा अहमिदमुपस्तरण-मुपस्तृण उपस्तरणं मे प्रजायै पशूनां भूयादुपस्तरणमहं प्रजायै प॰ सिं भूयासं प्राणापानौ मृत्योर्मा पातं प्राणा-पानौ मा मा हासिष्टं मधु मनिष्ये मधु जनिष्ये मधु वक्ष्यामि मधु वदिष्यामि मधुमतीं देवेभ्यो वाचमुद्यास॰

* ब्रह्मन्प्रचरिष्यामोऽपश्यं गोपां समुद्राय वयमनुक्रामाम पूष्णे धुनिश्च यदेतद्भू-ानि तच्छंकेयमष्टाशीतिः ॥ ८८ ॥ इति पाठो ग. पुस्तके ।

१ ग. °तुं पु° ।

शुश्रूषेण्यां मनुष्येभ्यस्तं मा देवा अवन्तु शोभायै पितरोऽनुमदन्तु ।

ॐ शान्तिः शान्तिः शान्तिः ।

हरिः ॐ ।

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके चतुर्थप्रपाठकः समाप्तः ॥ ४ ॥

चतुर्थपञ्चमाभ्यां प्रपाठकाभ्यां प्रपञ्चितः ।
मन्त्रब्राह्मणरूपाभ्यां प्रवर्ग्योऽयमशेषतः ॥
वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्वीरबुक्कणसाम्राज्यधुरंधरश्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्ये चतुर्थप्रपाठकः समाप्तः ॥ ४ ॥



चतुर्थप्रपाठकेन सह पञ्चमप्रपाठकोऽपि समाप्तः ।

अथ कृष्णयजुर्वेदीयतैत्तिरीयारण्यके पञ्चमप्रपाठकस्याऽऽरम्भः ।

तत्र प्रथमोऽनुवाकः ।

हरिः ॐ ।

*शं नः० तन्नो मा हासीत् ।

ॐ शान्तिः शान्तिः शान्तिः ।

ॐ देवा वै सत्रमासत । ऋद्धिपरिमितं यशस्कामाः । तेऽब्रुवन् । यन्नः प्रथमं यश ऋच्छात् । सर्वेषां नस्तत्सहासदिति । तेषां कुरुक्षेत्रं वेदिरासीत् । तस्यै खाण्डवो दक्षिणार्ध आसीत् । तूर्घ्नमुत्तरार्धः । परीणज्जघनार्धः । मरव उत्करः (१) । तेषां मखं वैष्णवं यश आर्च्छत्(१+)

तन्न्यकामयत । तेनापाक्रामत् । तं देवा अन्वायन् । यशोऽवरुरुत्समानाः । तस्यान्वागतस्य । सव्याद्धनुरजायत । दक्षिणादिषवः । तस्मादिषुधन्वं पुण्यजन्म । यज्ञजन्मा हि (२) । तमेकꣳ सन्तम् । बहवो नाभ्यधृष्णुवन् । तस्मादेकमिषुधन्विनम् । बहवोऽनिषुधन्वा नाभिधृष्णुवन्ति (२) ।

सोऽस्मयत् । एकं मा सन्तं बहवो नाभ्यधर्षिषुरिति । तस्य सिष्मियाणस्य तेजोऽपाक्रामत् । तद्देवा ओषधीषु न्यमृजुः । ते श्यामाका अभवन् । स्मयाका वै नामैते (३) । तत्स्मयाकानाꣳ स्मयाकत्वम् । तस्माद्दीक्षितेनापिगृह्य स्मेतव्यम् । तेजसो धृत्यै (३) ।

* चतुर्थप्रपाठकस्यान्तिमोऽनुवाक एतत्प्रपाठकस्य शान्तिरिति बोध्यम् । अत्र विस्तराय तदाद्यन्तौ लिखितौ । +. लब्धायसाक्षरैर्मुद्रितोऽयमङ्कश्चतुर्थप्रपाठकेन सहैतद्व्याख्यानावसरे भाष्यकृत्कृतानामेतत्प्रपाठकस्थतत्तदनुवाकवाक्यविभागानां संकेतः । चतुर्थप्रपाठके मुद्रितमेतत्प्रपाठकमूलमप्यनेनाङ्केनान्वितमस्ति ।

१ प्रथमविभागस्य भाष्यं २१९ पृष्ठे द्रष्टव्यम् ।

२ द्वितीयविभागस्य भाष्यं २१९ पृष्ठे द्रष्टव्यम् ।

३ तृतीयविभागस्य भाष्यं २२० पृष्ठे द्रष्टव्यम् ।

स धनुः प्रतिष्कभ्यातिष्ठत्। ता उपदीका अब्रुवन्वरं वृणामहै। अथ व इमꣳ रन्धयाम। यत्र क्व च खनाम। तदपोऽभितृणदामेति। तस्मादुपदीका यत्र क्व च खनन्ति। तदपोऽभितृन्दन्ति (४)। वारं ह्यासाम्। तस्य ज्यामप्यादन्। तस्य धनुर्विप्रवमाणꣳ शिर उदवर्तयत्। तद्द्यावापृथिवी अनुप्रावर्तत। यत्प्रावर्तत। तत्प्रवर्ग्यस्य प्रवर्ग्यत्वम्। यद्घ्राꣳ३ इत्यपतत्। तद्घर्मस्य घर्मत्वम्। महतो वीर्यमपप्तदिति। तन्महावीरस्य महावीरत्वम् (५)। यदस्याः समभरन्। तत्सम्राजः सम्राट्त्वम् (४)

तꣳ स्तृतं देवतास्त्रेधा व्यगृह्णत। अग्निः प्रातःसवनम्। इन्द्रो माध्यंदिनꣳ सवनम्। विश्वे देवास्तृतीयसवनम्। तेनापशीर्ष्णा यज्ञेन यजमानाः। नाऽऽशिषोऽवारुन्धत। न सुवर्गं लोकमभ्यजयन् (५)।

ते देवा अश्विनावब्रुवन् (६)। भिषजौ वै स्थः। इदं यज्ञस्य शिरः प्रतिधत्तमिति। तावब्रूतां वरं वृणावहै। ग्रह एव नावत्रापि गृह्यतामिति। ताभ्यामेतमाश्विनमगृह्णन्। तावेतद्यज्ञस्य शिरः प्रत्यधत्ताम्। यत्प्रवर्ग्यः। तेन सशीर्ष्णा यज्ञेन यजमानाः। अवाऽऽशिषोऽरुन्धत। अभि सुवर्गं लोकमजयन् (६)।

यत्प्रवर्ग्यं प्रवृणक्ति। यज्ञस्यैव तच्छिरः प्रतिदधाति। तेन सशीर्ष्णा यज्ञेन यजमानः। अवाऽऽशिषो रुन्धे। अभि सुवर्गं लोकं जयति। तस्मादेष

---

४ चतुर्थविभागस्य भाष्यं २२० पृष्ठे द्रष्टव्यम्।

५ पञ्चमविभागस्य भाष्यं २२१ पृष्ठे द्रष्टव्यम्।

६ षष्ठविभागस्य भाष्यं २२२ पृष्ठे द्रष्टव्यम्।

आश्विनप्रवयां इव । यत्प्रवर्ग्यः ( ७ ) ( ७ ) ।

उत्करो ह्येते वृन्दन्ति महावीरत्वमभुवन्नजयन्सप्त च ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके पञ्चमप्रपाठके प्रथमोऽनुवाकः ॥ १ ॥

---

अथ पञ्चमे द्वितीयोऽनुवाकः ।

---

सावित्रं जुहोति प्रसूत्यै ( १ ) ।

चतुर्गृहीतेन जुहोति । चतुष्पादः पशवः । पशूनेवावरुन्धे । चतस्रो दिशः । दिक्ष्वेव प्रतितिष्ठति ( २ ) ।

छन्दाꣳसि देवेभ्योऽपाक्रामन् । न वो भागानि हव्यं वक्ष्याम इति । तेभ्य एतच्चतुर्गृहीतमधारयन् । पुरोनुवाक्यायै याज्यायै ( १ ) । देवतायै वषट्कारायं । यच्चतुर्गृहीतं जुहोति । छन्दाꣳस्येव तत्प्रीणाति । तान्यस्य प्रीतानि देवेभ्यो हव्यं वहन्ति ( ३ ) ।

ब्रह्मवादिनो वदन्ति । होतव्यं दीक्षितस्य गृहा३इ न होतव्या३मिति । हविर्वै दीक्षितः । यज्जुहुयात् । हविष्कृतं यजमानमग्नौ प्रदध्यात् । यन्न जुहुयात् (२) (४) । यज्ञपरुरन्तरियात् । यजुरेव वदेत् । न हविष्कृतं यजमानमग्नौ प्रदधाति । न यज्ञपरुरन्तरेति ( ५ ) ।

गायत्री छन्दाꣳस्यत्यमन्यत । तस्यै वषट्कारोऽभ्यद्रुत्य शिरोऽच्छिनत् । तस्यै द्वेधा रसः परापतत् । पृथिवी-

---

७ सप्तमविभागस्य भाष्यं २२२ पृष्ठे द्रष्टव्यम् ।
१ प्रथमविभागस्य भाष्यं २२३ पृष्ठे द्रष्टव्यम् ।
२ द्वितीयविभागस्य भाष्यं २२३ पृष्ठे द्रष्टव्यम् ।
३ तृतीयविभागस्य भाष्यं २२३ पृष्ठे द्रष्टव्यम् ।
४ चतुर्थविभागस्य भाष्यं २२४ पृष्ठे द्रष्टव्यम् ।
५ पञ्चमविभागस्य भाष्यं २२४ पृष्ठे द्रष्टव्यम् ।

मर्धः प्राविशत् । पशूनर्धः । यः पृथिवीं प्राविंशत् (३) । स खदिरोऽभवत् । यः पशून् । सोऽजाम् । यत्खादिर्य- भ्रिर्भवति । छन्दसामेव रसेन यज्ञस्य शिरः संभरति (१) ।

यदौदुम्बरी । ऊर्ग्वा उदुम्बरः । ऊर्जैव यज्ञस्य शिरः संभरति । यद्वैणवी । तेजो वै वेणुः (४) । तेजसैव यज्ञस्य शिरः संभरति । यद्वैकङ्कती । भा एवावरुन्धे (७) ।

देवस्य त्वा सवितुः प्रसव इत्यभ्रिमादत्ते प्रसूत्यै । अश्विनोर्बाहुभ्यामित्याह । अश्विनौ हि देवानामध्वर्यू आस्ताम् । पूष्णो हस्ताभ्यामित्याह यत्यै (८) ।

वज्र इव वा एषा । यदभ्रिः । अभ्रिरसि नारिरसी- त्याह शान्त्यै (५) (९) ।

अध्वरकृद्देवेभ्य इत्याह । यज्ञो वा अध्वरः । यज्ञकृ- द्देवेभ्य इति वावैतदाह (१०) ।

उत्तिष्ठ ब्रह्मणस्पत इत्याह । ब्रह्मणैव यज्ञस्य शिरोऽ- च्छैति (११) ।

प्रैतु ब्रह्मणस्पतिरित्याह । प्रेत्यैव यज्ञस्य शिरोऽ- च्छैति (१२)

प्रदेव्येतु सूनृतेत्याह । यज्ञो वै सूनृता (१३) ।

अच्छा वीरं नर्यं पङ्क्तिराधसमित्याह (६) पाङ्क्तो हि यज्ञः (१४) ।

---

६ षष्ठविभागस्य भाष्यं २२५ पृष्ठे द्रष्टव्यम् ।
७ सप्तमविभागस्य भाष्यं २२५ पृष्ठे द्रष्टव्यम् ।
८ अष्टमविभागस्य भाष्यं २२५ पृष्ठे द्रष्टव्यम् ।
९ नवमविभागस्य भाष्यं २२६ पृष्ठे द्रष्टव्यम् ।
१० दशमविभागस्य भाष्यं २२६ पृष्ठे द्रष्टव्यम् ।
११ एकादशविभागस्य भाष्यं २२६ पृष्ठे द्रष्टव्यम् ।
१२ द्वादशविभागस्य भाष्यं २२७ पृष्ठे द्रष्टव्यम् ।
१३ त्रयोदशविभागस्य भाष्यं २२७ पृष्ठे द्रष्टव्यम् ।
१४ चतुर्दशविभागस्य भाष्यं २२७ पृष्ठे द्रष्टव्यम् ।

देवा यज्ञं नयन्तु न इत्याह। देवानेव यज्ञनियः कुरुते (१५)।

देवी द्यावापृथिवी अनु मेऽमध्साथामित्याह। आभ्यामेवानुमतो यज्ञस्य शिरः संभरति (१६)।

ऋध्यासमद्य मखस्य शिर इत्याह। यज्ञो वै मखः। ऋध्यासमद्य यज्ञस्य शिर इति वावैतदाह (१७)।

मखाय त्वा मखस्य त्वा शीर्ष्णे इत्याह। निर्दिश्यैवैनद्धरति (७)। (१८)।

त्रिर्हरति। त्रय इमे लोकाः। एभ्य एव लोकेभ्यो यज्ञस्य शिरः संभरति। तूष्णीं चतुर्थꣳ हरति। अपरिमितादेव यज्ञस्य शिरः संभरति (१९)

मृत्खनादग्रे हरति। तस्मान्मृत्खनः करुण्यतमः (२०)।

इयत्यग्र आसीरित्याह। अस्यामेवाछंबट्कारं यज्ञस्य शिरः संभरति (२१)।

ऊर्जं वा एतꣳ रसं पृथिव्या उपदीका उद्दिहन्ति (८)। यद्वल्मीकम्। यद्वल्मीकवपासंभारो भवति। ऊर्जमेव रसं पृथिव्या अवरुन्धे। अथो श्रोत्रमेव। श्रोत्रꣳ ह्येतत्पृथिव्याः। यद्वल्मीकः (२२)।

अबधिरो भवति। य एवं वेद (२३)।

---

१५ पञ्चदशविभागस्य भाष्यं २२७ पृष्ठे द्रष्टव्यम्।
१६ षोडशविभागस्य भाष्यं २२७ पृष्ठे द्रष्टव्यम्।
१७ सप्तदशविभागस्य भाष्यं २२८ पृष्ठे द्रष्टव्यम्।
१८ अष्टादशविभागस्य भाष्यं २२८ पृष्ठे द्रष्टव्यम्।
१९ एकोनविंशविभागस्य भाष्यं २२८ पृष्ठे द्रष्टव्यम्।
२० विंशतितमविभागस्य भाष्यं २२८ पृष्ठे द्रष्टव्यम्।
२१ एकविंशतितमविभागस्य भाष्यं २२९ पृष्ठे द्रष्टव्यम्।
२२ द्वाविंशतितमविभागस्य भाष्यं २३० पृष्ठे द्रष्टव्यम्।
२३ त्रयोविंशतितमविभागस्य भाष्यं २३० पृष्ठे द्रष्टव्यम्।

इन्द्रो वृत्राय वज्रमुदयच्छत् । स यत्र यत्र पराक्रमत ( ९ ) । तत्राध्रियत । स पूतीकस्तम्बे पराक्रमत । सोऽध्रियत । सोऽब्रवीत् । ऊतिं वै मे धा इति । तदूतीकानामूतीकत्वम् । यदूतीका भवन्ति । यज्ञायैवोतिं दधाति ( २४ ) ।

अग्निजा असि प्रजापते रेत इत्याह । य एव रसः पशून्प्राविशत् ( १० ) । तमेवावरुन्धे ( २५ ) ।

पञ्चैते संभारा भवन्ति । पाङ्क्तो यज्ञः । यावानेव यज्ञः । तस्य शिरः संभरति ( २६ ) ।

यद्ग्राम्याणां पशूनां चर्मणा संभरेत् । ग्राम्यान्पशूञ्छुचाऽर्पयेत् । कृष्णाजिनेन संभरति । आरण्यानेव पशूञ्छुचाऽर्पयति । तस्मात्समावत्पशूनां प्रजायमानानाम् ( ११ ) । आरण्याः पशवः कनीयाᳬसः । शुचा ह्यृताः ( २७ ) ।

लोमतः संभरति । अतो ह्यस्य मेध्यम् ( २८ ) ।

परिगृह्याऽऽयन्ति । रक्षसामपहत्यै । बहवो हरन्ति । अपचितिमेवास्मिन्दधाति । उद्धते सिकतोपोप्ते परिश्रिते निदधाति शान्त्यै ( २९ ) ।

मदन्तीभिरुपसृजति ( १२ ) । तेज एवास्मिन्दधाति ( ३० ) ।

मधु त्वा मधुला करोत्वित्याह । ब्रह्मणैवास्मिन्तेजो दधाति ( ३१ ) ।

---

२४ चतुर्विंशतितमविभागस्य भाष्यं २३० पृष्ठे द्रष्टव्यम् ।
२५ पञ्चविंशतितमविभागस्य भाष्यं २३१ पृष्ठे द्रष्टव्यम् ।
२६ षड्विंशतितमविभागस्य भाष्यं २३१ पृष्ठे द्रष्टव्यम् ।
२७ सप्तविंशतितमविभागस्य भाष्यं २३२ पृष्ठे द्रष्टव्यम् ।
२८ अष्टाविंशतितमविभागस्य भाष्यं २३२ पृष्ठे द्रष्टव्यम् ।
२९ एकोनत्रिंशत्तमविभागस्य भाष्यं २३२ पृष्ठे द्रष्टव्यम् ।
३० त्रिंशत्तमविभागस्य भाष्यं २३३ पृष्ठे द्रष्टव्यम् ।
३१ एकत्रिंशत्तमविभागस्य भाष्यं २३३ पृष्ठे द्रष्टव्यम् ।

यद्ग्राम्याणां पात्राणां कपालैः सꣳसृजेत् । ग्राम्याणि पात्राणि शुचाऽर्पयेत् । अर्मकपालैः सꣳसृजति । एतानि वा अनुपजीवनीयानि । तान्येव शुचाऽर्पयति ( ३२ )।
शर्कराभिः सꣳसृजति धृत्यै । अथो शंत्वाय (३३)।
अजलोमैः सꣳसृजति । एषा वा अग्नेः प्रिया तनूः । यदजा । प्रिययैवैनं तनुवा सꣳसृजति । अथो तेजसा (३४)।
कृष्णाजिनस्य लोमभिः सꣳसृजति । यज्ञो वै कृष्णाजिनम् । यज्ञेनैव यज्ञꣳ सꣳसृजति ( १३ )।( ३५ )।
याज्यायै न जुहुयादविंशद्वेणुः शान्त्यै पङ्क्तिराधसमित्याह हरति दिहन्ति पराक्रमताऽऽविंशत्प्रजायमानानाꣳ सृजति शंत्वायाष्टौ च ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके पञ्चमप्रपाठके द्वितीयोऽनुवाकः ॥ २ ॥

---

अथ पञ्चमे तृतीयोऽनुवाकः ।

---

परिश्रिते करोति । ब्रह्मवर्चसस्य परिगृहीत्यै ( १ )।
न कुर्वन्नभिप्राण्यात् । यत्कुर्वन्नभिप्राण्यात् । प्राणाञ्छुचाऽर्पयेत् । अपहाय प्राणिति । प्राणानां गोपीथाय ( २ )।
न प्रवर्ग्यं चाऽऽदित्यं चान्तरेयात् । यदन्तरेयात् । दुश्चर्मा स्यात् ( १ )। तस्मान्नान्तरायम् । आत्मनो गोपीथाय ( ३ )।

---

३२ द्वात्रिंशत्तमविभागस्य भाष्यं २३३ पृष्ठे द्रष्टव्यम् ।
३३ त्रयस्त्रिंशत्तमविभागस्य भाष्यं २३३ पृष्ठे द्रष्टव्यम् ।
३४ चतुस्त्रिंशत्तमविभागस्य भाष्यं २३४ पृष्ठे द्रष्टव्यम् ।
३५ पञ्चत्रिंशत्तमविभागस्य भाष्यं २३४ पृष्ठे द्रष्टव्यम् ।
१ प्रथमविभागस्य भाष्यं २३४ पृष्ठे द्रष्टव्यम् ।
२ द्वितीयविभागस्य भाष्यं २३४ पृष्ठे द्रष्टव्यम् ।
३ तृतीयविभागस्य भाष्यं २३५ पृष्ठे द्रष्टव्यम् ।

वेणुना करोति । तेजो वै वेणुः । तेजः प्रवर्ग्यः । तेजसैव तेजः समर्धयति ( ४ ) ।

मखस्य शिरोऽसीत्याह । यज्ञो वै मखः । तस्यैतच्छिरः । यत्प्रवर्ग्यः ( २ ) । तस्मादेवमाह ( ५ ) ।

यज्ञस्य पदे स्थ इत्याह । यज्ञस्य ह्येते पदे । अथो प्रतिष्ठित्यै ( ६ ) ।

गायत्रेण त्वा छन्दसा करोमीत्याह । छन्दोभिरेवैनं करोति ( ७ ) ।

त्र्युद्धिं करोति । त्रय इमे लोकाः । एषां लोकाना-माप्त्यै ( ८ ) ।

छन्दोभिः करोति ( ३ ) । वीर्यं वै छन्दाᳪसि । वीर्ये-णैवैनं करोति ( ९ ) ।

यजुषा बिलं करोति व्यावृत्त्यै ( १० ) ।

इयन्तं करोति । प्रजापतिना यज्ञमुखेन संमितम् ( ११ ) ।

इयन्तं करोति । यज्ञपरुषा संमितम् ( १२ ) ।

इयन्तं करोति । एतावद्वै पुरुषे वीर्यम् । वीर्यसं-मितम् ( ४ ) ( १३ ) ।

अपरिमितं करोति । अपरिमितस्यावरुद्ध्यै ( १४ ) ।

---

४ चतुर्थविभागस्य भाष्यं २३५ पृष्ठे द्रष्टव्यम् ।
५ पञ्चमविभागस्य भाष्यं २३५ पृष्ठे द्रष्टव्यम् ।
६ षष्ठविभागस्य भाष्यं २३५ पृष्ठे द्रष्टव्यम् ।
७ सप्तमविभागस्य भाष्यं २३६ पृष्ठे द्रष्टव्यम् ।
८ अष्टमविभागस्य भाष्यं २३६ पृष्ठे द्रष्टव्यम् ।
९ नवमविभागस्य भाष्यं २३६ पृष्ठे द्रष्टव्यम् ।
१० दशमविभागस्य भाष्यं २३७ पृष्ठे द्रष्टव्यम् ।
११ एकादशविभागस्य भाष्यं २३७ पृष्ठे द्रष्टव्यम् ।
१२ द्वादशविभागस्य भाष्यं २३७ पृष्ठे द्रष्टव्यम् ।
१३ त्रयोदशविभागस्य भाष्यं २३७ पृष्ठे द्रष्टव्यम् ।
१४ चतुर्दशविभागस्य भाष्यं २३७ पृष्ठे द्रष्टव्यम् ।

परिग्रीवं करोति धृत्यै (१५)।

सूर्यस्य हरसा श्रायेत्याह। यथा यजुरेवैतत् (१६)।

अश्वशकेन धूपयति। प्राजापत्यो वा अश्वः सयोनित्वाय (१७)।

वृष्णो अश्वस्य निष्पदसीत्याह। असौ वा आदित्यो वृषाश्वः। तस्य छन्दांसि निष्पत् (५)। छन्दोभिरेवैनं धूपयति (१८)।

अर्चिषे त्वा शोचिषे त्वेत्याह। तेज एवास्मिन्दधाति (१९)।

वारुणोऽभीद्धः। मैत्रियोपैति शान्त्यै (२०)।

सिद्ध्यै त्वेत्याह। यथा यजुरेवैतत् (२१)।

देवस्त्वा सवितोद्वपत्वित्याह। सवितृप्रसूत एवैनं ब्रह्मणा देवताभिरुद्वपति (२२)।

अपद्यमानः पृथिव्यामाशा दिश आपृणेत्याह (६)। तस्मादग्निः सर्वा दिशोऽनुविभाति (२३)।

उत्तिष्ठ बृहन्भवोर्ध्वस्तिष्ठ ध्रुवस्त्वमित्याह प्रतिष्ठित्यै (२४)।

ईश्वरो वा एषोऽन्धो भवितोः। यः प्रवर्ग्यमन्वी-

---

१५ पञ्चदशविभागस्य भाष्यं २३८ पृष्ठे द्रष्टव्यम्।
१६ षोडशविभागस्य भाष्यं २३८ पृष्ठे द्रष्टव्यम्।
१७ सप्तदशविभागस्य भाष्यं २३९ पृष्ठे द्रष्टव्यम्।
१८ अष्टादशविभागस्य भाष्यं २३९ पृष्ठे द्रष्टव्यम्।
१९ एकोनविंशतितमविभागस्य भाष्यं २३९ पृष्ठे द्रष्टव्यम्।
२० विंशतितमविभागस्य भाष्यं २४० पृष्ठे द्रष्टव्यम्।
२१ एकविंशतितमविभागस्य भाष्यं २४० पृष्ठे द्रष्टव्यम्।
२२ द्वाविंशतितमविभागस्य भाष्यं २४० पृष्ठे द्रष्टव्यम्।
२३ त्रयोविंशतितमविभागस्य भाष्यं २४१ पृष्ठे द्रष्टव्यम्।
२४ चतुर्विंशतितमविभागस्य भाष्यं २४१ पृष्ठे द्रष्टव्यम्।

क्षते । सूर्यस्य त्वा चक्षुषाऽन्वीक्ष इत्याह । चक्षुषो गोपीथाय (२५) ।

ऋजवे त्वा साधवे त्वा सुक्षित्यै त्वा भूत्यै त्वेत्याह । इयं वा ऋजुः । अन्तरिक्षꣳ साधु । असौ सुक्षितिः (७) । दिशो भूतिः । इमानेवास्मै लोकान्कल्पयति । अथो प्रतिष्ठित्यै (२६) ।

इदमहममुमामुष्यायणं विशा पशुभिर्ब्रह्मवर्चसेन पर्यूहामीत्याह । विशैवैनं पशुभिर्ब्रह्मवर्चसेन पर्यूहति (२७) ।

विशेति राजन्यस्य ब्रूयात् । विशैवैनं पर्यूहति । पशुभिरिति वैश्यस्य । पशुभिरेवैनं पर्यूहति (२८) ।

असुर्यं पात्रमनाच्छृण्णम् (८) । आच्छृणत्ति । देवत्राऽकः (२९) ।

अजक्षीरेणाऽऽच्छृणत्ति । परमं वा एतत्पयः । यदजक्षीरम् । परमेणैवैनं पयसाऽऽच्छृणत्ति (३०) ।

यजुषा व्यावृत्त्यै (३१) ।

छन्दोभिराच्छृणत्ति । छन्दोभिर्वा एष क्रियते । छन्दोभिरेव छन्दाꣳस्याच्छृणत्ति (३२) ।

छृन्धि वाचमित्याह । वाचमेवावरुन्धे । छृन्ध्यूर्जमित्याह । ऊर्जमेवावरुन्धे । छृन्धि हविरित्याह । हविरेवाकः (३३) ।

---

२५ पञ्चविंशतितमविभागस्य भाष्यं २४१ पृष्ठे द्रष्टव्यम् ।
२६ षड्विंशतितमविभागस्य भाष्यं २४२ पृष्ठे द्रष्टव्यम् ।
२७ सप्तविंशतितमविभागस्य भाष्यं २४२ पृष्ठे द्रष्टव्यम् ।
२८ अष्टाविंशतितमविभागस्य भाष्यं २४२ पृष्ठे द्रष्टव्यम् ।
२९ एकोनत्रिंशत्तमविभागस्य भाष्यं २४३ पृष्ठे द्रष्टव्यम् ।
३० त्रिंशत्तमविभागस्य भाष्यं २४३ पृष्ठे द्रष्टव्यम् ।
३१ एकत्रिंशत्तमविभागस्य भाष्यं २४३ पृष्ठे द्रष्टव्यम् ।
३२ द्वात्रिंशत्तमविभागस्य भाष्यं २४३ पृष्ठे द्रष्टव्यम् ।
३३ त्रयस्त्रिंशत्तमविभागस्य भाष्यं २४३ पृष्ठे द्रष्टव्यम् ।

देवं पुनश्चर सध्यासं त्वेत्याह । यथा यजुरेवैतत् (९)(३४)।

स्याद्यत्प्रवर्ग्यश्छन्दोभिः करोति वीर्यसंमितं छन्दाꣳसि निष्पत्पृणेत्याह सुक्षितिरनाच्छृण्णं छन्दाꣳ स्याच्छृणत्त्यष्टौ च ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके पञ्चमप्रपाठके तृतीयोऽनुवाकः ॥ ३ ॥

---

अथ पञ्चमे चतुर्थोऽनुवाकः ।

---

ब्रह्मन्प्रचरिष्यामो होतर्घर्ममभिष्टुहीत्याह । एष वा एतर्हि बृहस्पतिः । यद्ब्रह्मा । तस्मा एव प्रतिप्रोच्य प्रचरति । आत्मनोऽनार्त्यै (१)।

यमाय त्वा मखाय त्वेत्याह । एता वा एतस्य देवताः । ताभिरेवैनꣳ समर्धयति (२)।

मदन्तीभिः प्रोक्षति । तेज एवास्मिन्दधाति (१)(३)।

अभिपूर्वं प्रोक्षति । अभिपूर्वमेवास्मिन्तेजो दधाति (४)।

त्रिः प्रोक्षति । त्र्यावृद्धि यज्ञः । अथो मेध्यत्वाय (५)।

होताऽन्वाह । रक्षसामपहत्यै (६)।

अनवानम् । प्राणानाꣳ संतत्यै (७)।

त्रिष्टुभः सतीर्गायत्रीरिवान्वाह (२)। गायत्रो हि प्राणः । प्राणमेव यजमाने दधाति (८)।

---

३४ चतुस्त्रिंशत्तमविभागस्य भाष्यं २४४ पृष्ठे द्रष्टव्यम् ।
१ प्रथमविभागस्य भाष्यं २४६ पृष्ठे द्रष्टव्यम् ।
२ द्वितीयविभागस्य भाष्यं २४६ पृष्ठे द्रष्टव्यम् ।
३ तृतीयविभागस्य भाष्यं २४६ पृष्ठे द्रष्टव्यम् ।
४ चतुर्थविभागस्य भाष्यं २४६ पृष्ठे द्रष्टव्यम् ।
५ पञ्चमविभागस्य भाष्यं २४७ पृष्ठे द्रष्टव्यम् ।
६ षष्ठविभागस्य भाष्यं २४७ पृष्ठे द्रष्टव्यम् ।
७ सप्तमविभागस्य भाष्यं २४७ पृष्ठे द्रष्टव्यम् ।
८ अष्टमविभागस्य भाष्यं २४७ पृष्ठे द्रष्टव्यम् ।

संततमन्वाह । प्राणानामन्नाद्यस्य संतत्यै । अथो रक्षसामपहत्यै ( ९ ) ।

यत्परिमिता अनुब्रूयात् । परिमितमवरुन्धीत । अपरिमिता अन्वाह । अपरिमितस्यावरुद्ध्यै ( १० ) ।

शिरो वा एतद्यज्ञस्य (३) । यत्प्रवर्ग्यः । ऊर्ङ्मुञ्जाः । यन्मौञ्जो वेदो भवति । ऊर्जैव यज्ञस्य शिरः समर्धयति (११) ।

प्राणाहुतीर्जुहोति । प्राणानेव यजमाने दधाति ( १२ )

सप्त जुहोति । सप्त वै शीर्षण्याः प्राणाः । प्राणानेवास्मिन्दधाति ( १३ ।

देवस्त्वा सविता मध्वाऽनक्त्वित्याह (४) । तेजसैवैनमनक्ति ( १४ ) ।

पृथिवीं तपसस्त्रायस्वेति हिरण्यमुपास्यति । अस्या अनतिदाहाय ( १५ ) ।

शिरो वा एतद्यज्ञस्य । यत्प्रवर्ग्यः । अग्निः सर्वा देवताः । प्रलवानादीप्योपास्यति । देवतास्वेव यज्ञस्य शिरः प्रतिदधाति (१६) ।

अप्रतिशीर्णाग्रं भवाति । एतद्वै हविर्षः (५) । (१७) ।

अर्चिरसि शोचिरसीत्याह । तेज एवास्मिन्ब्रह्मवर्चसं दधाति (१८) ।

---

९ नवमविभागस्य भाष्यं २४७ पृष्ठे द्रष्टव्यम् ।
१० दशमविभागस्य भाष्यं २४८ पृष्ठे द्रष्टव्यम् ।
११ एकादशविभागस्य भाष्यं २४८ पृष्ठे द्रष्टव्यम् ।
१२ द्वादशविभागस्य भाष्यं २४८ पृष्ठे द्रष्टव्यम् ।
१३ त्रयोदशविभागस्य भाष्यं २४९ पृष्ठे द्रष्टव्यम् ।
१४ चतुर्दशविभागस्य भाष्यं २४९ पृष्ठे द्रष्टव्यम् ।
१५ पञ्चदशविभागस्य भाष्यं २४९ पृष्ठे द्रष्टव्यम् ।
१६ षोडशविभागस्य भाष्यं २४९ पृष्ठे द्रष्टव्यम् ।
१७ सप्तदशविभागस्य भाष्यं २५० पृष्ठे द्रष्टव्यम् ।
१८ अष्टादशविभागस्य भाष्यं २५० पृष्ठे द्रष्टव्यम् ।

सꣳसीदस्व महाꣳअसीत्याह। महान्ह्येषः (१९)।

ब्रह्मवादिनो वदन्ति। एते वाव त ऋत्विजः। ये दर्शपूर्णमासयोः। अथ कथा होता यजमानायाऽऽशिषो नाऽऽशास्त इति। पुरस्तादाशीः खलु वा अन्यो यज्ञः। उपरिष्टादाशीरन्यः (६) (२०)।

अनाधृष्या पुरस्तादिति यदेतानि यजूꣳष्याह। शीर्षत एव यज्ञस्य यजमान आशिषोऽवरुन्धे (२१)।

आयुः पुरस्तादाह। प्रजां दक्षिणतः। प्राणं पश्चात्। श्रोत्रमुत्तरतः। विधृतिमुपरिष्टात्। प्राणानेवास्मै समीचो दधाति (२२)।

ईश्वरो वा एष दिशोऽनून्मदितोः। यं दिशोऽनुव्यास्थापयन्ति (७)। मनोरश्वाऽसि भूरिपुत्रेतीमामभिमृशति। इयं वै मनोरश्वा भूरिपुत्रा। अस्यामेव प्रतितिष्ठत्यनुन्मादाय (२३)।

सूपसदा मे भूया मा मा हिꣳसीरित्याहाहिꣳसायै (२४)।

चितः स्थ परिचित इत्याह। अपचितिमेवास्मिन्दधाति (२५)।

शिरो वा एतद्यज्ञस्य। यत्प्रवर्ग्यः। असौ खलु वा आदित्यः प्रवर्ग्यः। तस्य मरुतो रश्मयः (८)। स्वाहा मरुद्भिः परिश्रयस्वेत्याह। अमुमेवाऽऽदित्यꣳ रश्मिभिः

---

१९ एकोनविंशविभागस्य भाष्यं २९० पृष्ठे द्रष्टव्यम्।
२० विंशतितमविभागस्य भाष्यं २९१ पृष्ठे द्रष्टव्यम्।
२१ एकविंशतितमविभागस्य भाष्यं २९२ पृष्ठे द्रष्टव्यम्।
२२ द्वाविंशतितमविभागस्य भाष्यं २९२ पृष्ठे द्रष्टव्यम्।
२३ त्रयोविंशविभागस्य भाष्यं २९३ पृष्ठे द्रष्टव्यम्।
२४ चतुर्विंशविभागस्य भाष्यं २९३ पृष्ठे द्रष्टव्यम्।
२५ पञ्चविंशविभागस्य भाष्यं २९४ पृष्ठे द्रष्टव्यम्।

पर्यूहति । तस्मादसावादित्योऽमुष्मिँल्लोके रश्मिभिः पर्यूढः । तस्माद्राजा विशा पर्यूढः । तस्माद्ग्रामणीः संजातैः पर्यूढः ( २६ ) ।

अग्नेः सृष्टस्य यतः । विकङ्कतं भा आर्च्छत् । यद्वैकङ्कताः परिधयो भवन्ति । भा एवावरुन्धे ( २७ ) ।

द्वादश भवन्ति ( ९ ) । द्वादश मासाः संवत्सरः । संवत्सरमेवावरुन्धे ( २८ ) ।

अस्ति त्रयोदशो मास इत्याहुः । यत्त्रयोदशः परिधिर्भवति । तेनैव त्रयोदशं मासमवरुन्धे ( २९ ) ।

अन्तरिक्षस्यान्तर्धिरसीत्याह व्यावृत्त्यै ( ३० ) ।

दिवं तपसस्त्रायस्वेत्युपरिष्टाद्धिरण्यमधि निदधाति । अमुष्या अनतिदाहाय । अथो आभ्यामेवैनमुभयतः परिगृह्णाति ( ३१ ) ।

अर्हन्बिभर्षि सायकानि धन्वेत्याह ( १० ) । स्तौत्येवैनमेतत् ( ३२ ) ।

गायत्रमसि त्रैष्टुभमसि जागतमसीति पवित्राण्यादत्ते । छन्दोभिरेवैनान्यादत्ते ( ३३ ) ।

मधु मध्विति धूनोति । प्राणो वै मधु । प्राणमेव यजमाने दधाति ( ३४ ) ।

---

२६ षड्विंशविभागस्य भाष्यं २९४ पृष्ठे द्रष्टव्यम् ।
२७ सप्तविंशविभागस्य भाष्यं २९५ पृष्ठे द्रष्टव्यम् ।
२८ अष्टाविंशविभागस्य भाष्यं २९५ पृष्ठे द्रष्टव्यम् ।
२९ एकोनत्रिंशविभागस्य भाष्यं २९५ पृष्ठे द्रष्टव्यम् ।
३० त्रिंशविभागस्य भाष्यं २९५ पृष्ठे द्रष्टव्यम् ।
३१ एकत्रिंशविभागस्य भाष्यं २९६ पृष्ठे द्रष्टव्यम् ।
३२ द्वात्रिंशविभागस्य भाष्यं २९७ पृष्ठे द्रष्टव्यम् ।
३३ त्रयस्त्रिंशविभागस्य भाष्यं २९७ पृष्ठे द्रष्टव्यम् ।
३४ चतुस्त्रिंशविभागस्य भाष्यं २९८ पृष्ठे द्रष्टव्यम् ।

त्रिः परियन्ति । त्रिवृद्धि प्राणः ( ३५ ) ।

त्रिः परियन्ति । त्र्यावृद्धि यज्ञः ( ११ ) । अथो रक्षसामपहत्यै ( ३६ )।

त्रिः पुनः परियन्ति । षट्संपद्यन्ते । षड्वा ऋतवः । ऋतुष्वेव प्रतितिष्ठन्ति ( ३७ ) ।

यो वै घर्मस्य प्रियां तनुवमाक्रामति । दुश्चर्मा वै स भवति । एष ह वा अस्य प्रियां तनुवमाक्रामति । यत्त्रिः परीत्य चतुर्थं पर्येति । एतꣳ ह वा अस्योग्रदेवो राजनिराचक्राम ( १२ ) । ततो वै स दुश्चर्माऽभवत् । तस्मात्त्रिः परीत्य न चतुर्थं परीयात् । आत्मनो गोपीथाय ( ३८ ) ।

प्राणा वै पवित्राणि ( ३९ ) ।

अव्यतिषङ्गं धून्वन्ति । प्राणानामव्यतिषङ्गाय क्लृप्त्यै (४०)।

त्रिनिषद्य धून्वन्ति । दिक्ष्वेव प्रतितिष्ठन्ति ( ४१ ) ।

ऊर्ध्वं धून्वन्ति । सुवर्गस्य लोकस्य समष्ट्यै (४२) ।

सर्वतो धून्वन्ति । तस्मादयꣳ सर्वतः पवते (१३) । (४३)।

दधातीवान्वाह यज्ञस्याऽऽहैव उपरिष्टादाशीरन्यो व्यास्थापयन्ति रश्मयो भवन्ति धन्वेत्याह यज्ञश्चक्राम समष्ट्यै द्वे च ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके पञ्चमप्रपाठके चतुर्थोऽनुवाकः ॥ ४ ॥

---

३५ पञ्चत्रिंशविभागस्य भाष्यं २९८ पृष्ठे द्रष्टव्यम् ।

३६ षट्त्रिंशविभागस्य भाष्यं २९८ पृष्ठे द्रष्टव्यम् ।

३७ सप्तत्रिंशविभागस्य भाष्यं २९३ पृष्ठे द्रष्टव्यम् ।

३८ अष्टात्रिंशविभागस्य भाष्यं २९८ पृष्ठे द्रष्टव्यम् ।

३९ एकोनचत्वारिंशविभागस्य भाष्यं २९९ पृष्ठे द्रष्टव्यम् ।

४० चत्वारिंशविभागस्य भाष्यं २९९ पृष्ठे द्रष्टव्यम् ।

४१ एकचत्वारिंशविभागस्य भाष्यं २९९ पृष्ठे द्रष्टव्यम् ।

४२ द्विचत्वारिंशविभागस्य भाष्यं २९९ पृष्ठे द्रष्टव्यम् ।

४३ त्रिचत्वारिंशविभागस्य भाष्यं २९९ पृष्ठे द्रष्टव्यम् ।

अथ पञ्चमे पञ्चमोऽनुवाकः ।

---

अग्निष्ट्वा वसुभिः पुरस्ताद्रोचयतु गायत्रेण छन्दसेत्याह । अग्निरेवैनं वसुभिः पुरस्ताद्रोचयति गायत्रेण छन्दसा (१) ।

स मा रुचितो रोचयेत्याह । आशिषमेवैतामाशास्ते (२) ।

इन्द्रस्त्वा रुद्रैर्दक्षिणतो रोचयतु त्रैष्टुभेन छन्दसेत्याह । इन्द्र एवैनꣳ रुद्रैर्दक्षिणतो रोचयति त्रैष्टुभेन छन्दसा । स मा रुचितो रोचयेत्याह । आशिषमेवैतामाशास्ते । वरुणस्त्वाऽऽदित्यैः पश्चाद्रोचयतु जागतेन छन्दसेत्याह । वरुण एवैनमादित्यैः पश्चाद्रोचयति जागतेन छन्दसा (१) । स मा रुचितो रोचयेत्याह । आशिषमेवैतामाशास्ते । द्युतानस्त्वा मारुतो मरुद्भिरुत्तरतो रोचयत्वानुष्टुभेन छन्दसेत्याह । द्युतान एवैनं मारुतो मरुद्भिरुत्तरतो रोचयत्यानुष्टुभेन छन्दसा । स मा रुचितो रोचयेत्याह । आशिषमेवैतामाशास्ते । बृहस्पतिस्त्वा विश्वैर्देवैरुपरिष्टाद्रोचयतु पाङ्क्तेन छन्दसेत्याह । बृहस्पतिरेवैनं विश्वैर्देवैरुपरिष्टाद्रोचयति पाङ्क्तेन छन्दसा । स मा रुचितो रोचयेत्याह । आशिषमेवैतामाशास्ते (२)(३) ।

रोचितस्त्वं देव घर्म देवेष्वसीत्याह । रोचितो ह्येष देवेषु । रोचिषीयाहं मनुष्येष्वित्याह । रोचत एवैष मनुष्येषु (४) ।

सम्राड् घर्म रुचितस्त्वं देवेष्वायुष्माꣳस्तेजस्वी ब्रह्म-

---

१ प्रथमविभागस्य भाष्यं २६० पृष्ठे द्रष्टव्यम् ।
२ द्वितीयविभागस्य भाष्यं २६० पृष्ठे द्रष्टव्यम् ।
३ तृतीयविभागस्य भाष्यं २६१ पृष्ठे द्रष्टव्यम् ।
४ चतुर्थविभागस्य भाष्यं २६१ पृष्ठे द्रष्टव्यम् ।

वर्चस्यसीत्याह । रुचितो ह्येष देवेष्वायुष्माꣳस्तेजस्वी ब्रह्मवर्चसी । रुचितोऽहं मनुष्येष्वायुष्माꣳस्तेजस्वी ब्रह्म वर्चसी भूयासमित्याह । रुचित एवैष मनुष्येष्वायुष्माꣳस्तेजस्वी ब्रह्मवर्चसी भवति ( ५ ) ।

रुगसि रुचं मयि धेहि मयि रुगित्याह । आशिषमेवैतामाशास्ते ( ६ ) ।

तं यदेतैर्यजुर्भिररोचयित्वा । रुचितो घर्म इति प्रब्रूयात् । अरोचुकोऽध्वर्युः स्यात् । अरोचुको यजमानः । अथ यदेनमेतैर्यजुर्भी रोचयित्वा । रुचितो घर्म इति प्राह । रोचुकोऽध्वर्युर्भवति । रोचुको यजमानः ( ३ ) ( ७ ) ।

पश्चाद्रोचयति जागतेन छन्दसा स मा रुचितो रोचयेत्याहाऽऽशिषमेवैतामाशास्ते शास्तेऽष्टौ च ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके पञ्चमप्रपाठके पञ्चमोऽनुवाकः ॥ ५ ॥

---

अथ पञ्चमे षष्ठोऽनुवाकः ।

---

शिरो वा एतद्यज्ञस्य । यत्प्रवर्ग्यः । ग्रीवा उपसदः । पुरस्तादुपसदां प्रवर्ग्यं प्रवृणक्ति । ग्रीवास्वेव यज्ञस्य शिरः प्रतिदधाति ( १ ) ।

त्रिः प्रवृणक्ति । त्रय इमे लोकाः । एभ्य एव लोकेभ्यो यज्ञस्य शिरोऽवरुन्धे ( २ ) ।

---

५ पञ्चमविभागस्य भाष्यं २६२ पृष्ठे द्रष्टव्यम् ।

६ षष्ठविभागस्य भाष्यं २६२ पृष्ठे द्रष्टव्यम् ।

७ सप्तमविभागस्य भाष्यं २६३ पृष्ठे द्रष्टव्यम् ।

१ प्रथमविभागस्य भाष्यं २६४ पृष्ठे द्रष्टव्यम् ।

२ द्वितीयविभागस्य भाष्यं २६४ पृष्ठे द्रष्टव्यम् ।

षट् संपद्यन्ते । षड्वा ऋतवः ( १ ) । ऋतुभ्य एव यज्ञस्य शिरोऽवरुन्धे ( ३ ) ।

द्वादशकृत्वः प्रवृणक्ति । द्वादश मासाः संवत्सरः । संवत्सरादेव यज्ञस्य शिरोऽवरुन्धे ( ४ ) ।

चतुर्विꣳशतिः संपद्यन्ते । चतुर्विꣳशतिरर्धमासाः । अर्धमासेभ्य एव यज्ञस्य शिरोऽवरुन्धे ( ५ ) ।

अथो खलु । सकृदेव प्रवृज्यः । एकꣳ हि शिरः ( २ ) ( ६ ) ।

अग्निष्टोमे प्रवृणक्ति । एतावान्वै यज्ञः । यावानग्निष्टोमः । यावानेव यज्ञः । तस्य शिरः प्रतिदधाति (७) ।

नोक्थ्ये प्रवृञ्ज्यात् । प्रजा वै पशव उक्थानि । यदुक्थ्ये प्रवृञ्ज्यात् । प्रजां पशूनस्य निर्दहेत् ( ८ ) ।

विश्वजिति सर्वपृष्ठे प्रवृणक्ति (३) । पृष्ठानि वा अच्युतं च्यावयन्ति । पृष्ठैरेवास्मा अच्युतं च्यावयित्वाऽवरुन्धे ( ९ ) ।

अपश्यं गोपामित्याह । प्राणो वै गोपाः । प्राणमेव प्रजासु वियातयति ( १० ) ।

अपश्यं गोपामित्याह । असौ वा आदित्यो गोपाः । स हीमाः प्रजा गोपायति । तमेव प्रजानां गोप्तारं कुरुते ( ११ ) ।

---

३ तृतीयविभागस्य भाष्यं २६५ पृष्ठे द्रष्टव्यम् ।
४ चतुर्थविभागस्य भाष्यं २६५ पृष्ठे द्रष्टव्यम् ।
५ पञ्चमविभागस्य भाष्यं २६५ पृष्ठे द्रष्टव्यम् ।
६ षष्ठविभागस्य भाष्यं २६५ पृष्ठे द्रष्टव्यम् ।
७ सप्तमविभागस्य भाष्यं २६६ पृष्ठे द्रष्टव्यम् ।
८ अष्टमविभागस्य भाष्यं २६६ पृष्ठे द्रष्टव्यम् ।
९ नवमविभागस्य भाष्यं २६६ पृष्ठे द्रष्टव्यम् ।
१० दशमविभागस्य भाष्यं २६६ पृष्ठे द्रष्टव्यम् ।
११ एकादशविभागस्य भाष्यं २६७ पृष्ठे द्रष्टव्यम् ।

अनि॑पद्यमान॒मित्या॑ह (४)। न ह्ये॑ष निपद्य॑ते ( १२ )।

आ च॒ परा॑ च॒ प॒थिभि॒श्चर॑न्त॒मित्या॑ह । आ च॒ ह्ये॑ष परा॑ च प॒थिभि॒श्चर॑ति ( १३ )।

स स॒ध्रीची॒: स विषू॑ची॒र्वसा॑न॒ इत्या॑ह। स॒ध्रीची॑श्च॒ ह्ये॑ष विषू॑चीश्च वसा॑नः प्रजा आ॒भिवि॒पश्य॑ति ( १४ )।

आव॑रीवर्ति॒ भुव॑नेष्व॒न्तरित्या॑ह। आ ह्ये॑ष व॑रीव॒र्ति॒ भुव॑नेष्व॒न्तः ( १५ )।

अत्र॒ प्रावी॒र्मधु॑माध्वी॒भ्यां॒ मधु॑माधूची॒भ्या॒मित्या॑ह । वास॑न्तिका॒वे॒वास्मा॑ ऋ॒तू क॑ल्पयति ( १६ )।

सम॒ग्निर॒ग्निना॑ ग॒तेत्या॑ह ( ५ ) ग्रैष्मा॑वे॒वास्मा॑ ऋ॒तू क॑ल्पयति ( १७ )।

सम॒ग्निर॒ग्निना॑ ग॒तेत्या॑ह । अ॒ग्निर्ह्ये॒वैषो॑ऽग्निना॑ सं॒गच्छ॑ते ( १८ )।

स्वाहा॒ सम॒ग्निस्तप॑सा ग॒तेत्या॑ह। पूर्व॑मे॒वोदि॒तम्। उत्त॑रेणा॒भिगृ॑णाति ( १९ )

ध॒र्ता॑ दि॒वो विभा॑सि॒ रज॑सः पृ॒थि॒व्या इ॒त्या॑ह। वार्षि॑का॒वे॒वास्मा॑ ऋ॒तू क॑ल्पयति ( २० )।

हृ॒दे त्वा॒ मन॑से॒ त्वेत्या॑ह। शा॒र॒दा॒वे॒वास्मा॑ ऋ॒तू क॑ल्पयति ( ६ ) (२१)।

---

१२ द्वादशविभागस्य भाष्यं २६७ पृष्ठे द्रष्टव्यम्।

१३ त्रयोदशविभागस्य भाष्यं २६७ पृष्ठे द्रष्टव्यम्।

१४ चतुर्दशविभागस्य भाष्यं २६७ पृष्ठे द्रष्टव्यम्।

१५ पञ्चदशविभागस्य भाष्यं २६७ पृष्ठे द्रष्टव्यम्।

१६ षोडशविभागस्य भाष्यं २६८ पृष्ठे द्रष्टव्यम्।

१७ सप्तदशविभागस्य भाष्यं २६८ पृष्ठे द्रष्टव्यम्।

१८ अष्टादशविभागस्य भाष्यं २६८ पृष्ठे द्रष्टव्यम्।

१९ एकोनविंशविभागस्य भाष्यं २६९ पृष्ठे द्रष्टव्यम्।

२० विंशतितमविभागस्य भाष्यं २६९ पृष्ठे द्रष्टव्यम्।

२१ एकविंशतितमविभागस्य भाष्यं २७० पृष्ठे द्रष्टव्यम्।

दिवि देवेषु होत्रा यच्छेत्याह । होत्राभिरेवेमाँल्लोकान्त्संदधाति ( २२ ) ।

विश्वासां भुवां पत इत्याह । हैमन्तिकावेवास्मा ऋतू कल्पयाति ( २३ ) ।

देवश्रूस्त्वं देव घर्म देवान्पाहीत्याह । शैशिरावेवास्मा ऋतू कल्पयति ( २४ ) ।

तपोजां वाचमस्मे नियच्छ देवायुवमित्याह । या वै मेध्या वाक् । सा तपोजाः । तामेवावरुन्धे ( ७ ) । ( २५ ) ।

गर्भो देवानामित्याह । गर्भो ह्येष देवानाम् ( २६ ) ।

पिता मतीनामित्याह । प्रजा वै मतयः । तासामेष एव पिता । यत्प्रवर्ग्यः । तस्मादेवमाह ( २७ ) ।

पतिः प्रजानामित्याह । पतिर्ह्येष प्रजानाम् ( २८ ) ।

मतिः कवीनामित्याह (८) । मतिर्ह्येष कवीनाम् ( २९ ) ।

सं देवो देवेन सवित्राऽयतिष्ट सꣳ सूर्येणारुक्तेत्याह । अमुं चैवाऽऽदित्यं प्रवर्ग्यं च सꣳ शास्ति ( ३० ) ।

आयुर्दास्त्वमस्मभ्यं घर्म वर्चोदा असीत्याह । आशिषमेवैतामाशास्ते ( ३१ ) ।

पिता नोऽसि पिता नो बोधेत्याह । बोधयत्येवैनम् ( ३२ ) ।

---

२२ द्वाविंशतितमविभागस्य भाष्यं २७० पृष्ठे द्रष्टव्यम् ।
२३ त्रयोविंशविभागस्य भाष्यं २७० पृष्ठे द्रष्टव्यम् ।
२४ चतुर्विंशविभागस्य भाष्यं २७० पृष्ठे द्रष्टव्यम् ।
२५ पञ्चविंशतितमविभागस्य भाष्यं २७१ पृष्ठे द्रष्टव्यम् ।
२६ षड्विंशतितमविभागस्य भाष्यं २७१ पृष्ठे द्रष्टव्यम् ।
२७ सप्तविंशतितमविभागस्य भाष्यं २७१ पृष्ठे द्रष्टव्यम् ।
२८ अष्टाविंशतितमविभागस्य भाष्यं २७२ पृष्ठे द्रष्टव्यम् ।
२९ एकोनत्रिंशत्तमविभागस्य भाष्यं २७२ पृष्ठे द्रष्टव्यम् ।
३० त्रिंशत्तमविभागस्य भाष्यं २७२ पृष्ठे द्रष्टव्यम् ।
३१ एकत्रिंशत्तमविभागस्य भाष्यं २७२ पृष्ठे द्रष्टव्यम् ।
३२ द्वात्रिंशत्तमविभागस्य भाष्यं २७३ पृष्ठे द्रष्टव्यम् ।

नवैतेऽवकाशा भवन्ति । पत्निर्यै दशमः । नव वै पुरुषे प्राणाः ( ९ ) नाभिर्दशमी । प्राणानेव यजमाने दधाति । अथो दशाक्षरा विराट् । अन्नं विराट् । विराजैवान्नाद्य-मवरुन्धे ( ३३ ) ।

यज्ञस्य शिरोऽच्छिद्यत । तद्देवा होत्राभिः प्रत्यदधुः । ऋत्विजोऽवेक्षन्ते । एता वै होत्राः । होत्राभिरेव यज्ञस्य शिरः प्रतिदधाति ( १० ) ( ३४ ) ।

रुचितमवेक्षन्ते । रुचिताद्धि प्रजापतिः प्रजा असृजत । प्रजानाꣳसृष्ट्यै ( ३५ ) ।

रुचितमवेक्षन्ते । रुचिताद्धि पर्जन्यो वर्षति । वर्षुकः पर्जन्यो भवति । सं प्रजा एधन्ते ( ३६ ) ।

रुचितमवेक्षन्ते । रुचितं वै ब्रह्मवर्चसम् । ब्रह्मवर्च-सिनो भवन्ति ( ११ ) ( ३७ ) ।

अधीयन्तोऽवेक्षन्ते । सर्वमायुर्यन्ति ( ३८ ) ।

न पत्न्यवेक्षेत । यत्पत्न्यवेक्षेत प्रजायेत । प्रजां त्वस्यै निर्दहेत् । यन्नावेक्षेत । न प्रजायेत । नास्यै प्रजां निर्द-हेत् । तिरस्कृत्य यजुर्वाचयति । प्रजायते । नास्यै प्रजां निर्दहति ( ३९ ) ।

त्वष्टीमती ते सपेयेत्याह । सपाद्धि प्रजाः प्रजा-यन्ते ( १२ ) ४० ।

---

३३ त्रयस्त्रिंशत्तमविभागस्य भाष्यं २७४ पृष्ठे द्रष्टव्यम् ।
३४ चतुस्त्रिंशत्तमविभागस्य भाष्यं २७४ पृष्ठे द्रष्टव्यम् ।
३५ पञ्चत्रिंशत्तमविभागस्य भाष्यं २७५ पृष्ठे द्रष्टव्यम् ।
३६ षट्त्रिंशविभागस्य भाष्यं २७५ पृष्ठे द्रष्टव्यम् ।
३७ सप्तत्रिंशविभागस्य भाष्यं २७५ पृष्ठे द्रष्टव्यम् ।
३८ अष्टात्रिंशविभागस्य भाष्यं २७५ पृष्ठे द्रष्टव्यम् ।
३९ एकोनचत्वारिंशविभागस्य भाष्यं २७६ पृष्ठे द्रष्टव्यम् ।
४० चत्वारिंशविभागस्य भाष्यं २७६ पृष्ठे द्रव्यष्टम् ।

ऋतवो हि शिरः सर्वं पृष्ठे प्रष्टणक्त्यनिपद्यमानमित्याह गतेत्याह शारदावेवास्मा ऋतू कल्पयति रुन्धे कवीनामित्याह प्राणाः प्रतिदधाति भवन्ति वाचयति चत्वारि च ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके पञ्चमप्रपाठके षष्ठोऽनुवाकः ॥ ६ ॥

---

अथ पञ्चमे सप्तमोऽनुवाकः ।

---

देवस्य त्वा सवितुः प्रसव इति रशनामादत्ते प्रसूत्यै । अश्विनोर्बाहुभ्यामित्याह । अश्विनौ हि देवानामध्वर्यू आस्ताम् । पूष्णो हस्ताभ्यामित्याह यत्यै ( १ )।

आददेऽदित्यै रास्नाऽसीत्याह यजुष्कृत्यै ( २ )।

इड एह्यदित एहि सरस्वत्येहीत्याह । एतानि वा अस्यै देवनामानि । देवनामैरेवैनामाह्वयति ( ३ )।

असावेह्यसावेह्यसावेहीत्याह । एतानि वा अस्यै मनुष्यनामानि ( १ )। मनुष्यनामैरेवैनामाह्वयति ( ४ )।

षट्संपद्यन्ते । षड्वा ऋतवः । ऋतुभिरेवैनामाह्वयति ( ५ )।

अदित्या उष्णीषमसीत्याह । यथा यजुरेवैतत् ( ६ )।

वायुरस्यैड इत्याह । वायुदेवत्यो वै वत्सः ( ७ )।

---

१ प्रथमविभागस्य भाष्यं २७७ पृष्ठे द्रष्टव्यम् ।
२ द्वितीयविभागस्य भाष्यं २७८ पृष्ठे द्रष्टव्यम् ।
३ तृतीयविभागस्य भाष्यं २७८ पृष्ठे द्रष्टव्यम् ।
४ चतुर्थविभागस्य भाष्यं २७८ पृष्ठे द्रष्टव्यम् ।
५ पञ्चमविभागस्य भाष्यं २७९ पृष्ठे द्रष्टव्यम् ।
६ षष्ठविभागस्य भाष्यं २७९ पृष्ठे द्रष्टव्यम् ।
७ सप्तमविभागस्य भाष्यं २७९ पृष्ठे द्रष्टव्यम् ।

पूषा त्वोपावसृजत्वित्याह। पौष्णा वै देवतया पशवः (२)। स्वयैवैनं देवतयोपावसृजति (८)।

अश्विभ्यां प्रदापयेत्याह। अश्विनौ वै देवानां भिषजौ। ताभ्यामेवास्मै भेषजं करोति (९)।

यस्ते स्तनः शशय इत्याह। स्तौत्येवैनाम् (१०)।

उस्र घर्मꣳ शिꣳषोस्र घर्मं पाहि घर्माय शिꣳषेत्याह। यथा ब्रूयादमुष्मै देहीति। तादृगेव तत् (११)।

बृहस्पतिस्त्वोपसीदत्वित्याह (३)। ब्रह्म वै देवानां बृहस्पतिः। ब्रह्मणैवैनामुपसीदति (१२)।

दानवः स्थ पेरव इत्याह। मेध्यानेवैनान्करोति (१३)।

विष्वग्वृतो लोहितेनेत्याह व्यावृत्त्यै (१४)।

अश्विभ्यां पिन्वस्व सरस्वत्यै पिन्वस्व पूष्णे पिन्वस्व बृहस्पतये पिन्वस्वेत्याह। एताभ्यो ह्येषा देवताभ्यः पिन्वते (१५)।

इन्द्राय पिन्वस्वेन्द्राय पिन्वस्वेत्याह। इन्द्रमेव भागधेयेन समर्धयति (१६)।

द्विरिन्द्रायेत्याह (४)। तस्मादिन्द्रो देवतानां भूयिष्ठभाक्तमः (१७)।

---

८ अष्टमविभागस्य भाष्यं २७९ पृष्ठे द्रष्टव्यम्।

९ नवमविभागस्य भाष्यं २७९ पृष्ठे द्रष्टव्यम्।

१० दशमविभागस्य भाष्यं २८० पृष्ठे द्रष्टव्यम्।

११ एकादशविभागस्य भाष्यं २८० पृष्ठे द्रष्टव्यम्।

१२ द्वादशविभागस्य भाष्य २८१ पृष्ठे द्रष्टव्यम्।

१३ त्रयोदशविभागस्य भाष्यं २८१ पृष्ठे द्रष्टव्यम्।

१४ चतुर्दशविभागस्य भाष्यं २८१ पृष्ठे द्रष्टव्यम्।

१५ पञ्चदशविभागस्य भाष्यं २८१ पृष्ठे द्रष्टव्यम्।

१६ षोडशविभागस्य भाष्यं २८२ पृष्ठे द्रष्टव्यम्।

१७ सप्तदशविभागस्य भाष्यं २८२ पृष्ठे द्रष्टव्यम्।

गायत्रोऽसि त्रैष्टुभोऽसि जागतमसीति शफोपयमानादत्ते। छन्दोभिरेवैनानादत्ते (१८)।

सहोर्जो भागेनोपमेहीत्याह। ऊर्ज एवैनं भागमकः (१९)।

अश्विनौ वा एतद्यज्ञस्य शिरः प्रतिदधतावब्रूताम्। आवाभ्यामेव पूर्वाभ्यां वषट्क्रियाता इति। इन्द्राश्विना मधुनः सारघस्येत्याह। अश्विभ्यामेव पूर्वाभ्यां वषट्करोति। अथो अश्विनावेव भागधेयेन समर्धयति (५),(२०)।

घर्मं पात वसवो यजता वडित्याह। वसूनेव भागधेयेन समर्धयति (२१)।

यद्वषट्कुर्यात्। यातयामाऽस्य वषट्कारः स्यात्। यन्न वषट्कुर्यात्। रक्षाꣳसि यज्ञꣳ हन्युः। वडित्याह। परोक्षमेव वषट्करोति। नास्य यातयामा वषट्कारो भवति। न यज्ञꣳ रक्षाꣳसि घ्नन्ति (६) (२२)।

स्वाहा त्वा सूर्यस्य रश्मये वृष्टिवनये जुहोमीत्याह। यो वा अस्य पुण्यो रश्मिः। स वृष्टिवनिः। तस्मा एवैनं जुहोति (२३)।

मधु हविरसीत्याह। स्वदयत्येवैनम् (२४)।

सूर्यस्य तपस्तपेत्याह। यथा यजुरेवैतत् (२५)।

---

१८ अष्टादशविभागस्य भाष्यं २८२ पृष्ठे द्रष्टव्यम्।
१९ एकोनविंशविभागस्य भाष्यं २८२ पृष्ठे द्रष्टव्यम्।
२० विंशविभागस्य भाष्यं २८३ पृष्ठे द्रष्टव्यम्।
२१ एकविंशविभागस्य भाष्यं २८३ पृष्ठे द्रष्टव्यम्।
२२ द्वाविंशविभागस्य भाष्यं २८३ पृष्ठे द्रष्टव्यम्।
२३ त्रयोविंशविभागस्य भाष्यं २८४ पृष्ठे द्रष्टव्यम्।
२४ चतुर्विंशविभागस्य भाष्यं २८४ पृष्ठे द्रष्टव्यम्।
२५ पञ्चविंशविभागस्य भाष्यं २८४ पृष्ठे द्रष्टव्यम्।

द्यावापृथिवीभ्यां त्वा परिगृह्णामीत्याह । द्यावापृथिवीभ्यामेवैनं परिगृह्णाति ( ७ ). ( २६ ) ।

अन्तरिक्षेण त्वोपयच्छामीत्याह । अन्तरिक्षेणैवैनमुपयच्छति । न वा एतं मनुष्यो भर्तुमर्हति ( २७ ) ।

देवानां त्वा पितृणामनुमतो भर्तुंशकेयमित्याह । देवैरेवैनं पितृभिरनुमत आदत्ते ( २८ ) ।

वि वा एनमेतदर्धयन्ति । यत्पश्चात्प्रवृज्य पुरो जुह्वति । तेजोऽसि तेजोऽनुप्रेहीत्याह । तेज एवास्मिन्दधाति ( २९ ) ।

दिविस्पृङ्मा मा हिंसीरन्तरिक्षस्पृङ्मा मा हिंसीः पृथिविस्पृङ्मा मा हिंसीरित्याहाहिंसायै (८), (३०) ।

सुवरसि सुवर्मे यच्छ दिवं यच्छ दिवो मा पाहीत्याह । आशिषमेवैतामाशास्ते ( ३१ ) ।

शिरो वा एतद्यज्ञस्य यत्प्रवर्ग्यः । आत्मा वायुः । उद्यत्य वातनामान्याह । आत्मन्नेव यज्ञस्य शिरः प्रतिदधाति ( ३२ ) ।

अनवानम् । प्राणानाꣳ संतत्यै ( ३३ ) ।

पञ्चाऽऽह ( ९ ) । पाङ्क्तो यज्ञः । यावानेव यज्ञः । तस्य शिरः प्रतिदधाति ( ३४ ) ।

---

२६ षड्विंशविभागस्य भाष्यं २८५ पृष्ठे द्रष्टव्यम् ।
२७ सप्तविंशविभागस्य भाष्यं २८५ पृष्ठे द्रष्टव्यम् ।
२८ अष्टाविंशविभागस्य भाष्यं २८५ पृष्ठे द्रष्टव्यम् ।
२९ एकोनत्रिंशविभागस्य भाष्यं २८६ पृष्ठे द्रष्टव्यम् ।
३० त्रिंशविभागस्य भाष्यं २८६ पृष्ठे द्रष्टव्यम् ।
३१ एकत्रिंशविभागस्य भाष्यं २८६ पृष्ठे द्रष्टव्यम् ।
३२ द्वात्रिंशविभागस्य भाष्यं २८७ पृष्ठे द्रष्टव्यम् ।
३३ त्रयस्त्रिंशविभागस्य भाष्यं २८८ पृष्ठे द्रष्टव्यम् ।
३४ चतुस्त्रिंशविभागस्य भाष्यं २८८ पृष्ठे द्रष्टव्यम् ।

अग्नये त्वा वसुमते स्वाहेत्याह । असौ वा आदित्योऽग्निर्वसुमान् । तस्मा एवैनं जुहोति ( ३५ ) ।

सोमाय त्वा रुद्रवते स्वाहेत्याह । चन्द्रमा वै सोमो रुद्रवान् । तस्मा एवैनं जुहोति । वरुणाय त्वाऽऽदित्यवते स्वाहेत्याह ( १० ) । अप्सु वै वरुण आदित्यवान् । तस्मा एवैनं जुहोति । बृहस्पतये त्वा विश्वदेव्यावते स्वाहेत्याह । ब्रह्म वै देवानां बृहस्पतिः । ब्रह्मण एवैनं जुहोति ( ३६ ) ।

सवित्रे त्वर्भुमते विभुमते प्रभुमते वाजवते स्वाहेत्याह । संवत्सरो वै सवितर्भुमान्विभुमान्प्रभुमान्वाजवान् । तस्मा एवैनं जुहोति ( ३७ ) ।

यमाय त्वाऽङ्गिरस्वते पितृमते स्वाहेत्याह । प्राणो वै यमोऽङ्गिरस्वान्पितृमान् ( ११ ) तस्मा एवैनं जुहोति ( ३८ ) ।

एताभ्य एवैनं देवताभ्यो जुहोति ( ३९ ) ।

दश संपद्यन्ते । दशाक्षरा विराट् । अन्नं विराट् । विराजैवान्नाद्यमवरुन्धे ( ४० ।

रौहिणाभ्यां वै देवाः सुवर्गं लोकमायन् । तद्रौहिणयो रौहिणत्वम् । यद्रौहिणौ भवतः । रौहिणाभ्यामेव तद्यजमानः सुवर्गं लोकमेति ( ४१ ) ।

अहर्ज्योतिः केतुना जुषताꣳ सुज्योतिर्ज्योतिषाꣳ

---

३५ पञ्चत्रिंशविभागस्य भाष्यं २८८ पृष्ठे द्रष्टव्यम् ।

३६ षट्त्रिंशविभागस्य भाष्यं २८८ पृष्ठे द्रष्टव्यम् ।

३७ सप्तत्रिंशविभागस्य भाष्यं २८८ पृष्ठे द्रष्टव्यम् ।

३८ अष्टात्रिंशविभागस्य भाष्यं २८८ पृष्ठे द्रष्टव्यम् ।

३९ एकोनचत्वारिंशविभागस्य भाष्यं २८८ पृष्ठे द्रष्टव्यम् ।

४० चत्वारिंशविभागस्य भाष्यं २८९ पृष्ठे द्रष्टव्यम् ।

४१ एकचत्वारिंशविभागस्य भाष्यं २८९ पृष्ठे द्रष्टव्यम् ।

स्वाहा रात्रिर्ज्योतिः केतुना जुषताꣳ सुज्योतिर्ज्योतिषाꣳ स्वाहेत्याह । आदित्यमेव तदमुष्मिँल्लोकेऽह्ना परस्ताद्दाधार । रात्रिया अवस्तात् । तस्मादसावादित्योऽमुष्मिँल्लोकेऽहोरात्राभ्यां धृतः ( १२ ), ( ४२ ) ॥

मनुष्यनामानि पशवः सीदन्त्वित्याहेन्द्रायेत्याहार्धयन्ति घ्नन्ति गृह्णात्यहिꣳसायै पञ्चाऽऽहाऽऽदित्यवते स्वाहेत्याह पितृमानेति चत्वारि च ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके पञ्चमप्रपाठके सप्तमोऽनुवाकः ॥ ७ ॥

---

अथ पञ्चमेऽष्टमोऽनुवाकः ।

विश्वा आशा दक्षिणसदित्याह । विश्वानेव देवान्प्रीणाति । अथो दुरिष्ट्या एवैनं पाति ( १ ) ।

विश्वान्देवानयाडिहेत्याह । विश्वानेव देवान्भागधेयेन समर्धयति ( २ ) ।

स्वाहाकृतस्य घर्मस्य मधोः पिबतमश्विनेत्याह । अश्विनावेव भागधेयेन समर्धयति ( ३ ) ।

स्वाहाऽग्नये यज्ञियाय शं यजुर्भिरित्याह । अभ्येवैनं धारयति । अथो हविरेवाकः ( १ ), ( ४ ) ।

अश्विना घर्मं पातꣳ हार्दिवानमहर्दिवाभिरूतिभिरित्याह । अश्विनावेव भागधेयेन समर्धयति । ( ५ ) ।

---

४२ द्विचत्वारिंशविभागस्य भाष्यं २८९ पृष्ठे द्रष्टव्यम् ।
१ प्रथमविभागस्य भाष्यं २९० पृष्ठे द्रष्टव्यम् ।
२ द्वितीयविभागस्य भाष्यं २९० पृष्ठे द्रष्टव्यम् ।
३ तृतीयविभागस्य भाष्यं २९० पृष्ठे द्रष्टव्यम् ।
४ चतुर्थविभागस्य भाष्यं २९० पृष्ठे द्रष्टव्यम् ।
५ पञ्चमविभागस्य भाष्यं २९१ पृष्ठे द्रष्टव्यम् ।

अनु वां द्यावापृथिवी मंऽसातामित्याहानुमत्यै ( ६ )।

स्वाहेन्द्राय स्वाहेन्द्रावडित्याह। इन्द्राय हि पुरो हूयते ( ७ )।

आश्राव्याऽऽह घर्मस्य यजेति। वषट्कृते जुहोति। रक्षसामपहत्यै। अनुयजति स्वगाकृत्यै ( ८ )।

घर्ममपातमश्विनेत्याह ( २ )। पूर्वमेवोदितम्। उत्तरेणाभिगृणाति ( ९ )।

अनु वां द्यावापृथिवी अंमंऽसातामित्याहानुमत्यै (१०)।

तं प्राव्यं यथावण्णमो दिवे नमः पृथिव्या इत्याह। यथा यजुरेवैतत्॥ ( ११ )।

दिवि धा इमं यज्ञं यज्ञमिमं दिवि धा इत्याह। सुवर्गमेवैनं लोकं गमयति ( १२ )।

दिवं गच्छान्तरिक्षं गच्छ पृथिवीं गच्छेत्याह। एष्वेवैनं लोकेषु प्रतिष्ठापयति ( १३ )।

पञ्च प्रदिशो गच्छेत्याह ( ३ )। दिक्ष्वेवैनं प्रतिष्ठापयति। देवान्घर्मपान्गच्छ पितॄन्घर्मपान्गच्छेत्याह। उभयेष्वेवैनं प्रतिष्ठापयति ( १४ )।

यत्पिन्वते। वर्षुकः पर्जन्यो भवति। तस्मात्पिन्वमानः पुण्यः ( १५ )।

६ षष्ठविभागस्य भाष्यं २९१ पृष्ठे द्रष्टव्यम्।
७ सप्तमविभागस्य भाष्यं २९१ पृष्ठे द्रष्टव्यम्।
८ अष्टमविभागस्य भाष्यं २९१ पृष्ठे द्रष्टव्यम्।
९ नवमविभागस्य भाष्यं २९२ पृष्ठे द्रष्टव्यम्।
१० दशमविभागस्य भाष्यं २९३ पृष्ठे द्रष्टव्यम्।
११ एकादशविभागस्य भाष्यं २९३ पृष्ठे द्रष्टव्यम्।
१२ द्वादशविभागस्य भाष्यं २९३ पृष्ठे द्रष्टव्यम्।
१३ त्रयोदशविभागस्य भाष्यं २९३ पृष्ठे द्रष्टव्यम्।
१४ चतुर्दशविभागस्य भाष्यं २९३ पृष्ठे द्रष्टव्यम्।
१५ पञ्चदशविभागस्य भाष्यं २९४ पृष्ठे द्रष्टव्यम्।

यत्प्राङ्पिन्वते । तद्देवानाम् । यद्दक्षिणा । तत्पितृणाम् ( ४ ) । यत्प्रत्यक् । तन्मनुष्याणाम् । यदुदङ् । तद्रुद्राणाम् ( १६ ) ।

प्राञ्चमुदञ्चं पिन्वयति । देवत्राऽकः ( १७ ) ।

अथो खलु । सर्वा अनु दिशः पिन्वयति । सर्वा दिशः समेधन्ते ( १८ ) ।

अन्तःपरिधि पिन्वयति ( ५ ) । तेजसोऽस्कन्दाय ( १९ ) ।

इषे पीपिहीत्यूर्जे पीपिहीत्याह । इषमेवोर्जं यजमाने दधाति ( २० ) ।

यजमानाय पीपिहीत्याह । यजमानायैवैतामाशिषमाशास्ते ( २१ ) ।

मह्यं ज्यैष्ठ्याय पीपिहीत्याह । आत्मन एवैतामाशिषमाशास्ते ( २२ ) ।

त्विष्यै त्वा द्युम्नाय त्वेन्द्रियाय त्वा भूत्यै त्वेत्याह । यथा यजुरेवैतत् ( २३ ) ।

धर्मासि सुधर्मा मे न्यस्मे ब्रह्माणि धारयेत्याह ( ६ ) । ब्रह्मन्नेवैनं प्रतिष्ठापयति ( २४ ) ।

नेत्त्वा वातः स्कन्दयादिति ( २५ ) ।

---

१६ षोडशविभागस्य भाष्यं २९४ पृष्ठे द्रष्टव्यम् ।
१७ सप्तदशविभागस्य भाष्यं २९४ पृष्ठे द्रष्टव्यम् ।
१८ अष्टादशविभागस्य भाष्यं २९४ पृष्ठे द्रष्टव्यम् ।
१९ एकोनविंशविभागस्य भाष्यं २९४ पृष्ठे द्रष्टव्यम् ।
२० विंशविभागस्य भाष्यं २९५ पृष्ठे द्रष्टव्यम् ।
२१ एकविंशविभागस्य भाष्यं २९५ पृष्ठे द्रष्टव्यम् ।
२२ द्वाविंशविभागस्य भाष्यं २९५ पृष्ठे द्रष्टव्यम् ।
२३ त्रयोविंशविभागस्य भाष्यं २९५ पृष्ठे द्रष्टव्यम् ।
२४ चतुर्विंशविभागस्य भाष्यं २९६ पृष्ठे द्रष्टव्यम् ।
२५ पञ्चविंशविभागस्य भाष्य २९६ पृष्ठे द्रष्टव्यम् ।

यद्यभिचरेत् । अमुष्य त्वा प्राणे सादयाम्यमुना सह निरर्थं गच्छेति ब्रूयाद्यं द्विष्यात् । यमेव द्वेष्टि । तेनैनꣳ सह निरर्थं गमयति ( २६ ) ।

पूष्णे शरसे स्वाहेत्याह । या एव देवता हुतभागाः । ताभ्य एवैनं जुहोति ( २७ ) ।

ग्रावभ्यः स्वाहेत्याह । या एवान्तरिक्षे वाचः ( ७ ) । ताभ्य एवैनं जुहोति ( २८ ) ।

प्रतिरेभ्यः स्वाहेत्याह । प्राणा वै देवाः प्रतिराः । तेभ्य एवैनं जुहोति ( २९ ) ।

द्यावापृथिवीभ्याꣳ स्वाहेत्याह । द्यावापृथिवीभ्यामेवैनं जुहोति ( ३० ) ।

पितृभ्यो घर्मपेभ्यः स्वाहेत्याह । ये वै यज्वानः । ते पितरो घर्मपाः । तेभ्य एवैनं जुहोति ( ८ ), (३१) ।

रुद्राय रुद्रहोत्रे स्वाहेत्याह । रुद्रमेव भागधेयेन समर्धयति ( ३२ ) ।

सर्वतः समनक्ति । सर्वत एव रुद्रं निरवदयते (३३) ।

उदञ्चं निरस्यति । एषा वै रुद्रस्य दिक् । स्वायामेव दिशि रुद्रं निरवदयते ( ३४ ) ।

अप उपस्पृशति मेध्यत्वाय ( ३५ ) ।

---

२६ षड्विंशविभागस्य भाष्यं २९६ पृष्ठे द्रष्टव्यम् ।
२७ सप्तविंशविभागस्य भाष्यं २९७ पृष्ठे द्रष्टव्यम् ।
२८ अष्टाविंशविभागस्य भाष्यं २९७ पृष्ठे द्रष्टव्यम् ।
२९ एकोनत्रिंशविभागस्य भाष्यं २९७ पृष्ठे द्रष्टव्यम् ।
३० त्रिंशविभागस्य भाष्यं २९७ पृष्ठे द्रष्टव्यम् ।
३१ एकत्रिंशविभागस्य भाष्यं २९७ पृष्ठे द्रष्टव्यम् ।
३२ द्वात्रिंशविभागस्य भाष्यं २९८ पृष्ठे द्रष्टव्यम् ।
३३ त्रयस्त्रिंशविभागस्य भाष्यं २९८ पृष्ठे द्रष्टव्यम् ।
३४ चतुस्त्रिंशविभागस्य भाष्यं २९८ पृष्ठे द्रष्टव्यम् ।
३५ पञ्चत्रिंशविभागस्य भाष्यं २९८ पृष्ठे द्रष्टव्यम् ।

नान्वीक्षेत। यदन्वीक्षेत (९)। चक्षुरस्य प्रमायुकꣳ स्यात्। तस्मान्नान्वीक्ष्यः (३६)।

अपीपरो माऽह्नो रात्रियै मा पाह्येषा ते अग्ने समित्तया समिध्यस्वाऽऽयुर्मे दा वर्चसा माऽऽञ्जीरित्याह। आयुरेवास्मिन्वर्चो दधाति। अपीपरो मा रात्रिया अह्नो मा पाह्येषा ते अग्ने समित्तया समिध्यस्वाऽऽयुर्मे दा वर्चसा माऽऽञ्जीरित्याह। आयुरेवास्मिन्वर्चो दधाति (३७)।

अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहा सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहेत्याह। यथा यजुरेवैतत् (३८)।

ब्रह्मवादिनो वदन्ति। होतव्यमग्निहोत्रा३ न होतव्या३मिति (१०)। यद्यजुषा जुहुयात्। अयथापूर्वमाहुती जुहुयात्। यन्न जुहुयात्। अग्निः पराभवेत्। भूः स्वाहेत्येव होतव्यम्। यथापूर्वमाहुती जुहोति। नाग्निः पराभवति (३९)।

हुतꣳ हविर्मधु हविरित्याह। स्वदयत्येवैनम् (४०)।

इन्द्रतमेऽग्नावित्याह (११)। प्राणो वा इन्द्रतमोऽग्निः। प्राण एवैनमिन्द्रतमेऽग्नौ जुहोति (४१)।

पिता नोऽसि मा मा हिꣳसीरित्याहाहिꣳसायै।(४२)।

अश्याम ते देव घर्म मधुमतो वाजवतः पितुमत इत्याह। आशिषमेवैतामाशास्ते (४३)।

---

३६ षट्त्रिंशविभागस्य भाष्यं २९८ पृष्ठे द्रष्टव्यम्।

३७ सप्तत्रिंशविभागस्य भाष्यं २९९ पृष्ठे द्रष्टव्यम्।

३८ अष्टात्रिंशविभागस्य भाष्यं ३०० पृष्ठे द्रष्टव्यम्।

३९ एकोनचत्वारिंशविभागस्य भाष्यं ३०० पृष्ठे द्रष्टव्यम्।

४० चत्वारिंशविभागस्य भाष्यं ३०१ पृष्ठे द्रष्टव्यम्।

४१ एकचत्वारिंशविभागस्य भाष्यं ३०१ पृष्ठे द्रष्टव्यम्।

४२ द्विचत्वारिंशविभागस्य भाष्यं ३०१ पृष्ठे द्रष्टव्यम्।

४३ त्रिचत्वारिंशविभागस्य भाष्यं ३०१ पृष्ठे द्रष्टव्यम्।

स्वधाविनोऽशीमहि त्वा मा मा हिꣳसीरित्याहाहिꣳसायै ( ४४ )।

तेजसा वा एते व्यृध्यन्ते। ये प्रवर्ग्येण चरन्ति। प्राश्नन्ति। तेज एवात्मन्दधते ( १२ ), ( ४५ )।

संवत्सरं न माꣳसमश्नीयात्। न रामामुपेयात्। न मृन्मयेन पिबेत्। नास्य राम उच्छिष्टं पिबेत्। तेज एव तत्सꣳश्यति ( ४६ )।

देवासुराः संयत्ता आसन्। ते देवा विजयमुपयन्तः। विभ्राजि सौर्ये ब्रह्म संन्यदधत। यत्किंच दिवाकीर्त्यम्। तदेतेनैव व्रतेनागोपायत्। तस्मादेतद्व्रतं चार्यम्। तेजसो गोपीथाय। तस्मादेतानि यजूꣳषि विभ्राजः सौर्यस्येत्याहुः ( ४७ )।

स्वाहा त्वा सूर्यस्य रश्मिभ्य इति प्रातः सꣳसादयति। स्वाहा त्वा नक्षत्रेभ्य इति सायम्। एता वा एतस्य देवताः। ताभिरेवैनꣳ समर्धयति (१३),( ४८ )॥

अकरश्विनेत्याह प्रदिशो गच्छेत्याह पितृणामन्तः परिधि पिन्वयाति धारयेत्याह वाचो घर्मपास्तेभ्य एवैनं जुहोत्यन्वीक्षेत होतव्या३मित्यग्नावित्याह दधतेऽगोपायत्सप्त च ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके पञ्चमप्रपाठकेऽष्टमोऽनुवाकः ॥ ८ ॥

---

४४ चतुश्चत्वारिंशविभागस्य भाष्यं ३०१ पृष्ठे द्रष्टव्यम्।

४५ पञ्चचत्वारिंशविभागस्य भाष्यं ३०१ पृष्ठे द्रष्टव्यम्।

४६ षट्चत्वारिंशविभागस्य भाष्यं ३०२ पृष्ठे द्रष्टव्यम्।

४७ सप्तचत्वारिंशविभागस्य भाष्यं ३०२ पृष्ठे द्रष्टव्यम्।

४८ अष्टाचत्वारिंशविभागस्य भाष्यं ३०३ पृष्ठे द्रष्टव्यम्।

अथ पञ्चमे नवमोऽनुवाकः ।

---

घर्म या ते दिवि शुगिति तिस्र आहुतीर्जुहोति । छन्दोभिरेवास्यैभ्यो लोकेभ्यः शुचमवयजते ( १ ) ।

इयत्यग्रे जुहोति । अथेयत्यथेयाति । त्रयं इमे लोकाः । एभ्य एव लोकेभ्यः शुचमवयजते ( २ ) ।

अनु नोऽद्यानुमतिरित्याहानुमत्यै ( ३ ) ।

दिवस्त्वा परस्पाया इत्याह । दिव एवेमाँल्लोका-न्दाधार ( ४ ) ।

ब्रह्मणस्त्वा परस्पाया इत्याह ( १ ) । एष्वेव लोकेषु प्रजा दाधार ( ५ ) ।

प्राणस्य त्वा परस्पाया इत्याह । प्रजास्वेव प्राणा-न्दाधार ( ६ ) ।

शिरो वा एतद्यज्ञस्य । यत्प्रवर्ग्यः । असौ खलु वा आदित्यः प्रवर्ग्यः । तं यद्दक्षिणा प्रत्यञ्चमुदञ्चमुद्वासयेत् । जिह्मं यज्ञस्य शिरो हरेत् । प्राञ्चमुद्वासयाति । पुरस्तादेव यज्ञस्य शिरः प्रतिदधाति ( २ ) । प्राञ्चमुद्वासयाति । तस्मादसावादित्यः पुरस्तादुदेति ( ७ ) ।

शफोपयमान्पवित्राणि धृष्टी इत्यन्ववहरन्ति । सात्मा-नमेवैनꣳ सतनुं करोति ( ८ ) ।

---

१ प्रथमविभागस्य भाष्यं ३०४ पृष्ठे द्रष्टव्यम् ।
२ द्वितीयविभागस्य भाष्यं ३०४ पृष्ठे द्रष्टव्यम् ।
३ तृतीयविभागस्य भाष्यं ३०५ पृष्ठे द्रष्टव्यम् ।
४ चतुर्थविभागस्य भाष्यं ३०५ पृष्ठे द्रष्टव्यम् ।
५ पञ्चमविभागस्य भाष्यं ३०६ पृष्ठे द्रष्टव्यम् ।
६ षष्ठविभागस्य भाष्यं ३०६ पृष्ठे द्रष्टव्यम् ।
७ सप्तमविभागस्य भाष्यं ३०६ पृष्ठे द्रष्टव्यम् ।
८ अष्टमविभागस्य भाष्यं ३०६ पृष्ठे द्रष्टव्यम् ।

सात्माऽमुष्मिँल्लोके भवति । य एवं वेद (९) ।

औदुम्बराणि भवन्ति । ऊर्ग्वा उदुम्बरः । ऊर्जमेवा-वरुन्धे (१०) ।

वर्त्मना वा अन्वित्य (३) । यज्ञꣳ रक्षाꣳसि जिघाꣳसन्ति । साम्ना प्रस्तोताऽन्ववैति । साम वै रक्षोहा । रक्षसामपहत्यै (११) ।

त्रिर्निधनमुपैति । त्रय इमे लोकाः । एभ्य एव लोकेभ्यो रक्षाꣳस्यपहन्ति (१२) ।

पुरुषः पुरुषो निधनमुपैति । पुरुषः पुरुषो हि रक्षस्वी । रक्षसामपहत्यै (४) (१३) ।

यत्पृथिव्यामुद्वासयेत् । पृथिवीꣳ शुचाऽर्पयेत् । यदप्सु । अपः शुचाऽर्पयेत् । यदोषधीषु । ओषधीः शुचाऽर्पयेत् । यद्वनस्पतिषु । वनस्पतीञ्छुचाऽर्पयेत् । हिरण्यं निधायो-द्वासयति । अमृतं वै हिरण्यम् (५) । अमृत एवैनं प्रति-ष्ठापयति (१४) ।

वल्गुरसि शंयुधाया इति त्रिः परिषिञ्चन्पर्येति । त्रिवृद्वा अग्निः । यावानेवाग्निः । तस्य शुचꣳ शमयति (१५)

त्रिः पुनः पर्येति । षट्संपद्यन्ते । षड्वा ऋतवः । ऋतु-भिरेवास्य शुचꣳ शमयति (१६) ।

---

९ नवमविभागस्य भाष्यं ३०७ पृष्ठे द्रष्टव्यम् ।
१० दशमविभागस्य भाष्यं ३०७ पृष्ठे द्रष्टव्यम् ।
११ एकादशविभागस्य भाष्यं ३०७ पृष्ठे द्रष्टव्यम् ।
१२ द्वादशविभागस्य भाष्य ३०७ पृष्ठे द्रष्टव्यम् ।
१३ त्रयोदशविभागस्य भाष्यं ३०८ पृष्ठे द्रष्टव्यम् ।
१४ चतुर्दशविभागस्य भाष्यं ३०८ पृष्ठे द्रष्टव्यम् ।
१५ पञ्चदशविभागस्य भाष्यं ३०८ पृष्ठे द्रष्टव्यम् ।
१६ षोडशविभागस्य भाष्यं ३०९ पृष्ठे द्रष्टव्यम् ।

चतुःस्रक्तिर्नाभिर्ऋतस्येत्याह (१६)। इयं वा ऋतम्।
तस्या एष एव नाभिः। यत्प्रवर्ग्यः। तस्मादेवमाह(१७)।
सदो विश्वायुरित्याह। सदो हीयम् (१८)।
अप द्वेषो अप ह्वर इत्याह भ्रातृव्यापनुत्त्यै (१९)।
घर्मैतत्तेऽन्नमेतत्पुरीषमिति दध्ना मधुमिश्रेण पूरयति।
ऊर्ग्वा अन्नाद्यं दधि। ऊर्जैवैनमन्नाद्येन समर्धयति (७) (२०)।
अनशनायुको भवति। य एवं वेद (२१)।
रन्तिर्नामासि दिव्यो गन्धर्व इत्याह। रूपमेवास्यैतन्महिमानꣳ रन्तिं बन्धुतां व्याचष्टे (२२)।
समहमायुषा सं प्राणेनेत्याह। आशिषमेवैतामाशास्ते (२३)।
व्यसौ योऽस्मान्द्वेष्टि यं च वयं द्विष्म इत्याह। अभिचार एवास्यैषः (२४)।
अचिक्रदद्वृषा हरिरित्याह। वृषा ह्येषः (८)।
वृषा हरिः (२५)।
महान्मित्रो न दर्शत इत्याह। स्तौत्येवैनमेतत् (२६)।
चिदसि समुद्रयोनिरित्याह। स्वामेवैनं योनिं गमयति (२७)।

---

१७ सप्तदशविभागस्य भाष्यं ३०९ पृष्ठे द्रष्टव्यम्।
१८ अष्टादशविभागस्य भाष्यं ३०९ पृष्ठे द्रष्टव्यम्।
१९ एकोनविंशविभागस्य भाष्यं ३०९ पृष्ठे द्रष्टव्यम्।
२० विंशविभागस्य भाष्यं ३१० पृष्ठे द्रष्टव्यम्।
२१ एकविंशविभागस्य भाष्यं ३१० पृष्ठे द्रष्टव्यम्।
२२ द्वाविंशविभागस्य भाष्यं ३१० पृष्ठे द्रष्टव्यम्।
२३ त्रयोविंशविभागस्य भाष्यं ३११ पृष्ठे द्रष्टव्यम्।
२४ चतुर्विंशविभागस्य भाष्यं ३११ पृष्ठे द्रष्टव्यम्।
२५ पञ्चविंशविभागस्य भाष्यं ३११ पृष्ठे द्रष्टव्यम्।
२६ षड्विंशविभागस्य भाष्यं ३१२ पृष्ठे द्रष्टव्यम्।
२७ सप्तविंशविभागस्य भाष्यं ३१२ पृष्ठे द्रष्टव्यम्।

नमस्ते अस्तु मा मा हिꣳसीरित्याह । हिꣳसायै ( २८ ) । विश्वावसुꣳ सोमगन्धर्वमित्याह । यदेवास्य क्रियमाणस्यान्तर्यन्ति । तदेवास्यैतेनाऽऽप्याययति ( २९ ) । विश्वावसुरभि तन्नो गृणात्वित्याह ( ९ ) । पूर्वमेवोदितम् । उत्तरेणाभिगृणाति ॥ ( ३० ) ।

धियो हिन्वानो धिय इन्नो अव्यादित्याह । ऋतूनेवास्मै कल्पयति ( ३१ ) ।

प्राऽऽसां गन्धर्वो अमृतानि वोचदित्याह । प्राणा वा अमृताः । प्राणानेवास्मै कल्पयति ( ३२ ) ।

एतत्त्वं देव घर्म देवो देवानुपागा इत्याह । देवो ह्येष सन्देवानुपैति ( ३३ ) ।

इदमहं मनुष्यो मनुष्यानित्याह ( १० ) । मनुष्यो हि । एष सन्मनुष्यानुपैति ( ३४ ) ।

ईश्वरो वै प्रवर्ग्यमुद्वासयन् । प्रजां पशून्त्सोमपीथमनूद्वासः सोमपीथानुमेहि । सह प्रजया सह रायस्पोषेणेत्याह । प्रजामेव पशून्त्सोमपीथमात्मन्धत्ते ( ३५ ) ।

सुमित्रा न आप ओषधयः सन्त्वित्याह । आशिषमेवैतामाशास्ते ( ३६ ) ।

---

२८ अष्टाविंशविभागस्य भाष्यं ३१२ पृष्ठे द्रष्टव्यम् ।
२९ एकोनत्रिंशविभागस्य भाष्यं ३१३ पृष्ठे द्रष्टव्यम् ।
३० त्रिंशविभागस्य भाष्यं ३१३ पृष्ठे द्रष्टव्यम् ।
३१ एकत्रिंशविभागस्य भाष्यं ३१४ पृष्ठे द्रष्टव्यम् ।
३२ द्वात्रिंशविभागस्य भाष्यं ३१४ पृष्ठे द्रष्टव्यम् ।
३३ त्रयस्त्रिंशविभागस्य भाष्यं ३१४ पृष्ठे द्रष्टव्यम् ।
३४ चतुस्त्रिंशविभागस्य भाष्यं ३१५ पृष्ठे द्रष्टव्यम् ।
३५ पञ्चत्रिंशविभागस्य भाष्यं ३१५ पृष्ठे द्रष्टव्यम् ।
३६ षट्त्रिंशविभागस्य भाष्यं ३१५ पृष्ठे द्रष्टव्यम् ।

दुर्मित्रास्तस्मै भूयासुर्योऽस्मान्द्वेष्टि यं च वयं द्विष्म इत्याह । अभिचार एवास्यैषः ( ३७ ) ।

प्र वा एषोऽस्माल्लोकाच्च्यवते । यः प्रवर्ग्यमुद्वासयति । उदु त्यं चित्रमिति सौरीभ्यामृग्भ्यां पुनरेत्य गार्हपत्ये जुहोति । अयं वै लोको गार्हपत्यः । अस्मिन्नेव लोके प्रतितिष्ठति । असौ खलु वा आदित्यः सुवर्गो लोकः । यत्सौरी भवतः । तेनैव सुवर्गाल्लोकान्नैति (११)(३८) ॥

ब्रह्मणस्त्वा परस्पाया इत्याह दधात्यन्वित्यं रक्षस्वी रक्षसामपहत्यै वै हिरण्यमाहार्धयति ह्येष गृणात्वित्याह मनुष्यानित्याहास्यैषोऽष्टौ च ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके पञ्चमप्रपाठके नवमोऽनुवाकः ॥ ९ ॥

---

अथ पञ्चमे दशमोऽनुवाकः ।

प्रजापतिं वै देवाः शुक्रं पयोऽदुहन् । तदेभ्यो न व्यभवत् । तदग्निर्व्यकरोत् । तानि शुक्रियाणि सामान्यभवन् । तेषां यो रसोऽत्यक्षरत् । तानि शुक्रयजूꣳष्यभवन् । शुक्रियाणां वा एतानि शुक्रियाणि । सामपयसं वा एतयोरन्यत् । देवानामन्यत्पयः । यद्गोः पयः (१) । तत्सान्नः पयः । यदजायै पयः । तद्देवानां पयः । तस्माद्यत्रैतैर्यजुर्भिश्चरन्ति । तत्पयसा चरन्ति प्रजापतिमेव तद्देवान्पयसाऽन्नाद्येन समर्धयन्ति ( १ ) ।

---

३७ सप्तत्रिंशविभागस्य भाष्यं ३१६ पृष्ठे द्रष्टव्यम् ।

३८ अष्टात्रिंशविभागस्य भाष्यं ३१६ पृष्ठे द्रष्टव्यम् ।

१ प्रथमविभागस्य भाष्यं ३१७ पृष्ठे द्रष्टव्यम् ।

एष ह त्वै साक्षात्प्रवर्ग्यं भक्षयति । यस्यैवं विदुषः प्रवर्ग्यः प्रवृज्यते ( १ ) ।

उत्तरवेद्यामुद्वासयेत्तेजस्कामस्य । तेजो वा उत्तरवेदिः ( २ ) । तेजः प्रवर्ग्यः । तेजसैव तेजः समर्धयति (३) ।

उत्तरवेद्यामुद्वासयेदन्नकामस्य । शिरो वा एतद्यज्ञस्य । यत्प्रवर्ग्यः । मुखमुत्तरवेदिः । शीर्ष्णैव मुखꣳ संदधात्यन्नाद्याय । अन्नाद एव भवति ( ४ ) ।

यत्र खलु वा एतमुद्वासितं वयाꣳसि पर्यासते । परि वै ताꣳ समां प्रजा वयाꣳस्यासते ( २ ) । तस्मादुत्तरवेद्यामेवोद्वासयेत् । प्रजानां गोपीथाय ( ५ ) ।

पुरो वा पश्चाद्वोद्वासयेत् । पुरस्ताद्वा एतज्ज्योतिरुदेति । तत्पश्चान्निम्रोचति । स्वामेवैनं योनिमनूद्वासयति ( ६ ) ।

अपां मध्य उद्वासयेत् । अपां वा एतन्मध्याज्ज्योतिरजायत । ज्योतिः प्रवर्ग्यः । स्व एवैनं योनौ प्रतिष्ठापयति ( ४ ) ( ७ ) ।

यं द्विष्यात् । यत्र स स्यात् । तस्यां दिश्युद्वासयेत् । एष वा अग्निर्वैश्वानरः । यत्प्रवर्ग्यः । अग्निनैवैनं वैश्वानरेणाभिप्रवर्तयति ( ८ ) ।

औदुम्बर्याꣳ शाखायामुद्वासयेत् । ऊर्ग्वा उदुम्बरः ।

---

२ द्वितीयविभागस्य भाष्यं ३१७ पृष्ठे द्रष्टव्यम् ।

३ तृतीयविभागस्य भाष्यं ३१८ पृष्ठे द्रष्टव्यम् ।

४ चतुर्थविभागस्य भाष्यं ३१८ पृष्ठे द्रष्टव्यम् ।

५ पञ्चमविभागस्य भाष्यं ३१८ पृष्ठे द्रष्टव्यम् ।

६ षष्ठविभागस्य भाष्यं ३१८ पृष्ठे द्रष्टव्यम् ।

७ सप्तमविभागस्य भाष्यं ३१९ पृष्ठे द्रष्टव्यम् ।

८ अष्टमविभागस्य भाष्यं ३१९ पृष्ठे द्रष्टव्यम् ।

अन्नं प्राणः । शुग्घर्मः ( ५ ) । इदमहममुष्यांऽऽमुष्यायणस्य शुचा प्राणमपि दहामीत्याह । शुचैवास्य प्राणमपि दहति । ताजगार्तिमार्च्छति ( ९ ) ।

यत्र दर्भा उपदीकसंतताः स्युः । तदुद्वासयेद्वृष्टिकामस्य । एता वा अपामनूज्झावर्यो नाम । यद्दर्भाः । असौ खलु वा आदित्य इतो वृष्टिमुदीरयति । असावेवास्मा आदित्यो वृष्टिं नियच्छति । ता आपो नियता धन्वना यन्ति ( ६ ) (१०) ॥

गोः पयं उत्तरवेदिरासते स्थापयति घर्मो यन्ति ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके पञ्चमप्रपाठके दशमोऽनुवाकः ॥ १० ॥

अथ पञ्चम एकादशोऽनुवाकः ।

प्रजापतिः संभ्रियमाणः । सम्राट्संभृतः । घर्मः प्रवृक्तः । महावीर उद्वासितः । असौ खलु वावैष आदित्यः । यत्प्रवर्ग्यः । स एतानि नामान्यकुरुत ( १ ) ।

य एवं वेद । विदुरेनं नाम्ना (२) ।

ब्रह्मवादिनो वदन्ति ( १ ) । यो वै वसीयाश्सं यथानाममुपचरति । पुण्यानि वै स तस्मै कामयते । पुण्यार्तिमस्मै कामयन्ते । य एवं वेद । तस्मादेवं विद्वान् । घर्म इति दिवाऽऽचक्षीत । सम्राडिति नक्तम् । एते वा एतस्य प्रिये तनुवौ । एते अस्य प्रिये नामनी । प्रियये-

९ नवमविभागस्य भाष्यं ३१९ पृष्ठे द्रष्टव्यम् ।
१० दशमविभागस्य भाष्यं ३१९ पृष्ठे द्रष्टव्यम् ।
१ प्रथमविभागस्य भाष्यं ३९९ पृष्ठे द्रष्टव्यम् ।
२ द्वितीयविभागस्य भाष्यं ३९९ पृष्ठे द्रष्टव्यम् ।

वैनं तनुवा (२)। प्रियेण नाम्ना समर्धयति। कीर्तिरस्य पूर्वा गच्छति जनतामायतः (३)।

गायत्री देवेभ्योऽपाक्रामत्। तां देवाः प्रवर्ग्येणैवानुव्यभवन्। प्रवर्ग्येणाऽऽप्नुवन्। यच्चतुर्विꣳशतिः कृत्वः प्रवर्ग्यं प्रवृणक्ति। गायत्रीमेव तदनु विभवति। गायत्रीमाप्नोति। पूर्वाऽस्य जनं यतः कीर्तिर्गच्छति (४)।

वैश्वदेवः सꣳसन्नः (३)। वसवः प्रवृक्तः। सोमोऽभिकीर्यमाणः। आश्विनः पयस्यानीयमाने। मारुतः क्वथन्। पौष्ण उदन्तः। सारस्वतो विष्यन्दमानः। मैत्रः शरो गृहीतः। तेज उद्यतो वायुः। ह्रियमाणः प्रजापतिः। हूयमानो वाग्घुतः (४)। असौ खलु वावैष आदित्यः। यत्प्रवर्ग्यः। स एतानि नामान्यकुरुत (५)।

य एवं वेद। विदुरेनं नाम्ना (६)।

ब्रह्मवादिनो वदन्ति। यन्मृन्मयमाहुतिं नाश्नुतेऽथ। कस्मादेषोऽश्नुत इति। वागेष इति ब्रूयात्। वाच्येव वाचं दधाति (५)। तस्मादश्नुते (७)।

प्रजापतिर्वा एष द्वादशधा विहितः। यत्प्रवर्ग्यः। यत्प्रागवकाशेभ्यः। तेन प्रजा असृजत। अवकाशैर्देवासुरानसृजत। यदूर्ध्वमवकाशेभ्यः। तेनान्नमसृजत। अन्नं प्रजापतिः। प्रजापतिर्वावैषः (६)। (८)॥

---

३ तृतीयविभागस्य भाष्यं ३९६ पृष्ठे द्रष्टव्यम्।
४ चतुर्थविभागस्य भाष्यं ३९६ पृष्ठे द्रष्टव्यम्।
५ पञ्चमविभागस्य भाष्यं ३९७ पृष्ठे द्रष्टव्यम्।
६ षष्ठविभागस्य भाष्यं ३९८ पृष्ठे द्रष्टव्यम्।
७ सप्तमविभागस्य भाष्यं ३९८ पृष्ठे द्रष्टव्यम्।
८ अष्टमविभागस्य भाष्यं ३९८ पृष्ठे द्रष्टव्यम्।

वदन्ति तनुवा सꣳसंन्नो हूयमानो न्वाग्वुतो दधात्येषः ॥
इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके पञ्चमप्रपाठक
एकादशोऽनुवाकः ॥ ११ ॥

---

अथ पञ्चमे द्वादशोऽनुवाकः ।

सविता भूत्वा प्रथमेऽहन्प्रवृज्यते । तेन कामाꣳ एति । यद्द्वितीयेऽहन्प्रवृज्यते । अग्निर्भूत्वा देवानेति । यत्तृतीयेऽहन्प्रवृज्यते । वायुर्भूत्वा प्राणानेति । यच्चतुर्थेऽहन्प्रवृज्यते । आदित्यो भूत्वा रश्मीनेति । यत्पञ्चमेऽहन्प्रवृज्यते । चन्द्रमा भूत्वा नक्षत्राण्येति ( १ ) । यत्षष्ठेऽहन्प्रवृज्यते । ऋतुर्भूत्वा संवत्सरमेति । यत्सप्तमेऽहन्प्रवृज्यते । धाता भूत्वा शक्करीमेति । यदष्टमेऽहन्प्रवृज्यते । बृहस्पतिर्भूत्वा गायत्रीमेति । यन्नवमेऽहन्प्रवृज्यते । मित्रो भूत्वा त्रिवृतं इमाꣳल्लोकानेति । यद्दशमेऽहन्प्रवृज्यते । वरुणो भूत्वा विराजमेति ( २ ) । यदेकादशेऽहन्प्रवृज्यते । इन्द्रो भूत्वा त्रिष्टुभमेति । यद्द्वादशेऽहन्प्रवृज्यते । सोमो भूत्वा सुत्यामेति ( १ ) ।

यत्पुरस्तादुपसदां प्रवृज्यते । तस्मादितः पराङमूꣳल्लोकाꣳस्तपन्नेति । यदुपरिष्टादुपसदां प्रवृज्यते । तस्मादमुतोऽर्वाङिमाꣳल्लोकाꣳस्तपन्नेति ( २ ) ।

य एवं वेद । एव तपति ( ३ ) । ( ३ ) ॥

नक्षत्राण्येति विराजमेति तपति ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके पञ्चमप्रपाठके द्वादशोऽनुवाकः ॥ १२ ॥

---

१ प्रथमविभागस्य भाष्यं ३५९ पृष्ठे द्रष्टव्यम् ।
२ द्वितीयविभागस्य भाष्यं ३५९ पृष्ठे द्रष्टव्यम् ।
३ तृतीयविभागस्य भाष्यं ३६० पृष्ठे द्रष्टव्यम् ।

देवा वै सत्रꣳ सावित्रं परिश्रिते ब्रह्मन्प्रचरिष्यामोऽ-
ग्निष्ठा शिरो ग्रीवा देवस्य रशना विश्वा आशा घर्म या
ते प्रजापतिꣳ शुक्रं प्रजापतिः संभ्रियमाणः सविता
द्वादश ॥ १२ ॥
देवा वै सत्रꣳ स खदिरः परिश्रितेऽभिपूर्वमथो रक्षसां
ग्रैष्मावेव ब्रह्म वै देवानामश्विना घर्मं प्राणो वा इन्द्र-
तमोऽग्निर्वृषा हरिर्यो वै वसीयाꣳसं यथानाममष्टोत्तरश-
तम् ॥ १०८ ॥

शं नः ० तन्नो मा हासीत् ॥

ॐ शान्तिः शान्तिः शान्तिः ।

हरिः ॐ ।

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके पञ्चमप्रपाठकः
समाप्तः ॥ ५ ॥

---

१ ग. °मं पातं प्रा° ।

# अथ कृष्णयजुर्वेदीयतैत्तिरीयारण्यके षष्ठप्रपाठकस्याऽऽरम्भः ।

( तत्र प्रथमोऽनुवाकः )

हरिः ॐ ।

सं त्वा सिञ्चामि यजुषा प्रजामायुर्धनं च ॥

ॐ शान्तिः शान्तिः शान्तिः ॐ ॥

यस्य निश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥
प्रवर्ग्यब्राह्मणं प्रोक्तं पञ्चमे हि प्रपाठके ।
पितृमेधस्य मन्त्रास्तु दृश्यन्तेऽस्मिन्प्रपाठके ॥ २ ॥

तेषां च पितृमेधमन्त्राणां विनियोगो भरद्वाजकल्पे बौधायनकल्पे चाभिहितः । त्राऽऽहिताग्नेर्मरणसंशये दहनदेशं जोषयते दक्षिणाप्रत्यक्प्रवणामित्यारभ्य भरद्वाज ाह—" अन्वारब्धे मृत आहवनीये स्रुगाहुतिं जुहोति परे युवाꣳसम् " इति । बौधा- ानोऽप्येवमेवाऽऽह—" अथ गार्हपत्य आज्यं विलाप्योत्पूय स्रुचि चतुर्गृहीतं गृहीत्वा तस्य दक्षिणं बाहुमन्वारभ्य जुहोति परे युवाꣳसम् " इति । पाठस्तु—

परे युवाꣳसं प्रवतो महीरनु बहुभ्यः पन्थामनपस्पशानम् । वैवस्वतꣳ संगमनं जनानां यमꣳ राजानꣳ हविषा दुवस्यत, इति ।

हे पितृमेधकर्तारः पितॄणां राजानं यमं हविषा दुवस्यत प्रीणयत । कीदृशम् । ः प्रकृष्टकर्मवतो भूलोकवर्तिभोगसाधनं पुण्यमनुष्ठितवतः पुरुषान्महीस्तत्तद्भोगो- भूप्रदेशविशेषाननु परे युवाꣳसं क्रमेण मरणादूर्ध्वं प्रापितवन्तम् । तथा बहुभ्यः र्थिभ्यः पुण्यकृद्भ्यः पुण्यकृतामर्थे पन्थां स्वर्गस्योचितं मार्गमनपस्पशानमबाध- म् । पापिन एव पुरुषान्स्वर्गमार्गबाधेन नरकं प्रापयति न तु पुण्यकृत इत्यर्थः । वैव- विवस्वतः सूर्यस्य पुत्रम् । जनानां संगमनं पापिनां गन्तव्यस्थानरूपम् ।

कल्पः—"औदुम्बर्यामासन्द्यां कृष्णाजिनं दक्षिणाग्रीवमधरलोमाऽऽस्तीर्य तस्मिन्नेन- ं निपात्योपान्तदशेनाहतेन वाससा प्रोर्णोतीदं त्वा वस्त्रम् " इति । पाठस्तु—

१ क. ख. °गो भार° । २ ख. °गसमये । ३ क. ख. भार° । ४ क. ख. सुबाहु° । ५ °हीत्वा । ६ ग. °तद्भागो° । ७ क. ख. °पात्य यत्तो° ।

**इदं त्वा वस्त्रं प्रथमं न्वागन्** इति ।

हे प्रेत त्वामिदं **वस्त्रं प्रथमं नु** प्रथममेवाऽऽगन्नागच्छेतु ।

कल्पः—" अथास्येतरद्वासः प्रादत्तेऽपैतदूहेति तत्पुत्रो भ्राता वाऽन्यो वा प्रत्यासन्नबन्धुः प्रतीतः परिधाय " इति । पाठस्तु—

**अपैतदूह यदिहाविभः पुरा । इष्टापूर्तमनुसंपश्य**
**दक्षिणां यथा ते दत्तं बहुधा वि बन्धुषु,** इति ।

हे प्रेत **यद्वस्त्रं पुरा** त्वमबिभर्धारितवानसि, **एतदपोह**ापसारय । **इष्टापूर्तं** त्वयाऽनुष्ठितं श्रौतं स्मार्तं च यत्कर्म तद**नुसंपश्य**ानुक्रमेण स्मर । **दक्षिणां** च ब्राह्मणेभ्यो दत्तामनु**संपश्य** । ते त्वदीयं धनं **बन्धुषु** प्रीतिदानरूपेण **बहुधा यथा** विशेषेण दत्तं तमपि प्रकारम**नुसंपश्य** । ततस्तदनुरूपं पुण्यलोकं गच्छेत्यभिप्रायः ।

**इमौ युनज्मि ते वह्नी असुनीथाय वोढवे । याभ्यां**
**यमस्य सादनꣳ सुकृतां चापि गच्छतात् ।**

कल्पः—" अथैनमेतयाऽऽसन्द्या सह तत्संस्थेन कटेन वा संवेष्ट्य दासाः प्रवयसो वहेयुरथैनमनसा वहन्तीत्येकेषामनश्चेद्युञ्ज्यात्—इमौ युनज्मि ते वह्नी असुनीथाय वोढवे । याभ्यां यमस्य सादनꣳ सुकृतां चापि गच्छतात् " इति । हे प्रेत **ते** तवासुनीथाय प्राणसदृशस्य शरीरस्य नयनाय **वोढवे** शकटं वोढुं **वह्नी** वोढाराविमौ बलीवर्दौ **युनज्मि** शकटे योजयामि । **याभ्यां** बलीवर्दाभ्यां यमस्य **सादनं** स्थानं **सुकृतां** चापि पुण्यकृतां पुरुषाणामपि स्थानं **गच्छता**द्गमिष्यसि । तादृशौ **युनज्मी**त्यन्वयः ।

**पूषा त्वेतश्च्यावयतु प्र विद्वाननष्टपशुर्भुवनस्य गोपाः ।**
**स त्वैतेभ्यः परिददात्पितृभ्योऽग्निर्देवेभ्यः सुविदत्रेभ्यः ।**

कल्पः—अथैनमाददत आदीयमानमनुमन्त्रयते—पूषा त्वेतश्च्यावयतु प्र विद्वाननष्टपशुर्भुवनस्य गोपाः । स त्वैतेभ्यः परिददात्पितृभ्योऽग्निर्देवेभ्यः सुविदत्रेभ्य इति तृतीयमेतस्याध्वनो गत्वा निदधाति " इति । हे प्रेत **पूषा** योऽयं पोषको देवः सोऽ त्वामि**तो** देशात्**प्रच्यावयतु** प्रचालयतु । कीदृशः । **विद्वा**न्गन्तव्यमार्गाभिज्ञः । अनष्टपशुः । वाहका मनुष्या द्विपात्पशवः । अनड्वाहौ चतुष्पात्पशू । अनष्टा अनुपद्रुता पशवो यस्यासावनष्टपशुः, वाहकोपद्रवराहित्येन नेतुं समर्थः । **भुवनस्य गोपाः** सर्वस्य लोकस्य रक्षकः । **स** तादृशः पूषा त्वा**मेतेभ्यः** पूर्वसिद्धेभ्यः पितृभ्य

१ ख. च्छतु । क° । २ ग. तत्तल्पेन ।

रिददात्प्रयच्छतु । योऽग्निस्तव दाहं करिष्यति सोऽग्निः सुविदत्रेभ्यः सुष्ठु त्वद्-
ष्ठितं कर्म जानद्भ्यो देवेभ्यस्त्वां प्रयच्छतु ।

**पूषेमा आशा अनुवेद सर्वाः सो अस्मा अभय-**
**तमेन नेषत् । स्वस्तिदा अघृणिः सर्ववीरोऽ-**
**प्रयुच्छन्पुर एतु प्रविद्वान् ( १ ) ।**

कल्पः—" अथैनमाददत आदीयमानमनुमन्त्रयते—पूषेमा आशा अनुवेद सर्वाः
ो अस्मा अभयतमेन नेषत् । स्वस्तिदा अघृणिः सर्ववीरोऽप्रयुच्छन्पुर एतु प्रवि-
ानित्यर्धमस्याध्वनो गत्वा निदधाति " इति । योऽयं पूषा देवः सोऽयमिमाः सर्वा
ाशा दिशोऽनुवेदेयमनुकूला दिगिति जानाति । स देवोऽस्मानत्यन्तं भयरहितेन
र्गेण नेषन्नयतु । कीदृशः पूषा स्वस्तिदाः क्षेमप्रदः । अघृणिरदीप्तः[1], अस्मास्वनु-
ही[2] । सर्ववीरः सर्वेभ्यः प्रतिकूलेभ्योऽत्यन्तं शूरः । स तादृशोऽसावप्रयुच्छन्प्रमा-
मकुर्वन्प्रविद्वान्मार्गं प्रकर्षेण जानन्नस्माकं पुरत एतु गच्छतु ।

**आयुर्विश्वायुः परिपासति त्वा पूषा त्वा पातु**
**प्रपथे पुरस्तात् । यत्राऽऽसते सुकृतो यत्र**
**ते ययुस्तत्र त्वा देवः सविता दधातु ।**

कल्पः—" अथैनमाददत आदीयमानमनुमन्त्रयते—आयुर्विश्वायुः परिपासति त्वा
त्वा पातु प्रपथे पुरस्तात् । यत्राऽऽसते सुकृतो यत्र ते ययुस्तत्र त्वा देवः
ा दधात्विति समस्तमेतस्याध्वनो गत्वा निदधाति " इति । विश्वस्मिन्कर्मण्यागच्छ-
विश्वायुरग्निः । स चाऽऽयुरायुष्मन्तमागतवन्तं त्वां प्रेतं परिपासति परिपा-
ुमिच्छति, दहनार्थमागच्छन्तं त्वां प्रतीक्षत इत्यर्थः । अयं पूषा प्रपथे प्रकृष्टे
त्वां पुरस्तात्पातु पुरतो गच्छन्प्रतिबन्धकेभ्यो रक्षोभ्यः पालयतु । यत्र यस्मि-
लोके सुकृतः पूर्वे पुण्यकृत आसते यत्र च मार्गे ते पुण्यकृतो ययुः सविता
त्र त्वां दधातु स्थापयतु ।

ल्पः—" अत्र राजगवीमुपाकरोति भुवनस्य पत इति जरतीं मुख्यां[3] तज्जघन्यां[4]
ं कृष्णाक्षीं कृष्णवालां कृष्णखुरामपि वाऽक्षिवालखुरमेव कृष्णं[5] स्यात् " इति ।
ु—

**भुवनस्य पत इदꣳ हविः, इति ।**

[1] क. °गिराः तदीप्तिः । अस्मानु° । [2] ख. °दीप्तिः, अस्मानु° । [3] क. ख. मू ° । [4]
ऽजघ॰मे° । ग चाऽजां वा° । [5] ख. कृष्णां । ग. कृष्णमेवं स्या° ।

हे **भुवनस्य पते** पालक देव तवेदं राजगवीरूपं हविरुपाकरोमीति शेषः ।

**अग्नये रयिमते स्वाहा ।**

अथास्य हविषः स्वकाले प्राप्तो होमः कर्तव्यः । तद्धोममन्त्रोऽत्रैव प्रसङ्गादाम्नातः । कल्पः—तत्रैतद्धविरिडापात्र्या चमसेन वा जुहोति, " अग्नये रयिमते स्वाहा " इति । **रयिमते** धनवतेऽग्नये स्वाहुतमिदमस्तु ।

कल्पः—"तां घ्नन्त्युत्सृजन्ति वा यदि विघ्नन्ति तस्यां निहन्यमानायां सव्यानि जानून्यनुनिघ्नन्तः पांसूनवमृजन्ते पुरुषस्य " इति । पाठस्तु—

**पुरुषस्य सयावर्यपेदघानि मृज्महे । यथा नो अत्र नापरः पुरा जरस आयति, इति ।**

सह यातुं गन्तुं शीलं यस्या राजगव्याः सा सयावरी । **पुरुषस्य** मृतस्य संबन्धिनि हे **सयावर्यघानि** पापान्यपेदपनीयैव **मृज्महे**ऽस्मा**ञ्**शोधयामः । **नो**ऽस्माकं जरसं वयोहानेः **पुराऽपरः** पाप्मा कश्चिदपि **यथा नाऽऽयति** नाऽऽगच्छति तथा मृज्म इति पूर्वत्रान्वयः ।

**पुरुषस्य सयावरि वि ते प्राणमसिस्रसम् । शरीरेण महीमिहि स्वधयेहि पितॄनुप प्रजयाऽस्मानिहाऽऽवह ।**

कल्पः—" अथास्याः प्राणान्विस्रंसमानाननुमन्त्रयते—पुरुषस्य सयावरि वि प्राणमसिस्रसम् । शरीरेण महीमिहि स्वधयेहि पितॄनुप प्रजयाऽस्मानिहाऽऽवह " इति । हे **पुरुषस्य सयावरि** राजगवि **ते** तव **प्राणं व्यसिस्रसं** विस्रस्तं शिथिलं कृतवानस्मि । त्वं **शरीरेण महीं** भूमि**मिहि** प्राप्नुहि । **स्वधयाऽन्नेन** हविःस्वरूपेण । अमृतवाची स्वधाशब्दः । अमृतेन जीवरूपेण **पितॄनुपेहि** । **इहा**स्मिँल्लोके **प्रजया** पुत्रादिकया सहास्मानावह क्षेमं प्रापय ।

**मैवं माऽस्ता प्रियेऽहं देवी सती पितृलोकं यदैषि । विश्ववारा नभसा संव्ययन्त्युभौ नो लोकौ पयसाऽभ्यावव्रुत्स्व ( २ ) ।**

कल्पः—" उपोत्थाय पांसूनवमृशन्ते मैवं माऽस्ता प्रियेऽहं देवी सती पितृलोकं यदैषि । विश्ववारा नभसा संव्ययन्त्युभौ नो लोकौ पयसाऽभ्याववृत्स्व " इति । हे

---

१ क. प्राप्ते । २ क. ल्पः । अग्न° । ३ क. रिडसूनेन च° । ४ क. ख. °थास्ये । ५ क. °मानोन° । ६ ग. यदेषि ।

ाजगवि अहमेवं हताऽस्मीति मा माऽस्ता मनसि मननं मा कार्षीः । यद्यस्मात्कार- ात्त्वं देवी देवतात्मिका सती पितृलोकं प्रेत्यैषि आगच्छसि । विश्ववारा सर्वैर्व- णीया प्रार्थनीया । नभसाऽऽकाशमार्गेण संव्ययन्ती द्युलोकं संवृण्वती । हे राज- ्वि तथाविधा त्वं नोऽस्माकमुभौ लोकावेतल्लोकपरलोकौ पयसा क्षीरेणाभ्यावदृ- स्वाभित आवृत्तौ कुरु क्षीरपूर्णौ कुर्वित्यर्थः ।

इयं नारी पतिलोकं वृणाना निपद्यत
उप त्वा मर्त्य प्रेतम् । विश्वं पुराणमनुपा-
लयन्ती तस्यै प्रजां द्रविणं चेह धेहि ।

कल्पः—"अथास्य भार्यामुपसंवेशयति—इयं नारी पतिलोकं वृणाना निपद्यत उप ्वा मर्त्य प्रेतम् । विश्वं पुराणमनुपालयन्ती तस्यै प्रजां द्रविणं चेह धेहि" इति । हे मर्त्य ्नुष्य या नारी मृतस्य तव भार्या सा पतिलोकं वृणाना कामयमाना प्रेतं मृतं ्वामुपनिपद्यते समीपे नितरां प्राप्नोति । कीदृशी । पुराणं विश्वमनादिकालप्रवृत्तं कृत्स्नं ्त्रीधर्ममनुक्रमेण पालयन्ती । पतिव्रतानां स्त्रीणां पत्या सहैव वासः परमो धर्मः । ्स्यै धर्मपत्न्यै त्वमिह लोके निवासार्थमनुज्ञां दत्त्वा प्रजां पूर्वं विद्यमानां पुत्रादिकां ्रविणं धनं च धेहि संपादय, अनुजानीहीत्यर्थः ।

उदीर्ष्व नार्यभि जीवलोकमितासुमेतमुपशेष एहि ।
हस्तग्राभस्य दिधिषोस्त्वमेतत्पत्युर्जनित्वमभिसंबभूव ।

कल्पः—"तां प्रति गतः सव्ये प्राणावभिपाद्योत्थापयति—उदीर्ष्व नार्यभि जीव- ्लोकमितासुमेतमुपशेष एहि । हस्तग्राभस्य दिधिषोस्त्वमेतत्पत्युर्जनित्वमभिसंबभूव" ्ति । हे नारि त्वमितासुं गतप्राणमेतं पतिमुपशेष उपेत्य शयनं करोषि । उदीर्ष्वा- ्मात्पतिसमीपादुत्तिष्ठ । जीवलोकमभि जीवन्तं प्राणिसमूहमभिलक्ष्यैहि आगच्छ । ्वं हस्तग्राभस्य पा[illegible]ग्राहवतो दिधिषोः पुनर्विवाहेच्छोः पत्युरेतज्जनित्वं जायात्वम- ्भिसंबभूवाऽऽभिमुख्येन सम्यक्प्राप्नुहि ।

सुवर्णं हस्तादाददाना मृतस्य श्रियै ब्रह्म-
णे तेजसे बलाय । अत्रैव त्वमिह वयं
सुशेवा विश्वा स्पृधो अभिमातीर्जयेम ।

कल्पः—"सुवर्णेन हस्तौ संमार्ष्टि—सुवर्णं हस्तादाददाना मृतस्य श्रियै ब्रह्मणे

---

१ ग. प्रत्येषि । २ क. ख. °या । न° ।

तेजसे बलाय । अत्रैव त्वमिह वयꣳ सुशेवा विश्वा स्पृधो अभिमातीर्जयेम" इति । हे नारि त्वं **श्रियै** संपदर्थं **ब्रह्मणे** ब्राह्मणजात्यर्थं **तेजसे** कान्त्यर्थं **बलाय** शरीरबलार्थं **मृतस्य** पुरुषस्य **हस्तात्सुवर्णमाददाना** सत्य**त्रैव** लोके तिष्ठ । **वयमपीह** लोके **सुशेवाः** सुखं सेवमानाः सन्तः **स्पृधो**ऽस्माभिः सह स्पर्धमाना **विश्वा अभिमातीः** सर्वाञ्शत्रूञ्जयेम ।

धनुर्हस्तादाददाना मृतस्य श्रियै क्षत्रायौजसे
बलाय । अत्रैव त्वमिह वयꣳ सुशेवा विश्वा स्पृधो
अभिमातीर्जयेम । मणिꣳ हस्तादाददाना मृतस्य
श्रियै विशे पुष्ट्यै बलाय । अत्रैव त्वमिह वयꣳ
सुशेवा विश्वा स्पृधो अभिमातीर्जयेम ( ३ ) ।

कल्पः—" धनुर्हस्तादाददाना मृतस्य श्रियै क्षत्रायौजसे बलाय । अत्रैव त्वमिह वयꣳ सुशेवा विश्वा स्पृधो अभिमातीर्जयेमेति राजन्यस्य । मणिꣳ हस्तादाददाना मृतस्य श्रियै विशे पुष्ट्यै बलाय । अत्रैव त्वमिह वयꣳ सुशेवा विश्वा स्पृधो अभिमातीर्जयेमेति वैश्यस्य " इति । एतौ मन्त्रौ पूर्वोक्तब्राह्मणमन्त्रवद्व्याख्येयौ ।

इममग्ने चमसं मा विजीह्वरः प्रियो देवानामुत सोम्यानाम् ।
एष यश्चमसो देवपानस्तस्मिन्देवा अमृता मादयन्ताम् ।

कल्पः—" कथमु खल्वस्य पात्राणि प्रयुञ्ज्यादिति दध्ना सर्पिर्मिश्रेण पूरयित्वा मुखेऽग्निहोत्रहवणीं नासिकयोः स्रुवावक्ष्णोर्हिरण्यशकलावाज्यस्रुवौ वा प्रत्यस्य कर्णयोः प्राशित्रहरणं भित्त्वा शिरसि कपालानि ललाट एककपालं शिरस्तः प्रणीताप्रणयनं चमसं निदधातीति—इममग्ने चमसं मा विजीह्वरः प्रियो देवानामुत सोम्यानाम् । एष यश्चमसो देवपानस्तस्मिन्देवा अमृता मादयन्ताम्" इति । हेऽग्ने, **चमसं मा विजीह्वरः** कुटिलं मा कुरु, मा नाशयेत्यर्थः । **एष चमसो देवानां प्रियः,** देवाश्चमसे सोमरसं पातुं वाञ्छन्ति । **उता**पि च **सोम्यानां** सोमयोग्यानामृत्विग्यजमानानां प्रियः **यश्चमसो देवपानो** देवानां पानहेतुस्तस्मिंश्चमसेऽमृता **देवा मादयन्तां** यजमानं हर्षयन्ताम् ।

अग्नेर्वर्म परि गोभिर्व्ययस्व संप्रोर्णुष्व मेदसा पीवसा च ।
नेत्त्वा धृष्णुर्हरसा जर्हृषाणो दधृग्विधक्ष्यन्पर्यङ्खयाते ।

---

१ क. ख. सुखेन २ ग. °ल्ग्ः । अथ मुखाद्विशस्य । ३ ग. °णि नियु° । ४ ग. °धातीं

कल्पः—" अथैनं चर्मणा सशीर्षबालपादेनोत्तरलोम्ना प्रोर्णोति—अग्नेर्वर्म परि गोभि-र्व्ययस्व संप्रोर्णुष्व मेदसा पीवसा च। नेत्त्वा धृष्णुर्हरसा जर्हृषाणो दधद्विधक्ष्यन्पर्यङ्ख-यातै " इति। हे वर्म कवचस्थानीय चर्मविशेषाग्नेर्गोभी रश्मिभिः परितो व्ययस्वैनं प्रेतं संवृतं कुरु। पीवसा स्थूलेन मेदसा च त्वदीयावयवेन मेदोभिधेन प्रोर्णुष्व सम्यगाच्छादय। धृष्णुर्धार्ष्ण्ये (छर्चे) नोपेतोऽयमग्निस्त्वा दधद्धे चर्म त्वां धारय-न्हरसा स्वकीयेन तेजसा जर्हृषाणो हर्तुमिच्छान्विधक्ष्यन्विशेषेण दग्धुमिच्छन्नुद्युक्तो न पर्यङ्खयातै परितो नैव चालयतु तवापसारणं मा करोतु।

मैनमग्ने विदहो माऽभिशोचो माऽस्य त्वचं चिक्षिपो मा शरीरम्। यदा शृतं करवो जातवेदोऽथेमेनं प्रहिणुतात्पितृभ्यः।

कल्पः—" अथैनमादीपयत्यादीप्यमानमनुमन्त्रयते—मैनमग्ने विदहो माऽभिशोचो माऽस्य त्वचं चिक्षिपो मा शरीरम्। यदा शृतं करवो जातवेदोऽथेमेनं प्रहिणुतात्पि-तृभ्यः " इति। हेऽग्न एनं प्रेतं मा विदहो विशेषेण दग्धं मषीरूपं मा कुरु। माऽभि-शोचोऽभितः शोकेन संतापेन युक्तं मा कुरु। अस्य त्वचं मा चिक्षिपेतस्ततो विक्षिप्तां मा कुरु। शरीरमपि विक्षिप्तं मा कुरु। हे जातवेदो यदा शरीरं शृतं पक्वं करवोऽथेमेनमनन्तरमेवैनं प्रेतं पुरुषं पितृभ्यः प्रहिणुतात्पितृसमीपे प्रेरय।

शृतं यदाऽकरसि जातवेदोऽथेमेनं परिदत्तात्पितृभ्यः। यदा गच्छात्यसुनीतिमेतामथा देवानां वशनीर्भवाति।

कल्पः—" प्रज्वलितमनुमन्त्रयते—शृतं यदाऽकरसि जातवेदोऽथेमेनं परिदत्तात्पि-तृभ्यः। यदा गच्छात्यसुनीतिमेतामथा देवानां वशनीर्भवाति " इति। हे जातवेदो यदा तच्छरीरं शृतं पक्वमकः कृतवानसि तदानीमेवैनं पितृभ्यः परिदत्तात्प्रयच्छ। यदाऽयं प्रेत एतामग्निना त्वया कृतामसुनीतिं प्राणस्य नयनं प्राणप्रेरणं गच्छाति गच्छतीति, अथानन्तरं देवानां वशनीर्भवाति वशं प्राप्तो भवति।

सूर्यं ते चक्षुर्गच्छतु वातमात्मा द्यां च गच्छ पृथिवीं च धर्मणा। अपो वा गच्छ यदि तत्र ते हितमोषधीषु प्रतितिष्ठा शरीरैः।

कल्पः—" अत्र षड्ढोतारं व्याचष्टे—सूर्यं ते चक्षुर्गच्छतु वातमात्मा द्यां च गच्छ पृथिवीं च धर्मणा। अपो वा गच्छ यदि तत्र ते हितमोषधीषु प्रतितिष्ठा शरीरैः " इति।

सूर्यं त इत्यादिमन्त्रस्य षड्ढोतेति नामधेयम् । हे प्रेत ते त्वदीयं **चक्षुरिन्द्रियं सूर्यं गच्छतु** । **आत्मा** प्राणो बाह्यवायुं **गच्छतु** । त्वमपि **धर्मणा** सुकृतेन तत्फलं भोक्तुं द्युलोकं भूलोकं च **गच्छ**, अपो **वा गच्छ** । चक्षुरादीन्द्रियसामर्थ्यं पुनर्देहग्रहणपर्यन्तं तत्तदधिष्ठातृदेवता [ गतं ] त्वया द्युलोकादिषु शरीरे स्वीकृते पश्चात्त्वामेव प्राप्स्यति यत्र ( दि ) यस्मिँल्लोके **ते** तव **हितं** सुखमस्ति **तत्र** गत्वौषधीषु प्रविश्य तद्द्वारा पितृदेहमातृदेहौ प्रविश्य तत्र तत्रोचितानि शरीराणि स्वीकृत्य तैः **शरीरैः** प्रतिष्ठितो भव

**अजोऽभागस्तपसा तं तपस्व तं ते शोचिस्त-**
**पतु तं ते अर्चिः । यास्ते शिवास्तनुवो जात-**
**वेदस्ताभिर्वहेमꣳ सुकृतां यत्र लोकाः ।**

कल्पः—" तत्रैतमजं चित्यन्तेऽबलेन शुल्बेन बध्नाति—अजोऽभागस्तपसा तं तपस्व तं ते शोचिस्तपतु तं ते अर्चिः । यास्ते शिवास्तनुवो जातवेदस्ताभिर्वहेमꣳ सुकृतां यत्र लोकाः " इति । यत्र ( तत्र ) चितेः पश्चिमभागे समीपे केनचिदबलेन शुल्बेनाजं बध्नीयात् ( बध्नाति ), ज्वालया संतप्तः स ( * तेजसा सह शुल्बो ) यथा न द्रवति तथा बध्नीयात्, तदानीमजोऽभाग इत्येतं मन्त्रं पठेत् । हेऽग्नेऽयमजो भागरहितः । तम् **तपसा** त्वदीयेन तापेन तपस्व तप्तं कुरु । तथा **ते शोचिः** शोकहेतुज्वालाविशेषः **तं तपतु** । तथाऽर्चिर्भासको ज्वालाविशेषः, **तमजं तपतु** । तपःशोचिरर्चिःशब्दैः संतापतारतम्येन भेदः । हे **जातवेदस्ते** तव **यास्तनुवः शिवाः** सुखहेतवो न तु तापप्रदास्ताभिरिमं प्रेतं वह यत्र यस्मिँल्लोके **सुकृतां** पुण्यकृतां **लोकाः** सन्ति तं प्रापय ।

**अयं वै त्वमस्मादधि त्वमेतदयं वै तदस्य योनि-**
**रसि । वैश्वानरः पुत्रः पित्रे लोककृज्जातवेदो**
**वहेमꣳ सुकृतां यत्र लोकाः ( ४ ) ॥**
**विद्वानभ्याववृत्स्वाभिमातीर्जयेम शरीरैश्चत्वारि च ॥**

**इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके षष्ठप्रपाठके**
**प्रथमोऽनुवाकः ॥ १ ॥**

* धनुश्चिह्नान्तर्गतमधिकमिव भाति ।

१ ग. °च्छ वा जलं ग° । २ ख. °श्चात्त्वा° । ३ क. प्र °यन्ति । ख. प्राप्स्यति । ४ ख. यथा । ५ ग. °था द्र° ।

कल्पः—"अथान्यां जुहोति—अयं वै त्वमस्मादधि त्वमेतदयं वै तदस्य योनिरसि । वैश्वानरः पुत्रः पित्रे लोककृज्जातवेदो वहेमꣳ सुकृतां यत्र लोकाः" इति । उपरितनानुवाकोक्तैर्नवभिर्मन्त्रैर्नव हुत्वाऽथानन्तरमन्यामेतामृचं जुहुयात् । हे जातवेदोऽयमेव प्रेतः पुरुषस्त्वं न तस्य तव च भेदोऽस्ति । अस्मादध्यस्य प्रेतस्य शरीरस्योपरि त्वमग्निरेतत्प्रत्यक्षं यथा भवति तथा वर्तसे । तत्तस्मादत्यन्तभेदाभावात्कारणादस्य प्रेतस्यायमेव वैश्वानरस्त्वं योनिरसि स्थानप्रदोऽसि । सर्वत्र हि पुत्रः पित्रे लोककृद्भवति । पुंनाम्नो नरकात्त्रायत इति व्युत्पत्तेः । अयं च पुरा यजमानत्वदशायां नानाविधैः कर्मभिरग्नेः पालनात्तव पिता । ततो हे जातवेदो यत्र सुकृतां पुण्यकृतां लोकाः स्थानानि सन्ति तत्रेमं प्रेतं पुरुषं वह प्रापय ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्ये षष्ठप्रपाठके प्रथमोऽनुवाकः ॥ १ ॥

---

अथ षष्ठे द्वितीयोऽनुवाकः ।

---

कल्पः—"पर्णमयेन स्रुवेणोपघातं जुहोति— य एतस्य पथो गोप्तारस्तेभ्यः स्वाहेति नव स्रुवाहुतीः" इति । उपघातमुपहत्योपहत्य सकृत्सकृदवदायेत्यर्थः । पाठस्तु—

**य एतस्य पथो गोप्तारस्तेभ्यः स्वाहा य एतस्य पथो रक्षितारस्तेभ्यः स्वाहा य एतस्य पथोऽभिरक्षितारस्तेभ्यः स्वाहा ख्यात्रे स्वाहाऽपाख्यात्रे स्वाहाऽभिलालपते स्वाहाऽपलालपते स्वाहाऽग्नये कर्मकृते स्वाहा यमत्र नाधीमस्तस्मै स्वाहा, इति ।**

एतस्य पथो मृतेन गन्तव्यस्य स्वर्गमार्गविषयस्य मार्गस्य रक्षका देवास्त्रिविधा गोप्तृरक्षित्रभिरक्षितृनामकाः, ते च क्रमेण त्रिषु स्थानेषु तिष्ठन्ति । तादृशा ये सन्ति तेभ्यः स्वाहुतमिदमस्तु । यजमानकीर्तेः प्रकटयिता कश्चिद्देवः ख्याता तस्मै स्वाहुतमिदमस्तु । स हि तुष्टः सन्देवलोके ख्यातिं करिष्यति । अपकीर्तेः प्रकटयिता कश्चिदपाख्याता तस्मै स्वाहुतमिदमस्तु । स च तुष्टोऽपकीर्तिं वर्जयति । देवानामग्रे सुकृतं बाहुल्येन यः कथयति सोऽभिलालपन् । तद्योऽपलपति सोऽपलालपन् । ताभ्यां स्वाहुतमिदमस्तु । पूर्ववदिष्टप्राप्त्यनिष्टपरिहारौ योजनीयौ । पूर्वानुष्ठितकर्मणामेतस्य च कर्मणो निष्पादको योऽग्निस्तस्मै कर्मकृते स्वाहुतमिदमस्तु यं वाऽन्यदेवमत्रोपयुक्तं यं नाधीमो न स्मरामस्तस्मै स्वाहुतमिदमस्तु ।

अनन्तरभाविनोर्मन्त्रयोर्विनियोगो भरद्वाजबौधायनाभ्यामनुक्तत्वाद्ग्रन्थान्तरे द्रष्टव्यः। प्रकरणबलात्तु होमार्थता प्रतीयते। तत्र प्रथमं मन्त्रमाह—

यस्त इध्मं जभरत्सिष्विदानो मूर्धानं वा ततपते त्वाया। दिवो विश्वस्मात्सीमघायत उरुष्यः, इति।

हेऽग्ने यो राक्षसादिस्ते तवेध्मं जभरदपहरति। अथवा त्वाया त्वदीयस्य दग्धव्यस्य प्रेतस्य मूर्धानं स्वयं सिष्विदानः स्वेदं प्राप्तः संस्ततपतेऽतिशयेन तापं करोति। शास्त्रीयदहनसाधनस्येध्मस्यापहारेण वा स्वकीयस्वेदेन मूर्धानं द्रवीकुर्वन्वा शास्त्रीयदाहं विनाश्य स्वर्गं विहन्ति[1]। दिवः स्वर्गस्याघायतोऽघं पापं विघ्नं य इच्छति तस्माद्विश्वस्मात्सीं सर्वस्मादपि राक्षसादेरुरुष्योऽयं प्रेतो रक्षणीयः।

अथ द्वितीयं मन्त्रमाह—

अस्मात्त्वमधि जातोऽसि त्वदयं जायतां पुनः। अग्नये वैश्वानराय सुवर्गाय लोकाय स्वाहा (१), इति॥

य एतस्य त्वत्पञ्च॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके षष्ठप्रपाठके द्वितीयोऽनुवाकः॥ २॥

हेऽग्नेऽस्माद्यजमानात्प्रेतात्त्वमधिजातोऽसि। अयं हि कर्मानुष्ठानेन त्वां स्वामिनं संपादितवान्। अतः फलदशायामयं पुनस्त्वत्तोऽधिजायतां त्वमेव स्वर्गलोके यजमानमुत्पादय। तत्सिद्ध्यर्थं वैश्वानराय सर्वपुरुषहितायाग्नये तुभ्यमिदं स्वाहुतमस्तु॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्ये षष्ठप्रपाठके द्वितीयोऽनुवाकः॥ २॥

---

अथ षष्ठे तृतीयोऽनुवाकः।

कल्पः—"अथैनं नवर्चेन याम्येन सूक्तेनोपतिष्ठते प्र केतुना" इति। तत्र प्रथमामाह—

प्र केतुना बृहता भात्यग्निरा[2]विर्विश्वानि वृषभो रोरवीति। दिवश्चिदन्तादुप मामुदानडपामुपस्थे महिषो ववर्ध, इति।

---

१ क. ख. विहितं ह'। २ ख. ग. 'होतव्यम्'।

अयमग्निर्बृहता प्रौढेन केतुना ध्वजस्थानीयेन ज्वालाविशेषेण प्रभाति प्रकर्षेण
ासते। स चाऽऽविर्भूतो वृषभः कामानां वर्षकः सन्विश्वानि फलान्युद्दिश्य रोर-
ीति अतिशयेन ध्वनिं करोति। दिवोऽन्ताच्चित्स्वर्गस्यावसानदेशादप्युपेत्य मां
दीयं यजमानं प्रेतमुदानट्, उत्कर्षेण व्याप्तवान्। स्वर्गस्योपरि स्वयं पूर्वमवस्थितोऽपि
दीयं प्रेतमनुग्रहीतुमेवात्राऽऽगतवानित्यर्थः। स चाग्निरपां प्राप्तव्यानां फलानामुपस्थे
मीपे महिषो ववर्धात्यधिको यथा भवति तथा वृद्धिं प्राप्तवान्।

अथ द्वितीयामाह—

इदं त एकं पर ऊं त एकं तृतीयेन ज्योतिषा संविशस्व। संवे-
शनस्तनुवै चारुरेधि प्रियो देवानां परमे सधस्थे, इति।

हेऽग्ने ते तव स्वाभाविकमिदमेकं ज्योतिः। ऊ अपि च परः परस्तात्प्रेतशरीरे
थतं ते त्वदीयमेकं ज्योतिः। तदुभयमपि तृतीयेन ज्योतिषा परमात्मरूपेण संवि-
स्व संयोजयस्व। तनुवै स्वकीयस्य शरीरस्य संवेशनः परमात्मज्योतिषा संयो-
यिता देवानां प्रियस्त्वं चारुरेधि रमणीयो भव। कुत्रेति तदुच्यते—परम उत्कृष्टे
धस्थे सहोपवेशनस्थाने।

अथ तृतीयामाह—

नाके सुपर्णमुप यत्पतन्तं हृदा वेनन्तो अभ्यचक्षत त्वा। हिर-
ण्यपक्षं वरुणस्य दूतं यमस्य योनौ शकुनं भुरण्युम्, इति।

हेऽग्ने त्वामृत्विजो हृदा स्वकीयेन मनसा वेनन्तः कामयमाना यद्यदाऽभ्यचक्ष-
भितः ख्यापितवन्तः, तदा त्वं तुष्टो भवेति शेषः। कीदृशं त्वाम्—नाके स्वर्ग
पतन्तं समीपे प्रतिगच्छन्तम्। अत एव सुपर्णं शोभनपक्षोपेतम्। हिरण्यपक्षं
र्णमयपक्षोपेतम्। वरुणस्य दूतं वरुणेन प्रेर्यमाणम्। यमस्य योनौ स्थानविशेषे
ण्युं भरणशीलं भोगसंपादकमित्यर्थः। शकुनं पक्ष्याकारम्।

अथ चतुर्थीमाह—

अति द्रव सारमेयौ श्वानौ चतुरक्षौ शबलौ साधुना पथा। अथा
पितॄन्त्सुविदत्राꣳ अपीहि यमेन ये सधमादं मदन्ति, इति।

हेऽग्ने साधुना पथा समीचीनेन मार्गेण श्वानावुभावतिद्रवातिक्रम्य गच्छ। यम-
न्धिनौ यौ श्वानौ प्रेतस्य बाधकौ तौ परित्यज्य समीचीनेन मार्गेण प्रेतं नयेत्यर्थः।
शौ श्वानौ। सारमेयौ सरमा नाम काचित्प्रसिद्धा शुनी तस्याः पुत्रौ चतुरक्षा-
णो पुनरप्यक्षिद्वयं ययोस्तादृशौ। अथ शोभनमार्गेण गमनानन्तरं ये पितरो

यमेन सधमादं संहहर्षं मदन्ति प्राप्नुवन्ति तान्सुविदत्रान्सुष्ठुभिज्ञान्पितॄनपीहि प्राप्नुहि ।

अथ पञ्चमीमाह—

यौ ते श्वानौ यम रक्षितारौ चतुरक्षौ पथिरक्षी नृचक्षसा । ताभ्या{र्} राजन्परिदेह्येन{र्} स्वस्ति चास्मा अनमीवं च धेहि (१), इति ।

हे यम ते त्वदीयौ श्वानौ यौ विद्येते ताभ्यां श्वभ्यां हे राजन्यमेनं प्रेतं परिदेहि प्रयच्छ । कीदृशौ श्वानौ । रक्षितारौ यमगृहस्य रक्षकौ । चतुरक्षावक्षिचतुष्टययुक्तौ । पथिरक्षी मार्गस्य रक्षकौ । नृचक्षसा मनुष्यैः ख्याप्यमानौ, श्रुतिस्मृतिपुराणाभिज्ञाः पुरुषास्तौ प्रख्यापयन्ति ताभ्यां श्वभ्यां दत्त्वाऽस्मै प्रेताय स्वस्ति च क्षेममपि अनमीवं च रोगाभावमपि धेहि संपादय ।

अथ षष्ठीमाह—

उरुणसावसुतृपावलुंबलौ यमस्य दूतौ चरतोऽवशा{र्} अनु । तावस्मभ्यं दृशये सूर्याय पुनर्दत्तावसुमद्येह भद्रम्, इति ।

हे यमसंबन्धिनौ दूतावशानस्वाधीनान्प्राणिनोऽनुलक्ष्य सर्वत्र चरतः । कीदृशौ उरुणसौ दीर्घनासिकायुक्तौ, असुतृपौ प्राणिनामसूनस्वीकृत्य तैस्तृप्यन्तौ । उलुंबलौ प्रभूतबलयुक्तौ । तावुभौ दूतौ सूर्याय दृशये सूर्यस्य दर्शनार्थमद्य दिन इह कर्मणि भद्रमसुं समीचीनं प्राणं पुनरप्यस्मभ्यं दत्तौ प्रयच्छताम्

अथ सप्तमीमाह—

सोम एकेभ्यः पवते घृतमेक उपासते । येभ्यो मधु प्रधावति तां{श्}श्चिदेवापि गच्छतात्, इति ।

एकेभ्यः केषांचिद्यजमानानामर्थे सोमः पवते वस्त्रेण शोधितः पूतो भवति । एकेऽन्ये केचिद्यजमाना घृतमुपासते घृतद्रव्योपलक्षितं हविर्यज्ञमनुतिष्ठन्ति । येभ्यो येषामर्थे मधु प्रधावति 'असौ वा आदित्यो देवमधु' इत्यादिका मधुविद्या प्रवर्तते यदथर्वाङ्गिरसो मधोः कूल्या इत्यादिमधुप्राप्तिफलको ब्रह्मयज्ञो येषामर्थे प्रवर्तते तां{श्}श्चित्सर्वानप्ययं प्रेतोऽपिगच्छतादेव सर्वथा प्राप्नोत्वेव । सोमयाजिनां दर्शपूर्णमासादियाजिनां ब्रह्मयज्ञमधुविद्याद्यनुष्ठातॄणां यः पुण्यलोकः सोऽयमस्य भवत्वित्यर्थः

१ म. सहर्षं । २ क. हे दूतौ स्थूलानासिकौ प्राणिनो° । ख. हे दूतौ स्थूलानसूनस्वी° ३ ग. °पौ स्वकीयान्प्राणानस्वी° । ४ ख. ग. ब्राह्मणश्च ।

अथाष्टमीमाह—

ये युध्यन्ते प्रधनेषु शूरासो ये तनुत्यजः । ये वा

सहस्रदक्षिणास्ताꣳश्चिदेवापि गच्छतात् , इति ।

ये क्षत्रियाः प्रधनेषु प्रकृष्टधननिमित्तेषु संग्रामेषु युध्यन्ते युद्धं कुर्वन्ति । तत्रापि ये शूरासः शूरा भटास्तनुत्यजो युद्धाभिमुख्येन शरीरं त्यजन्ति । अथवा ये पुरुषाः सहस्रदक्षिणा विश्वजिदादिक्रतुषु सहस्रदक्षिणायुक्ताः । तांश्चिदित्यादि पूर्ववत् । युद्धाभिमुख्येन मृतस्योत्तमलोकः स्मर्यते—

" द्वाविमौ पुरुषौ लोके सूर्यमण्डलभेदिनौ ।
परिव्राड्योगयुक्तश्च रणे चाभिमुखे हतः " इति ।
" धर्म्याद्धि युद्धाच्छ्रेयोऽन्यत्क्षत्रियस्य न विद्यते " इति च ।

अथ नवमीमाह—

तपसा ये अनाधृष्यास्तपसा ये सुवर्गताः तपो

ये चक्रिरे महस्ताꣳश्चिदेवापि गच्छतात्, इति ।

ये पुरुषा अस्मिँल्लोके तपसा युक्ताः सन्तोऽनाधृष्याः केनाप्यतिरस्कार्या वर्तन्ते । ये चान्ये स्वानुष्ठितेन तपसा स्वर्गं गताः । ये चान्ये महत्तपश्चक्रिरे । अनेन तपस्वित्वमात्रमुक्तम् । अनाधृष्या इत्यनेनाणिमादिसिद्धिपर्यन्तं तपो विवक्षितम् । ताꣳश्चिदित्यादि पूर्ववत् ।

कल्पः—" जघनेन दहनदेशमुदीचीस्तिस्रः कर्षूः खात्वाऽश्मभिः सिकताभिश्च प्रकीर्यायुग्मैरुदकुम्भैरपः परिप्लाव्य तासु ज्ञातयः संगाहन्ते, अश्मन्वती रेवतीरिति " इति ] । पाठस्तु—

अश्मन्वती रेवतीः सꣳरभध्वमुत्तिष्ठत प्रतरता

सखायः । अत्रा जहाम ये असन्नशेवाः

शिवान्वयमभि वाजानुत्तरेम ( २ ), इति ।

कर्षूः कुल्याः, तत्रत्यास्वप्स्ववगाहनाय ज्ञातयः परस्परं संबोध्यन्ते—हे सखायोऽश्मन्वतीः पाषाणयुक्ता रेवतीर्धनहेतुभूता अपः संरभध्वं प्रविशत । उत्तिष्ठतोत्साहवन्तः सन्तः प्रत्युद्गच्छत । अनेन क्रमेण प्रतरत कुल्यात्रयं प्रकर्षेण तरत । अत्रास्मिन्दहनदेशेऽशेवाः सेवितुमशक्या दुःखविशेषा ये केचिदसन्पूर्वमासंस्तान्स-

१ ग. °म । इ° । २ क. ख. °ध्वं निविशतेति शेषः । उ° । ३ क. ख. °न्तः प्र° ।

वाञ्छाम परित्यजाम । शिवान्सुखहेतून्वाजानन्नविशेषानन्नविशेषान्वाऽभिलक्ष्य वयमुत्तरेमोत्तीर्णा भवाम ।

यद्वै दे॒वस्य॑ सवि॒तुः प॒वित्र॑ꣳ स॒हस्र॑धार॒ꣳ वित॑तम॒न्तरि॑क्षे ।
येना॒पु॑ना॒दिन्द्र॒मना॑र्त॒मार्त्यै॒ तेना॒हं मा॒ꣳ सर्व॑तनुं पुनामि ।

कल्पः—"जघनेन कर्षूः पर्णशाखे निहत्याबलेन शुल्बेन बद्ध्वा विनिःसर्पन्ति—यद्वै देवस्य सवितुः पवित्रꣳ सहस्रधारं विततमन्तरिक्षे । येनापुनादिन्द्रमनार्तमार्त्यै तेनाहं माꣳ सर्वतनुं पुनामि" इति । सवितुः प्रेरकस्य सूर्यस्य देवस्य संबन्धि पवित्रं शुद्धिकारणं यद्वै यदेव शुल्बं सहस्रधारं बहुसंधिकमन्तरिक्षे विततं प्रसृतं येन सूर्यरूपेण शुल्बेन पुराऽऽर्त्या आर्तेः सकाशादिन्द्रमनार्तमपुनादार्तो यथा न भवति तथा शोधितवान् । तेन शुल्बेनाहं प्रेतस्य ज्ञातिं मां मद्रूपां सर्वतनुं कृत्स्नशरीरं पुनामि शोधयामि ।

या रा॒ष्ट्रात्प॒न्नाद॒पय॑न्ति॒ शाखा॑ अ॒भिमृ॑ता॒ नृप॑ति॒-
मि॒च्छमा॑नाः । धा॒तुस्ताः सर्वाः॒ पव॑नेन पू॒ताः
प्र॒जया॑ऽस्मान्र॒य्या वर्च॑सा॒ सꣳसृ॑जाथ ।

कल्पः—"जघन्यो व्युदस्यति— या राष्ट्रात्पन्नादपयन्ति शाखा अभिमृता नृपतिमिच्छमानाः । धातुस्ताः सर्वाः पवनेन पूताः प्रजयाऽस्मान्रय्या वर्चसा सꣳसृजाथ" इति। शुल्बस्याधस्ताद्ये ज्ञातयो निर्गच्छन्ति तेषां मध्ये पश्चान्निर्गच्छन्दहनकर्ता पुरुषः शाखाद्वयमनेन मन्त्रेण व्युदस्येत्। अभिमृता अनुक्रमेण पूर्वं मृताः पुरुषा नृपतिमिच्छमाना मनुष्याणां पालकं स्वामिनमिच्छन्तः पन्नात्प्रासादाद्राष्ट्राः शाखा अपयन्त्यपसारयन्ति ताः सर्वाः शाखा धातुः संबन्धिना पवनेन शुद्धिहेतुना पूताः शोधिताः । तादृश्यो हे शाखा अस्मान्प्रजादिभिः सꣳसृजाथ संयोजयत ।

कल्पः—"उद्वयं तमसस्परीत्यादित्यमुपस्थाय" इति । पाठस्तु—

उ॒द्व॒यं तम॑स॒स्परि॒ पश्य॑न्तो॒ ज्योति॒रुत्त॑रम् । दे॒वं
दे॒व॒त्रा सूर्य॒मग॑न्म॒ ज्योति॑रुत्त॒मम् , इति ।

वयं तमस उत्तरं ज्योतिस्तमसो विनाशकत्वेनोत्कृष्टं सूर्यसंबद्धं ज्योतिरुत्परि पश्यन्त उत्कर्षेण सर्वतोऽवलोकयन्तो देवत्रा देवेषु मध्ये सूर्यं देवमुत्तमं ज्योतीरूपमगन्म प्राप्ताः स्मः ।

धाता पुनातु सविता पुनातु । अग्नेस्ते-
जसा सूर्यस्य वर्चसा ( ३ ) ॥
धेनुरुत्तरेमाष्टौ च ॥
इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके षष्ठप्रपाठके
तृतीयोऽनुवाकः ॥ ३ ॥

कल्पः—" अनवेक्षमाणा अपोऽवगाहन्ते—धाता पुनातु सविता पुनातु " इति । अग्नेस्तेजसा सूर्यस्य वर्चसेति मन्त्रशेषः । धाता जगतः स्रष्टा प्रजापतिरग्निसंबन्धेन तेजसा पुनातु शोधयतु । सविता प्रेरको देवः सूर्यसंबन्धिना तेजसा पुनातु ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीय-
तैत्तिरीयारण्यकभाष्ये षष्ठप्रपाठके तृतीयोऽनुवाकः ॥ ३ ॥

---

अथ षष्ठे चतुर्थोऽनुवाकः ।

---

कल्पः—" अपरेद्युस्तृतीयस्यां पञ्चम्यां सप्तम्यां वाऽस्थीनि संचिन्वन्ति, क्षीरोत्सिक्तेनोदकेनोदुम्बरशाखया प्रक्षालयञ्शरीराण्यवोक्षति—यं ते अग्निममन्थामेति पञ्चभिः " इति । तत्र प्रथमामाह—

यं ते अग्निममन्थाम वृषभायेव पक्तवे । इमं तꣳ
शमयामसि क्षीरेण चोदकेन च, इति ।

हे प्रेतशरीर ते तव पक्तवे पाकार्थं वृषभायेव यथा पशवे तथा यमग्निममन्थाम । शुबन्धेषु हि पशोः पाकार्थमग्निर्मथ्यते निर्मन्थ्यं[2] वा कुर्यादिति श्रुतेः । तमिममग्निमन क्षीरेण चोदकेन च शमयामसि शान्तं कुर्मः ।

अथ द्वितीयामाह—

यं त्वमग्ने समदहस्त्वमु निर्वापया पुनः । क्याम्बू-
रत्र जायतां पाकदूर्वा व्यल्कशा, इति ।

हेऽग्ने त्वं यं प्रेतदेहं समदहः सम्यग्दग्धवानसि । त्वमु तादृशस्त्वमेव पुनर्निर्वापेतः स्थानात्पुनरपि निःसारय । अत्र देशे क्याम्बूः कियताऽप्यम्बुना युक्ता काचिषधिः पाकदूर्वाऽल्पया दूर्वया युक्ता व्यल्कशा विविधशाखायुक्ता जायतामुत्पताम् ।

---

१ ग. ( ६ ) । २ ग. निर्मध्यं । ख. निर्मथ्यं ।

अथ तृतीयामाह—

शीतिके शीतिकावति ह्लादुके ह्लादुकावति
मण्डूक्यासु संगमयेमं स्वग्निं शमय, इति ।

शीतेन जलेन युक्ता भूमिः शीतिका, ह्लादकारिणा क्षीरेण युक्ता भूमिर्ह्लादुका । हे **शीतिके** भूमे **शीतिकावति** शीतिकाभूमियुक्ते स्थाने, हे **ह्लादुके ह्लादुकावति** ह्लादुकायुक्ते स्थानविशेषे **मण्डूक्यासु** मण्डूकप्लवनयोग्यास्वप्सु **संगमयेमं** प्रेतदेहं प्रापय । **अग्निं** च **सुष्ठु शमय** ।

अथ चतुर्थीमाह—

शं ते धन्वन्या आपः शमु ते सन्त्वनूक्याः । शं
ते समुद्रिया आपः शमु ते सन्तु वर्ष्याः, इति ।

धन्वनि मरुदेशे भवा धन्वन्यास्तादृश्य आपो हे प्रेतदेह ते तव शं सन्तु सुखहेतवो भवन्तु । अनूपदेशे भवा अनूक्या आपः [ते] शं ( शमु ) सन्तु सुखहेतव एव भवन्तु । तथा समुद्रे भवाः समुद्रिया वर्षे भवा वर्ष्यास्ताः सर्वा अपि ते सुखहेतवो भवन्तु ।

अथ पञ्चमीमाह—

शं ते स्रवन्तीस्तनुवे शमु ते सन्तु कूप्याः । शं ते
नीहारो वर्षतु शमु पृष्वाऽवशीयताम् (१), इति ।

**स्रवन्तीर्नदीगता** आपो हे प्रेत ते **तनुवे शं** सुखहेतवो भवन्तु । कूपे भवाः कूप्याः ताश्च ते सुखहेतवो भवन्तु । **नीहारो** हिमरूपस्ते सुखार्थं **वर्षतु** वृष्टिवत्स्रवतु । **पृष्वा** जलबिन्दुः **शमु** सुखार्थमेवा**वशीयता**मधः पततु ।

कल्पः—" अत एवाङ्गारान्दक्षिणा निर्वर्त्य तिस्रः स्रुवाहुतीर्जुहोति—अवसृजेति प्रतिमन्त्रम् " इति । तत्र प्रथमामाह—

अवसृज पुनरग्ने पितृभ्यो यस्त आहुतश्चरति स्वधाभिः ।
आयुर्वसान उपयातु शेषं संगच्छतां तनुवा जातवेदः, इति ।

हेऽग्ने **यः प्रेतः** पुमानाहुतश्चितौ मन्त्रेण समर्पितः सन्**स्वधाभिः** स्वधाकारसमर्पितैरुदकादिभिः सह **चराति** । तं प्रेतं **पितृभ्यः** पितृप्राप्त्यर्थं **पुनरवसृज** भूयः प्रेरय ।

---

१ ख. ग. °ने मण्डूक्यासु मण्डूकप्लवनयोग्यास्वप्सु संगमय प्रापय । हे । २ क. ख. देह । ३ ग. पृष्ठाऽव° । ४ ग. पृष्ठा । ५ ख. ग. °णान्निर्व° ।

यं प्रेत आयुर्वसान आच्छादयन्नायुषा युक्त इत्यर्थः । शेषं भोगमुपयातु प्राप्नोतु । जातवेदः सोऽयं प्रेतस्तनुवा संगच्छतां शरीरेण संगतो भवतु ।

अथ द्वितीयामाह—

संगच्छस्व पितृभिः सꣳ स्वधाभिः समिष्टापूर्तेन

परमे व्योमन् । यत्र भूम्यै वृणसे तत्र गच्छ

तत्र त्वा देवः सविता दधातु, इति ।

हे प्रेत त्वं पितृभिः संगच्छस्व संगतो भव । स्वधाभिः स्वधाकारसमर्पितैर्द्रव्यैः गतो भव । परमे व्योमन्नुत्कृष्टे स्वर्गे इष्टापूर्तेन श्रौतस्मार्तकर्मफलेन संगतो भव । भूम्यै भूम्यां यत्र यस्मिन्देशविशेषे वृणसे जन्म प्रार्थयसे तत्र गच्छ । सविता वस्त्वां तत्र दधातु स्थापयतु ।

अथ तृतीयामाह—

यत्ते कृष्णः शकुन आतुतोद पिपीलः सर्प उत वा श्वापदः ।

अग्निष्टद्विश्वादनृणं कृणोतु सोमश्च यो ब्राह्मणमाविवेश, इति ।

हे प्रेत तव देहे कृष्णः शकुनः पक्षिविशेषो यदङ्गमातुतोदेषद्व्यथितमकरोत् । पिपीलः पिपीलिका वा सर्पो वा यदङ्गमातुतोद । उत वाऽथवा श्वापदोऽन्योऽपि वो व्यापत्तिहेतुरातुतोद । अयमग्निर्देवस्तदङ्गं विश्वात्सर्वस्मादुपद्रवादनृणमृणरहितमुपद्रवरहितं कृणोतु करोतु । यश्च सोमो ब्राह्मण ए (णमे) तदीये ब्राह्मणशरीर आविवेश यागकाले प्रविष्टवान्सोऽप्यनृणं करोतु ।

उत्तिष्ठातस्तनुवꣳ संभरस्व मेह गात्रमवहा मा शरीरम् ।

यत्र भूम्यै वृणसे तत्र गच्छ तत्र त्वा देवः सविता दधातु ।

कल्पः—"अथैनदादग्रमुदकुम्भैः स्ववोक्षितमवोक्ष्य याऽस्य स्त्रीणां मुख्या सा व्ये पाणौ नलिलोहिताभ्यां सूत्राभ्यां विग्रथ्याश्मानमन्वास्थायापामार्गेण सकृदुपमृज्य तः शिरस्तो वाऽस्थि गृह्णाति—उत्तिष्ठातस्तनुवꣳ संभरस्व मेह गात्रमवहा मा शरीरम् । यत्र भूम्यै वृणसे तत्र गच्छ तत्र त्वा देवः सविता दधात्विति, इदं त एकमिति द्वितीयं पर ऊ त एकमिति तृतीयं तृतीयेन ज्योतिषा संविशस्वेति चतुर्थं संवेशनस्तनुवै चारुरेधीति पञ्चमं प्रियो देवानां परमे सधस्थ इति षष्ठम्" इति । हे प्रेतातोऽदहनदेशादुत्तिष्ठ । तनुवं शरीरं संभरस्व संपादय, इह दहनदेशे गात्रमङ्गमेकं माऽवहा मा परित्यज । शरीरमपि माऽवहा मा परित्यज । यत्रेत्यादि पूर्ववत् ।

१ क. ख. °स्माच्छ्मशानदे° ।

**इदं त एकं पर ऊ त एकं तृतीयेन ज्योतिषा संविशस्व ।**
**संवेशनस्तनुवै चारुरेधि प्रियो देवानां परमे सधस्थे, इति ।**

हे प्रेत ते तव संबन्धीदमेकमस्थि ऊ अपि च **परः** परस्तात्ते तव संबन्ध्येकमस्थि हे प्रेतैतदस्थिरूपेण पूर्वद्वयापेक्षया **तृतीयेन ज्योतिषा** प्रकाशेन **संविशस्व** संयुक्तो भव। **तनुवै** शरीरसिद्ध्यर्थं **संवेशनः** सर्वेषामस्थ्नां योजयिता **चारुरेधि** रमणीयो भव। **परमे सधस्थ** उत्कृष्टे सहोपवेशनस्थाने **देवानां प्रियो** भव ।

**उत्तिष्ठ प्रेहि प्रद्रवौकः कृणुष्व परमे व्योमन् ।**
**यमेन त्वं यम्या संविदानोत्तमं नाकमधिरोहेमम् ।**

कल्पः—" अथैतान्यस्थीन्यद्भिः प्रक्षाल्य कुम्भे वा सते वा कृत्वाऽऽदायोपोत्तिष्ठति—उत्तिष्ठ प्रेहि प्रद्रवौकः कृणुष्व परमे व्योमन् । यमेन त्वं यम्या संविदानोत्तमं नाकमधिरोहेमम्" इति । हे प्रेतास्मात्स्थानादुत्तिष्ठ । उत्थाय च **प्रेहि** प्रकर्षेण गच्छ। गमनकालेऽपि **प्रद्रव** शीघ्रं गच्छ । गत्वा च **परमे व्योमन्नु**त्कृष्टे स्वर्गे **ओकः कृणुष्व** स्थानं कुरु। कृत्वा च **त्वं यमेन यम्या** च स्त्रीपुरुषाभ्यामुभाभ्यां सह **संविदाना** संविदान ऐकमत्यं प्राप्तः सन्निममुत्तमं **नाकं** स्वर्गभोगमधि**रोह** प्राप्नुहि ।

कल्पः—" शम्यां पलाशे वा कुम्भं निधाय जघनेन कुम्भं कर्ष्वादिसमानमा स्नात्वान्मृदा स्नातीत्येके" इति । तत्र पूर्वोक्तानां मन्त्राणां प्रतीकानि दर्शयति—

**अश्मन्वती रेवतीर्यद्वै देवस्य सवितुः पवित्रं या राष्ट्रात्पन्नादुद्वयं तमसस्परि धाता पुनातु , इति ।**

सोमयाजिनस्तु पुनर्दहनं कर्तव्यं पुनर्दहनान्तं सोमयाजिन इति सूत्रेऽभिहितत्वात्। तत्प्रकारस्तु कल्पे दर्शितः—"अथ यदि पुनर्धक्ष्यन्तः स्युरत एवाङ्गारान्दक्षिणां निर्वर्त्य तिस्रो रात्रीरिद्ध्वा दहनवदवकाशं जोषयित्वाऽग्निमुपसमाधाय संपरिस्तीर्यापरेणाग्निं दर्भान्संस्तीर्य तेषु कृष्णाजिने शम्यायां दृषदुपलाभ्यांमवाञ्जनं(?) शरीराणि सुसंपिष्टानि पेषयित्वाऽऽज्यकुम्भे समुदायुत्याग्निहोत्रहवण्या जुहोत्यस्मात्त्वमधिजातोऽसि" इति पाठस्तु—

**अस्मात्त्वमधिजातोऽस्ययं त्वदधिजायताम् । अग्नये वैश्वानराय सुवर्गाय लोकाय स्वाहा (२), इति ॥**

**अवंशीयता९ सधस्थे पञ्च च ॥**

**इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके षष्ठप्रपाठके चतुर्थोऽनुवाकः ॥ ४ ॥**

१ क. ख युक्तो । २ ग. ॰णाभिर्वे॰ । ३ ग. ॰भ्यामेवा॰ ।

· द्वितीयानुवाके व्याख्यातो मन्त्रः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्ये षष्ठप्रपाठके चतुर्थोऽनुवाकः ॥ ४ ॥

---

अथ षष्ठे पञ्चमोऽनुवाकः ।

---

**आयातु देवः सुमनाभिरूतिभिर्यमो ह वेह प्रयताभिरक्ता । आसीदताꣳ सुप्रयते ह बर्हिष्यूर्जाय जात्यै मम शत्रुहत्यै ।**

पञ्चमेऽनुवाके यमयज्ञोऽभिधीयते । स च कल्पसूत्र एवमुपक्रान्तः—

"यज्ञमयं स्वयं प्रोक्तं प्रवक्ष्ये बलिमुत्तमम् ।
मासि मासि तु कर्तव्योऽन्तकाय तु बलिस्तथा" इति ।

तत्र मन्त्रविनियोग एवमभिहितः—"आयातु देवः सुमनाभिरूतिभिर्यमो ह वेह प्रयताभिरक्ता । आसीदताꣳ सुप्रयते ह बर्हिष्यूर्जाय जात्यै मम शत्रुहत्योमिति यममावा[ह]यति" [इति] । तत्राऽऽवाहनार्थः प्रणवोऽध्याहृतः । मन्त्रे हशब्दः प्रसिद्ध्यर्थः, वाशब्दः [स]मुच्चये । प्रसिद्धो यमो देवः सुमनाभिः सौमनस्ययुक्तै(क्ताभि)रूतिभिरस्मदीय[रक्ष]णैः सहित इह यमयज्ञाख्ये कर्मण्यायातु । तथा प्रयताभिर्नियताभिरूतिभिरक्ता [प्रसि]द्धा यमी चाऽऽयातु । मम यजमानस्योर्जायान्नसिद्ध्ये जात्या उत्तमजातिसिद्ध्ये [शत्रु]हत्यै शत्रुवधाय च सुप्रयते सुष्ठुनियते बर्हिषि । ह प्रसिद्धौ । एतौ दंपती आसी[दत]मुपाविशताम् ।

[क]ल्पः—"यमे इव यतमाने यदैतमिति च" इति । आवाहयतीत्यनुवर्तते । [पाठस्]तु—

**यमे इव यतमाने यदैतं प्र वां भरन्मानुषा देवयन्तः । आसीदतꣳ स्वमु लोकं विदाने स्वासस्थे भवतमिन्दवे नः, इति ।**

[इ]वशब्द एवकारार्थः । यद्यदा यतमाने प्रयत्नं कुर्वाणे यमे इव यमो यमी चेत्येते [यु]वामैतमस्मिन्कर्मण्यागच्छतम् । तदानीं देवयन्तो देवानात्मन इच्छन्तो मानुषा [मनुष्या]णा वां युवां प्रभरन्प्रकर्षेण भरन्तु पोषयन्तु । स्वमु लोकं स्वोचितमेव स्थानं [वि]दाने जानत्यौ युवामासीदतमुपविशतम् । नोऽस्माकमिन्दव आह्लादाय स्वासस्थे [शोभ]नस्थाने भवतं तिष्ठतम् ।

---

१ क. ख. °हत्या इति । २ क. ख. °मस्मत्कर्म° ।

**यमाय सोम॑ꣳ सुनुत यमाय॑ जुहुता ह॒विः ।**
**यम॑ꣳ ह य॒ज्ञो गच्छ॒त्यग्निदू॑तो अरं॑कृतः ।**

कल्पः—"मध्यमस्या(माया)मुत्तरवेद्यां यमाय हविर्निवेदयन्ते—यमाय सोमꣳ सुनुत यमाय जुहुता हविः । यमꣳह यज्ञो गच्छॅत्यग्निदूतो अरंकृतः" इति । हे ऋत्विजो यमदेवार्थं **सोमं सुनुत** लतात्मकं सोममभिषुणुत । तथा यमार्थं **हविर्जुहुत** । अग्निर्दूतो यस्मिन्यज्ञे सोऽयमग्निदूतः । अग्नेर्दूतत्वमन्यत्राऽऽम्नातम्—"अग्निर्देवानां दूत आसीत्" इति । **अरंकृतो** बहुभिर्द्रव्यैरलंकाररूपैर्युक्तः, तादृशो **यज्ञो यमं ह** यममेव [गच्छति] गच्छतु । ( *ओंकारस्त्वध्याहृतः ) ।

**यमाय॑ घृ॒तवद्ध॒विर्जु॒होत॒ प्र च॑ तिष्ठत ।**
**स नो॑ दे॒वेष्वाय॑मद्दीर्घमायुः प्रजीवसे॑ ।**

कल्पः —" प्रतीच्यामुत्तरवेद्याम्—यमाय घृतवद्धविर्जुहोत प्र च तिष्ठत । स नो देवेष्वायमद्दीर्घमायुः प्रजीवसे" इति । हे ऋत्विजो यमार्थं घृतयुक्तं **हविर्जुहोत** । यूयं **च प्रकर्षेण तिष्ठत** । **देवेषु** मध्ये यो यमो देवः **स प्रजीवसे** प्रकृष्टजीवनार्थं नोऽस्माकं दीर्घमायुरायमत्प्रयच्छतु ।

**यमाय मधु॑मत्तमꣳ राज्ञे॑ ह॒व्यं जु॑होतन । इ॒दं नम**
**ऋषि॑भ्यः पूर्व॒जेभ्यः पूर्वे॑भ्यः पथि॒कृद्भ्यः॑ (१) ।**

कल्पः—"प्राच्यामुत्तरवेद्याम्—यमाय मधुमत्तमꣳ राज्ञे हव्यं जुहोतन । इदं न ऋषिभ्यः पूर्वजेभ्यः पूर्वेभ्यः पथिकृद्भ्यः" इति । हे ऋत्विजो **यमाय राज्ञे** मधुमत्तममतिशयेन मधुरं हव्यं **जुहोतन** जुहुत । **पूर्वजेभ्यः** सृष्ट्यादावुत्पन्नेभ्योऽत एव पूर्वेभ्योऽस्मत्तः पूर्वभाविभ्यः **पथिकृद्भ्यः** शोभनमार्गकारिभ्य **ऋषिभ्य इदं** प्रत्यक्षं यद्भवति तथा **नमो**ऽस्तु ।

कल्पः—"योऽस्य कौष्ठ्येति तिसृभिर्यमगाथाभिस्त्रिः प्रदक्षिणं परिगायन्ति" इति तत्र प्रथमामाह—

**योऽस्य कौ॒ष्ठ्य जग॑तः पार्थि॑वस्यैक॑ इद्व॒शी । यमं**
**भङ्ग्य॑श्र॒वो गा॑य यो राजाऽनपरो॒ध्यः॑, इति ।**

---

* एतच्चिह्नान्तर्गतमधिकमिव भाति ।

---

१ ग. °च्छत्वग्नि° । २ ग °च्छत्वग्नि° । ३ ख. ग. °वसे ओमिति । ४ ख. ग. ° ओमिति ।

को(कौ)ष्ठं धनमर्हतीति **कौष्ठ्यः**, तादृशो **यो यम एक** इदेक एव **पार्थिवस्य** पृथिव्यां भवस्यास्य **सर्वस्य जगतो वशी** वशेन युक्तः सर्वं जगत्तदधीनमित्यर्थः । यश्च यमो **राजाऽनपरोध्यः** केनाप्यपरोद्धुमशक्यः । तं **यमं** प्रति **भङ्ग्यश्रव** एतन्नामकं गीतं हे पुरुष **गाय** । भङ्गी रीतिः । संगीतशास्त्रोक्तां भङ्गीमर्हतीति भङ्ग्यम् । श्रवणीयं श्रवः । भङ्ग्यं च तच्छ्रवश्चेति **भङ्ग्यश्रवः** । शास्त्रीयलक्षणोपेतत्वाच्छ्रोत्रसुखकरमित्यर्थः ।

अथ द्वितीयामाह—

**यमं गायं भङ्ग्यश्रवो यो राजाऽनपरोध्यः । येनाऽऽपो**
**नद्यो धन्वानि येन द्यौः पृथिवी दृढा,** इति ।

यो यमो **राजा** केनाप्यपरोद्धुमशक्यः । **येन** यमेनाऽऽ**पो** धृता इति शेषः । तथा **नद्यो** येन धृताः । **धन्वानि** मरुस्थलानि येन धृतानि । **द्यौर्येन** धृता । **दृढा पृथिवी** च येन धृता । तादृशं **यमं** प्रति पूर्वोक्तं **भङ्ग्यश्रवो गाय** ।

अथ तृतीयामाह—

**हिरण्यकक्ष्यान्त्सुधुरान्हिरण्याक्षानयःशफान् ।**
**अश्वाननशतो दानं यमो राजाऽभितिष्ठति,** इति ।

अनसां शकटानां रथानां शतं यस्य यमस्य सोऽयम**नःशतः** । तादृशो **यमो राजा दानं** फलप्रदानमुद्दिश्यात्र समागच्छतु । ***अश्वानभितिष्ठति** रथेषु योजयति । कीदृशानश्वान् । **हिरण्यकक्ष्यान्**सौवर्णाभरणैर्युक्ताः कक्ष्याप्रदेशा येषां ते **हिरण्यकक्ष्या**स्तान् । + शोभनं धुरं रथवहनस्थानं येषां ते **सुधुरा**स्तान् । शृङ्गारार्थं हिरण्यनिर्मिते अक्षिणी येषां ते **हिरण्याक्षा**स्तान्[५] । पाषाणयुक्तमार्गेषु रक्षार्थं निर्मितैरयोमयैर्वलयैर्युक्ताः शफा येषां तेऽ**यःशफा**स्तान्[६] । **अनश(श्य)त** इति पाठे नाशरहितानश्वानिति व्याख्येयम् ।

कल्पः— "यमो दाधारेत्यनुवाकशेषेण हविरुद्धरन्ति" इति । तत्र प्रथमामाह—

**यमो दाधार पृथिवीं यमो विश्वमिदं जगत् ।**
**यमाय सर्वमित्तस्थे यत्प्राणद्वायुरक्षितम्,** इति ।

* अत्र यो यम इत्यनुषञ्जनीयम् । + शोभना धूरिति पठितुं युक्तम् ।

१ ग °ष्ठं संपूर्णं ध° । २ क. ख. ग. 'द्भीरिति सं° । ३ क. ख. ग. करोऽयमि' । ४ क. ख. °ननश्यतो । ५ क. ख. °न् । अयोयुक्ताः खुरा ये° । ६ क ख. °न् । यममाहात्म्यसूचकाः सप्त मन्त्राः, तत्र । ७ क. ख. 'मित्रस्थे ।

**पृथिवीं** सर्वां **यमो दाधार** धृतवान् । तथा **विश्वं** सर्वमिदं **जगद्यमो** धृतवान् । यत्प्राणदस्मिञ्जगति श्वासयुक्तं यदस्ति यदप्यन्यद्वायुना **रक्षितं** वस्त्वस्ति सर्वमि-त्सर्वमेव **यमाय** यमार्थं **तस्थे** तस्थावववस्थितम् ।

अथ द्वितीयामाह—

**यथा पञ्च यथा षड्यथा पञ्चदशर्षयः । यमं यो विद्यात्स ब्रूयाद्यथैक ऋषिर्विजानते ( २ ), इति ।**

**पञ्च** भूतानि **यथा** वर्तन्ते, षडृतवो **यथा** वर्तन्ते, **पञ्चदश** तिथयो **यथा** वर्तन्ते, **ऋषयश्च** वसिष्ठादयो यथा वर्तन्ते, तं प्रकारं सर्वं **स** पुमान्**ब्रूयाद्वक्तुं** शक्तः । कः पुमानिति स उ(तदु)च्यते–**यो यमं** वेद स पुमान्ब्रूयादित्यन्वयः । यमो हि नियन्तृत्वेन भूतर्तुतिथ्यादिकं सर्वं जगद्यथायथं प्रवर्तयति । अतो यमस्य माहात्म्यं विद्वानिदमि-त्थमिति सर्वं वक्तुं शक्नोति । **यथा** वैक ऋषिरेक एव सर्वज्ञः परमेश्वरो विजानते विशेषेण जगज्जानाति तम(द)पि प्रकारान्तरं यममाहात्म्याभिज्ञ एवं वक्तुमुत्सहते ।

अथ तृतीयामाह—

**त्रिकद्रुकेभिः पतति षडुर्वीरेकमिद्बृहत् । गायत्री त्रिष्टुप्छन्दाꣳसि सर्वा ता यम आहिता, इति ।**

त्रिकद्रुकेभिज्योतिर्गौरायुरिति त्रिकद्रुका इति सूत्रकारेणोक्तत्वात्ते त्रयो यागास्त्रि-कद्रुकास्तैर्यागैः षडुर्वीर्भूमीः पतति प्राप्नोति । ताश्चोर्व्यः शाखान्तरमन्त्रे समाम्नाताः- "षण्मोर्वीरꣳहसस्पान्तु द्यौश्च पृथिवी चाऽऽपश्चौषधयश्चोर्क्च सूनृता च" इति । बृहत्तं ब्रह्मैकमिदेकमेव । **गायत्र्यादीनि तु च्छन्दांसि** च्छन्दोरूपेण व्यवस्थितानि । एवं नानाविधं यज्जगदस्ति **सर्वा ता** तत्सर्वं जगद्**यम आहिता** यमे प्रतिष्ठितम् । नियाम-कत्वादेव जगद्व्यवस्थाहेतुत्वं यमस्य युक्तमित्यर्थः ।

अथ चतुर्थीमाह—

**अहरहर्नयमानो गामश्वं पुरुषं जगत् । वैवस्वतो न तृप्यति पञ्चभिर्मानवैर्यमः, इति ।**

अयं **वैवस्वतः** सूर्यस्य पुत्रो **यमः पञ्चभिर्मानवैः** पञ्चसंख्याकैर्मुख्यैर्दूतविशेषैः सहितः सन्न**हरहः** प्रतिदिनं गवादीन्**नयमानो** यमलोके प्रापयन्न **तृप्यति** । अलमेता-वतेत्येवं तृप्तिं न प्राप्नोति । प्राणिनो नेतुमालस्यरहित इत्यर्थः ।

---

१ क ख. °व जानाति व° । २ घ. षडूर्वी° । ३ ग. षड्र्वी° ।

अथ पञ्चमीमाह—

वैवस्वते विविच्यन्ते यमे राजनि ते जनाः ।
ये चेह सत्येनेच्छन्ते य उ चानृतवादिनः, इति ।

इह लोके ये च पुरुषाः सत्येन वर्तितुमिच्छन्ति येऽपि चान्ये पुरुषा अनृतवादिनस्ते द्विविधा अपि जना वैवस्वते सूर्यस्य पुत्रे यमे राजनि स्थिते सति तद्भृत्यैर्विविच्यन्ते । तत्र सत्यवादिनः स्वर्गं नयन्ति, अनृतवादिनो नरकं नयन्तीत्येवं तद्विवेकः ।

अथ षष्ठीमाह—

ते राजन्निह विविच्यन्तेऽथा यन्ति त्वामुप । देवाꣳश्च
ये नमस्यन्ति ब्राह्मणाꣳश्चापचित्यति, इति ।

ये च पुरुषा इह लोके देवान्नमस्यन्त्युपासते येऽपि चान्ये ब्राह्मणानपचित्यति सुवर्णदानान्नदानादिना पूजयन्ति ते द्विविधा अपि हे राजन्निह त्वदीये लोके विविच्यन्ते । तत्रोपासका ब्रह्मलोके नीयन्ते दानादिकर्मनिष्ठास्तु स्वर्गलोके नीयन्त इति तद्विवेकः । अथ यस्मादेवं तस्मात्सर्वेऽपि हे यम त्वामुपयन्ति ।

अथ सप्तमीमाह—

यस्मिन्वृक्षे सुपलाशे देवैः संपिबते यमः । अत्रा नो
विश्पतिः पिता पुराणा अनुवेनति ( ३ ), इति ॥
पथिकृद्भ्यो विजानतेऽनुवेनति ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके षष्ठप्रपाठके
पञ्चमोऽनुवाकः ॥ ५ ॥

यमो राजा देवैरन्यैः सह सुपलाशे शोभनपर्णोपेते यस्मिन्वृक्षे सोमसवननामके । दश्वत्थः सोमसवन इति श्रुत्यन्तरात् । संपिबते संभूय सोमपानं करोति । अत्रास्मिन्वृक्षे विश्पतिः प्रजानां स्वामी नोऽस्माकं पिता पुराणाः पुरातनान्देवाननुवेनति ननुगच्छति । त एते सप्तापि मन्त्रा यममाहात्म्यप्रतिपादकाः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीय-
तैत्तिरीयारण्यकभाष्ये षष्ठप्रपाठके पञ्चमोऽनुवाकः ॥ ५ ॥

अथ षष्ठे षष्ठोऽनुवाकः ।

पूर्वानुवाके पितृमेधगतयमविशेषमन्त्रप्रसङ्गाद्बुद्धिस्थो यमयज्ञोऽभिहितः । स च स्वतन्त्रः पुरुषार्थो नतु पितृमेधाङ्गभूतः । अथ प्रासङ्गिकं परिसमाप्य प्रकृतः पितृमेधशेष एवोच्यते । चयनान्तमग्निचित इति सूत्रेऽभिहितत्वादग्निचिद्विषयं लोष्टचयनमुच्यते । कल्पः—" अग्निमुपसमाधाय जघनेनाग्निं तिस्रः पालाश्यो मेध्यो[1] निहत्य[2] तासामन्तरेणास्थिकुम्भं निधाय तदुपरिष्टाच्छैतातृणामध्युद्यम्य दध्ना मधुमिश्रेण पूरयति—वैश्वानरे हविरिदं जुहोमि " इति । पाठस्तु—

**वैश्वानरे हविरिदं जुहोमि साहस्रमुत्सꣳ शतधारमेतम् । तस्मिन्नेष पितरं पितामहं प्रपितामहं बिभरत्पिन्वमाने, इति ।**

**वैश्वानरे**ऽग्निसदृशे कुम्भ **इदं** वाजिनमिश्रदधिरूपं **हविर्जुहोमि** । कीदृशं हविः । **साहस्रं** सहस्रसंख्योपेतम् । **उत्सं** प्रवाहरूपम् । **शतधारं** शतच्छिद्रेषु पतन्तीभिर्धाराभिर्युक्तम् । **एष** वैश्वानरो देवः **पिन्वमाने** वर्धमाने पूर्यमाणे कुम्भ एतमस्मदीयं **पितरं पितामहं प्रपितामहं** च **बिभरा**द्बिभर्तु ।

कल्पः—" विक्षरन्तमभिमन्त्रयते—द्रप्सश्चस्कन्देमं समुद्रमिति द्वाभ्याम् " इति । तत्र प्रथमामाह—

**द्रप्सश्चस्कन्द पृथिवीमनु द्यामिमं च योनिमनु यश्च पूर्वः । तृतीयं योनिमनु संचरन्तं द्रप्सं जुहोम्यनु सप्त होत्राः, इति ।**

**द्रप्सो** बिन्दुः स **पृथिवीमनु चस्कन्द** । पृथिव्यां पतित इत्यर्थः । स च द्रप्सो हुतः सन्स्थानत्रयेऽनुसंचरति द्युलोकेऽन्तरिक्षलोके भूलोके च । तदेतदभिप्रेत्य स्मर्यते—

" अग्नौ प्रास्ताऽऽहुतिः सम्यगादित्यमुपतिष्ठते ।
आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः " इति ।

सोऽयमर्थो द्यामित्यादिनाऽभिधीयते—**द्यामिमं च योनिमनु** । अन्तरिक्षरूपमिदं स्थानमनुसंचरति । **यश्च पूर्वो**[4] योऽपि पूर्वः पृथिवीमनुचस्कन्देति पूर्वोक्तस्थानविशेषस्तमप्यनुसंचरति । **तृतीयं योनिं** द्युलोकरूपमादित्यस्थानम**नुसंचरति** । तमिमं त्रिषु स्थानेष्वनुसंचरन्तं **द्रप्सं जुहोमि** मनसा हुतमिव भावयामि । कुत्र होम इति तदुच्यते—**अनु सप्त होत्रा** इति । यस्यां दिशि द्रप्सः पतितस्तद्व्यतिरिक्ता होमयोग्याः

१ ख. मेथ्यो । २ ख. निमथ्य । ३ ग. °च्छरं तृण्याम° । ४ क. ख. °र्वो यश्च पूर्वं पृ° ।

सप्त दिशो याः सन्ति तास्वनुक्रमेण जुहोमि। यथाऽयं द्रप्सो हुत आदित्यादिस्थानत्रयेषु सं(ये सं)चरन्नुपकरोति तथा भावयामीत्यर्थः।

अथ द्वितीयामाह—

इमꣳ समुद्रꣳ शतधारमुत्सं व्यच्यमानं भुवनस्य मध्ये। घृतं दुहानामदितिं जनायाग्ने मा हिꣳसीः परमे व्योमन्, इति।

हेऽग्ने इमं कुम्भं जनाय प्रेतपुरुषार्थं मा हिꣳसीर्हिंसितं मा कुरु। किंतु परमे व्योमन्नुत्तमे विधिरक्षणे स्थितं कुरु। कीदृशमिमम्। समुद्रं समुद्रवत्प्रभूतम्। शतधारं शतसंख्याकधारोपेतम्। उत्सं प्रस्रवणयुक्तम्। भुवनस्य मध्ये व्यच्यमानं सेव्यमानमभिव्यज्यमानं वा घृतं दुहानां घृतकारणं दधि दुहानम्। अदितिमखण्डनीयम्।

कल्पः—"व्य(व्यु)ष्टायां हरिण्या पलाशशाखया शमीशाखया वा श्मशानायतनं संमार्ष्टि—अपेत वीत" इति। पाठस्तु—

अपेत वीत वि च सर्पतातो येऽत्र स्थ पुराणा ये च नूतनाः।
अहोभिरद्भिरक्तुभिर्व्यक्तं यमो ददात्ववसानमस्मै, इति।

यमेन नियुक्ताः पुरुषाः पुरातना नूतनाश्च सर्वस्यां भूमौ व्याप्य वर्तन्ते, तान्संबोध्यमुच्यते— हे यमदूता यूयं पुराणा अत्राग्निक्षेत्रे स्थ पूर्वं स्थिता ये च नूतना अत्र स्थ ते सर्वे यूयमपेतास्मात्स्थानादपगच्छत। वीत परस्परं वियुज्य गच्छत, अतो विसर्पतास्मात्स्थानाद्विदूरं गच्छत। अहोभिर्दिवसैरक्तुभी रात्रिभिश्चाद्भिर्जलैर्व्यक्तं विशेषेण संबद्धमवसानमिदं स्थानमस्मै यजमानाय यमो ददातु।

कल्पः—"सवितैतानि शरीराणीति सीरं युनक्ति, षड्गवं द्वादशगवं चतुर्विंशतिगवं वा" इति। पाठस्तु—

सवितैतानि शरीराणि पृथिव्यै मातुरुपस्थ आदधे। तेभिर्युज्यन्तामघ्नियाः (१), इति।

सविता प्रेरकः परमेश्वरो मातुर्मातृस्थानीयायाः पृथिव्या उपस्थ उत्सङ्ग एतानि शरीराणि शरीरावयवस्वरूपाण्यस्थीन्यादधे स्थापितवान्। तेभिस्तैर्निमित्तभूतैरघ्निया गावो बलीवर्दा युज्यन्तां लाङ्गलेन संबध्यन्ताम्।

१ क. ख. °मन्वर्तसे वि°। २ क. हिरण्या। ख. हिरण्यां।

कल्पः—"शुनं वाहा इति द्वाभ्यां प्रसव्यावृत्ताः षट्पराचीः सीताः कृषति" इति।
तत्र प्रथमामाह—

**शुनं वाहाः शुनं नाराः शुनं कृषतु लाङ्गलम्। शुनं वरत्रा बध्य-न्ता[१] शुनमष्ट्रामुदिङ्गय शुनासीरा शुनमस्मासु धत्तम्,** इति।

लाङ्गलं वहन्तीति **वाहा** बलीवर्दाः, ते **शुनं** सुखं यथा भवति तथा वहन्त्विति शेषः। न(ना)रा बलीवर्दानां प्रेरका मनुष्याः **शुनं** सुखं यथा भवति तथा प्रेरयन्त्विति शेषः। **लाङ्गलं** च शुनं सुखं यथा भवति तथा **कृषतु**। **वरत्राश्चर्ममय्यो** रज्जवोऽपि **शुनं** सुखं यथा भवति तथा **बध्यन्ताम्**। अष्ट्रामारां तीक्ष्णाग्रलोहयुक्तं बलीवर्दप्रेरकं दण्डं **चोदिङ्गय** हे कीनाश बलिवर्दप्रेरणार्थमुद्यतां कुरु। **शुनासीरा** हे वाय्वादित्यौ **शुनं** सुखमस्मासु **धत्तं** संपादयतम्।

अथ द्वितीयामाह—

**शुनासीराविमां वाचं यद्दिवि चक्रथुः पयः। तेनेमामुपसिञ्चतम्,** इति।

शुनो वायुः सीर आदित्यः। हे **शुनासीरौ** वाय्वादित्याविमां पूर्वोक्तां शुनमस्मासु धत्तमित्येतादृशीं **वाचं** श्रुत्वा **दिवि**अन्तरिक्षे **यत्पय** उदकं **चक्रथुः** संपादितवन्तौ **तेन**उदकेन**इमां** भूमि**मुपसिञ्चतं** सिक्तां कुरुतम्।

कल्पः—"उद्यम्य लाङ्गलं सीते वन्दामह इति सीताः प्रत्यवेक्षते" इति।
पाठस्तु—

**सीते वन्दामहे त्वाऽर्वाची सुभगे भव। यथा नः सुभगा ससि यथा नः सुफला ससि,** इति।

लाङ्गलपद्धतिः सीता। हे **सीते** त्वां **वन्दामहे** नमस्कुर्मः। हे **सुभगे** सौभाग्ययुक्ते सीतेऽर्वाच्यधः प्रसृता **भव**। **नो**ऽस्मान्प्रति **यथा** येन प्रकारेण **सुभगा** सौभाग्ययुक्ता **ससि** भवसि यथा च **सुफला ससि** शोभनफलोपेता भवसि। तथाऽर्वाची भवेति पूर्वत्रान्वयः।

कल्पः—"सवितैतानि शरीराणीति मध्ये कृष्टस्यास्थिकुम्भं निदधाति" इति।
पाठस्तु—

**सवितैतानि शरीराणि पृथिव्यै मातुरुपस्थ आदधे। तैर्भिरदिते शं भव,** इति।

---

१ ख. ग. °ष्ट्रः। ब°।

सवितेत्यादिः पूर्ववत् । तेभिरस्थिभिर्निमित्तभूतैर्हेऽदिते भूमे शं सुखहेतुर्भव ।

कल्पः—"विमुच्यध्वमघ्निया देवयाना इति दक्षिणेंऽसे बलीवर्दान्विमुच्य" इति । पाठस्तु—

विमुच्यध्वमघ्निया देवयाना अतारिष्म तमसस्पारमस्य । ज्योतिरापाम सुवरगन्म ( *२ ), इति ।

हेऽघ्निया बलीवर्दा विमुच्यध्वं विमुक्ता भवत । देवयाना देवान्प्रति गमनवन्तो यमस्य मनुष्यजन्मरूपस्य तमसोऽन्धकारस्य पारं परभागं प्रत्यतारिष्म तारितन्तः । ज्योतिः स्वर्गमार्गप्रकाशकं सुकृतरूप साधनमापाम प्राप्नवाम । सुवः स्वर्गगन्म वयं प्राप्तवन्तः ।

कल्पः—"उदपात्रेणोदुम्बरशाखया वोक्षति प्र वाता वान्ति" इति । पाठस्तु—

प्र वाता वान्ति पतयन्ति विद्युत उदोषधीर्जिहते पिन्वते सुवः । इरा विश्वस्मै भुवनाय जायते यत्पर्जन्यः पृथिवीꣳ रेतसाऽवति, इति ।

वाताः पुरोवायवः प्रवान्ति प्रकर्षेण गच्छन्ति । तेन वायवो विद्युतः पतयन्ति ताः कुर्वन्ति । ओषधीरोषधयश्चोज्जिहत उद्गच्छन्ति । सुवस्तन्निमित्तं सुखं पिन्वते ते । विश्वस्मै भुवनाय सर्वप्राण्युपकारार्थमिराऽन्नं जायते । यद्यस्मात्कारणात्पर्यो मेघः पृथिवीं रेतसा स्वकीयेनोदकेनावति रक्षति । तस्मात्पूर्वोक्तमन्नादिकमुत्पन्नम् ।

कल्पः—"पात्र्यां सर्वौषधीः संयुत्याऽऽवपति—यथा यमाय" इति । पाठस्तु—

यथा यमाय हार्म्यमवपन्पञ्च मानवाः । एवं वपामि हार्म्यं यथाऽसाम जीवलोके भूरयः, इति ।

यथा यमलोके पञ्च मानवाः पञ्चसंख्याका मनुष्यरूपा मुख्या यमदूता हार्म्यं हर्म्यस्य योग्यं गृहोपकरणजातमवपन्संपादितवन्तः । एवमहमपि हार्म्यं हर्म्यस्य योग्यं गृहोपकरणभूतमोषधिजातं वपामि प्रक्षिपामि । यथा येन प्रकारेण लोके जनसमूहे भूरयः प्रभूता वयमसाम भवाम तथा कुर्म इति शेषः ।

---

* अत्र ग. पुस्तकेऽङ्करहितः पाठः ।

---

१ क. ख. गच्छन्तो । २ क. °तमौष° । ख. °तमौषधजा° ।

कल्पः—"चितः स्थ परिचित इत्यपरिमिताभिः शर्कराभिः परिश्रित्य" इति पाठस्तु—

चितः स्थ परिचितं ऊर्ध्वचितः श्रयध्वं पितरो देवता। प्रजापतिर्वः सादयतु तया देवतया, इति।

हे शर्करा यूयं चितः स्थ संपादिता भवथ। परिचितः स्थ परितः स्थापि भवथ। ऊर्ध्वचितः सर्वाभ्य इष्टकाभ्य ऊर्ध्वं संपादिताः स्थ*। तादृशीनां युष्मा पितरो देवता पितृदेवत्या यूयम्। प्रजापतिर्देवस्तादृशीर्वो युष्मान्सादयतु आ स्थापयतु। तया प्रजापतिरूपया देवतयाऽङ्गिरस्वद्ध्रुवाः सीदतेति शेषः। अङ्गिरोभि स्थापिता यथा ध्रुवास्तथाऽत्रापि ध्रुवाः सत्यस्तिष्ठत।

कल्पः—"आप्यायस्व समेतु त इति सिकता व्यूहति, उत्तरया त्रिष्टुभा राज न्यस्य" इति। उभयोः प्रतीके दर्शयति—

आप्यायस्व, सं ते (२[4]), इति॥

अग्निया अगन्म सप्त च॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके षष्ठप्रपाठके षष्ठोऽनुवाकः॥ ६॥

आप्यायस्व समेतु ते सं ते पयाꣳसि समु यन्तु वाजा इति मन्त्रद्वयं मा नो हि सीर्जनितेत्यनुवाके व्याख्यातम्॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्ये षष्ठप्रपाठके षष्ठोऽनुवाकः॥ ६॥

---

अथ षष्ठे सप्तमोऽनुवाकः।

---

कल्पः—"लोष्टान्प्रतिदिशमैनन्वीक्षमाण उपदधाति—उत्ते तभ्नोमीत्येतैः मन्त्रम्" इति। तत्र प्रथमामाह—

उत्ते तभ्नोमि पृथिवीं त्वत्परीमं लोकं निदधन्मो अहꣳ रिषम्। एताꣳ स्थूणां पितरो धार-

---

* श्रयध्वमित्यस्य व्याख्यानमेतत्।

---

१ ख. ग. °तः सं°। २ क. ख. °दृश्यो वो यु°। ३ क. ख. °ता ध्रुवा यथा त°
४ ग. (२)। ५ ग. °मन्वी°।

**यन्तु तेऽत्रा यमः सादनात्ते मिनोतु, इति ।**

हे लोष्ट ते त्वदर्थं **पृथिवीमुत्तभ्नोमि,** उत्कर्षेण स्तब्धां करोमि । **हे पृथिवि** त्वत्परि तवोपरीमं **लोकं** लोक्यते दृश्यत इति लोको लोष्टस्तं **निदधत्स्थापयन्नहं मो** रिषं तव हिंसां मा करोमि । **एतां** लोष्टरूपां **स्थूणां** स्तम्भं **ते** तव भारो यथा न भवति तथा **पितरो धारयन्तु** । अत्रास्मिन्देशे **यमो** देवो हे लोष्ट **ते** तव **सादना**त्स्थापननिमित्तं **मिनोतु** स्थानं करोतु ।

अथ द्वितीयामाह—

**उपसर्प मातरं भूमिमेतामुरुव्यचसं पृथिवीꣳ सुशेवाम् । ऊर्णम्रदा युवतिर्दक्षिणावत्येषा त्वा पातु निर्ऋत्या उपस्थे, इति ।**

हे लोष्टैतां **भूमिमुपसर्प** प्राप्नुहि । कीदृशीम्, **मातरं** मातृस्थानीयाम्, **उरुव्यचसं** बहुविस्ताराम्, **पृथिवीं** प्रथितां प्रसिद्धाम्, **सुशेवां** सुष्ठु सेवितुं योग्याम् । **ऊर्णम्रदा** कम्बलवन्मृदुभूता **युवति**र्नित्यतरुणी **दक्षिणावती** कौशलयुक्ता **सैषा** पृथिवी, **उपस्थे** स्वोत्सङ्गे ***निर्ऋत्याः** +पापदेवतायाः सकाशाद्धे लोष्ट **त्वां पातु** ।

अथ तृतीयामाह—

**उच्छ्मञ्चस्व पृथिवि मा विबाधिथाः सूपायनाऽस्मै भव सूपवञ्चना । माता पुत्रं यथा सिचाऽभ्येनं भूमि वृणु, इति ।**

हे **पृथिवि** लोष्टमेनमुच्छ्मञ्चस्वोत्कर्षेण सुखयुक्तं कुरु । **मा विबाधिथा** अस्य [बा]धां मा कार्षीः । **अस्मै** लोष्टाय सूपायनं निवासस्थानं भोग्यद्रव्यं वा यस्याः सा [सू]पायना । सुष्ठूपवञ्चनं स्वेच्छागमनं यस्याः सा **सूपवञ्चना** । तादृशी भव । **यथा** [लो]के **माता पुत्रं सिचा** वस्त्रेण प्रावृणोति तथैनं लोष्टम**भिवृणु,** अस्य प्रावरणं कुरु ।

अथ चतुर्थीमाह—

**× उच्छ्मञ्चमाना पृथिवी हि तिष्ठसि सहस्रं मित उप हि श्रयन्ताम् । ते गृहासो मधु-**

---

* ऋग्भाष्येऽत्र निर्ऋतिपदस्य मृत्युदेवतेत्यर्थः कृतोऽस्ति । + अग्रे नवमानुवाके वरणो वार[य]ादिति मन्त्रे निर्ऋतिपदव्याख्यानुरोधेनायं पाठः कल्पितः । दृश्यते तु सर्वत्राऽऽदर्शपुस्तकेषु पाद[दे]वतायाः इति । × अत्र द्विद्वयं वर्तते तत्रैकस्य व्याख्यानं न स्पष्टतयोल्लिखितं दृश्यते । एतं [इ]ति वाशब्देन ध्वनितं तु स्यात् ।

१ क. ख. °त्याः स° ।

श्रुतो विश्वाहाऽस्मै शरणाः सन्त्वत्र, इति ।

हे **पृथिवि हि** यस्मादुच्छ्रमश्वमानोत्कर्षेण सुखं कुर्वाणा **तिष्ठसि** । तस्मात्कारणान्मितो मीयमानाः **सहस्रं** लोष्टा **उपश्रयन्तां** त्वामाश्रयन्तु । एतं वा मुख्यं लोष्टमाश्रयन्तु । ते सर्वे लोष्टा **मधुश्रुतो** माधुर्यरसस्राविणो **गृहा** भूत्वा **विश्वाहा** सर्वेष्वप्यहःस्व**स्मै** स्थाप्यमानलोष्टाय शरणा **अत्र** रक्षितारः **सन्तु** ।

कल्पः—"तिलमिश्राभिर्धानाभिस्त्रिरपसव्यं परिकिरति—एणीर्धानाः" इति । पाठस्तु—

एणीर्धाना हरिणीरर्जुनीः सन्तु धेनवः । तिलवत्सा ऊर्जमस्मै दुहाना विश्वाहा सन्त्वनपस्फुरन्तीः ( १ ), इति ।

या **धानाः** सन्ति ता **एणीर्मि**श्रवर्णा **हरिणीर्ह**रितवर्णा **अर्जुनीः** श्वेतवर्णाश्च **धेनवः** सन्तु । तिला वत्सस्थानीया यासां तास्तिलवत्साः, तादृश्यो धाना अस्मै प्रेतायोर्जमन्नरसं **दुहाना विश्वाहा** सर्वेष्वहःस्व**नपस्फुरन्ती**रपस्फुरणेन प्रातिकूल्यप्रतिभासेन रहिताः **सन्तु** ।

कल्पः—"अभिवान्यायै दुग्धस्यार्धशरावे मन्थंस्त्रिः प्रसव्योपमथित आमपात्रस्थमं दक्षिणत उपदधाति—एषा ते यमसादने" इति । पाठस्तु—

एषा ते यमसादने स्वधा निधीयते गृहे । अक्षितिर्नाम ते असौ, इति ।

हे प्रेत ते तव **यमसादने** यमस्य स्थाने **गृह एषा** मन्थरूपा **स्वधा**ऽन्नात्मिका **निधीयते** स्थाप्यते । **असौ** हे देवदत्तनामक प्रेत **ते** तवा**क्षितिर्नाम** क्षयरहिता खलु ।

कल्पः— "समूलं बर्हिर्दक्षिणा स्तृणाति—इदं पितृभ्यः प्रभरेम बर्हिः" इति । पाठस्तु—

इदं पितृभ्यः प्रभरेम बर्हिर्देवेभ्यो जीवन्त उत्तरं भरेम । तत्त्वमारोहासो मेध्यो[२] भव[३] यमेन त्वं यम्या संविदानः, इति ।

**इदं बर्हिः पितृभ्यः** पित्रर्थं **प्रभरेम** प्रकर्षेण स्तृणीम । वयं तु जीवन्त एव **तत्त्वमारोहासः** परमार्थतत्त्वमारोढुकामा **देवेभ्यो** देवार्थ**मुत्तर**मुद्गततरमतिशयेनोत्कृ-

---

१ ग. °न्थस्त्रिरपस° । २ म. मेध्यो । ३ ग. भव ।

ष्टतरं बर्हिर्भरेम संपादयाम । हे प्रेत त्वं यमेन यम्या च संविदान ऐकमत्यं गतो मेध्यो[1] भव [ म् ] । अमृतसेवनयोग्यो भव ।

कल्पः—" पालाशान्परिधीन्परिदधाति—मा त्वा वृक्षाविति पूर्वापरावुत्तरया दाक्षिणोत्तरौ " इति । तत्र प्रथमामाह—

मा त्वा वृक्षौ संबाधिष्टां मा माता पृथिवि त्वम् ।
* पितॄन्ह्यत्र गच्छास्येधासं यमराज्ये, इति ।

हे प्रेत त्वां वृक्षौ पूर्वापरपरिधिरूपावेतौ मा संबाधिष्टां बाधितं मा कुरुत( ता )म् । हे पृथिवि त्वमपि माता मातृस्थानीया सती मा बाधिष्ठाः । हि प्रसिद्धान्पितॄनत्र स्थाने गच्छासि हे प्रेत प्राप्नुहि । यमराज्ये यमस्य देश एधासमेधस्व वर्धस्व ।

अथ द्वितीयामाह—

मा त्वा वृक्षौ संबाधेथां मा माता पृथिवी मही ।
वैवस्वतꣳ हि गच्छासि यमराज्ये विराजसि, इति ।

हे प्रेत त्वां वृक्षौ दक्षिणोत्तरपरिधिरूपावेतौ मा संबाधेथां संबाधितं मा कुरुताम् । माता मातृस्थानीया मही महती पृथिवी मा बाधिष्ट । हि प्रसिद्धं वैवस्वतं सूर्यपुत्रं यमं गच्छासि प्राप्नुहि । यमराज्ये यमस्य देशे विराजसि विशेषेण राजमानो भव ।

कल्पः—" मध्ये नलेषीकान्निदधाति—नैळं[2] प्लवम् " इति । पाठस्तु—

नैळं[3] प्लवमारोहैतं नैळेन[4] पथोऽन्विहि । स त्वं
नैळप्लवो[5] भूत्वा संतर प्रतरोत्तर ( २ ), इति ।

नैळशब्देन[6] जलमध्ये समुत्पन्नस्तृणविशेष उच्यते । हे प्रेत त्वं नैळं[7] प्लवं तृणविशेषरूपं प्लवनहेतुमेतमारोह । तेन नलेन पथो मार्गानन्विहि त्वमनुक्रमेण प्राप्नुहि । तादृशस्त्वं नल( ळ )प्लवो नैळरूपेण[8] प्लवेन युक्तो भूत्वा संतर पितृलोकमार्गरूपं समुद्रं सम्यक्तर । प्रतर प्रकर्षेण तर । उत्तरोत्कर्षेण तर । मार्गे नानाविधोपद्रवपरिहाराभिप्रायेण नानाविधं तरणमुच्यते ।

कल्पः—" पुराणेन सर्पिषा शरीराणि सुसंतृप्तानि संतर्प्योत्तरत आसीनोऽनन्वीक्षमाणो दर्भेषु निवपति—सवितैतानि शरीराणि " इति । पाठस्तु—

* " पितॄन्हि । यत्र " इत्यपि पाठो वैदिकानां प्रसिद्धः ।

१ ग. मेध्यो । २ ग. नलं । ३ ग. नलं । ४ ग. नलेन । ५ ग. नलप्लु° । ६ ग. नलश° । ७ ख. ग. नलं । ८ ख. ग. नलरू° ।

सवितैतानि शरीराणि पृथिव्यै मातुरुपस्थ
आदधे । तेभ्यः पृथिवि शं भव, इति ।

**एतानि शरीराणि** शरीरावयवरूपाण्यस्थीनि मातृस्थानीयायाः पृथिव्या **उपस्थ** उत्सङ्गे **सविता** प्रेरको देव **आदधे** सर्वतः स्थापयति । हे **पृथिवि तेभ्यो**ऽस्थिभ्यः **शं** सुखहेतुर्**भव** ।

षड्ढोता सूर्यं ते चक्षुर्गच्छतु वातमात्मा द्यां च
गच्छ पृथिवीं च धर्मणा । अपो वा गच्छ यदि तत्र
ते हितमोषधीषु प्रतितिष्ठा शरीरैः, इति ।

कल्पः—"अथैनमुपतिष्ठते—षड्ढोता सूर्यं ते चक्षुर्गच्छतु वातमात्मा द्यां च गच्छ पृथिवीं च धर्मणा । अपो वा गच्छ यदि तत्र ते हितमोषधीषु प्रतितिष्ठा शरीरैः" इति। षड्ढोतृसंज्ञको मन्त्राभिमानी देवोऽस्ति तदनुग्रहेण हे प्रेत त्वदीयं **चक्षुः सूर्यं** गच्छत्विति योजनीयम् । अयं च मन्त्रः प्रथमानुवाके व्याख्यातः ।

कल्पः—"भुक्तभोगेन वाससाऽस्थिकुम्भं निमृज्योपर्युपारि शिरो दक्षिणा व्युदस्यति—परं मृत्यो अनुपरेहि पन्थामिति, अथास्य कपालानि सुसंभिन्नानि संभिनत्ति यथैषूदकं न तिष्ठेत्" इति । पाठस्तु—

परं मृत्यो अनुपरेहि पन्थां यस्ते स्व इतरो
देवयानात् । चक्षुष्मते शृण्वते ते ब्रवीमि मा नः
प्रजाꣳ रीरिषो मोत वीरान्, इति ।

हे **मृत्यो देवयानादितरो यः** पन्थास्ते **स्व**स्तव स्वभूतः, तं **परं पन्थां** देवयानादितरं तं मार्गमनुपरेहि अनुक्रमेण प्राप्नुहि । **चक्षुष्मते** साधुदर्शिने **शृण्वते**ऽस्मद्विज्ञप्तीनां श्रोत्रे **ते** तुभ्यमेकं वचनं **ब्रवीमि** । **नो**ऽस्मदीयां **प्रजां** पुत्रादिरूपां मा रीरिषो मा विनाशय । उतापि च **वीरा**ञ्शूरान्भृत्यानपि मा रीरिषः ।

कल्पः—"भुक्तभोगेन वाससा शरीराणि प्रच्छाद्योदपात्रेणोदुम्बरशाखया वोक्षति—शं वातः" इति । पाठस्तु—

शं वातः शꣳ हि ते घृणिः शमु ते सन्त्वो-
षधीः । कल्पन्तां मे दिशः शग्माः, इति ।

---

१ ग. °ष्ठन्ते ष° । २ ग. °ति । यः ष° ।

वातो वायुस्ते तव शं सुखं करोतु । घृणिर्दीप्यमान आदित्यो हि प्रसिद्धस्ते तव शं सुखं करोतु । ओषध्यश्च ते तव शं सुखहेतवः सन्तु । दिशः सर्वा मे मम शग्माः सुखप्रापिकाः कल्पन्तां समर्था भवन्तु ।

कल्पः—"इष्टकाः प्रतिदिशमनन्वीक्षमाण उपदधाति—पृथिव्यास्त्वा लोके सादयामीत्येतैः प्रतिमन्त्रं प्रतिदिशं मध्ये पञ्चमीं तां दक्षिणेन षष्ठीम्" इति । तत्र प्रथममन्त्रमाह[3]—

**पृथिव्यास्त्वा लोके सादयाम्यमुष्य शर्मासि पितरो देवता । प्रजापतिस्त्वा सादयतु तया देवतया, इति ।**

हे इष्टके त्वां **पृथिव्या लोके** स्थाने स्थापयामि सादयामि । **अमुष्य** प्रेतस्य शर्मासि सुखहेतुरसि । **पितरस्तव देवताः** स्वामिभूताः । **प्रजापतिर्देवस्त्वामत्र सादयतु** स्थापयतु । **तया** प्रजापतिदेवतया स्थापिता सती ध्रुवा सीद यथाऽङ्गिरोभिः स्थापिता तद्वत् । अत्राङ्गिरस्वद्ध्रुवा सीदेत्येतावदध्याहर्तव्यम् ।

अथ द्वितीयादीन्षष्ठान्तान्पञ्च मन्त्रानाह—

**अन्तरिक्षस्य त्वा दिवस्त्वा दिशां त्वा नाकस्य त्वा पृष्ठे ब्रध्नस्य त्वा विष्टपे सादयाम्यमुष्य शर्मासि पितरो देवता । प्रजापतिस्त्वा सादयतु तया देवतया ( ३ ), इति ।**

**अनपस्फुरन्तीरुत्तर देवतया द्वे च ॥**

**इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके षष्ठप्रपाठके सप्तमोऽनुवाकः ॥ ७ ॥**

हे द्वितीयेष्टके त्वामन्तरिक्षस्य लोके सादयामीत्यनुषज्य पूर्ववद्व्याख्येयम् । हे तृतीयेष्टके त्वां **दिवो** लोके सादयामि । हे चतुर्थेष्टके त्वां **दिशां** लोके सादयामि । हे पञ्चमेष्टके त्वां **नाकस्य पृष्ठे** स्वर्गस्योपरि सादयामि । हे षष्ठेष्टके त्वां **ब्रध्नस्या**ऽऽदित्यस्य **विष्टपे** स्थाने **सादयामि** । सर्वत्रानुषङ्गद्योतनाय सादयामीत्यादेः पुनः पाठः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्ये षष्ठप्रपाठके सप्तमोऽनुवाकः ॥ ७ ॥

---

१ ग. सुखं प्रति हे° । २ क. ख. °श्मी तां । ३ क. ख. °न्त्रपाठस्त—प° ।

अथ षष्ठेऽष्टमोऽनुवाकः ।

---

कल्पः—"एवं चरूनपूपवानिति प्रतिमन्त्रम्" इति । तत्र प्रथममन्त्रमाह—

अपूपवान्घृतवाꣳश्चरुरेह सीदतूत्तभ्नुवन्पृथिवीं द्यामुतोपरि । योनिकृतः पथिकृतः सपर्यत ये देवानां घृतभागा इह स्थ । एषा ते यमसादने स्वधा निधीयते गृहेऽसौ । दशाक्षरा ताꣳ रक्षस्व तां गोपायस्व तां ते परिददामि तस्यां त्वा मा दभन्पितरो देवता । प्रजापतिस्त्वा सादयतु तया देवतया, इति ।

पक्वा भक्ष्याः पिष्टविकारा अपूपाः, ते यस्य चरोः सन्ति सोऽयमपूपवान् । त[था] घृतवान्प्रभूतघृतयुक्तः । तादृशश्चरुरिहास्मिन्स्थाने पूर्वस्यां दिश्यासीदतु, उपविशतु किं कुर्वन् । पृथिवीमेतामुत्तभ्नुवन्नूर्ध्वं स्तब्धां कुर्वन् । उतापि च द्यां द्युलोकमुप[र्यू]र्ध्वभाग उत्तभ्नुवन् । देवानां मध्ये ये देवविशेषा यूयमिहास्मिन्नुपधाने घृतभागा स्थ घृतसेविनो भवथ, ये(ते) यूयं योनिकृतः स्थानकारिणः पथिकृतो मार्गका[रि]णश्च सन्तः सपर्यत परिचरत । असौ देवदत्तादिनामक हे प्रेत ते तव यमसाद[ने] यमस्य स्थाने गृह एषा स्वधैतच्चरुरूपमन्नं निधीयते नितरां स्थाप्यते । दशसंख्[या]कान्यक्षराणि मन्त्रविशेषरूपेण प्रतिपादकानि यस्याश्चरुरूपायाः स्वधायाः सन्ति से[यं] दशाक्षरा तादृशी या स्वधा विद्यते तां स्वधां हे प्रेत रक्षस्व । तां गोपायस्व स्वरूपस्योपद्रवाभावो रक्षणम् । भोगदशायामप्युपद्रवाभावो गोपायस्वेत्यनेनोच्यते । [त]ादृशीं स्वधां ते तुभ्यं परिददामि । अत्र देवतारूपा ये पितरस्ते सर्वे तस्[यां] स्वधायां त्वां प्रेतं मा दभन्हिंसितं मा कुर्वन्तु । प्रजापतिरित्यादि पूर्ववत् ।

अथ दक्षिणादिर्मध्यमान्तचतुर्दिक्षु[1] चरूपधानविषयान्मन्त्रानाह—

अपूपवाञ्शृतवान्क्षीरवान्दधिवान्मधुमाꣳश्चरुरेह सीदतूत्तभ्नुवन्पृथिवीं द्यामुतोपरि । योनिकृतः पथिकृतः सपर्यत ये देवानाꣳ शृतभागाः क्षीरभागा दधिभागा मधुभागा इह स्थ । एषा

---

[1] ग. °मध्यान्त° ।

ते यमसादने स्वधा निधीयते गृहेऽसौ । शता-
क्षरा सहस्राक्षराऽऽयुताक्षराऽच्युताक्षरा ताः
रक्षस्व तां गोपायस्व तां ते परिददामि तस्यां
त्वा मा दभन्पितरो देवता । प्रजापतिस्त्वा
सादयतु तया देवतया ( १ ) , इति ।

अपूपवानसौ दश ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके षष्ठप्रपाठकेऽ-
ष्टमोऽनुवाकः ॥ ८ ॥

अत्र शृतवानित्यादिपदचतुष्टयेन मन्त्रभेदो द्रष्टव्यः । शृतभागा इत्यादीन्यपि त्वारि पदानि शताक्षरेत्यादीन्यपि चत्वारि पदानि चतुर्ष्वपि मन्त्रेषु विभज्य योज-यानि । शृतं सम्यक्पक्वं पयः, क्षीरं पयोमात्रम् । अन्यत्पूर्ववत् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरी-
यारण्यकभाष्ये षष्ठप्रपाठकेऽष्टमोऽनुवाकः ॥ ८ ॥

---

अथ षष्ठे नवमोऽनुवाकः ।

---

कल्पः—"तिलमिश्राभिर्धानाभिस्त्रिः[1] प्रसव्यं परिकिरत्येतास्ते स्वधा अमृताः करोमि" । पाठस्तु—

एतास्ते स्वधा अमृताः करोमि यास्ते धानाः परिकिराम्यत्र ।
तास्ते यमः पितृभिः संविदानोऽत्र धेनूः कामदुघाः करोतु, इति ।

प्रेत ते त्वदर्थमत्रास्यां चितौ या धाना भृष्टतण्डुलरूपाः परिकिरामि परितो विक्षि- । एता धानास्ते त्वदर्थममृता विनाशरहिताः स्वधा अन्नरूपाः करोमि । यमो त्वदर्थं पितृभिः संविदान ऐकमत्यं गतः संस्ता धाना अत्र स्थाने कामदुघाः ापिका धेनूर्धेनुरूपाः करोतु ।

ल्पः—"ओषधिस्तम्बान्प्रतिदिशमनन्वीक्षमाण[2] उपदधाति—त्वामर्जुनेति प्रतिम- इति । तत्र प्रथमामाह—

त्वामर्जुनौषधीनां पयो ब्रह्माण इद्दिदुः । तासां

---

१ ग. तिलाभिमि° । २ ग. °मन्वी° ।

त्वा मध्यादाददे चरुभ्यो अपिधातवे, इति ।

तेषु मन्त्रेष्वर्जुनदूर्वाकाशदर्भशब्दास्तृणविशेषवाचिनः प्रसिद्धाः । हेऽर्जुनाख्यतृण त्वां ब्रह्माणोऽभिज्ञा विप्रा ओषधीनां पय इत्सर्वासामोषधीनां सारमेव विदुर्जानन्ति। तासामोषधीनां मध्यात्सकाशात्त्वामाददे आनीय स्थापयामि । किमर्थम्, चरुभ्योऽपिधातवे चरूणामपिधानार्थम् ।

अथ द्वितीयामाह—

दूर्वाणा॑ऽस्तम्बमाह॑रैतां प्रि॒यत॑मां मम॑ । इ॒मां
दिशं॑ मनु॒ष्या॑णां॒ भूयि॑ष्ठाऽनु॒ विरो॑हतु, इति ।

हे प्रेत दूर्वाणां संबन्धिनं स्तम्बमाहर स्वी कुरु । एतां दूर्वां मम स्वस्य प्रियतमां विद्धीति शेषः । मनुष्याणां संबन्धिनीमिमां दक्षिणां दिशमनु सा दूर्वा भूयिष्ठा प्रभूता विरोहतु विविधमङ्कुरमुत्पादयतु ।

अथ तृतीयामाह—

काशा॑ना॒ऽस्तम्बमाह॑र रक्ष॑सामप॑हत्यै । य ए॒तस्यै॑
दिशः॑ परा॒भ॑वन्नघायवो॒ यथा॑ ते ना॒भ॑वान्पुनः॑[3], इति ।

हे प्रेत काशाख्यानां तृणानां स्तम्बमाहर स्वी कुरु । किमर्थम्—रक्षसामपहत्यै। एतस्यै पश्चिमाया दिशोऽघायवोऽघं पापमुपद्रवमिच्छन्तो ये वैरिणः पराभवन्पराभव-कर्तार आसन् । ते वैरिणो यथा पुनर्नाभवन्न भविष्यन्ति तथा काशस्तम्बं स्वी कुरु।

अथ चतुर्थीमाह—

दर्भाणा॑ऽस्तम्बमाह॑र पि॒तृणामोष॑धीं प्रि॒याम् ।
अन्व॑स्यै मू॒लं जी॑वा॒दनु॒ काण्ड॑मथो॒ फल॑म्, इति ।

हे प्रेत दर्भसंबन्धिनं स्तम्बं स्वी कुरु । इमामोषधीं पितृणां प्रियां विद्धीति शेषः । अस्यै दर्भरूपाया ओषध्या मूलमनुजीवादनुक्रमेण जीवतु । तत् काण्डं फलं चानुक्रमेण जीवतु वर्धतामित्यर्थः ।

कल्पः—"लोकं पृणेति लोकंपृणा उपदधाति, उत्तरया पुरीषेणानुविकिरति" इति तयोर्मन्त्रयोः प्रतीके दर्शयति—

लोकं॑ पृ॒ण ता अ॒स्य सू॒ददो॑हसः, इति ।

---

१ ग. °दृषे च° । २ ख. ग. °दृध आ° । ३ ग. °भवन्पु° । ४ ख. ग. °राऽ° ।

लोकं पृण च्छिद्रं पृणेत्येको मन्त्रः । ता अस्येति द्वितीयः । एतौ चोभावपेत वीते-त्यनुवाके व्याख्यातौ ।

कल्पः—"उदपात्रेणोदुम्बरशाखया वोक्षति—शं वातः" इति । पाठस्तु—

शं वातः शः हि ते घृणिः शमु ते सन्त्वो-
षधीः । कल्पन्तां ते दिशः सर्वाः, इति ।

अयं मन्त्रः सप्तमानुवाके व्याख्यातः । ते सर्वा इत्येतावानेव विशेषः ।

कल्पः—"उपतिष्ठत इदमेव" इति । पाठस्तु—

इदमेव मेतोऽपरामार्तिमाराम कांचन । तथा
तदश्विभ्यां कृतं मित्रेण वरुणेन च, इति ।

इदानीं वर्तमानमिदमेवैकं कष्टं संपन्नम् । इतोऽपरां कांचिदप्यार्तिं माऽऽराम मा प्राप्नवाम । तदस्मदभीष्टमश्विभ्यां देवाभ्यां मित्रेण वरुणेन च तथा कृतं संपादितम् ।

कल्पः—"वैरणशाखां पुरस्तान्निदधाति—वैरणो वारयात्" इति । पाठस्तु—

वैरणो वारयादिदं देवो वनस्पतिः ।
आर्त्यै निर्ऋत्यै द्वेषाच्च वनस्पतिः, इति ।

अयं वैरणाख्यो वनस्पतिर्देव इदं कष्टं वारयान्निवारयतु । तथा स वनस्पतिरार्त्या अन्यस्या अपि बाधाया निर्ऋत्यै पापदेवताया द्वेषाच्च वैरिकृतात्पालयत्विति शेषः ।

कल्पः—"विधृतिलोष्टमुत्तरतो विधृतिरसि" इति । पाठस्तु—

विधृतिरसि विधारयास्मदघा द्वेषांसि, इति ।

हे लोष्ट त्वं विधृतिर्विधारकोऽसि । अतोऽस्मत्तः सकाशादघा पापानि द्वेषांसि वैराणि च विधारय वियुज्यान्यत्र स्थापय ।

कल्पः—"शमीशाखां पश्चाच्छमि शमय" इति । पाठस्तु—

शमि शमयास्मदघा द्वेषांसि, इति ।

हे शमि एतन्नामकवृक्ष, अस्मदस्मत्तोऽघा पापानि द्वेषांसि वैराणि च शमय ।

१ क. ख. °ल्पः । उपस्थानेनोप° । २ ग. राष्ट्रं । ३ ग. वारुण° । ४ ग. वरुणो । ५ ग. °णो । ६ ग. करुणा° ।

कल्पः—"यवं दक्षिणतो यव यवय" इति । पाठस्तु—

यव यवयास्मद्द्वेषो असि, इति ।

पूर्ववद्व्याख्येयम् ।

कल्पः—"अथैनमुपतिष्ठते पृथिवीम्" इति । पाठस्तु—

पृथिवीं गच्छान्तरिक्षं गच्छ दिवं गच्छ दिशो गच्छ सुवर्गच्छ सुवर्गच्छ दिशो गच्छ दिवं गच्छान्तरिक्षं गच्छ पृथिवीं गच्छापो वा गच्छ यदि तत्र ते हितमोषधीषु प्रतितिष्ठा शरीरैः, इति ।

आरोहावरोहाभ्यां पृथिव्यादिस्वर्गपर्यन्तप्राप्तिवाक्यानि स्पष्टानि । अपो वेत्यादिस्तु प्रथमानुवाके व्याख्यातः ।

कल्पः—"जघनेन चितिं कर्ष्वादि समानम्" इति । तन्मन्त्राणां प्रतीकानि दर्शयति—

अश्मन्वती रेवतीर्यद्वै देवस्य सवितुः पवित्रं या राष्ट्रात्पन्नादुद्वयं तमसस्परि धाता पुनातु (२), इति ।

अथो फलं[1] पुनातु ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके षष्ठप्रपाठके नवमोऽनुवाकः ॥ ९ ॥

एते च मन्त्रास्तृतीयानुवाके व्याख्याताः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्ये षष्ठप्रपाठके नवमोऽनुवाकः ॥ ९ ॥

---

१ ग. °लं धाता° पु° ।

अथ षष्ठे दशमोऽनुवाकः ।

---

कल्पः—“ नवम्यां व्युष्टायां यज्ञोपवीत्यन्तरा ग्रामं श्मशानं चाग्निमुपसमाधाय संपरिस्तीर्यापरेणाग्निं रोहितं चर्माऽऽनडुहं प्राचीनग्रीवमुत्तरलोमाऽऽस्तीर्य तद्व्रतसमालिनो ज्ञातीनारोहयति— आरोहत ” इति । पाठस्तु—

**आरोहताऽऽयुर्जरसं गृणाना अनुपूर्वं यतमाना यतिष्ठ । इह त्वष्टा सुजनिमा सुरत्नो दीर्घमायुः करतु जीवसे वः, इति ।**

हे ज्ञातयो यूयं **जरसं गृणाना** जरावस्थां प्रार्थयमाना **आयुरायुषो** हेतुभूतं चर्माऽऽरोहत । **अनुपूर्वं** ज्येष्ठमनु कनिष्ठो यथा भवति तथा **यतमानाः** प्रयत्नं कुर्वन्तो **यतिष्ठाऽऽरोहणप्रयत्नं** कुरुत । **इह** कर्माणि **त्वष्टा** हविषां पापानां [ च ] तनूकर्ताऽयमग्निः **सुजनिमा** शोभनजन्मा **सुरत्नो** भक्तेभ्यो देयैः शोभनै रत्नैरुपेतो **वो** युष्मभ्यं **दीर्घमायुः** करोतु । **जीवसे** जीवनाय ।

कल्पः—“ अथैताननुपूर्वान्प्रकल्पयति—यथाऽहानि ” इति । पाठस्तु—

**यथाऽहान्यनुपूर्वं भवन्ति यथर्तव ऋतुभिर्यन्ति क्लृप्ताः । यथा न पूर्वमपरो जहात्येवा धातरायूꣳषि कल्पयैषाम्, इति ।**

**यथा** लोकेऽ**हानि** दिनान्यनुपूर्वं **भवन्ति,** प्रतिपद्द्वितीया तृतीया चेत्येवमनुक्रमेणैव वर्तन्ते । **यथा** च वसन्ताद्यृतव **ऋतुभिरुत्तरोत्तरैः क्लृप्ताः** संबद्धा **यन्ति** गच्छन्ति प्रवर्तन्ते । **यथा** च पूर्वं पितरं ज्येष्ठं वाऽ**परः** पुत्रः कनिष्ठो वा **न जहाति** न परित्यजति । हे **धातः** प्रजापत **एवैवमनेनैव** प्रकारेणैषां ज्ञातीनामायूंषि **कल्पय** पादय ।

**न हिं ते अग्ने तनुवं क्रूरं चकार मर्त्यः । कपिर्बभस्ति तेजनं पुनर्जरायु गौरिव । अप नः शोशुचदघमग्ने शुशुध्या रयिम् । अप नः शोशुचदघं मृत्यवे स्वाहा ।**

---

१ ग. लोहितं । २ क. ख. °माना यतिष्ठ यावन्तः स्थ ते सर्व आरोहतेति । इ° । ३ ग. न्ते । ४ घ. हि अ° । ५ °युर्गौरि° ।

कल्पः—" अथ वीरणस्रुवेण वीरण्यां स्रुचि चतुर्गृहीतमाज्यं गृहीत्वा जुहोति—न हि ते अग्ने तनुवै क्रूरं चकार मर्त्यः । कपिर्बभस्ति तेजनं पुनर्जरायु गौरिव । अप नः शोशुचदघमग्ने शुशुध्या रयिम् । अप नः शोशुचदघं मृत्यवे स्वाहा " इति । हेऽग्ने ते तव तनुवै शरीरार्थं मर्त्यो मनुष्यः क्रूरमुग्रं व्यापारं न हि चकार । कपि कपिवच्चेष्टाकारी मनुष्यः पुनस्तेजनमुत्तेजनं यथा भवति तथा बभस्ति दीपयति । त दृष्टान्तः—गौरिव जरायु । यथा गौः स्वगर्भस्य रक्षार्थं जरायुपटं संपादयति न क्रूरं करोति तद्वत् । नोऽस्मदीयमघं पापमपशोशुचत्, अपगतं यथा भवति त दीप्यतां दह्यताम् । हेऽग्ने रयिं धनं शुशुध्यातिशयेन शुद्धं कुरु । पुनरपि नोऽस्मा पापमपगतं यथा भवति तथा दह्यताम् । तदर्थं मृत्यवे देवाय स्वाहुतमिदमस्तु ।

कल्पः—" उत्तरेणाग्निं रोहितोऽनड्वान्प्राङ्मुखोऽवस्थितो भवति तं ज्ञातयोऽन्वार न्तेऽनड्वाहम् " इति । पाठस्तु—

अनड्वाहमन्वारभामहे स्वस्तये । स न इन्द्र इव
देवेभ्यो वह्निः संपारणो भव (१), इति ।

स्वस्तये क्षेमायैतमनड्वाहं वयमन्वारभामहे हस्तेन स्पृशामहे । हेऽनड्वन्स देवेभ्यो देवार्थमिन्द्र इव नोऽस्मदर्थं वह्निर्वाहकः संपारणः सम्यक्पारं प्रति ने च भव ।

कल्पः—"प्राञ्चो गच्छन्तीमे जीवाः" इति । पाठस्तु—

इमे जीवा वि मृतैराववर्तिन्नभूद्भद्रा देवहूतिं
नो अद्य । प्राञ्चोऽगामा नृतये हसाय
द्राघीय आयुः प्रतरां दधानाः, इति ।

इमे जीवा ज्ञातयो मृतैर्वियुज्याऽऽववर्तिन्नावृत्ताः । केनाभिप्रायेणेति तदुच्यते अद्यास्मिन्दिने नोऽस्माकं भद्रा कल्याणरूपा देवहूतिर्देवानामाह्वानक्रियाऽभूद्व नृतये मनुष्यक्षयनिमित्तं हसाय हास्यार्थं हर्षार्थमित्यर्थः । प्राञ्चः प्राञ्चः प्राङ्मु सन्तोऽगाम वयं गच्छामः । कीदृशा वयं, द्राघीय आयुरत्यन्तं दीर्घमायुः प्रतर तिप्रकर्षेण दधाना धारयन्तः ।

कल्पः—"जघन्यः शमीशाखया पदानि लोपयते—मृत्योः पदम्" इति । पाठ

मृत्योः पदं योपयन्तो यदैम द्राघीय आयुः

१ ग. वारुणेन स्रु । २ ग. वारुण्यां । ३ ख. °ग्ने तनु° । ४ क. ते तनु° । ५ ग. ज
६ ग. °ह्निर्वाह° । ७ क. ख. पदं यो° ।

प्रतरां दधानाः। आप्यायमानाः प्रजया
धनेन शुद्धाः पूता भवथ यज्ञियासः, इति।

मृत्योर्मृत्युरूपस्यानडुहः पदं स्थानं योपयन्तो लोपयन्तो यदैम गच्छामस्तदा* वयं पूर्ववद्द्राघीय आयुः प्रतरां (रा)[मति]प्रकर्षेण दधानाः प्रजया धनेन चाऽऽप्याय-माना वर्धमानाः सन्तः, यज्ञियासो यज्ञयोग्याः शुद्धाः शरीरशुद्धियुक्ताः पूता द्रव्य-शुद्धियुक्ताश्च भवथ। हे ज्ञातय इति द्रष्टव्यम्।

कल्पः—"अथैभ्योऽध्वर्युर्दक्षिणतोऽश्मानं परिधिं दधाति—इमं जीवेभ्यः परिधिं दधामि" इति। पाठस्तु—

इमं जीवेभ्यः परिधिं दधामि मा नोऽनुगाद-
परो अर्धमेतम्। शतं जीवन्तु शरदः पुरूची-
स्तिरो मृत्युं दध्महे पर्वतेन, इति।

इममश्मानं जीवेभ्यो जीवानामर्थे परिधिं परिधानहेतुं दधामि स्थापयामि। नोऽस्माकं मध्येऽपरो यः कोऽप्येतमर्धमायुषो भागं माऽनुगान्माऽनुगच्छतु। किंतु पुरूचीर्विस्तृतिं गताः शरदः संवत्सराञ्शतं जीवन्तु। पर्वतेन पर्वतसदृशेन पाषाणेन मृत्युं तिरो दध्महे तिरोभूतं कुर्मः।

कल्पः—"अथैताः पत्नयो नयने सर्पिषा संमृशन्तीमा नारीः" इति। पाठस्तु—

इमा नारीरविधवाः सुपत्नीराञ्जनेन
सर्पिषा संमृशन्ताम्। अनश्रवो अनमीवाः
सुशेवा आरोहन्तु जनयो योनिमग्रे, इति।

इमा नारीरेतास्त्रियोऽविधवा वैधव्यरहिताः सुपत्नीः शोभनपतियुक्ताः सत्य आञ्जनेनाञ्जनहेतुना सर्पिषा संमृशन्तां चक्षुषी संस्पृशन्तु। अनश्रवोऽश्रुरहिता अनमीवा रोगरहिताः सुशेवाः सुष्ठु सेवितुं योग्या जनयो जाया अग्र इतः परं योनिं स्वस्थानमारोहन्तु प्राप्नुवन्तु।

कल्पः—"कुशतरुणकैस्त्रैककुदेनाञ्जनेनाङ्क्ते—यदाञ्जनम्" इति। पाठस्तु—

यदाञ्जनं त्रैककुदं जातꣳ हिमवतस्परि।

---

* अत्र वयं पूर्ववदिति पदद्वयमधिकं भाति।

---

१ क. ख. मृत्योः पदं। २ ग. °न्तो रजसा प्रच्छाद्यमानाः सन्तो यदै°। ३ क. ख. °मो द्राघी°। ४ क. ख. °स्तृतिग°। ५ क. ख. °रीरवि°। ६ क. ख. °अनं त्रै°।

तेनामृतस्य मूलेनारातीर्जम्भयामसि, इति ।

हिमवतस्परि हिमवत्पर्वतस्योपारि जातमुत्पन्नं त्रैककुदं त्रिककुत्पर्वतसंबन्धि यदाञ्जनं विद्यते । अमृतस्य मूलेन सुखस्य कारणेन तेनाञ्जनेनारातीर्जम्भयामसि शत्रून्विनाशयामः ।

कल्पः—"अथैतानि कुशतरुणकानि समुच्छ्रित्य दर्भस्तम्बे निदधाति—यथा त्वम्" इति । पाठस्तु—

यथा त्वमुद्भिनत्स्योषधे पृथिव्या अधि । एवमिम
उद्भिन्दन्तु कीर्त्या यशसा ब्रह्मवर्चसेन, इति ।

हे ओषधे दर्भस्तम्ब पृथिव्या उपरि यथा त्वमुद्भिनत्सि, उत्पद्यसे । एवमिमे कुशाः कीर्त्यादिभिः सहोद्भिन्दन्तूत्पद्यन्ताम् । कीर्तियशसोर्लोकद्वयगतत्वेन भेदः ।

कल्पः—"अजं चैतदहः पचते यवोदनं च—अजोऽसीत्यजस्य प्राश्नीयात्" इति । पाठस्तु—

अजोऽस्यजास्मदघा द्वेषांसि, इति ।

हे पक्वद्रव्य त्वमजोऽस्यजसंबन्ध्यसि । अतोऽस्मत्सकाशादघा पापानि द्वेषांसि वैराणि चाजापगमय ।

कल्पः—" यवोदनस्य च प्राश्नाति—यवोऽसि " इति । पाठस्तु—

यवोऽसि यवयास्मदघा द्वेषांसि ( २ ), इति ।
संपारणो भव जम्भयामसि त्रीणि च ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके षष्ठप्रपाठके
दशमोऽनुवाकः ॥ १० ॥

हे ओदन त्वं यवोऽसि यवसंबन्ध्यसि । अतोऽस्मत्तः सकाशादघा पापानि द्वेषांसि वैराणि च यवय पृथक्कुरु ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्ये षष्ठप्रपाठके दशमोऽनुवाकः ॥ १० ॥

---

१ क. ख. त्वमु° । २ क. ख. पचन्ति । ३ क. ख. °ति । अ° । ४ क. ख. °श्नीते । ५ क. ख. °ति यवोदनस्य च प्राश्नाति य° ।

अथ षष्ठ एकादशोऽनुवाकः ।

पूर्वानुवाके मृत्यवे स्वाहेति यो होम उक्तस्तदनन्तरमेवैतैर्मन्त्रैर्द्वादश स्रुवाहुतीर्जुहु-यात् । तत्र प्रथमं मन्त्रमाह—

अप नः शोशुचदघमग्ने शुशुध्या
रयिम् । अप नः शोशुचदघम्, इति ।

पूर्वानुवाके व्याख्यातो मन्त्रः ।

अथ द्वितीयमाह—

सुक्षेत्रिया सुगातुया वसूया च यजा-
महे । अप नः शोशुचदघम्, इति ।

सुक्षेत्रिया शोभनक्षेत्रयोग्यया सुगातुया शोभनगतियोग्यया वसूया च धनप्राप्ति-हेतुभूतयाऽप्यनयाऽऽहुत्या यजामहे पूजयामः । अप न इत्यादि पूर्ववत् ।

अथ तृतीयमाह—

प्र यद्भन्दिष्ठ एषां प्राऽऽस्माकासश्च
सूरयः । अप नः शोशुचदघम्, इति ।

यद्यदैषां ज्ञातीनां भन्दिष्ठोऽतिशयेन भद्रः पुरुषार्थः प्राप्यते, तदानीमास्माकासोऽस्मत्संबन्धिनः सूरयश्च विद्वांसोऽपि पुत्रपौत्रादयः प्राप्यन्ताम् ।

अथ चतुर्थमाह—

प्र यदग्नेः सहस्वतो विश्वतो यन्ति
सूरयः । अप नः शोशुचदघम्, इति ।

यच्छब्दः प्रसिद्धिवाची । यत्प्रसिद्धाः सूरयो विद्वांसः सहस्वतो बलवतोऽग्नेः शास्त्रयन्ति प्रकर्षेण प्राप्नुवन्ति ।

अथ पञ्चममाह—

प्र यत्ते अग्ने सूरयो जायेमहि प्र ते
वयम् । अप नः शोशुचदघम्(१), इति ।

*हेऽग्ने ये वयं ते तव सूरयः स्तोतृनामैतत् । प्रकर्षेण स्तोतारः । यच्छब्दश्रुतेस्त-

* हेऽग्ने वयं ते तव यत्प्रसिद्धाः सूरयस्ते त्वदीयाः प्राप्ताः, अतो वयमपि ते त्वदीयाः [जाये]महि प्रकर्षेण भूयास्म, इति ग. पुस्तकस्थो भाष्यपाठः ।

च्छन्दोऽध्याहर्तव्यः । ते वयं प्रजायेमहि प्रजां प्राप्नुयाम तव प्रसादेन तव स्वभूताः ।

अथ षष्ठमाह—

त्वꣳ हि विश्वतोमुख विश्वतः परि-
भूरसि । अप नः शोशुचदघम्, इति ।

हे विश्वतोमुख सर्वतो ज्वालायुक्ताग्ने त्वं विश्वतः सर्वत्र परिभूरसि वैरिणां परिभविताऽसि[1] ।

अथ सप्तममाह—

द्विषो नो विश्वतो मुखाऽति नावेव पारय ।
अप नः शोशुचदघम्, इति ।

हेऽग्ने नोऽस्माकं द्विषो द्वेषिणो मुखा मुखानि विश्वतः सर्वस्माद्देशादतिपारयातीत्य परतो नय । तत्र दृष्टान्तः—नावेव यथा नावा परतस्तार (तः प्राप)यन्ति तद्वत्[2] । यद्वा हे विश्वतोमुखाग्ने द्विषः शत्रूनतिपारयेति व्याख्येयम् ।

अथाष्टममाह—

स नः सिन्धुमिव नावयाऽतिपर्षा
स्वस्तये । अप नः शोशुचदघम्, इति ।

हेऽग्ने स त्वं नोऽस्माकं स्वस्तये क्षेमायातिपर्ष दुःखजातमतीत्य परतः प्रापय तत्र दृष्टान्तः—नावया सिन्धुमिव यथा लोके नावा समुद्रं तारयन्ति तद्वत् ।

अथ नवममाह—

आपः प्रवणादिव यतीरपास्मत्स्यन्दता-
मघम् । अप नः शोशुचदघम्, इति ।

प्रवणान्निम्नदेशान्निमित्तभूताद्यती[4] निर्गता आप इवास्मत्तः सकाशादघं पापमपेत्य स्यन्दतां प्रवाहरूपेण गच्छतु ।

अथ दशममाह—

उद्गनादुदकानीवापास्मत्स्यन्दतामघम् ।
अप नः शोशुचदघम्, इति ।

---

१ ग. परिभवति । २ क. ख. °तू । अथा° । ३ ख. °णान्नमे° । ४ ग. °तीर्निर्गता आ° ।

उद्गनादुन्नतप्रदेशस्थाद्गनात्सकाशात्कुल्यया समागतान्युदकानि यथा निम्नदेशं प्रति यन्दन्ते तथाऽस्मत्तः सकाशादघमपेत्य स्यन्दताम् ।

अथैकादशमाह—

आनन्दाय प्रमोदाय पुनरागा५ स्वान्गृ-
हान् । अप नः शोशुचदघम्, इति ।

आनन्दाय मरणाभावनिमित्तसंतोषाय, प्रमोदाय विषयभोगनिमित्तप्रकृष्टहर्षाय, पुनरपि स्वकीयान्गृहान्प्रत्यागामागतोऽस्मि ।

अथ द्वादशमाह—

न वै तत्र प्रमीयते गौरश्वः पुरुषः पशुः । यत्रेदं ब्रह्म
क्रियते परिधिर्जीवनाय कमप नः शोशुचदघम् (२), इति ॥

अघमर्ष चत्वारि च ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके षष्ठप्रपाठक
एकादशोऽनुवाकः ॥ ११ ॥

यत्र यस्मिन्देश इदं ब्रह्म पूर्वोक्तं होममन्त्रजातं जीवनाय जीवनार्थं कं सुखं था भवति तथा परिधिः परिधानं क्रियते । तत्र देशे गौरश्वो[2] वा पुरुषोऽन्यो वा शुर्नैव प्रमीयते सर्वथा न म्रियते । अतस्तदर्थं नोऽस्मदीयमघमपशोशुचत् । अपेत्य घं भवतु ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरी-
यारण्यकभाष्ये षष्ठप्रपाठक एकादशोऽनुवाकः ॥ ११ ॥

---

अथ षष्ठे द्वादशोऽनुवाकः ।

---

राजगव्या हननमुत्सर्गश्चेति द्वौ पक्षौ, तत्र हननपक्षे मन्त्राः पूर्वमेवोक्ताः । अथो-त्सर्गपक्षे मन्त्रा उच्यन्ते । कल्पः—" यद्युत्सृजन्त्यपश्याम युवतिमाचरन्तीं सचस्वा नः स्तय इत्यन्ताभिस्तिसृभिः[3] प्रसव्यं राजगवीमग्नीन्प्रेतं दारुचितिं च परिणीय " इति । प्रथमामाह—

अपश्याम युवतिमाचरन्तीं मृताय जीवां परिणीयमानाम् ।

---

१ ग. °शादघः कुल्य° । २ क. ख. गौर्वाऽश्वो । ३ क. ख. °सृभिरपस° । ४ घ. °वतीमा° ।

अन्धेन या तमसा प्रावृताऽसि प्राचीमवाचीमवयन्नरिष्ट्यै, इति ।

मृताय मृतपुरुषार्थं परिणीयमानां जीवां जीवन्तीं युवतीं(तिं) यौवनवत्पुष्टाङ्गीं युवतित्वेन भावितां वा वृद्धामाचरन्तीमागच्छन्तीं राजगवीं वयमपश्याम। या राजगवी त्वमन्धेन तमसा जरातिशयेन मरणभीत्या वा दृष्टिप्रसारणाभावे सत्यत्यन्तनिबिडेन तमसा प्रावृता भवसि। अरिष्ट्या अहिंसार्थं प्राचीं प्राङ्मुखीमवाचीमवाङ्मुखीं तां राजगवीमवयन्वयमवैमो जानीमः।

अथ द्वितीयामाह—

मयैतां माᳪस्तां म्रियमाणा देवी सती
पितृलोकं यदैषि। विश्ववारा नभसा संव्य-
यन्त्युभौ नो लोकौ पयसाऽऽवृणीहि, इति।

मया म्रियमाणा पोष्यमाणा राजगवी, एतां रक्षितां त्वां(स्वां) माᳪस्तां मन्यताम्। अहमनेन रक्षिता नतु मरिष्यामीत्येवं निश्चिनोत्वित्यर्थः। हे राजगवि यस्मात्कारणादनेनोपाकरणमात्रेण देवी देवतात्मिका सती पितृलोकं प्रत्यैष्यागच्छसि। विश्ववारा सर्वैर्वरणीया प्रार्थनीया नभसाऽऽकाशमार्गेण संव्ययन्ती द्युलोकं संवृण्वती हे राजगवि तथाविधा त्वं नोऽस्माकमुभौ लोकावेतल्लोकपरलोकौ पयसा क्षीरेणाभ्यावृ(णाऽऽवृ)णीह्यावृतौ कुरु। क्षीरपूर्णौ कुर्वित्यर्थः।

अथ तृतीयामाह—

रयिष्ठामग्निं मधुमन्तमूर्मिणमूर्जःसन्तं त्वा
पयसोपसᳪंसदेम। सᳪ रय्या समु
वर्चसा सचस्वा नः स्वस्तये, इति।

हेऽग्ने वयं त्वामग्निं पयसा पयोमुख्यभोग्यद्रव्यनिमित्तमुपसᳪसदेम समीपे सम्यक्प्राप्नुयाम। कीदृशमग्निम्। रयिष्ठां धनेऽवस्थितं धनप्रदमित्यर्थः। मधुमन्तं मधुरद्रव्ययुक्तमूर्मिणमुत्कर्षयुक्तमूर्जस्व(र्जःस?)न्तं बलवन्तम्। हेऽग्ने स्वस्तये क्षेमार्थं नोऽस्मान्रय्या धनेन संसचस्व सम्यग्योजय वर्चसा कान्त्याऽपि संसचस्व।

कल्पः—"ये जीवा इत्यभिमन्त्र्य" इति पाठस्तु—

ये जीवा ये च मृता ये जाता ये च जन्त्याः।

---

१ क. ख. °न्तीं यौ°। २ क. ख. °मसाऽन्धकारा°। ३ ग. °वेनात्यन्त°। ४ ग. °[illegible] [illegible]°। ५ ख. °नोपकार°। ६ ग. °मर्जस्वन्तं।

तेभ्यो घृतस्य धारयितुं मधुधारा व्युन्दती, इति ।

ये जीवा अस्मत्कुले जीवन्तो ये पुरुषाः सन्ति ये च मृताः सन्ति येऽपीदानीं जाता उत्पन्ना ये च जन्त्या इतः परं जनयितव्याः, तेभ्यो धारयितुं तान्सर्वा-न्पोषयितुं घृतस्य संबन्धिनी मधुधारा मधुररसोपेता [ धारा ] तया धारया व्युन्दती विशेषेण क्लेदनयुक्ता [ राजगवी ] वर्तते ।

कल्पः—" माता रुद्राणामिति द्वाभ्यामुत्सृजन्ति " इति । तत्र प्रथमामाह—

माता रुद्राणां दुहिता वसूनाꣳ स्वसाऽऽदित्या-
नाममृतस्य नाभिः । प्र णु वोचं चिकितुषे
जनाय मा गामनागामदितिं वधिष्ट, इति ।

इयं राजगवी रुद्राणामेकादशसंख्याकानां माता मातृस्थानीया । वसूनामष्टसं-ख्याकानां दुहिता पुत्रीस्थानीया । आदित्यानां द्वादशसंख्याकानां स्वसा भगिनी-स्थानीया । अमृतस्य नाभिरैहिकस्याऽऽमुष्मिकस्य च सुखस्य नाभिस्थानीया । अतः कारणाच्चिकितुषे ज्ञानयुक्ताय जनायर्त्विक्समूहाय नु क्षिप्रं प्रवोचं प्रकर्षेण कथ-यामि । किं कथ्यत इति तदुच्यते—अनागामपराधरहितामदितिमखण्डनीयां गां राजगवीमनुस्तरणीरूपेणोपाकृतां मा वधिष्ट हे जना अस्या वधं मा कुरुत ।

अथ द्वितीयामाह—

पिबतूदकं तृणान्यत्तु । ओमुत्सृजत ( १ ), इति ॥

वधिष्ट द्वे च ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके षष्ठप्रपाठके
द्वादशोऽनुवाकः ॥ १२ ॥

इयं राजगवी यत्र क्वापि स्वेच्छयोदकं पिबतु । तृणानि च भक्षयतु । ओम्, अङ्गीकुर्मः । उत्सृजत हे जना बद्धामेनां राजगवीं परित्यजत ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीय-
तैत्तिरीयारण्यकभाष्ये षष्ठप्रपाठके द्वादशोऽनुवाकः ॥ १२ ॥

---

१ ग. °रणरू° ।

परे युवा॑ऽ सं प्रविद्वान्भुवंतस्याभ्यावंवृतस्वाजोऽभागोऽयं वै चतुश्चत्वा-
रि॑ऽशद्य एतस्य त्वंदपश्चप्रकेतुनेदं ते नाके सुपर्णे यौ ते ये युध्यन्ते तपसाऽ
प्रस्वती रेवतीः सःसंभध्वमष्टाविं॑ऽशतिर्ये ते यत्त उत्तिष्ठातं इदं त उत्तिष्ठ
प्रेत्स्मन्यद्वा उद्वयमयं पञ्चविं॑ऽशतिरायांतु त्रिं॑ऽशद्वैश्वानरे तस्मिन्त्स्प्र इमम-
पेताहोभिर्युज्यन्तामग्निया अदिते पारं व आप्यायस्व सप्तविं॑ऽशतिरुत्ते तभ्नो-
म्यक्षितिस्तेभ्यः पृथिवि षड्ढोता परं मे शग्माः पृथिव्या अन्तरिक्षस्य द्वात्रिं॑ऽ
शदपूपवानसौ दश शत दशैतास्ते ते दिशः सर्वा अश्मान्विं॑ऽशतिरारोहत
तनुवें क्रूरं चकार पुनर्मृत्यवे मा नोऽनु गादश्मह इमा नारीः परि त्रयोविं॑ऽश-
तिरपं नः सुक्षेत्रिया प्र यद्भन्दिष्ठः प्रयदग्नेः प्र यत्ते अग्ने त्वं हि द्विषः स
नः सिन्धुमापः प्रव्रपादुद्वतादानन्दाय न वै तत्र चतुर्विं॑ऽशतिरपश्यामाऽऽह्
वीहि द्वादश द्वादश परे युवा॑ऽसमायात्वेतास्ते सप्तविं॑ऽशतिः ॥

ॐ तत्सत् । सं त्वा सिञ्चामि यजुषा प्रजामायुर्धनं च ॥

ॐ शान्तिः शान्तिः शान्तिः ।

हरिः ॐ ।

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके षष्ठः प्रपाठकः
समाप्तः ॥ ६ ॥

यो दर्शपूर्णमासादिः पितृमेधान्त ईरितः ।
कर्मकाण्डः समग्रोऽयं व्याख्यातो बालबुद्धये ॥ १ ॥
वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥ २ ॥

इति श्रीमद्वीरबुक्कणसाम्राज्यधुरंधरश्रीमत्सायणाचार्यविरचिते माधवीये
वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्ये
षष्ठः प्रपाठकः समाप्तः ॥ ६ ॥

आनन्दाश्रमसंस्कृतग्रन्थावलिः ।

ग्रन्थाङ्कः ३६

कृष्णयजुर्वेदीयं

# तैत्तिरीयारण्यकम् ।

श्रीमत्सायणाचार्यविरचितभाष्यसमेतम् ।

( सपरिशिष्टम् । )

तत्र सप्तमप्रपाठकादारभ्य दशमप्रपाठकपर्यन्तोऽयं सपरिशिष्टो द्वितीयो भागः (२)।

एतत्पुस्तकं वे० शा० रा० रा० "बाबाशास्त्री फडके" इत्येतैः संशोधितम् ।

तच्च

बी० ए० इत्युपपदधारिभिः

विनायक गणेश आपटे

इत्येतैः

पुण्याख्यपत्तने

आनन्दाश्रममुद्रणालये

आयसाक्षरैर्मुद्रयित्वा

प्रकाशितम् ।

द्वितीयेयमङ्कनावृत्तिः ।

शालिवाहनशकाब्दाः १८४८

खिस्ताब्दाः १९२७

# कृष्णयजुर्वेदीयं तैत्तिरीयारण्यकम् ।

( तत्र * शीक्षोपनिषत्संज्ञकसप्तमप्रपाठकस्याऽऽरम्भः । )

प्रथमोऽनुवाकः ।

(+)वागीशाद्याः सुमनसः सर्वार्थानामुपक्रमे ।
यं नत्वा कृतकृत्याः स्युस्तं नमामि गजाननम् ॥ १ ॥
यस्य निश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्या[1]तीर्थमहेश्वरम् ॥ २ ॥
तत्कटाक्षेण तद्रूपं दधद्बुक्कमहीपतिः ।
आदिशत्सायणाचार्यं वेदार्थस्य प्रकाशने ॥ ३ ॥
ये पूर्वोत्तरमीमांसे ते व्याख्यायातिसंग्रहात् ।
कृपालुः सायणाचार्यो वेदार्थं वक्तुमुद्यतः ॥ ४ ॥
व्याख्यातः पितृमेधान्तः कर्मकाण्डो नयैः स्फुटम् ।
अथोपनिषदं न्यायैर्व्याकुर्वे ब्रह्मबुद्धये ॥ ५ ॥
अत्र[2] ह्युपनिषच्छब्दो ब्रह्मविद्यैकगोचरः ।
तच्छब्दावयवार्थस्य विद्यायामेव संभवात् ॥ ६ ॥
उपोपसर्गः सामीप्ये तत्प्रतीचि समाप्यते ।
सामीप्यात्तारतम्यस्य विश्रान्तेः स्वात्मनीक्षणात् ॥ ७ ॥
त्रिविधः सदिधात्वर्थो विद्यायां संभविष्यति ।
श्रीमत्सुरेश्वराचार्यैर्विस्पष्टमिदमीरितम् ॥ ८ ॥
" उपनीयेममात्मानं ब्रह्मापास्तद्वयं स्वतः ।
निहन्त्यविद्यां तज्जं च तस्मादुपनिषद्भवेत् ॥ ९ ॥
निहत्यानर्थमूलां स्वाविद्यां प्रत्यक्तया परम् ।
गमयत्यस्तसंभेदमतो वोपनिषद्भवेत् ॥ १० ॥
प्रवृत्तिहेतून्निःशेषांस्तन्मूलोच्छेदकत्वतः ।
यतोऽवसादयेद्विद्या तस्मादुपनिषन्मता " इति ॥ ११ ॥

* अस्या एव सांहितिकोपनिषदित्यपरं नाम । + इत आरभ्य सप्तमाष्टमनवमेतिप्रपाठकत्रितयभाष्यमेव विद्यारण्यविरचिततैत्तिरीयोपनिषद्दीपिकाख्यया प्रसिद्धम् ।

[1] ख. 'तीर्थं म' । [2] क. ख. 'त्र चोप' ।

यथोक्तविद्याहेतुत्वाद्ग्रन्थोऽपि तदभेदतः ।
भवेदुपनिषन्नामा लाङ्गलं जीवनं यथा ॥ १२ ॥
तत्र—विषयः कः फलं किं कः संबन्धः कोऽधिकारवान् ।
इत्याकाङ्क्षानिवृत्त्यर्थं चतुष्टयमुदीर्यते ॥ १३ ॥

अनन्यलभ्यो विषय इति हि विषयस्य लक्षणम् । औषधविशेषग्रहप्रचारसुशब्दनिर्णयादीनामायुर्वेदज्योतिःशास्त्रव्याकरणादिभिरेव लभ्यत्वात्तद्विषयत्वं दृष्टम् । अत्रापि तद्वदनन्यलभ्यमद्वैतम् । न खल्वद्वैतमात्मतत्त्वं वेदान्तव्यतिरिक्तेन केनाचित्प्रमाणेन लभ्यते । भागान्तरे चाऽऽम्नायते—"नावेदविन्मनुते तं बृहन्तम्" इति । अनया श्रुत्या यथा वेदव्यतिरिक्तं प्रमाणं निषिध्यते तथा श्रुत्यन्तरेणोपनिषद्व्यतिरिक्तो वेदभागो निषिध्यते । तथा च वाजसनेयिन आमनन्ति—"तं त्वौपनिषदं पुरुषं पृच्छामि" इति । उपनिषत्स्वेवाधिगत औपनिषदः । यस्तु मानान्तरेण गम्यत्वं मन्यते स प्रष्टव्यः । किं प्रत्यक्षेणोतानुमानेनाऽऽहोस्विदागमेनेति । आद्येऽपि किं बाह्येन प्रत्यक्षेण किंवा मानसेन । तत्र बाह्यप्रत्यक्षनिषेधं तलवकारा आमनन्ति-"न तत्र चक्षुर्गच्छति" इति । तत्रोपपत्तिं तैत्तिरीयाः कठाः श्वेताश्वतराश्चाऽऽमनन्ति—"न संदृशे तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्चनैनम्" इति । संदृशे सम्यग्द्रष्टुमस्य परमात्मनो रूपं नीलपीतह्रस्वाद्याकारं[2] न तिष्ठति न विद्यते । अतः कश्चिदपि ब्रह्मादिस्तम्बान्ते जगति वर्तमानो जन्तुरेनं परमात्मानं चक्षुषा न पश्यति । चक्षुषो रूपैकविषयत्वं सार्वजनीनम् । तैर्थिकानां पामराणां चात्र विसंवादाभावात् । यथा रूपराहित्याच्चक्षुर्विषयत्वं नास्ति तथा शब्दादिराहित्याच्छ्रोत्रादिविषयत्वमपि नास्तीति कठैराम्नायते—"अशब्दमस्पर्शमरूपमव्ययं तथाऽरसं नित्यमगन्धवच्च यत्" इति । तस्मान्न बाह्यप्रत्यक्षविषय आत्मा । मानसप्रत्यक्षमपि कीदृशमिति वक्तव्यम् । किं ममाऽऽत्मा भद्रसेन इत्येवंरूपमुताहं मनुष्यो ब्राह्मणो ब्रह्मचारीत्येवंरूपमथवा मदीयोऽयं देहो देहस्याहं स्वामी चक्षुरादीन्द्रियैर्ज्ञाता वागादीन्द्रियैरभिवदनादिक्रियायाः कर्ता मनसा सुखदुःखयोर्भोक्ता धर्माधर्माभ्यां स्वर्गनरकयोर्गन्तेत्येवंरूपमाहोस्वित्सत्यं ज्ञानमनन्तं ब्रह्मैकमेवाद्वितीयमहमित्येवंरूपम् । नाऽऽद्यः । तस्य गौणात्मविषयत्वेन मुख्यात्मतत्त्वगोचरत्वाभावात् । त्रिविधो ह्यात्मा । गौणात्मा मिथ्यात्मा मुख्यात्मा चेति । यथा त्रिविधः सिंहस्तद्वत् । तद्यथा-सिंहदेवदत्तयोर्भेदं पश्यन्नेव सिंहगतक्रौर्यशौर्यादिगुणानां देवदत्ते सद्भावात्सिंहोऽयमिति व्यवहरति सोऽयं गौणः सिंहः । अरण्ये मन्दान्धकारे धावन्तं हरिणं दृष्ट्वा भ्रान्त्या सिंहोऽयमिति निश्चित्य बिभेति सोऽयं मिथ्यासिंहः । अ-

१ ख. ग. °ति वि° । २ क. ख. नीलं पीतं ह्रस्वदीर्घाद्या° । ३ क. ङ. °चारीत्ये°।

तालोकमध्यवर्तिनं मृगेन्द्रं दृष्ट्वा सिंहोऽयमिति प्रतिपद्यते सोऽयं मुख्यः सिंहः । सत्यत्र राजा भद्रसेने स्वस्माद्भेदं पश्यन्नेव धनरक्षणादिरूपं स्वकीयं गुणं मिन्नवलोक्य ममाऽऽत्मा भद्रसेन इति प्रयुङ्क्तेऽतोऽयं गौणात्मा । नापि द्वितीयः । हं मनुष्य इत्यादिप्रत्ययस्य देहगोचरत्वेन मिथ्यात्मविषयत्वात् । द्विपात्त्वाद्याका- ादात्म्यान्मनुष्यत्वाख्या महाजातिः । विशिष्टमातापितृजन्यत्वगम्या ब्राह्मणत्वा- ाऽवान्तरजातिः । उपनयनादिसंस्कारगम्यो ब्रह्मचारित्वाश्रम इत्येते स्थूलदेह- र्मः । स्थूलदेहस्य चानात्मत्वं चार्वाकव्यतिरिक्तानां सर्वेषामपि तैर्थिकानामविवादम् । आदात्मदेहयोर्विद्यमानस्यैव भेदस्य प्रतीत्यभावादहं मनुष्य इति प्रत्ययो मिथ्यात्मवि- यः । इदं च देहस्य मिथ्यात्मत्वं प्राणमयकोशावतारे[1] प्रपञ्चयिष्यते। नापि तृतीयः। स्यापि लिङ्गदेहविषयत्वात् । तथा हि—अयं देहो मदीय इत्येवं स्वस्वामिभावः प्रती- ते । तत्र स्वं देह आत्मा तु स्वामी तयोः कर्मनिमित्तः संबन्धः कर्मणां च पुण्यपापल- गानामनेकत्वात्तदनुसारेणोच्चावचदेहान्पर्यायेण गृह्णाति ।

एतदेवाभिप्रेत्य **भगवतोक्तम्**—

"वासांसि जीर्णानि यथा विहाय नवानि गृह्णाति नरोऽपराणि ।
तथा शरीराणि विहाय जीर्णान्यन्यानि संयाति नवानि देही ''॥ इति ।

तस्य च देहग्रहणस्य कर्मनिमित्तत्वं **श्वेताश्वतरा** आमनन्ति—"गुणान्वयो यः कर्मकर्ता कृतस्य तस्यैव स चोपभोक्ता । स विश्वरूपस्त्रिगुणस्त्रिवर्त्मा प्राणा- ः संचरति स्वकर्मभिः '' इति । सत्त्वरजस्तमोगुणैरन्वयो यस्य जीवात्मनः सोऽयं न्वयः । फलं सुखदुःखरूपं तस्य च कारणे पुण्यपापरूपकर्मणी तयोरयं कर्ता । च कृतस्यैव कर्मण उपभोक्ता न त्वन्यस्य । कृतानां च कर्मणामनेकत्वात्तदनु- ण बहुदेहस्वीकारादयं विश्वरूपः । गुणत्रयवशेन मार्गत्रयगामित्वात्त्रिवर्त्मा । वगुणाधिक्ये सति यमनियमाद्यष्टाङ्गयोगमभ्यस्य सगुणब्रह्मोपासीन उत्तरमार्गे- चैरादिना ब्रह्मलोकं प्राप्नोति । रजोगुणाधिक्ये सति काम्यकर्माणि ज्योतिष्टो- न्यनुष्ठाय धूमादिना दक्षिणमार्गेण स्वर्गाख्यं सोमलोकं प्राप्नोति । तमोगुणाधिक्ये महापातकोपपातकानि कृत्वा नरकलोकं तृतीयमार्गेण प्राप्नोति । इत्थं ानामाधिपतिर्जीवात्मा स्वकीयैः कर्मभिर्मार्गत्रये संचरति । तस्य च जीवस्य पं तत्रैवाऽऽम्नातम्—"अङ्गुष्ठमात्रो रवितुल्यरूपः संकल्पाहंकारसमन्वितो । बुद्धेर्गुणेनाऽऽत्मगुणेन चैव आराग्रमात्रो ह्यवरोऽपि दृष्टः '' इति । हृदयपुण्डरी- ङ्गुष्ठपरिमितं तन्मध्ये व्यवस्थानाज्जीवोऽप्यङ्गुष्ठमात्रः । हृदि ह्येष आत्मेति

१ ख. °कोषाव° । २ घ. 'गुणं ब्र° ।

श्रुत्यन्तरादस्य हृदयेऽवस्थानं द्रष्टव्यम् । मनुष्याश्चाऽऽविद्वदङ्गनाविगोपालं कदाचिदात्मानमहमहमित्येवं हस्तेनाभिनीय प्रदर्शयन्तो हृदयदेशमेव स्पृशन्ति न तु शिरःपृष्ठपादादिप्रदेशम् । अतो हस्तिमशकादिनानाविधदेहसंचारित्वेन संकोचविकासयुक्तस्यापि जीवस्य हृदयपरिमाणमुपचर्याङ्गुष्ठमात्रत्वमुच्यते । स च सूर्यसदृशः । यथा सूर्यः स्वमण्डलप्रकाशनाय मण्डलव्यतिरिक्तबाह्यं दीपादिप्रकाशं नापेक्षते तथा जीवोऽपि चेतनत्वात्स्वात्मावबोधनाय नान्यत्साधनमपेक्षते । ननु चक्षुराद्यपेक्षाराहित्येऽपि मनोपेक्षा विद्यते । अयमहं सुखी दुःखीत्यादिशब्दव्यवहारस्य ध्यानपूर्वकत्वात् । " यद्धि मनसा ध्यायति तद्वाचा वदति " इतिश्रुतेर्वक्तृविवक्षितपूर्विका शब्दप्रवृत्तिरितिशास्त्रकृद्भिरुद्घोषणाच्च । भवैत्वेवं शब्दव्यवहारो ध्यानपूर्वकः । तच्च ध्यानं पूर्वप्रतीते वाच्ये वस्तुनि योग्यशब्दप्रयोजनायैव प्रवर्तते । पूर्वमप्रतीते वस्तुन्येतादृशः शब्दो योग्य इति निर्णेतुमशक्यत्वात् । एवं सति जडेषु घटादिषु प्रवृत्तं मनः प्रथमं वस्तु स्फोरयति । पश्चाद्योग्यं शब्दं ध्यायति । ततः पुमानभिवदति । चैतन्यात्मनि स्वत एव भासमाने शब्दविशेषनियमनायैव ध्यानापेक्षा । न तु स्फोरणाय । अन्यथा ध्यानवृत्तिरहितेषु क्षणेषु सुषुप्तिमूर्छामरणेभ्यः स्वात्मानुभवकृतं वैलक्षण्यं न स्यात् । लोकास्तु महदेव वैलक्षण्यं प्रतियन्ति । तस्माज्जीवात्मा लोकव्यवहारे स्वप्रकाशत्वाद्रवितुल्यरूपः । एतदेवाभिप्रेत्य **वाजसनेयिनः** समामनन्ति—" विज्ञातारमरे केन विजानीयात् " इति । स च जीवः संकल्पाहंकाराभ्यां समन्वितो व्यवहरति । प्रयाससाध्यत्वविनश्वरत्वादिदोषैरसमीचीनेऽपि गृहक्षेत्रादौ तात्कालिकोपभोगाभासं दृष्ट्वा समीचीनमिदं गृहादिकमिति कल्पनं संकल्पः । तस्य च गृहादेरहं स्वामीत्येवमभिमानोऽहंकारः । अन्तःकरणस्येदमाकारा वृत्तिर्बहिर्मुखाऽहमाकारा वृत्तिरन्तर्मुखा ततो द्वे एव वृत्ती । तथाऽपीदंवृत्तेर्विषयबाहुल्यादहंवृत्तेश्च कालभेदेन पुनः पुनरावृत्तेरविच्छिन्नो व्यवहारः प्रवर्तते । तस्य च व्यवहर्तुश्चिदचिदात्मकत्वमुच्यते **बुद्धेर्गुणेनाऽऽत्मगुणेन चैव आराग्रमात्र** इति, लयोदयरूपो बुद्धेर्गुणः । अहंकर्ता च सुप्तौ लीयते प्रबोधे च पुनरुदेति । स्वयंप्रकाशश्चाऽऽत्मनो गुणः । स च सूर्यदृष्टान्तेनोपवर्णितः । एतेन गुणद्वयेन युक्तः । आराग्रमात्रः कृषिकाले बलीवर्दप्रतोदाय दण्डाग्रे स्थापितः सूक्ष्मलोह आरा तस्या अग्रं यथाऽत्यन्तसूक्ष्मं तथाऽयमप्यतिसूक्ष्मोऽन्यथा नाडीष्वप्रतिरुद्धसंचारासंभवात्सोऽयमीदृशो जीवात्मा परमात्मापेक्षयाऽवरो निकृष्टः । सोऽपि प्राणिभिर्दृष्टश्चक्षुषा रूपमिवाहंप्रत्ययेनानुभूतः । स्वप्रकाशस्यापि शब्दव्यवहारयोग्यत्वापादनेनानुभूत इत्युच्यते । तदिदं जीवस्य मानसप्रत्यक्षत्वम् । यद्यपि चिज्जडोभयात्मत्वादिवि-

१ ग. हृदय° । २ क. ख. ग. °त्येव ह° । ३ ग. °बाह्यदी° । ४ ग. °खीत्या° । ५ क. °तेर्विव° । ६ घ. °र्वेकुर्विर° । ७ क. °वत्येवं ।

शास्त्रकृतस्तथाऽपि जीवस्वरूपमात्रं सर्वैरप्यहमित्यनुभूयत एव । तस्य च जीवस्य
ादिभ्रान्तिर्न स्वाभाविकी । किंतु स्थूलशरीरोपाधिकृता ।
तदपि तत्रैवाऽऽम्नातम्—
'' नैव स्त्री न पुमानेष नैव चायं नपुंसकः ।
यद्यच्छरीरमादत्ते तेन तेन स युज्यते " ॥ इति ।
त्तन्नाम्ना व्यवह्रियत इत्यर्थः । किंचास्य कर्त्रात्मनः स्वरूपं मैत्रेया अपि स्पष्ट-
न्ति—"अस्ति खल्वन्योऽवरो भूतात्माख्यः । योऽयं सितासितैः कर्मफलैरभिभूय-
सदसद्योनिमापद्यते " इति । " अवाचीं वोर्ध्वां वा गतिं द्वंद्वैरभिभूयमानः परिभ्र-
' इति । पूर्वत्र "स वा एष शुद्धः पूतः" इत्यादिनोक्तो यः परमात्मा तस्मादन्योऽ-
निकृष्टोऽस्ति स च भूतात्माख्यः । सूक्ष्माणि पञ्च भूतानि लिङ्गदेहरूपेण विक्रि-
ऽय पिण्डेऽग्निवल्लिङ्गदेहे चिदात्मा संक्रामति । अतोऽयं लिङ्गदेहो भूतात्मेत्युच्यते ।
सितासितैः सुखदुःखरूपैः पुण्यपापकर्मफलैरभितः प्राप्यमाणः सद्योनिं ब्राह्मणादि-
मसद्योनिं शूद्रादिरूपामापद्यते । एवमवाचीमधमां नारकीं वा गतिमूर्ध्वामुत्तमां स्वर्ग-
वा गतिमापद्यते । द्वंद्वैः शीतोष्णमानावमानादिरूपैस्तिरस्क्रियमाणः
पुनर्नीयमानो म्रियमाणश्च परिभ्रमति । तस्य भूतात्मनो लिङ्गदेहप्रधानत्वात्तस्य च
देहवन्मिथ्यात्मत्वात्तद्बोधकेनाहं कर्ता भोक्तेत्यनेन मानसप्रत्यक्षेणापि न मुख्यात्म-
: । कर्त्रात्मनो विज्ञानमयस्य मिथ्यात्वमानन्दमयकोशावतारे प्रपञ्चयिष्यते । ननु
ऽऽत्मा भद्रसेन इत्यनेन वाऽहं मनुष्य इत्यनेन वाऽहं कर्ता भोक्तेत्यनेन वा मुख्या-
ाभो मा भूदहं ब्रह्मेत्यनेन तु मानसप्रत्यक्षेण मुख्यात्मलाभ इति चतुर्थः पक्षोऽस्त्विति
त्र वक्तव्यं किमत्र ब्रह्मशब्देन सगुणं ब्रह्म विवक्षितं किंवा निर्गुणं ब्रह्मेति । सगु-
ऽपि किं प्राथमिकोऽहं ब्रह्मेतिप्रत्ययो ब्रह्मणि प्रमाणं ध्यानाभ्यासजन्यो वा । आद्ये
। शास्त्रजन्यत्वान्न प्रत्यक्षेऽन्तर्भावः । मानसप्रत्ययत्वमात्रेण प्रत्यक्षत्वे धर्मादेरपि
क्षत्वप्रसङ्गः । द्वितीये मृतपुत्रसाक्षात्कारवद्भावनाजन्यत्वान्न तस्य प्रामाण्यमस्ति ।
अत एव वार्तिककारा आहुः—
" भावनाजं फलं यत्स्याद्यच्च स्यात्कर्मणः फलम् ।
न तत्स्थास्न्विति मन्तव्यं पण्यस्त्रीसंगतं यथा " ॥ इति ।
निर्गुणब्रह्मणि तु यः साक्षात्कारस्तस्य मानसप्रत्यक्षत्वेऽपि शास्त्रपूर्वकत्वादागम
न्तर्भावः । तस्मान्न प्रत्यक्षेण ब्रह्मात्मलाभः । नाप्यनुमानेन तल्लाभः संभवति हेतुदृ-
ायोरभावात् । अत एवामृतबिन्दूपनिषद्याम्नायते—" निर्विकल्पमनन्तं च हेतु-
न्तवर्जितम्" इति । निर्धर्मकत्वान्न तत्र हेतुः संभवति अद्वितीयत्वाच्च न दृष्टान्तः ।

१ ख. घ. °या विस्प° । २ ब. °न्योऽपरो । ३ ग. °न्योऽपरोऽ° । ब. °न्योऽपरो नि° ।

ननु जन्मादिसूत्रे भाष्यकारा अनुमानमङ्गी चक्रुः। सत्सु तु वेदान्तवाक्येषु जगतो जन्मादिकारणवादिषु तदर्थग्रहणदार्ढ्यायानुमानमपि वेदान्तवाक्याविरोधे[1][2] प्रमाणं भवन्न[3] निवार्यते श्रुत्यैव च तर्कस्याभ्युपेतत्वात्। "श्रोतव्यो मन्तव्यः" इति श्रुतिरिति। नैष दोषः। ब्रह्मणि प्रमाणं वेदान्तवाक्यान्येव पुरुषबुद्धिस्वास्थ्याय त्वनुमानमप्यस्त्विति भाष्याभिप्रायः। तत्रानुमानमारोपितौ हेतुदृष्टान्तावुपजीव्य प्रवर्तते। ब्रह्मसिद्धिरपि तेनैवास्त्विति[4] चेन्न। तद्विशेषासिद्धेः। क्षित्यादिकं सकर्तृकं कार्यत्वाद्घटवदित्यनुमाने-नेश्वरमात्रसिद्धावपि सत्यज्ञानानन्ताद्वितीयत्वलक्षणो विशेषो न सिध्यति। तस्मान्नानु-मानेनापि ब्रह्मलाभः। आगमेऽपि कर्मकाण्डस्य साध्यसाधनभावबोधमात्रपर्यवसायित्वान्न तत्र ब्रह्मलाभशङ्काऽप्यस्ति।

ननु ब्रह्मसिद्धिकारैरेवमुक्तम्—

"सर्वप्रत्ययवेद्ये च ब्रह्मरूपे व्यवस्थिते।
प्रपञ्चस्य प्रविलयः शब्देन प्रतिपाद्यते" ॥ इति।

युक्तं चैतत्। सच्चिदानन्दरूपं हि ब्रह्म तत्र प्रमाणैः प्रमीयमाणेषु सर्वेष्वपि वस्तुषु सत्त्वं भानमानन्दं (न्दनं) च विस्पष्टमतो ब्रह्म सर्वप्रत्ययवेद्यम्। बाढम्। सप्रपञ्चमेव ब्रह्म सर्वैः प्रत्ययैर्वेद्यते। न रूपरसगन्धादिविषयान्परित्यज्य चक्षुरादयः शुद्धं तत्त्वं गृह्णन्ति। अन्यथा गुरुशास्त्रनैरपेक्ष्येणैव सर्वे जना मुच्येरन्। पुरुषार्थस्तु निष्प्रपञ्चब्र-ह्मवेदनादेव। तद्बोधद्वारत्वेन तु शास्त्रेषु तत्र तत्र सप्रपञ्चं ब्रह्मोपन्यस्यते। तच्च पुरुषा-र्थभूतनिष्प्रपञ्चब्रह्मवेदनं[5] शास्त्रेणैव जन्यते। तदपि तैरेवोक्तम्।

"प्रविलीनप्रपञ्चेन तद्रूपेण न गोचरः।
मानान्तरस्येति मतमाम्नायैकनिबन्धनम्" ॥ इति।

तस्माद्द्वितीयब्रह्मात्मतत्त्वमनन्यलभ्यत्वादुपनिषदो विषय इति सिद्धम्। एतदेवा-भिप्रेत्य भगवान्बादरायणः सूत्रयामास—"शास्त्रयोनित्वात्" [ १–१–३ ] इति। तस्य च सूत्रस्य द्वितीयवर्णके योनिशब्दस्य ज्ञप्तिकारणत्वमर्थः। ततः शास्त्रप्रमाण-त्वादित्युक्तम्। तत्रायं न्यायसंग्रहः[6]—

"अस्त्यन्यमेयताऽप्यस्य किंवा वेदैकमेयता।
घटवत्सिद्धवस्तुत्वाद्ब्रह्मान्येनापि मीयते ॥
रूपलिङ्गादिराहित्यान्नास्य मान्तरयोग्यता।
तं त्वौपनिषदेत्यादौ प्रोक्ता वेदैकमेयता" इति ॥

---

१ क. °रोधे प्र°। २ ख. °धेन प्र°। ३ क, छ. भवेन्न। ४ ग. तेनास्त्व°। ५ ग. °धनद्वा°। ६ ग. णम°।

को विषय इत्यस्योत्तरमुक्तम् ।

अथ किं फलमित्यस्योत्तरमुच्यते—उक्तविषयस्याद्वितीयब्रह्मात्मतत्त्वस्याभिव्यक्तिः साक्षात्फलम् । तच्च बृहदारण्यके दर्शितम्—"आत्मन्येवाऽऽत्मानं पश्यति सर्वमात्मानं पश्यति" इति । पूर्वोक्तो यो गौणात्मा पुत्रभृत्यादिर्यौ च मिथ्यात्मानौ स्थूलदेहलिङ्गदेहौ तेभ्यो व्यतिरिक्तः सांख्यादिसंमतः पुरुषश्चिद्रूपः साक्षी मुख्यात्मा तस्मिन्नेवाऽऽत्मनि जगत्कारणं परमात्मानं वेदान्तमहावाक्येन पश्यति । आत्मन्यात्मानमित्याधाराधेयभेदो राहोः शिर इतिवदेकस्मिन्नेव वस्तुन्यौपचारिकः । जीवात्मानमेव परमात्मत्वेन वेदान्तमहावाक्यैः पश्यतीत्यर्थः । परमात्मा हि सर्वस्य जगत उपादानम् । न ह्युपादानव्यतिरेकेण कार्यं किंचिद्वस्त्वस्ति । मृत्सुवर्णादिव्यतिरेकेण घटकुण्डलादिवस्तूनामदर्शनात् । अतो जगत्कारणं परमात्मानं स्वात्मत्वेन पश्यञ्जगदपि सर्वं स्वात्मत्वेनैव पश्यति । न्यायवैशेषिकादिशास्त्राणि मिथ्यात्मन्येव कर्तृत्वादियुक्त उपक्षीणानि । सांख्यशास्त्रं यद्यपि चिदात्मनि मुख्ये प्रवृत्तं तथाऽपि तावत्येव पर्यवसितम् । वेदान्तास्तु तस्य मुख्यात्मन ईश्वरत्वमशेषजगद्रूपत्वं च प्रतिपादयन्तीति विशेषः । एतादृशाद्वितीयत्वबोधः प्रथमफलम् । तद्बोधादूर्ध्वमविद्या निवर्तते । एतच्चाऽऽथर्वणिकैराम्नायते—"एतद्यो वेद निहितं गुहायां सोऽविद्याग्रन्थिं विकिरतीह सोम्य" इति । गुहा बुद्धिस्तस्यां निहितं साक्षित्वेनावस्थितमेतद्ब्रह्मात्मतत्त्वं यो वेद स पुमानिह देहे वर्तमान एव सन्नविद्याग्रन्थिं विश्लेषयति । हे सोम्येत्यङ्गिरा गुरुः शिष्यं शौनकं संबोध्य ब्रूते । यथा लोके साकल्येन राहुग्रस्तश्चन्द्रमाः स्वकीयोज्ज्वलत्वस्याऽऽच्छादितत्वेन स्वयं मलिनोऽम्बरे भासमानो राहुं चावभासयंस्तेन राहुणा तादात्म्यं प्राप्त इवावभासते, एवमयमद्वयानन्दैकरसश्चिदात्मा स्वयमनादिरूपाविद्यापटलेनाऽऽवृतः सन्नद्वितीयत्वस्याऽऽनन्दैकरसत्वस्य चाऽऽच्छादितत्वेन बहुविधद्वैतरूपेण जगता युक्तो दुःखी स्वचैतन्येन स्वात्मानमविद्यां चावभासयन्नविद्यया तादात्म्यं प्राप्त इवाहमज्ञ इत्येकीकृत्य व्यवहरति । सोऽयमेकीकारोऽविद्याग्रन्थिः । स च बोधेन विकीर्णो भवति । यथा राहुणा विमुक्तं चन्द्रमण्डलमुज्ज्वलं भासते तथा बोधेनाऽऽच्छादिकायामविद्यायां निवृत्तायामद्वितीयत्वमानन्दैकरसत्वं चाऽऽविर्भवति । तदिदमविद्याग्रन्थेर्विकीर्णत्वम् ।

अयमेवार्थः पुराणेऽपि स्मर्यते—

" तरत्यविद्यां विततां हृदि यस्मिन्निवेशिते ।
योगी मायाममेयाय तस्मै विद्यात्मने नमः " ॥ इति ।

एकस्यैव भावरूपाज्ञानस्य स्वाश्रयं प्रत्यावरकत्वाकारेणाविद्यात्वम् । विचित्रकार्यजनकत्वाकारेण मायात्वम् । अतोऽविद्याया इव मायाया अपि तत्त्वज्ञानं निवर्त-

---

१ ग. साख्यं शा° । २ ख. घ. °थमं फ° । ३ ग. °षद्' ।

कम् । तस्मात्तत्त्वविदो नाद्वितीयानन्दैकरसस्वभावः कदाचिदप्याविर्भवते । नापि क- न्तरादिकं नूतनकार्यमुत्पद्यते । एवमविद्याग्रन्थौ विकीर्णे सति ततो हृदयग्रन्थ्यादयो निवर्तन्ते ।

तदपि तत्रैवाऽऽम्नातम्—

" भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे " ॥ इति ।

परमुत्कृष्टं जगत्कारणमज्ञानमप्यवरमधमं यस्मात्परमात्मनः सोऽयं परावरः यद्वा परश्चासाववरश्चेति परावरः । सर्वात्मक इत्यर्थः । परावरे तस्मिन्परमात्मनि साक्षात्कृते सति हृदयग्रन्थिर्भिद्यते । हृदयमन्तःकरणं लिङ्गशरीरं तच्चैतन्यच्छायया व्याप्तं चेतनमहं कर्तेति प्रतिभासमानं तर्कशास्त्रे पूर्वमीमांसायां च मुख्यात्मत्वेनाङ्गीकृतं वेदान्तदृष्ट्या स्थूलदेहवन्मिथ्यात्मरूपं तेन हृदयेन सह चिदानन्दैकरसस्याऽऽत्मनो योऽयमेकीभावभ्रमः सोऽयं हृदयग्रन्थिः । अज्ञातस्य शुक्तिरूपस्याऽऽरोपितेन रजतेन सह यथैकीभावस्तद्वद्गुरुशास्त्रोपदेशरहितः सर्वोऽपि जन्तुरज्ञानावृतचिदानन्दैकरसात्मतत्त्वं सूक्ष्मभूतकार्यं कर्तृत्वादिधर्मोपेतं हृदयं च विवेक्तुमशक्नुवन्नेकीकृत्याहं कर्तेत्यशेषस्वरूपविवक्षया व्यवहरति । सोऽयं हृदयग्रन्थिस्तत्त्वदर्शनेन भिद्यते विच्छिद्यते । न च तत्त्वविदोऽपि यथापूर्वमहं कर्तेति व्यवहारो दृश्यत इति वाच्यं सत्यपि व्यवहारे यथापूर्वत्वाभावात् । अत एव श्रीमच्छारीरकमीमांसायां भगवन्तो भाष्यकारा आहुः—"नावगतब्रह्मात्मभावस्य यथापूर्वं संसारित्वम् । यस्य तु यथापूर्वं संसारित्वं नासाववगतब्रह्मात्मभावः "

उपदेशसाहस्र्यामप्युक्तम्—

" आत्मज्ञस्यापि यस्य स्याद्धानोपादानतामतिः ।
न मोक्षार्हः स विज्ञेयो वान्तोऽसौ ब्रह्मणा ध्रुवम् " ॥ इति ।

अहं कर्तेतिव्यवहारस्तु चिदात्मानं बुद्ध्या विविच्यापि कर्तुं शक्यते । अहंशब्दार्थस्य हृदयस्य तन्निष्ठकर्तृत्वधर्मस्य चा(च?)विद्यमानत्वात् ।

एतदपि साहस्र्यामभिहितम्—

" अहमित्यात्मधीर्या च ममेत्यात्मीयधीरपि ।
अर्थशून्ये यदा यस्य स आत्मज्ञो भवेत्तदा " ॥ इति ।

चिदात्महृदययोस्तादात्म्यभ्रमरूपः पूर्वसिद्धोऽर्थस्तेनार्थेन शून्ये केवलहृदये

१ ग. °च्छायया व्या° । २ क ङ. °नं शा° । ३ क. ख. ङ. °वेकुम° । ४ °पूर्वसं° । ५ क. ख. ङ. °पूर्वसं° ।

पूर्विके इत्यर्थः । नहि भ्रमहेतावविद्यायां निवृत्तायां निर्हेतुको भ्रमः संभवति । न स्वप्ने काशीं प्रत्यर्धमार्गं गत्वा प्रबुद्धः पुरुषो निपुणतरोऽपि परेद्युः पुरतो गन्तुं र्वति । तस्माद्धृदयग्रन्थिभेदो निर्विघ्नः सिद्धः । हृदयग्रन्थौ भिन्ने सति सर्वसंशया- द्यन्ते । अयमात्मा स्थूलदेहरूपो वा सूक्ष्मदेहरूपो वा ताभ्यामतिरिक्तो वाऽतिरि- क्तेऽप्यणुपरिमाणो वा मध्यमपरिमाणो वा सर्वगतो वा जडो वा द्रव्यबोधात्मको वा पो वेश्वरादन्यो वेश्वर एव वा प्रपञ्चः सत्यो वा मिथ्या वा मोक्षसाधनं कर्माणि[1] ज्ञानं वेत्यादिका[2] अनन्ताः संशयाः स्वबुद्धिदोषजन्या बहुविधशास्त्राभ्यासेनोत्पादि-[3] सर्वैर्बहिर्मुखैरनुभूयन्ते । ते सर्वेऽपि हृदयग्रन्थिपूर्वकाः । असति हृदयग्रन्थौ सुषुप्ति- समाधिष्वदर्शनात् । तथा जागरणेऽप्यद्वितीयचिदानन्दैकरसमात्मानमनुभवतोऽन्त- गस्य हृदयग्रन्थिरहितस्य शास्त्रसहस्रैरपि[4] न ते संशया उत्पादयितुं शक्यन्ते । षु च्छिन्नेषु ज्ञानस्य फलप्रतिबन्धहेत्वभावादागामिजन्मकारणानि पूर्वानुष्ठितानि पापरूपाणि सर्वाणि कर्माण्यपि क्षीयन्ते । यथा गृहस्थे प्रवृत्तानि देवर्षिपितृसंब- न्धीनि त्रीण्यृणानि लौकिका गृहक्षेत्रादिविवादाः पारिव्राज्ये सति निवर्तन्ते तद्वत् । युक्तं च । कर्त्रात्मनिष्ठानि हि कर्माणि । स च कर्त्रात्मा[5] यावच्चिदात्मना सहैकीभूतस्ताव- ाणि चिदात्मानं संस्पृशन्तु । विवेकेन त्वपाकृते कर्त्रात्मसंबन्धे कथं नाम तानि त्मानं संस्पृशेयुः ।

एतच्च भगवता विस्पष्टमुक्तम्—

" अधिष्ठानं तथा कर्ता करणं च पृथग्विधम् ।
विविधा च पृथक्चेष्टा दैवं चैवात्र पञ्चमम् ॥
शरीरवाङ्मनोभिर्यत्कर्म प्रारभते नरः ।
न्याय्यं वा विपरीतं वा पञ्चैते तस्य हेतवः ॥
तत्रैवं सति कर्तारमात्मानं केवलं तु यः ।
पश्यत्यकृतबुद्धित्वान्न स पश्यति दुर्मतिः " ॥ इति ।

अधिष्ठानं स्थूलदेहः । तथा कर्ता चैतन्यच्छायोपेतो लिङ्गदेहः । करणानि लिङ्ग- पत्रभूतानि चक्षुरादीनि । प्राणवायुकार्यदर्शनश्रवणगमनादिरूपा विविधा चेष्टा । प्रेरकमादित्यादिदेवतारूपं दैवम् । शरीरादिसाध्यस्य पुण्यस्य पापस्य चाधिष्ठा- नः पञ्च हेतवः । न तु चिदात्मा । एवं सत्यात्मस्वरूपमज्ञात्वा भ्रान्तैस्तत्र कर्तृत्व- यते ।

---

१ ग. °णि ज्ञा° । २ ग. °नं चेत्या° । ३ क. ङ °विधाः शा° । ४ ङ. °गरेऽप्य° । °निष्ठस्य । ६ ख. °स्त्रशतैर° । ७ क. ख. ग. ङ. कर्ताऽऽत्मा ।

" यस्य नाहंकृतो भावो बुद्धिर्यस्य न लिप्यते ।
हत्वाऽपि स इमाँल्लोकान्न हन्ति न निबध्यते " ॥

यस्य तु तत्त्वविदो भावः सत्तास्वभावश्चिदात्मा नाहं कर्तेतिप्रत्ययेन विषयीकृतो हृदयग्रन्थेर्भिन्नत्वात् । अत एवाहमित्यात्मधीरर्थशून्येति साहस्रीवचनं पूर्वमुदाहृतम् । केवलं लिङ्गदेहमेवाभिप्रेत्याहं कर्तेति तत्त्वविद्व्यवहरति । अत एव बुद्धौ लेपो न विद्यते । लिङ्गदेहकृतैः कर्मभिर्जन्मान्तरशङ्कालेपबाधे संशयविपर्ययोरभावान्नास्य बुद्धिर्लिप्यते । यद्यप्येतादृशस्य योगिनो रागद्वेषादिराहित्येन हननार्था प्रवृत्तिरेव न संभवति । तथाऽपि राज्येऽधिकृतस्य क्षत्रियस्यार्जुनस्य दुष्टशिक्षाशिष्टप्रतिपालनयोः कर्तव्यत्वेन तत्र प्रवृत्तिः संभवत्येव । यथा योगिन आहारनिद्रादौ योगाभ्यासे वा प्रवृत्तिस्तद्वत् । अनेनैव न्यायेन कौषीतकिवाक्यमपि नेतव्यम् । तत्र ह्येवमाम्नायते—" स यो मां विजानीयान्नास्य केनचन कर्मणा लोको मीयते न मातृवधेन न पितृवधेन न स्तेयेन न भ्रूणहत्यया " इति । अत्र ह्येवं संभावना द्रष्टव्या । क्षत्रियस्य पुत्रः कश्चित्स्वमातृपित्रादिकं स्वगृहेऽवस्थाप्य तत्पोषणार्थं परराष्ट्रे गत्वा राज्ञः समीपे जीवितं गृहीत्वा स्वामिकार्यार्थे[2] धाटीमुखेन रात्रौ समागत्य विचारमन्तरेण स्वमात्रादीन्मारितवान् । यथा जमदग्नेराज्ञया परशुरामः स्वमातरमेव जघान तद्वत् । अतस्तत्त्वविदोऽप्यधिकारविशेषेणैतादृशं संभाव्यते । तच्च तत्त्वदृष्ट्याऽन्यकृतत्वान्न तस्य जन्महेतुः । अन्यकृतत्वं च केनचिन्मन्त्रेणोच्यते—" कामोऽकार्षीत्कामः करोति नाहं करोमि कामः कर्ता नाहं कर्ता कामः कारयिता नाहं कारयिता " इति । अयं मन्त्रो विवेकिनं प्रति कामात्मनोः संबन्धाभावं बोधयन्नविवेकिनः प्रायश्चित्तार्थो भवति । ब्रह्मविदोऽपि लोकव्यवहारमनुसरतः कामपुरःसरा प्रवृत्तिः संभवति । अत एवार्जुनं प्रति भगवतोक्तम्—

" लोकसंग्रहमेवापि संपश्यन्कर्तुमर्हसि " इति ।

तस्माद्युद्धप्रसक्तियुक्तस्य क्षत्रियस्य " हत्वाऽपि स इमान् " इत्यादिभगवद्वाक्यं कौषीतकिवाक्यं च ब्रह्मवेदनान्निर्लेपत्वपरम् । इतरस्यापि लोकव्यवहारे[1] हत्या मानसी वाचिकी वा प्रसक्तेति निर्लेपत्वं तेन वाक्यद्वयेन प्रतिपाद्यताम् । जन्मान्तरकृतैरविद्यादिभिर्निर्लेपत्वं वाक्यद्वयेनाभिधीयते । सत्स्वपि जन्मान्तरकृतपापेषु परमेश्वरार्पितैः पुण्यकर्मभिर्ब्रह्मविद्योत्पद्यत एव पूर्वकृतपापाभावे च ब्रह्मविदां शारीरोगादिकं नोपलभ्येत । न च ब्रह्मविद्या प्रायश्चित्तत्वेन पापस्य निवर्तिका । किंतु प्रत्यगात्मनोऽसङ्गत्वबोधनेन पूर्वसिद्धमेव पापराहित्यमभिव्यनक्ति । तच्च नित्यसिद्धं पापराहित्यमेवमाम्नातम्—" य आत्माऽपहतपाप्मा " इति । तद्वत्पुण्यराहित्यमप्यसङ्गत्वान्नित्यसिद्धम् । तदवबोधेन जन्मान्तरकरणानि काम्यानि पुण्यान्यपि कर्माणि क्षीयन्ते ।

१ ङ. लोके । २ घ. 'र्थे धाटी' ।

अत एव वाजसनेयिन आमनन्ति—"एतमु हैवैते न तरत इत्यतः पापमकरवमित्यतः कल्याणमकरवमित्युभे उ हैवैष एते तरति नैनं कृताकृते तपतः" इति । एतमेव ब्रह्मविदमेते मानस्यौ चिन्ते न तरतो न प्राप्नुतः । कीदृश्याविति ते अभिधीयेते। इतिशब्दः कर्महेतुभूतरागद्वेषप्रदर्शनार्थः । शत्रुं हनिष्यामीत्येतादृशो यो द्वेषोऽस्त्यतो द्वेषादहमभिचारादिना वधरूपं पापमकार्षम् । स्वर्गं प्राप्स्यामीत्येतादृशो यो रागोऽस्त्यतो रागादहं ज्योतिष्टोमादिरूपं कल्याणमकार्षम् । तत्र पापेन नरको भविष्यतीत्येवं विषादरूपा चिन्तैका । स्वर्गः कदा भविष्यतीत्येवं विलम्बासहिष्णुत्वरूपा चिन्ता द्वितीया । उभे अप्येते चिन्ते एष ब्रह्मविदुल्लङ्घयति । कृताकृते पुण्यपापे नैनं क्लेशयतः। अज्ञानिनं तु प्रत्यवायः कृतस्तपति। पुण्यं त्वकृतं संतपति । न त्वसावुभयविधः संतापो ब्रह्मविदोऽस्ति । तदेवं जन्मान्तरकारणानि कर्माणि क्षीयन्त इति सिद्धम् । इह जन्मन्यपि हर्षशोकौ क्षीयेते । तथा च कठा आमनन्ति—"अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहाति" इति । आत्मानमधिकृत्य वर्तत इत्यध्यात्मं तथाविधो योगश्चित्तैकाग्र्यं तस्याधिगमः प्राप्तिस्तेन देवं स्वयंप्रकाशं परमात्मानं मत्वा साक्षात्कृत्य हर्षशोकौ जहाति परित्यजति । न तावदस्य हर्षहेतुरस्ति । द्विधा[1] हि हर्षहेतुः । समीचीनधनादिलाभो विस्मयहेतुरणिमादिसिद्धिश्च । समीचीनत्वबुद्धिस्तु न क्वाप्यस्य विद्यते ।

तदुक्तं वासिष्ठरामायणे—

" न केचन जगद्भावास्तत्त्वज्ञं रञ्जयन्त्यमी ।
नागरं नागरीकान्तं कुग्रामललना इव " ॥ इति ।

विस्मयोऽप्यस्य न क्वापि संभवति । तदपि तत्रैवोक्तम्—

" अपि शीतरुचावर्क उष्णे पीयूषमण्डले ।
अप्यधः प्रसरत्यग्नौ जीवन्मुक्तो न विस्मयी[3] ॥
चिदात्मन इमा इत्थं प्रस्फुरन्तीह शक्तयः ।
इत्यस्याऽऽश्चर्यजालेऽपि[4] नाभ्युदेति कुतूहलम् " ॥ इति ।

शोकस्य तु पुत्रमित्रमरणादिकं निमित्तम् । तच्च नाद्वितीयमात्मानमनुभवतः संभवते । तदनुभवश्चाऽऽचार्यैरुदाहृतः—

" अहमेको न मे कश्चिन्नाहमन्यस्य कस्यचित् ।
न तं पश्यामि यस्याहं तं न पश्यामि यो मम " ॥ इति ।

सोऽयं हर्षशोकपरित्यागो धीरस्यैव न त्वितरस्येत्यभिप्रेत्य धीर इत्युक्तम् ।

---

१ ग. °द्विव° । २ घ. द्विविधो हि । ३ ख. संशयी । ४ घ. °लेषु ना° ।

त्रिविधो हि ब्रह्मवित् । लोकव्यवहारप्रधानो विवेकप्रधानः समाधिप्रधानश्चेति । आर-
ब्धकर्मवशाद्राज्यादिषु योऽधिकारी स व्यवहारप्रधानः । स च मूढवत्तात्कालिकाभ्यां
हर्षशोकाभ्यामभिभूयत एव । तमेतमभिलक्ष्य भाष्यकारा आहुः—"पश्वादिभिश्चा-
विशेषात्" इति । राज्याधिकारवशादेव कृष्णेन बोधितोऽर्जुनो वसिष्ठेन बोधितो
रामश्च व्यावहारिकं हर्षं शोकं च प्राप्तवन्तौ । विवेकप्रधानस्तु धीरो भूत्वेन्द्रियाणि विजि-
त्य तदा तदा प्रसक्तौ हर्षशोकौ विवेकेन परित्यजति । समाधिप्रधानस्य तु हर्षशोक-
प्रसङ्ग एव नास्ति । ईदृशमेव विषयीकृत्याऽऽम्नातम्—"पर्याप्तकामस्य कृतात्मनश्च
इहैव सर्वे प्रविलीयन्ति कामाः" इति । अन्तर्निष्ठ आत्मानमेव कामयते स चाऽऽत्मा
नित्यप्राप्तत्वात्सर्वदा स्फुरतीति तदा तदा न विशेषेण कामयितव्यो भवति । अतोऽयम-
न्तर्निष्ठः पर्याप्तकामः । स च कृतात्मा नियमितान्तःकरणः । अतो बाह्यं न पश्यति ।
कुतस्तस्य कामः स्यात् । तथा सति कामयितव्यस्य कस्याप्यभावान्निरिन्धनाग्निवत्सर्वे
कामाः प्रलीयन्ते । क्रोधलोभादीनां काममूलत्वात्कामलयेनैव तल्लयः । कामितार्थविघाते
हि क्रोध उत्पद्यते । तच्च स्मर्यते—" कामात्क्रोधोऽभिजायते " इति । सोऽयमीदृशः
कामक्रोधाद्यरिषड्वर्गरहितोऽन्तर्निष्ठो ब्रह्मविदामुत्तमः । स चैवमाम्नायते—"आत्म-
क्रीड आत्मरतिः क्रियावानेष ब्रह्मविदां वरिष्ठः " इति । आत्मन्येव क्रीडा यस्यासा-
वात्मक्रीडः । लौकिकः पुरुषो द्यूतादौ स्वस्य जयं परस्य पराजयं चैवान्विच्छन्क्रीडति
तथा ब्रह्मवित्पुमानात्मनः स्वप्रकाशत्वाद्वितीयत्वादिसाधकश्रुतियुक्तीनां प्राबल्यं तद्विरु-
द्धानां दौर्बल्यं चान्विच्छन्क्रीडति । यथा च लौकिकः पुरुषार्थसिद्ध्यै संध्यावन्दनादि-
क्रियावांस्तथा ब्रह्मविद आत्मरतिरेव क्रिया न तु बाह्यक्रिया काचिदस्ति । तथा
चाऽऽरुण्युपनिषद्युक्तम्—'संधिं समाधावात्मन्याचरेत्" इति । परमहंसोपनिषद्यपि-
" परमात्मात्मनोरेकत्वज्ञानेन तयोर्भेद एव विभग्नः सा संध्या सर्वान्कामान्परित्यज्याद्वैते
परमे स्थितिः" । एवं सत्यस्य लौकिकवैदिककर्तव्याभावादयं कृतकृत्यः । एतदपि
परमहंसोपनिषद्युक्तम्—"यत्पूर्णानन्दैकबोधस्तद्ब्रह्मैवाहमस्मीति कृतकृत्यो भवति"
इति ।

भगवताऽप्युक्तम्—

" यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानवः ।
आत्मन्येव च संतुष्टस्तस्य कार्यं न विद्यते " ।। इति ।

स्मृत्यन्तरं च—

" ज्ञानामृतेन तृप्तस्य कृतकृत्यस्य योगिनः ।
नैवास्ति किंचित्कर्तव्यमस्ति चेन्न स तत्त्ववित्" ।। इति ।

---

१ ग. घ. °क्रिड° । २ घ. °नस्त्विवै° । ३ ग. प्रविला° ।

कृतकृत्यस्य स्वरूपं तृप्तिदीप उदाहृतं विस्पष्टम्—

"ऐहिकामुष्मिकव्रातसिद्ध्यै मुक्तेश्च सिद्धये ।
बहु कृत्यं पुराऽस्याभूत्तत्सर्वमधुना कृतम् ॥
तदेतत्कृतकृत्यत्वं प्रतियोगिपुरःसरम् ।
अनुसंदधदेवायमेवं तृप्यति नित्यशः ॥
दुःखिनोऽज्ञाः संसरन्तु कामं पुत्राद्यपेक्षया ।
परमानन्दपूर्णोऽहं संसरामि किमिच्छया ॥
अनुतिष्ठन्तु कर्माणि परलोकयियासवः ।
सर्वलोकात्मकः कस्मादनुतिष्ठामि किं कथम् ॥
व्याचक्षतां ते शास्त्राणि वेदानध्यापयन्तु वा ।
येऽत्राधिकारिणो मे तु नाधिकारोऽक्रियत्वतः ॥
निद्राभिक्षे स्नानशौचे नेच्छामि न करोमि च ।
द्रष्टारश्चेत्कल्पयन्ति किं मे स्यादन्यकल्पनात् ॥
गुञ्जापुञ्जादि दह्येत नान्यारोपितवह्निना ।
नान्यारोपितसंसारधर्मानेवमहं भजे ॥
शृण्वन्त्वज्ञाततत्त्वास्ते जानन्कस्माच्छृणोम्यहम् ।
मन्यन्तां संशयापन्ना न मन्येऽहमसंशयः ॥
विपर्यस्तो निदिध्यासेत्किं ध्यानमविपर्यये ।
देहात्मत्वविपर्यासं न कदाचिद्भजाम्यहम् ॥
अहं मनुष्य इत्यादिव्यवहारो विनाऽप्यमुम् ।
विपर्यासं चिराभ्यस्तवासनातोऽवकल्पते ॥
आरब्धकर्मणि क्षीणे व्यवहारो निवर्तते ।
कर्माक्षये त्वसौ नैव शाम्येद्ध्यानसहस्रतः ॥
विरलत्वं व्यवहृतेरिष्टं चेद्ध्यानमस्तु ते ।
अबाधिकां व्यवहृतिं पश्यन्ध्यायाम्यहं कुतः ॥
विक्षेपो नास्ति यस्मान्मे न समाधिस्ततो मम ।
विक्षेपो वा समाधिर्वा मनसः स्याद्विकारिणः ॥
नित्यानुभवरूपस्य को मेऽत्रानुभवः पृथक् ।
कृतं कृत्यं प्रापणीयं प्राप्तमित्येव निश्चयः ॥
व्यवहारो लौकिको वा शास्त्रीयो वाऽन्यथाऽपि वा ।

---

१ ख. °त्यस्व° । २ क. ङ. °ष्ठन्ति क° । ३ क. ङ. °न्विपास° ।

'ममाकर्तुरलेपस्य यथारब्धं प्रवर्तताम् ।
अथवा कृतकृत्योऽपि लोकानुग्रहकाम्यया ॥
शास्त्रीयेणैव मार्गेण वर्तेऽहं का मम क्षतिः" ॥ इति ।

तस्यैतस्य कृतकृत्यस्य योगिनः सर्वदा मनस्यानन्द एवाऽऽविर्भवति । स चैवमाम्नायते—"रसो वै सः । रसꣳ ह्येवायं लब्ध्वाऽऽनन्दी भवति" इति । स परमात्मा रसो वै परमानन्दस्वभाव एव । तमेतं रसं परमानन्दस्वभावं परमात्मानं लब्ध्वा साक्षात्कृत्यायं योगी स्वमनस्यानन्दी भवति । विद्याजन्येन हर्षेण युक्तो भवति । हर्षशोकौ जहातीत्यत्र विषयभोगजन्यो हर्षो निषिद्धः । न तु विद्याजन्यः । तं च विद्याजन्यं हर्षं श्रुतिः सामोदाहरणेन स्पष्टी चकार—"इमाँल्लोकान्कामान्नी कामरूप्यनुसंचरन् । एतत्साम गायन्नास्ते । हा३वु हा३वु हा३वु । अहमन्नमहमन्नमहमन्नम् । अहमन्नादोऽ३हमन्नादोऽ३हमन्नादः । अहꣳ श्लोककृदहꣳ श्लोककृदहꣳ श्लोककृत्" इत्यादि । ब्रह्मादीनां तिर्यग्रूपगोमहिषादिपर्यन्तानां प्राणिनां मध्ये येन येन यदन्नं भुज्यते तन्मुखेन तदन्नं ब्रह्मविदेव भुङ्क्ते । सर्वदेहानां स्वकीयत्वात् ।

तदुक्तमुपदेशसाहस्र्याम्—

"ब्रह्माद्याः स्थावरान्ता ये प्राणिनो मम पूः स्मृता ।
कामक्रोधादयो दोषा जायेरन्मे कुतोऽन्यतः" ॥ इति ।

एवं च सति काम्यमानं सर्वमन्नमस्यास्तीति कामान्नी । अनेनैव न्यायेन देवमनुष्यादिरूपाणां सर्वेषां स्वकीयत्वात्कामरूपित्वम् । तथा सर्वलोकसंचारश्च । साम्नि त्वहोशब्दस्य गानार्थेन वर्णविकारेण हा३वुशब्दनिष्पत्तिः । एकदेहमात्रपरिच्छिन्नस्य ब्रह्मात्मत्वावबोधमात्रेण सर्वात्मकत्वलाभरूपमाश्चर्यमहोशब्दो ब्रूते । आदरार्थस्त्रिरभ्यासः । सर्वात्मत्वमेवोत्तरवाक्यैरुदाह्रियते । यदन्नं व्रीहियवगोधूमादिविकाररूपं यस्त्वन्नादो ब्राह्मणक्षत्रियादिरूपो भोक्ता यश्च श्लोककृत्काव्यनाटकादिकर्ता तत्सर्वमप्यहमेव । सर्वस्यापि ज्ञानसन्मात्ररूपत्वान्नामरूपविकाराणां च वाचारम्भणमात्रत्वात् । अविभक्तेः संशयनिवृत्त्यर्थस्त्रिरभ्यासः । सोऽयं विद्याजन्य आनन्दस्तृप्तिदीपेऽप्युदाहृतः—

"कृतकृत्यतया तृप्तः प्राप्तप्राप्यतया पुनः ।
तृप्यन्नेवं स्वमनसा मन्यतेऽसौ निरन्तरम् ॥
धन्योऽहं धन्योऽहं नित्यं स्वात्मानमञ्जसा वेद्मि ।
धन्योऽहं धन्योऽहं ब्रह्मानन्दो विभाति मे स्पष्टम् ॥
धन्योऽहं धन्योऽहं दुःखं सांसारिकं न वीक्षेऽद्य ।
धन्योऽहं धन्योऽहं स्वस्याज्ञानं पलायितं क्वापि ॥

१ ख. °हिषाद्रि° ।

धन्योऽहं धन्योऽहं कर्तव्यं मे न विद्यते किंचित् ।
धन्योऽहं धन्योऽहं प्राप्तव्यं सर्वमद्य संपन्नम् ।
धन्योऽहं धन्योऽहं तृप्तेर्मे कोपमा भवेल्लोके ॥
धन्योऽहं धन्योऽहं धन्यो धन्यः पुनः पुनः पुनर्धन्यः ।
अहो पुण्यमहो पुण्यं फलितं फलितं दृढम् ॥
अस्य पुण्यस्य संपत्तेरहो वयमहो वयम् ।
अहो शास्त्रमहो शास्त्रमहो गुरुरहो गुरुः ॥
अहो ज्ञानमहो ज्ञानमहो सुखमहो सुखम् " इति ।

इत्थं फलपरम्परा प्रतिपादिता । सर्वात्मकपरब्रह्मस्वरूपात्माविर्भावः प्रथमं फलम् । ऊर्ध्वमविद्याग्रन्थेर्विकीर्णत्वं हृदयग्रन्थेर्भेदः संशयच्छेदः कर्मक्षयो हर्षशोकपरित्यागः मप्रविलय आत्मन्येव क्रीडाऽऽत्मरतिरेव क्रिया कृतकृत्यत्वमानन्दित्वं चेत्येषा फलम्परा । को विषयः किं फलमित्यनयोरुत्तरमुक्तम् ।

अथ कः संबन्ध इत्यस्योत्तरमुच्यते—ज्ञानकाण्डस्य कर्मकाण्डेन सह साध्यसाभावलक्षणः संबन्धः । ज्ञानं साध्यम् । कर्माणि तु संस्कारकत्वेन वा विविदिषोत्पादेवा ज्ञानस्य साधनानि । संस्कारकत्वमेवं स्मर्यते—" यस्यैते चत्वारिंशत्संस्काराः ब्रह्मणः सायुज्यं सलोकतां जयति " इति । गर्भाधानं पुंसवनं सीमन्तो जातकर्म मकरणान्नप्राशनं चौलमुपनयनं चत्वारि * वेदव्रतानि स्नानं सहधर्मचारिणीसंयोगः पञ्च महायज्ञाः × सप्त पाकयज्ञाः = सप्त हविर्यज्ञाः * सप्त सोमयज्ञा इत्येवं चत्वाादेतैः कर्मभिः पुरुषस्य चित्तं संस्क्रियते ज्ञानयोग्यतामापद्यते । विविदिषाहेतुत्वं तु जसनेयिभिराम्नायते— " तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन साऽनाशकेन " इति ।

विविदिषासंस्कारपक्षयोरवान्तरविशेषो वार्तिकसारे दर्शितः—

" जाता विविदिषाऽवश्यं संपाद्याखिलसाधनम् ।
स्वफलं जनयेदाशु बुभुक्षादिर्यथा तथा ॥

१ प्राजापत्यम्. २ सौम्यम्. ३ आग्नेयम्. ४ वैश्वदेवम्. इति ।

१ देवयज्ञः. २ भूतयज्ञः. ३ पितृयज्ञः. ब्रह्मयज्ञः. ५ मनुष्ययज्ञ इति ।

१ अष्टका. २ पार्वणः. ३ श्राद्धम्. ४ श्रावणी. ५ आग्रहायणी. ६ चैत्री. ७ आश्वयुजीति ।

१ अग्न्याधानम्. २ अग्निहोत्रम्. ३ दर्शपूर्णमासौ. ४ आग्रयणम्. ५ चातुर्मास्यानि निरूढपशुबन्धः. ७ सौत्रामणीति ।

१ अग्निष्टोमः. २ अत्यग्निष्टोमः. ३ उक्थ्यः. ४ षोडशी. ५ वाजपेयः ६ अतिरात्रः. ७ अप्तोर्याम इति ।

१ ग. °श्रमफ° । २ ख. °दकत्वेन । ३ ख. ग. च. °त्तं वा° ।

प्रतिबन्धकपाप्मानं नाशयेच्चित्तसंस्कृतिः ।
साधनानि तु बोधस्य संपाद्यानि प्रयत्नतः ॥
वर्णाश्रमादिशास्त्रेण प्रेरितोऽकरणे भयम् ।
पश्यन्करोति यत्कर्म तत्संस्कारकमुच्यते ॥
तमेतमिति वाक्येन प्रेरितो बोधवाञ्छया ।
अन्तर्यामिण्यर्पयेद्यत्तत्स्याद्विविदिषाकरम् ॥
कर्मणा पितृलोकः स्यादित्येवं नित्यकर्मणाम् ।
फलमुक्तं तथाऽप्येतैर्वेदनेच्छाऽपि तच्छ्रुते ॥
नित्येषु शुद्धेः प्राधान्याद्भोगोऽप्यप्रतिबन्धकः ।
भोगं भङ्गुरमीक्षन्ते बुद्धिशुद्ध्यनुरोधतः ॥
काम्येष्वपि मुमुक्षुश्चेत्फलं देवे समर्पयेत् ।
एतद्भगवता प्रोक्तं कर्मबन्धनिवृत्तये ॥
यत्करोषि यदश्नासि यज्जुहोषि ददासि यत् ।
यत्तपस्यसि कौन्तेय तत्कुरुष्व मदर्पणम् ॥
शुभाशुभफलैरेवं मोक्ष्यसे कर्मबन्धनैः ।
कर्मण्येवाधिकारस्ते मा फलेषु कदाचन " ॥ इति ।

तस्मादीश्वरार्पितानि कर्माणि नित्यानि काम्यान्यपि वेदनेच्छां जनयन्ति । यद्यपि श्रुतिवाक्यैर्वेदनसौन्दर्येऽवगते सति तदिच्छोत्पद्यते तथाऽपि वेदनेऽरुचिः कर्मभिर्जन्यते। यथा क्षीरप्रियस्य पुरुषस्य पित्तरोगग्रस्तस्य सत्यामपि क्षीरेच्छायां मुखे रुचिर्नास्ति । सा रुचिः पुनरौषधक्रियया पित्तोपशमने सत्युत्पद्यते । तथा निःशेषदुःखोच्छेदं निरतिशयानन्दप्राप्तिहेतुत्वं ब्रह्मवेदनस्य श्रुतवतः सत्यामपि वेदनेच्छायां पापप्रतिबन्धाद्वेदनसाधनेषु श्रवणादिषु रुचिर्न जायते ।

तथा चाभिहितं पुराणे—

" महापापवतां नृणां ज्ञानयज्ञो न रोचते ।
प्रत्युत ज्ञानयज्ञस्तु प्रद्वेष्यो भासते स्वतः " ॥ इति ।

तस्मिंश्च ज्ञानप्रतिबन्धके महापापे परमेश्वरार्पितैः कर्मभिर्नाशिते सति श्रवणादौ रुचिरुत्पद्यते । सेयं रुचिरत्र विविदिषाशब्देनोच्यते । अतः परम्परया कर्माणि ज्ञानसाधनभावं प्रतिपद्यन्ते ।

---

१ क. '. ङ. °गोऽथ प° ।

तच्च पारम्पर्यं **वार्तिकसारे** दर्शितम्—

" हृच्छिद्धारोपकुर्वन्ति कर्माण्यात्मविमुक्तये ।
अज्ञानस्याविरोधित्वान्न साक्षादात्मबोधवत् ॥
अविद्याया न चोच्छित्तौ ज्ञानादन्यदपेक्ष(क्ष्य)ते ।
ज्ञानोत्पत्तौ तु नैवान्यच्छमादिभ्यो ह्यपेक्ष(क्ष्य)ते ॥
शमाद्युत्पत्तये नान्यद्बुद्धिशुद्धेरपेक्ष(क्ष्य)ते ।
बुद्धिशुद्धौ च नित्यादिकर्मभ्यो नान्यदिष्यते ॥
पारम्पर्येण कर्मैवं वेदनायोपयुज्यते ।
साधनं कर्म तेनैतत्साध्यं ब्रह्मात्मवेदनम् ॥
इत्येवमभिसंबन्धः कर्मविज्ञानकाण्डयोः ।
इतोऽन्यथाऽपि संबन्धे न किंचिन्मानमीक्ष्यते " ॥ इति ।

अत्रैतं यथोक्तं संबन्धमसहमानाः प्रतिवादिनो बहुधोत्तिष्ठन्ति । तेषां मध्ये केचित्कर्मज्ञाननैरपेक्ष्येणैव मोक्षं वर्णयन्ति । अन्ये ज्ञानकर्मसमुच्चयेन मुक्तिं ब्रुवते । अपरे ज्ञानस्यैव मुक्तिहेतुत्वमङ्गीकृत्यापि सोपानपङ्क्तिन्यायेन वा कामप्रविलापनेन वा प्रपञ्चलयेन वा कर्मकाण्डस्योपयोगमिच्छन्ति । तत्र ज्ञाननैरपेक्ष्यवादिनां मतं **वार्तिकसारे** दर्शितम्—

" निषिद्धस्य निरस्तत्वान्नारकीं नैत्यधोगतिम् ।
नित्यानुष्ठानतश्चेमं प्रत्यवायो न संस्पृशेत् ॥
आगामिजन्मनोऽसत्त्वे निर्विघ्नं स्वास्थ्यमिष्यताम् ।
शरीरारम्भकं कर्म भोगेन क्षीयते ततः ।
विनाऽप्येकात्मसंबोधान्मुक्तिः सिद्धाऽन्तरात्मनः " ॥ इति ।

अस्य पक्षस्य दूषणमपि तत्रैवोक्तम्—

" सूक्ष्मापराधसंदृष्टेरतियत्नवतामपि ।
निषिद्धकाम्ये निःशेषं वर्जयेन्निपुणोऽपि कः ।
मुमुक्षुः पापकाम्ये द्वे वर्जयेदिति चोदना ।
नास्ति वेदे क्वचिद्येन वचसा तत्प्रकल्प्यते ॥
काम्यादिवर्जनं त्वेतत्स्वकपोलप्रकल्पितम् ।
अतः प्रार्मौदिकात्काम्यान्निषिद्धाच्च पुनर्जनिः ॥
नित्यस्य फलमिष्टं चेदुपात्तदुरितक्षयः ।

---

१ ग. °नमिष्यते । २ ग. घ. °थोक्तसं° । ३ ग °हुधा तिष्ठ° । ४ क. °माणिका° ।

तथाऽपि काम्यपुण्यानां क्षयो नादुरितत्वतः ॥
उपपातकमल्पं चेत्क्षीयेतां नित्यकर्मणा ।
अनन्तदेहहेतूनां हत्यादीनां कुतः क्षयः ॥
नित्यकर्मभिरप्यस्ति स्वर्गः काम्याग्निहोत्रवत् ।
**आपस्तम्बेन** तत्प्रोक्तमाम्रवृक्षनिदर्शनात् ॥
फलार्थे निर्मिते त्वाम्रे छायागन्धाववारितौ ॥
तथा वर्णाश्रमाचारादनुगच्छेत्त्रिविष्टपम् ।
निषिद्धकाम्यनित्यानि पूर्वजन्मसु चात्र च ॥
कृतानि सन्त्यनेकानि स्वास्थ्यं तत्राऽऽत्मनः कुतः ।
ऐकात्म्यबोधतः कर्मक्षयं चेदात्थ तर्हि ते ॥
निर्विघ्ना मुक्तिरस्त्येवं ममेव न हि संशयः " इति ।
" अ[?]रे मन्वते मोक्षे ज्ञानकर्मसमुच्चयम् ॥
प्रधानगुणभावेन त्रिविधोऽसौ समुच्च[?]ः ।
ज्ञानं प्रधानं केषांचिदन्येषां कर्ममुख्यता ॥
समप्राधान्यमुभयोरपरेषां मते स्थितम् ।
एकदेशे चैककाले स्थितयोरविरुद्धयोः ॥
समुच्चयः फलैक्ये स्यान्न त्वसौ ज्ञानकर्मणोः ।
बाध्यबाधकभावेन पञ्चास्योरणयोरिव ॥
एकदेशानवस्थानान्न समुच्चय एतयोः ।
साध्यसाधकरूपत्वादेककालानवस्थितिः ॥
हेतुस्वरूपकार्येषु विरोधस्त्वनयोः स्फुटः ।
अध्यासः कर्मणो हेतुः प्रमाणं बोधकारणम् ॥
न भासकं कर्मरूपं बोधरूपं तु भासकम् ।
कर्मकार्यं भावि जन्म तन्निवृत्तिस्तु बोधजा ॥
समुच्चयो दुर्लभोऽतस्तेन मुक्तिः कथं भवेत् ।
सोपानपङ्क्तिगत्येव हर्म्यपृष्ठा[3]धिरोहणम् ॥
अशेषकर्मक्रमतोऽधिकारं केचिदूचिरे ।
संध्यावन्दनमारभ्य क्रमानुष्ठितकर्मभिः ॥
सहस्रवर्षसत्रान्तैर्ज्ञानितामधिरोहति ।
यथैव नगराध्वस्थग्रामगत्युपदेशनम् ॥

---

१ क. ख. ग. °यते नि° । २ ख. °धारू° । ३ ख. ङ. °ष्ठाद्रिरो° ।

नगराध्वोपदेशस्य शेषत्वं प्रतिपद्यते ।
तथैव मोक्षमार्गस्थस्वर्गादिगतिभाषणम् ॥
मोक्षमार्गोपदेशस्य शेषत्वं किं न गच्छति ।
यद्वोपच्छन्दनार्थानि स्वर्गादीनि विमुक्तये ॥
नगराप्तौ तदध्वस्थग्रामादिगुणगीरिव ।
एवं च सति दृष्टेन द्वारेणैवोपकारिणः ॥
आत्मज्ञानाधिकारार्था विधयः सकला अपि ।
मैवं ग्रामगतेः पुंसामध्वत्वादस्तु शेषता ॥
स्वयमेव पुमर्थत्वात्स्वर्गादेः शेषता कथम् ।
यदुपच्छन्दनार्थत्वं नृवाक्ये तत्समञ्जसम् ॥
वेदेषु वक्तृ राहित्यादभिप्रायाद्यसंभवः ।
यद्वा तत्रैव तात्पर्यं यत्रोपच्छन्द्य नीयते ॥
ततश्च विधितात्पर्यं स्वर्ग एव न मोक्षणे ।
दृष्टद्वारं च रागादिप्रवृत्तिप्रतिषेधनम् ॥
यदि तर्हि निषेधेषु द्वारं भवतु तत्तथा ।
विधयस्तु निरुन्धन्ति न रागं रागहेतवः ॥
वर्धयन्ति प्रत्युतामी रागं भोगप्रदानतः ।
अशेषकर्मानुष्ठानमल्पायुषि न संभवेत् ॥
सोपानपङ्क्तिन्यायोऽतो मन्दबुद्धिप्रकल्पितः ।
अन्ये त्वाहुर्न शक्नोति कामसंदूषिताशयः ॥
द्रष्टुं तत्परमद्वैतं सर्वकामासमाप्तितः ।
कर्मभिर्विविधैर्धीमान्स विराडाद्युपासनैः ॥
वैराजान्तं फलं भुक्त्वा तदैकात्म्यं प्रपद्यते ।
सर्वभोगोपभोगेन कृत्स्नकामलयाध्वना ॥
यान्ति मुक्तेरानुगुण्यं कर्माणि निखिलान्यपि ।
ब्रह्मानन्दो मतोऽप्यत्र चिरेणाविषयीकृतः ॥
दृष्टानन्दाभिलाषं स न मन्दीकर्तुमप्यलम् ।
कामप्रविलयायातो विधयः कर्मकाण्डगाः ॥
प्रलीनकामो विज्ञानकाण्डेऽधिक्रियते पुमान् ।
मैवं न कामसंप्राप्त्या तन्नाशोऽब्दशतैरपि ॥

१ ग. °ध्वतूरा° । २ क. ख. ङ °याद्यसं° । ३ क. ख. ग. ङ. °राजाद्यु° ।

तत्सेवातो विवृद्धिः स्यान्निवृत्तिर्दोषदर्शनात् ।
न जातु कामः कामानामुपभोगेन शाम्यति ॥
हविषा कृष्णवर्त्मेव भूय एव विवर्धते ।
गुणस्यादर्शनाद्दोषदृष्टेर्वा क्षीणकामतः ॥
सर्वक्लेशोपशान्त्यर्थमात्मज्ञानं समाश्रयेत् ।
कामाश्रितो विधिः कामं दोषवन्न विलापयेत्[1] ॥
कामुकः सम्प्रवर्तेत नाऽऽत्मज्ञाने कदाचन ।
उद्विजेताथ वा ज्ञानात्सर्वपुंभोगवस्मरात् ॥
तथाच रागिगीतायां पठ्यते वचनं त्विदम् ।
अपि वृन्दावने शून्ये[2] सृगालत्वं स इच्छति ॥
न तु निर्विषयं मोक्षं कदाचिदपि गौतम ।
वैराजान्तं फलं भुक्त्वा मुच्येतेति यदीरितम् ॥
क्रममुक्तौ तत्तथाऽस्तु न तु सद्योविमोचने ।
द्वारं न नियतं मुक्तेः प्राजापत्यं पदं भवेत् ॥
न ह्युपाधिषु तत्त्वस्य विशेषः कश्चिदीक्ष्यते ।
नाऽऽकाशस्य विशेषोऽस्ति कुम्भद्रोण्याद्युपाधिषु ॥
दूरान्तिकादिभिन्नेषु कल्पिताकल्पितेष्वपि ।
अतः प्रजापतौ तत्त्वं क्रिमौ वा न विशिष्यते ॥
तर्कादागमतश्चापि तद्यो य इति हीदृशात् ।
प्रत्यबुध्यत देवानां मध्ये यो यः स एव तत् ॥
अभवन्नान्य इत्याह श्रुतिर्वैषम्यवारिणी ।
एको देवः सर्वभूतेष्विति नाऽऽहापरा श्रुतिः ॥
अतश्चोपाधिवैषम्यान्नाऽऽत्मतत्त्वं विशिष्यते ।
सद्योमुक्तिं वाञ्छतोऽतो दोषदृष्ट्या विलीयते ॥
कामोऽतः कर्मकाण्डस्य तात्पर्यं नैव तल्लये ।
अन्ये तु मन्वते केचिद्गम्भीरन्यायवेदिनः ॥
भेदस्य विलयो वेदे गम्यते कस्यचित्क्वचित् ।
देहात्मभावविलयः स्वर्गकामपदे खलु ॥
देहाद्भिन्नोऽधिकार्यत्र स्वर्गभोग्येऽवगम्यते ।
रागाद्युत्थप्रवृत्तीनां निषेधेषु लयोऽञ्जसा ॥

1 क. ङ. विचालयेत् । 2 ख. °न्ये शृगा° ।

विधिष्वपि लयस्तासां कार्यान्तरनियोगतः ।
लोकेऽपि चानभिप्रेतात्पथः साक्षान्निवारणम् ॥
मार्गान्तरोपदेशाद्वा वेदेऽप्येवं प्रतीयताम् ।
एवं रागादिहेतूत्थप्रवृत्तिलयवर्त्मना ॥
आत्मज्ञानाधिकारार्था निःशेषा विधयः स्थिताः[1] ।
मैवं किं भेदविलयो विधीनां फलकाङ्क्षया ॥
तात्पर्याद्वाऽऽत्मबोधस्य हेतुत्वाद्वाऽवकल्प्यते ।
नाऽऽद्यस्तावद्यतोऽशेषा न कर्मविधयः फलात् ॥
स्ववाक्यावगतात्किंचिदपेक्षन्ते फलान्तरम् ।
तात्पर्यं च विधीनां स्यात्कर्मानुष्ठान एव हि ॥
अन्तरेण ह्यनुष्ठानं स्वर्गपश्वाद्यसंभवात् ।
श्रुतेर्विलयतात्पर्ये फलमाकस्मिकं भवेत् ॥
फलार्थो चेल्लयो न स्यान्नोभयं वाक्यभेदतः ।
श्रुतेऽपि स्वर्गतात्पर्ये कल्पना चेल्लयेऽर्थतः ॥
तन्न प्रत्यक्षवचनाद्देहादिलये[2]सिद्धितः ।
साक्षाद्धस्तिनि दृष्टे हि नहि हस्तिपदानुमा ॥
अस्थूलादिवचः साक्षाद्देहादिप्रतिषेधकृत् ।
नाऽऽत्मबोधोऽपि देहस्य लयाद्भवति कुत्रचित् ॥
अलयेऽप्युपपन्नत्वाल्लये सुप्ताववीक्षणात् ।
गुरुशास्त्राद्यविलये बोधोऽयमुपपद्यते ॥
लयमात्रेण चेद्बोधः[3] सुप्तौ केन निवार्यते ।
सर्पाभासलयेऽपीयं रज्जुस्तमसि नेक्ष्यते ॥
प्रत्युताऽऽभाससर्पोऽयं लीयते रज्ज्ववेक्षणात् ।
अथ प्रपञ्चनाशेन नाश्यते भेदकारणम् ॥
मैवं[4] न कार्यनाशेन कारणं नश्यति क्वचित् ।
कारणं किमविद्या स्याद्वस्तु वा तत्त्वबोधतः ॥
अविद्यानाशनात्तत्र प्रपञ्चविलयोऽफलः ।
वास्तवोऽयं प्रपञ्चश्चेत्स विलाप्यो न केनचित् ॥
अन्यथा स्वात्मतत्त्वस्य विलयः केन वार्यते ।
किंच कृत्स्नस्य विलयः कर्तुं शक्यो न जन्मभिः ॥

---

१ ग. स्मृताः । २ क. ख. ग. °यमिच्छतः । ३ क. ङ. चोद्बोधः । ४ ग. घ. नैवं ।

लेशस्तु लीयते स्वापे स्वत एव न शास्त्रतः ।
किंच भावी न चोच्छेद्यो भूतोऽप्युपरतः स्वतः ॥
प्रपञ्चो वर्तमानस्तु कार्यत्वान्नश्यति स्वतः ।
किंच भेदलयेनैव सर्वानर्थप्रहाणतः ॥
पुरुषार्थस्य संसिद्धेर्विद्यानैष्फल्यमापतेत् ।
अत ऐकात्म्ययाथात्म्यज्ञानादज्ञानहानतः ॥
सिद्धे पुमर्थे विलयकल्पना निष्प्रयोजना ।
इष्टसाधनता बोध्या विधिभिः सकलैरपि ॥
अनिष्टसाधनत्वं तु निषेधैरिति हि स्थितिः ।
तस्मात्कामलये भेदलये सोपानवर्त्मनि ॥
समुच्चये च संबन्धो न युक्तः काण्डयोर्द्वयोः ।
परिशेषात्पुरा प्रोक्तः साध्यसाधनलक्षणः ॥
संबन्धोऽत्रावगन्तव्यो ज्ञानकर्माख्यकाण्डयोः " ।

**को विषयः किं फलं कः संबन्ध** इत्येतेषां त्रयाणामुत्तरमुक्तम् ।

अथ **कोऽधिकारवा**नित्यस्योत्तरमुच्यते—अत्रेदं चिन्त्यते, किं चिकीर्षोरुपनिषद्धिकारः किंवा जिज्ञासोरिति । चिकीर्षोरिति तावत्प्राप्तम् । कुतः । वेदान्तानां कार्यपरत्वात् । विमता वेदान्ताः कार्यपरा वेदभागत्वात्कर्मकाण्डवत् । ननु कर्मकाण्डस्यापि प्रमाणत्वाद्बोधकत्वमेव न तु कारकत्वम् । कर्मकाण्डाभिज्ञानामपि बहूनां कर्मसु प्रवृत्त्यदर्शनात् । नायं दोषः । नदीप्रवाहवेगवत्प्रबलवायुवच्च चोदनाभावेऽपि ममेदं कर्तव्यमितिबुद्ध्युत्पादनेन राजाज्ञादिवत्प्रवर्तकत्वात् । अत एव **भाष्यकारैः** प्रथमसूत्रेऽभिहितम्—"या हि चोदना धर्मस्य लक्षणं सा स्वविषये नियुञ्जानैव पुरुषमवबोधयति" इति । बहूनामप्रवृत्तिस्त्वश्रद्धाद्रव्यराहित्यादिप्रतिबन्धवशादुपपद्यते । अतः कर्मकाण्डवद्वेदान्तानामपि सिद्धार्थे[2] पर्यवसानाभावाच्चिकीर्षोरेवात्राधिकारः । तस्माच्चित्तनिरोधं प्रतिपत्तिं प्रसंख्यानं वा यः कर्तुमिच्छति तस्यैव चोपनिषद्यधिकारः न तु जिज्ञासुत्वधर्ममात्रेणेत्येवं प्राप्तेऽत्राभिधीयते । वेदान्तानां कार्यपरत्वं कुत इति वक्तव्यम् । किं सिद्धार्थे व्युत्पत्त्यभावात्किंवा सत्यामपि व्युत्पत्तौ प्रयोजनाभावादाहोस्वित्कार्य[3]व्यतिरिक्तप्रमेयस्यासंभवात् । नाऽऽद्यः । वृद्धव्यवहारे गामानयेत्यत्र यथा कार्येषु व्युत्पत्तिस्तथा पुत्रस्ते जात इत्यत्र सिद्धे व्युत्पत्तिदर्शनात् । अत्र च **पूर्वाचार्यै**र्बहुभिः पराक्रान्तम् । नापि द्वितीयः । ब्रह्मात्मतत्त्वाविर्भावमुपक्रम्य कृतकृत्यत्वानन्दाभिव्यक्तिपर्यन्तायाः प्रयोजनपरम्परायाः प्रपञ्चितत्वात् । नापि तृतीयः । चिदात्मनस्तत्प्रमेयत्वात् ।

१ ग. °म् । वे° । २ क. सिद्धान्ते । ३ घ. °र्ये व्यु° । ४ ग. °ह्मात्मावि° ।

अत **एवोक्तम्**—

" न मेयाभावशङ्काऽस्ति सर्वव्यापृतिसाक्षिणः ।
चिदात्मनोऽपलापे तु जगदान्ध्यप्रसङ्गतः " ॥ इति ।

न च कर्मकाण्डस्यापि कृत्स्नस्य कार्यपरत्वमस्ति । ब्राह्मणो न हन्तव्य इत्यादिषु निषेधेष्वनुष्ठेयस्य कस्याप्यभावात् । एवमर्थवादादीनामपि देवताविग्रहादौ सिद्धार्थे तात्पर्यमुदाहरणीयम् । एतच्च **देवताधिकरणे** प्रपञ्चितम् । अतो वेदान्तानां कार्यपरत्वाभावान्न चिकीर्षोरत्राधिकारः । इत्थं वेदान्तानां कार्यपरत्वे निराकृते सति विरोधवादिनः पुनः प्रत्यवतिष्ठन्ते । चिदात्मा न वेदान्तैर्बोधनीयस्तस्यान्वयव्यतिरेकासिद्धत्वात् । जाग्रत्स्वप्नसुषुप्तेषु परस्परव्यावृत्तेषु चिदात्मा तत्रानुवृत्तोऽनुभूयते । अनुवृत्तं व्यावृत्ताद्भिन्नमिति जातिव्यक्त्यादौ दृष्टम् । यथा **विश्वामित्रकठकौण्डिन्यव्यक्तिषु** ब्राह्मणत्वं दृष्टम् । अतोऽन्वयव्यतिरेकाभ्यामेव चिदात्मा सिद्धः ।

एतदेवाभिप्रेत्य **वार्तिकसारेऽ**भिहितम्—

" मानान्तरेण तत्सिद्धेर्नात्र व्याप्रियते वचः ।
वासनानां निरोधेऽतः पुमाञ्श्रुत्या नियुज्यते ॥
अनिरोधे वासनानामन्त्यकालेऽनुवर्तनात् ।
भाविजन्मानिवार्यं स्यादन्त्यप्रत्ययकारितम् ॥
यं यं वाऽपि स्मरन्भावं त्यजत्यन्ते कलेवरम् ।
तं तमेवैति कौन्तेय सदा तद्भावभावितः ॥
जाग्रत्स्वप्नसुषुप्त्याख्या या अनात्मार्थवासनाः ।
निरोधनीयास्ताः सर्वा बिभ्यता भाविजन्मतः ॥
अनात्मप्रत्ययानन्तरितस्वात्मैकभावना ।
कार्या तया निरुध्यन्ते वासना जन्महेतवः ॥
उपासीत स्वमात्मानमिति साक्षाद्विधिः श्रुतः ।
तस्याङ्गभावसिद्ध्यर्थं चिदात्माऽनूद्यते श्रुतौ ॥
आत्मैकप्रत्ययो यावत्स्वभावात्संततो भवेत् ।
कुर्यादुपासनं तावत्क्षीयन्ते वासनास्ततः ॥
अन्यदृष्ट्या जाग्रदाद्याः कल्पन्तां क्षीणवासने ।
विदुष्ययं स्वदृष्ट्या तु स्वात्मनोऽन्यन्न पश्यति ॥
देहं विनश्वरमवस्थितमुत्थितं वा
सिद्धो न पश्यति यतोऽध्यगमत्स्वरूपम् ।

१ ङ. °त्मनः । ज° । २ क. ख. घ. ङ. कल्प्यन्तां ।

दैवादुपेतमथ दैववशादपेतं
वासो यथा परिकृतं मदिरामदान्धः ॥
तस्मादशेषवेदान्ता वासनानां निरोधने ।
नियुञ्जते हि पुरुषमात्मोपासनमार्गतः ॥
अथवा मनसो रोधे मुमुक्षुं संनियुञ्जते ।
तस्मिन्निरुद्धे निखिला निरुध्यन्ते हि वासनाः ॥
तावन्मनो निरोद्धव्यं यावद्धृदि गतं क्षयम् ।
इति श्रुतिर्मनोरोधं विदधाति विमुक्तये ॥
**पातञ्जलं योगशास्त्रं** मनोरोधे समापितम् ।
प्रवृत्तिर्मनसो बन्धस्तन्निवृत्तिर्विमुक्तता ॥
वासनामात्रहेतुत्वादात्मनोऽनर्थसंगतेः ।
अन्योपायोऽस्तु वा मा वा निरोधादेव मुक्तता ॥
स्वयंज्योतिःस्वभावत्वान्निरुद्धस्वान्तवासनः ।
प्रमान्तरानपेक्षोऽपि स्वयमात्मा प्रकाशते ॥
एवं कार्यमुखेणैव ज्योतिष्टोमादिवाक्यवत् ।
वेदान्तानां प्रमाणत्वं नाक्षवद्वस्तुनीष्यते ॥
इति व्याचक्षते मन्दा नियोगार्थैकरागिणः ।
नैतत्साध्वभ्यधाय्यत्र नियोगस्यानपेक्षणात् ॥
कामितार्थस्य संसिद्धेर्लौकिकादेव मानतः ।
वैदिकेन नियोगेन किं कार्यं वद बुद्धिमन् ॥
मनसो वासनानां च भावेऽनर्थोऽस्तु जाग्रति ।
तदभावे सुषुप्तादावनर्थो नैव वीक्ष्यते ॥
अन्वयव्यतिरेकाभ्यां निरोधोऽनर्थवारणे ।
उपाय इति विज्ञातः किमपूर्वं विधीयते ॥
उपासनाचित्तरोधौ विधेयावुदितौ त्वया ।
तौ स्तां तथैव बोधस्य हेतुत्वेनाभ्युपैमि तौ ॥
लौकिकव्यवहारेषु प्रवृत्ता धीरुपासनात् ।
अन्तर्मुखा सती स्वात्मविचारक्षमतां व्रजेत् ॥
शब्दस्पर्शादिरहितमात्मानं स्थूलधीर्न हि ।
द्रष्टुं शक्नोति सौक्ष्म्यार्थं धीनिरोधो विधीयताम् ।
एष सर्वेषु भूतेषु गूढोत्मा न प्रकाशते ।
दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मयेति श्रुतेर्वचः ॥

ब्रह्मात्मबोधहेतुत्वं वासनाधीनिरोधयोः ।
मानान्तरानधिगतं तेनास्तु विधिरेतयोः ॥
ज्ञानेऽधिकारसिद्धिः स्यादुपासाधीनिरोधतः ।
सिद्धेऽधिकारे पश्चात्तु वेदान्ता आत्मबोधिनः ॥
अतोऽत्र वासनारोधे धीरोधे वा चिकीर्षया ।
न वेदान्तेऽधिकारः स्यात्किंतु तत्त्वबुभुत्सया ॥
चित्ततद्वासनारोधतात्पर्येऽत्र निराकृते ।
प्रतिपत्तिविधौ शास्त्रतात्पर्यं केचिदूचिरे ॥
आत्मा द्रष्टव्य इत्येवं प्रतिपत्तिविधिः श्रुतः ।
कोऽसावात्मेति वीक्षायां सर्वमात्मेति वर्ण्यते ॥
सत्यज्ञानादिवाक्यानि तत्त्वमस्यादिकान्यपि ।
विधिशेषतया ब्रह्म स्वात्मत्वेनार्पयन्ति हि ॥
एवं विधिमिहेच्छन्ति विध्ययोगेऽपि वस्तुनि ।
विधिरागवशात्केचित्तान्प्रतीदमिहोच्यते ॥
किमैकात्म्यं विधेयं स्यात्किंवा तद्दर्शनं वद ।
नाऽऽद्योऽस्य नित्य[1]सिद्धत्वात्पुंव्यापारानपेक्षणात् ॥
दर्शनं च प्रमाणेन जन्यते न त्वनुष्ठितेः ।
चक्षुषा दृश्यते रूपं नानुष्ठित्या कदाचन ॥
समन्वयस्य सूत्रे हि पूर्वाचार्यैरिति स्फुटम् ।
निराकृतो विधिर्बोधे पुंव्यापाराप्रवेशनात् ॥
तस्माद्द्रष्टव्य इत्येष प्रतिपत्तिविधिर्नहि ।
बहिर्मुखत्वव्यावृत्तिर्विधेया[2]र्हार्थताऽथवा ॥
आत्मबोधो वेदवाक्यजन्यो न तु विधिं स्पृशेत् ।
किं त्वैन्द्रियकविज्ञानमिव [3]सिद्धार्थनिष्ठितम् ॥
एवं च सति वेदान्ता ब्रह्मतत्त्वमलौकिकम् ।
प्रबोधयन्ति विध्वस्तनिखिलद्वैतमव्ययम् ॥
ऐकात्म्यवस्तुयाथात्म्यप्रकाशनपटीयसः ।
वचसस्त्वतिरेकेण किं मानं तद्धुरं वहेत् ॥
शाब्दज्ञानविधावेवं वेदान्तेषु निराकृते ।

१ ङ. °सिद्धित्वा° । २ ग. °र्हाऽर्थतोऽथ° । ३ घ. °ष्ठितः । ए° । ४ ङ. हरेत् । ५ ङ. । शब्द° ।

अपरे पण्डितंमन्या विध्यन्तरमिहोचिरे ॥
अन्योऽप्यनुभवोपायो मननध्यानलक्षणः ।
सोपायो विहितोऽस्त्येव प्रतिपत्तिविधिं विना ॥
उपायाः शान्तिदान्त्याद्यास्तेषु सत्सु निरन्तरम् ।
अविक्षेपेण मननं ध्यानं वा सुकरं भवेत् ॥
अवान्तरमहावाक्यरूपात्सिद्धावबोधकात् ।
शास्त्राद्ब्रह्मात्मतामादौ पुरुषः प्रतिपद्यते ॥
तत्त्वे शास्त्रात्प्रपन्नेऽपि पारोक्ष्यानपहारतः ।
तत्साक्षात्करणायैव प्रसंख्यानं विधीयते ॥
आवृत्तिर्हि प्रसंख्यानं शब्दयुक्त्योरिदं त्विह ।
मननध्यानरूपत्वात्साक्षात्कारयितुं क्षमम् ॥
श्रवणं शाब्दविज्ञाने यथोपायस्तथा द्वयम् ।
अनुभूतौ च मननं निदिध्यासनमित्यदः ॥
तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत तत्त्ववित् ।
इत्यादिना प्रसंख्यानं विधेयमनुभूतये ॥
एवमैकात्म्यतात्पर्ये शास्त्रस्येष्टेऽपि युक्तिभिः ।
केचित्कार्यमपीच्छन्ति तदेतन्नैव युज्यते ॥
किमात्ममानायाभ्यास आपरोक्ष्याय वाऽथवा ।
व्यवधानापनुत्त्यर्थं मानजन्यफलाय वा ॥
मानलोपस्य शङ्कापनुत्त्यर्थं वोत मुक्तये ।
सर्वथाऽपि प्रयासस्ते विध्यर्थोऽत्यन्तनिष्फलः ॥
प्रमात्रादित्रयं यस्मात्संविन्मात्रवपुर्भृतः ।
भाति पूर्वमभातं सत्तद्भाने किमपेक्षते ॥
अहंकारः प्रमाता स्याद्धीवृत्तिर्मानमुच्यते ।
घटादिकं प्रमेयं स्याच्चिद्भासा भाति तत्त्रयम् ॥
परोक्षमपि देहादि यस्य भासाऽऽपरोक्ष्यवत् ।
विभात्यात्मेव तस्य स्यादापरोक्ष्यमहेतुकम् ॥
अज्ञानमपि निःशेषप्रमेयव्यवधानकृत् ।
येनाव्यवहितं भाति तत्केन व्यवधीयते ॥
स्वमहिम्नैव यत्सिद्धं तत्तमो हन्ति शास्त्रधीः ।
किं ततोऽन्यत्फलं मानजन्यं यद्विधितो भवेत् ॥

१ ग. °त्सिद्धव्यव° । २ घ. वा । भान° ।

मात्रादित्रयलोपेऽपि लोपसाक्षितयेक्ष्यते ।
योऽसावलुप्तचैतन्यस्तल्लोपः शङ्क्यते कथम् ॥
ऐकात्म्यस्य स्वतो मुक्तेरज्ञानात्तस्य बद्धता ।
ज्ञानादज्ञानहानौ स्यात्किमपेक्ष्यं विमुक्तये ॥
परोक्षत्वेन शास्त्रेण बुद्धं न त्वनुभूयते ।
प्रसंख्यानमतोऽपेक्ष्यमिति चेद्युज्यते न तत् ॥
मेयस्वभावात्पारोक्ष्यं किंवा शब्दस्वभावतः ।
आद्ये किं ब्रह्मता तत्र परोक्षा स्यादुताऽऽत्मता ॥
यत्साक्षादपरोक्षं तद्ब्रह्मेति ब्रह्मणः श्रुतौ ।
मुख्यापरोक्ष्यमुदितं पारोक्ष्यं शङ्क्यते कुतः ॥
आत्मनस्तत्र पारोक्ष्यं पूर्वमेव निराकृतम् ।
शब्दः स्वयमुदासीनः परोक्षत्वापरोक्ष्ययोः ॥
देशादिभिर्व्यवहितं पारोक्ष्येणावबोधयेत् ।
इतरत्वापरोक्ष्येण दशमस्त्वमसीतिवत् ॥
देशात्कालाद्वस्तुतो वा व्यवधानं मनागपि ।
ऐकात्म्यवस्तुनो नास्ति तत्र पारोक्ष्यधीः कुतः ॥
तमोमात्रान्तरायत्वादैकात्म्याख्यस्य वस्तुनः ।
असाध्यसाधने तस्मिन्काऽपेक्षा भावनां प्रति ॥
ननु विज्ञाय कुर्वीत प्रज्ञामित्यनुशासनात् ।
कर्तव्या भावनेत्येवं यदि ब्रूषेऽस्तु भावना ॥
नैतावताऽवकाशोऽस्ति त्वन्मतस्यात्र कश्चन ।
नैवानुभूतिसिद्ध्यर्थमिदं श्रौतानुशासनम् ॥
विज्ञायेत्यनुभूतिं तां वाक्यजन्यामुपेत्य तु ।
विदधाति तदैकाग्र्यं बहिश्चित्तनिवृत्तये ॥
विवक्षितोपयोगोऽत्र वाक्यशेषेण वर्णितः ।
नानुध्यायाद्बहूञ्शब्दान्वाचो विग्लापनं हि तत् ॥
किं बहूक्त्याऽत्र वेदान्ता बोधमात्रावसायिनः ।
बुभुत्सोरधिकारोऽतश्चिकीर्षोस्तु न कस्यचित् " इति ॥

इत्थमुपनिषदो विषयप्रयोजनसंबन्धाधिकारिणो निरूपिताः । "अधिकारिणः [प्र]तिजनको वेदः" इति न्यायेनेयमुपनिषद्बुभुत्सोर्ब्रह्मात्मतत्त्वे प्रमितिं जनयति । न

१ ग. °स्य विदिति ।

चोपनिषदः प्रामाण्ये विवादितव्यम् । तत्प्रामाण्यस्य स्वतस्त्वस्वीकारादप्रामाण्ये कारण भावाच्च । किमबोधफलकत्वादप्रामाण्यमुत बाधितत्वादुताऽनुवादकत्वात् । नाऽऽद्यः सत्यं ज्ञानमनन्तं ब्रह्मेत्याद्यवान्तरवाक्यानामयमात्मा ब्रह्मेति महावाक्यानां च श्रव मात्रेण बोधोपलम्भात् । नन्वात्मा ब्रह्मेतिपदयोरर्थौ लौकिकावलौकिकौ वा । नाऽऽद्यः वेदस्यानुवादकत्वप्रसङ्गात् । द्वितीये संबन्धग्रहणासंभवादबोधकत्वम् । अथोच्येत पदार्थयोर्लौकिकत्वेन संबन्धग्रहणम् । वाक्यार्थस्य लौकिकत्वाभावादननुवादकत्वम् । ए देवाभिप्रेत्य धर्ममीमांसायां निर्णीतम्—"लोकावगतसामर्थ्यः शब्दो वेदेऽपि बो कः" इति । तदसत् । वाक्यार्थस्य दुर्निरूपत्वात् । किं संसर्गो वाक्यार्थः किं विशिष्ट उताखण्डैकरसः । तत्राभिहितान्वयवादिनो भट्टाः पदैरभिहितानां पदार्था संसर्गं वाक्यार्थमाहुः । अन्विताभिधानवादिनस्तु प्राभाकरा योग्येतरविशिष्टं नियो वाक्यार्थमाहुः । एवमत्राप्यात्मब्रह्मणोः संसर्गस्याऽऽत्मविशिष्टब्रह्मणो वा वाक्यार्थ सत्यपसिद्धान्तस्तव प्रसज्येत । त्वदभिमतस्याखण्डैकरसार्थस्यासिद्धेः । तर्ह्यखण्डैक एव वाक्यार्थोऽस्त्विति चेन्न दृष्टान्ताभावात् । । कथंचित्सत्यपि दृष्टान्ते हानोपादान हित्येन पुरुषार्थाभावात् । किंचाखण्डैकरसत्वसिद्ध्यर्थं जगतो मिथ्यात्वे वेदस्या मिथ्यात्वादप्रामाण्यं स्यात् । अत्रोच्यते—त्वया हि दूष्यत्वेन परमतमनुवदितुमखण्डै करसं वस्त्विति यद्वाक्यं प्रयुज्यते तस्यैव वाक्यस्य दृष्टान्तत्वमभ्युपेयम् । नां तत्र संसर्गस्य विशिष्टस्य वा वाक्यार्थत्वम् । तथा सत्यदूष्यत्वप्रसङ्गात् । न ख तदुभयं त्वया दूष्यते स्वमतत्वेन स्वीकारात् । तस्मादनुवादकमखण्डैकरसं वस्त्वि वाक्यं तत्रैको दृष्टान्तः । पूर्वाचार्या अपि वर्णयन्ति—सत्यज्ञानादिवाक्यमखण्डार्थनि लक्षणवाक्यत्वात्प्रकृष्टप्रकाशश्चन्द्र इतिवाक्यवत् । प्रकृष्टशब्देन नक्षत्रप्रकाशव्यावृत्तिः प्रकाशशब्देन मेघादिव्यावृत्तिः । ततो बुभुत्सितं चन्द्रं(न्द्र)प्रातिपदिकार्थमात्रमखण्डमने वाक्येन बोध्यते । तथा तत्त्वमस्यादिवाक्यमखण्डार्थनिष्ठमकार्यकारणद्रव्यनिष्ठत्वे स समानाधिकरणत्वात्सोऽयं देवदत्त इतिवाक्यवत् । परस्परविरुद्धाभ्यां तद्देशकालाभ्य मेतद्देशकालाभ्यामुपलक्षितस्य देवदत्तव्यक्त्यैक्यस्य प्रतिपाद्यत्वादखण्डार्थत्वम् ।

वार्तिकसारेऽप्यखण्डार्थत्वं वाक्यस्य प्रतिपादितम्—

" प्रसिद्धात्मन्यात्मशब्दप्रयोगात्स हि लौकिकः ।
ब्रह्मार्थोऽपि महत्त्वेन प्रसिद्धो व्यवहारतः ॥
एवं पदात्परिज्ञाते पदार्थे लोकमानतः ।
वाक्यार्थोऽतीन्द्रियो वेदवाक्यात्केन निवार्यते ॥
अपूर्वदेवतास्वर्गपदार्थाँल्लोकमानतः ।

१ ख. °धक° । २ म. °फलाद्° । ३ घ. भाट्टाः । ४ क. ख. ङ. °कपरम° ।

व्युत्पाद्यालौकिकोऽप्यर्थो वाक्याद्बुद्धस्त्वया यथा।
यथाऽर्थवादादिवशात्स्वर्गाद्यर्थोऽवगम्यते ॥
तर्ह्येवान्तरवाक्येन(ण) ब्रह्मार्थोऽप्यवगम्यताम्।
अप्रसिद्धपदार्थोऽपि प्रसिद्धार्थपदैः सह ॥
समभिव्याहृतेर्बोद्धुं शक्यो मधुकरादिवत्।
अतो लोकानुसारिण्या व्युत्पत्त्याऽर्थोऽप्यलौकिकः ॥
धर्मब्रह्मात्मकः सिध्येत्तत्र कस्मादमानता।
अन्यत्रेवात्र वाक्यार्थो नैव संसृष्टलक्षणः ॥
विशिष्टलक्षणो वा स्यात्किंत्वखण्डत्वलक्षणः।
ब्रह्मणोऽनात्मतारूपमब्रह्मत्वं तथाऽऽत्मनः ॥
अज्ञानजं द्वयं द्वाभ्यां पदाभ्यां विनिवार्यते।
नेहान्यदात्मनो ब्रह्म न चाऽऽत्मा ब्रह्मणोऽन्यतः ॥
तादात्म्यमनयोस्तस्मान्नीलोत्पलविलक्षणम्।
नीलत्वमुत्पलत्वं च अन्योन्यं व्यभिचारिणौ ॥
आत्मब्रह्मत्वयोर्नास्ति व्यभिचारो मनागपि।
प्रत्यक्त्वमात्मता तद्वद्ब्रह्मत्वं चाद्वितीयता ॥
द्वौ प्रत्यक्त्वावसंभाव्यौ तत्रैकस्य पराक्त्वतः।
अतः प्रत्यक्त्वमेवैतदद्वयत्वं न चेतरत् ॥
तथाऽप्यविद्याविभ्रान्तिव्यावृत्त्यर्थं पदद्वयम्।
आत्माऽपि सदिदं ब्रह्म मोहात्पारोक्ष्यदूषितम् ॥
ब्रह्मापि संस्तथैवाऽऽत्मा सद्वितीयतयेक्ष्यते।
आत्मा ब्रह्मेति पारोक्ष्यसद्वितीयत्वबाधनात् ॥
अखण्डे नि²ष्ठितं शास्त्रं पुरुषा³र्थे ⁴समीहिते।
हानोपादानराहित्येऽप्यपुमर्थो भवेन्न हि ॥
इष्टप्राप्तेरनिष्टार्थनिवृत्तेश्चेह संभवात्।
त्वं ब्रह्मेति श्रुते वाक्ये सिध्यत्येवाप्रयत्नतः ॥
अशेषानर्थविच्छेदो ब्रह्मानन्दोऽप्यनुत्तमः।
पुरुषार्थोपदेष्टृत्वाद्यद्वत्कार्ये प्रमाणता ॥
तथैकात्म्ये विशेषाद्वा पुमर्थातिशयत्वतः।
न चैकात्म्याभ्युपायस्य मिथ्यात्वमिह चोद्यताम् ॥

१ क. °ष्वैनहरं। २ ख. निश्चितं। ३ ग. °षार्थे स°। ४ ग. घ. समीहते।

कदा वेदस्य मिथ्यात्वं भवता ज्ञायते वद ।
ऐकात्म्यप्रतिपत्तेः प्राङ्न मिथ्यात्वमबाधनात् ॥
पुमर्थस्य समाप्तत्वादूर्ध्वं वेदेन किं तव ।
अज्ञातमपि मिथ्यात्वं प्रागस्त्येवेति तच्छृणु ॥
मानसत्यत्वमिथ्यात्वे न मात्वामात्वकारणे ।
सत्येनाप्यनुपायेन घटेनाग्निर्न मीयते ॥
असत्येनाप्युपायेन प्रतिबिम्बेन बिम्बधीः ।
तस्मादर्थावबोधित्वाद्दुष्टकारणवर्जनात् ॥
अबाधाच्च प्रमाणत्वं वस्तुन्यक्षादिवच्छ्रुतेः ।
ननु भेदाश्रितैर्वाक्यैर्विधायकनिषेधकैः ॥
अक्षादिभिश्च नैकात्म्यं बाधितत्वात्प्रमायुतम् ।
न चास्यैकात्म्यशास्त्रस्य तैर्विकल्पसमुच्चयौ ॥
यत एतावसंभाव्यौ क्रियायामिव वस्तुनि ।
व्रीहिभिर्वा यवैर्वेति यथा यागो विकल्प्यते ॥
नैवमेकमनेकं वेत्येतद्वस्तु विकल्प्यते ।
समुच्चितौ यथा दर्शपूर्णमासौ तथा न तु ॥
भिन्नाभिन्नात्मना वस्तु समुच्चेतुमिहार्हति ।
अत ऐकात्म्यमानस्य भेदमानस्य वा द्वयोः ॥
एकस्य बाधसंप्राप्तावैक्ये धीर्बाध्यतेऽन्यथा ।
नेह नानेति भेदानां निषेधो नान्यबाधकः ॥
वर्णादिग्रहणोपायप्रत्यक्षाद्युपजीवनात् ।
वर्णान्ग्रहीतुमर्थस्य व्युत्पत्त्यैवोपजीवति ॥
श्रुतिरक्षानुमाने द्वे प्रबलत्वं तयोस्ततः ।
निषेधविध्योर्यच्छास्त्रं चित्तशुद्ध्युपकारि तत् ॥
ऐक्यशास्त्रेणोपजीव्यं प्रबलं तेन तन्मतम् ।
तत्तु भेदाश्रयेणैव विधत्ते च निषेधति ॥
तस्मादभेदशास्त्रस्य बाधो विध्यादिशास्त्रतः ।
औपचारिकमैकात्म्यशास्त्रं कर्त्रात्मसंस्तवात् ॥
सावकाशं भवेद्यद्वा जपार्थमुपयुज्यते ।
भेदसाधनमक्षादिभेदादन्यत्र कुत्र वा ॥

---

... 'च ... ° । २ ख. 'व्रीहिसं° ।

सावकाशं ततस्तस्य बाधो नैकात्म्यशास्त्रतः ।
ऐकात्म्यबोधकत्वेऽपि वेदान्ता बाधितत्वतः ॥
अप्रामाण्यं भजन्तीति पूर्वः पक्षो व्यवस्थितः ।
उच्यते लोकतः सिद्धं भेदमाश्रित्य चोदना ॥
प्रवृत्ता पुरुषार्थाय न तु भेदावबुद्धये ।
आश्रयोऽप्यत्र यो भेदो मायिकोऽसौ न वास्तवः ॥
नेह नानेति शास्त्रात्तु वास्तवः प्रतिषिध्यते ।
आगमो मायिकं भेदं न निषेधति किं त्विमम् ॥
मायिको भेद इत्येवं प्रत्युत प्रतिपादयेत् ।
मायामात्रमिदं द्वैतमद्वैतं परमार्थतः ॥
इति माण्डूक्यशाखायां श्रुतिवाक्यमधीयते ।
प्रत्यक्षादिभिरप्यत्र भेदो भात्येष[1] मायिकः ॥
उपजीव्यः स एवातो नोपजीव्यविरोधिता ।
वास्तवे शुक्तिशकले मायिकं रजतं यथा ॥
भासते तद्वदेवेदमद्वैते भेदभासनम् ।
वास्तवे ब्राह्मणे स्वप्ने मायिकी शूद्रता यथा ॥
न विरुद्धा तथा भेदो नाद्वैतेन विरुध्यते ।
प्रत्यक्षादिप्रमाणानां प्रामाण्यं व्यावहारिकम् ॥
आश्रित्यायं प्रपञ्चः स्यादलीकोऽपि प्रमाणवान् ।
अद्वैतागमवाक्यं तु तत्त्वावेदनलक्षणम् ॥
प्रमाणभावं भजतां नातोऽन्योन्यविरोधिता ।
नायं शब्दः कुतो यस्माद्रूपं पश्यामि चक्षुषा ॥
इति यद्वत्तथैवायं विरोधोऽक्षजवाक्ययोः ।
विभिन्नविषयत्वेन विरोधासंभवे सति ॥
अबाधितत्वादैकात्म्यं प्रामाणिकमिति स्थितम् ।
ननु वेदान्तसिद्धान्तमजानन्तोऽपि वादिनः ॥
लौकिकाश्च स्वमात्मानं जानन्ति स्वस्वमानतः ।
मानं प्रत्यक्षमन्यद्वा यथायोग्यं भवेत्ततः ॥
ज्ञातात्मकथनादेते[2] वेदान्ता अनुवादिनः ।
नैवाऽऽत्मनोऽन्यद्वस्त्वेतैर्वेदान्तैः प्रतिपाद्यते ॥

---

१ ख. °त्येव मा° । २ क. म. ङ. ज्ञानात्म° ।

येनापूर्वार्थलाभेन तेषामननुवादता ।
उच्यते मान्तरात्सिद्धः किं देहात्माऽथवेतरः ॥
नाऽऽद्ये स्यादनुवादित्वं देहात्माननुकीर्तनात् ।
न वेदान्ताः क्वचिद्देह आत्मेति प्रत्यपादयन् ॥
यः कोशोऽन्नमयः प्रोक्तस्तत्रास्त्वेवानुवादता ।
देहेतरोऽपि किं कर्ता ब्रह्म वोभयथाऽपि वा ॥
तयोर्मानान्तराबोधादाशङ्क्या नानुवादता ।
वादिनो लौकिका वाऽत्र भविष्यद्देहभागिनम् ॥
कर्त्रात्मानं न जानन्ति वेदान्तवचसा विना ।
देहान्तराभिसंबद्धो भावित्वान्नाक्षगोचरः ॥
लिङ्गसादृश्यविरहान्नानुमानोपमा तथा ।
भावरूपात्मबोधाय नाभावोऽपि प्रवर्तते ॥
अर्थापत्तिर्न संभाव्या दृष्टकल्पकवर्जनात् ।
अन्यथाऽनुपपन्नोऽपि श्रुतः स्वर्गो न कल्पकः ॥
श्रुतार्थापत्तितोऽप्यत्र श्रुतिरेव बलीयसी ।
योनिमन्ये प्रपद्यन्ते शरीरत्वाय देहिनः ॥
इति वेदान्तवचसा भविष्यद्देहयोगधीः ।
भविष्यद्देहसंबन्धी वाक्यादात्मा न चेन्मतः ॥
चार्वाक इव नो कुर्याददृष्टार्थाः क्रियाः सुधीः ।
योगिप्रत्यक्षतो भाविसंबन्धो ज्ञायते[1] यदि ॥
तथाऽपि योगिता श्रौतानुष्ठानादेव नान्यथा ।
योगिभिर्व्यवधानाद्वा साक्षाद्वा श्रुतिरेव हि ॥
कर्त्रात्मनि प्रमाणं स्यात्स्वर्गादिफलभोक्तरि ।
ब्रह्मात्मन्यप्यहंबुद्धिर्न मानं स्यात्कथंचन ॥
प्रत्युताहंबुद्धिरेव सिध्यत्यात्मानुभूतितः ।
शास्त्रैकवेद्यता प्रोक्ता विषयत्वनिरूपणात् ॥
तस्मादननुवादित्वात्सिद्धा वेदान्तमानता ।
प्रमाणं मेयसापेक्षं मेयता कस्य युज्यते ॥
इत्याकाङ्क्षानिवृत्त्यर्थं मेयमत्र निरूप्यते ।
अविज्ञातः प्रमाणस्य विषयो वादिनां मतः ॥
सोऽज्ञातोऽर्थः प्रमाणात्किं सिध्येद्यद्वाऽनुभूतितः ।

---

१ क. ङ. जायते ।

न तावन्मानतः सिद्धिर्मानात्पूर्वमपेक्षणात् ।
सिद्धमज्ञातमुद्दिश्य ज्ञप्त्यै मानं प्रवर्तते ॥
अज्ञातत्वं न सिद्धं चेन्मानात्तत्केन सिध्यति ।
इति चेन्नित्यचैतन्यानुभावेनानुभूयते ॥
मानप्रवृत्तितः पूर्वमज्ञातत्वं यथा तथा ।
ज्ञातत्वमप्युत्तरत्र चैतन्येनानुभूयते ॥
प्रवृत्तं विषये मानं बोधयेद्विषयाकृतिम् ।
ज्ञातताज्ञातते भातो न तेनाविषयत्वतः ॥
रूपार्थं संप्रवृत्तेन नेत्रेण रसगन्धयोः ।
अगृहीतिर्यथा तद्वज्ज्ञाताज्ञातत्वयोर्भवेत् ॥
नेत्रागृहीतयोरन्यद्बोधकं स्याद्यथा तथा ।
ज्ञातताज्ञातते ग्राह्ये अमेये अपि ते चिता ॥
अज्ञानव्याप्तमज्ञातं ज्ञातं मानेन भासितम् ।
तच्चोभयं साक्षिभास्यमाहुर्वेदान्तपारगाः ॥
सर्वं वस्तु ज्ञाततया ह्यज्ञातत्वेन वा सदा ।
साक्षिचैतन्यविषय इति शास्त्रेषु निश्चयः ॥
चितैवाज्ञाततासिद्धावज्ञातो यः स मीयते ।
सर्वैर्मानैरतश्चिन्त्यं कस्याज्ञातत्वमीदृशम् ॥
चेतनोऽचेतनो वाऽयमज्ञातो यद्यचेतनः ।
तन्नाज्ञातार्थकार्यस्य जडस्याज्ञातता कुतः ॥
अज्ञातरज्जुकार्यस्य सर्पस्याज्ञातता न हि ।
अज्ञातब्रह्मकार्यस्य जडस्याज्ञातता कुतः ॥
रज्जुसर्पं न जानामि बोद्धुमिच्छामि मानतः ।
इति व्यवहृतिं प्राज्ञा नाङ्गी कुर्वन्ति केऽपि च ॥
किंचाज्ञातत्वतो लभ्यं तिरोधानं न चेतरत् ।
स्वयमेव तिरोभूते जडे काऽन्या तिरोहितिः ॥
आविर्भूतस्वरूपे तु चेतनेऽन्येन निर्मितात् ।
तिरोधानाद्विशेषोऽस्ति शुभ्रवस्त्रे मषी यथा ॥
चन्द्रं मलिनयेद्राहुर्नीलमेघं न तु क्वचित् ।

---

१ ख. °नुभवे° । २ क. ङ. यानपि । ज्ञा° । ३ ग. °तनाचे° । ४ क. ख. घ. ङ. °ह्यतिः ।ा° । ५ क. ख. ङ. केषु च । ६ ग. किंवाऽज्ञा° ।

एवं चेतनमज्ञातं जडं त्वज्ञानदेहकम् ॥
कार्यकारणरूपं यन्निखिलं जडमीक्ष्यताम् ।
तेन सर्वेण चिद्रूपः स्वप्रकाशस्तिरोहितः ॥
तिरोहितेनोभयं तद्भासते चन्द्रराहुवत् ।
लयः प्रकाशनाशो वा नास्ति चन्द्रवदेव हि ॥
राहुग्रस्तत्वमिन्दौ चेदस्मदृष्टचैव भासते ।
अज्ञातत्वं चितस्तद्वन्मूढदृष्टचैव भासताम् ॥
अतोऽनुभव एवैको विषयोऽज्ञातलक्षणः ।
अक्षादीनां स्वतःसिद्धे[1] यत्र तेषां प्रमाणता ॥
अनुभूतिग्रहायैव प्रवृत्तान्यपि दुष्टया ।
सामग्र्याऽखिलमानानि गृह्णते जडसंयुताम् ॥
शुक्तिकाग्रहणायैव प्रवृत्तमपि लोचनम् ।
गृह्णीते रजतोपेतं शुक्त्यंशं दोषयोगतः ॥
वेदान्तेतरसामग्री दुष्टैषा चक्षुरादिका ।
तैज्जा धीरत्र गृह्णाति स्फूर्तिं रूपादिसंयुताम् ॥
एवं च सति विभ्रान्तः कल्पिते रजते धियम् ।
प्रमाणं मनुते यद्वद्रूपादौ मनुजास्तथा ॥
धर्मिण्यभ्रान्तमखिलं ज्ञानमिच्छन्ति वादिनः ।
विपर्ययं प्रकारे तु वदन्ति रजतादिके ॥
सर्वधर्मिणि सद्रूपे प्रमा धीवृत्तयोऽखिलाः ।
तथा रूपादिके बुद्धिः स्याद्विपर्ययरूपिणी ॥
एवं न्यायेन संसिद्धा प्रमाणानां प्रमाणता ।
ब्रह्मण्येव तथा प्रज्ञा रूपादावेव तां विदुः ॥
धर्मिण्येव प्रमाणं सदपि मानं विमूढधीः ।
रजतग्राहकं मानमिति विद्याद्यथा तथा ॥
ब्रह्मण्यक्षादिमानत्वमिति न्यायविदां मतम् ।
रूपादावेव तन्मात्वमिति मूढधियो जगुः ॥
किं बहूक्त्या प्रमेयं स्यादज्ञातत्वेन चेतनः ।
सर्वेषामपि मानानामज्ञातत्वाभिभाविनाम् ॥
वेदान्तानां विशेषेण निःशेषाज्ञानघातिनाम् ।

१ क. ख. ङ. °सिद्धो य° । २ ङ. तज्जधी° ।

अज्ञातश्चेतनो मेयो नाज्ञातोऽन्योऽस्ति कश्चन ॥
किं चाऽऽनन्दाप्तिरूपस्य पुरुषार्थस्य हेतवः ।
वेदान्तास्तेन तन्मेय आनन्दात्मा परः पुमान् " ॥
उक्तमत्रोपनिषदो विषयादिचतुष्टयम् ।
प्रामाण्यमपि तन्मेयमथ व्याख्या प्रवर्तते ॥

सेयं तैत्तिरीयोपनिषत्त्रिविधा । सांहिती वारुणी याज्ञिकी चेति । तत्र प्रथमप्रपाठके संहिताध्यायस्योक्तत्वात्तद्रूपोपनिषत्सांहिती । द्वितीयतृतीययोः प्रपाठकयोर्या ब्रह्मविद्याऽभिहिता तस्याः संप्रदायप्रवर्तको वरुणस्तस्मात्तदुभयरूपोपनिषद्वारुणी । चतुर्थप्रपाठके यज्ञोपयुक्ता अपि मन्त्रास्तत्र तत्राऽऽम्नाता अतस्तद्रूपोपनिषद्याज्ञिकी । तासां तिसृणां मध्ये वारुणी मुख्या । तस्यां परमपुरुषार्थस्य ब्रह्मप्राप्तिलक्षणस्य साक्षादेव साधनभूताया ब्रह्मविद्यायाः प्रतिपादितत्वात् । एवं तर्ह्यभ्यर्हितत्वेन सैव प्रथमं पठितव्येति चेन्न । तस्यामधिकारसिद्ध्ये सांहित्याः प्रथमं पठितव्यत्वात् । यद्यपि विविदिषोर्विद्यायामधिकारो विविदिषा च कर्मभिरेवोत्पादिता तथाऽपि न कर्मभिश्चित्तैकाग्र्यमुत्पद्यते । प्रत्युत प्रवृत्तिबाहुल्याद्विक्षेपवासनैव भूयसी भवति । ऐकाग्र्यस्य साक्षात्कारहेतुत्वं कठा आमनन्ति—"दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः" इति । ऐकाग्र्यं च ध्यानाभ्यासेन जन्यते । अत एव पतञ्जलिर्योगस्वरूपं तत्साधनं च सूत्रयामास—"योगश्चित्तवृत्तिनिरोधः" "अभ्यासवैराग्याभ्यां तन्निरोधः" इति । अतो ध्यानाभ्यासाय सांहित्याः प्रथमभावित्वं युक्तम् । 'श्रेयांसि बहुविघ्नानि' इति लौकिकन्यायाद्विशेषतो ब्रह्मविद्यायां देवकृतविघ्नबाहुल्यसंभवाच्चाऽऽदौ विघ्नपरिहाराय प्रयतितव्यम् । दैविकविघ्नसंभावना च बृहदारण्यकेऽवगम्यते—"अथ योऽन्यां देवतामुपास्तेऽन्योऽसावन्योऽहमस्मीति न स वेद यथा पशुरेवं स देवानां यथा ह वै बहवः पशवो मनुष्यं भुञ्ज्युरेवमेकैकः पुरुषो देवान्भुनक्त्येकस्मिन्नेव पशावादीयमानेऽप्रियं भवति किमु बहुषु तस्मादेषां तन्न प्रियं यदेतन्मनुष्या विद्युः" इति । अयमर्थः—द्वौ हि पुरुषौ ब्रह्मवित्कर्मी च । तत्र ब्रह्मविदः सर्वभावापत्तिर्भवतीति पूर्ववाक्ये समाम्नातम्—"य एवं वेदाहं ब्रह्मास्मीति स इदं सर्वं भवति" इति । विदितब्रह्मतत्त्वस्य पुरुषस्य सर्वभावापत्तिविघ्नाय देवा अपि न समर्थाः । यस्मादयं ब्रह्मविदेषां देवानामात्मा भवति । एतदपि तत्रैवाऽऽम्नातम्—"तस्य ह न देवाश्चनाभूत्या ईशत आत्मा ह्येषां स भवति" इति । इत्थं ब्रह्मविदः परमपुरुषार्थमाम्नाय विद्यारहितस्य तदभावं दर्शयितुमथ योऽन्यामित्यादि वाक्यमाम्नातम् । अथ ब्रह्मविद्यामहिमोक्त्यनन्तरमविद्यामहिमा वर्ण्यते । यः

१ ग. घ. °यां वि° । २ घ. °ते सू° ।

पुमान्स्वातिरिक्तां देवतामुपास्ते सेवतेऽसावुपास्यो देवो मत्तोऽन्योऽहं चोपासको देवादन्योऽस्मीति सोऽयमुपासको भेददर्शी सन्स्वस्य ब्रह्मत्वलक्षणमहिमानं न जानाति। यथा गजाश्वादिरूपः पशुः स्वस्य शक्त्याधिक्यमज्ञात्वा स्वल्पशक्तीनामपि मनुष्याणामधीनो भवत्येवमज्ञानी स उपासको देवानामधीनो भवति । यथा धेन्वजाश्वबलीवर्दमहिषादयो बह्वः पशवः क्षीरप्रदानभारवाहनादिना स्वोचितव्यापारेणैकं मनुष्यं पालयन्त्येवमज्ञानी पुरुष एकैक एवाग्निसूर्येन्द्रादीन्देवान्हविष्प्रदानादिना पालयति । तस्मादेकैकः पुरुषो देवानां सर्वपशुस्थानीयः । यथा बहुपशुस्वामिनः पुरुषस्यैकस्मिन्नेव पशौ चोरव्याघ्रादिभिरपह्रियमाणे सति महदप्रियं भवति तत्र बहुषु पशुष्वपहृतेषु सत्सु किमु वक्तव्यम्। तस्मान्मनुष्या एतद्ब्रह्मात्मत्वं विद्युरिति यदेतदस्ति तदेतदेषां देवानामत्यन्तमप्रियमिति। एतस्य चाप्रियत्वस्य श्रुत्युक्तत्वाद्ब्रह्मविद्यायां देवकृतो विघ्नः संभाव्यते।

अयमर्थो वार्तिकसारे स्पष्टं संगृहीतः—

" स्वस्य तत्त्वमविज्ञाय यागदानादिकर्मभिः ।
स्वतोऽन्या देवताः पाति ह्यनड्वान्वणिजं यथा ॥
अपि भूरिपशोः पुंस एकस्मिन्नपि तस्करैः ।
ह्रियमाणे पशौ दुःखं किमु सर्वापहारतः ॥
सर्वस्वतुल्ये नृपशौ ब्रह्मधीपरिमोषिणा ।
ह्रियमाणे महद्दुःखं स्यात्सर्वेषां दिवौकसाम् ॥
तस्मादेषामप्रियं तद्यन्मनुष्या विजानते ।
ब्रह्मात्मत्वमतो देवाः प्रतिबध्नन्ति वेदनम् ॥
प्रमादिनो बहिश्चित्ताः पिशुनाः कलहोत्सुकाः ।
संन्यासिनोऽपि दृश्यन्ते देवसंदूषिताशयाः " ॥ इति ।

यथा देवाः प्रतिबन्धकास्तद्वदृष्यादयोऽपि ब्रह्मविद्यायाः प्रतिबन्धकाः । एतदपि बृहदारण्यक एव–" अथो अयं वा आत्मा सर्वेषां भूतानां लोकः " इत्यादिनाऽभिहितम्।

तदर्थोऽप्येवं संगृहीतः—

" वर्णाश्रमाभिमानी सन्नतत्त्वज्ञः पराङ्मतिः ।
देवादीनामाश्रयः स्यात्सर्वेषामापिपीलिकम् ॥
देवानां यागहोमाभ्यामृषीणां वेदपाठतः ।
पितॄणां श्राद्धतो नॄणां वस्त्रान्नगृहदानतः ॥
पशूनां तृणनीराभ्यामुच्छिष्टकणधान्यतः ।

---

१ ग. °ष्मधी° ।

श्वाखुटिट्टिभमुख्यानामेवं सर्वाश्रयो गृही ॥
कर्मणा नार्जितो यस्मान्न कश्चिदुपकारकृत् ।
गृही देवादिभिस्तस्मादर्जितोऽभूत्स्वकर्मभिः ॥
स्वस्वकर्मार्जितत्वेन देवाद्याः स्वस्वदेहवत् ।
अविनाशं सदेच्छन्ति गृहिणः स्वोपकारिणः ॥
तत्त्वं बुद्ध्वाऽननुष्ठानं नाशोऽयं गृहिणो महान् ।
एष देवादिभिः सर्वैर्न हि शक्यश्चिकित्सितुम् ॥
कर्मणामननुष्ठानं रोगालस्यादिना तु यत् ।
नासावात्यन्तिको नाशो यतः पश्चात्करिष्यति ॥
मा भूत्सर्वस्वहानिर्नो ब्रह्मयाथात्म्यविद्यया ।
इति देवादयो विद्यां प्रतिबध्नन्ति यत्नतः " ॥ इति ।

एतदेवाभिप्रेत्य **कठवल्लीष्वाम्नातम्**—" श्रवणायापि बहुभिर्यो न लभ्यः शृण्वन्तोऽपि बहवो यं न विद्युः " इति ।

**भगवताऽप्येतदेवोक्तम्**—

" मनुष्याणां सहस्रेषु कश्चिद्यतति सिद्धये ।
यततामपि सिद्धानां कश्चिन्मां वेत्ति तत्त्वतः " ॥

तदेवं परमपुरुषार्थस्य विघ्नबाहुल्यसंभवात्तच्छान्तये सांहित्यामुपनिषद्याद्यानुवाके जप्यो मन्त्र आम्नायते । कर्मकाण्डस्योपक्रमे तु नायं मन्त्र आम्नातः कर्मानुष्ठानस्य देवादिभिरप्यपेक्षितत्वेन तत्र विघ्नानामसंभवात् । ननु पूर्वकाण्डोक्तैर्यज्ञदानादि[भि]रेव[1] विद्याविघ्न उपशाम्यति । बाढम् । तथाऽपि मन्त्रजपनिवर्तनीयं विघ्नान्तरं संभवति । विद्यायामरुचिराद्यो विघ्नः । स च संचितैर्महद्भिः पापैरापाद्यते ।

**एतच्च पुराणेऽभिहितम्**—

" महापापवतां नृणां ज्ञानयज्ञो न रोचते ।
प्रत्युत ज्ञानयज्ञस्तु प्रद्वेष्यो भासते स्वतः " ॥ इति ।

तानि च महान्ति पापानि ब्रह्मवेदने रुचिमुत्पादयद्भिर्यज्ञदानादिभिर्निवर्त्यन्ते । सेयं रुचिर्विविदिषाशब्दवाच्या । तदुत्पादकत्वं च यज्ञादीनामेवमाम्नायते—" तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन " इति । यज्ञादीनां च काम्यानां सांसारिकफलहेतुत्वेऽपीश्वरार्पितानां वेदनविघ्नकारिमहापातकनिवर्तकत्वं युक्तम् ।

१ ख. °व विघ्न ।

अत एव भगवतोक्तम्—

" ब्रह्मण्याधाय कर्माणि सङ्गं त्यक्त्वा करोति यः ।
लिप्यते न स पापेन पद्मपत्रमिवाम्भसा " ॥ इति ।

तस्य पापक्षयस्य विषयवैराग्यं लिङ्गम् । एतच्च नैष्कर्म्यसिद्धावुक्तम्[1]—

" शोध्यमानं तु तच्चित्तमीश्वरार्पितकर्मभिः ।
वैराग्यं ब्रह्मलोकादौ व्यनक्त्यथ सुनिर्मलम् " ॥ इति ।

श्रेयोमार्गेऽप्यभिहितम्[2]—

" ब्रह्मादिस्तम्बान्ते संसारेऽस्मिन्नसारताबुद्धिः ।
अन्तर्यामिणि देवे समर्पितस्वक्रियाविषक्तिरियम् " ॥ इति ।

विरक्तस्य विद्यायामरुचिकरे विघ्ने परिहृतेऽपि चित्तैकाग्र्यहेतोरुपासनस्य योगशब्दाभिधेयस्यान्तरायाः संभवन्ति । ते च पतञ्जलिना योगशास्त्रे सूत्रिताः—" व्याधिस्त्यानसंशयप्रमादालस्याविरतिभ्रान्तिदर्शनालब्धभूमिकत्वानवस्थितत्वानि चित्तविक्षेपा योगान्तरायाः " इति । व्याधिः प्रसिद्धः । स्त्यानमकर्मण्यता चित्तस्य । चित्तं हि कदाचित्तमोगुणबाहुल्येन व्यापारायोग्यं सन्मूढं भवति । उपास्यनिश्चयर हित्यं संशयः । उपासनस्य कदाचिद्विस्मृतिः प्रमादः । पश्चात्करिष्य[illegible]क्षाऽऽलस्यम् । वैराग्यराहित्यमविरतिः । उपास्यवस्तुन्यन्यथा निश्चयो भ्रान्तिदर्शनम् । चित्तैकाग्र्यस्योत्तरोत्तराभिवृद्धिराहित्यमलब्धभूमित्वम् । कदाचिदुपासने प्रवृत्तिः कदाचिद्यागदानादौ कदाचित्कृषिवाणिज्यादावित्येतादृगनवस्थितत्वम् ।

एतेषां योगान्तरायाणामुपशमनाय जप्यं मन्त्रमाह—

हरिः ॐ ।

**शं नो मित्रः शं वरुणः । शं नो भवत्वर्यमा । शं न इन्द्रो बृहस्पतिः । शं नो विष्णुरुरुक्रमः, इति ।**

अह्नः प्राणवृत्तेश्चाभिमानी देवो मित्रो[3] नोऽस्माकं शं सुखहेतुर्भवतु । एवमुत्तरत्रापि योज्यम् । रात्रेरपानवृत्तेश्चाभिमानी वरुणः । चक्षुष आदित्यमण्डलस्य चाभिमान्यर्यमा । बाह्वोर्बलस्या(स्य चा)भिमानीन्द्रः । वाचि बुद्धौ चाभिमानी बृहस्पतिः । पादयोरभिमानी विष्णुः स चोरुक्रमः । त्रिविक्रमावतारे विस्तीर्णपादोपेतत्वात् । अथवा प्राणादिष्ववयवेष्वभिमानिनां मित्रादीनामुक्तत्वादवयविनि कृत्स्नदेहेऽभिमानी विराट्पुरुषः परिशिष्यते । स चोरुक्रमशब्देनाभिधीयते । ब्रह्माण्डदेहोपेतत्वेन सर्वव्यापित्वमुरुक्रमत्वम् ।

---

१ क. ख. ङ. 'म्—शुध्य° । २ क. ख. ग. ङ. 'भिहितम् । ३ ग. घ. मित्रः । नोऽस्मा° ।

इत्थमवयवेष्ववयविनि चाभिमानिनो देवा विघ्नपरिहारेण सुखहेतुतया प्रार्थिताः। अथ तेषां देवानामन्तर्यामित्वेन प्रेरकं यत्परं ब्रह्म तदेतन्नमस्क्रियते—

**नमो ब्रह्मणे। नमस्ते वायो। त्वमेव प्रत्यक्षं ब्रह्मासि। त्वमेव प्रत्यक्षं ब्रह्म वदिष्यामि। ऋतं वदिष्यामि। सत्यं वदिष्यामि। तन्मामवतु। तद्वक्तारमवतु। अवतु माम्। अवतु वक्तारम्, ॥ इति।**

यच्च ब्रह्म ज्ञानक्रियाशक्त्युपेतसूत्रात्मना वायुमूर्तिधारिणां सर्वेषां प्राणिनां विधारकं भवति। "वायुर्वै गौतम तत्सूत्रं वायुना वै गौतम सूत्रेणायं च लोकः परश्च लोकः सर्वाणि च भूतानि संदृब्धानि भवन्ति" इति श्रुतेः। अतो वायुरपि नमस्क्रियते। तत्रान्तर्यामिणः शास्त्रानुमानाभ्यामेवावगम्यत्वेन परोक्षत्वान्नास्ति संबोधनम्। सूत्रात्मना वायुरूपेण स्पर्शनेन्द्रियगम्यत्वात्संबोध्यते। अयमेवाभिप्रायस्त्वमेव प्रत्यक्षमिति वाक्येन स्पष्टी क्रियते। यतो वायूपाधिकं ब्रह्म प्रत्यक्षयोग्यं ततो हे वायो + त्वामेव व्याकरिष्यमाणेषूपासनवाक्येषु साक्षात्कारयोग्यं ब्रह्म वदिष्यामि। सोपाधिकं ब्रह्म तु येन येन प्रकारेणोपास्यते तेन तेन प्रकारेण चिराभ्यासे सति साक्षात्कर्तुं शक्यते। अत एव च्छन्दोगाः शाण्डिल्यविद्यायामामनन्ति—"एतमितः प्रेत्याभिसंभवितास्मीति यस्य स्यादद्धा न विचिकित्साऽस्ति" इति। अद्धा साक्षादित्यर्थः। वाजसनेयिनोऽप्यामनन्ति—"देवो भूत्वा देवानप्येति" इति। इहैव जन्मनि साक्षात्कारो देवभावः। मरणादूर्ध्वं देवत्वापत्तिर्देवाप्ययः। अतो वक्ष्यमाणवाक्येषु नानृतं वदिष्यामि किंतु विद्यमानमेवार्थं प्रत्यक्षं ब्रह्मेत्येतादृशं वदिष्यामि। विवक्षितस्य विद्यमानार्थस्याऽऽदौ मनसा पर्यालोचनमृतवदनं पश्चाद्वचसोच्चारणं सत्यवदनमिति तयोर्विवेकः। यदुत्तरत्र वक्ष्यमाणं प्रत्यक्षं ब्रह्म तन्मां विद्यार्थिनं शिष्यं वक्तारमाचार्यं च विद्याग्रहणोपदेशसामर्थ्यप्रदानेनाप्युभौ पालयतु। अनयैव विवक्षया पुनरपि 'अवतु माम्। अवतु वक्तारम्' इत्याभिधीयते—

इत्थं वायुरूपं प्रत्यक्षं ब्रह्म संप्रार्थ्यान्तर्यामिरूपं परोक्षं ब्रह्म तद्वाचकेन प्रणवेनानुस्मृत्य विघ्नशान्तिरस्त्विति प्रार्थ्यते—

**ॐ शान्तिः शान्तिः शान्तिः (१), ॥ इति।**

---

+ यद्यपि शान्तिवाक्ये त्वमेव प्रत्यक्षं ब्रह्म वदिष्यामीत्येव वैदिकपाठ उपलभ्यते तथाऽप्युपसंहारशान्तौ त्वामेव प्रत्यक्षं ब्रह्मावादिषमित्येव वैदिकपाठात्तदनुरोधाच्छांकरभाष्येऽत्र चेतिकाराध्याहारेण लापनमकृत्वा त्वामेवेत्युद्दिश्यैवार्थकरणाच्च पुरातनपाठस्त्वामेवेत्येवानुमीयते।

---

१ ख. वक्ष्यामि। २ ङ. °मिप।

* सत्यं वदिष्यामि पञ्च च ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके सप्तमप्रपाठके
प्रथमोऽनुवाकः ॥ १ ॥

विघ्नाश्च त्रिविधाः । तत्र ज्वरशिरोव्यथादय आध्यात्मिकाः । देवाद्युपद्रवास्त आधिदैविकाः । यक्षराक्षसाद्युपद्रवास्त आधिभौतिकाः । तेषां त्रयाणामुपशमनाय त्रिः शान्तिशब्दः पठ्यते । प्रणवेनेश्वरानुस्मरणस्य विघ्नोपशमनार्थत्वं पतञ्जलिश्चतुर्भिः सूत्रैः सूत्रयामास —" क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः " " तस्य वाचकः प्रणवः " "तज्जपस्तदर्थभावनम् " "ततः प्रत्यक्चेतनाधिगमोऽप्यन्तरायाभावश्च" इति ।

इति श्रीमत्सायणाचार्यविरचिते श्रीबुक्कणसाम्राज्यधुरंधरमाधवविद्यारण्यपरमेश्वरसंबन्धिवेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्ये सप्तमप्रपाठके सांहित्यामुपनिषदि प्रथमोऽनुवाकः ॥ १ ॥

---

अथ सप्तमे द्वितीयोऽनुवाकः ।

प्रथमानुवाकोक्तमन्त्रजपेन परिहृतविघ्नस्य पुरुषस्योपासनार्थं ब्रह्मावबोधार्थं च तत्प्रतिपादको ग्रन्थो वक्तव्यः । तस्य च ग्रन्थस्यार्थज्ञानप्रधानत्वात्पाठे मा भूदौदासीन्यमित्येतदर्थं द्वितीयानुवाके शिक्षाध्यायोऽभिधीयते । भवत्वौदासीन्यमिति चेन्न । अनर्थप्रसङ्गात् ।

" मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्या प्रयुक्तो न तमर्थमाह ।
स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात् " ॥

इत्यादिन्यायात् ।

इन्द्रशत्रुवृत्तान्तश्च " त्वष्टा हतपुत्रः " इत्यनुवाके विस्पष्टमभिहितः । एवं तर्हि कर्मकाण्डेऽप्ययमध्यायो वक्तव्य इति चेद्बाढम् । अत एव काण्डद्वयशेषत्वा × द्देहलीप्रदीपन्यायेनोभयोः काण्डयोर्मध्येऽभिहितः । न चोभयशेषत्वेन वेदस्योपक्रम एव पठ्यतामिति वाच्यम् । उभयशेषस्यापि विद्यायां प्रयोजनाधिक्यद्योतनाय विद्याकाण्डे पठनीयत्वात् । कर्मकाण्डे क्वचित्स्वरवर्णादिव्यत्ययेन यथाशास्त्रमर्थानवबोधेऽपि प्रायश्चित्तेनानुष्ठानवैकल्यं परिहर्तुं शक्यम् । अत एव प्रायश्चित्ताज्याहुतिमन्त्र एवमाम्नायते— " अनाज्ञातं यदाज्ञातं यज्ञस्य क्रियते मिथु । अग्ने तदस्य कल्पय त्वꣳ हि वेत्थ यथात-

---

* एतत्परिगणनं क्वचिन्नोपलभ्यते । × देहली सद्मद्वारसमीपतरभागस्तत्स्थानस्थो दीपो द्वारान्तःप्रदेशं तद्बहिर्भूतं चत्वरं च समुज्ज्वलयति । तथाऽयमध्यायः कर्मज्ञानकाण्डयोर्मध्येऽभिहित इति पर्यवसितम् ।

यम्" इति। विद्याकाण्डे त्वयथाशास्त्रमर्थावबोधे सति वैकल्यं न समाधीयेत। न ह्यन्यथाबोधः प्रायश्चित्तेन परिहर्तुं शक्यते। रज्जुसर्पादिभ्रान्तेर्गायत्रीजपादिभिः परिहारादर्शनात्। अत एव कर्मस्विव विद्यायां वैकल्यपरिहाराय प्रायश्चित्तं किमपि नाऽऽम्नातम्। प्रत्युत विद्यामभ्यस्यतः पापे प्रसक्तावप्यन्यप्रायश्चित्ताभावः स्मर्यते—

"यदि स्यात्पातकं किंचिद्योगी कुर्यात्प्रमादतः।
योगमेव निषेवेत नान्यं मन्त्रं कदाचन" इति॥

तस्माद्विद्यायामवैकल्याय यथाशास्त्रं बोद्धुमुपनिषत्पाठे प्रयत्नातिशयं विधातुमत्रैव शीक्षाध्यायोऽभिधीयते—

**ॐ शीक्षां व्याख्यास्यामः। वर्णः स्वरः। मात्रा बलम्। साम संतानः। इत्युक्तः शीक्षाध्यायः (१), इति।**

**शीक्षां पञ्च।**

**इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके सप्तमप्रपाठके द्वितीयोऽ*नुवाकः॥ २॥**

"शिक्ष विद्योपादाने" इति धातुः। शिक्ष्यन्ते वेदनीयत्वेनोपदिश्यन्ते स्वरवर्णादयो यत्रासौ शिक्षा सैव **शीक्षा** तां विस्पष्टमा समन्ताद्**व्याख्यास्यामः** कथयिष्यामः। अकारादिर्**वर्णः**। उदात्तादिः **स्वरः** ह्रस्वदीर्घादिका **मात्रा**। स्पृष्टत्वमीषत्स्पृष्टत्वमित्यादिकः प्रयत्नो **बलम्**। अतिद्रुतत्वमतिविलम्बितत्वं च परिहृत्य यस्य यः काल उचितस्तस्मिन्ति काले तदुच्चारणं साम्यं तदेव **साम**शब्देनोच्यते। पूर्वोत्तरवर्णयोः संहिता **संतानः**। एते वर्णादयः संतानान्ताः षडपि तत्तल्लक्षणलक्षिताः पठनीयाः। इत्यनेन प्रकारेण शिक्षारूपोऽध्याय **उक्तः**। वर्णादयः षडेव शिक्षणीया न त्वन्यः कश्चिच्छिक्षणीयोऽस्तीति द्योतयितुमध्यायोपसंहारः। अध्येतव्यः पठनीयो ग्रन्थोऽ**ध्यायः**। यद्यप्यत्र शिक्षादिशब्दानामेकश्रुत्याऽधीयमानत्वाद्व्याकरणोक्तप्रकृतिप्रत्ययादिप्रयुक्तः स्वरो नोपलभ्यते तथाऽपि संप्रदायप्रसिद्धः स्वरस्तथैवाभ्यसनीयस्तस्य चार्थविशेषज्ञान उपयोगाभावेऽप्यनेन शीक्षाध्यायेन विधीयमानत्वाददृष्टोपयोगो भविष्यति। तच्चादृष्टमुपासनायां मुमुक्षोस्तत्त्वविद्यायां च प्रतिबन्धपरिहाराय संपद्यते।

इति श्रीमत्सायणाचार्यविरचिते श्रीबुक्कणसाम्राज्यधुरंधरमाधवविद्यारण्यपरमेश्वरसंबन्धिवेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्ये सप्तमप्रपाठके सांहित्यामुपनिषदि द्वितीयोऽनुवाकः॥ २॥

---

* घ. पुस्तकेऽत्र प्रथमानुवाकसमाप्तिर्वर्तते। एवमग्रेऽपि तृतीयाद्यनुवाकसमाप्तिस्थले द्वितीयाद्यनुवाकसमाप्तिर्वर्तते।

१ ख. °तमतिमन्द्र°। २ ग. °दिपदाना°।

अथ सप्तमे तृतीयोऽनुवाकः ।

द्वितीयेऽनुवाके दृष्टादृष्टोपकारी ग्रन्थपाठनियमो विहितः । तृतीये त्वैहिकामुष्मिकफल-सिद्धये काचिदुपासना विधीयते । तत्राऽऽदौ तावन्मङ्गलाचरणार्थोऽयं मन्त्र आम्नायते। पूर्वोक्तशान्तिमन्त्रेण विघ्नोपशमः प्रार्थितः । अनेन तु मन्त्रेण विद्यातत्फलयोरुत्कर्षः प्रार्थ्यते । तमिमं मन्त्रमाह—

**सह नौ यशः । * सह नौ ब्रह्मवर्चसम्,** ॥ इति ।

विद्यानिमित्तं यद्यशस्तन्नावावयोः शिष्याचार्ययोः सहास्तु । सम्यगनेनोपासनमनुष्ठीयत इति शिष्यस्य यशः । सम्यगुपदिष्टमित्याचार्यस्य यशः । अनेन विद्यायामवैकल्यलक्षण उत्कर्षोऽभिहितो भवति । ब्राह्मणस्योचितं श्रुताध्ययनलक्षणं तेजो **ब्रह्मवर्चसम्** । एतच्च श्रूयमाणस्य फलस्य सर्वस्याप्युपलक्षणम् । “ संधीयते प्रजया पशुभिर्ब्रह्मवर्चसेनान्नाद्येन सुवर्ग्येण लोकेन ” इति हि श्रूयते । एतच्च ब्रह्मवर्चसादिफलमावयोः शिष्याचार्ययोः सहास्तु । यद्यप्युपासितुः शिष्यस्यैव तत्फलं तथाऽपि तदीयफलसंपत्तेराचार्यपरितोषहेतुत्वादाचार्यस्यापि फलत्वेनोपचर्यते । सोऽयं प्रार्थनारूपो मङ्गलाचरणार्थो मन्त्रः शिष्येण जप्य आचार्यस्य तु कृतार्थत्वान्नानेन कृत्यमस्ति ।

यदर्थमिदं मङ्गलाचरणं तामेतां विद्यां प्रतिजानीते—

**अथातः सꣳहिताया उपनिषदं व्याख्यास्यामः । पञ्चस्वधिकरणेषु । अधिलोकमधि+ज्यौतिषमधिविद्यमधिप्रजमध्यात्मम् । ता महासꣳहिता इत्याचक्षते,** इति ।

**अथशब्दः** पूर्वानुवाकविहितवर्णस्वराद्युच्चारणाभ्यासानन्तर्यमाचष्टे । अतःशब्दस्तदुच्चारणवासनया युक्तत्वं हेतू करोति । यस्मादुपासनायां प्रवर्तमानः पुरुषश्चिराभ्यस्तवेदपाठेन वासितः सन्वेदपाठसंबन्धरहितेषूपासनेषु चित्तं सहसा प्रवेशयितुं न शक्नोति तस्मात्तत्संबन्धिनीं **संहिताया उपनिषदं** विस्पष्टमा समन्तात्कथयिष्यामः । वर्णानां परस्परमत्यन्तसामीप्यं संहिता । “ परः संनिकर्षः संहिता ” इति **पाणिनिना** सूत्रितत्वात् । उप सामीप्ये निषण्णं प्रजापशुब्रह्मवर्चसादिफलमस्यामित्युपनिषदुपासना ताम

* अत्र सकाराकारस्य सानुदात्तः पाठोऽपि वैदिकेषु प्रसिद्धः । + अत्र सर्वत्र पुस्तकेऽधिज्योतिषमिति पाठः ।

१ ख. °केऽदृष्टो° ।

तत्र येयमुपासनीया संहिता सा पञ्चविधेष्वाश्रयेषु व्याख्यास्यते । आश्रयभेदेनोपासनाया भेदशङ्का मा भूदित्येतदर्थमेकैवोपासना पञ्चस्वाश्रयेषु प्रतिज्ञायते । लोकज्योतिर्विद्याप्रजात्मानः पञ्चाऽऽश्रयाः । पृथिव्यादीँल्लोकानधिकृत्य वर्तत इत्यधिलोकम् । एवमुत्तरत्रापि द्रष्टव्यम् । या एता लोकादिपञ्चविधाश्रयभेदभिन्नाः संहिताः सन्ति ताः सर्वा महासंहिता इत्येवमभिज्ञा उपासका आचक्षते । लोकादिविषयोत्कृष्टदृष्ट्योपासितत्वात्संहितानां महत्त्वम् ।

प्रतिज्ञातायामुपासनायामुपास्यं प्रथमावयवमाह—

अथाधिलोकम् । पृथिवी पूर्वरूपम् । द्यौरुत्तररूपम् । आकाशः संधिः ( १ )।
वायुः संधानम् । इत्यधिलोकम्, इति ।

लोकादिपञ्चकविषयोपासनाप्रतिज्ञानन्तरं लोकविषय उपास्यावयव उच्यते । संहितावयवयोः पूर्वोत्तरवर्णयोर्मध्ये यत्पूर्ववर्णस्य स्वरूपं तत्पृथिवीदेवतारूपमिति चिन्तयेत् । यदुत्तरवर्णस्य स्वरूपं तद्द्युलोकाभिमानिदेवतारूपम् । यश्च तयोर्वर्णयोः संधिर्मध्यदेशः सोऽयं द्युलोकपृथिवीलोकमध्यवर्त्याकाशाभिमानिदेवतारूपः । यदपि तयोर्वर्णयोर्मध्यदेशे वर्तमानं संधानं संहितायाः स्वरूपं तदेतद्वायुदेवतारूपम् । इत्येवं लोकविषयं संहिताध्यानमुक्तम् । तदेतदुदाह्रियते—इषे त्वेत्यत्र षकारस्योपरि योऽयमेकारः सोऽयं पृथिवीरूपो यश्चोपरितनस्तकारोऽसौ द्युलोकात्मकस्तयोर्वर्णयोर्मध्यदेश आकाशात्मकस्तस्मिन्देशे संहितानिमित्तो द्विर्भावेनाऽऽपादितो योऽन्यस्तकारः स वाय्वात्मक इति ध्यायेत् । एवमुत्तरेष्वप्युपास्यावयवेषु चतुर्षु योज्यम् ।

तत्र द्वितीयमवयवमाह—

अथाधिज्यौतिषम् । अग्निः पूर्वरूपम् । आदित्य उत्तररूपम् ।
आपः संधिः । वैद्युतः संधानम् । इत्यधिज्यौतिषम्, इति ।

तृतीयमवयवमाह—

अथाधिविद्यम् । आचार्यः पूर्वरूपम् ( २ )।
अन्तेवास्युत्तररूपम् । विद्या संधिः । प्रवचनꣳ संधानम् । इत्यधिविद्यम्, इति ।

आचार्येणोपदेष्टव्यः शिष्येण पठनीयो ग्रन्थो विद्या । ग्रन्थस्य पाठः प्रवचनम् ।

---

१ ग. व. 'भेदाश' । २ ग. 'ताया रू° ।

चतुर्थमवयवमाह—

अथाधिप्रजम् । माता पूर्वरूपम् । पितोत्तररूपम् । प्रजा संधिः । प्रजननꣳ संधानम् । इत्यधिप्रजम् ( ३ ), इति ।

प्रजा पुत्रपौत्रादिरूपा । प्रजननमुत्पत्तिः ।

पञ्चममवयवमाह—

अथाध्यात्मम् । अधरा हनुः पूर्वरूपम् । उत्तरा हनुरुत्तररूपम् । वाक्संधिः । जिह्वा संधानम् । इत्यध्यात्मम्, इति ।

देहेन्द्रियादिसाक्षिचैतन्यान्तःसंघातोऽत्राऽऽत्मशब्देन विवक्षितः । तस्याहंप्रत्ययगम्यत्वात् । तमात्मानमधिकृत्य वर्तत इत्यध्यात्मम् । वाक्शब्देन कण्ठताल्वादिस्थानगतमिन्द्रियमुच्यते ।

प्रतिपादितरूपान्संहितावयवानुपसंहरति—

इतीमा महासꣳहिताः, इति ।

फलसाधनत्वेनोपासनां विधत्ते—

य एवमेता महासꣳहिता व्याख्याता वेद । संधीयते प्रजया पशुभिः । ब्रह्मवर्चसेनान्नाद्येन + सुवर्ग्येण लोकेन ( ४ ), इति ॥

संधिराचार्यः पूर्वरूपमित्यधिप्रजं लोकेन ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके सप्तमप्रपाठके तृतीयोऽनुवाकः ॥ ३ ॥

यः पुमानेवमुपास्ते स पुमान्प्रजादिभिः संबध्यते[2] । यद्यपि विदिधातुः प्रमाणज्ञानमभिधत्ते न तु पुरुषतन्त्रमानसक्रियारूपमुपासनम्, तथाऽपि विज्ञानवाचिविदिधातुनाऽत्रोपासनक्रियोपलक्ष्यते । तयोर्मानसत्वसाम्यात् । न खल्वत्र मुख्या संभवति । अपुरुषतन्त्रस्य ज्ञानस्य विधातुमयोग्यत्वात्पृथिवी पूर्वरूपमित्यादिवाक्येनैव ज्ञानसिद्धौ तद्विधिवैयर्थ्याच्च । न चात्र वेदेत्येष लट्प्रत्ययो न विधायक इति वाच्यम् । विधायकस्य पञ्चमलकारस्याऽऽश्रयणात् । न च वाक्यजन्यमेव ज्ञानं लट्प्रत्ययेनानूद्यतामिति वाच्यम् । ज्ञानमात्रेण प्रजापश्वादिफलासंभवात् । तस्मादु

+ सुवर्गेणेत्यपि पाठो वैदिकेषु प्रसिद्धः ।

१ ख. ग. °समं वि° । २ ग. संपद्यते । ३ ग. घ. तन्त्रं मा° । ४ घ. °पि ज्ञा° । ५ °मात्रे प्र° ।

सनक्रियां विदिधासुनोपलक्ष्य पञ्चमलकारेण विधत्ते । एवं न सत्युपासनप्रकरणमनुगृह्यते । इति प्राचीनयोग्योपास्स्वेत्यभिधानात्सत्प्रकरणत्वमवगम्यते । अत्र स्वर्गाख्यस्य फलस्याऽऽमुष्मिकत्वमेव । पश्वादिफलस्य तु चित्रान्यायेनाऽऽमुष्मिकत्वं पाक्षिकम् । "चित्रया यजेत पशुकामः" इत्यत्रासति प्रतिबन्धे पशुप्राप्तिरैहिकी, अन्यथा त्वामुष्मिकीति चित्रान्यायः । ईदृक्फलसिद्ध्यर्थं पुरुषतन्त्रोपासनक्रियाऽत्र वेदेत्यनेन विधीयते ।

अत्र मीमांसा । चतुर्थाध्यायस्य प्रथमपादे * चिन्तितम्—

"नास्त्यासनस्य नियम उपास्तावुत विद्यते ।
न देहस्थितिसापेक्षं मनोऽतो नियमो नहि ॥
शयनोत्थानगमनैर्विक्षेपस्यानिवारणात् ।
धीसमाधानहेतुत्वात्परिशिष्यत आसनम्" ॥

आसीनेनैवोपासितव्यमिति नास्ति नियमः । मानसव्यापारं प्रति देहस्थितिविशेषस्यानुपयुक्तत्वादिति प्राप्ते ब्रूमः—परिशेषादासनं नियम्यते । तथाहि—न तावच्छयानेनोपासितुं शक्यमकस्मान्निद्रयाऽभिभूतिसंभवात् । नाप्युत्थितेन गच्छता वा देहधारणमार्गनिश्चयादिव्यापारेण चित्तस्य विक्षिप्तत्वादत आसीनेनैवोपासितव्यम्" ।

+ तत्रैवान्यच्चिन्तितम् —

"दिग्देशकालनियमो विद्यतेऽथ न विद्यते ।
विद्यते वैदिकत्वेन कर्मस्वेतस्य दर्शनात् ॥
ऐकाग्र्यस्याविशेषेण दिगादिर्न नियम्यते ।
मनोनुकूल इत्युक्तेर्दृष्टार्थं देशभाषणम्" ॥ इति ।

"ब्रह्मयज्ञेन यक्ष्यमाणः प्राच्यां दिशि" इति दिङ्नियमः । "प्राचीनप्रवणे वैश्वदेवेन यजेत" इति देशनियमः । "अपराह्णे पिण्डपितृयज्ञेन चरन्ति" । इति कालनियमः । तदेतन्नियमत्रयं यथा कर्मणि दृश्यते तथोपासनेऽपि द्रष्टव्यम् । वैदिकत्वस्याविशेषादिति प्राप्ते ब्रूमः—ऐकाग्र्यं हि ध्यानस्य प्रधानसाधनं न च तस्य दिगादिनियत्या कश्चिदतिशयो विद्यतेऽतो नास्ति नियमः । अत एव श्रुतिर्योगाभ्यासाय प्रदेशं निर्दिशन्ती मनोनुकूलत्वमेवाऽऽह । यस्मिन्देशे सौमनस्यं तत्रैव युञ्ज्यान्नतु शास्त्रेण नियमितः कश्चिद्देशोऽस्तीत्यर्थः । "समे शुचौ शर्करावह्निवालुकाविवर्जिते" इति योगा-

* आसीनः संभवात् । अध्यायः ( ४ ) पादः ( १ ) अधिकरणम् ( ६ ) सूत्रम् ( ७ ) + यत्रैकाग्रता तत्राविशेषात् । अ० ४ पा० १ अ० ७ । सू० ११ ।

१ क. ख ग. ङ. °स्याऽऽमुष्मिकत्वं पा° ।

भ्यासाय देशविशेषः श्रूयत इति चेत्सत्यम् । इष्टसौकर्यार्थं तदिति वाक्यशेषे मनोनुकूलत्वविशेषणान्निश्चीयते । तस्मान्नास्ति दिगादिनियमः ।

अत्रोपास्यवस्तुस्वरूपस्येयत्तां निश्चेतुमिदमपरं चिन्तनीयम् । ऐतरेयोपनिषद्यपि संहितोपासना काचिदेवमाम्नायते—"अथातः संहिताया उपनिषत् । पृथिवी पूर्वरूपम् । द्यौरुत्तररूपम्" इत्यादिः । अस्यामैतरेयशाखायां तैत्तिरीयशाखायां चाऽऽम्नाता येयमुपासना सा किमेका भिन्ना वेत्येको विचारः । उपासनैक्यपक्षेऽपि शाखाद्वये परस्परं गुणोपसंहारसद्भावासद्भावविषयो द्वितीयो विचारः । तत्र पञ्चाग्निविद्याप्राणविद्यान्यायेनोपासनैक्यं भवितुमर्हति ।

स च न्यायस्तृतीयाध्यायस्य तृतीयपादे + सम्यगभिहितः—

" सर्ववेदेष्वनेकत्वमुपास्तेरथ वैकता ।
अनेकत्वं कौथुमादिनामधर्मविभेदतः ॥
विधिरूपफलैकत्वादेकत्वं नाम न श्रुतम् ।
शिरोव्रताख्यधर्मस्तु स्वाध्याये स्यान्न वेदने ॥

छान्दोग्यबृहदारण्यकयोः पञ्चाग्न्युपासनमाम्नायते तदेकं न भवति नामभेदात् । कौथुममिति च्छान्दोग्यगतस्य नाम । वाजसनेयकमिति बृहदारण्यकगतस्य नाम । तथोपासनान्तरेषु योजयितव्यम् । धर्मभेदोऽप्युपासनाभेदगमकः शिरोव्रतलक्षणो मुण्डकशाखायां श्रूयते—" तेषामेवैतां ब्रह्मविद्यां वदेत शिरोव्रतं विधिवद्यैस्तु चीर्णम् " इति । शिरोव्रतं नाम वेदव्रतविशेष आथर्वणिकान्प्रति विहितो नेतरान्प्रति । तस्माच्छाखाभेदादुपासनाभेद इति प्राप्ते ब्रूमः —शाखाभेदेऽपि विध्यभेदादुपासनं न भिद्यते । तथाहि च्छान्दोग्ये—"यो ह वै ज्येष्ठं च श्रेष्ठं च वेद" इति । यादृशः प्राणविद्याविधिस्तादृश एव बृहदारण्यकेऽप्याम्नायते । तथा द्युपर्जन्यपृथिवीपुरुषयोषिदाख्यमग्निपञ्चकं वेद्यतया पञ्चाग्निविद्यायां यत्स्वरूपं तदुभयोरपि शाखयोः समानम् । फलं च " ज्येष्ठश्च ह वै श्रेष्ठश्च भवति " इत्येवंरूपं प्राणोपास्तिजन्यं शाखाद्वयेऽप्येकविधम् । यस्तु कौथुमादिनामभेद उदाहृतो नासौ श्रुत्याऽभिहितः । किं तर्ह्यध्येतार एव केवलं तत्तच्छाखाप्रवर्तकमुनिनाम्ना तं तं वेदं व्याहरन्ति । योऽपि शिरोव्रताख्यधर्मभेद उक्तः सोऽप्यध्ययनविषय एव नोपास्तिविषयः । नैतदचीर्णव्रतोऽधीत इत्यध्ययनधर्मत्वावगमात् । तस्मादैक्यहेतुसद्भावाद्भेदहेत्वभावाच्च न शाखाभेदादुपासनं भिद्यते " ।

अनेनैव न्यायेन संहितोपासनाया अप्यैक्यं द्रष्टव्यम्—य एवमेतां संहितां वेदेति ।

---

+ सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात् । अ० ३ पा० ३ अ० १ सू० १ ।

---

१ ग. °नानाध° । २ ख. °व्यस्य । ३ क. ङ. °कस्य ।

था पृथिवी पूर्वरूपमित्यादिकं वेद्यस्वरूपमप्युभयत्रैकविधम् । संधीयते प्रजया पशुभि-रित्यादिकं फलमप्येकरूपम् । तस्मादुपासनैक्यं युक्तम् ।

गुणोपसंहारन्यायश्च तत्रै×वाभिहितः—

" एकोपास्तावनाहार्या आहार्या वा गुणाः श्रुतौ ।
अनुक्तत्वादनाहार्या उपकारः श्रुतैर्गुणैः ॥
श्रुतत्वादन्यशाखायामाहार्या अग्निहोत्रवत् ।
विशिष्टविद्योपकार. स्वशाखोक्तगुणैः समः ॥

वाजसनेयके प्राणविद्यायामधिको गुणो रेतआख्यः श्रुतः—"रेतो होच्चक्राम " इति । नासौ छान्दोग्ये प्राणविद्यायामुपसंहर्तव्यः । अत्रानुक्तत्वात् । विद्योपकारस्तत्र श्रुतैरेव प्राणवागादिभिर्गुणैर्भविष्यतीति प्राप्ते ब्रूमः—एतच्छाखायामश्रवणेऽपि शाखान्तरे श्रुतत्वादुपसंहार्य एव । अग्निहोत्राद्यनुष्ठानेषु शाखान्तरोक्तगुणयुक्ततयैवानुष्ठानदर्श-नात् । न च स्वशाखोक्तगुणैरेव विद्योपकारसिद्धौ गुणोपसंहारो निरर्थक इति वाच्यम् । कर्मभूयस्त्वात्फलभूयस्त्वमिति न्यायात्स्वशाखोक्तगुणवत्परशाखोक्तगुणानामप्युपकारि-त्वात् । तस्माद्गुणोपसंहारः कर्तव्यः " ।

अनेनैव न्यायेनैतरेयकगतं वाक्पूर्वरूपं मन उत्तररूपमित्यादिगुणजातं तैत्तिरीये उपसंहर्तव्यम् । तैत्तिरीयगतं चाग्निः पूर्वरूपमित्यादिकमैतरेय उपसंहर्तव्यम् । तदेवं विद्यैक्ये गुणोपसंहारे च प्राप्ते सत्यत्रोद्गीथविद्यान्यायेनोभयं निराकरणीयम् । सोऽपि न्यायस्तत्रैवा+भिहितः—

" एका भिन्नाऽथवोद्गीथविद्या छन्दोगकाण्वयोः ।
एका स्यान्नामसामान्यात्संग्रामादिसमत्वतः ॥
उद्गीथावयवोंकार उद्गातेत्युभयोर्भिदा ।
वेद्यभेदेऽर्थवादादिसाम्यमत्राप्रयोजकम् ॥

उद्गीथविद्येति समाख्याया एकत्वाच्छान्दोग्यकाण्वशाखयोर्विद्यैकत्वमुचितम् । यद्यपि समाख्या न श्रौती तथाऽपि श्रौताः संग्रामादय उभयत्र समाः । तथाहि—छान्दोग्ये देवासुरभावं क्रमेण सात्त्विकेन्द्रियवृत्तीनां तामसेन्द्रियवृत्तीनां चाङ्गीकृत्य संग्रामं निरूप्य वागादिदेवानामासुरविद्धत्वमुक्त्वा प्राणदेवस्यैकस्यैव तदविद्धत्वमु-क्तम् । एतत्सर्वं काण्ववेदेऽपि समानम् । तस्मादुभयत्र विद्यैक्ये प्राप्ते ब्रूमः—भिन्ने-

× उपसंहारोऽर्थाभेदाद्विधिशेषवत्समाने च । अ० ३ पा० ३ अ० २ । सू० ९ ।
+ अन्यथात्वं शब्दादिति चेन्नाविशेषात् । अ० ३ पा० ३ अ० ३ । सू० ६ ।

१ ख. अनु° । २ ङ. तदेवं । ३ ग. घ. °णस्यै° । ४ ख. °स्मादिद्यै° ।

यमुद्गीथविद्या वेद्यस्वरूपस्य भिन्नत्वात् । छान्दोग्ये तावत्सामभक्तिविशेषस्योद्गीथस्या-वयवो य ओंकारः स एव प्राणदृष्ट्योपासनीयः । काण्वशाखायां तु कृत्स्नोद्गीथकर्तोद्गाता वागिन्द्रियप्रेरकः प्राणः स उद्गातृत्वेनोपास्य इति वेद्यभेदाद्विद्याभेदः । यत्तु संग्रामसाम्यमुक्तं तदप्रयोजकमार्थवादिकत्वात् । यद्यपि प्राणस्यासुरविद्धत्वेन श्रेष्ठत्व-मुक्तं तद्यद्यप्युपास्यं तथाऽप्युक्तस्य वेद्यभेदस्यानिराकरणाद्भिन्नैवोद्गीथविद्या ” ।

अनेनैव न्यायेन प्रकृतेऽपि वेद्यभेदाद्विद्याभेदो द्रष्टव्यः । तैत्तिरीयके पञ्चाधिकरणो-पासने पूर्वं व्याख्यातानि वेद्यानि । ऐतरेयके त्वधिदैवाध्यात्मभेदाभिन्नं वेद्यम् । तथा चाऽऽम्नायते—“ वायुश्चाऽऽकाशश्चेत्यधिदैवतम् । अथाध्यात्मं वाक्पूर्वरूपं मन उत्तर-रूपम् ” इत्यादि । यत्तु पृथिवी पूर्वरूपमित्यस्य वेद्यस्योभयत्र समानत्वमुक्तम् । नैता-वता विद्यैकत्वं संभवति । वैलक्षण्यस्य बहुलत्वाद्बहुनुग्रहस्य च न्याय्यत्वात् । सति च विद्याभेदे गुणोपसंहारो न युक्तः । यथा दर्शपूर्णमासगुणानां भिन्नाग्निहोत्राख्ये कर्मणि नोपसंहारस्तद्वदत्र विद्याभेदे गुणानामनुपसंहारे च स्थिते सत्यन्यदपि चिन्तयितुं विभ-ज्यते—द्विविधान्युपासनान्यहंग्रहयुक्तानि प्रतीकविषयाणि चेति । येषु परमात्मा सगुणः सन्नुपास्यते तान्यहंग्रहयुक्तानि । तद्यथा —“स य एषोऽन्तर्हृदय आकाशः । तस्मि-न्नयं पुरुषो मनोमयः । अमृतो हिरण्मयः ” इत्यत्र हृदयाकाशमध्यवर्ती परमात्माख्यः पुरुषो मनोमयत्वादिगुणयुक्त उपासितव्यः परमात्माऽहमिति । स चाहंग्रहश्चतुर्थाध्याये “ आत्मेति तूपगच्छन्ति ग्राहयन्ति च ” [ ब्र० सू० अ० ४ पा० १ सू० ३ ] इति सूत्रेऽभिहितः । परमात्मव्यतिरिक्तानि लौकिकानि वस्तून्युत्कृष्टदेवतादृष्ट्या ब्रह्मदृष्ट्या वा संस्कृत्य यत्रोपास्यन्ते तानि प्रतीकविषयाणि । तद्यथा—पृथिवी पूर्वरूपमित्यत्र भूदे-वतादृष्ट्या संस्कृतं पूर्ववर्णस्वरूपमुपास्यम् । मनो ब्रह्मेत्युपासीतेत्यादौ ब्रह्मदृष्ट्या संस्कृतं मनःप्रभृतिकमुपास्यम् । तच्च[3] प्रतीकमुपासकेन न स्वात्मतया ग्रहीतव्यम् । * प्रतीकस्य ब्रह्मकार्यत्वेनोत्कृष्टदृष्टिप्रत्यालम्बनत्वात्प्रतीकमित्युच्यते । तस्मिंश्च प्रतीकेऽहंग्रहो नास्तीति चतुर्थाध्यायस्य प्रथमपादे + चिन्तितम्—

“ प्रतीकेऽहंदृष्टिरस्ति न वा ब्रह्माविभेदतः ।
जीवप्रतीकयोर्ब्रह्मद्वाराऽहंदृष्टिरिष्यते ॥
प्रतीकत्वोपासकत्वहानिर्ब्रह्मैक्यवीक्षणे ।
अवीक्षणे तु भिन्नत्वान्नास्त्यहंदृष्टियोग्यता ” ॥ इति ।

* अस्मिन्वाक्ये यत इति शेषः । + न प्रतीके न हि सः । अ० ४ पा० १ अ० ३ सू० ४ ।

१ ङ. °यः । अन्तरेण तालुके ” इ° । २ ग. पूर्वं व° । ३ ग. घ. तच्चोत्कृष्ट° ।

" मनो ब्रह्मेत्युपासीत " " आदित्यो ब्रह्मेत्यादेशः " इत्यादौ ब्रह्मदृष्ट्या संस्कृतं मनआदित्यादिप्रतीकमुपास्यम् । तच्च प्रतीकमुपासकेन स्वात्मतया ग्रहीतव्यम् । प्रतीकस्य ब्रह्मकार्यत्वेन ब्रह्मणा सह भेदाभावाज्जीवस्य च ब्रह्माभिन्नत्वाद्ब्रह्मद्वारोपास्यस्य प्रतीकस्योपासकजीवस्य च भेदाभावेनैकत्वसंभवादिति प्राप्ते ब्रूमः—यदि ब्रह्मकार्यस्य प्रतीकस्य ब्रह्मैक्यमवलोक्येत तदा प्रतीकस्वरूपमेव विलीयेत घटस्य मृद्रूपेणैक्ये विलयदर्शनात् । यदि जीवस्य ब्रह्मैक्यमवलोक्येत तदा जीवत्वस्यापाये सत्युपासकत्वं हीयेत । अथोपास्योपासकस्वरूपलोभेन कार्यकारणैक्यं जीवब्रह्मैक्यं च न पर्यालोच्येत तदा गोमहिषवदत्यन्तभिन्नयोः प्रतीकोपासकयोर्नास्त्येकत्वयोग्यता । तस्मान्न प्रतीकस्याहंदृष्टिः ।

तत्राहंग्रहोपासनानां सर्वेषामपि ब्रह्मसाक्षात्कारफलत्वादेकेनोपासनेन ब्रह्मणि साक्षात्कृते सत्युपासनान्तरवैयर्थ्यादुपासनान्तरप्रवृत्तौ पूर्वसाक्षात्कारविक्षेपप्रसङ्गाच्च बहुषूपासनेषु ब्रह्मसाक्षात्कारार्थिनः प्राप्तेष्विदं वा तद्वा यत्किंचिदेकमेवानुष्ठेयमित्येतादृशो विकल्पो निर्णीतः । इह तु संहितोपासनमेकं वा द्वयं वा यथेच्छमनुष्ठेयम् । एतदपि तृतीयाध्यायस्य तृतीयपादे + निर्णीतम्—

> " प्रतीकेषु विकल्पः स्याद्याथाकाम्येन वा मितिः ।
> अहंग्रहेष्विवैतेषु साक्षात्कृत्यै विकल्पनम् ॥
> देवो भूत्वेतिवन्नात्र काचित्साक्षात्कृतौ मितिः ।
> याथाकाम्यमतोऽमीषां समुच्चयविकल्पयोः ॥

प्रतीकोपासनेषु पूर्वाधिकरणन्याय इति प्राप्ते ब्रूमः—अस्त्यत्र महद्वैषम्यम् । " देवो भूत्वा देवानप्येति " इति जीवन्नेव भावनाप्रकर्षवशाद्देवभावसाक्षात्कारं प्राप्य मृतो देवत्वमुपैतीति यथाऽहंग्रहेष्ववगम्यते न तथा प्रतीकेषु साक्षात्कारफलत्वे किंचिन्मानमस्ति । साक्षात्कारफलत्वाभावे[3] च तत्र तत्र प्रोक्ता भोग्यवस्तुप्राप्तयः फलत्वेनाभ्युपगन्तव्याः । तथा सति भिन्नफलत्वान्नान्यानर्थक्यं विक्षेपशङ्का तु दूरापेता । एकं प्रतीकं केषुचित्क्षणेषूपास्य क्षणान्तरेषु प्रतीकान्तरोपासने तु पूर्वोपास्तिजन्यस्यापूर्वस्याविनाशात् । तस्माद्विकल्पेनैकमेव वा बहूनि वा समुच्चित्य वा याथाकाम्येन प्रतीकमुपासितव्यम् " ।

" पृथिवी पूर्वरूपम् " इत्यत्र प्रथमनिर्दिष्टत्वेनोद्देश्यतया यद्यपि पृथिव्याः प्रतीकत्वं

---

+ काम्यास्तु यथाकामं समुच्चीयेरन्न वा पूर्वहेत्वभावात् । अ० ३ पा० ३ अ० ३९ सू० ६९ ।

---

१ ग. °र्यत्वेन ब्रह्मणा सहैक्यं प्रतीकस्य तदा प्रतीक° । घ. °र्यत्वेनैक्यं प्र° । २ घ. °स्य प्रती° । ३ ग. घ. °वे त° । ४ ख. °नाभि ।°

प्राप्तम् । तथा चरमनिर्दिष्टत्वेन विधेयतया पूर्ववर्णस्य दृष्टिपरत्वं प्राप्तम् । तथाऽपि पृथिव्या उत्कृष्टत्वात्तद्दृष्टिरेव पूर्ववर्णे कर्तव्या । यथोत्कृष्टविष्णुशिवादिदृष्टिर्निकृष्टे शालग्रामादौ क्रियते न तु विपर्ययस्तद्वत् । उत्कर्षन्यायश्चतुर्थाध्यायस्य प्रथमपादे + चिन्तितः—

" किमन्यधीर्ब्रह्मणि स्यादन्यस्मिन्ब्रह्मधीरुत ।
अन्यदृष्ट्योपासनीयं ब्रह्मात्र फलदत्वतः ॥
उत्कर्षेतिपरत्वाभ्यां ब्रह्मदृष्ट्याऽन्यचिन्तनम् ।
अन्योपास्त्या फलं दत्ते ब्रह्मातिथ्याद्युपास्तिवत् ॥

" मनो ब्रह्म " इत्यात्राब्रह्मरूपमनोदृष्टिं ब्रह्मणि कृत्वा ब्रह्मोपासनीयम् । ब्रह्मणः फलप्रदत्वेनोपास्यतार्हत्वादिति प्राप्ते ब्रूमः—ब्रह्मण उत्कृष्टत्वात्तद्दृष्टिर्निकृष्टे मनसि कर्तव्या । लोके हि निकृष्टे भृत्ये राजदृष्टिं कृत्वा राजवत्तं पूजयन्ति । न तु विपर्ययः । किंच " मनो ब्रह्मेत्युपासीत " इत्यत्र ब्रह्मशब्द इतिशब्दपरत्वेन दृष्टिलक्षको भविष्यति । मनःशब्दश्चानितिपरत्वान्मुख्यार्थवाची । यथा स्थाणुं चोर इति प्रत्येतीत्यत्र स्थाणुशब्दो मुख्यार्थवाची चोरशब्दो दृष्टिलक्षकस्तद्वत् । न चाब्रह्मस्वरूपस्य मनस उपास्यत्वे ब्रह्मणः फलप्रदत्वानुपपत्तिः । अब्रह्मरूपस्यातिथेरुपासने कर्माध्यक्षत्वेन यथा फलं प्रयच्छति तद्वदत्रापि संभवात् । तस्मादब्रह्मणि प्रतीके ब्रह्मधीः कर्तव्या " ।

यद्यप्यधिलोकमितिशब्देन पृथिव्या अधिकरणत्वाभिधानात्प्रतीकत्वं प्रतिभाति तथाऽपि पृथिवीदृष्टिरेवात्र पूर्ववर्णात्मके युक्ता । यथा लोकेषु पञ्चविधं सामोपासीतेत्यत्राधिकरणत्ववाचिन्या सप्तम्या निर्दिष्टानां लोकानां दृष्टिः कर्माङ्गे साम्नि प्रतीके संपादिता तद्वत् । एतदपि यदि " आदित्यादिमतयश्चाङ्ग उपपत्तेः " [ ब्र० सू० अ० ४ पा० १ सू० ६ ] इति साम्न उपास्तिक्रियाकर्मत्वेनाभिधानाद्दृष्टिलक्षकत्वं लोकशब्दस्य युक्तमित्यभिप्रेत्य लोकदृष्ट्या सामाख्यं प्रतीकमुपास्येत तर्ह्यत्रापि महासंहिता व्याख्याता वेदेतिसंहिताशब्देन विदिक्रियाकर्मणो निर्देशात्पृथिव्यादिदृष्ट्या संहितोपास्यताम् । पृथिव्याः प्रतीकत्वाभावेऽपि दृष्टिविषयत्वाभिप्रायेणाधिलोकमिति निर्देश उपपद्यते । तत्रेदमपरं चिन्तनीयम् । उपासनं नाम किं सकृत्प्रत्यय आहोस्वित्प्रत्ययावृत्तिरिति । तत्र यथा " अष्टवर्षं ब्राह्मणमुपनयीत " इत्यत्र सकृदनुष्ठानाद्विधिसिद्धिस्तद्वत्सकृत्प्रत्ययेनैव विधेश्चरितार्थत्वान्नाऽऽवृत्तिरिति चेन्न वेदाध्ययनवदा-

---

+ ब्रह्मदृष्टिरुत्कर्षात् । अ० ४ पा० १ अ० ४ सू० ५ ।

---

१ ग. घ. °यः । ब्र° । २ क ख. ग. ङ. °दृष्यादि° ।

वर्तनीयत्वात् । यथा " स्वाध्यायोऽध्येतव्यः " इत्यत्र वेदोच्चारणमावर्त्यते तथा प्रत्यय आवर्तनीयः । तत्रोच्चारणावृत्तिरेवाध्ययनशब्दार्थ इति चेत्तर्ह्यत्रापि प्रत्ययावृत्तिरेवोपासनाशब्दार्थोऽस्तु । अत एव **भगवद्भिर्भाष्यकारै**रावृत्त्यधिकरणेऽभिहितम्—" अपि चोपासनं निदिध्यासनं चेत्यन्तर्णीतावृत्तिगुणैव क्रियाऽभिधीयते । तथा हि । लोके गुरुमुपास्ते राजानमुपास्त इत्यत्र यस्तात्पर्येण गुर्वादीननुवर्तते स एवमुच्यते । तथा ध्यायति प्रोषितनाथा पतिमिति या निरन्तरस्मरणा पतिं प्रति सोत्कण्ठा सैवमभिधीयते " इति । यद्यपि पुरश्चरणादौ जप्यमन्त्रावृत्तिसंख्येव प्रत्ययावृत्तेरियत्ता न क्वचिच्छ्रुता तथाऽपि यस्मिन्प्रतीके यद्देवतादृष्टिर्विहिता तत्प्रतीकं तद्देवतारूपमिति निरूढोऽभिमानो यावत्संपद्यते तावदावर्तयेत् । अत एवं **वार्तिककारैरुक्तम्**—

" शास्त्रार्पितधियोपेत्य यत्तादात्म्याभिमानतः ।
चिरासनं भवेद्यत्र तदुपासनमुच्यते " ॥ इति ।

यथा प्रबुद्धा अमात्याः कंचिद्राजकुमारं बालं राज्येऽभिषिच्य यावता कालेनायं सर्वासां प्रजानां राजेत्यभिमानेन तदाज्ञावशवर्तित्वं संपद्यते तावदप्रमत्तास्तं प्रयत्नेन पालयन्ति तद्वत् । संपन्ने तु प्रतीकविषये देवत्वाभिमाने स पुनर्नापैति । यथा जीर्णदेवालये पूजारहितामपि प्रतिमां दृष्ट्वा देवत्वबुद्धिरनुवर्तते तद्वत् । तस्मात्प्रतीके देवत्वाभिमानदार्ढ्यपर्यन्तमुपासीनस्य यथोक्तं फलं सिध्यति ।

इति श्रीमत्सायणाचार्यविरचिते श्रीबुक्कणसाम्राज्यधुरंधरमाधवविद्यारण्यपरमेश्वरसंबन्धिवेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्ये सप्तमप्रपाठके सांहित्यामुपनिषदि तृतीयोऽनुवाकः ॥ ३ ॥

---

अथ सप्तमे चतुर्थोऽनुवाकः ।

---

तृतीयानुवाके प्रजादिफलसिद्धये[2] संहितोपासनमुक्तम् । तत्र ब्रह्मज्ञानसाधनं चित्तैकाग्र्यमप्यर्थात्संपद्यते । अथ मेधारहितस्य श्रुतग्रन्थार्थविस्मृतौ ब्रह्मज्ञानोदयासंभवाद्रोगादिना शरीरादिपाटवरहितस्याशनाच्छादनादिभिर्वा रहितस्य ब्रह्मज्ञानहेतुभूतश्रवणादिप्रवृत्त्यसंभवान्मेधादिसिद्ध्यर्था मन्त्राश्चतुर्थेऽनुवाकेऽभिधीयन्ते । तत्राऽऽदौ मेधाकामेन जप्यं मन्त्रमाह—

**यश्छन्द॑सामृष॒भो वि॒श्वरू॑पः । छन्दो॒भ्योऽध्य॒मृता॑त्संब॒भूव॑ । स**

---

१ घ. °व च चा° । २ क. ख. ङ. °थे सांहि° ।

मेन्द्रो मेधया स्पृणोतु । अमृतस्य देव धारणो भूयासम्, इति ।

यः प्रणवो गायत्र्यादिच्छन्दोयुक्तानां वेदानां मध्ये ऋषभः श्रेष्ठः । तच्च कठवल्लीषु—" सर्वे वेदा यत्पदमामनन्ति " इत्युपक्रम्य " तत्ते पदं संग्रहेण ब्रवीम्योमित्येतत् " इत्याम्नातम् । स च प्रणवो विश्वरूपः सर्वजगदात्मकः । अर्थप्रपञ्चस्य शब्दात्मकवाच्यन्तर्भावाद्वाचश्चाकारे प्रणवस्य प्रथमावयवेऽन्तर्भावात् । अर्थप्रपञ्चस्य वाच्यन्तर्भाव ऐतरेयके समाम्नातः—" तस्य वाक्तन्तिर्नामानि दामानि तदस्येदं वाचा तन्त्या नामभिर्दामभिः सर्वं सितं सर्वं हीदं नामानि " इति । यथा वणिजः प्रसारितया दीर्घरज्ज्वा संलग्नैर्बहुभिः पाशैर्बहून्बलीवर्दान्बध्नन्ति, तथा तस्य प्रणवोपाधिकस्य परमेश्वरस्य वागेव दीर्घरज्जुर्देवदत्तादिनामानि पाशास्तैः सर्वमर्थप्रपञ्चजातं बद्धम् । तस्मात्सर्वं नामनि वर्तते । सर्वो जनः स्वकीयं नाम श्रुत्वा पाशेन बद्ध्वा समाकृष्ट इवाऽऽगच्छतीति तस्य वाक्यस्यार्थः । अन्तर्भावितकृत्स्नार्थप्रपञ्चोपेताया वाचः प्रणवेऽन्तर्भावश्छन्दोगैराम्नायते—" तद्यथा शङ्कुना सर्वाणि पर्णानि संतृण्णान्येवमोंकारेण सर्वा वाक्संतृण्णा " इति लोके वटाश्वत्थादिपर्णानि शङ्कुशब्दाभिधेयेन स्वान्तर्गतशलाकाविशेषेण यथा व्याप्तानि तद्वदोंकारेण सर्वाऽपि वाग्व्याप्तेत्यर्थः । प्रणवे वाचोऽन्तर्भावोऽप्यकारद्वारेण द्रष्टव्यः । एतद[1]प्यैतरेयके समाम्नातम्—" अकारो वै सर्वा वाक्सैषा स्पर्शोष्मभिर्व्यज्यमाना बह्वी नानारूपा भवति " इति । कवर्गादिषु स्पर्शनामकेष्वक्षरेषु शषसहेषूष्मनामकेषु चाकारोऽनुगतो मातृकामन्त्रे पठ्यते । तस्मादकारस्य सर्ववाग्रूपत्वमित्यर्थः तदेवं प्रणवस्य विश्वरूपत्वं सिद्धम् । तादृशः प्रणवश्छन्दोभ्यो वेदेभ्योऽधिकत्वेन सारत्वेन संबभूव सम्यक्प्रजापतेः प्रादुरभूत् । तथा च च्छन्दोगा आमनन्ति—" प्रजापतिर्लोकानभ्यतपत्तेभ्योऽभितप्तेभ्यस्त्रयी विद्या संप्रास्रवत्तामभ्यतपत्तस्या अभितप्ताया एतान्यक्षराणि संप्रास्रवन्त भूर्भुवः स्वरिति तान्यभ्यतपत्तेभ्योऽभितप्तेभ्य ओंकारः संप्रास्रवत् इति । अभ्यतपत्सारजिघृक्षया पर्यालोचितवान् । संप्रास्रवत्सम्यक्सारत्वेन प्रत्यभादित्यर्थः अमृतादित्यनेन निमित्तमुच्यते । मरणरहितं मोक्षरूपं यदमृतं तदेवोंकारप्रादुर्भावे निमित्तम् । अत एव च्छान्दोग्ये च तस्योंकारप्रादुर्भाववाक्यस्योपक्रमे—" ब्रह्मसंस्थोऽमृतत्वमेति " इत्युपक्रान्तम् । प्रणवस्य ब्रह्मवाचकत्वेन प्रणवनिष्ठ एव ब्रह्मसंस्थः । स प्रणववाच्य इन्द्रः परमेश्वरो मेधया ग्रन्थतदर्थधारणशक्त्या मां विद्यार्थिनं स्पृणोतु प्रीणयतु । हे देव त्वत्प्रसादादहममृतस्य मोक्षोपलक्षितस्य मुक्तिहेतोर्ग्रन्थादेर्धारयिता भूयासम् ।

मेधाहे[3]तुमन्त्रमुक्त्वा रोगादिराहित्यहे[4]तुमन्त्रमाह—

शरीरं मे विचर्षणम् । जिह्वा मे मधुमत्तमा । कर्णाभ्यां

१ ख. तद्वैत° । २ क. ङ. °भ्योऽधि° । ३ घ. °हेतुं म° । ४ क. घ. ङ. °हेतुं म° ।

भूरि विश्रुवम् । ब्रह्मणः कोशोऽसि मेध-
याऽपिहितः । श्रुतं मे गोपाय, इति ।

मम विद्याधिकारिणः शरीरं विचर्षणं विचक्षणं रोगादिराहित्येन विद्याभ्यासयोग्यमस्तु । मदीया जिह्वाऽप्यतिशयेन माधुर्योपेता ग्रन्थाभ्यासपटीयसी भवतु । कर्णाभ्यां च विद्योत्पादकं बहुविधग्रन्थजातं श्रूयासं कदाचिदपि बाधिर्यदोषो मा भूत् । हे प्रणव त्वं ब्रह्मणो जगत्कारणस्य परवस्तुनो ध्यानाय कोश आलम्बनभूतोऽसि । यथा चर्ममयः कोशः खड्गरक्षणायाऽऽलम्बनभूतस्तद्वद्ब्रह्मध्यानरक्षणाय प्रणव आलम्बनभूतः । अत एव कठवल्लीष्वोंकारं प्रकृत्याऽऽम्नायते–“ एतदालम्बनं श्रेष्ठमेतदालम्बनं परम् ” इति । तादृशः प्रणवो मेधया धारणशक्त्याऽपिहितो व्याप्तः । तथाविधप्रणवप्रतिपाद्य हे परमेश्वर मदीयं श्रुतं कर्णाभ्यामवगतं वेदार्थरहस्यं विस्मृत्यादिदोषनिवारणेन पालय ।

आरोग्यादिसिद्धये जप्यो मन्त्रोऽभिहितः । अथान्नपानवस्त्रादिसिद्धये होमार्था मन्त्रा उच्यन्ते । तत्र प्रथमं मन्त्रमाह—

आवहन्ती वितन्वाना (१) । कुर्वाणा चीरमात्मनः ।
वासांसि मम गावश्च । अन्नपाने च सर्वदा । ततो मे
श्रियमावह । लोमशां पशुभिः सह स्वाहा, इति ।

हे प्रणवाभिधेय परमेश्वर या श्रीरुक्तविधा तां श्रियं मदर्थमावह सर्वतः संपादय । किंविधेति तदुच्यते । यानि वासांसि याश्च गावो ये चान्नपाने तत्सर्वं सर्वदा मम भोगार्थमावहन्ती सर्वतः संपादयन्ती तथा संपादितं सर्वं वितन्वाना विस्तारयन्ती वर्धयन्ती वर्धितं तत्सर्वमात्मनो विद्यार्थिनो मम चिरं दीर्घकालं कुर्वाणा यथा विनष्टं न भवति तथा स्थापयन्ती । यस्मादेवंविधा श्रीस्ततस्तामावह । पुनरपि कीदृशीम्—पशुभिः सह लोमशामजावयोऽश्वाश्चेत्येवमादयो ये पशवस्तैः सह वर्तमानत्वेन बहुविधरोमयुक्ताम् । तथाविधश्रीप्रदाय देवायेदमाज्यादिहोमद्रव्यं स्वाहा हुतमस्तु ।

अथ वस्त्रान्नपानादिसमृद्धया श्रिया युक्तस्य विद्यासंप्रदायप्रवृत्त्यर्थं शिष्यसंपादकहोमार्थान्पञ्च मन्त्रानाह—

आ मा यन्तु ब्रह्मचारिणः स्वाहा । वि माऽऽयन्तु
ब्रह्मचारिणः स्वाहा । प्र माऽऽयन्तु ब्रह्मचारिणः

---

१ क. ख. ङ स्वाहु ।

स्वाहा । दमायन्तु ब्रह्मचारिणः स्वाहा । शमा-
यन्तु ब्रह्मचारिणः स्वाहा ( २ ), इति ।

ब्रह्मचारिणो वैदिकविद्याभ्यासपराः शिष्या मां संप्रदायप्रवर्तकमाचार्यमायन्तु प्राप्नुवन्तु । विशब्दो विविधत्वमाचष्टे । पश्वादिकामाः स्वर्गलोककामा ब्रह्मलोककामा मोक्षकामाश्चेत्येवं ब्रह्मचारिणां विविधत्वम् । प्रशब्दः प्रकर्षमाचष्टे । विद्याग्रहणे प्रज्ञातिशयः प्रकर्षः । दमित्यनेनाव्ययेन दान्तिरभिधीयते । बाह्येन्द्रियचेष्टाभ्यो बाललीलाभ्य उपरतिरत्र दान्तिः । शमित्यनेन शान्तिरभिधीयते । क्रोधादिचित्तदोषराहित्यं शान्तिः । वि मायन्त्वित्यादयश्चत्वारो मन्त्राः शाखान्तरगतत्वाभिप्रायेण केषुचिद्देशेषु नाऽऽम्नायन्ते ।

संप्रदायप्रवृत्तिजनितकीर्तिप्रदौ मन्त्रावाह—

यशो जनेऽसानि स्वाहा । श्रेयान्वस्यसोऽसानि स्वाहा, इति ।

हे परमेश्वर त्वत्प्रसादादहं जने सर्वेषु जनेषु यशोऽसानि । आचार्योऽयमित्येवं यशस्वी भवानि । वसु धनं बहुलं यस्य सोऽयं वसुमानतिशयेन वसुमान्वसीयांस्तादृशादप्यहं श्रेयान्प्रशस्यतरो भवानि ।

यशस्वित्वश्रेयस्त्वहेतुप्रतिपादकांस्त्रीन्मन्त्रानाह—

तं त्वा भग प्रविशानि स्वाहा । स मा
भग प्रविश स्वाहा । तस्मिन्त्सहस्रशाखे ।
नि भगाहं त्वयि मृजे स्वाहा, इति ।

भगशब्द ऐश्वर्यादिषड्गुणवाचकः ।

" ऐश्वर्यस्य समग्रस्य धर्मस्य यशसः श्रियः ।
ज्ञानवैराग्ययोश्चैव षण्णां भग इतीङ्गना " ॥ इति स्मरणात् ।

तेन तद्वानुपलक्ष्यते । हे भगवन्परमेश्वर तं भगवन्तं त्वामहं प्रविशानि तादात्म्येन त्वयि प्रविष्ट इव सर्वदा त्वां भजानि । स तादृशस्त्वमपि मां प्रविश मयि प्रविष्ट इवाऽऽदरेण मामनुगृहाण । सहस्रमूर्तिभेदयुक्ते तस्मिंस्त्वयि मामहं निमृजे नितरां शोधयामि । त्वद्भजनमेव श्रेयोहेतुरित्यर्थः ।

दृष्टान्तपुरःसरं बहुशिष्यसंपादकं मन्त्रमाह—

यथाऽऽपः प्रवताऽऽयन्ति । यथा मासा अहर्जरम् । एवं मा

---

१ ख. प्रतिशाति° । २ ख. स्त्वम° । ३ ख. °श प्र° ।

ब्रह्मचारिणः । धातरायन्तु सर्वतः स्वाहा, इति ।

आपो लोके प्रवता प्रवणवता निम्नदेशगतेन मार्गेण यथा त्वरया समागच्छन्ति । [त]था च मासाश्चैत्रवैशाखादयः सर्वेऽप्यहर्जरं संवत्सरमायन्ति । अहानि षष्ट्युत्तर-[श]तत्रयसंख्याकानि जीर्णान्यन्तर्भवन्ति यस्मिन्संवत्सरे सोऽयमहर्जरः । न खलु कश्चि-[द]पि मासः संवत्सरमतिक्रामति । हे धातः सर्वस्य जगतो विधातः सर्वेऽपि ब्रह्मचा-[रि]णो मासन्यायेन मामनतिक्रामन्तो जलन्यायेन त्वरोपेताः सर्वस्मादपि देशान्मामा-[ग]च्छन्तु ।

होममन्त्रानभिधायोपस्थानमन्त्रमाह—

प्रतिवेशोऽसि प्र मा भाहि प्र मा पद्यस्व ( २ ), इति ।

वितन्वाना शर्मायन्तु ब्रह्मचारिणः स्वाहा

धातरायन्तु सर्वतः स्वाहैकं च ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके सप्तमप्रपाठके
चतुर्थोऽनुवाकः ॥ ४ ॥

श्रमापनयनस्थानं गृहं प्रतिवेश इत्युच्यते । हे धातस्त्वं मम प्रतिवेशोऽसि । अतो [म]ां प्रभाहि प्रकाशय ब्रह्मविद्याचार्यत्वेन प्रख्यातं कुरु । तदर्थं मां प्रपद्यस्व प्राप्नुह्य-[नु]गृहाणेत्यर्थः ।

इति श्रीमत्सायणाचार्यविरचिते श्रीबुक्कणसाम्राज्यधुरंधरमाधवविद्यारण्यपरमे-
श्वरसंबन्धिवेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्ये सप्तम-
प्रपाठके सांहित्यामुपनिषदि चतुर्थोऽनुवाकः ॥ ४ ॥

---

अथ सप्तमे पञ्चमोऽनुवाकः ।

चतुर्थे मेधादिसिद्ध्यर्था मन्त्रा उक्ताः । अथ पञ्चमषष्ठयोर्ब्रह्मोपासनमुच्यते । तत्रा-[ङ्]ग्यङ्गदेवतानामुपासनं पञ्चमे । षष्ठे त्वङ्गिनो ब्रह्मण इति विभागः । अङ्गदेवताध्यानस्य प्रतीकत्वेन व्याहृतित्रयं दर्शयति—

भूर्भुवः सुवरिति वा एतास्तिस्रो व्याहृतयः, इति ।

भूरित्येका । भुवरिति द्वितीया । सुवरिति तृतीया । एतास्त्रिसंख्याका व्याहृति-शब्दवाच्याः । व्याहरणमुच्चारणं तद्विषयत्वान्मन्त्राणां व्याहृतित्वम् । यद्वा विविधे कर्मण्याह्रियन्ते प्रयुज्यन्त इति व्याहृतयः । तत्प्रयोगप्रसिद्धिद्योतनार्थो वैशब्दः ।

अग्निहोत्रहविष उपसादने दर्शपूर्णमासचातुर्मास्यहविषामासादने च प्रयोग एवमाम्नायते- " अग्निहोत्रमेताभिर्व्याहृतिभिरुपसादयेत् " इति । " दर्शपूर्णमासौ चातुर्मास्यान्याल-भमान एताभिर्व्याहृतिभिर्हवींष्यासादयेत् " इति च ।

एवमाधानादावुदाहार्ये कर्मकाण्डप्रसिद्धं व्याहृतित्रयं दर्शयित्वा तथैव प्रतीकत्वेन व्याहृत्यन्तरं दर्शयति —

**तासामु ह स्मैतां चतुर्थीम् । माहाच-**

**मस्यः प्रवेदयते । मह इति इति, ।**

महान्सोमपानार्थश्चमसः पात्रविशेषो यस्य मुनेः स मुनिर्महाचमसः । बहुषु सोमया-गेषु वर्तमानत्वाच्चमसस्य महत्त्वम् । तस्यापत्यं माहाचमस्यनामक ऋषिः । स तासां भूरादीनां तिसृणां व्याहृतीनां चतुर्थीं चतुःसंख्यापूरणीमेतां मह इति व्याहृतिं प्रवेद-यते प्राधान्येनोपासनायोपदिशति । उ ह स्मेति निपातत्रयसमुदायः प्रसिद्ध्यर्थः । ऋषेर्नामग्रहणमुपासनायामनुस्मरणार्थम् ।

तस्मिन्व्याहृतिचतुष्टये दृष्टिविशेषं विधत्ते—

**तद्ब्रह्म । स आत्मा । अङ्गान्यन्या देवताः, इति ।**

यदेतन्मह इति चतुर्थव्याहृतिरूपमस्ति तदेतद्ब्रह्म वस्त्विति चिन्तयेत् । ब्रह्मत्वा-देव चतुर्थव्याहृतिरूपः सोऽयं शरीरमध्येऽवस्थित आत्मा । अन्यास्तु व्याहृतिदेवता हस्तपादादिसदृशान्यङ्गानीति चिन्तयेत् । यद्वा चतुर्थव्याहृतिः प्रशस्यते । महःशब्दस्य पूजावाचिधातुनिष्पन्नत्वात् । पूज्यब्रह्मवस्तुरूपेण स्तुतिर्युक्ता । यथा शरीरगतावयवापे-क्षया चेतन आत्मोत्कृष्टस्तथा व्याहृत्यन्तरापेक्षया मह इति चतुर्थव्याहृतिरुत्कृष्टा ।

उक्तासु व्याहृतिषु लोकदृष्टिं विधत्ते—

**भूरिति वा अयं लोकः । भुव इत्यन्तरिक्षम् ।**

**सुवरित्यसौ लोकः (१) । मह इत्यादित्यः ।**

**आदित्येन वाव सर्वे लोका महीयन्ते, इति ।**

यस्मादादित्येन प्रकाशिताः सन्तः सर्वे लोकाः पूज्या व्यवहारक्षमा भवन्ति तस्मा-न्मह इतिव्याहृतेरादित्यरूपत्वं युक्तम् ।

अथ तास्वेव व्याहृतिषु देवाविशेषदृष्टिं विधत्ते—

**भूरिति वा अग्निः । भुव इति वायुः । सुवरित्यादित्यः । मह**

---

१ क. ख. ग. ङ. 'हृतीभि' । २ क. ख. ग. ङ. 'हृतीभि' । ३ क. ख. ङ. 'वंश स'

इति चन्द्रमाः । चन्द्रमसा वाव सर्वाणि ज्योतीꣳषि महीयन्ते, इति ।

सन्ति हि चन्द्रमण्डले परितोऽवस्थितानि नक्षत्रज्योतींषि सर्वाण्यपि पूज्यानि भासन्ते ।
अथ तास्वेव वेददृष्टिं विधत्ते—

भूरिति वा ऋचः । भुव इति सामानि । सुवरिति यजूꣳषि ।

(२) । मह इति ब्रह्म । ब्रह्मणा वाव सर्वे वेदा महीयन्ते, इति ।

वेदत्रयगता मन्त्रविशेषा ऋगादयः । ब्रह्म त्वोंकारस्तेन हि सर्वे वेदाः पूज्यन्ते वेदोच्चारणस्य प्रणवपूर्वकत्वात् ।

अथ प्राणदृष्टिं विधत्ते—

भूरिति वै प्राणः । भुव इत्यपानः । सुवरिति व्यानः ।

मह इत्यन्नम् । अन्नेन वाव सर्वे प्राणा महीयन्ते, इति ।

अन्नेन हि भुक्तेन प्राणास्तृप्यन्ति ।

यथोक्तलोकादिदृष्टिभिरुक्ता व्याहृतीरुपसंहरति—

ता वा एताश्चतस्रश्चतुर्धा । चतस्रश्चतस्रो व्याहृतयः, इति ।

या भूरित्यादिव्याहृतयस्ता एताश्चतस्रो व्याहृतयो लोकदेववेदप्राणदृष्टिभिश्चतुर्धा भिद्यन्ते । तथा सति भूरित्येका व्याहृतिः पृथिव्यग्निर्ऋग्वेदः प्राण इत्येवं चतुर्विधा । तश्चतस्रो व्याहृतयो भवन्ति । एवं भुव इत्यादिष्वपि[1] प्रत्येकं चतुष्ट्वे सति षोडश पद्यन्ते । तासां सर्वासामपि संग्रहाय चतस्रश्चतस्र इति वीप्सा ।

तासां व्याहृतीनामुपासनं विधत्ते—

ता यो वेद । स वेद ब्रह्म । सर्वेऽस्मै देवा बलिमावहन्ति ( ३ ), इति ।

असौ लोको यजूꣳषि वेद द्वे च ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके सप्तमप्रपाठके
पञ्चमोऽनुवाकः ॥ ५ ॥

ताः पृथिव्यादिदृष्टिभिर्युक्ता व्याहृतीर्यो वेदोपास्ते तस्मा उपासकाय सर्वे देवा इन्द्रादयो बलिं पूजामावहन्ति संपादयन्ति । ननु यथोक्तव्याहृतिरूपप्रतीकोपासकस्य ब्रह्मलोकप्राप्तिर्नास्ति, "अप्रतीकालम्बनान्नयतीति बादरायणः" [ब्र० सू० अ० ४ पा० ३ सू० १५ ] इति सूत्रे प्रतीकरहितब्रह्मोपासकानामेव तत्प्राप्तिनिर्णयात् । ततो ब्रह्मप्राप्त्यभावेन सर्वदेवपूज्यत्वं न युक्तम् । नायं दोषः । यस्माद्यः पुमान्व्या-

---

[1] ख. °दिषु प्र° ।

हृतीर्वेद स पुमान्वक्ष्यमाणानुवाकोक्तं ब्रह्मोपास्ते । ब्रह्मोपासनमेवात्र प्रधानम् । व्याहृत्युपासनमङ्गम् । तस्माद्ब्रह्मप्राप्तौ सत्यां सर्वदेवपूज्यत्वं युक्तम् ॥

इति श्रीमत्सायणाचार्यविरचिते श्रीबुक्कणसाम्राज्यधुरंधरमाधवविद्यारण्यपरमेश्वरसंबन्धिवेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्ये सप्तमप्रपाठके सांहित्यामुपनिषदि पञ्चमोऽनुवाकः ॥ ५ ॥

---

अथ सप्तमे षष्ठोऽनुवाकः ।

---

पञ्चमेऽङ्गोपासनमुक्तं षष्ठे त्वङ्गिन उपासनमुच्यते । तत्राऽऽदावुपास्यस्वरूपं दर्शयति—

**स य एषोऽन्तर्हृदय आकाशः । तस्मिन्नयं पुरुषो मनोमयः । अमृतो हिरण्मयः, इति ।**

हृदयपुण्डरीकस्य मध्ये स्वाङ्गुष्ठपरिमित आकाशो वर्तते । **स एष** इत्येताभ्यां दूरसामीप्यवाचिभ्यां व्यवहितयोगशास्त्रप्रसिद्धः संनिहितश्रुत्यन्तरप्रसिद्धश्चोच्यते । ईदृशो **य आकाशस्तस्मिन्नाकाशे पुरुषः** संपूर्णः परमात्माऽस्ति । यद्यप्यसौ सर्वत्र वर्तते तथाऽपि तस्योपलब्ध्यर्थमुपासनार्थं च हृदयस्थानमुपदिश्यते । हृदयकमलमध्ये हि समाधिना निरुद्धमेकाग्रं मनः परमात्मानं साक्षात्कर्तुं प्रभवति । “दृश्यते त्वग्र्यया बुद्ध्या” इतिश्रुत्यन्तरात् । अपरोक्षवाचकेनायमित्यनेन शब्देन सेयं साक्षात्कारयोग्यताऽभिधीयते । तादृशः पुरुषो हृदयमध्य उपास्यमानः प्रसीदति । अत एव दहरशाण्डिल्यविद्यासु हृदयमाम्नातम् । तस्मिन्हृदय उपासितव्यः **पुरुषो मनोमयो** मनःप्रधानः । जिज्ञासवो हि तं पुरुषं मनसा साक्षात्कुर्वन्ति, उपासकाश्च मनसा ध्यायन्ति तदिदं मनोमयत्वम् । **अमृतत्वं** विनाशराहित्यम् । **हिरण्मयो** ज्योतिर्मयः स्वप्रकाश इत्यर्थः ।

इत्थमुपास्यस्वरूपमभिधायोपासकस्य मार्गविशेषं दर्शयति—

**अन्तरेण तालुके । य एष स्तन इवावलम्बते । सेन्द्रयोनिः । यत्रासौ केशान्तो विवर्तते । व्यपोह्य शीर्षकपाले, इति ।**

मुखबिलस्यान्तर्जिह्वामूलस्योपारि स्थितौ वामदक्षिणभागौ **तालुके** इत्युच्येते । तालुके **अन्तरेण** तालुकयोर्मध्ये वत्सतर्याः **स्तन इव** स्वल्पः कश्चिन्मांसखण्डो लम्बमा-

---

१ ख. °ध्ये स° ।

स्तिष्ठति तस्य मांसखण्डस्य योगशास्त्रप्रसिद्धिं द्योतयितुं यच्छब्दः । प्रत्यक्षतां द्योतयितुमेतच्छब्दः । लम्बिकाकरणप्रवीणस्य जिह्वाग्रस्पर्शनेन प्रत्यक्षः । परकीयमुखे तु चक्षुषैव प्रत्यक्षः । स च मांसखण्ड इन्द्रस्य परमेश्वरस्य योनिः स्थानम् । शाखाग्रचन्द्रदर्शनन्यायेन स मांसखण्डः स्वसमीपवर्तिनीं योगशास्त्रप्रसिद्धां सुषुम्नाख्यां नाडीमुपलक्षयति । तस्यां च नाड्यां प्रविष्टं चित्तमेकाग्रं भूत्वा परमात्मानं साक्षात्कर्तुं प्रभवति । एतदेवाभिप्रेत्य क्षुरिकोपनिषद्याम्नायते—

" एकोत्तरं नाडिशतं तासां मध्ये वरा स्मृता ।
सुषुम्ना तु परे लीना विरजा ब्रह्मरूपिणी ॥
इडा तिष्ठति वामेन पिङ्गला दक्षिणेन तु ।
तयोर्मध्ये परं स्थानं यस्तं(?) वेद स वेदवित् " ॥ इति ।

अतः सा नाडी परमेश्वरस्य स्थानम् । किंचामृतत्वप्राप्तेर्मार्गभूतत्वादपि तस्य स्थानम् । तन्मार्गत्वमपि च्छन्दोगैः कठैश्चाऽऽम्नायते—" शतं चैका च हृदयस्य नाड्यस्तासां मूर्धानमभिनिःसृतैका । तयोर्ध्वमायन्नमृतत्वमेति " इति । सेयमिन्द्रस्य योनिः सुषुम्ना नाडी शिरसो वामदक्षिणकपाले व्यपोह्य विनिर्भिद्य यत्र यस्मिन्मूर्धप्रदेशे केशानामन्तो मूलमस्ति तत्र विशेषेण वर्तते । यथाऽग्रस्योपरि केशानामभावादग्रमन्तशब्देनोच्यते, तथा मूलादधोऽपि तदभावान्मूलमप्यन्तशब्दवाच्यम् ।

इत्थमुपासकस्य फलप्राप्तये निर्गमनद्वारमभिधायेदानीं फलं दर्शयति—

भूरित्यग्नौ प्रतितिष्ठति । भुव इति वायौ ( १ ) ।
सुवरित्यादित्ये । मह इति ब्रह्मणि । आप्नोति
स्वाराज्यम् । आप्नोति मनसस्पतिम् । वाक्पतिश्चक्षुष्पतिः । श्रोत्रपतिर्विज्ञानपतिः । एतत्ततो
भवति । आकाशशरीरं ब्रह्म । सत्यात्म प्राणारामं मनआनन्दम् । शान्तिसमृद्धममृतम् , इति ।

व्याहृतित्रयध्यानेनाग्न्यादिषु प्रतितिष्ठति । अग्निवाय्वादित्यानां यदैश्वर्यं तत्प्राप्नोति । चतुर्थव्याहृतिध्यानेन ब्रह्मणि सत्यलोकवासिनि प्रतितिष्ठति । ब्रह्मणो यदैश्वर्यं तत्प्राप्नोति । तदेव स्वाराज्यादिवाक्यैः प्रपञ्च्यते—अग्न्यादीनामङ्गदेवतानां स्वयमेव राजा भवति । राजत्वादेव सर्वेऽस्मै देवा बलिमावहन्तीत्युक्तम् । न केवलं स्वाराज्यप्राप्तिः किंतु सर्वेषां प्राणिनां यन्मनस्तस्य पतित्वं प्राप्नोति सर्वप्राण्यात्मको भूत्वा-

१ ख, ग, 'न मां° । २ घ, परस्था° । ३ ग, °ति । सोऽय° । ४ क, °मद्दा° ।

सर्ववागाद्याधिपत्यं द्रष्टव्यम्(?)। एकमेवान्तःकरणं शक्तिभेदेन मनोविज्ञानशब्दाभ्यामभिधीयते। करणशक्त्या मन इत्युच्यते। कर्तृशक्त्या तु विज्ञानमिति। पूर्वमसावेव देहमात्रवर्तिमनोवागादीनामधिपतिरभूत्। इदानीं तु विद्यासामर्थ्येन सर्वात्मकविराडुपाधिमत्तां प्राप्य सर्वदेहवर्तिमनोवागाद्यधिपतिर्भवति। ततः समष्टिरूपविराट्प्राप्तेरनन्तरमुत्पन्नब्रह्मतत्त्वावबोधः सन्नविद्यायां विनष्टायामेतद्वक्ष्यमाणस्वरूपं भवति। आकाशेत्यादिना तदेतत्स्वरूपमभिधीयते—आकाशवन्मूर्तिरहितं शरीरं स्वरूपं यस्य ब्रह्मणस्तदाकाशशरीरम्। यद्वा सर्वजगत्कल्पनाधिष्ठानत्वेन सर्वात्मकत्वादाकाशोऽपि ब्रह्मणः स्वरूपम्। आकाशे हि सच्चिदानन्दरूपोऽधिष्ठानभागो नामरूपात्मक आरोप्यभागश्चेत्युभयं दृश्यते। तत्र नामरूपयोर्मिथ्यात्वेन ब्रह्मत्वाभावेऽप्यधिष्ठानस्य सत्यत्वेन ब्रह्मत्वं युक्तम्। एतदेवाभिप्रेत्य सत्यात्मेत्युच्यते। सत्यमबाध्यं सर्वजगत्कल्पनाधिष्ठानमात्मा स्वरूपं यस्य ब्रह्मणस्तत्सत्यात्म। तथा प्राणस्याऽऽरामः सर्वतः क्रीडारूप उत्पत्त्यादिव्यापारो यस्मिन्ब्रह्मणि तत्प्राणारामम्। प्राणोत्पत्तिश्च ब्रह्मणः सकाशादाम्नायते—"एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च" इति। प्रश्नोत्तराभ्यामपि स एवार्थ आम्नायते—"भगवन्कुत एष प्राणो जायते" इति प्रश्नः। "आत्मन एष प्राणो जायते" इत्युत्तरम्। प्राणोत्पत्तिप्रयोजनं चापरमात्मन उत्क्रान्त्यादिव्यपदेशसिद्धिः। एतदप्याम्नातम्—"कस्मिन्वा प्रतिष्ठिते प्रतिष्ठास्यामीति स प्राणमसृजत" इति। ईदृश्या प्राणक्रीडाया आधारत्वेन प्राणारामम्। तथा मनस आनन्दो यस्मिन्ब्रह्मणि तन्मनआनन्दम्। यदा विषयाभिमुख्यं परित्यज्य मनो ब्रह्माभिमुखं भवति तदा महत्सुखं मनसा प्राप्यते। एतच्च मैत्रेयोपनिषद्याम्नातम्—

"समाधिनिर्धूतमलस्य चेतसो निवेशितस्याऽऽत्मनि यत्सुखं भवेत्।
न शक्यते वर्णयितुं[1] गिरा तदा स्वयं तदन्तःकरणेन गृह्यते" ॥ इति।

अत्राप्याम्नायते—"रसꣳ ह्येवायं लब्ध्वाऽऽनन्दी भवति" इति। यथा मनसो विक्षेपराहित्यं शान्तिस्तया शान्त्या समृद्धं संपूर्णं ब्रह्म। न खलु ब्रह्मण्यवगते सति ह्य(स्वा?)नन्दैकरसे निमग्नस्य मनसः कदाचिदपि विक्षेपः संभवति। सेयं शान्तिः श्वेताश्वतरैराम्नायते—"ज्ञात्वा शिवं शान्तिमत्यन्तमेति" इति। भगवताऽप्युक्तम्—

"युञ्जन्नेवं सदाऽऽत्मानं योगी नियतमानसः।
शान्तिं निर्वाणपरमां मत्संस्थामधिगच्छति" ॥ इति।

तस्मान्मनोगतया शान्त्या समृद्धं ब्रह्म। यद्वा ब्रह्मगतैव शान्तिः। यथा माया जगदाकारेण विक्रियमाणा विक्षिप्यते तथा ब्रह्म कदाचिदपि न विक्रियते तस्य कूटस्थनित्यत्वात्। "अज आत्मा महान्ध्रुवः" इत्यादिश्रुतेः। तस्मात्स्वनिष्ठया शान्त्या

---

१ घ. °तुं तदा गिरा स्व°।

समृद्धं ब्रह्म । तथा तदेतद्ब्रह्मामृतं मरणरहितम् । मरणं नाम प्राणस्य देहान्निष्क्रमणम् । “ मृङ् प्राणत्यागे ” इति धातुस्मरणात् । तच्च मरणं प्राणधारिणो जीवस्य संभवति न तु प्राणरहितस्य परमात्मनः । तद्राहित्यं च “ अप्राणो ह्यमनाः शुभ्रः ” इति श्रुत्यन्तरादवगन्तव्यम् ।

इत्थमुपास्यस्वरूपं मार्गं फलं चाभिधायोपासनं विधत्ते—

इति॒ प्राची॑नयो॒ग्योपा॑स्स्व ( २ ), इति॑ ।

वा॒य॒। वमृ॒तमेकं॑ च ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके सप्तमप्रपाठके षष्ठोऽनुवाकः ॥ ६ ॥

प्राचीनानि पूर्वकाण्डोक्तानि नित्यनैमित्तिककर्माणि, तैः पापे प्रक्षीणे सत्युपासनायां योग्यो भवति । तादृशं शिष्यं प्रति माहाचमस्यनामको गुरुरुपदिशति । इतिशब्दः “ स य एषोऽन्तर्हृदय आकाशः ” इत्याद्युक्तप्रकारं परामृशति । तथैवाऽऽकाशशरीरं ब्रह्मेत्यादिगुणा अपि परामृश्यन्ते । यद्यप्येतत्ततो भवतीतिवाक्येन विराट्प्राप्तेरूर्ध्वं ब्रह्मभावलक्षणस्य फलस्य प्रतिज्ञातत्वान्मुक्तिस्वरूपप्रतिपादकमाकाशशरीरादिवाक्यम्, तथाऽपि “तं यथा यथोपासते तदेव भवति” इतिश्रुतावुपास्यफलयोरेकविधत्वश्रवणादाकाशशरीरत्वादिगुणानामुपास्यत्वमपि संभवतीति । तस्मादाचार्यैरुपास्यगुणत्वेन योजितम् ।

अथ मीमांसा—तत्रेदं चिन्तनीयम् । किं पञ्चमषष्ठयोरनुवाकयोरुपासना भिद्यत आहोस्विदेकेति । उपास्यवैलक्षण्यात्फलभेदाच्च भिद्यत इति तावत्प्राप्तम् । पञ्चमे लोकादिदृष्ट्या व्याहृतिरूपं प्रतीकमुपास्यम् । षष्ठे तु मनोमयत्वादिगुणकं ब्रह्मोपास्यमिति वैलक्षण्यम् । फलं च सर्वेऽस्मै देवा बलिमावहन्तीति पञ्चमे श्रुतम् । षष्ठे त्वाप्नोति स्वाराज्यमित्यन्यदेव फलं श्रूयते । तस्मादुपासनाभेद इति प्राप्ते ब्रूमः—एकाधिकारित्वश्रवणादेकमेवोभयत्रोपासनम् । पञ्चमेऽभिहितम् । ता यो वेद स वेद ब्रह्मेति व्याहृत्युपासकस्यैव ब्रह्मोपासनाधिकारः श्रूयते । यथा षष्ठे भूरित्यग्नौ प्रतितिष्ठतीत्यादिना व्याहृत्युपासनफलं च सहैवाऽऽम्नातम् । तस्मादेकमेवोभयत्रोपासनम् । उपास्यवैलक्षण्यं त्वङ्गाङ्गिभावभेदेनाप्युपपद्यते । सर्वेऽस्मै देवा बलिमावहन्तीत्येतदप्यङ्गफलं भविष्यति । “यस्य पर्णमयी जुहूर्भवति न स पापं श्लोकं शृणोति” इत्यादौ पर्णद्रव्यमन्तरेण क्रतुनिष्पत्त्यभावात्क्रत्वर्थत्वे सति फलाकाङ्क्षाया अभावात्फलस्यार्थवादत्वं युक्तम् । इह तु

१ ग. °य इ° । २ ङ. °द्युक्तं प्र° । ३ क. ग. °म पा° ।

व्याहृतिध्यानमन्तरेणापि ब्रह्मोपासनासिद्धेः फलायैव व्याहृतिध्यानमुच्यत इति नार्थवादत्वम्। तस्मादङ्गाङ्गिभावेनैकोपासनत्वं युक्तम्। न चानेनैव न्यायेन सप्तमानुवाकोक्तस्य पृथिव्यन्तरिक्षाद्यात्मकब्रह्मोपासनस्यापि पूर्वेण सहैकत्वं शङ्कनीयम्। शाण्डिल्यदहरादिन्यायेन पृथगुपासनत्वात्। स च न्यायस्तृतीयाध्यायस्य तृतीयपादे* चिन्तितः—

" न भिन्ना उत भिद्यन्ते शाण्डिल्यदहरादयः।
समस्तोपासनश्रैष्ठ्याद्ब्रह्मैक्यात्स्यादभिन्नता ॥
कृत्स्नोपास्तेरशक्यत्वाद्गुणैर्ब्रह्मपृथक्त्वतः।
दहरादीनि भिद्यन्ते पृथक्पृथगुपक्रमात् ॥

छान्दोग्ये दहरविद्या शाण्डिल्यविद्या मधुविद्येत्यादयः पठिताः। तथा शाखान्तरेष्वपि। तत्र पूर्वाधिकरणन्यायेन समस्तोपासनस्य श्रेष्ठत्वाद्वेद्यस्य ब्रह्मण एकत्वाच्च सर्वासामेकविद्यात्वमिति प्राप्ते ब्रूमः—अनन्तासु विद्यास्वेकीकरणेनानुष्ठानं तावदशक्यमिति विद्याभेदोऽप्यवगन्तव्यः। न च वेद्यस्य ब्रह्मण एकत्वं शङ्कनीयं गुणभेदेन व्यवस्थोपपत्तेः। न चैकैकस्या विद्याया इयत्ता निश्चेतुमशक्या प्रत्येकमुपक्रमोपसंहारयोस्तन्निश्चायकत्वात्। तस्माद्विद्यानां नानात्वम् "।

एवमुपासनयोर्भेदे सत्येकमेवानुष्ठेयं न तूभयम्। एतदपि तत्रैव + चिन्तितम्—

" अहंग्रहेष्वनियमो विकल्पनियमोऽथ वा।
नियामकस्याभावेन याथाकाम्यं प्रतीयताम् ॥
ईशसाक्षात्कृतेस्त्वेकविद्ययैव प्रसिद्धितः।
अन्यानर्थक्यविक्षेपौ विकल्पस्य नियामकौ ॥

द्विविधान्युपासनान्यहंग्रहाणि प्रतीकानि चेति। आत्मनः सगुणोपासनेष्वहंग्रहस्य चतुर्थाध्याये वक्ष्यमाणत्वात्तान्यहंग्रहाणि। अनात्मवस्तूनि देवतादृष्ट्या संस्कृत्योपास्यमानानि प्रतीकानि। तत्राहंग्रहेषु शाण्डिल्याद्युपासनेष्वेकं द्वे बहूनि वोपासनानि याथाकाम्येनानुष्ठेयानि विकल्पस्य नियामकाभावात्। न हि शाण्डिल्योपासनं दहरोपासनमन्यद्वैकमेवानुष्ठेयं नेतरदिति विकल्पनियमे किंचित्कारणमस्ति। तस्माद्याथाकाम्यमिति प्राप्ते ब्रूमः—अन्यानर्थक्यं तावदेकं नियामकम्। तथाहीश्वरसाक्षात्कार उपासनस्य प्रयोजनं तच्चेकेनैवोपासनेन सिध्यति चेदन्योपासनवैयर्थ्यम्। किंचोपासनेषु न प्रमाणजन्यः साक्षात्कारः। किं तर्हि निरन्तरभावनया ध्येयतादात्म्याभिमानः। स

* नाना शब्दादिभेदात्। अ० ३ पा० ३ अ० ३३ सू० ५८। + विकल्पोऽविशिष्टफलत्वात्। अ० ३ पा० ३ अ० ३४ सू० ५९।

१ क. ग. घ. ङ. °त्र स। २ क. ख. ङ. °गुणत्वोपा°। ३ ख. °सनस्य न। ४ ख. °जन्यसा°। ५ व. स एवाभि°।

ऽभिमान एकमुपासनमनुष्ठाय तत्परित्यज्यान्यत्र वर्तमानस्य पुरुषस्य चित्तविक्षेपे कथं नाम दृढो भवेत् । तस्मादानर्थक्यविक्षेपयोर्नियामकत्वाद्विकल्पो नियम्यते " ।

ब्रह्मतत्त्वविद्यायामिव ब्रह्मोपासनेऽप्यहंग्रहः कर्तव्यः । तत्त्वविद्यायामहंग्रहश्चतुर्थाध्यायस्य प्रथमपादे * चिन्तितः—

" ज्ञात्रा स्वान्यतया ब्रह्म ग्राह्यमात्मतयाऽथ वा ।
अन्यत्वेन विजानीयाद्दुःख्यदुःखिविरोधतः ॥
औपाधिको विरोधोऽत आत्मत्वेनैव गृह्यते ।
गृह्णन्त्येवं महावाक्यैः स्वशिष्यान्ग्राहयन्त्यपि ॥

यच्छास्त्रप्रतिपाद्यं ब्रह्म तज्जीवेन ज्ञात्रा स्वव्यतिरिक्ततया ग्रहीतव्यम् । दुःख्यदुःखिनोर्जीवब्रह्मणोरेकत्वविरोधादिति प्राप्ते ब्रूमः—"वस्तुतो ब्रह्मरूपस्यैव सतो जीवस्यान्तःकरणोपाधिकृतो दुःखित्वादिसंसारधर्मः । " इति वियत्पादे [ ब्र० सू० अ० २ पा० ३ ] जीवविचारे प्रपञ्चितम् । अतो वास्तवविरोधाभावादात्मत्वेनैव ब्रह्म गृह्यताम् । अत एव " अहं ब्रह्मास्मि " " अयमात्मा ब्रह्म " इत्यादिमहावाक्यैस्तत्त्वविद आत्मत्वेनैव ब्रह्म गृह्णन्ति । तथा तत्त्वमस्यादिभिर्महावाक्यैः स्वशिष्यान्ग्राहयन्त्यपि । तस्मादात्मत्वेनैव ब्रह्म ग्रहीतव्यम् " ।

एवं सति मनोमयोऽमृतो हिरण्मयः परमात्माऽहमित्युपासनीयम् । मनोमयस्य परमात्मत्वं शाण्डिल्यविद्योदाहरणेन प्रथमाध्यायस्य द्वितीयपादे + चिन्तितम्—

" मनोमयोऽयं शारीर ईशो वा प्राणमानसे ।
हृदयस्थित्यणीयस्त्वे जीवे स्युस्तेन जीवगीः ॥
शमवाक्यगतं ब्रह्म तद्धितादिरपेक्षते ।
प्राणादियोगश्चिन्तार्थश्चिन्त्यं ब्रह्म प्रसिद्धितः ॥

छान्दोग्यस्य तृतीयाध्याये शाण्डिल्यविद्यायामिदमाम्नायते—" मनोमयः प्राणशरीरो भारूपः " इति । तत्र जीव ईशो वेति संदेहे जीव इति प्राप्तम् । मनःसंबन्धादीनां जीवे सुसंवादत्वात् । मनसो विकारो मनोमय इति मनःसंबन्धः । प्राणः शरीरमस्येति प्राणसंबन्धः । न चेदं द्वयमीश्वरे सुसंवादम् । " अप्राणो ह्यमनाः शुभ्रः " इति निषेधात् । तथा " एष य आत्माऽन्तर्हृदयेऽणीयान् " इति श्रूयमाणं हृदयेऽवस्थानमणीयस्त्वं च निराधारस्य सर्वगतस्य न कथंचिदप्युपपद्यते । तस्माज्जीव

* आत्मेति तूपगच्छन्ति ग्राहयन्ति च । अ० ४ पा० १ अ० २ सू० ३ ।
+ सर्वत्र प्रसिद्धोपदेशात् । अ० १ पा० २ अ० १ सू० १ ।

१ ख. °क्षेपात्कथं । २ घ. °संपाद° । ३ घ संपाद° । ४ क. ख. ङ. °येऽन्तरथा° ।

इति प्राप्ते ब्रूमः—"सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत" इत्येतस्मिञ्शमविधिपरे पूर्ववाक्ये श्रूयमाणं यद्ब्रह्म तदेव मनोमयः प्राणशरीर इत्येताभ्यां तद्धितबहुव्रीहिभ्यां विशेष्यत्वेनापेक्ष्यते। शमवाक्यस्यायमर्थः। यस्मात्सर्वमिदं ब्रह्म तज्जत्वात्तल्लत्वात्तदनत्वात्तस्मात्सर्वात्मके ब्रह्मणि रागद्वेषविषयासंभवादुपास्तिकाले शान्तो भवेदिति। तथा तद्वाक्यगते ब्रह्मणि विशेष्यत्वेनान्विते मनोमयवाक्यमपि ब्रह्मपरं भविष्यति। न च ब्रह्मणो मनःप्राणसंबन्धानुपपत्तिः। निरुपाधिके तदनुपपत्तावपि सोपाधिकस्योपास्यस्य चिन्तनार्थतया तदुपपत्तेः। तस्मात्सर्वेष्वपि वेदान्तेषु यद्ब्रह्मोपास्यत्वे प्रसिद्धं तदेवात्राप्युपास्यम्। न हि क्वचिदपि वेदान्ते जीवस्योपास्यत्वं प्रसिद्धम्। तं ब्रह्मैवेति राद्धान्तः"।

तत्र यथा शमवाक्यगतं ब्रह्म मनोमयत्वविशेषणेन विशेष्यत एवमत्रापि परिपूर्णवाचिपुरुषशब्दोक्तः परमात्मा मनोमयशब्देन विशेष्यते। परिपूर्णवाचित्वं च श्रेयोमार्गे दर्शितम्—"पुरुषः पुरि शयनाद्वा पूर्णत्वाद्वाऽमुनाऽस्य वा पूर्तेः" इति। पुरिशयनपक्षे जीवपरत्वमपि भविष्यतीति चेन्न। "ता यो वेद स वेद ब्रह्म" इत्येवं ब्रह्मप्रक्रान्तत्वात्। "आकाशशरीरं ब्रह्म" इत्युपसंहाराच्च। हिरण्मयशब्दस्य तु ब्रह्मपरत्वम्। "य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते" इतिवाक्ये निर्णीतम्। च निर्णयः प्रथमाध्यायस्य प्रथमपादेऽ*भिहितः—

"हिरण्मयो देवतात्मा किं वाऽसौ परमेश्वरः।
मर्यादाधाररूपोक्तेर्देवतात्मैव नेश्वरः॥
सार्वात्म्यात्सर्वदुरितराहित्याच्चेश्वरो मतः।
मर्यादाद्या उपासार्थमीशेऽपि स्युरुपाधिगाः॥

छान्दोग्यस्य प्रथमाध्याय उद्गीथोपासनाया उपसर्जनान्युपास्यान्यभिधाय प्रधानमुपास्यं विधातुमिदमाम्नायते—"अथ य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते इति। तत्राऽऽदित्यमण्डले विद्याकर्मातिशयवशात्कश्चिज्जीवो देवरूपमुपेत्य जगदाकारं निष्पादयन्नवतिष्ठते। ईश्वरश्च सर्वगतत्वान्मण्डलेऽपि वर्तते। अतस्तयोः संशये तत्र देवतात्मेति तावत्प्राप्तम्। कुतः। मर्यादाधाररूपाणामुच्यमानत्वात्। "ये चामुष्मात्पराञ्चो लोकास्तेषां चेष्टे देवकामानां च" इत्यैश्वर्यमर्यादोक्तिः। अन्तरादित्य इत्याधारोक्तिः। हिरण्मय इति रूपोक्तिः। न हि सर्वेश्वरस्य सर्वाधारस्य नीरूपस्य परमेश्वरस्यैश्वर्यमर्यादाधाररूपाणि संभवन्ति। तस्माद्देवतात्मेति प्राप्त उच्यते—हिर

* अन्तस्तद्धर्मोपदेशात्। अ० १ पा० १ अ० ७। सू० २०।

१ घ. °न्यभ्यनु°। २ क. ख. ङ. °शब्द एकः प°। ३ क. °त्मा°।

ईश्वरो भवेत् । कुतः । सर्वात्मत्वश्रवणात् । " सैवर्क्तत्साम तदुक्थं तद्यजुस्तद्ब्रह्म " इतिवाक्ये तच्छब्दैः प्रकृतं हिरण्मयं पुरुषं परामृश्य तस्यर्क्सामाद्यशेषजगदात्मकत्वमुपदिश्यते । तच्चाद्वितीये परमेश्वरे मुख्यमुपपद्यते न तु सद्वितीयायां देवतायाम् । तथा " स एष सर्वेभ्यः पाप्मभ्य उदितः " इति श्रूयमाणं सर्वपापराहित्यं ब्रह्मणोऽसाधारणं लिङ्गम् । यद्यपि देवतायाः कर्मण्यनधिकारात्क्रियमाणकरिष्यमाणपुण्यपापयोरभावस्तथाऽप्यसुरादिजनितनिमित्तदुःखसद्भावाद्दुःखहेतुभूतजन्मान्तरसंचितदुरितमनुवर्तत एव । मर्यादाधाररूपाणि तूपाधिधर्मतया सोपाधिके परमात्मन्युपास्ये वर्तितुमर्हन्ति । तस्मादीश्वरो हिरण्मयः " ।

तत्र यथा सार्वात्म्यादिकं ब्रह्मलिङ्गमस्त्येवमत्राप्यमृतत्वसत्यात्मत्वादिकं लिङ्गमवगन्तव्यम् । अतो मनोमयत्वादिगुणकः परमात्माऽत्रोपास्यः । छन्दोगाः शाण्डिल्यविद्यायामेवमामनन्ति—"मनोमयः प्राणशरीरो भारूपः सत्यसंकल्पः " इति । वाजसनेयिनश्च बृहदारण्यके पठन्ति—" मनोमयोऽयं पुरुषो भाः सत्यस्तस्मिन्नन्तर्हृदये यथा व्रीहिर्वा यवो वा स एष सर्वस्येशानः सर्वस्याधिपतिः सर्वमिदं प्रशास्ति यदिदं किंच " इति । तथा शाखाभेदेऽपि पञ्चाग्निविद्यान्यायेन मनोमयत्वादिगुणकस्य वेद्यस्वरूपस्य प्रत्यभिज्ञानाद्विद्यैक्यं द्रष्टव्यम् । स च न्यायस्तृतीयानुवाके प्रदर्शितः । सति च विद्यैक्ये तिसृष्वपि शाखासु परस्परं विशेषगुणा उपसंहर्तव्याः । उपसंहारन्यायश्च तत्रैव प्रदर्शितः । उपसंहृतसर्वगुणोपेते ब्रह्मणि तादात्म्याभिमानरूपः साक्षात्कारो यावद्भवति तावत्प्रत्ययावृत्तिः कर्तव्या । उपास्स्वेत्युक्तस्योपासनशब्दस्य तद्वाचित्वात् । एतदपि तत्रैव प्रदर्शितम् । श्रुतिश्च—"देवो भूत्वा देवानप्येति " इत्येतस्मिन्नेव जन्मनि देवभावलक्षणं दर्शयति । उत्पन्नेऽपि साक्षात्कारे ब्रह्मोपासनमामरणमावर्तितव्यम् । तदेतच्चतुर्थाध्यायस्य प्रथमपादे + चिन्तितम्—

" उपास्तीनां यावदिच्छमावृत्तिः स्यादुताऽऽमृति ।
उपास्त्यर्थाभिनिष्पत्तेर्यावदिच्छं न तूपरि ॥
अन्त्यप्रत्ययतो जन्म भाव्यतस्तत्प्रसिद्धये ।
आमृत्यावर्तनं न्याय्यं सदा तद्भाववाक्यतः ॥

विजातीयप्रत्ययानन्तरितसजातीयप्रत्ययप्रवाह उपास्तिशब्दस्यार्थः । स च कियताऽपि कालेन संपद्यतेऽतो यावदिच्छमावृत्तिर्न त्वामरणमिति प्राप्ते ब्रूमः—भाविजन्मनः प्रयोजकोऽन्त्यप्रत्यय आमरणावृत्तिमन्तरेण न सुलभोऽत एव स्मृतिः—"सदा

---

+ आ प्रायणात्तत्रापि हि दृष्टम् । अ० ४ पा० १ अ० ८ सू० १२ ।

---

१ ङ. °त्वदर्शनात् । २ क. ग. ङ. °रणाङि° ।

तद्भावभावितः ” इत्याह । कथं तर्हि ज्योतिष्टोमादिकर्मणा स्वर्गं गच्छतोऽन्त्यप्रत्ययः, कर्मजन्यापूर्वादिति ब्रूमः । उपासनेऽप्यपूर्वमस्तीति चेद्बाढम् । नैतावता निरन्तरावृत्तिलक्षणो दृष्टोपायः परित्यज्यो भवति । अन्यथा सर्वस्य सुखदुःखादेरपूर्वजन्यत्वेन भोजनाद्यर्थो दृष्टः प्रयत्नः परित्यज्येत । ततो दृष्टोपायत्वादामरणमावर्तनं कर्तव्यम् ” ।

तथाविधावृत्तियुक्तस्योपासकस्योत्क्रान्तौ विशेषश्चतुर्थाध्यायस्य द्वितीयपादे * चिन्तितः—

“ अविशेषो विशेषो वा स्यादुत्क्रान्तेरुपासितुः ।
हृत्प्रद्योतनसाम्योक्तेरविशेषोऽन्यनिर्गमात् ॥
मूर्धन्ययैव नाड्याऽसौ व्रजेन्नाडीविचिन्तनात् ।
विद्यासामर्थ्यतश्चेति विशेषोऽस्त्यन्यनिर्गमात् ॥

उपासकस्य येयमुत्क्रान्तिः सेयमितरोत्क्रान्त्या मार्गोपक्रमपर्यन्तं समेत्युक्तम् । अथ मार्गोपक्रमेऽपि समैव भवितुमर्हति हृत्प्रद्योतनादेः समत्वश्रवणात् । तथा हि— “ तस्य हैतस्य हृदयस्याग्रं प्रद्योतते तेन प्रद्योतेनैष आत्मा निष्क्रामति चक्षुषो वा मूर्ध्नो वाऽन्येभ्यो वा शरीरदेशेभ्यः ” इति श्रूयते । अयमर्थः । वाङ्मनसि संपद्यत इति क्रमेण सजीवं लिङ्गशरीरं शक्त्यवशेषं परमात्मनि यदा लीयते तदा पूर्वजन्म समाप्तं भवति । अथ जन्मान्तराय तल्लिङ्गं पुनर्हृदये प्रादुर्भवति । तस्मिन्नवसरे हृदयाग्रेऽवस्थितस्य लिङ्गस्य गन्तव्यभाविजन्मालोचनात्मकोऽन्त्यप्रत्ययत्वेन लोके प्रसिद्धः कश्चित्प्रद्योतो भवति तेन युक्तः सन्नाडीभ्यो निर्गच्छतीति । एतच्च सर्वेषां समानम् । तस्मान्नोपासकस्येतरेभ्यो विशेष इति प्राप्ते ब्रूमः—मूर्धन्ययैव नाड्योपासको निर्गच्छतीतराभ्य एव नाडीभ्य इतरे । कुतः । उपासकेन मूर्धन्यनाड्याश्चिन्तितत्वात्सगुणब्रह्मविद्यासामर्थ्याच्च । श्रुत्यन्तरे चायमर्थः स्पष्टमवगम्यते —

“ शतं चैका च हृदयस्य नाड्यस्तासां मूर्धानमभिनिःसृतैका ।
तयोर्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्ति ” इति ॥

अन्या नाड्य उत्क्रमणाय युज्यन्ते न त्वमृतत्वप्राप्तय इत्यर्थः । तस्मादस्त्युपासकस्य विशेषः ” ।

अस्मान्मूर्धन्यनाडीनिष्क्रमणरूपाद्विशेषात्प्राचीनो योऽयमुत्क्रान्तिप्रकारस्तत्र शाखान्तरवाक्योदाहरणेन पश्च विचाराः प्रवृत्ताः । तद्वाक्यं च च्छन्दोगैराम्नायते—“ अस्य सोम्य पुरुषस्य प्रयतो वाङ्मनसि संपद्यते । मनः प्राणे । प्राण-

* तदोकोग्रज्वलनं तत्प्रकाशितद्वारो विद्यासामर्थ्यात्तच्छेषगत्यनुस्मृतियोगाच्च हार्दानुगृहीतः शताधिकया । अ० ४ पा० २ अ० ९ सू० १७ ।

१ ख. °साम्ये को विशेषाऽन्यस्य नि° । २ घ. अध्याय° ।

तेजसि। तेजः परस्यां देवतायाम्" इति। तत्र म्रियमाणस्य पुरुषस्य वागुपलक्षितानां दशेन्द्रियाणां मनसि स्वरूपप्रविलयो न भवति किंतु वृत्तिमात्रप्रविलय इत्येको विचारः। तस्य च मनसः प्राणे वृत्तिप्रविलय इति द्वितीयः। तस्य च प्राणस्य स्वात्मनि जीवे वृत्तिप्रविलय इममात्मानमन्तकाले सर्वे प्राणा अभिसमायन्तीति बृहदारण्यकवाक्यादिति तृतीयः। सेयं वृत्तिप्रविलयरूपोत्क्रान्तिर्नाडीनिष्क्रमणरूपमार्गोपक्रमपर्यन्ता धर्माधर्मप्रवृत्तस्योपासकस्य तत्त्वज्ञानिनश्च त्रयाणामेतेषां समानैव न तु विषमेति चतुर्थः। बाह्येन्द्रियमनःप्राणा यस्मिञ्जीवात्मनि वृत्त्या प्रविलीयन्ते स जीवात्मा यस्मिंस्तेजःप्रधाने भूतपञ्चके वृत्त्या प्रविलीयते तद्भूतपञ्चकं ब्रह्मतत्त्वानभिज्ञस्य पुरुषस्य परमात्मनि वृत्त्यैव प्रविलीयते न तु स्वरूपेणेति पञ्चमः। एवमेतैः पञ्चभिर्विचारैः सर्वसाधारणोत्क्रान्तिर्विचारिता। अत्र परमात्मनि योऽयं पञ्चभूतरूपलिङ्गशरीरप्रविलयस्तेन पूर्वजन्म समाप्तम्। अथोपासकस्य ब्रह्मलोकप्राप्तये मूर्धन्यनाडीनिष्क्रमणरूपो विशेषो विचारितः। स चात्रान्तरेण तालुके इत्यारभ्य व्यपोह्य शीर्षकपाले इत्यन्तेन समाम्नातः। तच्च ब्रह्मलोकप्राप्तिपर्यन्तस्य मार्गस्योपलक्षणं द्रष्टव्यम्। तस्मिंश्च मार्गे शाखान्तरवाक्योदाहरणेन विचाराः प्रवृत्ताः। तत्र च्छन्दोगाः—"अथ यत्रैतदस्माच्छरीरादुत्क्रामत्यथैतैरेव रश्मिभिरूर्ध्व आक्रमते" इति वाक्येन मूर्धन्यनाड्या निष्क्रान्तस्याऽऽदित्यरश्मिसंबन्धमामनन्ति। तत्राहर्मृतस्य तत्संभवेऽपि रात्रौ मृतस्योपासकस्य न संभवतीति पूर्वपक्षीकृत्य रात्रावादित्यरश्मीनामभिव्यक्त्यभावेऽपि नाडीरश्मिसंबन्धस्य यावद्देहभावित्वादस्ति रश्मिप्राप्तिरिति प्रथमो विचारः। एतस्मिन्नादित्यरश्म्यादिक उत्तरमार्ग उत्तरायणश्रवणाद्दक्षिणायने मृतस्योपासकस्य विद्याफलं नास्तीति पूर्वपक्षीकृत्योत्तरायणशब्देन तदभिमानिदेवताया विवक्षितत्वात्फलमस्तीत्युक्तम्। सोऽयं द्वितीयः। छन्दोगबृहदारण्यकयोः "तेऽर्चिषमभिसंभवन्ति" इत्यादिना पञ्चाग्निविद्यायामर्चिरादिको मार्ग आम्नातः। विद्यान्तरे तु वाजसनेयिभिः "स वायुमागच्छति" इत्यादिना वाय्वादिकः पठितः। पर्यङ्कविद्यायां कौषीतकिभिः—"स एतं देवयानं पन्थानमापद्याग्निलोकमागच्छति" इत्यग्निलोकादिकः पठितः। तस्मादुत्तरमार्गो नानाविध इति पूर्वपक्षीकृत्य वाय्वग्निलोकादीनामेकस्मिन्नेव मार्गे पर्वविशेषत्वेनान्वयसंभवादेक एवार्चिरादिको मार्ग इत्युक्तः (म्?)। सोऽयं तृतीयः। कौषीतकिप्रोक्तस्य वायुलोकस्य मार्गमध्ये संनिवेशासंभवमाशङ्क्य बृहदारण्यके वायुप्रक्तेन मार्गेणाऽऽदित्यादिप्राप्तिश्रवणादादित्यादर्वाग्वायोः संनिवेश उक्तः। सोऽयं चतुर्थः। तथा कौषीतकिप्रोक्तानां वरुणेन्द्रप्रजापतिलोकानां मार्गमध्ये संनिवेशासंभवमाशङ्क्य विद्युद्वरुणयोर्वृष्टिद्वारा संबन्धसंभवाद्विद्युल्लोकादूर्ध्वं वरु-

१ ख. °प्रल°। २ क ख ङ. °स्य स्वात्म°। ३ क. ग. घ. ङ. °प्रल°।

णलोकस्याऽऽगन्तूनामन्ते[1] संनिवेश इति न्यायेनेन्द्रप्रजापतिलोकयोर्वरुणलोकादूर्ध्वं संनिवेश इत्युक्तम् । सोऽयं पञ्चमः । तस्मिन्मार्गे श्रुतानामर्चिरादीनां मार्गचिह्नत्वं भोगभूमित्वं च निराकृत्याऽऽतिवाहिकदेवत्वमुक्तम् । सोऽयं षष्ठः । एतैः षड्भिर्विचारैर्निर्णीतो यो मार्ग स्तस्य मार्गस्य ब्रह्मतत्त्वावबोधब्रह्मोपासनयोः साधारणत्वमाशङ्क्योपासनविषय एवायं मार्ग इति निर्णीतम् । उपासनेष्वपि यत्र मार्गश्रवणं तत्रैवेत्याशङ्क्य सर्वोपासनसाधारणत्वं मार्गस्य निर्णीतम् । तेन मार्गेणोपासकस्य ब्रह्मप्राप्तिर्भवति । "तत्पुरुषोऽमानवः स एना न्ब्रह्म गमयति" इत्यमानवेन विद्युल्लोकवर्तिना पुरुषेण ब्रह्मप्रापणस्योक्तत्वात् । तत्र परब्रह्मैव प्राप्यमित्याशङ्क्य परब्रह्मणि गत्यसंभवाल्लोकविशेषरूपं कार्यमेव ब्रह्मोपासकेः प्राप्यमिति निर्णीतम् । एवं कार्यब्रह्मलोकप्राप्तिः प्रतीकोपासकानामप्यस्तीत्याशङ्क्य ब्रह्मोपासकानामेव नेतरेषामिति निर्णीतम् । योऽयमर्चिरादिमार्गेण प्राप्यो ब्रह्मलोकः स एव "भूरित्यग्नौ प्रतितिष्ठति" इत्यारभ्य "विज्ञानपतिः" इत्यन्तया श्रुत्या प्रपञ्च्यते तत्र ब्रह्मलोकप्राप्तौ सत्यां व्यष्ट्यभिमानः समष्ट्यभिमानश्चेत्युभयं संपद्यते । तयोर्मध्ये व्यष्ट्यभिमानेनाग्निवाय्वादित्यादिदेवतानां तादात्म्यं प्राप्य तदीयेष्वैश्वर्येषु प्रतितिष्ठति समष्ट्यभिमानेन तु भूलोकाद्यधिष्ठातृब्रह्मरूपो[4] भूत्वा स्वाराज्यमाप्नोति । तथाविधब्रह्मरूपत्वसिद्ध्यर्थमेव ब्रह्मलोकगामिनं योगिनं प्रति कौषीतकिनः पर्यङ्कविद्यायामेवमामनन्ति—" तं पञ्च शतान्यप्सरसां प्रतिधावन्ति शतं चामरहस्ताः शतं मालाहस्ताः शतं[5] माञ्जनहस्ताः शतं वासोहस्ताः शतं[6] फलहस्तास्तं[7] ब्रह्मालंकारेणालं कुर्वन्ति । स ब्रह्मालंकारेणालंकृतो ब्रह्म विद्वान्ब्रह्मैवाभिप्रैति " इति । तदिदं ब्रह्मप्राप्तिलक्षणं स्वाराज्यमेविविच्य चतुर्भिर्विचारैर्निर्णीतम् । ब्रह्मलोकवासिनो योगिनो भोग्यवस्तुसंपादने मनुष्यलोकवासिवद्बाह्यसाधनमपेक्षितमित्याशङ्क्य संकल्पमात्रस्य तत्सा[ध]नत्वं निर्णीतम् । सोऽयं प्रथमो विचारः । तस्य संकल्पमात्रेण भोग्यजातं सृष्टवतो योगिनो भोगाधिष्ठानस्य देहस्य भावाभावौ श्रुतिद्वयप्रोक्तौ पुरुषभेदेन व्यवस्थितावित्याशङ्क्यैकस्यैव पुरुषस्ये च्छिकौ देहभावाभावाविति निर्णीतम् । सोऽयं द्वितीयः । यदाऽयं योगी स्वेच्छया युगपदेव बहून्देहान्सृजति तदानीं तेष्वेक एव देहो जीवात्मोपेत इतरे तद्रहिता इत्याशङ्क्यैकस्य चित्तानुवर्तिभिः पृथगेव जीवात्मभिरुपेतास्ते सर्वे देहा इति निर्णीतम् । सोऽयं तृतीयः । तस्य योगिनो भोग्यवस्तुदेहजीवात्मनां सृष्टिः संकल्पमात्रेण यथा भवति तथैवाऽऽकाशादिपञ्चमहाभूतानां भौतिकस्य ब्रह्माण्डादेर्जगत सृष्टिरस्तीत्याशङ्क्यानादेर्नित्यसिद्धस्य परमेश्वरस्यैव जगत्स्रष्टृत्वं न तु योगिन इति निर्णीतम् । सोऽयं चतुर्थः । तैरेतैश्चतुर्भिर्विचारैर्निर्णीतं स्वाराज्यं प्राप्तवतो योगि

१ ख. ङ. °गन्तुकाना° । २ क. ख. घ. ङ. °न्ते नि° । ३ ख. ग. एतान्त्र° । ४ °विधाधिष्ठातृब्र° । ५ क. ग. च चूर्णहस्ताः । ६ ख. °तमञ्ज° । ७ ग. °तं स्वर्णह° । ८ °नुवर्तिभिः ।

स्तस्मिन्नेतद्ब्रह्मलोके निर्गुणब्रह्मतत्त्वसाक्षात्कारे सति ब्रह्मलोकस्यावसाने विदेहकैवल्यं भवतीति। अयमर्थ **एतत्ततो भवतीत्यादिना समाम्नातः**। एतदेवाभिप्रेत्य **भगवता व्यासे**नापि सूत्रितम्—"कार्यात्यये तदध्यक्षेण सहातः परमभिधानात्" [ ब्र० सू० अ० ४ पा० ३ सू० १० ] इति । कार्यस्य ब्रह्मलोकस्यात्यये प्रलये सत्यत ऊर्ध्वं तल्लोकाध्यक्षेण चतुर्मुखेण ब्रह्मणा सह परं ब्रह्म प्राप्नोतीति **श्रुतिस्मृत्योस्तथाऽभिधानात्** ।

"वेदान्तविज्ञानसुनिश्चितार्थाः संन्यासयोगाद्यतयः शुद्धसत्त्वाः ।
ते ब्रह्मलोके तु परान्तकाले परामृतात्परिमुच्यन्ति सर्वे" ॥ इति **श्रुतिः** ।
"ब्रह्मणा सह ते सर्वे संप्राप्ते प्रतिसंचरे ।
परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम्" ॥ इति **स्मृतिः** ।

तदेवं ब्रह्मोपासकस्य ब्रह्मलोकप्राप्तिपूर्विका क्रममुक्तिर्भवतीति स्थितम् ॥

इति श्रीमत्सायणाचार्यविरचिते श्रीबुक्कणसाम्राज्यधुरंधरमाधवविद्यारण्यपरमेश्वरसंबन्धिवेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्ये सप्तमप्रपाठके सांहित्यामुपनिषदि षष्ठोऽनुवाकः ॥ ६ ॥

---

अथ सप्तमे सप्तमोऽनुवाकः ।

---

षष्ठेऽनुवाके[1] मनोमयत्वादिगुणविशिष्टस्य ब्रह्मण उपासनमुक्तम् । तस्य ब्रह्मणश्चक्षुर्गम्यगुणविशेषाभावेनोत्तमाधिकारिविषयत्वान्मन्दाधिकारिणं प्रति चक्षुर्गम्यगुणोपेतब्रह्मोपासनं सप्तमेऽनुवाकेऽभिधीयते । तत्र प्रथममाधिभौतिकं गुणपञ्चकत्रयं दर्शयति—

**पृथिव्यन्तरिक्षं द्यौर्दिशो**[2]**ऽवान्तरदिशाः । अग्निर्वायुरादित्यश्चन्द्रमा नक्षत्राणि । आप ओषधयो वनस्पतय आकाश आत्मा । इत्यधिभूतम्**, इति ।

पृथिव्यादिकं लोकपञ्चकम् । अग्न्यादिकं देवतापञ्चकम् । आप इत्यादिकं[3] द्रव्यपञ्चकम् । तत्राऽऽत्मशब्देन समष्टिरूपो विराट्पुरुष उच्यते । इत्येवमुक्तं पञ्चकत्रयमधिभूतम् । प्रत्यग्राह्येभ्यो वक्ष्यमाणेभ्यः प्राणादिभ्यो व्यतिरिक्तानीदंप्रत्ययग्राह्याणि पृथिव्यादीनि भूतान्याश्रित्य वर्तत इत्यधिभूतम् । भूतविषयमुपासनमुक्तमित्यर्थः ।

---

१ ग. °ष्ठेनानुवाकेन म° । २ ग. 'दिशः । अ° । ३ क. ग. घ. ङ. 'दि द्र° ।

वक्ष्यमाणेनासंकीर्णत्वायोक्तं विभज्य प्रतिज्ञापुरःसरमन्यत्पञ्चकत्रयं दर्शयति—

**अथाध्यात्मम् । प्राणो व्यानोऽपान उदानः समानः । चक्षुः श्रोत्रं मनो वाक्त्वक् । चर्म माꣳसꣳ स्नावास्थि मज्जा, इति ।**

**अथ** भूतविषयपञ्चकत्रयकथनानन्तरमध्यात्ममात्मविषयपञ्चकत्रयमभिधीयत इति शेषः । यस्मिन्देहेन्द्रियादिसंघाते शास्त्रसंस्काररहितस्य जनस्याहमिति बुद्धिः सोऽ लोकप्रसिद्ध आत्मा तमधिकृत्य यदुपासनं वर्तते तदध्यात्मम् । देहमध्यवर्तिन एकस्यै वायोः प्राणादयः पञ्च वृत्तिभेदाः । अत एव प्राणविचारे **भगवता व्यासेन** सूत्रितम्- " पञ्चवृत्तिर्मनोवद्व्यपदिश्यते " [ ब्र० सू० अ० २ पा० ४ सू० १२ ] इति । ताम च वृत्तीनां स्थानभेदः पूर्वैरुदाहृतः—

" हृदि प्राणो गुदेऽपानः समानो नाभिसंस्थितः ।
उदानः कण्ठदेशे स्याद्व्यानः सर्वशरीरगः " ॥ इति ।

तदेतद्वायुपञ्चकम् । चक्षुरादिकमिन्द्रियपञ्चकम् । चर्मादि धातुपञ्चकम् । स्नावश ब्देन वसाऽभिधीयते । यदेतदधिभूतपञ्चकत्रयं यच्चाध्यात्मपञ्चकत्रयं तेनोभयेन ब्रह्म उपाधिभूतं कृत्स्नं जगदभिधीयते । तदेतज्जगदुपाधिविशिष्टं ब्रह्मस्वरूपमुपासितव्यम् ।

अथार्थवादेनोपास्तौ विधिमुन्नयति—

**एतदधिविधाय ऋषिरवोचत् । पाङ्क्तं वा इदꣳ सर्वम् । पाङ्क्तेनैव पाङ्क्तꣳ स्पृणोतीति ( १ ), इति ।**

**सर्वमेकं च ॥**

**इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके सप्तमप्रपाठके सप्तमोऽनुवाकः ॥ ७ ॥**

ऋषिरतीन्द्रियस्य शास्त्रार्थस्य द्रष्टा कश्चिन्मुनिरेतत्पृथिव्यन्तरिक्षादिकमुपास्यस रूपमधिविधायाधिकं साक्षात्कारपर्यन्तं यथा भवति तथोपास्य स्वानुभवेन सर्वात्म विराड्रूपं प्राप्य स्वानुभवसिद्धमर्थं शिष्येभ्यः प्रोक्तवान् । किमुक्तवानिति तदभिधीयते- इदं प्रतीयमानं सर्वं जगद्विराड्रूपं पाङ्क्तं पङ्क्तिच्छन्दसः संबन्धि । वैशब्देन तत्प्रा द्भिरुच्यते । प्रसिद्धमेतत्सर्वस्य पाङ्क्तत्वम् । तथा हि—" पञ्चाक्षरा पङ्क्तिः " इ श्रुत्या पङ्क्तिश्छन्दः पञ्चसंख्योपेतम् । तथा जगदपि पञ्चसंख्योपेतम् । पञ्चीकृतप महाभूतानि तत्कार्यं च सर्वं विराडित्युच्यत इति **संप्रदायविद्भिरभिधानात्** । त

१ क. ख. छ. °नुभावे° ।

ति जगतः पङ्क्तिच्छन्दसा सह सादृश्यलक्षणस्य संबन्धस्य विद्यमानत्वात्पाङ्क्तत्वम्। था पृथिव्याद्युपासनमपि पञ्चकैरुपेतत्वात्पाङ्क्तम्। तेन पाङ्क्तेनैवोपासनेन पाङ्क्तं राड्रूपमुपासकः स्पृणोति प्रीणयति प्राप्नोतीत्यर्थः। एतेनार्थवादेन पाङ्क्तरूपविराट्प्तिकाम एवमुपासीतेति विधिरुन्नीयते। सत्यां च विराट्प्राप्तौ तत्त्वज्ञानोत्पत्तिद्वारा मुक्तिः पूर्वोक्तन्यायेनावगन्तव्या॥

इति श्रीमत्सायणाचार्यविरचिते श्रीबुक्कणसाम्राज्यधुरंधरमाधवविद्यारण्यपरमेश्वरसंबन्धिवेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्ये सप्तमप्रपाठके सांहित्यामुपनिषदि सप्तमोऽनुवाकः॥ ७॥

अथ सप्तमेऽष्टमोऽनुवाकः।

सप्तमे स्थूलदर्शिनो मन्दस्य स्थूलरूपपृथिव्याद्युपाधिकब्रह्मोपासनमुक्तम्। पूर्वस्मिन्ननुवाके षष्ठे किंचित्सूक्ष्मदर्शिनो मध्यमस्य सूक्ष्मरूपमनआद्युपाधिकब्रह्मोपासनमुक्तम्। अथोत्तमाधिकारिणोऽष्टमानुवाके वेदान्तप्रतिपाद्यप्रणवाभिधेयशुद्धब्रह्मोपासनमुच्यते। तत्रोपास्यस्वरूपं दर्शयति—

ओमिति ब्रह्म, इति।

ओंकारः परमात्मनो वाचकः। तथा च पतञ्जलिप्रोक्तं योगसूत्रं पूर्वमेवोदाहृतम्—"तस्य वाचकः प्रणवः" इति। इतिशब्दोऽर्थान्तरव्यावृत्त्यर्थः। ओमित्यनेनैव शब्देन प्रतिपाद्यं यद्ब्रह्म तदेवात्रोपास्यं वस्तु। न ह्यत्र मनआद्युपाधि पृथिव्याद्युपाधि वा चिन्तनीयम्। वाचकमोंकारमुच्चारयन्वाच्यं ब्रह्मोपासीतेत्यर्थः।

ओंकारस्य ब्रह्मवाचकत्वयोग्यतां दर्शयति—

ओमितीद॑ꣳ सर्वम्, इति।

ओमित्येतस्मिन्नेवाक्षरे शब्दरूपमर्थरूपं चेदं सर्वं जगदन्तर्भूतम्। तद्यथा शङ्कुनेत्यादिश्रुत्या शब्दान्तर्भाव आम्नातः। तस्य वाक्तन्तिरित्यादिश्रुत्या शब्दद्वारेणार्थान्तर्भावोऽप्याम्नातः। एतच्च सर्वं यश्छन्दसामृषभ इत्यत्र विश्वरूपपदव्याख्याने प्रपञ्चितम्। तथा सति प्रणवस्य सर्वात्मकत्वेन सर्वात्मकब्रह्मवाचकत्वयोग्यता संभवति।

ओंकारस्य सर्वसंबन्धं केषुचिद्वैदिकव्यवहारेषूदाहृत्य प्रदर्शयति—

ओमित्येतदनुकृति ह स्म वा अप्यो[1] श्रावयेत्याश्रावयन्ति। ओमिति सामानि गायन्ति। ओꣳ शोमिति शस्त्राणि शꣳसन्ति। ओमि-

[1] घ. न त्वत्र।

**त्यध्वर्युः प्रतिगरं प्रतिगृणाति । ओमिति ब्रह्मा प्रसौति । ओमि-
त्यग्निहोत्रमनुजानाति । ओमिति ब्राह्मणः प्रवक्ष्यन्नाह,—इति ।**

दर्शपूर्णमासादियागेषु यजुर्वेदोक्तकर्मानुष्ठायिनोऽध्वर्यवो यस्मिन्काल आग्नीध्र प्रत्या श्रावयेति प्रैषमन्त्रं प्रयुञ्जते तदानीमो श्रावयेति मन्त्रं पठन्ति । अत एवाऽऽपस्तम्ब आकारादिमोकारादिमोंकारादिं च तं मन्त्रं विकल्पेनोदाजहार—" आ श्रावयो +श्राव यों श्रावयेति श्रावयति " इति । तेषु पक्षेषु द्वितीय ओकारादिपक्षोऽत्र श्रुत्योदाहृतः मन्त्रगत ओंकार आग्नीध्रसंबोधनार्थः । हे आग्नीध्र देवान्प्रति हविष्प्रदानावसरं श्राव येति मन्त्रार्थः । तस्मिन्मन्त्रे यदेतदोकारोच्चारणं तदेतदोमित्येतदनुकृति भवति । प्रण मकारात्पूर्वभागरूपो य ओकारस्तस्यानुकृतिरनुकरणं सादृश्यसंपादनं तद्यस्मिन्नुच्चार तदिदमोमित्येतदनुकृति । प्रसिद्धिद्योतनार्था ह स्म वा इति त्रयो निपाताः । प्र वभागसादृश्यमोकारे प्रसिद्धमित्यर्थः । अपिशब्दो वक्ष्यमाणोदाहरणसमुच्चयार्थः अध्वर्यवोऽप्योकारेण प्रणवभागेनैवाऽऽश्रावयन्ति । यथा सामगा उद्गातारोऽपि प्रणव उच्चारणपुरःसरमेव सामगानं कुर्वन्ति । बह्वृचा होतारोऽपि प्रणवोच्चारणेनो शोमि शब्दोच्चारणेनैव शस्त्राणि निष्केवल्यप्रउगादिनामकानि पठन्ति । तथा हि—शस्त्रशंस स्याध्वर्युं प्रत्यनुज्ञां याचमाना होतारोऽनेन मन्त्रेण याचन्तोऽध्वर्यो शोंसावोमिति तत्राऽऽदौ शोमिति शब्दोऽन्ते च प्रणव इत्युभयं दृश्यते । तदिदमभिलक्ष्यों शोमि शस्त्राणि शंसन्तीत्याम्नातम् । हेऽध्वर्यो होतारो वयं किंशंसनं कुर्म इत्यनुज्ञापनं मन स्यार्थः । यदा होता शस्त्राणि शंसति तदानीमध्वर्युः शंसितारं होतारं प्रति प्रोत्साह द्योतकं शब्दमुच्चारयति । सोऽयं शब्दः **प्रतिगर** इत्युच्यते । तं प्रतिगरं यदा प्रति णात्युच्चारयति तदानीमोमिति प्रयुङ्क्ते । तदिदमापस्तम्बो विस्पष्टमाह—"ऋतुप धारयमाणः सदोबिले प्रत्यङ्तिष्ठन्प्रतिगृणाति प्रह्वो वोऽथा मोद इवेत्यर्धर्चेष्वोऽथा म इवेत्यवसानेषु प्रणव एवान्ते " इति । शस्त्रमध्य एकस्या ऋचः पूर्वार्धे समाप्ते सं ध्वर्युरोऽथा मोद इवेत्येतं प्रतिगरं प्रयुङ्क्ते । ओकारेण होता संबोध्यते । हे होतरथ र्धशंसनानन्तरमस्माकं मोद इव हर्ष एव संपन्न इत्यर्थः । ऋचोऽवसाने सति प्रति रादौ प्रणवः प्रयोक्तव्यः । स च शस्त्रशंसनस्याङ्गीकारे वर्तते । कृत्स्नस्य शस्त्रस्याव सत्यङ्गीकारार्थः प्रणवः एव प्रयोक्तव्यः । अतः प्रतिगरेऽपि प्रणवोऽनुवर्तते । वेदत्र क्तप्रयोगज्ञर्त्विग्ब्रह्मा । स च यदा प्रोक्षणादिक्रियास्वन्यानृत्विजः प्रेरयति तदान

+ ओमित्येतत्प्राग्वर्तिन ओकारस्यानुकरणमित्युक्त्यैकदेशविकृतमनन्यवत्प्रकृ दनुकरणमिति न्यायाभ्यां तस्मिन्पर ओमाङोश्चेति पररूपमिति सूचितम् ।

१ क. ग. ङ. °वयोमाश्रा° । २ क. ङ. ओंकार । ३ क. ख. घ. ङ. °सरे श्र
४ क. ख. ग. ङ. तद्दय° । ५ ङ. तदेतदोमि° । ६ ख. ग °नाय ह ।

प्रोक्षेत्येवं प्रणवपुरःसरमेव प्रसौति प्रेरयति । अग्निहोत्रहोमेऽध्वर्युर्होमद्रव्यं क्षीरं तत्पात्रादग्निहोत्रहवणीनामके पात्रे यदा स्रुवेणोन्नयति तदानीमोमुन्नेष्यामि हव्यं देवेभ्य इत्यादिमन्त्रेण यजमानं प्रत्यनुज्ञां याचते । स च यजमान ओंकारेणानुज्ञां प्रयच्छति । तथा च सूत्रकार आह—"ओमुन्नयेत्युच्चैरनुजानाति" इति । तथा ब्रह्मयज्ञं चिकीर्षुर्ब्राह्मणो ब्रह्मयज्ञनामकस्य प्रवचनस्याऽऽदौ प्रणवं प्रयुङ्क्ते । तथा च ब्रह्मयज्ञप्रकरणे समाम्नातम्—"दक्षिणोत्तरौ पाणी पादौ कृत्वा सपवित्रावोमिति प्रतिपद्यते" इति । प्रतिपद्यते ब्रह्मयज्ञं प्रारभत इत्यर्थः ।

तदेवं वैदिकैरुदाहरणैरोंकारव्याप्तिः प्रपञ्चिता । अथ फलकथनव्याजेनोपासनविधिमुन्नयति—

ब्रह्मोपाप्नवानीति । ब्रह्मैवोपाप्नोति (१), इति ।

ओं दश ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके सप्तमप्रपाठकेऽष्टमोऽनुवाकः ॥ ८ ॥

यः पुमान्ब्रह्म प्राप्नवानीति कामयते स पुमानोमित्यनेन शब्देन वाच्यं ब्रह्मोपासीत तेनोपासनेन ब्रह्म प्राप्नोत्येव ।

अथ मीमांसा—अत्रैतच्चिन्तनीयम् । ओमिति ब्रह्मेतिवाक्ये किमोंकारे प्रतीके ब्रह्मदृष्टिर्विधीयते किंवोपास्यं ब्रह्मोमित्यनेन विशेषणेन विशेष्यत इति । तत्र य ओमिति शब्दस्तद्ब्रह्मेत्येवमोंकारप्रतीकमाधारत्वेनोद्दिश्य तत्र ब्रह्मदृष्टिर्विधीयते । तथा सत्युद्देश्यविधेययोः क्रमनिर्देशस्योपपन्नत्वादिति प्राप्ते ब्रूमः—उद्गीथन्यायेनात्रोंकारस्य विशेषणत्वं द्रष्टव्यम् । स च न्यायस्तृतीयाध्यायस्य तृतीयपादे * दर्शितः—

"किमध्यासोऽथ वा बाध ऐक्यं वाऽथ विशेष्यता ।
अक्षरस्यात्र नास्त्येकं नियतं हेत्वभावतः ॥
वेदेषु व्याप्त ओंकार उद्गीथेन विशेष्यते ।
अध्यासादौ फलं कल्प्यं संनिकृष्टांशलक्षणा ॥

"ओमित्येतदक्षरमुद्गीथमुपासीत" इत्यक्षरोद्गीथयोः सामानाधिकरण्यं श्रूयते । तत्र चतुर्धा संशयः । तथा हि—"नाम ब्रह्मेत्युपासीत" इत्यत्र नामनि ब्रह्मदृष्ट्यध्यासाय सामानाधिकरण्यं श्रुतम् । तथा बाधादिष्वप्युदाह्रियते—"यश्चोरः स स्थाणुः" इति चोरत्वस्य बाधः । "यो जीवस्तद्ब्रह्म" इत्येकत्वम् । "यन्नीलं तदुत्पलम्" इति विशे-

* व्याप्तेश्च समञ्जसम् । अ० ३ पा० ३ अ० ४ सू० ९ ।

१ क. ग. °प्नुवानी° । ग. °न्ब्रह्मोपाप्न° ।

ष्यता । अतोऽक्षरस्य चतुर्धा संदेहे सतीदमेवेत्यध्यवसायो नास्ति नियामकस्य हेतोरभावादिति प्राप्ते ब्रूमः—अक्षरस्योद्गीथेन विशेष्यता नियन्तुं शक्यते । ओंकार ऋग्यजुःसामसु त्रिषु पठ्यते । तत्र कस्योपास्यत्वमित्यपेक्षायामुद्गीथभागगतस्य न त्वितरस्येति सामवेदगतस्य विशेषणीयत्वात् । अध्यासबाधैक्यपक्षेषु फलमपि कल्पनीयं प्रसज्येत । स्वतन्त्रोपासनत्वेन फलस्याऽऽकाङ्क्षितत्वात् । विशेषणपक्षे तु वक्ष्यमाणरसतमत्वादिगुणोपासनाय प्रतीकत्वेनोंकार उद्गीथेन विशेष्यते न तु स्वतन्त्रमुपासनम् । तदा न पृथक्कल्पनीयं फलम् । ननूद्गीथशब्दः कृत्स्नभक्तिवाचकः । ओंकारस्तु तदवयवः । अत ओंकारं विशेषयितुमुद्गीथशब्दे तदंशलक्षणा स्वीकरणीया स्यात् । बाढम् । तथाऽप्यध्यासपक्षात्समीचीनो विशेषणपक्षः । अध्यासपक्षे तु यथा विष्णुशब्दः स्वार्थं सर्वं परित्यज्यार्थान्तरभूतां शिल्पिप्रतिमां लक्षयति तथोद्गीथशब्दोऽपीति विप्रकर्षः । अंशलक्षणायां तु स्वार्थैकदेशस्यैव परित्याग इति संनिकर्षः । ओंकारादितरदक्षरजातं यदस्ति सोऽयं परित्यक्तव्यस्तदेकदेशः । तस्माद्वेदान्तरगतोंकारव्यावृत्त्यर्थमुद्गीथावयवत्वेनेदमक्षरं विशेष्यते ।

अनेन न्यायेनात्रापि ब्रह्मशब्देन मनोमयत्वादिगुणकं पृथिव्यादिगुणकं शुद्धं चेति त्रिविधब्रह्मप्राप्तौ सत्यां सगुणत्वं व्यावर्त्य शुद्धब्रह्मसमर्पणार्थमोमिति विशेषणम् । ओमित्यनेनैव वाचकेन शब्देन वाच्यं यत्परं ब्रह्म तदुपासितव्यमित्युक्तं भवति । प्रतीकपक्षे त्वोंकारस्य शब्दात्मकस्य ब्रह्मदृष्ट्योपासनायां शब्दोपासनमेव स्यान्न तु ब्रह्मोपासनम् । तथा सति प्रतीकोपासकस्य ब्रह्मलोकप्राप्तिरेव तावन्न संभवति । कुतो ब्रह्मतत्त्वप्राप्तिः । तदभावे च ब्रह्मैवोपाप्नोतीति फलवाक्यं बाध्येत । ओंकारवाच्यब्रह्मतत्त्वोपासने तु ब्रह्मलोकप्राप्तिर्ब्रह्मतत्त्वज्ञानद्वारेण विदेहमुक्तिलक्षणा ब्रह्मप्राप्तिश्चोपपद्यते । तस्मादोंकारवाच्यत्वेन ब्रह्मतत्त्वं विशेषणीयम् । ननु ब्रह्मतत्त्वस्य प्रमाणजन्यं वेदनमेव संभवति न तूपासनम् । अत एव दहरशाण्डिल्यादिविद्यासु सर्वत्र सगुणस्यैव ब्रह्मण उपासनं विधीयते न तु क्वचिदपि शुद्धस्य ब्रह्मतत्त्वस्य । किंच वेदान्तवाक्येन शुद्धे ब्रह्मतत्त्वेऽवगते सति कृतकृत्यत्वान्नानेनोपासनेन किंचित्प्रयोजनमस्ति । नापि ब्रह्मविदां[2] कर्तृत्वेऽपगते सत्युपासकत्वं संभवतीति । नायं दोषः । द्विविधं हि वेदान्तवाक्यम् । अवान्तरवाक्यं महावाक्यं चेति । जगत्कारणब्रह्मणो यत्तात्त्विकं रूपं तस्य बोधकमवान्तरवाक्यम् । जीवब्रह्मणोस्तादात्म्यबोधकं महावाक्यम् । तत्र महावाक्येन तादात्म्यं विदितवतस्त्वदुक्तरीत्या प्रयोजनाभाव उपासकत्वाभावश्च भवतु नाम । यस्त्ववान्तरवाक्यमात्रेण जगत्कारणस्य तत्त्वमात्रं बुध्यते तस्य तावता कर्तृत्वानपायादुपासकत्वं संभवति । प्रयोजनं च ब्रह्मलोकप्राप्तिर्ब्रह्मतत्त्वा-

---

१ क. ख. ङ. °ब्देन तदंशे ल° । २ घ. °विदः क° ।

वबोधे विदेहमुक्तिलक्षणं संभाव्यते । तस्मात्तादृशः पुमान्ब्रह्मतत्त्वमुपासीत । अत एवो-त्तरतापनीयोपनिषदि निर्गुणब्रह्मतत्त्वविषयाण्येव बहून्युपासनानि विहितानि । स्मृतिश्च ब्रह्मतत्त्वध्यानं विदधाति—

" उपपातकसंघेषु पातकेषु महत्सु च ।
प्रविश्य रजनीपादं ब्रह्मध्यानं समाचरेत् " ॥ इति ।

तदेतद्ब्रह्मतत्त्वस्य ध्यानं प्रथमाध्यायस्य तृतीयपादे *चिन्तितम् ।

" त्रिमात्रप्रणवे ध्येयमपरं ब्रह्म वा परम् ।
ब्रह्मलोकफलोक्त्यादेरपरं ब्रह्म गम्यते ॥
ईक्षितव्यो जीवघनात्परस्तत्प्रत्यभिज्ञया ।
भवेद्ध्येयं परं ब्रह्म क्रममुक्तिः फलिष्यति ॥

प्रश्नोपनिषदि श्रूयते—" यः पुनरेतं त्रिमात्रेणोमित्येतेनैवाक्षरेण परं पुरुषमभिध्या-यीत" इति । तत्र ध्येयं वस्तु हिरण्यगर्भाख्यमपरं ब्रह्मोत परं ब्रह्मेति संशये सति ह्यप-रमिति प्राप्तम् । कुतः । "स सामभिरुन्नीयते ब्रह्मलोकम्" इति कमलासनलोकप्राप्तिफल-श्रवणात्परब्रह्मध्यानस्य परमपुरुषार्थत्वस्य तावन्मात्रफलत्वानुपपत्तेः । परं पुरुषमिति परब्र-ह्मविशेषणमपरस्मिन्नपि ब्रह्मण्युपपद्यते । तस्याप्यन्यापेक्षया परत्वादिति प्राप्ते ब्रूमः—पर-मेव ब्रह्माभिध्येयम् । कुतः । ईक्षितव्यस्य परस्य ध्येयत्वेन प्रत्यभिज्ञानात् । " स एत-स्माज्जीवघनात्परात्परं पुरिशयं पुरुषमीक्षते " इति वाक्यशेषे श्रूयते । तस्यायमर्थः । य उपासनया ब्रह्मलोकं प्राप्तः स एतस्मात्सर्वजीवसमष्टिरूपादुत्कृष्टाद्धिरण्यगर्भादप्युत्कृष्टं सर्वप्राणिहृदयेशयं परमात्मानं पश्यतीति । तत्रेक्षितव्यो यः परमात्मा स एव वाक्योप-क्रमे ध्यानविषयत्वेनाभिप्रेत इत्यवगम्यते । परपुरुषशब्दाभ्यां तस्य प्रत्यभिज्ञानात् । न च ब्रह्मलोकमात्रमत्र फलं क्रममुक्तिसंभवात् । तस्माद्ब्रह्मैव ध्येयम् ।

तदेवं शुद्धब्रह्मतत्त्वस्याप्युपास्तिसंभवाद्ब्रह्मोपाप्नवानीत्येवं कामयमानः प्रणवमुच्चारयंस्त-दर्थरूपं ब्रह्मतत्त्वमुपासीत । तेन चोपासनेन ब्रह्म प्राप्नोत्येव ॥

इति श्रीमत्सायणाचार्यविरचिते श्रीबुक्कणसाम्राज्यधुरंधरमाधवविद्यारण्यपरमे-श्वरसंबन्धिवेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्ये सप्तमप्रपाठके सांहित्यामुपनिषद्यष्टमोऽनुवाकः ॥ ८ ॥

---

* ईक्षतिकर्मव्यपदेशात्सः । अ० १ पा० ३ अ० ४ सू० १३ ।

अथ सप्तमे नवमोऽनुवाकः ।

---

**अष्टमेऽनुवाके** शुद्धब्रह्मतत्त्ववाचिना प्रणवेन ब्रह्मोपासनमुक्तम् । तावतैव क्रममुक्तिलक्षणस्य पुरुषार्थस्य सिद्धत्वादुपासकस्य श्रुतिस्मृत्युदितनित्यकर्मवैयर्थ्यमाशङ्क्य नवमेऽनुवाके नित्यकर्मणामुपासनेन सह समुच्चयं विधत्ते—

**ऋतं च स्वाध्यायप्रवचने च । सत्यं च स्वाध्यायप्रवचने च । तपश्च स्वाध्यायप्रवचने च । दमश्च स्वाध्यायप्रवचने च । शमश्च स्वाध्यायप्रवचने च । अग्नयश्च स्वाध्यायप्रवचने च । अग्निहोत्रं च स्वाध्यायप्रवचने च । अतिथयश्च स्वाध्यायप्रवचने च । मानुषं च स्वाध्यायप्रवचने च । प्रजा च स्वाध्यायप्रवचने च । प्रजनश्च स्वाध्यायप्रवचने च । प्रजातिश्च स्वाध्यायप्रवचने च**, इति ।

यं कंचिदर्थं विवक्षुः पुरुषो मनसा तमर्थं यथावस्तु पर्यालोच्य[1] तद्वाचकं शब्दमनुस्मरति । तदिदं मानसं यथावस्तु भाषणानुचितमृतमुच्यते[2][3] । **स्वाध्यायो** नित्यमध्ययनम् । **प्रवचनम**ध्यापनं ब्रह्मयज्ञो वा । न केवलमुपासनमेव मुक्तिकामेनानुष्ठेयम् । किं तर्हि **वदतमुक्त**विधं तदप्यनुष्ठेयम् । तथा स्वाध्यायप्रवचने अप्यनुष्ठेये । उपासनेन सह समुच्चयार्थौ चकारौ । वाचा यथार्थभाषणं **सत्यम्** । अशनपरित्यागरूपं कृच्छ्रचान्द्रायणादिव्रतं **तप** इत्युच्यते । “ तपो नानशनात्परम् ” इति श्रुतेः । “ यज्ञेन दानेन तपसाऽनाशकेन ” इति श्रुत्यन्तरे तपसः पृथगेवानशनं निर्दिष्टमिति चेत्तर्हि तस्मिन्ननशने सामर्थ्यरहितस्य धनदानं तपोऽस्तु । “ एतत्खलु वाव तप इत्याहुर्यः स्वं ददाति ” इति श्रुतेः । चक्षुरादीनां बाह्येन्द्रियाणां निषिद्धविषयेभ्यो निवर्तनं **दमः** । मनसो निषिद्धानुचिन्तनान्निवर्तनं **शमः** । आधानादिसंस्कारेण निष्पन्ना आहवनीयादयो**ऽग्नयः** । आहिताग्नौ सायं प्रातश्चानुष्ठेयो होमो**ऽग्निहोत्रम्** । अमावास्यादितिथिविशेषमनपेक्ष्य यदा कदाचिद्याच्ञार्थं परगृहे समागता **अतिथयः** । मनुष्यैर्विवाहादिउत्सवेषु क्रियमाणं वस्त्रादिपूजनं[4] **मानुषम्** । एतदपि शिष्टाचारप्राप्तत्वाच्छ्रौतस्मार्तवदनुष्ठेयमेव । **प्रजाशब्देन** पुत्रोत्पत्तिविषया गर्भाधानादयः संस्कारा विवक्षिताः । प्रजनश्च

---

१ क. ख. ङ. °लोक्य त° । २ ग. °षणमृतमित्युच्य° । ३ घ. °नुचिन्तनमृतमित्युच्य° । ४ घ. °णं बन्धादि° ।

ब्देन पुत्रोत्पत्त्यर्थमृतुकाले दारसंगमो विवक्षितः । प्रजातिशब्देन श्रुतिस्मृत्युदितं सर्वं कर्म स्ववर्णाश्रमानुसारेणोपासकोऽप्यनुतिष्ठेत् । अन्यथा विहिताकरणप्रत्यवायेन प्रतिबद्धमुपासनं फलपर्यवसायि न स्यात् । न चानेन न्यायेन ब्रह्मतत्त्वज्ञानस्यापि कर्मसमुच्चयः प्राप्नुयादिति शङ्कनीयम् । तत्त्वविदः स्वात्मनि कर्तृत्ववर्णाश्रमाद्यध्यासनिवृत्तौ कर्माधिकाराभावात् । उपासकस्य त्वध्याससद्भावादस्ति कर्माधिकार इति युक्तः समुच्चयः । निरन्तरमुपासीनस्य चित्तविक्षेपहेतावग्निहोत्रादौ बहुप्रयाससाध्ये कर्मणि प्रवृत्तिर्न संभवतीति चेत्तर्ह्यसौ शमदमादिलक्षणमनुकूलं कर्मानुतिष्ठतु । अत एवोपासकं प्रति यमनियमादिप्रतिपादकं योगशास्त्रं प्रवृत्तम् । अग्निहोत्रादीनां शमदमादीनां च पुरुषविशेषं प्रति चित्तसमाधानानुसारेण वैकल्पिकत्वेऽपि स्वाध्यायप्रवचनयोरवश्यमनुष्ठेयत्वमभिप्रेत्य तेन तेन कर्मणा सह समुच्चयं विधातुं पुनः पुनर्वाक्यमभ्यस्तम् । न हि स्वाध्यायः कदाचिदपि परित्यक्तुं शक्यते । तत्परित्यागे शूद्रत्वप्रसङ्गात् ।

तथा च स्मृतिः—

"योऽनधीत्य द्विजो वेदानन्यत्र कुरुते श्रमम् ।
स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः " इति ॥

प्रवचनपरित्यागनिषेधस्तु ब्रह्मयज्ञप्रकरणे समाम्नायते—"अपहतपाप्मा स्वाध्यायो देवपवित्रं वा एतत्तं योऽनूत्सृजत्यभागो वाचि भवत्यभागो नाके । तदेषाऽभ्युक्ता—यस्तित्याज सखिविदꣳ स त्रायं न तस्य वाच्यपि भागो अस्ति । यदीꣳ शृणोत्यलकꣳ शृणोति न हि प्रवेद सुकृतस्य पन्थाम्" इति । यस्तु परिव्राट्पूर्वकर्माणि संन्यस्यति तेनापि स्वाध्यायो न परित्याज्यः । तथा च स्मृतिः—"संन्यसेत्सर्वकर्माणि वेदमेकं न संन्यसेत्" इति । नन्वारुण्युपनिषदि स्वाध्यायस्यापि संन्यासः श्रूयते पुत्रान्भ्रातृबन्ध्वादीञ्शिखां यज्ञोपवीतं यागं सूत्रं स्वाध्यायं चेति परित्याज्येषु वस्तुषु स्वाध्यायस्य पठितत्वात् । नायं दोषः । परिव्राजकानामनुपयुक्तस्यैव कर्मभागस्य त्याज्यत्वात् । उपयुक्तस्य तु भागस्याऽऽवृत्तिर्यतिधर्मेष्वाम्नायते—"त्रिसंध्यादौ स्नानमाचरेत् । संधिं समाधायात्मन्याचरेत् । सर्वेषु वेदेष्वारणमावर्तयेत् । उपनिषदमावर्तयेदुपनिषदमावर्तयेत्" इति । अतः स्वाध्यायप्रवचनयोः परित्यागो न कस्यापीत्यभिप्रायेणाऽऽदरार्थोऽयं विधिवाक्याभ्यासः ।

अथ यथोक्तेषु कर्मसु प्राशस्त्येन मतभेदं दर्शयति—

**सत्यमिति सत्यवचा राथीतरः । तप इति तपोनित्यः पौरुशिष्टिः । स्वाध्यायप्रवचने एवेति नाको**

---

१ क. ख. घ. ङ. °कालद्वा° । २ ग. °न्भ्रातृन्बन्ध्वा° ।

मौद्गल्यः । तद्धि तपस्तद्धि तपः (१), इति ।
प्रजा च स्वाध्यायप्रवचने च षट् च ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके सप्तमप्रपाठके
नवमोऽनुवाकः ॥ ९ ॥

**रथीतराख्यस्य** मुनेः पुत्रः कश्चित्सर्वदा सत्यमेव वक्त्यतः **सत्यवचा** इति तस्य नामधेयम् । स हि सत्यमेवोत्तमं कर्मेति ब्रूते । **पुरुशिष्ट्याख्यस्य** मुनेः पुत्रः कश्चित्तपसि नियतो वर्तते । अतस्तपोनित्य इति तस्य नामधेयम् । स त्वनशनधनदानरूपमेव कर्मोत्तममिति ब्रूते । मुद्गलाख्यस्य मुनेः पुत्रः कश्चिन्**मौद्गल्यः** सर्वदा स्वाध्यायप्रवचनाभ्यां तुष्टः सन्दुःखरहितो वर्तते । अतो **नाक** इति तस्य नामधेयम् । स तु **स्वाध्यायप्रवचने** एवोत्तमे **कर्मणी** इति ब्रूते । ननु—"तपसा देवा देवतामग्र आयन् । तपसर्षयः सुवरन्वविन्दन्" इत्यादिश्रुतेस्तपस एवोत्तमत्वं युक्तमिति चेदस्तु नाम तावता स्वाध्यायप्रवचनवादिनो मौद्गल्यस्य न हानिः कदाचिदस्ति यस्मात्तत्स्वाध्यायप्रवचनानुष्ठानं तपोरूपम् । तस्मात्तदेव प्रशस्तम् । **तद्धि तपस्तद्धि** तप इत्यभ्यासो मुख्यतपस्त्वद्योतनार्थः । मुख्यतपोरूपत्वादेवानध्यायेष्वपि ब्रह्मयज्ञस्वाध्यायोऽध्येतव्यः । तथा चाऽऽम्नायते—"य एवं विद्वान्मेघे वर्षति विद्योतमाने स्तनयत्यवस्फूर्जति पवमाने वायावमावास्यायाꣳ स्वाध्यायमधीते तप एव तत्तप्यते तपो हि स्वाध्यायः" इति । वाक्यान्तरेणाप्ययमेवार्थः स्पष्टी क्रियते—"उत तिष्ठन्नुत व्रजन्नुताऽऽसीन उत शयानोऽधीयीतैव स्वाध्यायं तपस्वी पुण्यो भवति । य एवं विद्वान्स्वाध्यायमधीते" इति । तस्मादनशनरूपं धनदानरूपं वा यत्तपोऽस्ति ततोऽप्यधिकफलहेतुत्वादेतदुत्तमं तपः । तदप्याम्नातम्—"यावन्तꣳ ह वा इमां वित्तस्य पूर्णां ददत्स्वर्गं लोकं जयति तावन्तं लोकं जयति भूयाꣳसं चाक्षय्यं चाप पुनर्मृत्युं जयति ब्रह्मणः सायुज्यं गच्छति" इति ॥

इति श्रीमत्सायणाचार्यविरचिते श्रीबुक्कणसाम्राज्यधुरंधरमाधवविद्यारण्यपरमेश्वरसंबन्धिवेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्ये सप्तमप्रपाठके सांहित्यामुपनिषदि नवमोऽनुवाकः ॥ ९ ॥

---

१ क. ख. घ. ङ. °ष्टः स दुः° ।

अथ सप्तमे दशमोऽनुवाकः ।

---

नवमेऽनुवाके ब्रह्मोपासनेन समुच्चित्य श्रौतस्मार्तकर्मानुष्ठेयमित्युक्तम् । तत्प्रसङ्गाद्ब्रह्मयज्ञस्योत्तमतपस्त्वमुक्तम् । यस्तु श्रद्धालुरपि प्रज्ञामान्द्यादिदोषेण वेदपाठाभावाद्ब्रह्मयज्ञे समर्थो न भवति तस्य ब्रह्मयज्ञफलसिद्धये जप्यं मन्त्रं दशमानुवाके दर्शयति—

**अहं वृक्षस्य रेरिवा । कीर्तिः पृष्ठं गिरेरिव । ऊर्ध्वपवित्रो वाजिनीव स्वमृतमस्मि । द्रविणꣳ सवर्चसम् । सुमेधा अमृतोक्षितः । इति त्रिशङ्कोर्वेदानुवचनम् ( १ ), इति ।**

**अहꣳ षट् ॥**

**इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके सप्तमप्रपाठके दशमोऽनुवाकः ॥ १० ॥**

वृश्च्यते तत्त्वज्ञानेनोच्छिद्यत इति वृक्षः संसारः । स चाऽऽरुणकेतुकप्रकरणे केनचिन्मन्त्रेण स्पष्टीकृतः—" ऊर्ध्वमूलमवाक्शाखं वृक्षं यो वेद संप्रति " इति । ऊर्ध्वं सर्वस्माज्जगत उत्कृष्टं परं ब्रह्म मूलं कारणं यस्य संसारवृक्षस्य सोऽयमूर्ध्वमूलः । अवाञ्चः सुरनरतिर्यग्देहाः शाखा यस्य सोऽयमवाक्शाखः । कठवल्लीष्वप्याम्नायते—"ऊर्ध्वमूलोऽवाक्शाख एषोऽश्वत्थः सनातनः " इति । अनित्यतया श्वो न तिष्ठतीत्यश्वत्थः । सनातनत्वमनादित्वम् । भगवताऽप्यसौ वृक्षोऽभिहितः—

" ऊर्ध्वमूलमधःशाखमश्वत्थं प्राहुरव्ययम् ।
छन्दांसि यस्य पर्णानि यस्तं वेद स वेदवित्" ॥ इति ।

मुमुक्षुरहं तस्य संसाररूपस्याश्वत्थवृक्षस्य रेरिवा विषयवैराग्यरूपेण शस्त्रेण च्छेत्ता भूयासमिति शेषः । "री हिंसायाम् " इति धातोरयं शब्दो निष्पन्नः । वैराग्यशस्त्रेण च्छेदो भगवतोक्तः—

" अश्वत्थमेनं सुविरूढमूलमसङ्गशस्त्रेण दृढेन च्छित्त्वा ।
ततः पदं तत्परिमार्गितव्यं यस्मिन्गता न निवर्तन्ति भूयः " ॥ इति ।

संसारवृक्षे छिन्ने सति मदीया कीर्तिर्गिरेः पृष्ठमिव भवति । यथा पर्वतस्योपरिभागोऽत्यन्तमुन्नतः । या मदीया मोक्षविषया कीर्तिरत्यन्तमुन्नता सती देवलोकेष्वपि प्रसरति । ततो देवा अपि मदीयं पुरुषार्थं विहन्तुं न क्षमन्ते । तथा च श्रूयते—

---

१ ग, घ. त्यन्त उन्न° ।

" तस्य ह न देवाश्चनाभूत्या ईशते " इति । वाजिनि स्वमृतमिवाहमूर्ध्वपवित्रोऽस्मि । वाजो गतिस्तद्वानादित्यो वाजी । स हि सर्वदा वेगेनैव गच्छति ।

तथा चोक्तम्—

" योजनानां सहस्रे द्वे द्वे शते द्वे च योजने ।
एकेन निमिषार्धेन क्रममाण नमोऽस्तु ते " ॥ इति ।

तस्मिन्वाजिन्यादित्ये शोभनममृतं विद्यते । अत एव च्छन्दोगा मधुविद्यायामादित्यमण्डलस्य मधुरूपत्वं तदीयप्रागादिभागेष्वृग्वेदादिप्रोक्तकर्मफलरूपाणि रोहितशुक्लादिवर्णयुक्तान्यमृतानि चाऽऽम्नातानि तद्यत्प्रथमममृतं तद्वसव उपजीवन्तीत्यादिना तेषाममृतानां वस्वाद्युपजीव्यत्वमा(त्वं चाऽऽ)मनन्ति । तदिदमादित्यमण्डलगतममृतं शोभनमत्यन्तं शुद्धम् । तद्वदहमप्यूर्ध्वपवित्र ऊर्ध्वं पवित्रमुत्कृष्टा शुद्धिर्यस्य मम सोऽहमूर्ध्वपवित्रः। तादृशस्य मम सवर्चसं द्रविणं सिध्यतु । द्विविधं हि द्रविणम् । मानुषं दैवं च। तत्र चक्षुषा दृश्यमानं सुवर्णरजतादिकं मानुषम् । श्रोत्रेण श्रूयमाणं वेदे प्रतीयमानं ब्रह्मज्ञानादिकं दैवम् । अत एव वाजसनेयिनः । कस्मिंश्चिदुपासने चक्षुःश्रोत्रयोर्मानुषदैववित्तदृष्टिमामनन्ति—" चक्षुर्मानुषं वित्तम् । चक्षुषा हि तद्विन्दते । श्रोत्रं दैवम् । श्रोत्रेण हि तच्छृणोति " इति । तत्र दैववित्तमभिप्रेत्य सवर्चसमिति विशेष्यते । वर्चो बलं तद्योगात्सवर्चसं बलवत्त्वं च दैववित्तस्य ब्रह्मज्ञानस्य सर्वसंसारनिवर्तकत्वादुपपन्नम् । ब्रह्मज्ञानरूपेण दैववित्तेनात्र द्रविणशब्दवाच्येन संपन्नोऽहं सुमेधा अमृतोक्षितश्च भूयासम् । शोभना मेधा ब्रह्मज्ञानप्रतिपादकग्रन्थतदर्थावधारणशक्तिर्यस्य मम सोऽहं सुमेधाः । अत एवाहममृतेन ब्रह्मानन्दरसेनोक्षितः सेचितः । इत्यहं वृक्षस्येत्यादिमन्त्रास्त्रिशङ्कुनामकस्य मुनेर्मतं[3] वेदानुवचनं वेदस्य गुरुपूर्वकमध्ययनमनु पश्चाद्वचनं ब्रह्मयज्ञस्वाध्यायतप इत्यर्थः ॥

इति श्रीमत्सायणाचार्यविरचिते श्रीबुक्कणसाम्राज्यधुरंधरमाधवविद्यारण्यपरमेश्वरसंबन्धिवेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्ये सप्तमप्रपाठके सांहित्यामुपनिषदि दशमोऽनुवाकः ॥ १० ॥

---

अथ सप्तमे एकादशोऽनुवाकः ।

---

दशमे ब्रह्मयज्ञप्रतिनिधित्वेन जप्यो मन्त्र उक्तः । ततो मन्दप्रज्ञस्यापि सुकरो ब्रह्मयज्ञः । तथा तस्य "ऋतं च स्वाध्यायप्रवचने च" इत्येवमुक्तोपासनेन सह श्रौतस्मा-

१ ग, °द्विमार्गेष्वृ° । २ ग. °माणवे° । ३ ग. घ. 'मंते वे° ।

तैकर्मसमुच्चयः क्रममुक्तिहेतुः सुस्थितः । अथैकादशेऽनुवाके केवलकर्मणामपि विवि-
दिषोत्पादनद्वारेण मोक्षहेतुत्वमभिप्रेत्य तदनुशासनं विधत्ते—

**वेदमनूच्याऽऽचार्योऽन्तेवासिनमनुशास्ति, इति ।**

आचार्यस्वरूपं मनुना स्मर्यते—

" उपनीय तु यः शिष्यं वेदमध्यापयेद्द्विजः ।
सकल्पं सरहस्यं च तमाचार्यं प्रचक्षते " ॥ इति ।

अन्ते पूर्वोक्तस्याऽऽचार्यस्य समीपे । सर्वदा वसतीत्यन्तेवासी । " छायाभूतोऽपरि-त्यागी नित्यमेव वसेद्गुरौ " इति स्मृतेः । तादृशं शिष्यमाचार्यो वेदमनूच्योपन-यनमनु पश्चादध्याप्यानुशास्ति । ग्रन्थग्रहणादूर्ध्वमनुष्ठेयमर्थं ग्राहयति । अनेनैतदव-गम्यते । अधीतवेदेन धर्मजिज्ञासामकृत्वा गुरुकुलान्न निवर्तितव्यमिति ।

अनुशासनप्रकारं संग्रहेण दर्शयति—

**सत्यं वद । धर्मं चर, इति ।**

सत्यशब्देन " अहिंसा सत्यमस्तेयम् " इत्यादिस्मृतिप्रसिद्धाः सर्वेऽप्युपल-क्ष्यन्ते । धर्मशब्देन प्रत्यक्षश्रुतिविहिता अग्निहोत्रादयो विवक्षिताः । " चोदनालक्ष-णोऽर्थो धर्मः " इति जैमिनिना सूत्रितत्वात् । श्रौत्रं स्मार्तं च कर्म सर्वमनुष्ठेयमिति संग्रहवाक्ययोस्तात्पर्यार्थः ।

" सकृत्कृते कृतः शास्त्रार्थः " इति न्यायेन श्रौतस्मार्तयोः सकृदनुष्ठितयोः पश्चा-त्परित्यागप्रसक्तौ तत्परित्यागरूपं प्रमादं निषेधति—

**स्वाध्यायान्मा प्रमदः । आचार्याय प्रियं धनमाहृत्य प्रजातन्तुं मा व्यवच्छेत्सीः । सत्यान्न प्रमदितव्यम् । धर्मान्न प्रमदितव्यम् । कुशलान्न प्रमदितव्यम् । भूत्यै न प्रमदितव्यम् । स्वाध्यायप्रवचनाभ्यां न प्रमदि-तव्यम् (१) । देवपितृकार्याभ्यां न प्रमदितव्यम्, इति ।**

अध्ययनेन गृहीतस्य स्वाध्यायस्य विस्मृतिः प्रमादस्तं मा कार्षीः । "ब्रह्महत्यासमं ज्ञेयमधीतस्य च नाशनम्" इति स्मृतेः । गोसुवर्णवस्त्रादिरूपं यद्धनमाचार्यस्य प्रियं तद्विद्यादक्षिणार्थं संपाद्य गुरवे समर्प्य ततो विवाहं कृत्वा प्रजायाः पुत्रपौत्रादिरूपाया-स्तन्तुर्विस्तारस्तस्य विच्छेदं मा कार्षीः । पूर्वोक्तयोः सत्यधर्मयोः कदाचिदालस्या-

---

१ क. ख. ' क्षणाथा ।

दननुष्ठानं **प्रमादः** सोऽपि न कर्तव्यः । कुशलं क्षेमस्तेन तत्कारणं कर्म विवक्षितम् तच्च द्विविधं वैदिकं लौकिकं च । " यो ज्योगमयावी स्याद्यो वा कामयेत सर्वमायुरियामिति तस्मा एतामिष्टिं निर्वपेत् " इत्यादिकमायुरारोग्यप्रदं वैदिकम् । विचिकित्सादि लौकिकम् । भूतिरैश्वर्यं तया तत्कारणमुपलक्ष्यते । तत्रापि " वायव्यꣳ श्वेतमालभे भूतिकामः " इत्यादिकं वैदिकम् । प्रतिग्रहादिकं लौकिकम् । कुशलभूत्योरभावे मुक्तिहेतुकर्मानुष्ठानासंभवात्तयोरप्रमादोऽनुशासनीयः । गृहीतस्वाध्यायस्य विस्मृतिरूपः प्रमादः पूर्वं निवारितः । अत्र त्वध्यापनीयस्वाध्यायब्रह्मयज्ञयोरननुष्ठानरूपः प्रमादो निवार्यते पौराणिकं विनायकव्रतानन्तव्रतादिकं **देवकार्यम्** । प्रतिसांवत्सरादिकं **पितृकार्यम्** ।

अथ मात्रादिषु मनुष्यत्वबुद्धिपरित्यागेन देवताबुद्ध्या पूजां विधत्ते—

**मातृदेवो भव । पितृदेवो भव । आचार्य-**
**देवो भव । अतिथिदेवो भव, इति ।**

मातैव पूजनीयो रुद्रविष्णुविनायकादिरूपो देवो यस्य सोऽयं **मातृदेवः** । एवमुत्तरत्रापि ।

यदुक्तं कुशलान्न प्रमदितव्यम् । भूत्यै न प्रमदितव्यमिति । तत्र कंचिद्विशेषं दर्शयति—

**यान्यनवद्यानि कर्माणि । तानि सेवि-**
**तव्यानि । नो इतराणि, इति ।**

क्षेमैश्वर्यकारणानि कर्माणि द्विविधानि । अनिन्द्यानि निन्द्यानि च । तत्र पूर्वोदाहृतान्यायुष्कामेष्टिप्रतिग्रहयाजनादीन्यनिन्द्यानि कर्माणि **सेवितव्यानि** । इतराणि त्वभिचारादीनि शत्रुवधद्वारा क्षेमहेतुत्वेऽपि नरकप्रदत्वेन निन्दितत्वान्न सेव्यानि ।

ननु शिष्टाचारस्यापि श्रुतिस्मृतिवत्प्रमाणत्वादाचार्यस्य तव संबन्धीनि चरितानि सर्वाण्यपि सेवितव्यानीत्याशङ्क्य तत्रापि विशेषं दर्शयति—

**यान्यस्माकꣳ सुचरितानि । तानि त्वयोपास्या-**
**नि ( २ ) । नो इतराणि, इति ।**

द्विविधं चरितं दैवमासुरं चेति । तदुभयं **भगवानुदाजहार**—

" अभयं सत्त्वसंशुद्धिर्ज्ञानयोगव्यवस्थितिः ।
दानं दमश्च यज्ञश्च स्वाध्यायस्तप आर्जवम् ॥

१ म. °लक्षयते ।

अहिंसा सत्यमक्रोधस्त्यागः शान्तिरपैशुनम् ।
दया भूतेष्वलोलुत्वं ( प्त्वं ) मार्दवं ह्रीरचापलम् ॥
तेजः क्षमा धृतिः शौचमद्रोहो नातिमानिता ।
भवन्ति संपदं दैवीमभिजातस्य भारत ॥
दम्भो दर्पोऽभिमानश्च क्रोधः पारुष्यमेव च ।
अज्ञानं चाभिजातस्य पार्थ संपदमासुरीम् ।
दैवी संपद्विमोक्षाय निबन्धायाऽऽसुरी मता " ॥ इति ।

तत्रास्माकं संबन्धीनि यान्यभयादीनि सुचरितानि त्वया तान्येव सेवितव्यानि न तु दम्भादीनि । अयं न्यायः सर्वत्र शिष्टाचारे योजनीयः । तथा हि—जामदग्न्यः पितुराज्ञया स्वजननीं जघानेत्यत्रापि पित्राज्ञापालनरूपं सुचरितमादर्तव्यम् । न तु मातृवधरूपं दुश्चरितम् । एवमन्यदप्युदाहार्यम्[1] ।

अथ महापुरुषसेवायां कंचिद्विशेषमुपदिशति—

**ये के चास्मच्छ्रेयाꣳसो ब्राह्मणाः । तेषां त्वयाऽऽसनेन प्रश्वसितव्यम्, इति ।**

वयोविद्यादिगुणैरस्मत्तो भवदाचार्येभ्यो येऽधिका धर्मनिष्ठाः सन्ति तेषामासनदान-पादप्रक्षालनादिशुश्रूषया प्रश्वासः श्रमापनयनं त्वया कर्तव्यम् । अथवा तेषामासने त्वया प्रश्वासोऽपि न कर्तव्यः । पण्डितंमन्यतया विस्रम्भेण वादादि न कर्तव्यमिति किमु वक्तव्यम् । तस्मात्तदुपदिष्टार्थग्राहिणैव त्वया भवितव्यम् ।

अथ दाने कंचिद्विशेषमुपदिशति—

**श्रद्धया देयम् । अश्रद्धयाऽदेयम् । श्रिया देयम् । ह्रिया देयम् । भिया देयम् । संविदा देयम्, इति ।**

यदा धनं विप्राय दीयते तदा श्रद्धायुक्तेनैव भवता देयम् । अश्रद्धया तु किंचिद-प्यदेयम् । श्रद्धया रहितस्य दानस्य लोकद्वयेऽप्यनुपयोगात् । तथा च भगवतोक्तम् ।

"अश्रद्धया हुतं दत्तं तपस्तप्तं कृतं च यत् ।
असदित्युच्यते पार्थ न च तत्प्रेत्य नो इह " ॥ इति ।

अदेयमितिपदच्छेदपक्षे तदिदं व्याख्यानम् । देयमिति वा पदच्छेदः । यथा श्रद्धया युक्तो ददाति तथा श्रद्धाराहित्येऽपि दातव्यम् । सात्त्विकदानफलाभाव एवो-

---

१ घ. कार्यम् ।

दाहृतवाक्येन दर्शितः। राजसतामसदानफलं तु विद्यते। अत एव भगवता दाने त्रैवि-
ध्यमुक्तम्—

'दातव्यमिति यद्दानं दीयतेऽनुपकारिणे।
देशे काले च पात्रे च तद्दानं सात्त्विकं स्मृतम्॥
यत्तु प्रत्युपकारार्थं फलमुद्दिश्य वा पुनः।
दीयते च परिक्लिष्टं तद्राजसमुदाहृतम्॥
अदेशकाले यद्दानमपात्रेभ्यश्च दीयते।
असत्कृतमवज्ञातं तत्तामसमुदाहृतम्''॥ इति।

श्रीर्विभवः। ह्रीर्लज्जा। भीः शास्त्रभीतिः। संविद्देशकालपात्रविशेषज्ञानम्
एतैर्वाक्यैः पूर्वोक्तं त्रिविधं दानं प्रपञ्च्यते। धनबाहुल्याच्छ्रीर्मम विद्यते तत्र दा-
दास्यश्च यथा धनमपहरन्ति तथा ब्राह्मणैरप्यपह्रियतामित्येवमवजानानः श्रिया नि-
त्तभूतया यद्दानं करोति तत्तामसम्। मत्समाः पुरुषा दानं कुर्वन्ति मम त्वदानेन मह
लज्जेत्येवं लज्जया निमित्तभूतया पूर्ववदवज्ञातो यद्ददाति तद्राजसम्। ऋत्विगादि-
यद्दानं शास्त्रेण विहितं तस्यादाने मम प्रत्यवायः स्यादिति भीत्या यद्दानं तत्सात्त्वि-
कम्। तत्राध्वर्युप्रमुखाश्चत्वारः प्रधानभूताः संपूर्णदक्षिणामर्हन्ति। प्रतिप्रस्थात्रादय-
दर्धमर्हन्ति। नेष्ट्रादयस्तृतीयांशमर्हन्ति। उन्नेत्रादयश्चतुर्थांशमर्हन्तीत्येवं संविदा वि-
कज्ञानेन युक्तः सात्त्विको दद्यात्। यद्वा सर्वमप्येतत्सात्त्विकदानविषयमेव। वि-
शाठ्यं न कारयेदित्यादिशास्त्राद्विभवानुसारेण दातव्यम्। स्वल्पदानेन मम प्रभोर्मह
लज्जा भविष्यतीत्येवं लज्जया युक्तः प्रभूतं दद्यात्।

एवमज्ञातमनुष्ठेयमर्थमुपदिश्यानन्तरं संदिग्धेऽनुष्ठेये निर्णयोपायमुपदिशति—

**अथ यदि ते कर्मविचिकित्सा वा वृत्तविचिकित्सा**
**वा स्यात् (३)। ये तत्र ब्राह्मणाः संमर्शिनः।**
**युक्ता आयुक्ताः। अलूक्षा धर्मकामाः स्युः।**
**यथा ते तत्र वर्तेरन्। तथा तत्र वर्तेथाः, इति।**

कर्म श्रौतमाग्निहोत्रादिकं स्मार्तं संध्यावन्दनादिकं च। "उदिते जुहोति" "अ-
दिते जुहोति" इति वाक्यद्वयं श्रुतवतः श्रौते कर्मणि संदेहः स्यात्। स्मार्तेः
संध्यादेवता पुरुषमूर्तिः स्त्रीमूर्तिर्वेति वचनद्वयेन संदेहः। वृत्तं कुलपरम्परागतो लौकि
आचारः। तत्रापि मातुलसुताविवाहमांसभक्षणादिविप्रतिपत्तिदर्शिनः संदेहो भवति
तदानीं यस्मिन्देशे यस्मिन्काले यस्मिन्कुले स्वयं वर्तते तत्र तेषु देशकालकुलविशे
वर्तमानाः संमर्शादिविशेषणविशिष्टा ब्राह्मणास्तत्र तस्मिन्संदिग्धे विषये यथा व

स्तथा त्वमपि वर्तस्व । रागद्वेषौत्सुक्यादिदोषराहित्येन सम्यक्शास्त्रार्थनिर्णयकुशलाः संमर्शिनः । नित्यनैमित्तिकानुष्ठाने स्वयं प्रवृत्ता युक्ताः । तत्राप्या समन्ताद्युक्ता आयुक्ताः । अवैकल्येन सम्यगनुष्ठास्याम इत्येवमभियुक्ता इत्यर्थः । लूक्षेण क्रोधेनाऽऽग्रहेण वा रहिता अलूक्षाः । धर्ममेव कामयन्ते न तु लाभपूजादिकमिति धर्मकामाः ।

इत्थं संदिग्धधर्मनिर्णयोपायमुपदिश्यानन्तरं पातकादिशङ्कया निन्दितेषु पुरुषेष्वव्यवहार्यत्वे निर्णयोपायमुपदिशति—

अथाभ्याख्यातेषु । ये तत्र ब्राह्मणाः संमर्शिनः । युक्ता आयुक्ताः । अलूक्षा धर्मकामाः स्युः । यथा ते तेषु वर्तेरन् । तथा तेषु वर्तेथाः, इति ।

पूर्ववद्व्याख्येयम् ।

उक्तमनुशासनमुपसंहरति—

एष आदेशः । एष उपदेशः । एषा वेदोपनिषत् । एतदनुशासनम् । एवमुपासितव्यम् । एवमु चैतदुपास्यम् (४), इति ।

स्वाध्यायप्रवचनाभ्यां न प्रमदितव्यं तानि त्वयोपास्यानि स्यात्तेषु वर्तेरन्सप्त च ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके सप्तमप्रपाठक एकादशोऽनुवाकः ॥ ११ ॥

सत्यं वदेत्यारभ्य तथा तेषु वर्तेथा इत्यन्तो योऽयं ग्रन्थसंदर्भः स एष आदेशः श्रौतो विधिः । यथा राजा स्वभृत्यमादिशति तथा वैदिको विधिरनुष्ठातारमादिशति । आदेशस्य समीपवर्तित्वात्स्मार्तो विधिरुपदेशः । स्मृतीनां वेदमूलतया तत्समीपवर्तित्वम् । अप्रत्यक्षश्रुतिमूलासु स्मृतिष्वपि सत्यं वदेत्यादिवाक्यार्थ एवमेवोपलभ्यते । येयं सत्यं वदेत्याद्युक्तिः सैषा वेदोपनिषद्वेदरहस्यं विध्यर्थवादमन्त्रात्मके वेदे विधिरूपः सारभागः । यदेतत्सत्यं वदेत्यादिकं तदेतदनुशासनमीश्वरस्याऽऽज्ञा । श्रुतिस्मृती ममैवाऽऽज्ञे इत्येवमीश्वरेणोक्तत्वात् । यस्मात्सत्यवदनादिकं श्रौतस्मार्तविध्युक्तं वेदरहस्यमीश्वराज्ञारूपं च तस्मादेवमुक्तेन प्रकारेणोपासितव्यमनुष्ठातव्यम् । एवमु चैतदुपास्यमिति पुनर्वचनमादरार्थम् । उ चेत्यव्ययसमुदायोऽवधारणार्थः । उक्तप्रकारेणैतदनुष्ठेयमेव नतु कदाचिदपि परित्यक्तुं शक्यम् । अत्र केचिदेवमादरं दृष्ट्वा कर्मभिरेव मोक्षं वर्णयन्ति । अपरे तु पुनर्ज्ञानकर्मसमुच्चयेन । तावेतौ

१ क. ञ. ग. ङ. रूक्षेण । २ क. ख. ग. ङ. °न्तो यो ग्र° ।

पक्षावस्माभिः पूर्वोत्तरकाण्डसंबन्धकथनप्रसङ्गेनैव निराकृतौ। कर्मणां साक्षान्मोक्षहेतुत्वा-भावेऽपि विविदिषोत्पादनद्वारेण तद्धेतुत्वमभिप्रेत्य विद्याप्रकरणे तदनुशासनमाम्नातम्। विद्याफले मोक्षे कर्मनैरपेक्ष्यं तृतीयाध्यायस्य चतुर्थपादे *चिन्तितम्—

"आत्मबोधः फले कर्मापेक्षो नो वा ह्यपेक्षते।
अङ्गिनोऽङ्गेष्वपेक्षायाः प्रयाजादिषु दर्शनात्॥
अविद्यातमसोर्ध्वस्तौ दृष्टं हि ज्ञानदीपयोः।
नैरपेक्ष्यं ततोऽत्रापि विद्या कर्मानपेक्षिणी"॥ इति।

विमतो ब्रह्मतत्त्वावबोधः स्वफलदाने स्वाङ्गभूतकर्मापेक्षोऽङ्गित्वात्प्रयाजाद्यपेक्षदर्शपूर्णमासादिवत्। यद्यपि प्रथमाधिकरणे विद्यायाः स्वतन्त्रपुरुषार्थत्वप्रतिपादनेन कर्माङ्गत्वं निवारितम्। तथाऽप्यङ्गित्वं न निवारितम्। अतो नासिद्धो हेतुः। अतः कर्मापेक्षो बोध इति प्राप्ते ब्रूमः—विमतं ब्रह्मज्ञानं स्वनिवर्त्यनिवर्तनेऽन्यापेक्षं न भवति प्रकाशकत्वात्प्रदीपवद्घटज्ञानवच्च। यत्त्वङ्गित्वमुक्तम्। तत्र कर्मणः कीदृशमङ्गत्वं भवतोऽभिप्रेतं किं प्रयाजादिवत्फलोपकार्यङ्गत्वमुतावघातादिवत्स्वरूपोपकार्यङ्गत्वम्। नाऽऽद्यः मुक्तेः कर्मजन्यत्वेनानित्यत्वप्रसक्तेः। द्वितीये साध्यविकलो दृष्टान्तः। प्रयाजादीनां स्वरूपोपकार्यङ्गत्वाभावात्। तस्मादुत्पन्ना विद्या स्वफलप्रदाने कर्माणि नापेक्षते।

विद्यायाः स्वोत्पत्तौ कर्मापेक्षाऽपि तत्रैव ×चिन्तिता—

"उत्पत्तावनपेक्षेयमुत कर्माण्यपेक्षते।
फले यथाऽनपेक्षैवमुत्पत्तावनपेक्षता॥
यज्ञशान्त्यादिसापेक्षं विद्याजन्म श्रुतिद्वयात्।
हलेऽनपेक्षितोऽप्यश्वो रथे यद्वदपेक्ष्यते"॥

ब्रह्मविद्या स्वफले यथा कर्माणि नापेक्षते तथा स्वोत्पत्तावपि। अन्यथा क्वचिदपेक्षते क्वचिन्नापेक्षत इत्यर्धजरतीयन्यायः प्रसज्येतेति प्राप्ते ब्रूमः। नार्धजरतीयत्वदोषोऽत्रास्ति। योग्यतावशेनैकस्यैव कार्यविशेषेष्वपेक्षानपेक्षयोरुभयोरुपपत्तेः। यथा लाङ्गलवहनेऽनपेक्षितोऽप्यश्वो रथवहनेऽपेक्ष्यते तद्वत्। नन्वत्र विद्यायाः स्वोत्पत्तौ कर्मापेक्षायां प्रमाणाभावः। "तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन" इति प्रवृत्तिरूपाणां वेदानुवचनादीनां विविदिषोत्पादनद्वारा बहिरङ्गसाधनत्वावगमात्। "शान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वाऽऽत्मन्येवाऽऽत्मानं पश्यति" इति निवृत्तिरूपाणां शमदमादीनां विद्योत्पत्तौ साधनत्वेन विधीयमा-

---

* अत एव चाग्नीन्धनाद्यनपेक्षा। ब्र० सू० अ० ३ पा० ४ अ० ५ सू० २५

× सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्। ब्र० सू० अ० ३ पा० ४ अ० ६ सू० २६।

---

१ क. ख ङ. °क्षायाः प्र°।

त्तया ऽन्तरङ्गसाधनत्वावगमात्। तस्माद्यज्ञादीनि शमदमादीनि च विद्या स्वोत्पत्ता-वपेक्षते।

विद्याहेतुभिरेवाऽऽश्रमसिद्धिश्च तत्रैव * चिन्तिता—

" विद्याश्रमार्थं च द्विः प्रयोगोऽथवा सकृत्।
प्रयोजनविभेदेन प्रयोगोऽपि विभिद्यते॥
श्राद्धार्थभुक्त्या तृप्तिः स्याद्विद्यार्थेनाऽऽश्रमस्तथा।
अनित्यनित्यसंयोग उक्तिभ्यां खादिरे मतः "॥ इति।

यानि यज्ञादीनि विद्याहेतुत्वेन विविदिषावाक्ये विहितानि तान्येवाऽऽश्रमधर्मत्वेन पूर्वकाण्डे विहितानि तेषां प्रयोजनद्वैविध्याद्द्विरनुष्ठानमिति प्राप्ते ब्रूमः— यथा श्राद्धार्थ-भोजने तृप्तिर्नान्तरीयकतया सिध्यति तथा विद्यार्थमनुष्ठितैराश्रमधर्मः सिध्यतु। नन्वविद्याहेतूनां काम्यत्वादाश्रमधर्माणां नित्यत्वाच्च सकृत्प्रयोगे नित्यानित्यसंयोगविरोध इति वाच्यम्। वचनद्वयबलेनैकस्यैव कर्मण आकारद्वयोपपत्तेः। यथा " खादिरो यूपो भवति " " खादिरं वीर्यकामस्य यूपं कुर्वीत " इत्यत्र वचनद्वयेनैकस्य नित्यत्वकाम्यत्वे तद्वत्। तस्मादुभयविधानां यज्ञादीनां सकृदेव प्रयोगः।

अनाश्रमिकर्मणामपि विद्याहेतुत्वं तत्रैव = चिन्तितम्—

" नास्त्यनाश्रमिणो ज्ञानमस्ति वा नैव विद्यते।
धीशुद्ध्यर्थाश्रमित्वस्य ज्ञानहेतोरभावतः॥
अस्त्येव सर्वसंबन्धिजपादेश्चित्तशुद्धितः।
श्रुता हि विद्या रैक्कादेराश्रमे त्वतिशुद्धता "॥ इति।

पूर्वमाश्रमं समाप्य केनापि कारणेनोत्तरमाश्रममप्रतिपन्नोऽनाश्रमी स्नातको विधुरादिस्तस्य तत्त्वज्ञानं न संभाव्यते। बुद्धिशुद्धिहेतोराश्रमस्याभावादिति प्राप्ते ब्रूमः— भवत्येवानाश्रमिणामपि ज्ञानम्। आश्रमनिरपेक्षस्य जपादेर्बुद्धिशुद्धिहेतुत्वात्। " जप्येनैव तु संसिध्येद्ब्राह्मणो नात्र संशयः " इति स्मृतेः। श्रुतश्च संवर्गविद्यायामधिकारोऽनाश्रमिणोऽपि विवाहार्थिनो रैक्कस्य। एवमाश्रमरहिता गार्ग्यादय उदाहार्याः। न चैवमाश्रमवैयर्थ्यम्। शुद्ध्यतिशयहेतुत्वात्। तस्मादनाश्रमिणोऽपि संभवति विज्ञानम्।

इति श्रीमत्सायणाचार्यविरचिते श्रीबुक्कणसाम्राज्यधुरंधरमाधवविद्यारण्यपरमेश्वरसंबन्धिवेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्ये सप्तमप्रपाठके सांहित्यामुपनिषद्येकादशोऽनुवाकः॥ ११॥

* विहितत्वाच्चाऽऽश्रमकर्मापि ब्र० सू० अ० ३ पा० ४ अ० ८ सू० ३२। = अन्तरा चापि तु तद्दृष्टेः। ब्र० सू० अ० ३ पा० ४ अ० ९ सू० ३६।

अथ सप्तमे द्वादशोऽनुवाकः ।

एकादशे शिष्यं प्रत्याचार्यस्यानुशासनमुक्तम् । तावता ब्रह्मतत्त्वविद्याया बहिरङ्गसाधनान्युपासनानि कर्माणि च सन्तीत्यवगतानि । अथ तद्ग्रन्थपाठतदर्थज्ञानतदनुष्ठानानामवसाने जपितव्यं शान्तिमन्त्रं द्वादशे दर्शयति—

शं नो॑ मि॒त्रः शं वरु॑णः । शं नो॑ भवत्वर्य॒मा । शं न॒ इन्द्रो॒ बृह॒स्पतिः॑ । शं नो॒ विष्णु॑रुरुक्र॒मः । नमो॒ ब्रह्म॑णे । नम॑स्ते वायो । त्वमे॒व प्र॒त्यक्षं॒ ब्रह्मा॑सि । त्वामे॒व प्र॒त्यक्षं॒ ब्रह्मावा॑दिषम् । ऋ॒तम॑वादिषम् । स॒त्यम॑वादिषम् । तन्मामा॑वीत् । तद्व॒क्तार॑मावीत् । आवी॒न्माम् । आवी॑द्व॒क्तार॑म् । ॐ शान्तिः॒ शान्तिः॒ शान्तिः॑ (१), इति । स॒त्यम॑वादि॒षं पञ्च॑ च ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके सप्तमप्रपाठके द्वादशोऽनुवाकः ॥ १२ ॥

अक्षरार्थस्तूपक्रमे समाम्नातमन्त्रवदवगन्तव्यः । उपक्रमकाले ब्रह्मणः पूर्वमनुक्तत्वाद्वदिष्यामीति पठितम् । तथा विघ्नपरिहारस्य प्रार्थनीयत्वादवत्विति पठितम् । अवसाने ब्रह्मणः पूर्वमुक्तत्वाद्विघ्नराशेश्च परिहृतत्वादवादिषमावीदिति पठितम् । निष्पन्नस्य विघ्नपरिहारस्य पुनः परामर्शः कृतघ्नत्वनिवारणार्थः । अन्यथा मित्रावरुणादिदेवकृतमुपकारमजानानस्य मुमुक्षोः कृतघ्नत्वं प्रसज्येत तच्चायुक्तम् । "ब्रह्मघ्ने निष्कृतिर्दृष्टा कृतघ्ने नास्ति निष्कृतिः" इति स्मरणात् । निष्पन्नेऽपि साधनानुष्ठाने कृतघ्नत्वदोषेण प्रतिबध्येत । तस्मादुदित्याध्यात्मिकादिविघ्नानां शान्तिर्निष्पन्नेत्येवं देवकृत उपकारः परामृश्यते ॥

इति श्रीमत्सायणाचार्यविरचिते श्रीबुक्कणसाम्राज्यधुरंधरमाधवविद्यारण्यपरमेश्वरसंबन्धिवेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्ये सप्तमप्रपाठके सांहित्यामुपनिषदि द्वादशोऽनुवाकः ॥ १२ ॥

शं नः॒ शीक्षां* सह नौ॒ यश्छन्द॑सां॒ भूः स यः पृ॑थि॒व्योमित्यृ॒तं चाहं॒ वेदमनूच्य शं नो॒ द्वाद॑श ॥ १२ ॥

---

* ख °क्षि° °मि° ।

नो मह इत्यादित्यो नो इतराणि त्रयोविंशतिः ॥ २३ ॥

+शं नो॑ मि॒त्रः शं वरु॑णः । शं नो॑ भवत्वर्य॒मा । शं न॒ इन्द्रो॒ बृह॒स्पतिः॑ । शं नो॒ विष्णु॑रुरुक्र॒मः । नमो॒ ब्रह्म॑णे । नम॑स्ते वायो । त्वमे॒व प्र॒त्यक्षं॒ ब्रह्मा॑सि । त्वमे॒व प्र॒त्यक्षं॒ ब्रह्म॑ वदिष्यामि । ऋ॒तं व॑दिष्यामि । स॒त्यं व॑दिष्यामि । तन्मामवतु । तद्व॒क्तार॑मवतु । अव॑तु माम् । अव॑तु व॒क्तार॑म् ।

ॐ शान्तिः॒ शान्तिः॒ शान्तिः॑ ॥

हरिः ॐ ।

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके सप्तमः प्रपाठकः समाप्तः ॥ ७ ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्वीरबुक्कणसाम्राज्यधुरंधरश्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्ये सप्तमः प्रपाठकः समाप्तः ॥ ७ ॥

समाप्ता च सांहित्युपनिषत् ।

---

+इयं शान्तिः पुस्तके नास्ति ।

# कृष्णयजुर्वेदीयं तैत्तिरीयारण्यकम् ॥

( अथ षष्ठः प्रपाठकस्याऽऽरम्भः )

यस्य निश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥
साधनं ब्रह्मविद्यायाः सांहित्यामीरितं स्फुटम् ।
वारुण्युपनिषद्येतद्ब्रह्मतत्त्वं विविच्यते ॥ २ ॥

तत्राऽऽदौ शिष्याचार्ययोः परस्परानुकूल्यसिद्धये तत्प्रातिकूल्यशान्तिकरं जप्यं मन्त्रं पठति—

हरिः ॐ ।

सह नाववतु । सह नौ भुनक्तु । सह वीर्यं करवावहै । तेजस्वि नावधीतमस्तु मा विद्विषावहै । ॐ शान्तिः शान्तिः शान्तिः,* इति ।

अत्र नाविति शब्देन शिष्याचार्यावुच्येते । अस्मिञ्जन्मन्यतीतजन्मसु वाऽनुष्ठितैः कर्मकाण्डोक्तैर्नित्यनैमित्तिककर्मभिरुत्पन्नविविदिषः सांहित्यामुपनिषदि प्रोक्तैरुपासनैरन्तर्मुख एकाग्रचित्तः काम्यकर्मादिभिः संपादितानां लोकानामसारत्वं परीक्ष्य ततो निर्विण्णः कर्मणा मोक्षो नास्तीति निश्चित्य मुक्तिहेतुब्रह्मतत्त्वज्ञानार्थं गुरूपसत्तिं यः करोति तादृशोऽत्र शिष्यो विवक्षितः । गुरुश्च श्रोत्रियो वेदशास्त्रार्थपारं(र?)गतत्वेन बोधयितुं कुशलो ब्रह्मनिष्ठत्वेन कदाचिदपि बहिर्मुखत्वरहितो विवक्षितः । तथा चाऽऽथर्वणिका आमनन्ति—" परीक्ष्य लोकान्कर्मचितान्ब्राह्मणो निर्वेदमायान्नास्त्य+कृतः = कृतेन तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम् " इति । कठाश्चाऽऽमनन्ति—" आश्चर्यो वक्ता कुशलोऽस्य लब्धा आश्चर्यो ज्ञाता कुशलानुशिष्टः " इति । तत्र गुरोः कृतार्थत्वेन प्रार्थनीयाभावेऽप्यनेन मन्त्रेण शिष्यस्तयोरुभयोः क्षेमं प्रार्थयते । यद्ब्रह्माऽऽचार्यप्रसादानन्तरं मया वेदिष्यते तद्ब्रह्म नौ गुरुशिष्यावावामुभौ सहावतु रक्षतु । तथा भुनक्तु पालयतु । यथा गुरुर्निरालस्य उपदिशति यथा चाहमुपदिष्टमर्थमप्रतिपत्तिविप्रतिपत्तिरहितो गृह्णामि तथा रक्षणमुपदेशकाले प्रार्थ्यते ।

* भाष्यानुरोधेनात्र प्रथमानुवाकसमाप्तिरपेक्षिता । + अकृतो मोक्ष इत्यर्थः । = कृतेन कर्मणेत्यर्थः ।

१ ख. °तीर्थम । २ ख. जप्यम° ।

कालीनत्वमुभयोरपि रक्षणे सहभावः । उपदिष्टार्थग्रहणेन ममाविद्या यथा निवर्तते निवृत्तिं पश्यन्नाचार्यो यथा परितुष्यति तथा पालनमुत्तरकालीनं प्रथमं प्रार्थ्यते । उक्तप्रयोजनसिद्ध्यर्थमावामुभौ परस्परं सह विद्यायां वीर्यं स्वप्रयोजनसामर्थ्यं करवा- वहै तस्मिंश्च सामर्थ्यकरणे य एष उपायः स प्रार्थ्यते । नौ गुरुशिष्ययोरावयोः संब- न्धि यदधीतं ग्रन्थजातं तत्तेजस्वि स्वार्थप्रकाशकमस्तु । आवां च परस्परं द्वेषं मा करवावहै । गुरुणा न सम्यग्व्याख्यातमिति शिष्यस्यापरितोषो द्वेषस्तथा शुश्रूषा न समीचीनेति गुरोरपरितोषस्तदुभयं मा भूदित्यर्थः । प्रणवशान्तिशब्दाः पूर्ववद्व्याख्येयाः ॥

इति श्रीमत्सायणाचार्यविरचिते श्रीबुक्कणसाम्राज्यधुरंधरमाधवविद्यारण्यपरमे- श्वरसंबन्धिवेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्येऽष्टम- प्रपाठके वारुण्यामुपनिषदि प्रथमोऽनुवाकः ॥ १ ॥

---

अथाष्टमे द्वितीयोऽनुवाकः ।

---

प्रथमे द्वेषादिरूपसंभावितविघ्नपरिहाराय जप्यमन्त्रमाम्नाय द्वितीयस्यानुवाकस्याऽऽदौ कृत्स्नोपनिषत्सारं संग्रहेण सूत्रयति—

ॐ ब्रह्मविदाप्नोति परम्, इति ।

ब्रह्मवेदनेन मुक्तिः कृत्स्नोपनिषत्तात्पर्यार्थः । " बृह बृहि वृद्धौ " इत्यस्माद्धातो- र्निष्पन्नो ब्रह्मशब्दो वृद्धं वस्त्वभिधत्ते । वृद्धिश्चात्र निरतिशया विवक्षिता । संकोच- कयोः प्रकरणोपपदयोरभावात् । यदा त्वापेक्षिकवृद्धियुक्तं वस्तु प्रकृतं भवेत्, उपपदं वा किंचिद्वाचकं प्रयुज्येत तदा संकोचो भवेत् । न त्वेतदुभयमप्यत्रास्ति । निरतिशय- वृद्धिर्नाम नित्यशुद्धत्वादिरूपा । एतदेवाभिप्रेत्य श्रीमच्छारीरमीमांसाभाष्ये भगवत्पा- दैरभिहितम्—" अस्ति तावद्ब्रह्म नित्यशुद्धबुद्धमुक्तस्वभावं सर्वज्ञं सर्वशक्ति । ब्रह्म- शब्दस्य हि व्युत्पाद्यमानस्य नित्यशुद्धत्वादयोऽर्थाः प्रतीयन्ते । बृंहतेर्धातोरर्थानुगमा- त् " इति । ईदृगर्थविवक्षा च सत्यं ज्ञानमित्यादिना लक्षणवाक्येन स्पष्टी करिष्यते । तथाविधं ब्रह्म वेत्ति मनसा साक्षात्करोतीति ब्रह्मवित् । "मनसैवानु द्रष्टव्यं नेह नानाऽस्ति किंचन " इति वाजसनेयिनः समामनन्ति । चक्षुरादीन्द्रिययुक्तेन तु मनसा नामरूपादिविशिष्टमेव ब्रह्म गृह्यते । नतु शुद्धम् । अतो मनसैव केवलेन द्रष्टव्य- मित्युच्यते । ननु चक्षुरादिनैरपेक्ष्येऽपि वेदवाक्यापेक्षा विद्यते ब्रह्मणः शास्त्रप्रमेय- त्वात् । बाढम् । अत एवानु द्रष्टव्यमित्युच्यते । *ब्रह्मप्रतिपादकं शास्त्रमनु पश्चा-

---

* ब्रह्मप्रतिपादकशास्त्रश्रवणानन्तरं मनसैव द्रष्टव्यं ब्रह्मेत्यर्थः ।

---

१ ग. जप्यं म° । २ क. ख. ङ. °षत्तात्पर्यं सं° । ३ क. ख. घ. ङ. °द्धमु° ।

दृद्रष्टव्यम् । अत्र मनसैवेत्येवकारेण चक्षुरादिबाह्येन्द्रियाणि व्यावृत्यानुशब्देन शा
मङ्गी करोति । नन्व शास्त्रगम्यत्वे धर्माधर्मयोरिव परोक्षबोधः शङ्कनीयः । दृष्टा
स्यात्र विषमत्वात् । अपरोक्षस्वभावं हि ब्रह्म, " यत्साक्षादपरोक्षाद्ब्रह्म " इति श्रुते
धर्माधर्मौ परोक्षस्वभावाविति वैषम्यम् । स्वतोऽपरोक्षेऽपि ब्रह्मण्यस्ति परोक्षत्वभ्रम
चेत्सत्यम् । अत एव श्रुतिर्जगत्कारणत्वेनोपलक्षितं ब्रह्म सत्यज्ञानाद्यवान्तरवाक्येन
बोधयित्वा पुनः परोक्षत्वभ्रमनिवृत्त्यर्थं तस्य ब्रह्मणो महावाक्येन प्रत्यगात्मना ता
त्म्यं बोधयति । तथा च वाजसनेयिनः । पठन्ति—"य एवं वेदाहं ब्रह्मास्मीति स
सर्वं भवति" इति । अत्रापि प्रत्यगात्मतादात्म्यमेवाभिप्रेत्य यो वेद निहितं गुहा
मिति वाक्येन च प्रत्यगात्मनि परोक्षत्वभ्रमः शङ्कितुमपि न शक्यः । आबाल
पालं सर्वैरपि प्राणिभिः प्रत्यगात्मनोऽहमित्यनेन मानसप्रत्यक्षेण विस्पष्टं व्यव
माणत्वात् । यस्य *प्रत्यगात्मनः संबन्धिभिश्चक्षुरादीन्द्रियैर्गृह्यमाणा घटा
+जडा अपि लिङ्गादिव्यवधानमन्तरेण प्रतीयमानत्वादपरोक्षा इत्युच्यन्ते, तस्य
गात्मनो व्यवधानशङ्कारहितस्य चिद्रूपस्य स्वप्रकाशस्य सर्वावभासकस्य
भ्रान्त्याऽपि कथं परोक्षत्वमाशङ्क्येत । स्वप्रकाशत्वं सर्वावभासकत्वं चाऽऽम्नायते
" तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति " इति । एवं सति व
सर्वावभासकस्य चिद्रूपस्य व्यवहारदशायां चाहंप्रत्ययेन भासमानस्य प्रत्यगा
वास्तवं भ्रान्तं वा परोक्षत्वं न शङ्कितुं शक्यते । देहादिभ्यः पञ्चभ्यः कोशे
विविक्तः साक्षी परोक्ष इति चेन्न । तस्यात्यन्तापरोक्षत्वात् । यदा तिरोधायकत्वा
वनोपेतैर्देहादिभिः संयुक्तस्याप्यपरोक्षत्वमभ्युपगम्यते तदा तत्संयोगरहितोऽ
इति किमु वक्तव्यम् । अतोऽपरोक्षप्रत्यगात्मतादात्म्याच्छास्त्रगम्यमपि ब्रह्मापरो
मनसाऽवगम्यते । ननु मनसाऽवगतस्य ब्रह्मत्वमेव नास्ति । तथा च तलव
आमनन्ति—

"यन्मनसा न मनुते येनाऽऽहुर्मनो मतम् ।
तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते " ॥ इति ।

अयमर्थः । यत्साक्षिचैतन्यं सर्वो जनो मनसा विषयीकृत्यावगन्तुं न शक्
येन तु साक्षिचैतन्येन तन्मनः प्रकाशितमि×त्यनेन च वेदरहस्याभिज्ञाः कथ
तदेव साक्षिचैतन्यं ब्रह्मेति हे शिष्य त्वं विजानीहि । उपासकास्तु स्वातिरि
घटादिवदिदमित्यनेन दृश्यत्वाकारेण भासमानं शास्त्रसिद्धं जगत्कारणं यद्ब्रह्म

* कैमुत्यन्यायेन परोक्षत्वाभावं साधयति । + व्यवधानशङ्कोपेता अपीति शेषः । × प्रकारेणेत्यर्थः ।

१ ग. °क्षभ्र° । २ ग. लिङ्गय° । ३ ग. °धःनाश° ।

तदिदमुपास्यं वस्तु मुख्यं ब्रह्म न भवति। न खलु स्वातिरिक्तस्य दृश्यस्योपाधिविशिष्टस्य मुख्यब्रह्मत्वमस्तीति। अतो निषेधान्मनसा विषयीकृत्य साक्षात्क्रियमाणं न ब्रह्मेति चेन्नायं दोषः। न ह्यस्यां श्रुतौ ब्रह्मणो *मनोविषयत्वमभ्युपगम्यते। अन्यथा तदेव ब्रह्म त्वं विद्धीति कथमुच्येत। साक्षिणः स्वप्रकाशस्य घटादिवन्मनोजन्यस्फुरणभास्यत्वमयु+क्तमिति चेदेवं* तर्हि+फलव्याप्यत्वं मा भूद्वृत्तिव्याप्यत्वं तु भविष्यति साक्षिचैतन्यं ब्रह्मेत्युल्लिखन्त्या महावाक्यजन्यया मनोवृत्त्या ब्रह्मणि व्याप्यमाने सति तद्वृत्तिरूपया तत्त्वविद्यया प्रत्यग्ब्रह्मणोर्भेदहेतुरविद्या निवर्तते। न चास्या वृत्तेः परोक्षज्ञानत्वं संभवति। विषयसंबन्धस्यैव वृत्त्याकारजनकत्वात्। यथा चक्षुर्जन्या मनोवृत्तिर्घटसंबन्धाद्घटाकारा सती जनैरपरोक्षज्ञानमित्युच्यते, तथा साक्षिसंबन्धात्साक्ष्याकाराया अस्या अप्यपरोक्षज्ञानत्वं कुतो न स्यात्। न च विषयसंबन्धादेव वृत्तेरतदाकारत्वे वाक्यं व्यर्थमिति शङ्कनीयम्। जगत्कारणत्वेनोपलक्षितं ब्रह्म प्रत्यगात्मरूपाद्व्यतिरिक्तमित्येतादृशस्य भेदभ्रमस्य वाक्येनापोद्य(ह्य)त्वात्। तथा सति प्रत्यग्ब्रह्मैक्यरूपा वृत्तिर्भेदापवादेन विषयसंबन्धादेव जायत इति *वाक्यजन्यमपि ज्ञानमपरोक्षमेव। यस्य तु बहिर्मुखस्य मनोवृत्तिरभ्यन्तरवर्तिना साक्षिणा न संबध्यते तस्य शब्दसामर्थ्यादेव प्रत्यग्ब्रह्मैक्यरूपा वृत्तिर्जायते। तदिदं ज्ञानं धर्माधर्मस्वर्गनरकादाविव परोक्षम्। न ह्यत्र साक्षात्काराभावे वाक्यापराधो निमित्तम्। किं तु पराङ्मुखत्वलक्षणः पुरुषापराधः। यथा प्राङ्मुखस्य पश्चिमावस्थितरूपदर्शनाभावे चक्षुर्दोषो न निमित्तत्वेन कल्प्यते तद्वत्। स च बहिर्मुखः पुरुषो यदा निदिध्यासनशब्दवाच्येन ब्रह्मध्यानेनान्तर्मुखां सूक्ष्मवस्तुनिरूपणकुशलामेकाग्रां बुद्धिवृत्तिं संपादयति, तदाऽसौ बुद्धिवृत्तिः प्रत्यगात्मना संबध्य तदाकारा सती वाक्यानुग्रहेण भेदभ्रमं निराकुर्वती, ब्रह्मसाक्षात्कार इत्युच्यते। वाक्यश्रवणात्पूर्वमेव सगुणब्रह्मोपासनेन वा पश्चान्निदिध्यासनेन वाऽन्तर्मुखस्यान्वयव्यतिरेकाभ्यां साक्षिचैतन्यं देहादिभ्यो विविच्यानुभवतोऽवान्तर+वाक्येन(ण) ब्रह्मत्वं निश्चितवतो मुख्याधिकारिणो×महावाक्येन ब्रह्मात्मसाक्षात्कार एवोत्पद्यते। न तु परोक्षज्ञानम्। तदेतदभिप्रेत्य वाक्यवृत्तावुक्तम्—

"प्रत्यग्बोधो य आभाति सोऽद्वयानन्दलक्षणः।
अद्वयानन्दरूपश्च प्रत्यग्बोधैकलक्षणः॥

---

* अविषयत्वमिति च्छेदः। + एवं च "मनसा न मनुत इति श्रुतिविरोधस्तदवस्थ इति भावः। * फलव्याप्यत्वनिषेधप्रतिपादिकैव श्रुतिरिति न तद्विरोध इत्यर्थः। + ज्ञानानुकूलव्यापारजन्यज्ञानरूपफलव्याप्यत्वम्। * भेदभ्रमनिवृत्तिद्वारेत्यर्थः। + सत्यं ज्ञानमित्यादिना। × भेदभ्रमनिवृत्तिद्वारेत्यर्थः।

इत्थमन्योन्यतादात्म्यप्रतिपत्तिर्यदा भवेत् ।
अब्रह्मत्वं त्वमर्थस्य व्यावर्तेत तदैव हि ॥
तदर्थस्य च पारोक्ष्यं यद्येवं किं ततः शृणु ।
* पूर्णानन्दैकरूपेण प्रत्यग्बोधोऽवतिष्ठते " ॥ इति ।

ननु प्रत्यग्ब्रह्मणोरन्योन्यतादात्म्याङ्गीकारे सति नाखण्डैकरसत्वं सिध्यति । नीलमुत्पलमित्यत्र सत्यपि तादात्म्ये गुणद्रव्यभेदस्यापि सद्भावात् । एवमत्राप्यात्मत्वब्रह्मत्वकृतो भेदोऽपि प्रसज्येतेति चेन्न । गुणद्रव्ययोः परस्परव्यभिचारेण वैषम्यात् । नैल्यगुणं मेघादावपि वर्तमान + उत्पलं व्यभिचरति । × उत्पलद्रव्यमपि शुक्लरक्तोत्पलयोर्वर्तमानत्वान्नैल्यगुणं व्यभिचरति । अतस्तत्रार्थभेदान्नाखण्डार्थत्वम् । इह त्वात्मब्रह्मणोः परस्परव्यभिचाराभावादेकार्थत्वे सत्यखण्डत्वसिद्धिः । एतच्च विश्वरूपाचार्यैर्दर्शितम्—

" नाऽऽत्मता ब्रह्मणोऽन्यत्र ब्रह्मता नाऽऽत्मनोऽन्यतः ।
तादात्म्यमनयोस्तस्मान्नीलोत्पलविलक्षणम् " ॥ इति ।

एवं तर्हि पर्यायत्वादात्मा ब्रह्मेतिपदद्वयवैयर्थ्यमिति चेन्न । प्रतिपाद्यभेदाभावेऽपि मोहकल्पितयोरब्रह्मत्वपारोक्ष्ययोर्व्यावर्त्ययोर्भिन्नत्वात् । तदप्याचार्यैर्दर्शितम्—

" आत्माऽपि सदिदं ब्रह्म मोहात्पारोक्ष्यदूषितम् ।
ब्रह्मापि संस्तथैवाऽऽत्मा +सद्वितीयतयेक्षते " इति ॥

एकमेव वस्तु शास्त्रगम्यत्वाकारेण ब्रह्मेत्युच्यते । मानसप्रत्यक्षत्वाकारेणाऽऽत्मेति तत्र शास्त्रगम्यानां ( णां ) जगत्कारणत्वसर्वज्ञत्वादीनां परोक्षत्वेन ब्रह्मणोऽपि परोक्षत्वभ्रमः । अहंप्रत्ययरूपेण मानसप्रत्यक्षेण प्रतीयमानानां देहादीनामब्रह्मत्वात्साक्षिणि चिदात्मन्यप्यब्रह्मत्वभ्रमः । *तयोर्ब्रह्मात्मनोर्भेदेन पदद्वयोपयोगात्प्रतिपाद्यस्याखण्डैकसत्वे सत्यपरोक्षप्रत्यगात्मरूपे ब्रह्मणि महावाक्येनापरोक्षज्ञानोदयात्तथाविधज्ञानोपेतः पुमानत्र ब्रह्मविच्छब्देन विवक्षितः । तादृशस्य परप्राप्तियोग्यत्वात्परमाप्नोतीति हि तत्प्राप्तिः श्रूयते । परशब्दैश्चान्यत्वं= तदत्र न संभवत्यद्वितीयत्वाद्वस्तुनः " नेह नानाऽस्ति किंचन " इति श्रुत्या निषिद्धत्वात् । उत्कृष्टार्थत्वे तु ब्रह्मैव परशब्देनाभिधातव्यमितरस्य सर्वस्य मायामयत्वेन निकृष्टत्वात् । तथा सति ब्रह्माविन्पुमान्ब्रह्मैव प्राप्नोतीत्युक्तं भवति । आथर्वणिकास्तु विस्पष्टमिदमामनन्ति—

---

* प्रकृत्यादित्वात्तृतीया । + उत्पलत्वमित्यर्थः । × उत्पलजातिरपीत्यर्थः । + मोहादित्यनुवर्तते । * मोहकल्पितोपाधिविशिष्टयोरित्यर्थः । = ब्रूत इति शेषः ।

---

१ क. ख. ग. ङ. °त्मब्र° । २ ग. °येष्यते । ३ ख. °ब्दस्यान्य° । ४ क. ख. ग. °स्ततः । " ने° । ५ ग. °ष्टार्थे तु ।

" स यो ह वै तत्परमं ब्रह्म वेद ब्रह्मैव भवति " इति । ननु ग्रामं प्राप्नोतीत्यत्र गतिपूर्वको ग्रामसंयोगः प्राप्तित्वेन प्रसिद्धः । अतो यथा सगुणब्रह्मोपासको मूर्धन्यनाड्योत्क्रम्यार्चिरादिमार्गेण गत्वा ब्रह्मलोकं प्राप्नोति, तथाऽत्रापि ब्रह्मप्राप्तिर्वक्तव्येति चेन्न । उत्क्रान्तिगत्योर्निषेधात् । " न तस्य प्राणा उत्क्रामन्ति " इति श्रुत्योत्क्रान्तिर्निषिध्यते । गतिनिषेधश्च स्मर्यते—

" सर्वभूतात्मभूतस्य सम्यग्भूतानि पश्यतः ।
देवा मार्गे विमुह्यन्ति ह्यपदस्य पदैषिणः " ॥ इति ।

अयमर्थः । सर्वेषां प्राणिनामात्मभूतो यो ब्रह्मवित्सोऽयं सर्वान्प्राणिनः स्वात्मत्वेन सम्यक्पश्यति तस्य मार्गे देवा अपि मुह्यन्ति । उत्तरदक्षिणाधोमार्गेष्वातिवाहिकत्वेनावस्थिता ये देवाः सन्ति ते सर्वेऽपि मार्गत्रयगन्तॄणामुपासकानामिष्टापूर्तानुष्ठायिनामिष्टापूर्तानुष्ठायिनां पापिनां पदं गतिं यथा पश्यन्ति तथा ब्रह्मविदोऽपदस्य गतिरहितस्य पदैषिणो गतिमन्विच्छन्तस्तामदृष्ट्वा भ्रान्ता भवन्तीति । तस्मादस्य ब्रह्म प्राप्ति(प्त)त्वेनोपचर्यत इति । तं च विलयं श्रुतिर्दर्शयति—" न तस्य प्राणा उत्क्रामन्त्यत्रैव समवलीयन्ते ब्रह्मैव सन्ब्रह्माप्येति " इति । बोधात्पुराऽपि ब्रह्मैव सन्नज्ञानाज्जीवत्वभ्रमं प्राप्य पुनर्बोधादूर्ध्वमनुभवेनापि ब्रह्म यथा भवति तथा स्वयमप्येति विलीयते स्वकीयो जीवत्वोपाधिर्विनश्यतीत्यर्थः । यथा स्वकण्ठेऽवस्थितमाभरणमज्ञात्वाऽन्यत्रान्विष्यन्केनचिद्बोधितो हस्तेन संस्पृश्येदानीमेतत्प्राप्तमित्युपचरति, तद्वदौपचारिकी ब्रह्मप्राप्तिर्द्रष्टव्या । तदेवं ब्रह्मस्वरूपविषया मीमांसोपरिष्टाद्भविष्यति । वेदनविषया परप्राप्तिविषया चोदाह्रियते । यद्यपि पूर्वत्र सर्वत्र तत्तदनुवाकस्यावसान एव तत्तद्विषया मीमांसोदाहृता, तथाऽप्यत्र ब्रह्मविदित्यारभ्येत्युपनिषदित्यन्तस्यानुवाकस्यातिप्रौढतया तन्मध्ये मीमांसितव्यानामर्थानां बहुत्वाद्बुद्धिसौकर्याय तत्तद्वाक्यसमीप एव तत्तन्मीमांसोदाह्रियते । या तु देशविशेषे ब्रह्मविदित्यारभ्य नवानुवाका इति प्रसिद्धिः सा त्वध्यापकैः पाठसौकर्याय परिकल्पिता, न त्वर्थानुसारिणी । ते हि तदप्येष श्लोको भवतीत्यस्याः प्रतिज्ञायाः श्लोकपाठस्य च मध्ये तं तमनुवाकं समापयन्ति । न चैतद्युक्तम् । कस्यचिदप्यर्थस्य पर्यवसानाभावात् । तस्मादितरदेशगताध्यापकप्रसिद्ध्या च कृत्स्नोऽप्ययमेक[3] एवानुवाकः । एतदेवाभिप्रेत्य काण्डानुक्रमणिकाभाष्यकारो वारुण्या उपनिषदः " सह नाववतु " " ब्रह्मविदाप्नोति " " भृगुर्वै वारुणिः " इत्यनुवाकत्रयात्मकत्वं व्याजहार । भारद्वाजसूत्रे मुमूर्षोः कर्णे जप्यत्वेनैवमुदाहृतम्- " ब्रह्मविदाप्नोति परम्, भृगुर्वै वारुणिरित्येतावनुवाकौ ब्रह्मविदो दक्षिणे कर्णे जपति[4] " इति । ब्रह्मविदित्यारभ्य भृगुरित्यन्तः (तः) प्राक्तनो ग्रन्थ

---

१ ङ. °मार्गेऽपि मु° । २ ग. घ. °िनां पा° । ३ घ. °मेकः स ए° । ४ ङ. जपत्ये° ।

एक एवानुवाकः। येषां नवानुवाककल्पना तेषामप्येकवल्लीत्वप्रसिद्धिरस्ति। ब्रह्मवल्लीत्येवं तैर्व्याहृतत्वात्। भगवद्भिर्भाष्यकारैरप्यानन्दवल्लीत्येवं व्याहृतम्। अतो बहुस्कन्धयुक्तवल्लीवद्बहुविधावान्तरपाठभेदयुक्तोऽप्येक एवायमनुवाकः। तथा सति बुद्धिविक्षेपानुत्पादनाय तत्तद्वाक्यसमीप एव मीमांसोदाहरणं युक्तम्। अत्र यद्वेदनं ब्रह्मविच्छब्देन व्यवहृतं तस्य स्वातन्त्र्येण पुरुषार्थहेतुत्वं तृतीयाध्यायस्य चतुर्थपादे* चिन्तितम्—

"क्रत्वङ्गमात्मविज्ञानं स्वतन्त्रं वाऽऽत्मनो यतः।
देहातिरेकमज्ञात्वा न कुर्यात्क्रतुगं ततः॥
नाद्वैतधीः कर्महेतुर्हन्ति प्रत्युत कर्म सा।
आचारो लोकसंग्राही स्वतन्त्रा ब्रह्मधीस्ततः॥

आत्मनो देहातिरेकज्ञानमन्तरेण परलोकगामित्वानिश्चयाज्ज्योतिष्टोमादिप्रवृत्तिरेव न स्यादिति क्रतुषु प्रवर्तकत्वेनौपनिषदमात्मज्ञानं कर्माङ्गमिति प्राप्ते ब्रूमः—देहव्यतिरिक्तात्मज्ञानं द्विविधम्। परलोकगामिकर्त्रात्मविज्ञानमेकं द्वितीयं ब्रह्मात्मतत्त्वविज्ञानं[3] चेति। तत्र कर्त्रात्मज्ञानस्य प्रवर्तकत्वेऽपि नाद्वैतब्रह्मात्मतत्त्वज्ञानं प्रवर्तकम्। प्रत्युत क्रियाकारकफलनिषेधेन निवर्तकमेव। ननु तत्त्वविदामपि जनकादीनां कर्मप्रवृत्तिलक्षण आचारो दृश्यते। बाढम्। लोकसंग्रहार्थोऽयमाचारः। यदि तत्त्वविदामपि मुक्तये कर्माण्यनुष्ठेयानि स्युः कथं तर्हि प्रजादिवैयर्थ्यश्रुतिरुपपद्यते[4]। "किं प्रजया करिष्यामो येषां नोऽयमात्माऽयं लोकः" इति। आत्मतत्त्वरूपस्य लोकस्यापरोक्षे सत्यानात्मलोकसाधनभूतायाः प्रजाया वैयर्थ्यं श्रूयते। एवं किमर्था वयमध्येष्यामहे किमर्था वयं यक्ष्यामह इत्याद्युदाहरणीयम्। तस्मादात्मतत्त्वज्ञानं स्वतन्त्रपुरुषार्थसाधनं न तु कर्माङ्गम्"।

तस्य च ज्ञानस्योत्पत्तिकालस्तत्रैव + चिन्तितः—

"इहैव नियतं ज्ञानं पाक्षिकं वा नियम्यते।
तथाऽभिसंधेर्यज्ञादिः क्षीणो विविदिषाजनौ[1]॥
असति प्रतिबन्धेऽत्र ज्ञानं जन्मान्तरेऽन्यथा।
श्रवणायेत्यादिशास्त्राद्वामदेवोद्भवादपि"॥ इति।

श्रवणमननिदिध्यासनेष्वनुष्ठीयमानेष्वस्मिन्नेव जन्मनि ज्ञानं जायत इति निय-

---

* पुरुषार्थोऽतः शब्दादिति बादरायणः। ब्र० सू० अ० ३ पा० ४ अ० १ सू० १। + ऐहिकमप्रस्तुतप्रतिबन्धे तद्दर्शनात्। ब्र० सू० अ० ३ पा० ४ अ० १६ सू० ५१।

---

१ घ. °नौ व्या°। २ ग. °द्यु°। ३ ग. °ज्ञानमिति। ४ ख. °पद्येत। किं°।

ष्यते। न त्विहैव वा जन्मान्तरे वेति कालविकल्पः। कुतः। श्रवणादिषु प्रवर्तमानस्य पुरुषस्येच्छाया ऐहिकज्ञानोत्पत्तिविषयत्वात्। इहैव मे विद्या जायतामित्यभिप्राय पुरुषः प्रवर्तते। न चादृष्टफलानां यज्ञादीनां * तत्साधनत्वेन स्वर्गवज्जन्मान्तरे ज्ञानोत्पत्तिः शङ्कनीया। श्रवणादिप्रवृत्तेः प्रागेव विविदिषामुत्पाद्य यज्ञादीनां चरितार्थत्वात्। तस्मादैहिकत्वेन ज्ञानोत्पत्तिर्नियम्यत इति प्राप्ते ब्रूमः—असति प्रतिबन्धे ज्ञानमिहैव संभवति। सति तु प्रतिबन्धेऽत्रानुष्ठितैः श्रवणादिभिर्जन्मान्तरे विज्ञानमुत्पद्यते। प्रतिबन्धश्च बहुविधः श्रूयते—

श्रवणायापि बहुभिर्यो न लभ्यः शृण्वन्तोऽपि बहवो यं न विद्युः।
आश्चर्यो वक्ता कुशलोऽस्य लब्धा आश्चर्यो ज्ञाता कुशलानुशिष्टः॥ इति।

न च पूर्वजन्मानुष्ठितैः श्रवणादिभिर्जन्मान्तरे ज्ञानोत्पत्तिर्न दृष्टचरेति वाच्यम्। वामदेवस्य गर्भ एवावस्थितस्य ज्ञानोत्पत्तिश्रवणात्। "गर्भ एवैतच्छयानो वामदेव एवमुवाच" इति श्रुतेः। तस्मादिह वा जन्मान्तरे वा ज्ञानोत्पत्तिः।

परमाप्नोतीत्यत्र परशब्दोऽन्यवस्तुवाची न भवति। ब्रह्मव्यतिरिक्तस्य वस्तुनोऽसत्त्वादिति यदुक्तं सोऽयमन्याभावस्तस्यैवाध्यायस्य द्वितीयपादे +चिन्तितः—

"अस्त्यन्यद्ब्रह्मणो नो वा विद्यते ब्रह्मणोऽधिकम्।
सेतुत्वोन्मानवत्त्वाच्च संबन्धाद्भेदवत्त्वतः॥
धारणात्सेतुतोन्मानमुपास्त्यै भेदसंगती।
उपाध्युद्भवनाशाभ्यां नान्यदन्यनिषेधतः"॥ इति।

यदेतद्ब्रह्म नेति नेतीति दृश्यप्रतिषेधेन व्यवस्थापितम्, तस्मादपि ब्रह्मणोऽन्यदस्तीत्यभ्युपगन्तव्यम्। कुतः। सेतुत्वादिव्यपदेशेभ्यः। "अथ य आत्मा स सेतुर्विधृतिः" इति सेतुत्वं चोपदिश्यते। तत्र यथा लोके पारावारवाञ्जलस्य विधारकः सेतुस्तं सेतुं तीर्त्वा जाङ्गलं प्रतिपद्यते, तथा ब्रह्मणोऽपि सेतुत्वेन जगद्विधारकत्वाद्ब्रह्म तीर्त्वा गन्तव्येनान्येन केनाचिद्भवितव्यम्। तथोन्मानव्यपदेशोऽपि ब्रह्मणः श्रूयते—"चतुष्पाद्ब्रह्म" "षोडशकलं ब्रह्म" इति। तच्चोन्मानं सद्वितीय एव गवादौ दृष्टचरं, न त्वद्वितीये कुत्रचित्। तथा संबन्धव्यपदेशः श्रूयते—"सता सौम्य तदा संपन्नो भवति" इति। स च संबन्धः सद्रूपादसतोऽन्यस्य विद्यमानतायामवकल्पते। तथा "आत्मा वा अरे द्रष्टव्यः" इति द्रष्टृद्रष्टव्यभेदव्यपदेशोऽपि भवति। तस्मात्सद्वितीयं ब्रह्मेति प्राप्ते ब्रूमः—न तावद्ब्रह्मणः सेतुत्वं मुख्यं संभवति मृद्दारुमयत्वप्रस-

* ज्ञानसाधनत्वेन। + परमतः सेतून्मानसंबन्धभेदव्यपदेशेभ्यः। ब्र० सू० अ० ३ पा० २ सू० ३१।

१ क. ख. 'नतयाऽव°। २ ब. °यामेव क°।

श्रवात् । केनचित्सेतुसामान्येन सेतुत्वविवक्षायां विधारकत्वमात्रं विवक्ष्यताम् । न सद्वितीयत्वम् । सेतुर्विधृतिरितिश्रवणात् । उन्मानं तूपास्त्यै व्यपदिश्यते तत्प्रक स्वात्, न तु तत्त्वावबोधाय । भेदव्यपदेशश्चोपाध्युद्भवमपेक्ष्य घटाकाशमठाकाश पपद्यते । संबन्धव्यपदेशश्चोपाधिनाशमपेक्ष्य घटभङ्गे घटाकाशमहाकाशवदुपपद्यते तस्माद्ब्रह्मव्यतिरिक्तवस्तुसाधकहेतूनामन्यथासिद्धत्वादेकमेवाद्वितीयमित्यन्यवस्तुनिषेधा द्वितीयमेव ब्रह्म ।

प्राप्नोतीत्यत्र ब्रह्मलोकवत्प्राप्तिर्न भवत्युत्क्रान्तिनिषेधादिति यदुक्तं सोऽयं निषे तुर्थाध्यायस्य द्वितीयपादे *चिन्तितः—

" किं जीवादथवा देहात्प्राणोत्क्रान्तिर्निवार्यते ।
जीवान्निवारणं युक्तं जीवेद्देहोऽन्यथा सदा ॥
तप्ताश्मजलवद्देहे प्राणानां विलयः स्मृतः ।
¹उच्छ्वयत्यत्र देहोऽतो देहात्सा विनिवार्यते ॥

" न तस्य प्राणा उत्क्रामन्ति " इति तत्त्वविदः प्राणानामुत्क्रान्तिर्निषिध्यते निषेधस्यापादानं जीवः । न तु देहः । अन्यथा देहानुत्क्रान्तौ मरणाभावः प्रसङ्गे प्राप्ते ब्रूमः—तप्ताश्मनि प्रक्षिप्तं जलं न यथाऽन्यत्र गच्छति नापि तत्र दृश्यते स्वरूपेण लीयते तद्वत्तत्त्वविदः प्राणा देहादनुत्क्रामन्तोऽपि न देहेऽवतिष्ठन्ते विलीयन्ते । अतो जीवनासंभवान्मृतो देह इति व्यवहारः । न चानुत्क्रान्तौ न देह इति व्यवहारः । अनुत्क्रान्तानां प्राणानां देहेऽवस्थानाभावे देहस्योच्छून लिङ्गम् । नन्वियतः प्रयासाद्वरं देहादुत्क्रान्तिरस्तु प्रतिषेधस्तु जीवापादानको भविष्य मैवम् । देहादुत्क्रम्य जीवेन सहावस्थितेषु प्राणेषु देहान्तरग्रहणस्याऽऽवश्यकत्वान्मु न स्यात । तस्मादुत्क्रान्तिप्रतिषेधस्य देह एवापादानं न जीवः " ।

प्राप्तिशब्देन जीवत्वोपाधिविलयो विवक्षित इत्युक्तं सोऽपि विलय +चिन्तितः—

" तस्य वागादयः स्वस्वहेतौ लीनाः परेऽथवा ।
गताः कला इति श्रुत्या स्वस्वहेतुषु तल्लयः ॥
नद्यब्धिलयसाम्योक्तेर्विद्वद्दृष्ट्या लयः परे ।
अन्यदृष्टिपरं शास्त्रं गता इत्याद्युदाहृतम् ॥

* प्रतिषेधादिति चेन्न शारीरात् । अ० सू० अ० ४ पा० २ अ० ६ सू० १२ निश्चेष्टो भवतीत्यर्थः । + तानि परे तथा ह्याह । अ० सू० अ० ४ पा० २ अ० ७ सू० १

१ क. ख. ङ. ब्रूमः ।

तत्त्वज्ञानिनो वागादयः प्राणा विलीयमानाः प्रातिस्विकेषु कारणेषु विलीयन्ते न तु परमात्मनि । गताः कलाः पञ्चदश प्रतिष्ठा इति कलाशब्दवाच्यानां प्राणादीनां प्रतिष्ठाशब्दवाच्यस्वस्वकारणप्राप्तिप्रतिपादिकायाः " यत्रास्य पुरुषस्य मृतस्याग्निं वागप्येति वातं प्राणश्चक्षुरादित्यम् " इत्यादिश्रुतेरिति प्राप्ते ब्रूमः—तत्त्वविद्दृष्ट्या परमात्मन्येव लय इति श्रुत्यन्तरान्निश्चीयते—

" यथा नद्यः स्यन्दमानाः समुद्रेऽस्तं गच्छन्ति नामरूपे विहाय ।
तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम् " ॥ इति ।

श्रुतौ नद्यब्धिलयदृष्टान्त उपन्यस्यते । अथ दार्ष्टान्तिके परमात्मनि लय इत्ययमर्थो न विशदस्तर्हि श्रुत्यन्तरे विशदो गम्यते—" यथेमा नद्यः स्यन्दमानाः समुद्रायणाः समुद्रं प्राप्यास्तं गच्छन्ति भिद्येते तासां नामरूपे समुद्र इत्येवं प्रोच्यते । एवमेवास्य परिद्रष्टुरिमाः षोडश कलाः पुरुषायणाः पुरुषं प्राप्यास्तं गच्छन्ति भिद्येते चाऽऽसां नामरूपे पुरुष इत्येवं प्रोच्यते " इति । भिद्येते विलीयेते । सेयं श्रुतिस्तत्त्वविद्दृष्टिविषया । गताः कला इति शास्त्रं तु तटस्थपुरुषप्रतीतिविषयम् । म्रियमाणे तत्त्वविदि समीपवर्तिनः पुरुषाः स्वस्वदृष्ट्या तदीयवागादीनामप्यग्न्यादिषु लयं मन्यन्तेऽतः श्रुत्योर्न विरोधः । तस्मात्परमात्मनि तत्त्वविदः प्राणानां विलयः " ।

उपाधिविलये यन्मुक्तिरूपं त[त्त]स्मिन्नेवाध्याये चतुर्थपादे *चिन्तितम्—

"नाकवन्नूतनं मुक्तिरूपं यद्वा पुरातनम् ।
अभिनिष्पत्तिवचनात्फलत्वादपि नूतनम् ॥
स्वेन रूपेणेतिवाक्ये स्वशब्दात्तत्पुरातनम् ।
आविर्भावोऽभिनिष्पत्तिः फलं चाज्ञानहानितः ॥

" एष संप्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते " इति श्रूयते । अस्यायमर्थः । सम्यक्प्रसीदत्युपाध्युपशान्ताविति संप्रसादो जीवः । स च शरीरत्रयाभिमानं परित्यज्य परं ब्रह्म प्राप्य मुक्तरूपेणावतिष्ठत इति । तत्रैतन्मुक्तिरूपं न जीवस्य पूर्वसिद्धं किंतु स्वर्गवदागन्तुकम् । कुतः । अभिनिष्पद्यत इत्युत्पाद्यत्वश्रवणात् । पूर्वसिद्धत्वे संसारदशायामपि सद्भावेन फलत्वं न स्यात्तस्मात्स्वर्गवदिदं नूतनं मुक्तिरूपमिति प्राप्ते ब्रूमः—स्वेन रूपेणाभिनिष्पद्यत इति स्वशब्देन विशेषितत्वात्पूर्वमपि विद्यत एव मुक्तिरूपम् । न चात्र स्वशब्दः स्वकीयत्वमभिधत्ते विशेषणवैयर्थ्यप्रसङ्गात् । यद्यद्रूपं मुक्तावुपादत्ते तत्तत्स्वकीयमेवेति कस्य व्यावृत्तये विशे-

* संपद्याऽऽविर्भावः स्वेनशब्दात् । ब्र० सू० अ० ४ पा० ४ अ० १ सू० १ ।

१ क. ग. घ. ङ. °विदो दृष्ट्या । २ म. घ. °तनाग्° ।

ष्येत। आत्मवाचित्वे तु स्वशब्दस्य स्वकीयत्वव्यावृत्तिः प्रयोजनम्। न चाभिनिष्पत्तिरुत्पत्तिः पूर्वसिद्धस्योत्पत्त्यसंभवात्। किं तर्हि तत्त्वज्ञानेन ब्रह्मत्वाविर्भावोऽभिनिष्पत्तिः। न चैवं सत्युपसंपद्याभिनिष्पद्यत इत्यनयोः पुनरुक्तिरिति शङ्कनीयम्। संपत्तिशब्देन तत्पदार्थशोधनस्य विवक्षितत्वात्। अभिनिष्पत्तिस्तु वाक्यार्थावबोधः। न च पूर्वसिद्धत्वे मुक्तिरूपस्य फलत्वविरोधः। निवृत्ताज्ञानरूपत्वाकारेण पूर्वसिद्धत्वाभावात्। तस्मात्पुरातनं वस्त्वेव मुक्तिरूपम्"।

तत्रैवान्य*श्चिन्तितम्—

"मुक्तरूपाद्ब्रह्म भिन्नमभिन्नं वा विभिद्यते।
संपद्य ज्योतिरित्येवं कर्मकर्तृभिदोक्तितः॥
अभिनिष्पन्नरूपस्य स उत्तमपुमानिति।
ब्रह्मत्वोक्तेरभिन्नं तद्भेदोक्तिरुपचारतः॥

पूर्वाधिकरणे निर्णीतं यदेतन्मुक्तस्य स्वरूपं तत्परस्माद्ब्रह्मणो भिन्नं भवितुमर्हति कुतः। कर्मकर्तृव्यपदेशात्। "एष संप्रसादः परं ज्योतिरुपसंपद्य" इत्यत्र संप्रसादशब्दोदितो जीव उपसंपत्तौ कर्तृत्वेनोपादिश्यते। ज्योतिःशब्दवाच्यं च ब्रह्म कर्मत्वे॰ तस्मान्मुक्तस्य जीवस्य स्वरूपं ब्रह्मणो भिन्नमिति प्राप्ते ब्रूमः—ज्योतिरुपसंपद्य वाक्यं तत्पदार्थशुद्धिविषयमुक्तम्। अतस्तदानीं भेदोऽस्तु नाम। तदुपरि स्वेन रूपेणाभिनिष्पद्यत इति वाक्यं वाक्यार्थदशापन्नं मुक्तस्वरूपं प्रतिपादयति। न च तस्य ब्रह्मणा सह भेदोऽस्ति। "स उत्तमः पुरुषः" इति वाक्ये तच्छब्देनाभिनिष्पन्नमुक्तस्वरूपं परामृश्य तस्योत्तमपुरुषशब्दवाच्यब्रह्मस्वरूपत्वाभिधानात्। तस्मान्मुक्तरूपं ब्रह्माभिन्नम्"।

पुनरन्य=श्चिन्तितम्—

"क्रमेण युगपद्वाऽस्य सविशेषाविशेषते।
विरुद्धत्वात्कालभेदाद्व्यवस्था श्रुतयोस्तयोः॥
मुक्तामुक्तदृशोर्भेदाद्व्यवस्थासंभवे सति।
अविरुद्धं यौगपद्यमश्रौतं क्रमकल्पनम्"॥

मुक्तस्य स्वरूपभूतं ब्रह्म श्रुतिषु द्विधा प्रतिपाद्यते। क्वचित्सविशेषं क्वचिन्निर्विशेषम्। तथा हि—"य आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसंकल्पः" इति सविशेषत्वश्रुतिः। "स यथा सैन्धवघन

* अविभागेन दृष्टत्वात्। ब्र॰ सू॰ अ॰ ४ पा॰ ४ अ॰ २ सू॰ ४। = ब्राह्मेण

निरुपन्यासादिभ्यः। ब्र॰ सू॰ अ॰ ४ पा॰ ४ अ॰ ३ सू॰ ५।

१ क. ख. ङ. °क्तस्य स्व°।

न्तरोऽबाह्यः कृत्स्नो रसघन एवैवं वा अरेऽयमात्माऽनन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एव " इति निर्विशेषत्वश्रुतिः । ते एते सविशेषत्वनिर्विशेषत्वे मुक्तिदशायां ब्रह्मणो न युगपत्संभवतः परस्परविरुद्धत्वात् । अतः कालभेदेनोभे व्यवस्थापनीये इति प्राप्ते ब्रूमः— प्रतिपत्तृभेदाद्युगपदेव सविशेषत्वनिर्विशेषत्वे उपपद्येते । मुक्तप्रतिपत्त्या निर्विशेषत्वमेव । बद्धप्रतिपत्त्या तु मुक्तस्वरूपं ब्रह्म सर्वज्ञत्वादिगुणविशिष्टं सज्जगत्कारणत्वेनावभासते । नहि मुक्ताः पुरुषाः कदाचिदपि सर्वज्ञत्वसत्यसंकल्पत्वादिगुणयुक्ता वयमिति प्रतिपद्यन्ते । तत्प्रतिपत्तिहेतुभूताया अविद्याया विनाशितत्वात् । बद्धपुरुषास्त्वविद्यायुक्ताः सन्तो निर्विशेषमेव ब्रह्म सर्वज्ञत्वादिगुणविशिष्टं कल्पयन्ति । अतः प्रतिपत्तृभेदाद्युगपद्व्यवस्थासिद्धौ किमनेन कालभेदकल्पनेन । तस्माद्युगपदेव सविशेषत्वनिर्विशेषत्वे ।

मुक्तावन्यो विशेषस्तृतीयाध्यायस्य चतुर्थपादे *चिन्तितः—

" मुक्तिः सातिशया नो वा फलत्वाद्ब्रह्मलोकवत् ।
स्वर्गवच्च नृभेदेन मुक्तिः सातिशयैव हि ॥
ब्रह्मैव मुक्तिर्न ब्रह्म क्वचित्सातिशयं श्रुतम् ।
अत एकविधा मुक्तिर्वेधसो मनुजस्य वा[1] ॥

यथा ब्रह्मलोकाख्यं फलं सालोक्यसारूप्यसामीप्यसार्ष्टिभेदेन चतुर्विधम् । तत्र सार्ष्टिर्नाम चतुर्मुखेन( ण ) समानैश्वर्यत्वम् । यथा वा कर्मभूयस्त्वात्फलभूयस्त्वमितिन्यायेन स्वर्गो बहुविधस्तथा मुक्तिरपि फलत्वाविशेषात्सातिशयेति प्राप्ते ब्रूमः—मुक्तिर्नाम निजसिद्धब्रह्मस्वरूपमेव न तु स्वर्गवदागन्तुकं किंचिद्रूपमिति वक्ष्यते । ब्रह्म चैकविधत्वेन श्रुतं निर्णीतं च । तस्माच्चतुर्मुखस्य मानुषस्य वा मुक्तिरेकविधैव । सालोक्यादिविशेषस्तु जन्यरूपत्वादुपासनातारतम्येन सातिशयो भविष्यति । मुक्तिस्तु न तादृशीति सिद्धम् " ।

यथोक्तैर्दशभिर्विचारैर्निर्णीतौ ज्ञानमोक्षौ साधनफलरूपौ ब्रह्मविदाप्नोति परमिति वाक्येन सूत्रितौ । इदानीं तस्य सूत्रस्य संक्षिप्तव्याख्यानरूपां कांचिदृचमुदाहरति—

**तदेषाऽभ्युक्ता । सत्यं ज्ञानमनन्तं ब्रह्म । यो वेद निहितं गुहायां परमे व्योमन् । सोऽश्नुते सर्वान्कामान्त्सह । ब्रह्मणा विपश्चितेति,** इति ।

* एवं मुक्तिफलानियमस्तदवस्थावधृतेस्तदवस्थावधृतेः । ब्र०सू० अ० ३ पा० ४ अ० १७ सू० ५२ ।

१ क. ख ङ. 'पत्तासि' । २ ग. च । ३ ग. घ मनुष्यस्य ।

तत्तस्मिन्पूर्वसूत्रार्थे तदभिप्रायपरिज्ञानार्थमेषाऽनन्तरमेव वक्ष्यमाणा काचिदृगा
क्ताऽभितः कथिता। सर्वोऽपि सूत्राभिप्रायस्तस्यां विस्पष्ट इत्यर्थः। ब्रह्मविदित्यु
कीदृशं ब्रह्मेत्येवं बुभुत्सोदयात्सत्यादिभिश्चतुर्भिः पदैस्तत्स्वरूपमुच्यते। तानि च पदा
समानाधिकरणत्वाद्विशेषणविशेष्यरूपाणि। यथा नीलं महत्सुगन्ध्युत्पलमित्यत्र विशे
णाविशेष्यभावस्तद्वत्। तत्र वेद्यतया विवक्षितत्वात्प्रधानं ब्रह्म विशेष्यं सत्यादिपद
च स्वार्थविपरीतेभ्यस्तद्ब्रह्म व्यावर्तयन्ति। ननु विवक्षितोत्पलविपरीतान्यन्यान्युत्पल
विद्यन्ते रक्तमुत्पलं स्वल्पमुत्पलमीषद्गन्धमुत्पलमित्येवं दृष्टत्वात्। अतो विवक्षितस्यो
लस्य तेभ्यो व्यावृत्तये नीलादिपदानि। अत्र त्वनृतं ब्रह्म जडं ब्रह्म परिच्छिन्नं ब्रह्मे
विपरीतानि ब्रह्माणि न सन्ति। यथाऽसावादित्य एकस्तद्वद्ब्रह्माप्येकमेव। तस्य व्य
र्त्याभावात्सत्यादिविशेषणानि व्यर्थानीति चेन्न। तेषां लक्षणरूपविशेषणत्वेन[1] व्यावर्त
द्भावात्। सजातीयमात्राद्व्यावर्तकं केवलं विशेषणम्। स्वेतरकृत्स्नव्यावर्तकं लक्षण
विशेषणमिति तयोर्विवेकः। तथा सत्यब्रह्मरूपेभ्योऽसत्यजडपरिच्छिन्नेभ्यो व्यावृ
सत्यादिपदानि भविष्यन्ति। अवकाशरूपमाकाशमित्येतस्मिँल्लक्षणे सजातीयस्याऽऽ
शान्तरस्य व्यावर्त्यस्याभावेऽपि विजातीयानि मूर्तद्रव्याणि यथा व्यावर्त्यन्ते, तद्वदस
दीन्यत्र व्यावर्त्यन्ताम्। सत्यादिपदानि ब्रह्म विशेष्टुं प्रवृत्तया परार्थत्वात्परस्परा
क्षाण्येव ब्रह्मशब्देन संबध्यन्ते, सत्यं ब्रह्म ज्ञानं ब्रह्मानन्तं ब्रह्मेति। यद्वस्तु येन र
निश्चीयते तच्चेत्कदाचिदपि तद्रूपं न व्यभिचरेत्तदा तद्वस्तु सत्यमित्युच्यते। यथा
स्याधिष्ठानभूता रज्जुः। यस्य तु व्यभिचारोऽस्ति तदनृतम्। यथा रज्ज्वां प्र
सर्पस्तथा सर्वजगदधिष्ठानभूतं ब्रह्म मुक्तावपि व्यभिचाराभावात्सत्यम्। ज्ञानबाध्य
मुक्तौ व्यभिचरितत्वाज्जगदनृतम्। अत एव माण्डूक्यश्रुतिर्जगतो मिथ्यात्वं
यति––“मायामात्रमिदं द्वैतम्” इति। छन्दोगाश्च दृष्टान्तत्वेन विकारस्य
देरनृतत्वं प्रकृतेश्च मृत्तिकायाः सत्यत्वमामनन्ति––“वाचाऽऽरम्भणं विकारो ना
मृत्तिकेत्येव सत्यम्” इति। ब्रह्म जडं भवितुमर्हति सत्यत्वान्मृत्तिकावदित्याश
ज्ञानमित्युच्यते। व्यावहारिकसत्यं त्वचिद्रूपमित्यभिप्रायः। ब्रह्म परिच्छिन्नं
तुमर्हति ज्ञानशब्दार्थत्वाद्घटज्ञानवदित्याशङ्क्यानन्तमित्युच्यते। ज्ञायते
घटादिकमनेनेति व्युत्पत्त्या घटस्फुरणयोः संबन्धजनकोऽन्तःकरणवृत्तिविशेषो
ज्ञानशब्दस्यार्थः। स च भौतिकः। “अन्नमयं हि सोम्य मनः” इति
तस्माद्युक्तं तस्य ज्ञानस्य परिच्छिन्नत्वम्। इह तु ज्ञप्तिर्ज्ञानमिति व्युत्पत्त्या
मेवोच्यते, तस्य भौतिकत्वाभावादनन्तत्वम्। अन्तः परिच्छेदः। स च त्रिवि

---

१ क. ख. ग. ङ. °र्तं रूपं लक्षणमिति।

देशकृतः कालकृतो वस्तुकृतश्चेति । तत्र " आकाशवत्सर्वगतश्च नित्यः " इति श्रुत्या सर्वदेशसर्वकालसंबन्धावगमाद्देशकालपरिच्छेदौ न स्तः ।

" ब्रह्मैवेदममृतं पुरस्तात्पश्चाद्ब्रह्म दक्षिणतश्चोत्तरेण ।
अधश्चोर्ध्वं च प्रसृतं ब्रह्मैवेदं विश्वमिदं वरिष्ठम्" ॥

इति श्रुतौ सर्वदेशकालसंबन्धवत्सर्ववस्त्वात्मकत्वस्यापि श्रवणाद्ब्रह्मव्यतिरिक्तवस्त्वभावेन वस्तुपरिच्छेदोऽपि नास्ति । तदेवं सत्यादिशब्दैर्मिथ्यात्वजाड्यपरिच्छेदेभ्यो व्यावर्तितं तद्ब्रह्मेति वाक्यार्थः संपद्यते । ननु सत्यादिपदानामतद्व्यावृत्तिपरत्वाद्ब्रह्मशब्दार्थस्योत्पलादिशब्दार्थवल्लोके प्रसिद्ध्यभावाद्वाक्यं शून्यपरं प्रसज्येत—

" मृगतृष्णाम्भसि स्नातः खपुष्पकृतशेखरः ।
एष वन्ध्यासुतो याति शशशृङ्गधनुर्धरः " ॥

इतिवाक्यार्थवदिति चेन्न । बृंहतेर्धातोरर्थानुगमेन ब्रह्मशब्दार्थस्य प्रसिद्धत्वात् । प्रकारान्तरेणापि प्रसिद्धिर्भगवद्भिर्दर्शिता —"सर्वस्याऽऽत्मत्वाच्च ब्रह्मास्तित्वप्रसिद्धिः । सर्वो ह्यात्मास्तित्वं प्रत्येति " इति । ब्रह्मणश्चाऽऽत्मत्वादस्तित्वं प्रसिद्धम् । ब्रह्मणश्चाऽऽत्मत्वम् " अयमात्मा ब्रह्म " इत्यादिश्रुतिसिद्धम् । अतः शून्यार्थत्वाभावे सति सत्यादिपदानां विशेषणत्वं लक्षणत्वं चोपपद्यते । अन्यथा किं विशेष्येत किं वा लक्ष्येत । वस्तुतो ब्रह्मान्तराभावेऽप्यविद्यादशायामनृतजडपरिच्छिन्नैरुपाधिभिरुपहितत्वाकारेणानृतत्वादिधर्मविशिष्टानां त्रयाणां[3] ब्रह्मान्तराणां सजातीयानां सद्भावाद्विवक्षितं ब्रह्म तेभ्यो ब्रह्मभ्यः सत्यादिपदैर्विशेष्यते[4]* । लक्षणपक्षे तु विजातीयेभ्योऽप्युपाधिभ्यो व्यावर्त्यते । यथा द्रष्टृदर्शनदृश्यादित्रिपुटीव्यवहाराद्व्यावर्त्य भूमपदार्थो लक्ष्यते तद्वत् । तथा च च्छन्दोगा आमनन्ति—"यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा" इति । अन्योऽन्यत्पश्यतीत्येवमादिका त्रिपुटी यस्मिन्पदार्थे नास्ति स पदार्थो भूमेत्यतद्व्यावृत्त्या सर्वव्यवहाररहितं वस्तु लक्ष्यते । एवमत्रापि सत्यादिपदैर्मिथ्यात्वादिव्यावृत्त्या तद्रहितं ब्रह्म लक्ष्यताम् । अत्र केवलविशेषणत्वपक्षे सत्यादिपदानि त्रीण्यपि परस्परनियामकत्वेन मिलित्वा ब्रह्मस्वरूपं प्रतिपादयन्ति । तथा हि—बाधराहित्यवाची सत्यशब्दस्त्रिविधं सत्यमाचष्टे । प्रातिभासिकं व्यावहारिकं पारमार्थिकं चेति त्रैविध्यम् । शुक्तिरजतादीनां यावत्प्रतिभासं बाधराहित्यात्प्रातिभासिकं सत्यत्वम् । पृथिव्यादिभूतानां शरीरादिभौतिकानां च तत्त्वज्ञानोदयात्पूर्वं लोकव्यवहारे बाधाभावाद्व्यावहारिकं सत्यत्वम् । वेदान्तोत्पादितविज्ञानादूर्ध्व-

* व्यावर्त्यत इत्यर्थः ।

१ घ. °स्ताद्ब्रह्म पश्चा° । २ घ. °वाक्यव° । ३ क. ङ. °णां स° । ४ ग. °विशिष्य° ।
५ ग. घ. °हारैर्बाधा° ।

मपि बाधाभावाद्ब्रह्मणः पारमार्थिकं सत्यत्वम् । तत्राविशेषेण त्रिष्वपि प्रवर्तमानः सत
शब्दो ज्ञानानन्तशब्दाभ्यां नियमितः सन्ब्रह्मण्येव पर्यवस्यति । न हि व्यावहारिका
तिभासिकयोश्चिद्रूपत्वमपरिच्छिन्नत्वं वाऽस्ति । ज्ञानशब्दोऽपि चिद्वस्तुनि बुद्धिवृ
ज्ञाने च प्रवर्तमानः सत्यानन्तशब्दाभ्यां नियमितश्चिद्रूपे ब्रह्मण्येवावतिष्ठते । न ह
बुद्धिवृत्तिर्ब्रह्मवदत्यन्तमबाध्या त्रिविधपरिच्छेदरहिता वा । अनन्तशब्दश्च देशप
च्छेदरहित आकाशे सर्वपरिच्छेदरहिते ब्रह्मणि च प्रवर्तमानः सत्यज्ञानशब्दाभ्यां नि
मितो ब्रह्मण्येवावतिष्ठते । न ह्याकाशस्य पारमार्थिकं सत्यत्वं स्फुरणत्वं वाऽस्ति
तदेवं परस्परं नियमितानि त्रीणि सत्यादिपदानि कूटस्थं चिद्रूपमद्वितीयं ब्रह्म प्रति
दयन्ति । तदुक्तं **पूर्वाचार्यैः**—

"कौटस्थ्यमेव सत्यत्वं स्फुरणं ज्ञानमुच्यते ।
आनन्त्यमेकता चैवं बोध्यते ब्रह्म तैस्त्रिभिः" ॥ इति ।

तेष्वनन्तशब्द इतरव्यावृत्तिमुखेनैव ब्रह्म विशिनष्टि । सत्यज्ञानशब्दौ तु स्वार्थं
कूटस्थत्वं स्फुरणं च *समर्पयन्तौ तद्विपरीतं मिथ्यात्वं जाड्यं चार्थान्निवारय
विशेषणत्वं प्राप्नुतः । तदुक्तं **वार्तिककृद्भिः**—

"तत्रानन्तोऽन्तवद्वस्तुव्यावृत्त्यैव विशेषणम् ।
स्वार्थार्पणप्रणाड्या च परिशिष्टौ विशेषणम् ॥
शब्दात्प्रतीयते तावत्संग+तिर्धर्मधर्मिणोः ।
मानान्तरादपोहस्तु न शाब्दस्तेन स स्मृतः" ॥ इति ।

सत्यत्वज्ञानत्वयोर्मिथ्यात्वजडत्वयोश्च सहावस्थानान्यथानुपपत्तिर्मानान्तरम् । य
धर्मधर्मिसंबन्धो न वास्तवस्तथाऽपि ब्रह्मबोधस्य द्वारं भवत्येव । मिथ्याभूतेन प्रति
म्बेन सत्यबिम्बावबोधदर्शनात्स्वप्नकामिनीदर्शनेन भाविश्रेयःसूचनाच्च । तदेवं सत्या
विशेषणत्रयेण ब्रह्मस्वरूपावबोधादेतावद्ब्रह्मणो लक्षणम् । यद्वा तेषां पदानामेकैक
निरपेक्षं ब्रह्मलक्षणम् । सत्यशब्देन मिथ्याभूतयोरज्ञानतत्कार्ययोर्व्यावृत्तौ सत्य
खण्डबोधं ब्रह्मैकमेव परिशिष्यते । ब्रह्मण उपलक्षको यः सत्यत्वधर्मः सोऽप्यविद्या
र्यत्वान्मिथ्यैवेति सत्यशब्देनैव व्यावर्त्यते । यथा कलुषिते जले प्रक्षिप्तं कतकरजः
कालुष्यं निवर्तयत्स्वयमपि निवर्तते । यथा वा भुक्तान्नजरणाय स्वीकृतमौषधमन्
स्वात्मानमपि जरयति तद्वत् । न च सत्यत्वधर्मे व्यावर्तिते सति ब्रह्मणो मिथ्या

* बोधयन्तावित्यर्थः । + संबन्ध इत्यर्थः ।

१ ध. वर्तमानः । २ ग. च. वर्तमानः । ३ व. ण्येव ति° । ४ ग. घ. वर्तमानः । ५ °स्पराणि° ।

प्रसज्येतेति शङ्कनीयम् । मिथ्यात्वस्याऽऽदावेव निवर्तितत्वात् । न हि कतकरजसो निवृत्तौ पूर्वकालुष्यं पुनरागच्छति । नाप्यौषधे जीर्णे पुनरन्नमजीर्णं भवति । सत्यत्वमिथ्यात्वयोरुभयोरपि व्यावृत्तौ निर्धर्मकं ब्रह्मेति लक्षितं भवति । न च तादृशं नास्त्येवेति शङ्कनीयं सदात्मरूपत्वानुपपत्तेः । सद्रूपत्वमात्मरूपत्वं च छन्दोगा आमनन्ति "सदेव सोम्येदमग्र आसीत्" इति सद्वस्तु प्रक्रम्य—"तत्सत्यं स आत्मा" इति श्रवणात् । अतो यदत्र सत्यशब्देन विवक्षितं तदेव सद्रूपमात्मरूपं चेत्यवगम्यते । न हि तेजसस्तमस्त्वमिव सतोऽसत्ता संभवति । आत्मनोऽसत्त्वं भाष्यकारवचनमुदाहृत्य पूर्वमेव निराकृतम् । किंच सत्यत्वमिथ्यात्वादिकल्पनाया अधिष्ठानत्वादपि ब्रह्मणो नासत्यत्वम् । न हि निरधिष्ठानो भ्रमः संभवति । एतदेवाभिप्रेत्य छान्दोग्ये "तद्धैक आहुरसदेवेदमग्र आसीदेकमेवाद्वितीयं तस्मादसतः सज्जायत" इति परकीयमतत्वेनासत्पक्षमुपन्यस्य "कुतस्तु खलु सोम्यैवं स्यादिति होवाच कथमसतः सज्जायेत" इति तं पक्षं दूषयित्वा "सत्त्वेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्" इति सत्पक्षं स्वकीयमतत्वेनोपसंहरति । युक्तश्चायमेव पक्षः । असतो जगदुपादानत्वे तु पृथिवी नास्त्यापो न सन्तीति सर्वं जगदसदनुविद्धं प्रतीयेत न त्वेवं प्रतीयते । किं त्वस्ति पृथिवी सन्त्याप इत्येवं सदनुविद्धमेव सर्वं प्रतीयते । तस्माज्जगत्कारणं ब्रह्म सद्रूपमेव । यथा छान्दोग्ये ब्रह्मणः कारणत्वमुपजीव्य सत्त्वासत्त्वपक्षयोर्गुणदोषावुपन्यस्तावेवमत्रापि ब्रह्मणः प्रत्यगात्मरूपत्वमुपजीव्य सत्त्वासत्त्वपक्षयोस्तावुपन्यासिष्येते—"असन्नेव स भवति । असद्ब्रह्मेति वेद चेत् । अस्ति ब्रह्मेति चेद्वेद । सन्तमेनं ततो विदुः" इति । कठाश्चाऽऽमनन्ति—"अस्तीत्येवोपलब्धव्यः" इति तस्माद्वस्तुतः सत्यत्वधर्मरहितमपि ब्रह्म तत्कल्पनाधिष्ठानत्वात्सद्रूपमेव । "परस्परविरोधे हि न प्रकारान्तरस्थितिः" इतिन्यायेन सत्यत्वमिथ्यात्वोभयराहित्यमयुक्तमिति चेत् । मैवम् । नपुंसकव्यक्तिवत्तदुपपत्तेः । यथा परस्परविरुद्धस्त्रीत्वपुरुषत्वोभयरहिता सा व्यक्तिस्तद्वत् । प्रत्यक्षेण प्रमिताऽसौ व्यक्तिरिति चेत्तर्हि ब्रह्मापि श्रुत्या प्रमीयताम् । श्रुतिस्तु सत्यं ब्रह्मेति सत्यशब्दवाच्यत्वं ब्रुवती सत्यत्वधर्ममङ्गी करोतीति चेन्न । "यतो वाचो निवर्तन्ते" इति वाच्यत्वप्रतिषेधश्रुतेः । सत्यशब्दस्तु * व्यावहारिकसत्यत्वधर्मवाचकतया लोके व्युत्पन्नः सन्ब्रह्मण्यारोपितं व्यावहारिकसत्यत्वधर्ममुपजीव्य तद्विरुद्धं मिथ्यात्वं निराकुर्वन्धर्मद्वयरहितं सन्मात्रं ब्रह्मतत्त्वं +लक्षयति । यथा पादतले लग्नकण्टकमन्येन कण्टकेनोद्धृत्य कण्टकद्वयं परित्यज्य केवलं पादमवशेषयति तद्वत् । तस्मात्सत्यं ब्रह्मेत्येतल्लक्षणं निर्दो-

* व्यावहारिकश्चासौ सत्यत्वधर्मश्चेति समासः । + बोधयतीत्यर्थः ।

१ ग. °वृत्तः पू° । २ ख. नास्तीति । ३ क. ख. घ. ङ. °त्मत्वं छन्दो° । ४ ख. °त्मा" इत्युपसंहारात् । ५ ग. घ. °ति तत्पक्षं । ६ क. ख. ङ. °कत्वब्र° ।

षम् । ननु ज्ञानं ब्रह्मणि क्रिया प्रसज्येत । तथा हि । ज्ञायतेऽनेनेति व्युत्पत्तौ ब्रह्मणो ज्ञानक्रियाकरणत्वं भावार्थव्युत्पत्तौ तु क्रियारूपत्वम् । न चोभयं युज्यते । "निष्कल निष्क्रियं शान्तम्" इति क्रिया प्रतिषिध्यते । तस्मादेतल्लक्षणं दुष्टमिति चेत् । मैवम् सत्यशब्दवज्ज्ञानशब्दस्यापि लक्षणत्वात् । धात्वर्थस्तु बुद्धेर्वृत्तिः । तथा चोपदेशसाह स्र्यामभिहितम्—

" आत्माभासस्तु तिङ्वाच्यो धात्वर्थश्च धियः क्रिया ।
उभयं त्वविवेकेन जानातीत्युच्यते मृषा ॥
चैतन्यप्रतिबिम्बेन व्याप्तो बोधोऽभिजायते ।
बुद्धेः शब्दादिनिर्भासस्तेन मोमुह्यते जगत् " ॥ इति ।

चैतन्यप्रतिबिम्बयुक्तायां शब्दस्पर्शादिविषयावभासिकायां बुद्धौ व्युत्पन्नो ज्ञानश ब्रह्मण्यारोपितसर्वदृश्यभासकत्वधर्मं जडत्वनिवारणायोपजीव्य ततस्तेनापि धर्मेण विरहि नित्यचैतन्यं प्रत्यगात्मरूपं ब्रह्मतत्त्वमुपलक्षयति । तदेतत्सर्वं वार्तिककारैर्विस्पष्ट भिहितम्—

" बुद्धेः प्रत्ययकारित्वं तत्साक्षिण्युपचर्यते ।
आत्मचैतन्यसंदीप्तां वृत्तिं धीः कुरुते यतः ॥
चैतन्यालिङ्गिताः सर्वास्तप्तायोविस्फुलिङ्गवत् ।
धीवृत्तयो हि जायन्ते न क्वचिच्चिद्विवर्जिताः ॥
चैतन्यखचितान्दृष्ट्वा प्रत्ययान्बुद्धिकर्तृकान् ।
ज्ञानं क्रियत इत्यज्ञाः कूटस्थमिति मन्वते ॥
बुद्ध्यभावादवच्छिन्नं न दृग्रूपं यथा पुरा ।
बुद्ध्युत्पत्तावपि तथा निष्क्रियं ह्यनुभूयताम् "॥ इति ।

" न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते । यथा सैन्धवघनोऽनन्तरोऽबाह्यः कृ रसघन एवं वा अरेऽयमात्माऽनन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एव " इत्यादिश्रु त्यचैतन्यैकरसस्वभावावगमात्तादृशस्यैव निष्क्रियस्याऽऽत्मनो ज्ञानशब्देन लक्ष्यमाण ज्ज्ञानं ब्रह्मेत्येतल्लक्षणमपि निर्दोषमेव । नन्वनन्तं ब्रह्मेतिलक्षणे त्रिविधपरिच्छेदानि त्तदभावविशिष्टं ब्रह्मेति प्राप्नुयात् । इह भूतले घटो नास्तीति निषेधेन यथा घटा वैशिष्ट्यं भूतलस्य प्रतीयते तद्वत् । तथा च नाखण्डैकरसत्वसिद्धिरिति चेन्मैवम् । परिच्छेदनिषेधेन ब्रह्मव्यातिरिक्तस्य * वास्तवस्याभावस्यापि निषेधान्मायाकार्यमेव

* व्यावहारिकस्येत्यर्थः ।

१ ग. °याकार° । २ ग. °पितं स° । ३ ख. इत्यज्ञः । ४ ख. मन्यते ।

वमुपजीव्य परिच्छेदं व्यावर्त्य कतकरजोन्यायेनैनमप्यभावं व्यावर्त्य सदेकरसमेव लक्ष्यते । तथा सति श्रुत्यन्तरे " सदेव सोम्य " इत्यवधारणमुपपद्यते । तस्मादनन्तं ब्रह्मेत्येतदपि लक्षणमदुष्टमेव । तदेतदभिप्रेत्य वार्तिककार आह—

"कालाकाशादियोनित्वात्सर्वात्मत्वात्तथाऽऽत्मनः ।
वस्त्वन्तरस्य चाभावान्मुख्यानन्त्यं परात्मनः ॥
कल्पितेन परिच्छेदो न ह्यकल्पितवस्तुनः ।
कल्पितश्चेह कालादिर्वाचाऽऽरम्भणशास्त्रतः " ॥ इति ।

अनेनैव सत्यादिन्यायेन "विज्ञानमानन्दं ब्रह्म" "अत्रायं पुरुषः स्वयंज्योतिर्भवति" " पूर्णमदः पूर्णमिदम् " इत्यादिश्रुतिषूक्ता आनन्दस्वयंज्योतिःपूर्णादिशब्दाः प्रत्येकं लक्षणत्वेन योजनीयाः । तदर्थमानन्दादयो गुणा अत्रोपसंहर्तव्याः । ब्रह्मणि निवर्तनीयानां पुरुषभ्रान्तीनां बहुत्वेन लक्षणबाहुल्यम् । न त्वेतावता ब्रह्मणो बहुविधत्वमस्ति । निर्विशेषमेव सर्वैरपि लक्षणैः प्रतिपाद्यते । आनन्दाद्युपसंहारस्तृतीयाध्यायस्य तृतीयपादे* चिन्तितः—

"अनाहार्या उताऽऽहार्या आनन्दाद्यास्तु नाऽऽहृतिः ।
वामनीसत्यकामादेरिवैतेषां व्यवस्थितेः ॥
विधीयमानधर्माणां व्यवस्था स्याद्यथाविधि ।
प्रतिपत्तिफलानां तु सर्वशाखासु संहृतिः ॥

"आनन्दो ब्रह्म" "सत्यं ज्ञानमनन्तं ब्रह्म" इत्यानन्दसत्यत्वादयस्तैत्तिरीयके परब्रह्मविद्यायां पठ्यन्ते[1] । ते "प्रज्ञानं ब्रह्म" इत्याद्यैतरेयकादिप्रोक्तासु परविद्यासु नोपसंहर्तव्याः । वामनीत्वादिवद्व्यवस्थोपपत्तेः[2] । "एष उ एव वामनीरेष[3] उ एव भामनीः" इति कामनेतृत्वभासकत्वादयो गुणा उपकोसलविद्यायामाम्नाताः । "सत्यकामः सत्यसंकल्पः" इति सत्यकामत्वादयो[4] दहरविद्यायामाम्नाताः । तत्र यथा परस्परं गुणानुपसंहार एवमानन्दादीनां व्यवस्थाऽस्त्विति प्राप्ते ब्रूमः— विषमो दृष्टान्तः । वामनीत्वादीनां[5] ध्येयत्वेन विधीयमानत्वाद्यथाविधि व्यवस्था युक्ता । आनन्दादयस्तु प्रतिपत्तिफला इति न विधीयन्ते । अतो व्यवस्थापकविध्यभावात्प्रतिपत्तिफलस्य सर्वत्र समत्वाच्चाऽऽनन्दादय उपसंहर्तव्याः" ।

---

* आनन्दादयः प्रधानस्य । ब्र० सू० अ० ३ पा० ३ अ० ५ सू० ११ ।

---

१ घ. °न्ते । "प्र° । २ क. ख. ङ. °मीत्यादि° । ३ ग. °ष ए° । ४ क. ग. घ. °कामाद° । ५ क. ख. ङ. °नीत्यादी° .

ब्रह्मणो निर्विशेषत्वं तत्रैव द्वितीयपादे * चिन्तितम्—

"ब्रह्म किं रूपि वाऽरूपि भवेन्नीरूपमेव वा ।
द्विविधश्रुतिसद्भावाद्ब्रह्म स्यादुभयात्मकम् ॥
नीरूपमेव वेदान्तैः प्रतिपाद्यमपूर्वतः ।
रूपं त्वनूद्यते ध्यातुमुभयत्वं विरुध्यते ॥

"तदेतच्चतुष्पाद्ब्रह्म" इत्यादिश्रुतयो रूपवद्ब्रह्म प्रतिपादयन्ति । "अस्थूलमनणु इत्यादिश्रुतयो नीरूपम् । तस्माद्वस्तुत उभयात्मकं ब्रह्मेति प्राप्ते ब्रूमः—नीरूप शास्त्रप्रतिपाद्यं मानान्तरासिद्धत्वात् । जगत्कर्तृत्वादिरूपयुक्तं तु ब्रह्म क्षित्यादिकं तृकं कार्यत्वादित्यनुमानेनावगन्तुं शक्यमत एवोपासनायामनूद्यते न तु तात्पर्येण पाद्यते । न चानुमानशास्त्रसिद्धयोरुभयोर्वास्तवत्वमेकस्मिन्वस्तुनि सरूपत्वनीरूपत्व विरुद्धत्वात् । तस्मादतात्पर्यविषयस्य सरूपत्वस्य भ्रान्तत्वान्नीरूपमेव तत्त्वतो ब्रह्म तदेतदखण्डैकरसं ब्रह्म सत्यज्ञानादिवाक्येन लक्षितम् । ब्रह्मविदाप्नोति परमितिसू व्याख्यानरूपायामृचि प्रथमपादेन ब्रह्मशब्दार्थं व्याख्यायावशिष्टेन यो वेदेत्या पादत्रयेण वेदनपरप्राप्ती व्याख्यायेते । यः पुमान्वेद स पुमानश्नुते व्याप्नोति । किं त्याशङ्क्यैतदुच्यते—गुहायां परमे व्योमान्निहितमिति । अन्नमयाद्यानन्दमया वक्ष्यमाणानां पञ्चकोशानां समुदायो गुहा । तथा चान्यत्रोक्तम्—

"देहादभ्यन्तरः प्राणः प्राणादभ्यन्तरं मनः ।
ततः कर्ता ततो भोक्ता गुहा सेयं परम्परा" ॥ इति ।

यदेतत्पञ्चकोशोपादानकारणमव्याकृतं तदेतत्परमं व्योमेत्युच्यते । तच्चा संप्रदायविद्भिर्दर्शितम्—"शरीरद्वयकारणमात्माज्ञानं साभासमव्याकृतमित्युच्यते" श्रुतिश्च सर्वस्यास्य जगत उत्पत्तेः प्रागव्याकृतत्वं दर्शयति—"तद्धेदं तर्ह्यव्या मासीत्" इति । अस्पष्टदशापन्नत्वमव्याकृतत्वम् । तच्चाव्याकृतममूर्तत्वसाम्येन व नेयिनोऽक्षरब्राह्मणे गार्गीयाज्ञवल्क्यप्रश्नोत्तरयोराकाशशब्देन समामनन्ति-"व खल्वाकाश ओतश्च प्रोतश्च" इति प्रश्नः । "एतस्मिन्खल्वक्षरे गार्गि आकाश प्रोतश्च" इत्युत्तरम् । तस्य चाऽऽकाशस्य लोकप्रसिद्धाकाशवाय्वादिपञ्चमहाभूत त्वात्परमत्वम् । तस्मिन्परमाकाशे निहितमवस्थितं ब्रह्म । यद्यप्यविनाशिन्यक्ष वाच्ये सर्वाधिष्ठाने ब्रह्मण्यव्याकृतपञ्चभूतादिकं जगदारोपितं सदवस्थितम् ।

---

* न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि । ब्र० सू० अ० ३ पा० २ अ० ५ सू०

---

१ घ. °मायानू° । २ घ. °नम° । ३ क. ख. ङ. तद्धेदं । ४ ङ. °तात्मकं ।

बुभुत्सोर्बुद्धिर्बाह्यान्रूपरसादिविषयानुपेक्ष्यान्नमयादिक्रमेणाव्याकृतपर्यन्तं प्रविश्य निष्प्रपञ्चब्रह्मतत्त्वं साक्षात्करोति । तस्माद्बुभुत्सुदृष्टिमपेक्ष्य परमे व्योमन्नवस्थितमित्युपचर्यते । यद्वा गुहायां परमे व्योमन्निति सामानाधिकरण्यादव्याकृतमेव गुहाशब्देनाप्यभिधीयते । सर्वस्य जगतस्तत्र निगूढत्वात् । अथवा हृदयपुण्डरीकस्य मध्ये स्वाङ्गुष्ठपरिमितो यः प्रसिद्ध आकाशः स एवात्र परमं व्योमेत्युच्यते । जागरणव्यवहारहेतुं स्वप्नव्यवहारहेतुं देहमध्यवर्त्याकाशं बाह्याकाशं चापेक्ष्य सर्वदुःखरहितयोः सुषुप्तिसमाध्योः स्थानत्वेन हृदयाकाशस्योत्कृष्टत्वं युक्तम् । तस्मिन्नाकाशेऽवस्थिता बुद्धिर्गुहा तस्यां ज्ञातृज्ञेयज्ञानरूपत्रिपुटीव्यवहारस्य भ्रान्तिविवेकाभ्यां संपादितयोर्भोगमोक्षयोश्च निगूढत्वात्तया बुद्ध्योपलभ्यत्वेन ब्रह्म तत्र निहितम् । तत्र हि प्रत्यग्ब्रह्मास्ति ।

एतच्च[1] वार्तिके स्पष्टमुक्तम्—

"ज्ञातुर्हार्दगुहान्तःस्थं[2] प्रतीचोऽन्यन्न लभ्यते ।
सत्यादिमदतो ब्रह्म प्रत्यगात्मैव तद्विदः" ॥ इति ।

स्वरूपत्वेऽपि कामाविद्यादिभिरावृतत्वाद्बहिर्मुखैर्नोपलभ्यते । अन्तर्मुखैस्तु तदावरणबाधादुपलभ्यते । तदप्युक्तम्—

"बुद्धौ निगूढं तद्ब्रह्म कामाविद्याद्युपप्लवात् ।
प्रत्यग्धियोऽनुपश्यन्ति न तु बाह्यधियोऽपरे ॥
सत्याद्यर्थविरुद्धेभ्यः सम्यग्व्यावृत्तधीर्यतिः[3] ।
धियः प्रत्यक्प्रविश्याथ सत्यात्मानं प्रपश्यति" ॥ इति ।

ब्रह्मप्रतीचोरेकत्वे सति वेद्यवेदितृवेदनाभावेन वेदनमयुक्तमिति चेन्न । वेदनसर्वकामप्राप्तिमुक्त्यादिव्यवहाराणामौपचारिकत्वात् । तदप्युक्तम् —

"ज्ञानभेदात्तु तद्ब्रह्म ह्यनीप्सिततमं परम् ।
ज्ञातुरन्यस्य चाभावाद्यो वेदेत्युच्यते कथम् ॥
सत्यादिलक्ष्याऽज्ञानोत्थासत्याद्यर्थनिषेधधीः[4] ।
एवं चाऽऽप्तमवाप्नोति केवलाज्ञानहानतः ॥
तद्वज्ज्ञातं[5] विजानाति विमुक्तश्च विमुच्यते ।
निवर्तते निवृत्तं च त्रिर्वः शपथयाम्यहम्" ॥ इति ।

यथा ज्ञातृज्ञानज्ञेयभेदाभावेऽपि दशमस्त्वमसीतिवाक्येन स्वकीयं[6] दशमत्वं बुध्यते तथा स्वकीयं ब्रह्मत्वमवबुध्यताम् । अबुद्धे तु स्वकीये ब्रह्मत्वे ब्रह्मबोधमात्रेण स्वकीयो

---

१ ग. घ. तच्च । २ क. ग. ङ. °न्तःस्थं प्र° । ३ क. ख. ङ. °र्यतः । धि° । ४ ग. घ. °धीः । सत्र्नमैवाऽऽप्तम मो° । ५ घ. एवं ज्ञानं । ६ ग. °ज्ज्ञानं वि° । ७ ग. °कीयद° ।

जीवत्वभ्रमो न निवर्तते। तस्माद्गुहानिहितं प्रत्यक्त्वमेव ब्रह्मतया विद्यात्। एताव सूत्रोक्तं वेदनं व्याख्यातम्। सोऽश्नुत इत्यादिना परप्राप्तिर्व्याख्यायते स ब्रह्मवित्पु न्सर्वान्कामान्सर्वप्राणिगतान्भोगान्सहाश्नुते युगपदाप्नोति। अज्ञानी पुरुषः क्र विविधानि स्वकर्मफलभूतानि शरीराणि गृहीत्वा चक्षुरादिकरणापेक्ष उपाधिकृतेन जल र्यकादिवत्प्रतिबिम्बभूतेन जीवरूपेण तं तं भोगमनुभवति। ज्ञानी तु विपश्चिता ब्रह्म सर्वज्ञब्रह्मरूपेण सर्वान्भोगान्युगपदनुभवति।

तदेतत्पूर्वाचार्यैरप्युक्तम्—

"अवगत्याखिलान्कामानेकदा क्रमशून्यया।
ब्रह्मज्ञानी सदा वेत्ति ततः सर्वज्ञ ईरितः॥
आदावन्ते तथा मध्ये धियोऽनेकशरीरगाः।
स्वप्रकाशचिता[2] व्याप्ता ह्यनन्यानुभवात्मना"॥ इति।

ननु "द्वा सुपर्णा" इति मन्त्रेण शरीरे चेतनद्वयमाम्नातम्। तयोरन्यः पिप्प स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति" इति। तत्र सोपाधिकेन प्रतिबिम्बरूपेण भोक्त्र जीवेनैकशरीरमात्रवर्तिना[3] भोगः प्राप्यते। अभोक्त्रा तु साक्षिणा ब्रह्मचैतन्येन निरु धिकतया सर्वगतेन कृत्स्नमपि भोग्यजातं प्रकाश्यते। तदेतदविद्वद्विदुषोः साधारण तथा सति किंविशेषमभिप्रेत्य विदुषः फलत्वेनोपन्यस्यत इति चेदुच्यते। विद्वान्हि मदीयं वास्तवस्वरूपं ब्रह्म सर्वभोगप्रकाशकमित्यवगत्य परितुष्यति। मू न तथेत्ययमेव विशेषोऽभिप्रेतः। ननु ब्रह्मचैतन्येन सर्वगतशरीरसुखवत्तद्गतदुः न्यपि प्रकाश्यन्ताम्। ततस्तदवगमेन विदुषः क्लेशोऽपि प्रसज्येतेति चेन्न। ब्रह्म साक्षिणो दुःखलेपाभावात्[4]। तथा च कठाः पठन्ति—

"सूर्यो यथा सर्वलोकस्य चक्षुर्न लिप्यते चाक्षुषैर्बाह्यदोषैः।
एकस्तथा सर्वभूतान्तरात्मा न लिप्यते लोकदुःखेन बाह्यः"॥ इ

दुःखवत्सुखेनापि ब्रह्म न लिप्यते इति चेन्माऽस्तु सुखलेपः। सुखं तु ब्रह्म स्वरूपमेव। "आनन्दो ब्रह्मेति व्यजानात्" "विज्ञानमानन्दं ब्रह्म" इत्यादि तिभ्यः। ब्रह्मणः स्वरूपभूतोऽप्यानन्दश्चित्तवृत्त्या परिच्छिद्यमानो विषयानन्द इ च्यते। अभीष्टविषयेष्विच्छया प्रवर्तमानः पुरुषस्तदलाभेन क्लिश्यन्कदाचित्पुण्यव द्विषयलाभे सति तदिच्छायां निवृत्तायामन्तर्मुखां सात्त्विकीं कांचिद्वृत्तिं लभते। च वृत्तिरान्तरं ब्रह्मानन्दं व्यवच्छिनत्ति। सोऽयं परिच्छिन्नो विषयानन्दः। एत भिप्रेत्य बृहदारण्यके पठ्यते—"एषोऽस्य परमानन्दः। एतस्यैवाऽऽनन्दस्यान

---

१ ख. °त्यक्तस्वमे°। २ क. ख. ङ. °काशान्विता। ३ क. ख. ङ. °वर्ती भो°। ४ क. ग. ङ. °लेशाभा°।

भूतानि मात्रामुपजीवन्ति " इति । ब्रह्मादिस्तम्बान्तेषु प्राणिषु वर्तमानाः सात्त्विकवृत्ति-भिरवच्छिन्ना ब्रह्मानन्दस्य लेशरूपा ये विषयानन्दाः सन्ति तेऽत्र सर्वान्कामानित्यनया श्रुत्या विवक्षिताः । काम्यन्त इति कामाः । सुखान्येव प्राणिभिः काम्यन्ते न दुःखानि तेष्वानन्देषु वृत्तिकृतमवच्छेदं विद्यया बाधित्वा तदवच्छेदरहितमानन्दैकरसं वस्तु ब्रह्म-रूपेणावगत्य कृतं कृत्यं प्राप्तं प्रापणीयमित्येवं ब्रह्मवित्सर्वदा परितुष्यति । सोऽयं परि-तोषो मूढाद्विशिष्यते । तदेवं सूत्रव्याख्यानरूपायां सत्यं ज्ञानमित्यादिकायामृचि ब्रह्मत-द्वेदनप्राप्तयः कीदृश्य इत्याकाङ्क्षानिवृत्त्यर्थं त्रयमप्येतन्निरूपितम् । श्रौत इतिशब्द ऋक्समाप्त्यर्थः । वेदो हि मन्त्रब्राह्मणभेदेन द्विविधः । तत्रेयं ब्रह्मवल्ली ब्राह्मणरूपा। ब्राह्मणं चाष्टधा भिन्नम् । तद्भेदास्तु वाजसनेयिभिराम्नायन्ते—" इतिहासः पुराणं विद्या उपनिषदः श्लोकाः सूत्राण्यनुव्याख्यानानि व्याख्यानानि " इति । १—भृगुर्वै वारुणिरित्यादिरितिहासः। २—यतो वा इमानि भूतानि जायन्त इत्यादिकं सर्गप्रतिसर्गादि-प्रतिपादकं पुराणम् । ३—य एवमेता महासꣳहिता व्याख्याता वेदेत्यादय उपा-स्तयो विद्याः । ४—रहस्यार्थोपदेशा उपनिषदः, अत एवानुशासनानुवाके पूर्वमेषा वेदोपनिषदित्युक्तम् । ५—श्लोकास्तु तत्र तत्रोदाहरिष्यन्ते । ६—ब्रह्मविदित्या-दिकं सूत्रम् । ७—सत्यं ज्ञानमित्यादिकमनुव्याख्यानम् । अनुक्रमेण सूत्रगतानां पदानां तात्पर्यकथनात्। ८—तस्मिन्ननुव्याख्याने यो बुभुत्सितोऽर्थविशेषस्तस्य विस्पष्ट-मा समन्तात्कथनं व्याख्यानम् । तदिदमत्र तावत्तस्माद्वा एतस्मादित्यारभ्यान्नात्पुरुष इत्यन्तेन ग्रन्थेनाभिधीयते । अनुव्याख्यानगतमनन्तत्वमुपपादयितुं तस्मिन्ग्रन्थे सृष्टेः प्रतिपाद्यमानत्वात् ।

तथा च वाक्यवृत्तिकारैरुक्तम्—

" यदानन्त्यं प्रतिज्ञाय श्रुतिस्तत्सिद्धये जगौ ।
तत्कार्यत्वं प्रपञ्चस्य तद्ब्रह्मेत्यवधारय " ॥ इति ।

तामेतामानन्त्योपपादनोपयुक्तां सृष्टिं दर्शयति—

**तस्माद्वा एतस्मादात्मन आकाशः संभूतः । आकाशाद्वायुः । वायोरग्निः । अग्नेरापः । अद्भ्यः पृथिवी । पृथिव्या ओषधयः । ओषधीभ्योऽन्नम् । अन्नात्पुरुषः,** इति ।

तस्माद्वा इत्यादिना । व्यवहिते सूत्रवाक्ये ब्रह्मशब्देन परशब्देन चोपात्तं यद्वस्तु

१ ग. °तस्यावच्छेदस्य वि° । २ ग. घ. °धितत्वाद्° । ३ म. °दनयु° । ४ ग. °न्नाद्रेतः। रेतसः पुरु° ।

तदत्र व्यवहितार्थवाचिना तस्मादित्यनेन तच्छब्देन परामृश्यते । संनिहितायां व्याख्यानरूपायामृचि सत्यादिशब्देन निहितशब्देन च व्यवहृतं वस्तु संनिहितवाचैतस्मादित्येतच्छब्देन परामृश्यते । वैशब्दोऽवधारणार्थः । तस्मादेवैतस्मादित्सत्यृचा सूत्रेण च प्रतिपादितमेकमेव वस्त्वित्युक्तं भवति । अथवा परोक्षवाचि तच्छब्देन शास्त्रगम्यो ब्रह्मत्वाकारोऽभिधीयते । वैशब्दस्तस्मिन्ब्रह्मणि सर्ववेदान्तसिद्धिप्रदर्शनार्थः । प्रत्यक्षवाचिनैतच्छब्देनापरोक्षानुभवगम्यः प्रत्यगात्मत्वाकारोऽभिधीयते तदेव विस्पष्टयितुमात्मन इत्युच्यते । तस्मादेतस्मादितिपदद्वयसामानाधिकरण्येन प्रत्यग्ब्रह्मणोस्तादात्म्यमुच्यते । एतदेव पूर्वस्यामप्यृचि ब्रह्मणा विपश्चितेतिसामानाधिकरण्येनोदाहृतम् । सर्वप्राणिनां प्रत्यगात्मभूतं यत्परं ब्रह्म तस्य ब्रह्मण आकाशवाय्वादिकाञ्जायमानपदार्थान्प्रति यत्प्रकृतित्वं तत्पञ्चमीविभक्त्या प्रतिनिर्दिश्यते "जनिकर्तुः प्रकृतिः" इत्यनेन पाणिनीयसूत्रेणापादानसंज्ञाविधानात् । आकाशः संभूत इत्युक्तत्वादुत्पद्यमान आकाशो जनिकर्ता तस्य प्रकृतिरुपादानकारणं ब्रह्मेत्यमर्थं बोधयितुं पञ्चमी प्रयुक्ता । प्रकर्षेण क्रियत उत्पाद्यते कार्यमनयेतिव्युत्पत्त्या प्रकृतिरुपादानं मृदादिकम् । यद्यपि निमित्तकारणेन कुलालेनापि घट उत्पाद्यते तथा कुलालस्य तदुत्पादने प्रकर्षो नास्ति । नहि कुलालो मृत्तिकेव कार्ये घटे सर्वदाऽनुगच्छति । तस्मात्कार्यं प्रत्युपकारप्रकर्षादुपादानैवत्प्रकृतिः । ननु प्रकृतित्वं मायाया न तु ब्रह्मणः । तथा च श्वेताश्वतरा आमनन्ति—

"मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्" ॥ इति ।

नायं दोषः । मायाया ब्रह्मशक्तित्वेन स्वातन्त्र्याभावात् ।

शक्तित्वमपि तत्रैवाऽऽम्नातम्—

"न तस्य कार्यं करणं च विद्यते न तत्समश्चाभ्यधिकश्च दृश्यते ।
पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च" ॥ इति
"ते ध्यानयोगानुगता अपश्यन्देवात्मशक्तिं स्वगुणैर्निगूढाम्" ॥ इति [च

न खलु शक्तिः क्वचिदपि स्वाश्रयमुल्लङ्घ्य स्वतन्त्राऽवतिष्ठते । अतः शक्तिरूपमायाया यत्प्रकृतित्वं तदेव ब्रह्मणः शक्तिमतः प्रकृतित्वम् । योऽयं प्रकृतिरूपः परमात्मा मायी महेश्वरोऽन्यत्र श्रुतः सोऽयमत्राऽऽत्मन इत्यनेन पञ्चम्यन्तेन निर्दिश्य तस्मान्मायिनः परमात्मन आकाशः संभूत उत्पन्नः । परमात्मैवाऽऽकाशवाय्वाद्याकारेण प्रतिभासत इत्यर्थः । यदुपादानकारणं मृद्रूपं तदेतत्स्वस्माद्भिन्नं घटमारभते क्षीरस्वरूपमुपादानं स्वयं दध्याकारेण परिणमते । रज्जुरूपमुपादानमज्ञानेन सहितं स

---

१ घ. 'मानान्वदा°' । २ क. ख. ग. ङ. निर्दिश्यते । ३ ग. 'नमेव प्रकृ' । ४ क. ङ. °रूपप' । ५ घ. 'ण भा' । ६ ग. °तत्तस्मा' ।

कारेण विवर्तते । तत्र नैयायिकादयो मृद्घटन्यायेन सर्वे परमाणुभिः पृथिव्यादिकं जगदारभ्यत इत्याहुः । सांख्यास्तु क्षीरदधिन्यायेन सत्त्वरजस्तमोगुणात्मकं प्रधानमेव महदहंकारादिजगदाकारेण परिणमत इति वर्णयन्ति । वेदान्तास्तु रज्जुसर्पन्यायेन सर्वजगत्कल्पनाधिष्ठानभूतमखण्डैकरसं ब्रह्मैव स्वमायावशादाकाशादिजगदाकारेण विवर्तत इत्यभिप्रायेण सृष्टिं प्रतिपादयन्ति । तेषु त्रिषु मतेष्वारम्भपरिणामवादौ शारीरकमीमांसायां निराकृतौ । का तर्हि महर्षिप्रणीतयोर्वादयोर्गतिरिति चेन्मन्दबुद्ध्यनुग्रहार्थमवान्तरसृष्टिविषयौ तौ वादाविति ब्रूमः । यः पुमाँल्लोकायतमतानुसारेण देहमात्मत्वेनाभिमन्यमानः स्वर्गनरकयोर्गन्तारं देहव्यतिरिक्तमात्मानमज्ञात्वा कर्माणि ज्योतिष्टोमादीनि चाननुतिष्ठन्नुपास्यमीश्वरमज्ञात्वा तदुपासनेऽपि ब्रह्मलोकहेतौ न प्रवर्तते । तादृशस्य जीवेश्वरविवेकाय प्रयतमानो गौतमादिर्महर्षिः परमाणुभ्यः पृथिव्याद्युत्पत्तिमुवाच । मूलकारणात्परब्रह्मण उत्पन्ना आकाशकालदिशः परमाणवश्च यदा व्यवस्थितास्तदा तत आरभ्योत्तरकालीना सृष्टिर्गौतमाद्युक्तप्रकारेण व्यवतिष्ठताम् । किं नश्छिन्नं वेदान्तिनाम् । न चैतावता मायावादस्य हानिः शङ्कनीया । ब्रह्मादिस्तम्बान्तानां सर्वेषां प्राणिनां विचित्रसंसारभ्रममुत्पादयन्त्या माययैव दृश्यस्य गौतमादिमतभ्रमस्योत्पादितत्वात् । अनेनैव न्यायेन वेदान्तैर्या सृष्टिरभिहिता सा भ्रान्तिर्भवेदिति चेत् । भवत्वेवं कृत्स्नायाः सृष्टेर्भ्रान्तित्वं बोधयितुमेव वेदान्तैः प्रवृत्तत्वात् । यथा मन्दाधिकारिणो देहव्यतिरिक्तं स्वर्गप्राप्तियोग्यं कर्त्रात्मानं[4] बोधयितुं गौतमस्योद्योगस्तथा मध्यमाधिकारिणो ब्रह्मबोधयोग्यतायै कर्तृत्वरहितं साक्षिणं चिदात्मानमसङ्गं बोधयितुं कपिलमहर्षिः सांख्यशास्त्रं निर्ममे । तत्र परमाणुभ्यः प्राचीना चिदचिद्विवेकहेतुरवान्तरसृष्टिः कियत्यपि वर्णिता । अखण्डैकरसे ब्रह्मणि मायया चिज्जडभेदश्चिदात्मनां परस्परभेदः सत्त्वादिगुणाश्चेत्येते पदार्थाः कल्पिताः । तत उत्तरकालीना सृष्टिः सांख्येनाभिधर्यिताम् । स्वमुपास्यमीश्वरं विवेक्तुं सांख्योक्तेभ्यः पञ्चविंशतितत्त्वेभ्यः पूर्वभावि(वी)न्येकादश तत्त्वानि शैवागमेषु निरूप्यन्ते । श्रुतिस्तु प्रदर्शनार्थत्वेनाऽऽकाशादिकां कियतीमपि सृष्टिमुदाजहार । साकल्येन त्वभिधानमशक्यमनुपयुक्तं च । ब्रह्मावबोधद्वारत्वेन तदभिधानम् । तच्च द्वारत्वमल्पाभिधानेऽपि संपद्यते ।

द्वारत्वेनोपयोगो गौडाचार्यैरुदाहृतः—

" मृल्लोहविस्फुलिङ्गाद्यैः सृष्टिर्या चोदिताऽन्यथा ।
उपायः सोऽवतारा्य नास्ति भेदः कथंचन " ॥ इति ।

---

१ क. ख सर्प° । २ घ. °न ज° । ३ क. ख. ङ. कृत्स्नायाः । ४ क. ख. ङ. °गो° । ५ क. ख. ङ. कर्तारमात्मा° । ६ ग. °यते । ए° ।

नहि सृष्टिरुपास्यत्वेन ज्ञेयत्वेन वा स्वतन्त्रपुरुषार्थाय कल्पते। सृष्टिमुपासी सृष्टिविच्छ्रेयः प्राप्नोतीत्येवंवचनाभावात्। अत एव श्रुतिस्मृतिपुराणागमेषु परस्पर रोधेन बहुधा कथ्यमाना सृष्टिः सर्वाऽपि वार्तिककारैरङ्गीकृता—

" यया यया भवेत्पुंसां व्युत्पत्तिः प्रत्यगात्मनि।
सा सैव प्रक्रियेह स्यात्साध्वी सा चानवस्थिता " ॥ इति।

न बहुभिर्दृष्टेषु बहुविधस्वप्नेषु कश्चिदेवाङ्गीकार्यो न त्वितरेऽङ्गीकार्या इति नि मोऽस्तीत्यलमतिप्रसङ्गेन। योऽयमाकाशो मायाविशिष्टब्रह्मण उपादानकारणादुत् स्तस्मिन्ब्रह्मांशो मायांशश्चोभावनुगतौ। सत्यं ज्ञानमिति यद्ब्रह्म सत्यत्वेनाभिहितं त दात्मकम्। सदेव सोम्येति प्रकृत्य तत्सत्यमिति श्रुतत्वात्। सत्त्वं चाऽऽकाशोऽ च्छत्याकाशोऽस्तीत्येवं भासमानत्वात्। मायात्वं नामाऽऽश्चर्यरूपत्वम्। ऐन्द्रजा केन गृहपर्वतादौ निगीर्णे सति माययैवेति लोकैर्व्यवह्रियमाणत्वात्। यथा नि कांस्यघनरूपे दर्पणे भासमानो विशाल आकाशप्रतिबिम्ब आश्चर्यरूपस्तथा नि सत्यज्ञानानन्तानन्दैकरसे ब्रह्मण्यसंभावितस्याऽऽकाशस्य प्रतिभास आश्चर्यरूपः। गृहादिनिगरणमैन्द्रजालिकव्यतिरेकेण केनापि कर्तुमशक्यत्वादितरैराश्चर्यमित्युच्य एवमीश्वरेण निर्मिता आकाशवाय्वादयो जीवेन केनापि निर्मातुमशक्यत्वादाश्चर्य इत्युच्यन्ते। तदिदमाश्चर्यरूपत्वं मायांशः। यस्तु वस्तूनामवकाशप्रदानयोग्यस्व सोऽयमाकाशभागः। एवं चास्त्याश्चर्यरूपमवकाशप्रदमित्येवं ब्रह्मांशमायांशाभ्या गत आकाशः प्रतिभासते। स च शब्दगुणकः। गिरिगुहादौ यः प्रतिध्वनिः सोऽ काशसमवेतत्वेन प्रतीयमानत्वादाकाशगुण इत्युच्यते। यथोक्तशब्दमात्रगुणकस् काशप्रदस्याऽऽकाशस्य सर्जने कामसंकल्पावेव तु मायाविशिष्टस्य ब्रह्मणः। आ स्रक्ष्यामीत्येवंविधेच्छा काम इत्युच्यते। यथोक्तस्वरूप आकाशो निष्पद्यतामि विधा भावना संकल्प इत्युच्यते। ब्रह्मणो मनोराहित्येन मनोवृत्तिरूपाया भाव अभावेऽप्यचिन्त्यशक्तिरूपमायैव कामसंकल्पारूयवृत्तिद्वयाकारेण विक्रियत इ इन्द्रियरहितस्याप्यचिन्त्यशक्तिबलात्सर्वव्यवहारः श्रूयते—" अपाणिपादो ज ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः " इति। पूर्वसृष्टावनुष्ठितानि सर्वप्राणिक पूर्वमपक्वानि प्रलयकाले मायाविशिष्टे ब्रह्मणि स्थित्वा शनैः पच्यन्ते। पक्वेषु तत्फलभोगदानाय जगत्सृजति।

१ ग. घ. कल्प्यते। २ ग. सा वाऽन°। ३ क. ख. ङ. °विधं स्व°। ४ घ. व्यतिरिकेन के°। ५ ग. °तिरिकेन के°। ६ घ. °नेच्छासं°।

तदेतच्छैवागमसारसंग्रहरूपायां तत्त्वप्रकाशिकायामुक्तम्—

" संसारे खिन्नानां निखिलानां प्राणिनां प्रभुः कृपया ।
कुरुते महार्थसंहृतिमेतेषामेव विश्रान्त्यै ।
कर्मविपाचनहेतोः पशुदयया पुनरपीह परमेशः ।
सृष्टिं विधाय तेषां कर्म विपाचयति देहभृताम् " ॥ इति ।

अतः प्राणिकर्मपरिपाकवशात्परमेश्वरस्य सिसृक्षा स्रष्टव्यपदार्थसृष्टिगोचरसंकल्पश्चोपजायते । तदीयेच्छासंकल्पावनुसृत्य स्रष्टव्यपदार्थोऽपि तथैवोत्पद्यते । अत एव परमात्मप्रकरणे—' सत्यकामः सत्यसंकल्पः " इत्याम्नातम् । एवं सत्युत्तरोत्तरपदार्था यथा यथाऽसौ संकल्पयति तथा तथा ते सर्वेऽप्युत्पद्यन्ते । प्रथमं सृष्टेनाऽऽकाशेनोपहितान्मायाविशिष्टब्रह्मणो वायुः संभूतः । मायाब्रह्मणोः सर्वसाधारणकारणत्वात्तदुपाधिभूतस्याऽऽकाशस्य वायुं प्रत्यसाधारणलक्षणां प्रत्यासत्तिमपेक्ष्याऽऽकाशाद्वायुरित्याम्नातम् । तस्य यो वायोर्गुणः स्पर्शः स चानुष्णाशीतरूपः । आकाशस्यावकाशप्रदानवद्वहनं वायोः कृत्यम् । कारणधर्माश्च तस्मिन्वायावनुगच्छन्ति । अस्ति वायुरित्यभिधीयमानं सत्त्वं ब्रह्मधर्मः । वस्त्वन्तरेष्वदृष्टत्वेनाऽऽश्चर्यरूपो यो वायौ स्वभावः सोऽयं मायाधर्मः । समुद्रतीरादौ प्रसरतो वायोर्यो घोषः सोऽयं शब्द आकाशधर्मः । एवं वायोरग्निरित्यादौ योजनीयम् । भास्वररूपमग्नेर्गुणः । प्रकाशनमग्नेः कार्यम् । तत्राप्यग्नेः सत्त्वं ब्रह्मधर्मः । इतरसर्ववस्तुविलक्षणत्वेनाऽऽश्चर्यकरत्वं मायाधर्मः । ज्वलतोऽग्नेर्योऽयं भुगुभुगितिशब्दः सोऽयमाकाशधर्मः । यस्तूष्णः स्पर्शः सोऽयं वायुधर्मः । तत्र शब्दस्पर्शयोराकाशवायुनिष्ठशब्दादिवैलक्षण्यं भासमानं यदस्ति तदप्याश्चर्यहेतुत्वान्मायाप्रयुक्तमेव । यथोक्तादग्नेरापः संभूताः । अपां मधुररसो विशेषगुणः । कारणधर्माश्च तत्रानुगच्छन्ति । आपः सन्ति । ताश्चेतरविलक्षणेन द्रवत्वेनाऽऽश्चर्यरूपाः । पाषाणबहुलनदीप्रवाहादौ बुलुबुलित्येवं शब्दः श्रूयते । स्पर्शः शीतलः । रूपं [illegible]तम् । तादृशीभ्योऽद्भ्यः पृथिवी संभूता । गन्धस्तस्या विशेषगुणः । अस्ति पृथिवी । सा च काठिन्येनेतरविलक्षणेनाऽऽश्चर्यरूपा । तस्यां च मूर्तद्रव्यसंयोगेन कटकटेत्येवंशब्दः श्रूयते । स्पर्शः कठिनः । रूपं नीलपीताद्यनेकविधम् । रसो मधुरादिलक्षणः । तत्सर्वं पञ्चभूतविवेके संगृह्योक्तम्—

" शब्दस्पर्शौ रूपरसौ गन्धो भूतगुणा इमे ।
एकद्वित्रिचतुष्पञ्च गुणा व्योमादिषु क्रमात् ॥
प्रतिध्वनिर्वियच्छब्दो वायौ बीसीति शब्दनम् ।
अनुष्णाशीतसंस्पर्शो वह्नौ भुगुभुगुध्वनिः ॥

१ क. °नुसृत्य ।

उष्णः स्पर्शः प्रभा रूपं जले बुलुबुलुध्वनिः ।
शीतः स्पर्शः शुक्लरूपं रसो माधुर्यमीरितम् ॥
भूमौ कटकटाशब्दः स्पर्शः कठिन ईर्यते ।
नीलादिकं च भूरूपं मधुराम्लादिको रसः ॥
सुरभीतरगन्धौ द्वौ गुणाः सम्यग्विवेचिताः "॥ इति ।

इत्थमाकाशादिपृथिव्यन्तानां पञ्चभूतानां सृष्टिरुक्ता । ओषध्यन्नपुरुषा भौतिका सृष्टिकथनेन गिरिनदीसमुद्रादिकृत्स्नभौतिकसृष्टिरुपलक्ष्यते । यद्यपि मिथुनजन्या दिदेहाः सर्वेऽप्यन्नमयास्तथाऽपि मनुष्यदेहस्य ज्ञानकर्माधिकारित्वेन प्राधान्यमि तेषु पुरुषसृष्टिरत्राभिहिता । तच्च प्राधान्यमैतरेयके स्पष्टं प्रतीयते—" पुरुषे त्वे विस्तरामात्मा स हि प्रज्ञानेन संपन्नतमो विज्ञातं वदति विज्ञातं पश्यति वेद श्व वेद लोकालोकौ मर्त्येनामृतमीप्सत्येवं संपन्नोऽथेतरेषां पशूनामशनायापिपासे भिविज्ञानं न विज्ञातं वदन्ति न विज्ञातं पश्यन्ति न विदुः श्वस्तनं न लोकालो इति । एतस्या आकाशादिपुरुषान्ताया भूतभौतिकसृष्टेः स्वयमुपादानरूपा[2] स्वाश्रये ण्यपि प्रकृतित्वमापादयन्ती या माया तस्याः स्वभावविशेष उत्तरतापनीये विस्प ष्टातः—" माया च तमोरूपाऽनुभूतेस्तदेतज्जडं[3] मोहात्मकमनन्तं तुच्छमिदं स्यास्य व्यञ्जिका नित्यं नित्यनिवृत्ताऽपि मूढैरात्मैव दृष्टाऽस्य सत्त्वमसत्त्वं च द सिद्धत्वासिद्धत्वाभ्यां स्वतन्त्रास्वतन्त्रत्वेन " इति ।
अस्याः श्रुतेरभिप्रायश्चित्रदीपे प्रपञ्चितः—

" माया चेयं तमोरूपा तापनीये तदीरणात् ।
अनुभूतिस्तत्र मानं प्रतिजज्ञे श्रुतिः स्वयम् ॥
जडं मोहात्मकं तच्चेत्यनुभावयति श्रुतिः ।
आबालगोपं स्पष्टत्वादानन्त्यं तस्य साऽब्रवीत् ॥
अचिदात्मघटादीनां यत्स्वरूपं ज[डं] हि तत् ।
यत्र कुण्ठी भवेद्बुद्धिः स मोह इति लौकिकाः ॥
इत्थं लौकिकदृष्ट्यैतत्सर्वैरप्यनुभूयते ।
युक्तिदृष्ट्या त्वनिर्वाच्यं नासदासीदिति श्रुतेः ॥
नासदासीद्विभातत्वान्नो सदासीच्च *बाधनात् ।
विद्यादृष्ट्या श्रुतं तुच्छं तस्य नित्यनिवृत्तितः ॥

* नेह नानाऽस्ति किंचनेतिश्रुत्या निषेधादित्यर्थः ।

१ ग. घ. °शनापि° । २ ग. °रूपस्वा° । ३ ग. °ज्जडमो° ।

तुच्छाऽनिर्वचनीया च वास्तवी चेत्यसौ त्रिधा ।
ज्ञेया माया त्रिभिर्बोधैः श्रौतयौक्तिकलौकिकैः ॥
अस्य सत्त्वमसत्त्वं च जगतो दर्शयत्यसौ ।
प्रसारणाच्च संकोचाद्यथा चित्रपटस्तथा ॥
अस्वतन्त्रा हि माया स्यादप्रतीतेर्विना चितिम् ।
स्वतन्त्राऽपि तथैव स्यादसङ्गस्यान्यथाकृतेः ॥
कूटस्थासङ्गमात्मानं जगत्त्वेन करोति सा ।
चिदाभासस्वरूपेण जीवेशावपि निर्ममे ॥
कूटस्थमनुपद्रुत्य करोति जगदादिकम् ।
दुर्घटैकविधायिन्यां मायायां का चमत्कृतिः ॥
द्रवत्वमुदके वह्नावौष्ण्यं काठिन्यमश्मनि ।
मायायां दुर्घटत्वं च स्वतः सिध्यति नान्यतः ॥
न वेत्ति मायिनं लोको यावत्तावच्चमत्कृतिम् ।
धत्ते मनसि पश्चात्तु मायैषेत्युपशाम्यति ॥
प्रसरन्ति हि चोद्यानि जगद्वस्तुत्ववादिषु ।
न चोदनीयं मायायां तस्यां चोद्यैकरूपतः ॥
चोद्येऽपि यदि चोद्यं स्यात्त्वच्चोद्ये चोद्यते मया ।
परिहार्यं ततश्चोद्यं न पुनः प्रतिचोद्यताम् ॥
विस्मयैकशरीराया मायायाश्चोद्यरूपतः ।
अन्वेष्यः परिहारोऽस्या बुद्धिमद्भिः प्रयत्नतः ॥
मायात्वमेव निश्चेयमिति चेत्तर्हि निश्चिनु ।
लोकप्रसिद्धमायाया लक्षणं यत्तदीक्ष्यताम् ॥
न निरूपयितुं शक्या विस्पष्टं भासते च या ।
सा मायेतीन्द्रजालादौ लोकाः संप्रतिपेदिरे ॥
स्पष्टं भाति जगच्चेदमशक्यं तन्निरूपणम् ।
मायामयं जगत्तस्मादीक्षस्वापक्षपाततः ॥
निरूपयितुमारब्धे निखिलैरपि पण्डितैः ।
अज्ञानं पुरतस्तेषां भाति कक्ष्यासु कासुचित् ॥
देहेन्द्रियादयो भावा वीर्येणोत्पादिताः कथम् ।
कथं वा तत्र चैतन्यमित्युक्ते ते किमुत्तरम् ॥

१ क ङ 'यैषेत्यु°' । २ ख. तस्याश्चोद्यै' ।

वीर्यस्यैव स्वभावश्चेत्कथं तद्विदितं त्वया ॥
अन्वयव्यतिरेकौ यौ भग्नौ तौ व्यर्थवीर्यतः ।
न जानामि किमप्येतदित्यन्ते शरणं तव ॥
अत एव महान्तोऽस्य प्रवदन्तीन्द्रजालताम् ।
एतस्मात्किमिवेन्द्रजालमपरं यद्गर्भवासस्थितं
रेतश्चेतति हस्तमस्तकपदप्रोद्भूतनानाङ्कुरम् ।
पर्यायेण शिशुत्वयौवनजरावेषैरनेकैर्वृतं
पश्यत्यत्ति शृणोति जिघ्रति तथा गच्छत्यथाऽऽगच्छति ॥
देहवद्वटधानादौ सुविचार्य विलोक्यताम् ।
क्व धानाः कुत्र वा वृक्षस्तस्मान्मायेति निश्चिनु ॥
निरुक्तावभिमानं ये दधते तार्किकादयः ।
हर्षमिश्रादिभिस्ते तु खण्डनादौ सुशिक्षिताः ॥
अचिन्त्याः खलु ये भावा न तांस्तर्केण योजयेत् ।
अचिन्त्यरचनारूपं मनसाऽपि जगत्खलु ॥
अचिन्त्यरचनाशक्तिबीजं मायेति निश्चिनु ।
मायाबीजं तदेवैकं सुषुप्तावनुभूयते " ॥ इति ।

ईदृङ्मायाधिष्ठानत्वेन मायी महेश्वरो यः स श्वेताश्वतरैराम्नातः । तस्य स्रष्टृत्वं एवाऽऽमनन्ति—"अस्मान्मायी सृजते विश्वमेतत्तस्मिंश्चान्यो मायया संनिरुद्धः" इ

सृष्टिप्रयोजने मतभेदा माण्डूक्यशाखायामाम्नायन्ते—

" विभूतिप्रसवं त्वन्ये मन्यन्ते सृष्टिचिन्तकाः ।
स्वप्नमायासरूपेति सृष्टिरन्यैर्विकल्पिता ॥
इच्छामात्रं प्रभोः सृष्टिरिति सृष्टिविनिश्चिता ।
कालात्प्रसूतिं भूतानां मन्यन्ते कालचिन्तकाः ॥
भोगार्थं सृष्टिरित्यन्ये क्रीडार्थमिति चापरे ।
देवस्यैष स्वभावोऽयमाप्तकामस्य का स्पृहा " ॥ इति ।

यः प्रसवो जगदुत्पत्तिः सेयमीश्वरस्य विभूतिस्तत्प्रकटनार्थमीश्वरः सृजतीति मतम् । यथा स्वप्नो विचारमन्तरेणाकस्मादुत्पद्यते तद्वदिति द्वितीयं मतम् । इन्द्रज रूपा माया यथा लोके चमत्काररूपा तथा चमत्कारप्रदर्शनार्थमिति तृतीयं मत यथा सत्स्वपि बहुषु भक्ष्यभोज्येषु कश्चित्किंचित्स्वी करोतीत्यत्र तदिच्छैव नियाि तद्वदिति चतुर्थं मतम् । यथा वसन्ताद्यृतुलिङ्गानि पुष्पोद्गमादीनि कालविशेष

१ घ. °चार्यावलो° । २ क. ख. घ. ङ. °कैषु यो° । ३ क. ख ङ. तदर्त्तं ।

नानि तद्वदिति पञ्चमं मतम् । यथा कृषिवाणिज्यादिकं स्वभोगार्थं क्रियते तद्वदिति षष्ठं मतम् । यथाऽक्षद्यूतादिकं क्रीडार्थं तद्वदिति सप्तमं मतम् । यथा ब्रह्मतत्त्वस्य सच्चिदानन्दैकरसत्वं स्वभावस्तथा मायाविशिष्टस्य सृष्टिस्थितिसंहाराः स्वभावभूता अतो निःस्पृहस्य प्रयोजनविशेषो न कल्पनीय इत्यष्टमं मतम् । एतदेव सिद्धान्तरहस्यम् । ननु कर्माण्येव स्वस्वफलदानाय प्राणिदेहानुत्पादयन्ति किमनेनेश्वरेणेति चेन्न । ईश्वर एव फलदातेति तृतीयाध्यायस्य द्वितीयपादे* चिन्तितत्वात् ।

" कर्मैव फलदं यद्वा कर्माराधित ईश्वरः ।
अपूर्वावान्तरद्वारा कर्मणः फलदातृता ॥
अचेतनात्फलासूतेः शास्त्रीयात्पूजितेश्वरात् ।
कालान्तरे फलोत्पत्तेर्नापूर्वपरिकल्पना ॥

अन्वक्षविनाशिनोऽपि कर्मणोऽपूर्वव्यवधानेन कालान्तरभाविफलप्रदत्वसंभवादीश्वरकल्पने गौरवमिति प्राप्ते ब्रूमः—अचेतनस्य कर्मणोऽपूर्वस्य तारतम्येन प्रतिनियतफलं दातुं न सामर्थ्यमस्ति । लोके सेवादिक्रियायामचेतनायां तददर्शनात्ततः सेवितराजवत्पूजितेश्वरात्फलसिद्धिरभ्युपेया । न च कल्पनागौरवं शास्त्रसिद्धत्वेनेश्वरस्याकल्पनीयत्वात् । " एष ह्येव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषते । एष उ एवासाधु कर्म कारयति तं यमधो निनीषते " इति श्रुतिरीश्वरस्यैव धर्माधर्मयोः फलदातृत्वं तत्कारयितृत्वं चाभिदधाति । सति चेश्वरस्य प्रामाणिकत्वे तवैव प्रत्युताश्रुतस्यापूर्वस्य कल्पने गौरवं भवेत् । तस्मात्कर्मभिराराधित ईश्वरः फलदाता " ।

तस्येश्वरस्योभयविधकारणत्वं प्रथमाध्यायस्य चतुर्थपादे + चिन्तितम्—

" निमित्तमेव ब्रह्म स्यादुपादानं च वेक्षणात् ।
कुलालवन्निमित्तं तन्नोपादानं मृदादिवत् ॥
बहु स्यामित्युपादानभावोऽपि श्रुत ईक्षितुः ।
एकबुद्ध्या सर्वधीश्च तस्माद्ब्रह्मोभयात्मकम् ॥

जगत्कारणत्वप्रतिपादकानि सर्वाणि वाक्यानि विषयः । तत्र किं ब्रह्म निमित्तकारणमेवोतोपादानकारणमपीति संदेहे निमित्तकारणमेवेति तावत्प्राप्तम् । कुतः । तदैक्षतेति सृज्यकार्यविषयपर्यालोचनश्रवणात् । पर्यालोचनं च निमित्तकारणमेवेति प्राप्ते ब्रूमः—"तदैक्षत बहु स्यां प्रजायेय" इतीक्षितुरेव प्रकर्षेणोत्पत्त्या बहुभावः श्रूयते । तत

---

* फलमत उपपत्तेः—ब्र० सू० अ० ३ पा० २ अ० ८ सू० ३८ । + प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्—ब्र० सू० अ० १ पा० ४ अ० ७ सू० २३ ।

उपादानत्वमप्यस्ति । किंच येनाश्रुतं श्रुतं भवतीत्यादिना ब्रह्मण्येकस्मिञ्श्रुते सत्यश्रुत-मपि जगच्छ्रुतमेव भवतीति प्रतिपाद्यते । तदेतदेकविज्ञानेन सर्वविज्ञानम् । तच्च ब्रह्मण-सर्वोपादानत्वे सति ब्रह्मव्यतिरेकेण कार्याभावादुपपादयितुं सुशकम् । केवलनिमित्तत्वे तु सर्वेषु कार्येषु ब्रह्मव्यतिरिक्तेषु सत्सु कथं नामैकविज्ञानेन सर्वविज्ञानं प्रतिपाद्येत । तस्मादुभयविधकारणं ब्रह्म " ।

तस्योभयविधकारणत्वस्य प्रतिपादको वेदान्तसमन्वयः श्रुत्यन्तरविसंवादपरिहारेण तत्रैव* समर्थितः—

" समन्वयो जगद्योनौ न युक्तो युज्यतेऽथ वा ।
न युक्तो वेदवाक्येषु परस्परविरोधतः ।
सर्गक्रमविवादेऽपि नासौ स्रष्टरि युज्यते ।
अव्याकृतमसत्प्रोक्तं युक्तोऽसौ कारणे ततः " ॥ इति ।

योऽयं वेदान्तानां समन्वयो जगत्कारणविषयः सार्धैस्त्रिभिः पादैः प्रतिपादितस्त-माक्षिप्य समाधातुमयमारम्भः । न युक्तोऽयं समन्वय इति तावत्प्राप्तम् । कुतः वेदान्तेषु बहुशो विरोधप्रतीतेः । प्रामाण्यस्यैव दुःसंपादत्वात् । तथाहि—आत्मनः आकाशः संभूतः " इति तैत्तिरीयके वियदादीन्प्रति स्रष्टृत्वं श्रूयते । छान्दोग्ये— "तत्तेजोऽसृजत" इति तेजआदीन्प्रति । ऐतरेयके—"स इमाँल्लोकानसृजत" इति लोकान्प्रति । मुण्डके—" एतस्माज्जायते प्राणः " इति प्राणादीन्प्रति । न केवलं कार्यद्वारेणैव विरोधः किंतु कारणस्वरूपोपन्यासेऽपि । "सदेव सोम्येदमग्र आसीत्" इति च्छान्दोग्ये सद्रूपत्वं कारणस्यावगम्यते । तैत्तिरीयके तु—"असद्वा इदमग्र आसीत् " इत्यसद्रूपत्वम् । ऐतरेयके च—" आत्मा वा इदमेक एवाग्र आसीत्" इत्यात्मरूपत्वम् । अतो विरोधान्न युक्तः समन्वय इति प्राप्ते ब्रूमः—भवतु नाम सृज्येषु वियदादिषु तत्क्रमे च विवादः । वियदादीनामतात्पर्यविषय[त्वाद्]द्वितीय-ब्रह्मबोधायैव तदुपन्यासः । तात्पर्यविषये तु जगत्स्रष्टरि ब्रह्मणि न क्वापि विवादोऽस्ति क्वचित्सच्छब्देनोक्तस्य ब्राह्मणोऽन्यत्र सर्वजीवस्वरूपत्वविवक्षयाऽऽत्मशब्देनाभिधानात् यत्त्वसच्छब्देनाभिधानं तदव्याकृताभिप्रायम् । न त्वत्यन्तासत्त्वाभिप्रायम् । " कथमसतः सज्जायेत " इति श्रुत्यन्तरे चासत्कारणत्वनिषेधात् । तस्मादेकवाक्यतायाः सुसंपादत्वाद्युक्तो जगत्कारणे समन्वयः ।

---

* कारणत्वेन चाऽऽकाशादिषु यथा व्यपदिष्टोक्तेः—ब्र०सू०अ० १ पा० ४ अ० ४ सू० १४

---

१ ग. °पाद्यते । त° ।

तत्रैव पुनरपि परमाण्वादिकारणानां श्रौतत्वनिराकरणेन स एव *समर्थितः—

"अण्वादेरपि हेतुत्वं श्रुतं ब्रह्मण एव वा ।
वटधानादिदृष्टान्तादण्वादेरपि तच्छ्रुतम् ॥
शून्याण्वादिष्वेकबुद्धया सर्वबुद्धिर्न युज्यते ।
स्युर्ब्रह्मण्यपि धानाद्यास्ततो ब्रह्मैव कारणम् ।

[वे]दान्तो विषयः । तत्र किं ब्रह्मण इव परमाणुशून्यादीनामपि क्वचिज्जगत्कारणत्वं [श्रु]तमस्ति । अथवा सर्वत्र ब्रह्मण एव कारणत्वं प्रतिनियतमिति संशयः । अण्वादे[र]पि कारणत्वं श्रुतम् । कुतः । वटधानादिदृष्टान्तश्रवणात् । तथा हि—छान्दोग्ये [ष]ष्ठाध्याये श्वेतकेतुं प्रत्युपदिशन्नुद्दालकः सूक्ष्मतत्त्वे स्थूलस्य जगतोऽन्तर्भावं प्रतिपा[द]यितुं महावृक्षगर्भितानि वटबीजानि दृष्टान्तत्वेनोदाजहार । अतस्तत्सदृशाः परमा[ण]वो दार्ष्टान्तिकत्वेन श्रुता भवन्ति । शून्यस्य च—"असद्वा इदमग्र आसीत्" इति [सा]क्षादेव कारणत्वं श्रुतम् । "स्वभावमेके कवयो वदन्ति कालं तथाऽन्ये" इति [स्व]भावकालपक्षौ श्रुतौ । तस्मात्परमाण्वादीनामपि श्रौतं कारणत्वमिति प्राप्ते [ब्रू]मः—एकविज्ञानेन सर्वविज्ञानं शून्यादिमतेषु नोपपद्यते । शून्यादिभिरजन्यस्य ब्रह्मणः [शू]न्यादिज्ञानेनाज्ञातत्वात् । धानादिदृष्टान्तस्तु ब्रह्मणोऽपीन्द्रियागम्यतया सूक्ष्मत्वादुप[प]द्यते । असच्छब्दस्य नामरूपराहित्याभिप्रायश्चतुर्थाधिकरणे वर्णितः । स्वभावकालपक्षौ पूर्वपक्षत्वेन श्रुत्योपन्यस्तौ । तस्माद्ब्रह्मैव[1] श्रुत्याभिहितं जगत्कारणं न परमाण्वादीति [सि]द्धम्" ।

तस्यैतस्य समन्वयस्य स्मृतिविरोधतर्कविरोधौ द्वितीयाध्यायस्य प्रथमपादे त्रयो[द]शाधिकरणैः परिहृतौ । तत्र संग्रहकारः +प्रथमाधिकरणमारचयति—

"सांख्यस्मृत्याऽस्ति संकोचो न वा वेदसमन्वये ।
धर्मे वेदः सावकाशः संकोच्योऽनवकाशया ॥
प्रत्यक्षश्रुतिमूलाभिर्मन्वादिस्मृतिभिः स्मृतिः ।
अमूला कापिली बाध्या न संकोचोऽनया ततः ॥

[अस्]मिन्पादे सर्वेष्वधिकरणेषु पूर्वाध्यायोक्तः समन्वयो विषयः । तत्रास्मिन्नधिकरणे [ता]दृकस्य समन्वयस्य सांख्यस्मृत्याऽभिसंकोचोऽस्ति न वेति संशयः । संकोचोऽस्तीति [त]त्प्राप्तम् । कुतः सांख्यस्मृतेरनवकाशत्वेन प्रबलत्वात् । सांख्यस्मृतिर्हि वस्तु-

* एतेन सर्वे व्याख्याता व्याख्याता—ब्र० सू अ० १ पा० ४ अ० ८ सू० २८ । + स्मृत्यन[व]काशदोषप्रसङ्ग इति चेन्नान्यस्मृत्यनवकाशदोषप्रसङ्गात्—ब्र०सू०अ० २ पा० १ अ० १ सू० १ ।

१ क. ग. ङ. 'ति सिद्धान्तस्यै' ।

तत्त्वनिरूपणार्थैव प्रवृत्ता न त्वनुष्ठेयं धर्मं कंचिदपि प्रतिपादयितुम् । यदि तस्मि वस्तुन्यसौ बाध्येत तदा निरवकाशा स्यात् । वेदस्तु धर्मब्रह्मणी प्रतिपादयन्ब्रह्म स्मिन्बाध्यमानोऽपि धर्मे सावकाशः । तस्मादनवकाशया स्मृत्या सावकाशस्य वे संकोचो युक्त इति प्राप्ते ब्रूमः—सांख्यस्मृत्या वेदस्य संकोचो न युक्तः । कु मन्वादिस्मृतिभिर्ब्रह्मकारणवादिनीभिर्बाधितत्वात् । प्रबला हि मन्वादिस्मृतयः । क्षवेदमूलत्वात् । न तु तथा कापिली स्मृतिः । नहि प्रधानकारणवादिन्या भूतं कंचन वेदमुपलभामहे । दृश्यमानवेदवाक्यानां ब्रह्मपरत्वस्य पूर्वमेव निर्णीतत्व तस्मान्न सांख्यस्मृत्या वेदस्य संकोचो युक्तः ” ।

* द्वितीयाधिकरणमारचयति—

“ योगस्मृत्याऽस्ति संकोचो न वा योगो हि वैदिकः ।
तत्त्वज्ञानोपयुक्तश्च ततः संकुच्यते तया ॥
प्रमाऽपि योगे तात्पर्यादतात्पर्यान्न सा प्रमा ।
अवैदिके प्रधानादावसंकोचस्तयाऽप्यतः ॥

योगस्मृतिः पातञ्जलशास्त्रं तत्रोक्तोऽष्टाङ्गयोगः प्रत्यक्षवेदेऽप्युपलभ्यते । श्वतरादिशाखासु योगस्य प्रपञ्चितत्वात् । किंचायं योगस्तत्त्वज्ञानोपयोगी । त्वग्र्यया बुद्ध्येति योगसाध्यस्य चित्तैकाग्र्यस्य ब्रह्मसाक्षात्कारहेतुत्वश्रवणात् । प्रमाणभूतं योगशास्त्रम् । तच्च प्रधानस्यैव जगत्कारणतां वक्ति । तस्माद्योगस वेदस्य संकोच इति प्राप्ते ब्रूमः—अष्टाङ्गयोगे तात्पर्यवत्त्वात्प्रमाणभूताऽपि सती स्मृतिरवैदिके प्रधानादौ न प्रमाणं तत्र तात्पर्याभावात् । तथा हि—“ अथ योगा सनम् ” इति प्रतिज्ञाय “ योगश्चित्तवृत्तिनिरोधः ” इति योगस्यैव लक्षणमुक्त्वा कृत्स्नशास्त्रेण प्रपञ्चयामासेति तस्य योगे तात्पर्यम् । प्रधानादीनि तु न पाद्यतया प्रतिजज्ञे किं तर्हि द्वितीयपादे यमनियमादिसाधनप्रतिपादके हेयं हानं हानहेतुं च विवेचयन्प्रसङ्गात्सांख्यस्मृतिप्रसिद्धानि प्रधानादीनि व्याजहारैव न तत्र तात्पर्यम् । तस्मान्न योगस्मृत्या वेदस्य संकोचः ।

+तृतीयाधिकरणमारचयति—

“ वैलक्षण्याख्यतर्केण बाध्यतेऽथ न बाध्यते ।
बाध्यते साम्यनियमात्कार्यकारणवस्तुनोः ॥

---

* एतेन योगः प्रत्युक्तः—ब्र० सू० अ० २ पा० १ अ० २ सू० ३ । + न विलक्षणत तथात्वं च शब्दात्— ब्र० सू० अ० २ पा० १ अ० ३ सू० ४ ।

---

१ घ. न त° । २ ग. व्यदजहारैव ।

मृद्घटादौ समत्वेऽपि दृष्टं वृश्चिककेशयोः ।
स्वकारणेन वैषम्यं तर्काभासो न बाधकः ॥

अचेतनं जगच्चेतनाद्ब्रह्मणो न जायते विलक्षणत्वात् । यद्येन विलक्षणं तत्तस्मान्न जायते । यथा गोर्महिषीत्यनेन तर्केण समन्वयो बाध्यत इति प्राप्ते ब्रूमः—ये ये कार्यकारणे ते ते सलक्षणे इत्यस्या व्याप्तेर्वृश्चिककेशयोर्व्यभिचारो दृश्यते । अचेतनाद्गोमयाद्वृश्चिकस्य चेतनस्योत्पत्तेश्चेतनाच्च पुरुषादचेतनानां केशानामुत्पद्यमानत्वात् । अतो वेदनिरपेक्षः शुष्कतर्को न कुत्रापि प्रतितिष्ठति ।

तदुक्तमाचार्यैः—

" यत्नेनानुमितोऽप्यर्थः कुशलैरनुमातृभिः ।
अभियुक्ततरैरन्यैरन्यथैवोपपाद्यते " ॥ इति ।

तस्मादाभासत्वाद्वैलक्षण्यहेतुर्न बाधकः " ।

\+ चतुर्थाधिकरणमारचयति—

" बाधोऽस्ति परमाण्वादिमतैर्नो वा यतः पटः ।
न्यूनतन्तुभिरारब्धो दृष्टोऽतो बाध्यते[2] मतैः ॥
शिष्टेष्टाऽपि स्मृतिस्त्यक्ता शिष्टत्यक्तं मतं किमु ।
न तैर्बाधो विवर्ते तु न्यूनत्वनियमो नहि ॥

सांख्ययोगस्मृतिभ्यां तदीयतर्केण च बाधो माऽस्तु नाम । कणादबुद्धादिस्मृतिभिस्तदीयतर्केण च समन्वयो बाध्यताम् । कणादो हि परमर्षिः परमाणूनां जगत्कारणत्वं स्मरति स्म, तर्कं च तस्मिन्नर्थे प्रोवाच । विमतं द्व्यणुकादिकं स्वन्यूनपरिमाणाऽऽरब्धम् । कार्यद्रव्यत्वात् । यथा तन्तुभिः पट इति । बुद्धश्च भगवतो विष्णोरवतारः । स चाभावं जगद्धेतुं स्मरति स्म, तर्कं च तदनुकूलमाह । विमतं भावरूपं जगदभावपुरःसरं भावरूपत्वाद्यथा सुषुप्तिपुरःसरः स्वप्नप्रपञ्च इति । तस्मात्तैः प्रबलैः कणादादिमतैर्बाध इति प्राप्ते ब्रूमः—यदा वैदिकशिरोमणिभिः पुराणकर्तृभिस्तत्र तत्र प्रसङ्गादुदाहृता प्रकृतिपुरुषादिप्रतिपादिका सांख्ययोगस्मृतिर्जगत्कारणविषये दौर्बल्येन परित्यक्ता तदा निखिलैः शिष्टैरुपेक्षितानां कणादादिमतानां दौर्बल्यमिति किमु वक्तव्यम् । न खलु ब्राह्मपाद्मादिषु पुराणेषु क्वचिदपि प्रसङ्गाद्द्व्यणुकादिप्रक्रियोदाहृता । प्रत्युत " हैतुकान्बकवृत्तींश्च वाङ्मात्रेणापि नार्चयेत् " इति बहुशो निन्दोपलभ्यते । यत्तु न्यूनारभ्यत्वनियम उक्तो नासौ विवर्तवादेऽस्ति । दूरस्थपर्वताग्रस्थितैर्महद्भिर्वृक्षै-

* एतेन शिष्टापरिग्रहा अपि व्याख्याताः—ब्र० सू० अ० २ पा० १ अ० ४ सू० १२ ।

१ ख. °त्पत्तिः । अचेत° । २ ख. °ते स तैः । ३ ख. °न्बकवृ° । ४ ख. °भ्यानि° ।

रैत्यल्पदूर्वाप्रभ्रमस्य जन्यमानत्वात् । यदप्यभावपुरःसरत्वानुमानं तत्रापि साध्यवि दृष्टान्तः । सुषुप्तेरवस्थात्वेनावस्थावत आत्मनः सद्रूपस्याङ्गीकरणीयत्वे सति स्वा भावपुरःसरत्वात् । तस्मादेतैर्मतैर्नास्ति बाधः " ।

*पञ्चमाधिकरणमाचरयति—

" अद्वैतं बाध्यते नो वा भोक्तृभोग्यविभेदतः ।
प्रत्यक्षादिप्रमासिद्धो भेदोऽसावन्यबाधकः ॥
तरङ्गफेनभेदेऽपि समुद्राभेद इष्यते ।
भोक्तृभोग्यविभेदेऽपि ब्रह्माद्वैतं न बाध्यते " ॥ इति ।

समन्वयेनावगम्यमानमद्वैतं प्रत्यक्षादिप्रसिद्धेन भोक्तृभोग्यविभेदेन बाध्यत इति चे न । तरङ्गादिरूपेण भेदस्य समुद्ररूपेणाभेदस्य च दृष्टत्वेन भेदाभेदयोर्विरोधाभाव भेदाभेदविरोधव्यवहारस्याऽऽकारभेदेनापि रहितेऽत्यन्तमेकस्मिन्नपि वस्तुनि सावक त्वात् । तस्माद्ब्रह्माकारेणाद्वैतं भोक्तृभोग्याकारेण द्वैतमित्याकारभेदाव्द्यवस्थासिद्धौ कोऽपि बाधः " ।

+षष्ठाधिकरणमारचयति—

" भेदाभेदौ तात्त्विकौ स्तो यदि वा व्यावहारिकौ ।
समुद्रादाविव तयोर्बाधाभावेन तात्त्विकौ ॥
बाधितौ श्रुतियुक्तिभ्यां तावतो व्यावहारिकौ ।
कार्यस्य कारणाभेदादद्वैतं ब्रह्म तात्त्विकम् ॥

स्पष्टौ संशयपूर्वपक्षौ । "नेह नानाऽस्ति किंचन" इति श्रुतिर्भेदं बाधते । युं परस्परोपमर्दात्मकयोर्भेदाभेदयोरेकत्रासंभवादेकस्मिंश्चन्द्रमसि द्वित्वासंभवात् । पूर्वाधिकरण आकारभेदाद्भेद इति तदप्यसत् । अद्वैते वस्तुन्याकारभेदस्यासंप्रतिप समुद्रादौ तु दृष्टत्वादभ्युपगम्यते । नहि दृष्टेऽनुपपन्नं नामेति न्यायात् । अ ब्रह्माकारजगदाकारौ दृष्टाविति चेन्न । ब्रह्मणः शास्त्रैकसमधिगम्यत्वात् । तस्माच्च युक्तिभ्यां बाधितत्वाव्द्यावहारिकौ भेदाभेदौ । किं तर्हि वस्त्विति चेदद्वैतमेवेति ब्र कार्यस्य कारणाव्यतिरेकेण कारणमात्रस्य वस्तुत्वात् । तथा च श्रुतिर्मृत्तिकादिदृष्ट कारणस्यैव सत्यत्वं प्रतिपादयति—" यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं वि स्याद्वाचाऽऽरम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यमेवं सोम्य स आदेशो भवति" ।

* भोक्त्रापत्तेरविभागश्चेत्स्याल्लोकवत्—ब्र० सू० अ० २ पा० १ अ० ५ सू० १।
+ तदनन्यत्वमारम्भणशब्दादिभ्यः—ब्र० सू० अ० २ पा० १ अ० ६ सू० १४ ।

१ ख. 'रल्पत्वदू' । २ ख. 'दू ङ्कुराव म' । ३ क. ग. ङ. सोम्यै° । ४ ग. स

अस्यायमर्थः । प्रौढो मृत्पिण्डः कारणं तद्विकारा घटशरावादयः । तत्र मृद्वस्त्वन्यद्घटादीनि चान्यानि वस्तूनीति तार्किका मन्यन्ते । तत्र घटादीनां पृथग्वस्तुत्वनिरासाय विकारशब्देन श्रुतिस्तान्व्यवहरति । मृद्वस्तुनो विकाराः संस्थानविशेषा घटादयो न पृथग्वस्तुभूताः । यथा देवदत्तस्य बाल्ययौवनस्थाविरादयस्तद्वत् । एवं च सति घटाद्याकारप्रतिभासदशायामपि मृन्मात्रमेव स्वतन्त्रं वस्तु । ततो मृद्यवगतायां घटादीनां यत्तात्त्विकं स्वरूपं तत्सर्वमव तम् । आकारविशेषो न ज्ञायत इति चेन्मा ज्ञायतां नाम । तेषामवस्तुभूतानामजिज्ञासार्हत्वात् । चक्षुषा प्रतिभासमाना अपि विकारा निरूपिताः सन्तो मृद्व्यतिरेकेण न स्वरूपं किंचिल्लभन्ते । घटोऽयं शरावोऽयमिति वाङ्निष्पाद्यनामधेयमात्रं लभन्ते । अतो निर्वस्तुकत्वे सत्युपलभ्यमानत्वरूपेण मिथ्यात्वलक्षणेनोपेतत्वादसत्या विकाराः । मृत्तिका तु विकारव्यतिरेकेणापि स्वरूपं लभत इति सत्या । तथा ब्रह्मोपदेशोऽवगन्तव्यः । ब्रह्मणि मृत्तिकान्यायस्य जगति घटादिन्यायस्य च योजयितुं शक्यत्वादिति । तस्माज्जगतो ब्रह्माभेदादद्वैतं ब्रह्म तात्त्विकम् । एवंविधविचारशून्यानां पुरुषाणामापातदृष्ट्या वेदेनाभ्युपेताद्वितीयब्रह्मप्रतिपत्तेः प्रत्यक्षादिभिर्भेदप्रतिपत्तेश्च सद्भावात्समुद्रतरङ्गन्यायेन भेदाभेदौ भासमानौ व्यावहारिकावेवेति स्थितम्" ।

* सप्तमाधिकरणमारचयति—

"हिताहितक्रियादिः स्यान्नो वाऽभेदं प्रपश्यतः ।
जीवाहितक्रिया स्वार्था स्याद्दोषा नहि युज्यते ॥
अवस्तुर्जीवसंसारस्तेन नास्ति मम क्षतिः ।
इति पश्यत ईशस्य न हिताहितभागिता ॥

परमेश्वरो हि केषांचिज्जीवानां संसारासक्तानां वैराग्यादिकं हितं निर्मिमीते । अहितं च नरकहेतुमधर्मं निर्मिमीते । निर्मिमाणश्च स्वस्य जीवैरभेदं सर्वज्ञतया पश्यति । तस्मात्स्वस्यैव हिताकरणमहितकरणं च प्रसज्येयाताम् । एतच्च न युक्तम् । नहि लोके प्रेक्षावान्कश्चिदपि स्वस्य हितं न करोत्यहितं वा करोति तस्माद्धिताकरणादिदोष इति प्राप्ते ब्रूमः—सर्वज्ञत्वादीश्वरो जीवसंसारस्य मिथ्यात्वं स्वस्य निर्लेपत्वं च पश्यत्यतो न हिताहितभाक्त्वदोषः" ।

---

* इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिः—ब्र० सू० अ० २ पा० १ अ० ७ सू० २१ ।

---

१ ग. °स्थावि° २ ग. °टाद्या° । ३ क. ग. ङ. °षाणां माया तद्दृष्ट्या ।

* अष्टमाधिकरणमारचयति—

"न संभवेत्संभवेद्वा सृष्टिरेकाद्वितीयतः ।
नानाजातीयकार्याणां क्रमाज्जन्म न संभवि ॥
अद्वैतं तत्त्वतो ब्रह्म तच्चाविद्यासहायवत् ।
नानाकार्यकरं कार्यक्रमोऽविद्यास्थशक्तिभिः" ॥ इति ।

एकमेवाद्वितीयमिति ब्रह्मणः स्वगतसजातीयविजातीयभेदैः शून्यत्वमवगम्यते स्रष्टव्यानि चाऽऽकाशवाय्वादीनि विचित्राणि । नह्यविचित्रे कारणे कार्यस्य विचित्र युक्तम् । अन्यथैकस्मादपि क्षीराद्दधितैलाद्यनेकविचित्रकार्यप्रसङ्गात् । क्रमश्चाऽऽकाश दीनां श्रुताववगम्यते । न च तस्य व्यवस्थापकं किंचिदस्ति । तस्मादनेककार्याणां क्र जन्माद्वितीयब्रह्मणो न संभवतीति प्राप्ते ब्रूमः- यद्यपि तत्त्वतो ब्रह्माद्वैतं तथाऽप्यविद्यास योपेतमिति श्रुतियुक्त्यनुभवैरवगम्यते । "मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम इति श्रुतिः । मायैवाविद्या । उभयोरप्यनिर्वचनीयलक्षणस्यैकत्वात् । न च मायाः कारे द्वैतापत्तिर्वास्तवस्य द्वितीयस्याभावात् । अत एकमपि ब्रह्म विद्यासहायवशान्नाना र्यकरं भविष्यति । न च कार्यक्रमस्य व्यवस्थापकाभावः । अविद्यागतानां शक्ति षाणां व्यवस्थापकत्वात् । तस्माद्द्वितीयाद्ब्रह्मणो नानाकार्याणां क्रमेण सृष्टिः संभव

\+ नवमाधिकरणमारचयति—

"न युक्तो युज्यते वाऽस्य परिणामो न युज्यते ।
कात्स्न्याद्ब्रह्मानित्यताप्तिरंशात्सावयवं भवेत् ॥
मायाभिर्बहुरूपत्वं न कात्स्न्यान्नापि भागतः ।
युक्तोऽनवयवस्यापि परिणामोऽत्र मायिकः ॥

आरम्भणाधिकरणे ( ब्र० सू० २-१-६ )—कार्यकारणयोरभेदः प्रतिपादितः अतो न वैशेषिकादिवदारम्भवादो ब्रह्मवादिनोऽभिमतः । तस्मात्क्षीरदधिन्यायेन णामोऽभ्युपगन्तव्यः । तत्र किं ब्रह्म कात्स्न्र्येन परिणमत उतैकदेशेन । नाऽऽद्य अशेषपरिणामे ब्रह्मणः क्षीरवदनित्यत्वप्रसङ्गात् । द्वितीये सावयवत्वप्रसङ्गः । तस् परिणाम इति प्राप्ते ब्रूमः—"इन्द्रो मायाभिः पुरुरूप ईयते" इति श्रुतेर्ब्रह्मणो माय क्तिभिर्जगद्रूपत्वं परिणामो न त्वसौ वास्तवः । तेन कृत्स्नैकदेशविकल्पयोर्नावकाश तस्माद्युज्यते परिणामः" ।

* उपसंहारदर्शनान्नेति चेन्न क्षीरवद्धि—ब्र० सू० अ० २ पा० १ अ० ८ सू० २४ । + प्रसक्तिर्निरवयवत्वशब्दकोपो वा—ब्र० सू० अ० २ पा० १ अ० ९ सू० २६ ।

१ क. ख. ङ. °कवि° । २ ख. °तीयब्रह्म° ।

* दशमाधिकरणमारचयति—

"नाशरीरस्य मायाऽस्ति यदि वाऽस्ति न विद्यते ।
ये हि मायाविनो लोके ते सर्वेऽपि शरीरिणः ॥
बाह्यहेतुमृते यद्वन्मायाया कार्यकारिता ।
ऋतेऽपि देहं मायैवं ब्रह्मण्यस्तु प्रमाणतः ॥

लोके मायाविनामैन्द्रजालिकानां सशरीरत्वदर्शनादशरीरस्य ब्रह्मणो न माया संभवतीति प्राप्ते ब्रूमः—गृहादिनिर्मातॄणां स्वव्यतिरिक्तमृद्दारुतृणादिबाह्यसाधनसापेक्षत्वदर्शनेऽप्यैन्द्रजालिकस्य बाह्यसाधननैरपेक्ष्येण यथा गृहादिनिर्मातृत्वं तथा लौकिकमायाविनः शरीरसापेक्षत्वदर्शनेऽपि ब्रह्मणो मायासिद्ध्यर्थं तदपेक्षा मा भूत् । अथोच्येत । ऐन्द्रजालिकस्य बाह्यसाधननैरपेक्ष्येण निर्मातृत्वे प्रत्यक्षप्रमाणमस्तीति । तर्हि ब्रह्मणोऽपि शरीरनैरपेक्ष्येण मायासद्भावे "मायिनं तु महेश्वरम्" इति श्रुतिः प्रमाणमस्तु" ।

+एकादशाधिकरणमारचयति—

"तृप्तोऽस्रष्टाऽथ वा स्रष्टा न स्रष्टा फलवाञ्छने ।
अतृप्तिः स्यादवाञ्छायामुन्मत्तनरतुल्यता ॥
लीलाश्वासवृथाचेष्टा अनुद्दिश्य फलं यतः ।
अनुन्मत्तैर्विरच्यन्ते तस्मात्तृप्तस्तथा सृजेत्" ॥ इति ।

"आनन्दो ब्रह्म" इति शास्त्रान्नित्यतृप्तः परमेश्वरः । तादृशस्य सृष्टिविषयायामिच्छायामभ्युपगम्यमानायां नित्यतृप्तिर्व्याहन्येत । अनभ्युपगम्यमानायामबुद्धिपूर्विकां सृष्टिं विरचयत उन्मत्तनरतुल्यता प्रसज्येतेति प्राप्ते ब्रूमः—बुद्धिमद्भिरेव राजादिभिरन्तरेण प्रयोजनं लीलया मृगयादिप्रवृत्तिः क्रियते । श्वासोच्छ्वासव्यवहारस्तु सार्वजनीनः । व्यर्थचेष्टाश्च बालकैः क्रियमाणा बहुशो दृश्यन्ते । तद्वन्नित्यतृप्तोऽपीश्वरः प्रयोजनमन्तरेणाप्यनुन्मत्तः सन्नशेषं जगत्सृजतु" ।

×द्वादशाधिकरणमारचयति—

"वैषम्याद्यापतेन्नो वा सुखदुःखे नृभेदतः ।
सृजन्विषम ईशः स्यान्निर्घृणश्चोपसंहरन् ॥

---

* सर्वोपेता च तद्दर्शनात्—ब्र० सू० अ० २ पा० १ अ० १० सू० ३० । + न प्रयोजनवत्त्वात्—ब्र०सू०अ० २ पा० १ अ० ११ सू० ३२ । × वैषम्यनैर्घृण्ये न सापेक्षत्वात्तथा हि दर्शयति—ब्र० सू० अ० २ पा० १ अ० १२ सू० ३४ ।

---

१ क. ख. ग. ङ. [illegible]

प्राण्यनुष्ठितकर्मादिमपेक्ष्येशः प्रवर्तते ।
नातो वैषम्यनैर्घृण्ये संसारस्तु न चाऽऽदिमान् ” ॥ इति ।

ईश्वरो देवादीनत्यन्तसुखिनः सृजति पश्वादीनत्यन्तदुःखिनो मनुष्यांश्च मध्यमां तारतम्येन पुरुषविशेषेषु सुखदुःखे सृजन्नीश्वरः कथं विषमो न स्यात् । कथं च नीचैरत्यन्तजुगुप्सितं देवतिर्यङ्मनुष्याद्यशेषजगदुपसंहारं कुर्वन्निर्घृणो न भवेत् । तस्माद्वैषम्यनैर्घृण्ये प्रसज्येयातामिति प्राप्ते ब्रूमः—न तावदीश्वरस्य वैषम्यप्रसङ्गोऽस्ति । प्राणिनामुत्तममध्यमाधमलक्षणवैषम्ये तत्तत्कर्मणामेव प्रयोजकत्वात् । न चैतावतेश्वरस्वातन्त्र्यहानिः । अन्तर्यामितया कर्माध्यक्षत्वात् । न त्वेवं सति *घट्टकुटीप्रभातन्याय आपद्यते । ईश्वरे वैषम्यं परिहर्तुं कर्मणां वैषम्ये हेतुत्वमुक्त्वा पुनरपीश्वरस्वातन्त्र्यसिद्धये तत्कर्मनियामकत्वेऽभ्युपगम्यमाने सत्यन्ततो गत्वा चेश्वरस्यैव वैषम्यहेतुत्वप्रसङ्गात् । नायं दोषः । नियामकत्वं नाम तत्तद्वस्तुशक्तीनामव्यवस्थापरिहारमात्रम् । शक्तयस्तु मायाशरीरभूताः । न तु तासामुत्पादक ईश्वरः । ततः स्वशक्तिवशात्तत्तत्कर्मणां वैषम्यहेतुत्वेऽपि न व्यवस्थापकस्येश्वरस्य वैषम्यप्रसङ्गः । संहारस्य सुषुप्तिवद्दुःखजनकत्वात्प्रत्युत सर्वक्लेशनिवर्तकत्वाच्च । ततः सघृणत्वमेव । नन्ववान्तरसृष्टिषु पूर्वपूर्वकर्मापेक्षया सृजत ईश्वरस्य वैषम्याभावेऽपि प्रथमसृष्टौ पूर्वकर्मासंभवाद्वैषम्यदोषस्तदवस्थ इति चेन्न । सृष्टिपरम्पराया अनादित्वात् । नान्तो न चाऽऽदिरित्यादिशास्त्रात् । तस्मान्न कोऽपि दोषः ।

× त्रयोदशाधिकरणमारचयति—

“नास्ति प्रकृतिता यद्वा निर्गुणस्यास्ति नास्ति सा ।
मृदादेः सगुणस्यैव प्रकृतित्वोपलम्भनात् ॥
भ्रमाधिष्ठानताऽस्माभिः प्रकृतित्वमुपेयते ।
निर्गुणेऽप्यस्ति जात्यादौ सा ब्रह्म प्रकृतिस्ततः ॥

प्रकृतित्वं नाम कार्याकारेण विक्रियमाणत्वम् । तच्च लोके सगुण एव मृदादावुपलब्धम् । अतो निर्गुणस्य ब्रह्मणः कथं प्रकृतितेति प्राप्ते ब्रूमः—यद्यपि प्रकृतिर्नयेतिव्युत्पत्त्या विक्रियमाणत्वं प्रतीयते तथाऽपि तद्विक्रियमाणत्वं द्वेधाऽपि संभवति क्षीरादिवत्परिणामित्वेन वा रज्ज्वादिवद्भ्रमाधिष्ठानत्वेन वा । तत्र निर्गुणस्य पा

* यथा कश्चित्सायं पान्थो द्रव्यलिप्सुर्घट्टपालभिया ( घट्टः पर्वतीयविषममार्गः ) तान्प्रतारयन् प्रलायनमार्गभ्रंशात्पुनरपि प्रातर्घट्टकुट्यामेवाऽऽयातीति । × सर्वधर्मोपपत्तेश्च—ब्र० सू० अ० २ पा० १ अ० १३ सू० ३५ ।

१ क ध ङ. ृत्वेश्वरवै ।

मित्वासंभवेऽपि भ्रमाधिष्ठानत्वमस्तु । दृश्यते हि निर्गुणेऽपि[1] जात्यादौ भ्रमाधिष्ठानता । मलिनं ब्राह्मणं दृष्ट्वा शूद्रोऽयमिति[2] भ्रान्तिव्यवहारदर्शनात् । तस्मान्निर्गुणमपि ब्रह्म प्रकृतिरिति सिद्धम् " ।

द्वितीयपादेऽष्टाभिरधिकरणैर्मतान्तरनिराकरणेन ब्रह्मणो जगत्कारणत्वं प्रतिष्ठापितम् । तत्र *प्रथमाधिकरणमारचयति—

"प्रधानं जगतो हेतुर्न वा सर्वे घटादयः ।
अन्विताः सुखदुःखाद्यैर्यतो हेतुरतो भवेत् ॥
न हेतुर्योग्यरचनाप्रवृत्त्यादेरसंभवात् ।
सुखाद्या आन्तरा बाह्या घटाद्यास्तु कुतोऽन्वयः ॥

सुखदुःखमोहात्मकं प्रधानं जगतः प्रकृतिः । जगति सुखाद्यन्वयदर्शनात्[3] । घटपटादयो लभ्यमानाः सुखाय भवन्त्युदकाहरणप्रावरणादिकार्यकारित्वात् । अत एव घटादयोऽन्यैरपह्रियमाणास्तस्यैव दुःखजनकाः । यदा तूदकानयनादिकार्ये नापेक्षितं तदा न सुखदुःखे जनयन्ति । केवलमुपेक्षणीयत्वेनावतिष्ठन्ते[4] । तदिदमुपेक्षाविषयत्वं मोहः । मुह वैचित्त्य इति धातोर्मोहशब्दनिष्पत्तेः । उपेक्षणीयेषु च चित्तवृत्त्यनुदयात् । अतः सुखदुःखमोहान्वयदर्शनात्प्रधानं प्रकृतिरिति **सांख्या** मन्यन्त इति प्राप्ते ब्रूमः—न प्रधानं जगतो हेतुः । देहेन्द्रियमहीधरादिरूपस्य विचित्रस्य प्रतिनियतसंनिवेशविशेषस्य जगतो रचनायामचेतनस्य प्रधानस्य योग्यत्वासंभवात् । लोके हि प्रतिनियतकार्यस्य विचित्रप्रासादादेरतिबुद्धिमत्कर्तृकत्वोपलम्भनात् । आस्तां तावदियं रचना तत्सिद्ध्यर्थं प्रवृत्तिरपि नाचेतनस्योपपद्यते । चेतनानधिष्ठिते शकटादौ तददर्शनात् । अथ पुरुषस्य चेतनस्य प्रकृत्यधिष्ठातृत्वमभ्युपगम्येत तर्ह्यसङ्गत्वं पुरुषस्य हीयेतेत्यपसिद्धान्तापत्तिः । यदुक्तं सुखदुःखमोहान्विता घटादय इति । तदसत् । सुखादीनामान्तरत्वाद्घटादीनां बाह्यत्वात् । तस्मान्न प्रधानं जगद्धेतुः " ।

+द्वितीयाधिकरणमारचयति—

" नास्ति काणाददृष्टान्तः किंवाऽस्त्यसदृशोद्भवे ।
नास्ति शुक्लः पटः शुक्लतन्तोरेव हि जायते ॥
अणुद्व्यणुकमुत्पन्नमनणोः[5] परिमण्डलात् ।
अदीर्घाद्द्व्यणुकाद्दीर्घं त्र्यणुकं तन्निदर्शनम् ॥

* रचनानुपपत्तेश्च नानुमानम्—ब्र० सू० अ० २ पा० २ अ० १ सू० १ । + महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम्—ब्र० सू० अ० २ पा० २ अ० २ सू० ११ ।

१ ग. °णे जा° । २ ग. °ति भ्रा° । ३ क. ङ. सुखदुःखा । ४ ख. °न्ते यदि° । ५ ग. घ. अदि° । ६ क. ख. ग. ङ. °प्रमाण° ।

पूर्वस्मिन्पादे चेतनाद्ब्रह्मणो विलक्षणमचेतनं जगज्जायत इत्यत्र सांख्यान्प्रति लोकप्रसिद्धं गोमयवृश्चिकादिनिदर्शनमभिहितम् । तावता सांख्यैः क्रियमाणस्याऽऽक्षेपस्य परिहृतत्वात्स्वपक्षसाधनं संपन्नम् । परपक्षदूषणं चास्मिन्पादे प्रक्रम्य पूर्वाधिकरणे सांख्यमतं दूषितम् । इतःपरं वैशेषिकमतं दूषयितव्यम् । तन्मतस्य च प्रक्रियाबहुलत्वात्तद्वासनावासितः कश्चित्पुरुषस्तत्प्रक्रियासिद्धं विलक्षणोत्पत्तिदृष्टान्तमन्तरेण ब्रह्मकारणवादं न बहु मन्यते । अतो विसदृशोत्पत्तौ काणादमतसिद्धो दृष्टान्तोऽस्ति न वेति विचार्यते । नास्तीति तावत्प्राप्तम् । यतः शुक्लः पटः शुक्लेभ्य एव तन्तुभ्यो जायते न तु रक्तेभ्यस्तस्मान्नास्तीति प्राप्ते ब्रूमः—अस्त्येव विसदृशोत्पत्तौ दृष्टान्तः । तथा हि । परमाणवः पारिमाण्डल्यपरिमाणयुक्ताः । न त्वणुपरिमाणयुक्ताः । द्वाभ्यां परमाणुभ्यामणुपरिमाणरहिताभ्यामणुपरिमाणोपेतं द्व्यणुकमुत्पद्यते । इदमेकं निदर्शनम् । तथा ह्रस्वपरिमाणोपेतत्वाद्दीर्घपरिमाणरहितं द्व्यणुकं तादृशेभ्यस्त्रिभ्यो द्व्यणुकेभ्यो दीर्घपरिमाणोपेतमणुपरिमाणरहितं त्र्यणुकमुत्पद्यते । इदमपरं निदर्शनम् । एवमन्यान्यपि तत्प्रक्रियाप्रसिद्धानि निदर्शनान्युदाहरणीयानि " ।

* तृतीयाधिकरणमारचयति—

" जनयन्ति जगन्नो वा संयुक्ताः परमाणवः ।
आद्यकर्मजसंयोगाद्द्व्यणुकादिक्रमाज्जनिः ॥
सनिमित्तानिमित्तादिविकल्पेष्वाद्यकर्मणः ।
असंभवादिसंयोगे जनयन्ति न ते जगत् " ॥ इति ।

प्रलीने पूर्वसिद्धे जगति यदा महेशस्य सिसृक्षा भवति तदा प्राणिकर्मवशान्निश्चले परमाणुष्वाद्यं कर्मोत्पद्यते । तस्मात्कर्मण एकः परमाणुः परमाण्वन्तरेण संयुज्यते तस्मात्संयोगाद्द्व्यणुकमारभ्यते । तेभ्यस्त्रिभ्यो द्व्यणुकेभ्यस्त्र्यणुकमित्यादिक्रमेण कृत्स्नस्य जगत उत्पत्तौ बाधकाभावात्संयुक्ताः परमाणवो जगज्जनयन्तीति प्राप्ते ब्रूमः—यदेतदाद्यं कर्म तत्सनिमित्तमनिमित्तं वा । अनिमित्तत्वे नियामकाभावात्सर्वदा तदुत्पत्तौ प्रलयाभावप्रसङ्गः । सनिमित्तत्वेऽपि तन्निमित्तं दृष्टमदृष्टं वा । न तावद्दृष्टम् । प्रयत्नस्य वाऽभिघातस्य वा शरीरोत्पत्तेः प्रागसंभवात् । ईश्वरप्रयत्नस्य नित्यस्य कादाचित्क्याद्यकर्मोत्पत्तिं प्रत्यनियामकत्वात् । नाप्यदृष्टमाद्यकर्मनिमित्तम् । आत्मसमवेतस्यादृष्टस्य परमाणुभिरसंबन्धात् । अत एवमादिविकल्पदोषप्रसरे सत्याद्यकर्मासंभवान्न परमाणुसंयोगो जायते । ततः संयुक्तेभ्यः परमाणुभ्यो जगज्जनिरिति मतं दूरापास्तम् ।

* उभयथाऽपि न कर्मातस्तदभावः— ब्र० सू० अ० २ पा० २ अ० ३ सू० १२ ।

१ ग. °द्यक° ।

* चतुर्थाधिकरणमारचयति—

" समुदायावुभौ युक्तावयुक्तौ वाऽणुहेतुकः ।
एकोऽपरः स्कन्धहेतुरित्येवं युज्यते द्वयम् ॥
स्थिरचेतनराहित्यात्स्वयं चाचेतनत्वतः ।
न स्कन्धानामणूनां वा समुदायोऽत्र युज्यते ॥

बाह्यास्तित्ववादिनो **बौद्धा** मन्यन्ते । द्वौ समुदायौ बाह्य आभ्यन्तरश्चेति । तत्र बाह्यो भूनदीसमुद्रादिकः । आन्तरश्चित्तचैत्यात्मकः । तदेतत्समुदायद्वयमेवाशेषं जगत् । तत्र बाह्यसमुदायस्य परमाणवः कारणम् । ते च परमाणवश्चतुर्विधाः । केचित्खराः[1] पार्थिवाख्याः । अपरे स्निग्धा आप्याख्याः । अन्ये चोष्णास्तैजसाख्याः । अन्ये चैल-[2] नात्मका वायवीयाख्याः । तेभ्यश्चतुर्विधेभ्यः परमाणुभ्यो युगपत्पुञ्जीभूतेभ्यो बाह्यः समुदायो जायते । आन्तरस्य समुदायस्य स्कन्धपञ्चकं कारणम् । रूपस्कन्धो विज्ञानस्कन्धो वेदनास्कन्धः संज्ञास्कन्धः संस्कारस्कन्धश्चेति पञ्च स्कन्धाः । तत्र चित्तेन निरूप्यमाणाः शब्दस्पर्शादयो रूपस्कन्धः । तदभिव्यक्तिर्विज्ञानस्कन्धः । तज्जन्यसुखदुःखे वेदनास्कन्धः । देवदत्तादिनामधेयं संज्ञास्कन्धः । एतेषां वासना संस्कारस्कन्धः । तेभ्यः पञ्चस्कन्धेभ्यः पुञ्जीभूतेभ्य आन्तरसमुदायो जायते । तस्माद्युज्यते समुदायद्वयमिति प्राप्ते ब्रूमः—किमणूनां स्कन्धानां[3] च संघातापत्तौ निमित्तभूतश्चेतनोऽन्योऽस्ति । किंवा स्वयं संहन्यन्ते । आद्येऽपि स चेतनः स्थायी क्षणिको वा स्यात् । स्थायित्वेऽपसिद्धान्तः । क्षणिकत्वे प्रथमं स्वयमलब्धात्मकः पश्चात्संघातापत्तिं करोतीति वक्तुमशक्यम् । द्वितीये त्वचेतनाः स्कन्धा अणवश्च नियामकं चेतनमन्तरेण प्रतिनियताकारेण कथं संहन्यन्ताम् । तस्मान्न युक्तं समुदायद्वयम्" ।

= पञ्चमाधिकरणमारचयति—

"विज्ञानस्कन्धमात्रत्वं युज्यते वा न युज्यते ।
युज्यते स्वप्नदृष्टान्ताद्बुद्ध्यैव व्यवहारतः ॥
अबाधात्स्वप्नवैषम्याद्बाह्यार्थस्तूपलभ्यते ।
बहिर्वदिति तेऽप्युक्तिर्नातो धीरर्थरूपभाक् ॥ इति ।

केचिद्बौद्धा बाह्यार्थमपलपन्तो विज्ञानस्कन्धमात्रं तत्त्वमित्याहुः । न चात्र व्यवहारानुपपत्तिः स्वप्ने बाह्यार्थाननपेक्ष्य केवलया बुद्ध्या व्यवहारदर्शनात् । तथैव जाग्रद्व्यव-

* समुदाय उभयहेतुकेऽपि तदप्राप्तिः—ब्र० सू० अ० २ पा० २ अ० ४ सू० १८ । = नाभाव उपलब्धेः—ब्र० सू० अ० २ पा० २ अ० ५ सू० २८ ।

१ क. ख. ङ. °चित्स्थिराः । २ ग. च. न्तरिक्षात्मका । घ. च. तरलात्मका । ३ ख. ग. घ. °नां सं° ।

हारस्याप्युपपत्तेः। तस्माद्विज्ञानस्कन्धमात्रत्वं युज्यत इति प्राप्ते ब्रूमः— विषमो हि स्वप्नदृष्टान्तः प्रबोधदशायां स्वप्नस्य बाध्यमानत्वात्। जाग्रद्व्यवहारस्य न क्वचिद्बा पश्यामः। न च बाह्यार्थसद्भावे प्रमाणाभावः। उपलब्धेरेव प्रमाणत्वात्। उपलभ्यन्ते हि घटादयो बहिष्ठत्वेन। अथोच्येत। बुद्धिरेव बाह्यघटादिवदवभासते। तथ चाऽऽहुः—"यदन्तर्ज्ञेयं तत्त्वं तद्बहिर्वदवभासते" इति। एवं तर्हि त्वदुक्तिरेव बाह्या र्थसद्भावे प्रमाणमिति ब्रूमः। क्वचिदपि बाह्यार्थासद्भावे तद्व्युत्पत्तिरहितत्वाद्बहिर्वदित्यु पमानोक्तिर्न संगच्छते। तस्माद्बाह्यार्थसद्भावाद्विज्ञानमात्रत्वं न युक्तम्"।

*षष्ठाधिकरणमारचयति—

"सिद्धिः सप्तपदार्थानां सप्तभङ्गीनयान्न वा।
साधकन्यायसद्भावात्तेषां सिद्धौ किमद्भुतम्॥
एकस्मिन्सदसत्त्वादिविरुद्धप्रतिपादनात्।
अपन्यायः सप्तभङ्गी न च जीवस्य सांशता॥

अत्राऽऽर्हता मन्यन्ते। जीवोऽजीवश्चेति द्वौ पदार्थौ। जीवश्चेतनः शरीरपरिमा सावयवः। अजीवः षड्विधः। तत्र महीधरादिरेकः। आस्रवसंवरनिर्जरबन्धमोक्षाख्य पञ्च। आस्रवत्यनेन जीवो विषयेष्वित्यास्रव इन्द्रियसंघातः। संवृणोति विवेकमिति विवेकादिः संवरः। निःशेषेण जीर्यत्यनेन कामक्रोधादिरिति केशोल्लुञ्चनतप्तशिला रुहणादिकं तपो निर्जरः। कर्माष्टकेनाऽऽपादिता जन्ममरणपरम्परा बन्धः। चत्वा घातकर्माणि पापविशेषरूपाणि। चत्वारि चाघातिकर्माणि पुण्यविशेषरूपाणि। शा स्त्रोपायेन तेभ्योऽष्टभ्यः कर्मभ्यो विनिर्गतस्य जीवस्य संततोर्ध्वगमनं मोक्षः। त सप्त पदार्थाः सप्तभङ्गीरूपेण न्यायेन व्यवस्थाप्यन्ते—१ स्यादस्ति, २ स्यान्नास्ति, स्यादस्ति च नास्ति च, ४ स्यादवक्तव्यः, ५ स्यादस्ति चावक्तव्यश्च, स्यान्ना चावक्तव्यः ७ स्यादस्ति च नास्ति चावक्तव्यश्चेति सप्तभङ्गीनयः। अस्यायमर्थ स्याच्छब्द ईषदर्थवाची निपातः। प्रतिवादिनो हि चतुर्विधाः। सद्वादिनोऽसद्वादि सदसद्वादिनोऽनिर्वचनीयवादिनश्चेति। पुनरप्यनिर्वचनीयमतेन मिलितानि सदसदाद मतानि त्रिविधानि। तानेतान्सप्तविधान्वादिनः प्रति सप्तविधा न्यायाः प्रयोक्तव्या तद्यथा। सद्वादी समागत्याऽऽर्हतं प्रति किं त्वन्मते मोक्षोऽस्तीति पृच्छति तत्राऽऽर्हत उत्तरं ब्रूत ईषदस्तीति। एवमन्यानपि वादिनः प्रतीषन्नास्तीतित्यादीन्युर

* नैकस्मिन्नसंभवात्—ब्र० सू० अ० २ पा० २ अ० ६ सू० ३३।

१ ग. घ. चाति०। २ म. व. °वाति०। ३ र. °स्त्रोकेनो°। ४ घ. °मिश्रिता°
५ घ. सद्वादिम°।

ण्युदाहर्तव्यानि । तावता वादिनः सर्वे निर्विण्णाः सन्तो नोत्तरं प्रतिपद्यन्ते । अतोऽस्य सप्तभङ्गीरूपस्य साधकन्यायस्य सद्भावाज्जीवादीनां सप्तपदार्थानां सिद्धौ किमत्राऽऽश्चर्य-मिति प्राप्ते ब्रूमः—सप्तभङ्गीरूपोऽयमपन्यायः । एकस्य जीवपदार्थस्य सद्वादिनं प्रति सद्रूपत्वमसद्वादिनं प्रत्यसद्रूपत्वं चेत्येवमादिविरुद्धधर्मप्रतिपादकत्वात् । न च जीवस्य सावयवत्वं युज्यतेऽनित्यत्वप्रसङ्गात् । तदनित्यत्वे च मोक्षः कस्य पुरुषार्थः स्यात् । तस्मान्न्यायाभासेन सप्तभङ्ग्याख्येन जीवादिपदार्थानां न सिद्धिः ।

* सप्तमाधिकरणमारचयति—

"तटस्थेश्वरवादो यः स युक्तोऽथ न युज्यते ।
युक्तः कुलालदृष्टान्तान्नियन्तृत्वस्य संभवात् ॥
न युक्तो विषमत्वादिदोषाद्वैदिक ईश्वरे ।
अभ्युपेते तटस्थत्वं त्याज्यं श्रुतिविरोधतः ॥

पूर्वाध्यायस्योपान्त्याधिकरणे जगतो निमित्तमुपादानं चेश्वर इत्यागमबलादुक्तम् । तदेतदसहमानास्तार्किकशैवादयः केवलं निमित्तत्वमीश्वरस्य मन्यन्ते । युक्तिं चाऽऽहुः—यथा कुलालोऽनुपादानादिभूतो दण्डचक्रादीन्नियच्छन्कर्ता भवति तथा तटस्थ ईश्वर इति प्राप्ते ब्रूमः—न युक्तं केवलनिमित्तत्वं वैषम्यनैर्घृण्यादिदोषस्य दुष्परिहरत्वात् । कथं त्वया परिहृतो दोष इति चेत्प्राणिकर्मसापेक्षत्वादिति ब्रूमः—तर्हि त्वे चाऽऽगमोऽस्माकं प्रमाणं, त्वयाऽप्यन्ततो गत्वाऽऽगमश्चेदङ्गी क्रियते तर्हि तटस्थत्वमीश्वरस्य त्याज्यं स्यात् । बहु स्यां प्रजायेयेत्युपादानत्वश्रुत्या विरोधात् । तस्मान्न युक्तस्तटस्थेश्वरवादः" ।

× अष्टमाधिकरणमारचयति—

"जीवोत्पत्त्यादिकं पाञ्चरात्रोक्तं युज्यते न वा ।
युक्तं नारायणव्यूहतत्समाराधनादिवत् ॥
युज्यतामविरुद्धोंऽशो जीवोत्पत्तिर्न युज्यते ।
उत्पन्नस्य विनाशित्वे कृतनाशादिदोषतः ॥

पाञ्चरात्रिका भागवता मन्यन्ते—भगवानेको वासुदेवो जगत उपादानं निमित्तं च । तत्समाराधनज्ञानध्यानैर्भवबन्धविच्छेदः । तस्माच्च वासुदेवात्संकर्षणाख्यो जीवो जायते । जीवाच्च प्रद्युम्नाख्यं मनः । मनसश्चानिरुद्धाख्योऽहंकारः । त एते वासुदेवादयश्चत्वारो व्यूहाः सर्वात्मका इति प्राप्ते ब्रूमः—तत्र वासुदेवं तत्समाराधना-

* पत्युरसामञ्जस्यात्—ब्र० सू० अ० २ पा० २ अ० ७ सू० ३७ । × उत्पत्त्यसंभवात्—ब्र० सू० अ० २ पा० २ अ० ८ सू० ४२ ।

१ घ. °दानभू° । २ घ. °था सत्याग° ।

दिकं च श्रुत्यविरोधादभ्युपगच्छामः । यत्तु जीव उत्पद्यत इत्युक्तं तदसत् । कृतनाशा-कृताभ्यागमप्रसङ्गात् । पूर्वसृष्टौ यो जीवस्तस्मिन्नुत्पत्तिमत्त्वेन प्रलयदशायां विनष्टे सति तत्कृतयोर्धर्माधर्मयोरफलप्रदत्वेन विनाशः प्रसज्यते । अस्मिंश्च कल्प उत्पद्यमानस्य नूतन-जीवस्य धर्माधर्मयोः पूर्वमननुष्ठितयोः सतोरिह सुखदुःखप्राप्तिर्भवतीत्यकृताभ्यागमः प्रसज्येत । तस्माज्जीवोत्पत्त्यादिकं न युक्तम्" ।

तृतीयपादे नवभिरधिकरणैराकाशादिसृष्टिर्विचारिता । तत्र *प्रथमाधिकरणमा-रचयति—

"व्योम नित्यं जायते वा हेतुत्रयविवर्जनात् ।
जनिश्रुतेश्च गौणत्वान्नित्यं व्योम न जायते ॥
एकज्ञानात्सर्वबुद्धेर्विभक्तत्वाज्जनिश्रुतेः ।
विवर्ते कारणैकत्वाद्ब्रह्मणो व्योम जायते ॥

तैत्तिरीये—" तस्माद्वा एतस्मादात्मन आकाशः संभूतः " इति श्रूयते । तत्राऽऽ-काशं नित्यं न तु जन्मवत् । कुतः । आकाशोत्पादकस्य समवाय्यसमवायिनिमित्ताख्य-कारणत्रितयस्य दुःसंपादत्वात् । संभूत इति जनिश्रुतिस्तु संप्रतिपन्नब्रह्मकार्यवद्व्योम्नि सत्ताश्रयत्वगुणयोगात्प्रवृत्ता । तस्मादनाद्यनन्तं व्योम न जायत इति प्राप्ते ब्रूमः—एकविज्ञानेन सर्वविज्ञानं तावदशेषेषु[4] वेदान्तेषु डिण्डिमः । तच्च व्योम्नो ब्रह्म-कार्यत्वे मृद्घटन्यायेन ब्रह्माव्यतिरेकादुपपादयितुं सुशकम् । नान्यथा । किंचाऽऽकाशं जायते विभक्तत्वाद्घटवत् । न चायमसिद्धो हेतुः । वाय्वादिवैलक्षण्यस्याऽऽकाशे प्रसि-द्धत्वात् । नापि ब्रह्मण्यनैकान्तिकत्वम् । सर्वात्मकस्य ब्रह्मणः कस्माच्चिदपि विभक्त-त्वस्य दुर्भणत्वात् । जनिश्रुतिश्चोत्पत्तिवादिनाऽनुगृहीता भवति । यत्तु कारणत्रितया-संभव इत्युक्तम् । तदसत् । आरम्भवादे त्रितयापेक्षायामपि विवर्तवादे तदनपेक्षत्वात् । तस्मादेतेभ्यो हेतुभ्यो ब्रह्मणः कारणाद्व्योम जायते " ।

+ द्वितीयाधिकरणमारचयति—

" वायुर्नित्यो जायते वा छान्दोग्येऽजन्यकीर्तनात् ।
सैषाऽनस्तमिता देवतेत्युक्तेश्च न जायते ॥
श्रुत्यन्तरोपसंहाराद्गौण्यनस्तमयश्रुतिः ।
वियद्वज्जायते वायुः स्वरूपं ब्रह्म कारणम् ॥

* न वियदश्रुतेः—ब्र० सू० अ० २ पा० ३ अ० १ सू० १ । × एतेन मातरिश्वा व्याख्यातः-ब्र० सू० अ० २ पा० ३ अ० २ सू० ८ ।

१ ग. घ. °मत्त्वे प्र° । २ ख. °सज्येतेति कृतविप्रणाशः । अ° । ३ ग. °सज्यते । त° । ४ ख. °शेषवे° ।

तैत्तिरीय एवाऽऽकाशाद्वायुरिति श्रूयते । सेयमुत्पत्तिर्गौणी छान्दोग्ये सृष्टिप्रकरणे तेजोबन्नानामेवोत्पत्त्यभिधानाद्वायोरुत्पत्त्यनभिधानात् । ननु क्वचिदश्रवणमन्यत्र श्रुतं न निवारयितुमुत्सहत इति न्यायेन तैत्तिरीयश्रुतेः कुतो गौणत्वमितिचेच्छ्रुत्यन्तरविरोधादिति ब्रूमः—बृहदारण्यके "सैषाऽनस्तमिता देवता यद्वायुः" इति वायोर्विनाशप्रतिषेधादुत्पत्तिमत्त्वे च तदयोगात्तस्मान्न जायते वायुरिति प्राप्ते ब्रूमः—छान्दोग्ये जन्माश्रवणेऽपि गुणोपसंहारन्यायेन तैत्तिरीयवाक्यस्येतरत्रोपसंहारे सति श्रुतमेव च्छान्दोग्ये वायुजन्म । अनस्तमयश्रुतिस्तु न मुख्या । उपासनप्रकरणपठितत्वेन स्तुत्यर्थत्वात् । आकाशोत्पत्तिहेतवश्चात्रानुसंधेयाः । न च वायोराकाशकार्यत्वेन ब्रह्मण्यनन्तर्भावाद्ब्रह्मज्ञानेन वायुज्ञानं न सिध्येदिति शङ्कनीयम् । पूर्वपूर्वकार्यविशिष्टस्य ब्रह्मण उत्तरोत्तरकार्यहेतुत्वस्य वक्ष्यमाणतया वियद्रूपापन्नस्य ब्रह्मण एव वायुकारणत्वात् । तस्माद्वायुर्जायते" ।

*तृतीयाधिकरणमारचयति—

"सद्ब्रह्म जायते नो वा कारणत्वेन जायते ।
यत्कारणं जायते तद्वियद्वाय्वादयो यथा ॥
असतोऽकारणत्वेन खादीनां सत उद्भवात् ।
व्याप्तेरजादिवाक्येन बाधात्सन्नैव जायते ॥

छान्दोग्ये—"सदेव[1] सोम्येदमग्र आसीत्" इति श्रूयते । तत्सद्रूपं ब्रह्म जन्म भवितुमर्हति कारणत्वाद्वियदादिवदिति प्राप्ते ब्रूमः—सद्रूपं ब्रह्म न जायते । कुतः । जनकस्य कारणस्य दुर्निरूपत्वात् । तथा हि न तावदसत्कारणं कथमसतः सज्जायेति निषेधात् । नापि सदेव सतः कारणमात्माश्रयापत्तेः । नापि वियदादिकं सतः कारणं वियदादीनां सतो जायमानत्वात् । या तु व्याप्तिर्यद्यत्कारणं तत्तज्जायत इति, सा—स वा एष महानज आत्मेत्यादिश्रुतिबाध्या । तस्मात्सद्ब्रह्म नैव जायते" ।

+चतुर्थाधिकरणमारचयति—

"ब्रह्मणो जायते वह्निर्वायोर्वा ब्रह्मसंयुतात् ।
तत्तेजोऽसृजतेत्युक्तेर्ब्रह्मणो जायतेऽनलः ॥
वायोरग्निरितिश्रुत्या पूर्वश्रुत्यैकवाक्यतः ।
ब्रह्मणो वायुरूपत्वमापन्नादग्निसंभवः ॥

---

* असंभवस्तु सतोऽनुपपत्तेः—ब्र० सू० अ० २ पा० ३ अ० ३ सू० ९ । + तेजोऽतस्तथा ह्याह—ब्र० सू० अ० २ पा० ३ अ० ४ सू० १० ।

---

१ ग. °व सौम्ये° ।

छान्दोग्ये तत्तेजोऽसृजतेति तेजसो ब्रह्मजत्वं श्रूयते । तैत्तिरीयके वायोरग्निरिति वायुजत्वम् । तत्र वायोरिति पञ्चम्या * आनन्तर्यार्थत्वस्यापि संभवात्केवलब्रह्मजन्यं तेज इति प्राप्ते ब्रूमः—अनुवर्तमानेन संभूतशब्देनान्वितायां वायोरितिपञ्चम्या + उपादानार्थत्वस्यैव मुख्यत्वादुभयोः श्रुत्योरेकवाक्यत्वे सति वायुरूपापन्नाद्ब्रह्मणस्तेजो जायत इति लभ्यते " ।

= पञ्चमाधिकरणमारचयति—

"ब्रह्मणोऽपां जन्म किंवा वह्नेर्नाग्नेर्जलोद्भवः ।
विरुद्धत्वान्नीरजन्म ब्रह्मणः सर्वकारणात् ॥
अग्नेराप इति श्रुत्या ब्रह्मणो वह्न्युपाधिकात् ।
अपां जन्म विरोधस्तु सूक्ष्मयोर्नाग्निनीरयोः ॥

यद्यपि तदपोऽसृजत । अग्नेराप इत्युभयोश्छान्दोग्यतैत्तिरीययोस्तेजोजन्यत्वमेवापां श्रूयते तथाऽपि न तद्युक्तम् । निवर्त्यनिवर्तकयोरग्निजलयोर्विरुद्धयोर्न हेतुहेतुमद्भाव इति पूर्वः पक्षः । पञ्चीकृतयोर्दृश्यमानयोर्विरोधेऽप्यपञ्चीकृतयोः श्रुत्येकसमधिगम्ययोर्विरोधकल्पनायोगात्संतापाधिक्ये स्वेदवृष्ट्युद्भवदर्शनाच्च श्रुतिद्वयानुसारेण तेजोरूपापन्नाद्ब्रह्मणोऽपां जनिरिति राद्धान्तः" ।

×षष्ठाधिकरणमारचयति—

"ता अन्नमसृजन्तेति श्रुतमन्नं यवादिकम् ।
पृथिवी वा यवाद्येव लोकेऽन्नत्वप्रसिद्धितः ॥
भूताधिकारात्कृष्णस्य रूपस्य श्रवणादपि ।
तथाऽद्भ्यः पृथिवीत्युक्तेरन्नं पृथ्व्यन्नहेतुतः ॥

छान्दोग्ये ता अन्नमसृजन्तेत्यद्भ्योऽन्नस्य जन्म श्रूयते । तत्रान्नशब्दस्य लोकप्रसिद्ध्या व्रीहियवादिकमर्थ इति प्राप्ते ब्रूमः—पृथिव्यत्रान्नशब्दार्थः । कुतः । पञ्चमहाभूतसृष्टेरधिकृतत्वात् । किंच यदग्ने रोहितं रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्येति श्रुतम् । कृष्णरूपं पृथिव्यां बहुलमुपलभ्यते न तु व्रीहियवादौ । तथाऽद्भ्यः पृथिवीति तैत्तिरीयश्रुत्येकवाक्यताबलादत्रान्नं पृथिवी । न चान्नशब्दस्य तत्र प्रवृत्त्यनुपपत्तिः । कार्यकारणयोरन्नपृथिव्योरभेदविवक्षया तदुपपत्तेः । तस्मादन्नं पृथिवी " ।

---

* पञ्चम्यादित्यर्थः । + जनिकर्तुः प्रकृतिरितिसूत्रात् । = आपः—ब्र० सू० अ० २ पा० ३ अ० ५ सू० ११ । × पृथिव्यधिकाररूपशब्दान्तरेभ्यः—ब्र० सू० अ० २ पा० ३ अ० ६ सू० १२ ।

---

१ घ. युक्तम् । २ ख. श्रुत्यैक° । ३ ख. कृष्णं रू° । ४ घ. °दन्नं ।

*सप्तमाधिकरणमारचयति—

"व्योमाद्याः कार्यकर्तारो ब्रह्म वा तदुपाधिकम् ।
व्योम्नो वायुर्वायुतोऽग्निरित्युक्तेः खादिकर्तृता ॥
ईश्वरोऽन्तर्यमयतीत्युक्तेर्व्योमाद्युपाधिकम् ।
ब्रह्म वाय्वादिहेतुः स्यात्तेजआदीक्षणादपि ॥

पूर्वाधिकरणेषु पूर्वपूर्वकार्योपाधिकाद्ब्रह्मण उत्तरोत्तरकार्योत्पत्तिरिति यदेतत्सिद्धव- त्य सिद्धान्तितम् । तदयुक्तम् । व्योम्नो वायुर्वायुतोऽग्निरित्यादौ ब्रह्मानिरपेक्षात्केवं- द्योमादेरुत्तरकार्योत्पत्तिश्रवणादिति प्राप्ते ब्रूमः—"य आकाशमन्तरो यमयति यो वायु- रो यमयति" इत्यादिनाऽन्तर्यामिब्राह्मणे व्योमादेः स्वातन्त्र्यं निवारितम् । तथा— तेज ऐक्षत ता आप ऐक्षन्त" इति तेजआदेरीक्षणपूर्वकं स्रष्टृत्वं श्रूयते । तच्चेक्षणं नब्रह्मनिरपेक्षाणामचेतनानां न संभवति । तस्माद्व्योमाद्युपाधिकस्य ब्रह्मण एव कार- म्" ।

+अष्टमाधिकरणमारचयति—

"सृष्टिक्रमो लये ज्ञेयो विपरीतक्रमोऽथवा ।
क्लृप्त कल्प्याद्वरं तेन लये सृष्टिक्रमो भवेत् ॥
हेतावसति कार्यस्य न सत्त्वं युज्यते ततः ।
पृथिव्यप्स्विति चोक्तत्वाद्विपरीतक्रमो लये ॥

आकाशादिक्रमः सृष्टौ क्लृप्तोऽतः प्रलयेऽपि स एव क्रम इति प्राप्ते ब्रूमः—प्रथमतः गे लीने सति निरुपादानानां कार्याणां कंचित्कालमवस्थानं प्रसज्येत ।

किंच—" जगत्प्रतिष्ठा देवर्षे पृथिव्यप्सु प्रलीयते ।
ज्योतिष्यापः प्रलीयन्ते ज्योतिर्वायौ प्रलीयते ॥ "

इति पुराणे विपरीतक्रमस्योक्तत्वात्क्लृप्त एवायं क्रमः । तस्मात्सृष्टिविपरीतेन पृथि- द्क्रमेण प्रविलयः[3] " ।

×नवमाधिकरणमारचयति—

" किमुक्तक्रमभङ्गोऽस्ति प्राणाद्यैर्नास्ति वाऽस्ति हि ।
प्राणाक्षमनसां ब्रह्म वियतोर्मध्य ईरणात् ॥

---

* तदभिध्यानादेव तु तल्लिङ्गात्सः—ब्र० सू० अ० २ पा० ३ अ० ७ सू० १३ । + विपर्ययेण तु क्रमोऽत उपपद्यते च—ब्र० सू० अ० २ पा० ३ अ० ८ सू० १४ । × अन्तरा विज्ञानमनसी क्रमेण तल्लिङ्गादिति चेन्नाविशेषात्—ब्र० सू० अ० २ पा ३ अ० ९ सू० १५ ।

१ घ. °वद्व्योमा° । २ ग. घ. प्रसज्यते । ३ घ. प्रलयः ।

प्राणाद्या भौतिका भूतेष्वन्तर्भूताः पृथक्क्रमम् ।
नेच्छन्त्यतो न भङ्गोऽस्ति प्राणादौ न क्रमः श्रुतः ॥

**मुण्डके** श्रूयते—" एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च । खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी " इति । तत्र प्राणादीनां वियदादिभ्यः पूर्वं श्रूयमाणत्वादाकाशादिकः पूर्वोक्तसृष्टिक्रमो भज्येतेति प्राप्ते ब्रूमः—" अन्नमयं हि सोम्य मन आपोमयः प्राणस्तेजोमयी वाक् " इति प्राणादीनां भौतिकत्वश्रवणाद्भूतेष्वेवान्तर्भावे पृथक्क्रमो नापेक्षितः । न च **मुण्डकश्रुतिः** क्रमवाचिनी । आकाशाद्वायुर्वायोरग्निरित्यादाविव क्रमस्याप्रतीयमानत्वात् । तदुत्पत्तिमात्रं तु केवलं ब्रूते । तस्मान्नानया श्रुत्या पूर्वोक्तक्रमभङ्गोऽस्ति " ।

तैरेतैरधिकरणैर्मायाविशिष्टाद्ब्रह्मण आकाशादिका पुरुषान्ता जगदुत्पत्तिः सुस्थिता तस्यां च सुस्थितायां कारणव्यतिरेकेण कार्यस्याभावाद्ब्रह्मणो देशकालसर्ववस्त्वात्मकत्वेनानन्तत्वं सुस्थितम् । तस्य सत्यं ज्ञानमनन्तमिति प्रतिज्ञातमनन्तत्वं समर्थ्य यो वेद निहितं गुहायामित्युक्तं गुहानिहितत्वं समर्थयितुमन्नमयादिभ्य आनन्दमयान्तेभ्यः पञ्चभ्यः कोशेभ्यो ब्रह्मतत्त्वं विवेक्तुकाम आदावन्नमयकोशं दर्शयति—

**स वा एष पुरुषोऽन्नरसमयः,** इति ।

यः **पुरुषः** शिरःपाण्यादिमानाकृतिविशेषः सृष्ट्यादावाकाशादिक्रमेणोत्पन्नः स **एवैष** इदानीमस्मद्देहत्वेनानुभूयते । यद्यप्ययं न सृष्ट्यादावुत्पन्नस्तथाऽप्याकाशादिपरम्पराप्राप्तान्नकार्यत्वेन सजातीयतया **स** एवोच्यते । तामेतां विवक्षां स्पष्टीकर्तुमन्नरसमयशब्दः । मधुराम्ललवणतिक्तकटुकषायात्मकः षड्विधोऽन्नस्य रसस्तस्य च विकारोऽ**न्नरसमयः** । मातापितृभ्यां भुक्तान्नरसस्तयोः शरीरे त्वगसृङ्मांसमेदोस्थिमज्जाशुक्राख्यसप्तधातुरूपेण क्रमात्परिणतः सन्गर्भाशये प्रविश्य पुनर्देहरूपेण विक्रियते । तथा **गर्भोपनिषद्याम्नायते**—" षड्विधो रसो रसाच्छोणितं शोणितान्मांसं मांसान्मेदो मेदसोऽस्थीन्यस्थिभ्यो मज्जा मज्जायाः शुक्रं शुक्रशोणितसंयोगादावर्तते गर्भः " इति एतेनान्नरसमयेन स्थूलदेहेन तदन्तवर्ती सूक्ष्मदेहोऽप्युपलक्ष्यते । तस्यापञ्चीकृतभूतकार्यत्वादुक्तेनान्नादिना पोष्यमाणत्वाच्च । तत्र भूतकार्यत्वमाचार्यैरुदाहृतम्—" अपञ्चीकृतपञ्चमहाभूतानि तत्कार्यं च सप्तदशकं लिङ्गं भौतिकम् " इति । अन्नादिपोष्यत्वं छन्दोगैराम्नायते—" अन्नमयं हि सोम्य मन आपोमयः प्राणस्तेजोमयी वाक् " इति उपवासेन प्रक्षीणशक्तिकस्य मनसः पारणेनाऽऽप्यायनं जन्तूनामन्वयव्यतिरेकसिद्धम् । तथा मार्गश्रमेण प्रक्षीणशक्तेः प्राणो जलपानेनाऽऽप्यायमानो **लोके** दृश्यते । तथा

---

१ घ. °तेष्वन्त° । २ घ. °या पू° । ३ घ. °शादिषु° । ४ क. ख. ध. ङ. °ह्यहि° । ५ ग. भुक्तोऽन्न° । ६ ख. ग. °शुक्राख्य° । ७ ख. ग. शुक्रं शुक्रशो° । ८ घ. °था वमा° ।

घृततैलादितैजसद्रव्यसेवया कण्ठशुद्धिं[२] कृत्वा[३] वाचं पोषयन्तो गायका उपलभ्यन्ते। ईदृशेन मनःप्राणवागादिना लिङ्गदेहेन संयुतो योऽन्नकार्यः स्थूलदेहोऽस्माभिरुपलभ्यते सोऽयमाध्यात्मिकः। एतेनाधिदैविको वैराजदेहो ब्रह्माण्डरूप उन्नेयः।

सोऽप्याचार्यैर्वार्तिके दर्शितः—

" दिगादिकरणो देवः पञ्चभूतशरीरभृत्।
सर्वोऽस्मीत्यभिमानेद्धो विराडेवमजायत "॥ इति।

सोऽयमन्नमयः कोशः **शाखाग्रचन्द्रदर्शनन्यायेन** ब्रह्मतत्त्वं बोधयितुमुपन्यस्तः। अथास्य कोशस्य चित्याग्निवत्पक्ष्याकारेणोपासनार्थं पञ्चावयवानुपन्यस्यति—

**" तस्येदमेव शिरः। अयं दक्षिणः पक्षः। अयमुत्तरः पक्षः। अयमात्मा। इदं पुच्छं प्रतिष्ठा, इति।**

यथा श्येनकङ्कादिपक्ष्याकारेण चीयमानस्याग्नेः शिरः पक्षौ मध्यशरीरं पुच्छं चेति पञ्चावयवा एवमत्रापि द्रष्टव्यम्। **तस्योपासितव्यस्यान्नमयस्य** ग्रीवाया उपरि प्रसिद्धत्वेन दृश्यमानमिदमेव **शिरः**। नात्रोपचारः कश्चिदस्ति। तथा दृश्यमानौ हस्तावेव **पक्ष**त्वेन ध्यातव्यौ। कण्ठादधस्तान्नाभेश्चोपरिष्टाद्दृश्यमानोऽयं शरीरभाग आत्मा जीवावस्थानक्षमदेशरूपो मध्यदेहः "मध्यं[४] ह्येषामङ्गानामात्मा" इति **श्रुतेः** नाभेरधोवर्ति यदङ्गमस्ति तदिदं पक्ष्याकारस्य **पुच्छ**स्थानीयम्। तच्च **प्रतिष्ठा** शरीराधारः, प्रतितिष्ठत्यस्यामिति शब्दस्य व्युत्पत्तिः। मनुष्यशरीरे नाभेरधोभागस्योर्ध्वभागं प्रत्याधारत्वं प्रसिद्धम्। गवादिशरीरे मक्षिकादिनिवारणेन पुच्छस्याऽऽधारत्वं द्रष्टव्यम्। पुच्छस्याऽऽधारतोक्तिरुपासनार्था।

तदेवमन्नमयकोशस्योपासनीय आकारः प्रतिपादितः। अथास्य कोशस्य तदुपासनस्य च ब्राह्मणवाक्येनाभिहितस्य संवादेन दार्ढ्यार्थं कंचिन्मन्त्रमुदाहरति—

**तदप्येष श्लोको भवति॥**

***इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यकेऽष्टमप्रपाठके प्रथमोऽनुवाकः॥ १॥**

---

* वैदिकमतानुसरणेन मूलक्रमतोऽत्रानुवाकपरिसमाप्तिरस्ति, परं च भाष्यकारमतेनात्रानुवासमाप्तिर्नैव। किंतु तेषां मतेनास्य प्रपाठकस्यानुवाकद्वयमेव। तत्र प्रथमोऽनुवाकः शान्तिसमाप्त्यैवावसितः। द्वितीयश्च ब्रह्मविदाप्नोति परमित्यारभ्य प्रपाठकसमाप्तौ समापितः। अतोऽत्र वैदिकमतानुसरणेनैव मूले क्रमः प्रतिनिविष्टो भाष्ये भाष्यकारमतानुसरणेन। एवं पुरतः सर्वत्रोहनीयम्।

---

१ ग. उपलक्ष्यन्ते। २ ग. °द्धिं°। ३ घ. संयुक्तो। ४ घ. मध्यं श°। ५ क. ख. ङ. °दशाश्चे°। ६ ग. घ. °नद्दे°।

अन्नाद्वै प्रजाः प्रजायन्ते । याः काश्च पृथिवीꣳश्रिताः । अथो अन्नेनैव जीवन्ति । अथैनदपियन्त्यन्ततः । अन्नꣳ हि भूतानां ज्येष्ठम् । तस्मात्सर्वौषधमुच्यते । सर्वं वै तेऽन्नमाप्नुवन्ति । येऽन्नं ब्रह्मोपासते । अन्नꣳ हि भूतानां ज्येष्ठम् । तस्मात्सर्वौषधमुच्यते । अन्नाद्भूतानि जायन्ते । जातान्यन्नेन वर्धन्ते । अद्यतेऽत्ति च भूतानि । तस्मादन्नं तदुच्यत इति, इति ।

तदपि तस्मिन्नप्यर्थे ब्रह्मणोक्तेऽन्नमयकोशे संवादबुद्धिजनक एष वक्ष्यमाणोऽन्नाद्वै प्रजा इत्यादिकस्तस्मादन्नं तदुच्यत इत्यन्तः श्लोकः पादबद्धो मन्त्रो विद्यते । पूर्वं सूत्रोक्तेऽर्थे काचिदृगुदाहृता । तत्समुच्चयमभिप्रेत्यात्रापिशब्दः प्रयुक्तः । चतुर्दशभिः पादैरुपेतोऽयं श्लोकः । ईदृशस्य लोकप्रसिद्धस्य च्छन्दोविशेषस्याभावेऽपि वैदिकं किंचिदतिच्छन्दो भविष्यति । जरायुजाण्डजादिदेहरूपाः प्रजाः काश्चित्पृथिवीमाश्रित्योपलभ्यन्ते ताः सर्वा अन्नादेवोत्पद्यन्ते । तच्च पूर्वं प्रपञ्चितम् । अपि चान्नेनैव जीवन्ति प्राणान्धारयन्ति तत्तु लोके प्रसिद्धम् । अथ जीवनानन्तरमन्ततः आयुषोऽन्ते ताः प्रजा एतदन्नमपियन्ति प्रविशन्ति अन्ने लीयन्ते । मृगादिदेहानां व्याघ्राद्यन्नत्वेनान्ने लयो द्रष्टव्यः । हि यस्मात्कारणादन्नं भूतानां प्राणिदेहानां ज्येष्ठमुक्तरीत्या कारणम् । तस्मात्कारणात्सर्वौषधं सर्वेषां प्राणिनां क्षुद्रोगनिवर्तकमित्युच्यते । निवर्तिते हि क्षुद्रोगे जीवनरूपायाः स्थितेः कारणं भवति । अतः स्थितिहेतुत्वसिद्धये क्षुन्निवर्तकत्वं युक्तम् । अनेनोत्पत्तिस्थितिलयकारणत्वप्रतिपादनेनान्नमयकोशः प्रपञ्चितः । सर्वं वा इत्यादिना सफलमुपासनं विधीयते । ये पुरुषा अन्नं ब्रह्मोपासतेऽन्ने प्रतीके ब्रह्मदृष्टिं कुर्वन्ति ब्रह्मदृष्ट्या संस्कृतमन्नं देहाकारेण परिणतं सच्छिरआदिभिः पुच्छान्तैरवयवैरुपेतमिति ध्यायन्ति, ते ध्यातारः सर्वमेवान्नं भक्ष्यभोज्यलेह्यचोष्यरूपं प्राप्नुवन्ति । यद्वियदादिपरम्परया ब्रह्मणः सकाशान्निष्पन्नमन्नमाध्यात्मिकमानुषदेहरूपेणाऽऽधिदैविकविराड्रूपेण चावस्थितं तेनान्नोपाधिना विशिष्टं ब्रह्मोपासकाः पुरुषाः सर्वात्मकं विराड्रूपं प्राप्य ब्रह्मादिस्तम्बान्तानां सर्वेषां प्राणिनां यद्यदुचितमन्नं तत्तत्सर्वं प्राप्नुवन्ति । पूर्वत्र बुभुत्सुं प्रति बोधसाधनभूतकोशप्रतिपादनार्थमन्नं हि भूतानामित्युक्तम् । अत्र तूपास्यवस्तुप्रशंसार्थं पुनरप्युच्यते । अस्मदादीनां विराट्पर्यन्तानां प्राणिदेहानां यस्मादन्नं ज्येष्ठमतिशयेन वृद्धं कारणभूतम्, तस्मात्सर्वस्य संसारव्याधेरौषधं निवर्तकम् । यथोक्तोपासनं हि विराट्प्राप्तिद्वारा क्रममुक्तिहेतुः । सर्वप्राणिदेहानां

१ क. °मयः को° । २ क. क. °शिष्टम° ।

त्यत्यभिवृद्धिहेतुत्वादप्युपास्यमन्नं प्रशस्तम् । अन्नशब्दनिर्वचनपर्यालोचनेऽपि सर्व देहकारणत्वेनान्नस्य प्रशस्तत्वमवगम्यते । अद्यते सर्वैः प्राणिभिर्जीवनार्थं भक्ष्यत इत्यन्नम् । यद्वा सर्वान्प्राणिनोऽत्ति भक्षयति संहरतीत्यन्नम् । सर्वेऽपि देहा अन्नरस-वैषम्योत्पादितरोगादिना म्रियन्त इति लोके प्रसिद्धम् । श्रौत इतिशब्द उदाहृत-श्लोकसमाप्त्यर्थः कोशसमाप्त्यर्थश्च । यः पुमान्गुहाहितं ब्रह्मतत्त्वं बुभुत्सते तं प्रति बोधद्वारभूतोऽयमन्नमयकोशोऽभिहितः । द्वारत्वं चास्य पुत्रमित्रकलत्रगृहक्षेत्रादिबाह्य-विषयासक्तिं निवार्य देहमात्रपर्यवसायित्वसंपादनादुपपद्यते । प्राणिनां हि स्वभावत एव पुत्रादिष्वात्मव्यवहारो भवति । तं च श्रुतिरनुवदति—“आत्मा वै पुत्रनामासि” इति । ऐतरेयकेऽप्याम्नायते—“सोऽस्यायमात्मा पुण्येभ्यः कर्मभ्यः प्रतिधीयतेऽथास्यायमितर आत्मा कृतकृत्यो वयोगतः प्रैति” इति । अस्यायमर्थः—पुत्रवतो गृहस्थस्य द्वावात्मानौ पुत्ररूपः पितृरूपश्चेति । अस्य गृहिणः संबन्धी सोऽयं पुत्ररूप आत्मा श्रौतस्मार्तपुण्यकर्मानुष्ठानार्थं गृहेऽवस्थाप्यते । पितृरूपस्तु स्वस्य कर्तव्यानि सर्वाणि कृत्वा वयोगत आयुष्येण विरहितो म्रियत इति । ईदृशं पुत्रादावात्मत्वारोपं भगवान्भाष्यकार उदाजहार—“पुत्रभार्यादिषु विकलेषु सकलेषु वाऽहमेव विकलः सकलो वेति बाह्यधर्मानात्मन्यध्यस्यति” इति स्वस्माद्भेदस्य पुत्रे प्रतीयमानत्वात्तस्मिन्नात्मत्वव्यवहारः सिंहो देवदत्त इतिवत् । तह्यमुमेव मुख्यताभावं बोधयितुं पुत्रमित्रादिकाद्बाह्यात्सर्वस्माल्लोकाद्व्यावर्त्याऽऽत्मतत्त्वबुद्धिं देहे संकोचयितुमन्नमय आत्मोपदिश्यते । एतमेवाभिप्रायमुपरिष्टाद्विस्पष्टी करिष्यति—“स य एवंवित् । अस्माल्लोकात्प्रेत्य । एतमन्नमयमात्मानमुपसंक्रामति” इति । यस्तु बाह्यविषयासक्तिवासनाप्राबल्यात्सकृदुपदेशमात्रेणान्नमयात्मनि न पर्यवस्यति तस्य तत्पर्यवसानार्थं तद्विषयोपासनोपदिष्टा । स चोपासको निरन्तरमन्नमयमात्मानमुपासीनो बाह्यविषयेभ्यो व्यावृत्तोऽर्थादन्नमये पर्यवस्यति । यदि कश्चिदल्पायुः सन्नुपरितनस्य प्राणमयादिविवेकस्याभावेन ब्रह्मतत्त्वबोधस्य संपूर्त्यभावादुक्तोपासनं कुर्वन्नेव म्रियेत[4] । तदानीमुक्तरीत्या तस्य सर्वान्नप्राप्तिर्भवति । ईदृशमेव विषयमभिप्रेत्य भगवतोक्तम्—

“प्राप्य पुण्यकृतां लोकानुषित्वा शाश्वतीः समाः ।
शुचीनां श्रीमतां गेहे योगभ्रष्टोऽभिजायते” ॥ इति ।

तदेवं विषयाभिमुख्यनिवृत्त्यर्थमन्नमयकोशमुपादिश्य प्रसङ्गात्तदुपासनं तत्फलं चोक्तम् ।

अथ विषयेभ्यो निवृत्तस्यान्नमयकोशादप्यन्तःप्रवेशाय प्राणमयकोशमुपदिशति—

**तस्माद्वा एतस्मादन्नरसमयात् । अन्योऽन्तर आत्मा प्राणमयः । तेनैष पूर्णः, ॥ इति ।**

---

१ ग. द्वारं चा° । २ घ. °त्मगमु° । ३ ग. °वृत्त्यर्था° । ४ ग. म्रियते । तत्तदा° ।

यः परमात्मा स्वयमाकाशादिक्रमेणान्नमयतां प्राप्त इति ब्राह्मणेन प्रतिपादितः स एव पुनः श्लोकेन स्पष्टीकृतः । तस्मादेव ब्राह्मणोक्तादेतस्माच्छ्लोकेन प्रतिपादितादहं मनुष्य इत्यनुभूयमानाद्व्यतिरिक्तोऽभ्यन्तरप्रदेशवर्ती कश्चित्प्राणमय आत्मा विद्यते। तेन प्राणमयेनैषोऽन्नमयः पूर्णः । देहस्यान्तरापादमस्तकं प्राणमयो व्याप्य वर्तते। लिङ्गशरीरे ज्ञानशक्तिः क्रियाशक्तिश्चेतिद्वयं विद्यते । तयोर्मध्ये क्रियाशक्तिकार्यभूतः कश्चित्प्राणाख्यः पदार्थः। तस्य च प्राणस्य विकारः पञ्चवृत्तिसमूहः प्राणमयः । वृत्तयश्च प्राणापानव्यानोदानसमानाख्यास्तस्य प्राणपदार्थस्य व्यापारविशेषास्ते च हृदयादिप्रदेशेषु निष्पद्यन्ते ।

तथा चोक्तम्—

"हृदि प्राणो गुदेऽपानः समानो नाभिसंस्थितः ।
उदानः कण्ठदेशस्थो व्यानः सर्वशरीरगः" ॥ इति ।

तस्यैतस्य वृत्तिसमूहरूपस्य प्राणमयस्याऽऽत्मन्यारोपितत्वादहं प्राणिमीत्येवमुच्छ्वासादिकर्तृत्वेनाहंप्रत्ययगम्यत्वाच्चाऽऽत्मत्वं द्रष्टव्यम् । आत्मत्वं नाम प्रत्यक्स्वरूपत्वम् । तत्र यथा पुत्रापेक्षया प्रतीच्यन्नमयदेह आत्मत्वेनोपदिष्टे सति पराग्रूपे पुत्रादौ मुख्यात्मत्वबुद्धिर्निवृत्ता । तथा देहादप्यान्तरे प्राणमयात्मन्युपदिष्टे सति देहस्य मुख्यात्मत्वं निवारितं भवति । पुत्रदेहयोर्मुख्यात्मत्वाभावसाम्येऽप्यवान्तरवैषम्याद्गौणात्मत्वं मिथ्यात्मत्वं चास्ति । तच्च भगवद्भिर्भाष्यकारैरेवमुदाहृतम्—"गौणमिथ्यात्मनोः सत्त्वे पुत्रदेहादिबाधनात्" इति । तयोरात्मत्वव्यवहारदशायां स्वस्माद्भेदप्रतीत्यप्रतीतिभ्यां वैषम्यं द्रष्टव्यम् ।

देहात्मनोर्भेदमजानद्भिर्लौकिकैर्लोकायतिकैश्चोच्यमानं देहस्याऽऽत्मत्वं मिथ्येति यदत्र प्राणमयात्मोपदेशेनार्थात्संपादितम् । तदेतत्तृतीयाध्यायस्य तृतीयपादे*निर्णीतम्—

" आत्मा देहस्तदन्यो वा चैतन्यं मदशक्तिवत् ।
भूतमेलनजं देहे नान्यत्राऽऽत्मा वपुस्ततः ॥
भूतोपलब्धिर्भूतेभ्यो विभिन्ना विषयित्वतः ।
सैवाऽऽत्मा भौतिकाद्देहादन्योऽसौ परलोकभाक् ॥

पूर्वत्र मनश्चिदादीनां क्रत्वर्थता नास्ति किंतु पुरुषार्थत्वमित्युक्ते सति कोऽसौ पुरुष इति प्रसङ्गाद्विचार्यते । तदेतदधिकरणं पूर्वोत्तरयोर्मीमांसयोः शेषभूतम् । देहव्यतिरिक्तस्य स्वर्गमोक्षभागिन आत्मनः प्रतिपादकत्वात् । तत्र लोकायतिका देह-

* एक आत्मनः शरीरे भावात्—ब्र० सू० अ० ३ पा० ३ अ० ३० सू० ५३ ।

१ ख. तत्तृ । २ ग. 'र्मीमां' ।

एवाऽऽत्मेति मन्यन्ते । अन्वयव्यतिरेकाभ्यां चैतन्यस्य देह एवोपलम्भात् । सति च देहे चैतन्यमुपलभ्यते न त्वसति । न च चैतन्यस्य जात्यन्तरतया देहव्यतिरिक्तात्मत्वं शङ्कनीयम् । क्रमुकनागवल्लीचूर्णानां संयोगान्मदशक्तिरिव देहाकारपरिणतेभ्यो भूतेभ्यो जायमानं चैतन्यं कथं नाम जात्यन्तरं स्यात् । तस्माच्चेतनो देह आत्मेति प्राप्ते ब्रूमः— पृथिव्यादीनां भूतानामुपलब्धिर्भूतेभ्यो व्यतिरिक्ता भवितुमर्हति विषयित्वात् । यद्यद्विषयि तत्तद्विषयाद्व्यतिरिक्तम् । यथा रूपाच्चक्षुः । तथा सति तादृशचैतन्यस्याऽऽत्मत्वं वदन्तं प्रति कथं भौतिकदेहरूपत्वमापाद्यते । सत्येव देहे चैतन्यमुपलभ्यते नासतीति यावन्वयव्यतिरेकावुक्तौ तत्र व्यतिरेकोऽसिद्धः । असत्यपि देहे परलोकगामिनश्चिदात्मनः शास्त्रेणोपलम्भात् । शास्त्रस्य च प्रामाण्यं समर्थनीयम् " ।

अनात्मत्वेन निर्णीतादस्माद्देहादभ्यन्तरो यः प्राणस्तस्योत्पत्तिर्द्वितीयाध्यायस्य चतुर्थपादे* चिन्तिता—

" मुख्यप्राणः स्यादनादिर्जायते वा न जायते ।
आनीदिति प्राणचेष्टा प्राक्सृष्टेः श्रूयते यतः ॥
आनीदिति ब्रह्मसत्त्वं प्रोक्तं वायुनिषेधनात् ।
एतस्माज्जायते प्राण इत्युक्तेरेष जायते " ॥ इति ॥

मुखबिले संचरन्नुच्छ्वासनिश्वासकारी वायुर्मुख्यप्राणः । सोऽनादिः । कुतः । नासदासीदितिसूक्ते आनीदवातमित्यानीच्छब्देन सृष्टेरर्वाक्प्राणचेष्टाश्रवणादिति प्राप्ते ब्रूमः—आनीच्छब्दो न प्राणव्यापारं वक्त्यवातमितिनिषेधात् । किं तर्हि ब्रह्मसत्त्वं ब्रूते । सदेव सोम्येदमग्र आसीदित्यादिभिः सृष्टिप्रागवस्थाप्रतिपादकश्रुत्यन्तरैः समानार्थत्वात् । एतस्माज्जायते प्राण इति श्रुतिस्तु स्पष्टमेव प्राणजन्म प्रतिपादयति । तस्मादिन्द्रियवत्प्राणो जायते ।

× तत्रैवान्यच्चिन्तितम्—

" वायुर्वाऽक्षक्रिया वाऽन्यो वा प्राणश्रुतितोऽनिलः ।
सामान्येन्द्रियवृत्तिर्वा सांख्यैरेवमुदीरणात् ॥
भाति प्राणो वायुनेति भेदोक्तेरेकताश्रुतिः ।
वायुजत्वेन सामान्यवृत्तिर्नाक्षेष्वतोऽन्यता" ॥ इति ।

बाह्यवायुरेव वेणुरन्ध्रवन्मुखच्छिद्रे प्रविश्यावस्थितः प्राणनाम्ना व्यपदिश्यते । न तु

---

* श्रेष्ठश्च— ब्र० सू० अ० २ पा० ४ अ० ४ सू० ८ । × न वायुक्रिये पृथगपदेशात्—ब्र० सू० अ० २ पा० ४ अ० ५ सू० ९ ।

---

१ क. ख. ग. ङ. °ति दे° । २ ख. न चै° । ३ क. ख. ग. ङ. °सक्ता° ।

प्राणो नाम किंचित्तत्त्वान्तरमस्ति । कुतः । यः प्राणः स वायुरिति श्रुतेः । अथवा पञ्जरस्था यथा बहवः पक्षिणः स्वयं चलन्तः पञ्जरमपि चालयन्ति एवमेकादशाक्षाणि स्वस्वव्यापारद्वारा देहं चेष्टयन्ते । तत्र देहचालनाख्यो योऽयं सर्वेन्द्रियसाधारणो व्यापारः स प्राणो भविष्यति । तथा च सांख्यैरुक्तम्—" सामान्या करणवृत्तिः प्राणाद्या वायवः पञ्च " इति । तस्मान्न तत्त्वान्तरं प्राण इति प्राप्ते ब्रूमः—" प्राण एव ब्रह्मणश्चतुर्थः पादः । स वायुना ज्योतिषा भाति " इति श्रुत्यन्तरे चतुष्पाद्ब्रह्मोपासनप्रसङ्गेनाऽऽध्यात्मिकप्राणस्याऽऽधिदैविकवायोश्चानुग्राह्यानुग्राहकरूपेण विभेदः स्पष्टमेव निर्दिष्टः । अतो यः प्राणः स वायुरित्येकत्वश्रुतिः कार्यकारणयोरभेदवृत्त्या नेतव्या । यत्तु सांख्यैरुक्तं तदसत् । इन्द्रियाणां सामान्यवृत्त्यसंभवात् । पक्षिणां तु सामान्यचलनान्येकविधानि पञ्जरचलनस्यानुकूलानि । न तु तथेन्द्रियाणां दर्शनश्रवणमननादिव्यापारा एकविधाः । नापि देहचलनानुकूलाः । तस्मात्तत्त्वान्तरं प्राण इति परिशिष्यते ।

* तत्रैव पुनरप्यन्यच्चिन्तितम्—

"प्राणोऽयं विभुरल्पो वा विभुः स्यात्प्लुष्युपक्रमे ।
हिरण्यगर्भपर्यन्ते सर्वदेहे समोक्तितः ॥
समासव्यासरूपेण विभुतैवाऽऽधिदैविकी ।
आध्यात्मिकोऽल्पः प्राणः स्याददृश्यश्च यथेन्द्रियम् ॥

प्लुषिर्नाम मशकादेरपि न्यूनकायः पुत्तिकाख्यो जीवस्तामारभ्य हिरण्यगर्भपर्यन्तेषु देहेषु तैस्तैर्देहैः समत्वं प्राणस्य श्रूयते— "समः प्लुषिणा समो मशकेन समो नागेन सम एभिस्त्रिभिर्लोकैः समोऽनेन सर्वेण " इति । तस्माद्व्यापी प्राण इति प्राप्ते ब्रूमः—आधिदैविकस्य हिरण्यगर्भप्राणस्य समष्टिरूपेण व्यष्टिरूपेण चावस्थानाद्विभुत्वमस्तु । वायुरेव व्यष्टिर्वायुः समष्टिरिति श्रुतेः । तदेव विभुत्वं समः प्लुषिणेत्यादिश्रुतावुपासनार्थं प्रपञ्चितम् । आध्यात्मिकस्तु प्राण इन्द्रियवददृश्यः परिच्छिन्नश्च " ।

यस्त्वनेकजन्माभ्यस्तदेहात्मत्ववासनाप्राबल्यात्प्राणमयात्मोपदेशमात्रेणाऽऽत्मत्वबुद्धिं देहे परित्युक्तं न शक्नोति तं प्रत्युपासनान्तरं विधातुमुपास्यस्वरूपं दर्शयति—

**स वा एष पुरुषविध एव । तस्य पुरुषविधताम् ।**

**अन्वयं पुरुषविधः । तस्य प्राण एव शिरः ।**

---

* अनुक्ष— ब्र० सू० अ० २ पा० ४ अ० ६ सू० १३ ।

१ ब. °ण भे° । २ ग. घ. तु च सा° । ३ ब. °ननम्या° । ४ घ. °हचाल° । ५ ग. °रन्य° । ६ ख. घ. °सनां वि° ।

**व्यानो दक्षिणः पक्षः। अपान उत्तरः पक्षः।**
**आकाश आत्मा। पृथिवी पुच्छं प्रतिष्ठा, इति॥**

देहादभ्यन्तरत्वेन यः प्रोक्तः स एवैष प्राणिमीत्येवमनुभूयमानः प्राणमयः पुरुषविध एव। यद्यप्यस्य शिरआद्यवयवाः स्वतो न सन्ति तथाऽपि तान्संपाद्य पुरुषाकार एव उपासनीयः। न चात्र दुःसंपादत्वं शङ्कनीयम्। तस्य पूर्वोक्तस्यान्नमयस्य पुरुषप्रकारतामनुसृत्य तन्मध्ये पूर्णत्वेन वर्तमानोऽयं प्राणमयोऽपि पुरुषप्रकार इति वक्तुं शक्यत्वात्। यथा मूषायां निषिक्तं द्रुतताम्रं प्रतिमाकारं संपद्यते तद्वत्। तत्र हृदयादूर्ध्वं मुखनासिकयोः संचारी प्राणाख्यो वृत्तिविशेषः शिरस्त्वेन चिन्तनीयः। सर्वासु नाडीषु संचारी व्यानाख्यो यो वृत्तिविशेषो यश्चापानाख्यो वृत्तिविशेषो हृदयादधो निर्गच्छति, तावुभौ पक्षद्वयरूपेण चिन्तनीयौ। आकाशशब्देनोदरमध्यवर्ती नाभिसमीपस्थो देशविशेष उच्यते। तेन तत्रावस्थितः समानो वायुरुपलक्ष्यते। स च वायुरात्मा प्राणमयकोशस्य मध्यमभागः। पृथिवीशब्देनावशिष्ट उदानवायुरुपलक्ष्यते। मुख्यार्थस्वीकारे हि प्राणमयकोशाधिकारो बाध्येत। यथा पृथिवी प्राणिनामवस्थानहेतुत्वात्प्रतिष्ठा। तथैवोदानवायुः प्राणादिवायूनां देहेऽवस्थानहेतुः। यावदयमुदानवायुरुत्क्रान्तिं न जनयति तावत्प्राणापानादीनां देहेऽवस्थानम्। अतः प्रतिष्ठा। उदानाख्यवृत्तिविशेषयुक्तस्य पञ्चविधवृत्तिकर्तुः प्राणपदार्थस्योत्क्रान्तिप्रतिष्ठयोः स्वातन्त्र्यमाथर्वणिका आमनन्ति—"स ईक्षांचक्रे कस्मिन्न्वहमुत्क्रान्त उत्क्रान्तो भविष्यामि। कस्मिन्वा प्रतिष्ठिते प्रतिष्ठास्यामीति। स प्राणमसृजत" इति। अतः प्रतिष्ठाहेतोः प्राणपदार्थस्य वृत्तिविशेष उदानः पक्ष्याकारेण ध्येयस्य प्राणमयकोशस्य पुच्छस्थानीयः। ये शिरःपक्षादिरूपेण परिकल्पिताः प्राणापानादिवृत्तिविशेषाः। यच्च वृत्तिमत्प्राणतत्त्वं तत्सर्वं मैत्रेयोपनिषदि स्पष्टमाम्नातम्—"प्रजापतिर्वा एक एवाग्रेऽतिष्ठत्स नारमतैकः। स आत्मानमभिध्याय बह्वीः प्रजा असृजत। ता अश्मेवाप्रबुद्धा अप्राणाः स्थाणुरिव तिष्ठमाना अपश्यत्स नारमत। सोऽमन्यतैतासां प्रतिबोधनायाभ्यन्तरं विविशामीति। स वायुरिवाऽऽत्मानं कृत्वाऽभ्यन्तरं प्राविशत्स एको नाशकत्स पञ्चधाऽऽत्मानं प्रविभज्योच्यते यः प्राणोऽपानः समान उदानो व्यान इति। अथ योऽयमूर्ध्वमुत्क्रामत्येष वाव स प्राणः। अथ योऽयमवाङ्संक्रामत्येष वाव सोऽपानः। अथ येन वा एता अनुगृहीता इत्येष वाव स व्यानः। अथ योऽयं स्थविष्ठमन्नधातुमपाने स्थापयत्यणिष्ठं चाङ्गेऽङ्गे समानयत्येष

१ घ. °रुषाका°। २ घ. द्रुतं ता°। ३ घ. °ख्यो वृ°। ४ ख. °स्मिन्नह°। ग. °स्मिन्नह°। ५ क. ख. ङ. अस्मै वा प्राबुद्धच प्रा°। ६ क. ख. ङ. °विश्य स ए°। ७ ग °नं°।°। ८ ग. °पानो व्यानः। ९ घ. °दान इ°।

वाव समानसंज्ञोत्तरं व्यानस्य रूपं चैतेषामन्तरा प्रसूतिरेवोदानस्याथ योऽयं पीतमशित-मुद्गिरति निगिरति चैष वाव स उदानः" इति। पुरा प्रजापतिः स्वयमेकाकित्वेन क्रीडा-राहितस्तत्सिद्ध्यर्थं देहान्सृष्ट्वा सृष्टानां तेषां व्यवहारसिद्ध्यर्थं प्राणवायूपाधिकजीवात्मरूपे-णान्तः प्रविश्य पञ्चधा विभज्य व्यवहरतीति श्रुतेरर्थः।

पूर्वोक्तान्नमयवत्प्राणमयेऽपि श्लोकमुदाहरति—

तदप्येष श्लोको भवति ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यकेऽष्टमप्रपाठके
द्वितीयोऽनुवाकः ॥ २ ॥

अथ तृतीयोऽनुवाकः।

प्राणं देवा अनुप्राणन्ति। मनुष्याः पशवश्च ये।
प्राणो हि भूतानामायुः। तस्मात्सर्वायुषमुच्यते।
सर्वमेव त आयुर्यन्ति। ये प्राणं ब्रह्मोपासते। प्राणो
हि भूतानामायुः। तस्मात्सर्वायुषमुच्यत इति, इति।

ये सात्त्विका अग्नीन्द्रादयो देवा ये च राजसा ब्राह्मणक्षत्रियादयो मनुष्या येऽपि तामसा गवाश्वादयः पशवः [ते] सर्वेऽपि स्वस्वदेहमध्यवर्तिनं प्राणवायुं चेष्टमानमनुसृत्य स्वयमपि चेष्टन्ते। प्राण एव हि देहं चालयति। तथा कौषीतकिनः समामनन्ति— "अथ खलु प्राण एव प्रज्ञात्मेदं शरीरं परिगृह्योत्थापयति" इति। आथर्वणिकाश्चाऽऽकाशादिभूताभिमानिदेवैर्वागादीन्द्रियाभिमानिदेवैश्च सह प्राणाभिमानिदेवस्य देहधारणविषये संवादे समामनन्ति—"तान्वरिष्ठः प्राण उवाच मा मोहमापद्यथाहमेवैतत्पञ्चधाऽऽत्मानं प्रविभज्यैतद्बाणमवष्टभ्य विधारयामि" इति। यथा बाणो धानुष्केण प्रेर्यते तथा प्राणेन प्रेर्यमाणत्वाद्बाणशब्देन शरीरमुपलक्ष्यते। यः प्राणो देवमनुष्यपश्वादिदेहानां चेष्टामुत्पादयति स प्राणो यस्मात्सर्वप्राणिनामायुर्हेतुस्तस्मात्सर्वायुषमुच्यत इति प्राणस्य नामधेयम्। यथोक्तप्राणमयकोशज्ञानमात्रेणान्नमयात्मवासनां परित्यक्तुमशक्नुवन्तो ये पुरुषास्तद्वासनानिवृत्तये प्राणोपाधिकं ब्रह्मोपासते, ते पुरुषाः आध्यात्मिकप्राणोपाधिकब्रह्मोपासनादेतस्मिञ्जन्मन्यपमृत्युपरिहारेण सर्वमायुः प्राप्नुवन्ति। आधिदैविकहिरण्यगर्भाख्यप्राणोपासनेन तु जन्मान्तरे स्वयमेव हिरण्यगर्भरूपाः सन्तो महाप्रलयपर्यन्तं सर्वमायुः प्राप्नुवन्ति। कोशप्रशंसार्थं पूर्वमुक्तस्य प्राणो हीतिवाक्यस्योपास्तिप्रशंसार्थं पुनरप्यभिधानम्।

१ क. ख. ङ. °र पान°। २ क. ख. ग. ङ. °जीवरू°।

प्राणमयोपदेशस्य तात्पर्यं दर्शयति—

**तस्यैष एव शारीर आत्मा । यः पूर्वस्य, इति ।**

यः प्राणमय इदानीमुक्तः स **एष एव तस्य** पूर्वस्यान्नमयस्य शरीरे भवः **शारीर** आत्मा । यदा प्राणमयस्याऽऽत्मत्वं दृढवासितं भवति तदानीमन्नमये स्वात्मत्वभ्रमोऽपगच्छति । किंत्वमन्नमयः शरीरं प्राणमयस्तु शरीरी स्वात्मेति निश्चयो जायते । द्वयोरात्मनोरसंभवादित्यर्थः ।

अथान्नमयकोशान्निवृत्तस्याधिकारिणः प्राणमयकोशादभ्यन्तःप्रवेशाय मनोमयकोशमुपदिशति—

**तस्माद्वा एतस्मात्प्राणमयात् । अन्योऽन्तर आत्मा मनोमयः । तेनैष पूर्णः, इति ।**

ब्रह्माश्रिता जगदुपादानरूपा माया त्रिगुणात्मिका । तत्र तमोगुणभागस्यान्नमयकारणत्वात्तस्मिन्कोशे जाड्यमेव बहुलमुपलभ्यते । न तु क्रियाशक्तिर्ज्ञानशक्तिर्वा तस्मिन्नस्ति । रजोगुणभागस्य प्राणमयकारणत्वात्तस्मिन्प्राणमये क्रियाशक्तिरुपलभ्यते । सत्त्वगुणभागस्य मनोमयादिकोशत्रयकारणत्वात्तेषु त्रिषु कोशेषु ज्ञानशक्तिरुपलभ्यते । तमोमिश्रः सत्त्वगुणो मनोमयकारणम् । अतो मनोमये तामसभागधर्मा रागद्वेषादय उपलभ्यन्ते । रजोमिश्रः सत्त्वगुणो विज्ञानमयकारणम् । अतो विज्ञानमये यज्ञादीनां वैदिकक्रियाणां कृष्यादीनां लौकिकक्रियाणां च कर्तृत्वमुपलभ्यते । शुद्धसत्त्वगुण आनन्दमयकारणम् । अतस्तत्र प्रियादिशब्दवाच्याः सुखविशेषा एवोपलभ्यन्ते । यद्यपि स्वरूपेणैकैव ज्ञानशक्तिस्तथाऽपि तदवान्तरभेदात्त्रिविधा करणशक्तिः कर्तृशक्तिर्भोगशक्तिश्चेति । तत्र करणशक्तिजन्यं मनस्तस्य विकारः कामसंकल्पादिवृत्तिसमूहो मनोमयः । वृत्तयश्च **वाजसनेयिभिराम्नायन्ते**—"कामः संकल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मन एव" इति । तथा तृष्णा स्नेहो रागो लोभ इत्यादिश्रुत्यन्तराण्युदाहार्याणि । सोऽयं **मनोमयः** प्राणमयादभ्यन्तरः । अत एव प्रत्यासन्नत्वान्मनस्यात्मचैतन्यं सर्वान्तरमभिव्यज्यते । तदभिव्यक्तिवशादेव मनोमयस्याऽऽत्मत्वम् । तेनाभ्यन्तरेण मनोमयेन बाह्यः प्राणमयः **पूर्णो** वर्तते । यथा क्रियाशक्तेरापादमस्तकं व्याप्तिस्तथा ज्ञानशक्तेरपि व्याप्तिरुपलभ्यते । अत्रान्तःकरणेन मनसा बाह्यकरणानि वाक्चक्षुरादीनि दशाप्युपलक्ष्यन्ते । अतः सर्वेषां ज्ञानेन्द्रियाणां कर्मेन्द्रियाणां च मनोमयाख्ये कोशेऽन्तर्भावो द्रष्टव्यः ।

---

१ ग. दृढं वा° । २ ख. °त्मभ्र° । ३ ख. °नभूना म° । ४ घ. 'भोक्तृश° । ५ ख. °म्य° । ६ ग. सर्वोंतर° । ७ घ. 'नि चक्षु° ।

तेषामिन्द्रियाणामुत्पत्तिर्द्वितीयाध्यायस्य चतुर्थपादे* चिन्तिता—

"किमिन्द्रियाण्यनादीनि सृज्यन्ते वा परात्मना।
सृष्टेः प्रागृषिनाम्नैषां सद्भावोक्तेरनादिता॥
एकबुद्ध्या सर्वबुद्धेर्भौतिकत्वाज्जनिश्रवात्।
उत्पद्यन्तेऽथ सद्भावः प्रागवान्तरसृष्टितः॥

"ऋषयो वाव तदग्रे सदासीत्केत ऋषय इति प्राणा वा ऋषयः" इति श्रुत्या सृष्टेः पूर्वमिन्द्रियाणां सद्भावावगमादनादित्वं तेषामिति प्राप्ते ब्रूमः—एकविज्ञानेन सर्वविज्ञानं तावदिन्द्रियाणामनुत्पत्तौ न घटते। तथा "अन्नमयं हि सोम्य मन आपोमयः प्राणस्तेजोमयी वाक्" इति भूतकार्यत्वमिन्द्रियाणां श्रूयते। "एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च" इति स्पष्टमेवेन्द्रियाणां जन्मश्रवणम्। यत्तु सृष्टेः प्राक्सद्भाववाक्यं तदवान्तरसृष्टिविषयं व्याख्येयम्। तस्मादिन्द्रियाणि परमात्मन उत्पद्यन्ते"।

+तत्रैवान्यच्चिन्तितम्—

"सप्तैकादश वाऽक्षाणि सप्त प्राणा इति श्रुतेः।
सप्त स्युर्मूर्धनिष्ठेषु च्छिद्रेषु च विशेषणात्॥
अशीर्षण्यस्य हस्तादेरपि वेदे समीरणात्।
ज्ञेयान्येकादशाक्षाणि तत्तत्कार्यानुरोधतः॥

सप्तैवेन्द्रियाणि। कुतः। सप्त प्राणाः प्रभवन्ति तस्मादिति सामान्यश्रुतेः। सप्त शीर्षण्याः प्राणा इति शिरोगतसप्तच्छिद्रनिष्ठत्वेन विशेषितत्वाच्चेति प्राप्ते ब्रूमः शिरोनिष्ठेभ्य इतराणि हस्तादीन्यपि वेदे समीर्यन्ते "हस्तौ चाऽऽदातव्यं चोपस्थश्चाऽऽनन्दयितव्यं च" इत्यादिना। तथा च वेदमुखादेव निश्चये सत्येकादशव्यापारदर्शनश्रवणाघ्राणास्वादनस्पर्शनाभिवदनादानगमनानन्दविसर्गध्यानानामुपलम्भात्तत्साधनेनेन्द्रियाण्येकादशेत्युपगन्तव्यम्"।

÷पुनरप्यन्यच्चिन्तितम्—

"व्यापीन्यणूनि वाऽक्षाणि सांख्या व्यापित्वमूचिरे।
वृत्तिलाभस्तत्र तत्र देहे कर्मवशाद्भवेत्॥
देहस्थवृत्तिमद्भागेष्वेवाक्षत्वं प्रकाश्यते।
उत्क्रान्त्यादिश्रुतेस्तानि ह्यणूनि स्युरदर्शनात्॥

* तथा प्राणाः—ब्र० सू० अ० २ पा० ४ अ० १ सू० १। + सप्त गतेर्विशेषितत्वाच्च—ब्र० सू० अ० २ पा० ४ अ० २ सू० ५। ÷ अणवश्च—ब्र० सू० अ० २ पा० ४ अ० ३ सू० ७।

१ ग. °न्ते च स°। २ च. °ष्ठ.शी°। ३ च. वेशे।

सर्वगतानामिन्द्रियाणां तत्तच्छरीरावच्छिन्नप्रदेशेषु तत्तज्जीवकर्मफलभोगाय वृत्तिलाभो भवतीति यत्सांख्यैरुक्तं तदयुक्तम् । कल्पनागौरवप्रसङ्गात् । देहावच्छिन्नवृत्तिमद्भिरेवाशेषव्यवहारसिद्धौ किमनया वृत्तिरहितानां सर्वगतानामिन्द्रियाणां कल्पनया । किंच श्रुतिरुत्क्रान्तिगत्यागतीर्जीवस्य प्रतिपादयति । ताश्च सर्वगतस्य जीवस्य न मुख्याः संभवन्तीति मुख्यत्वसिद्ध्यर्थमिन्द्रियोपाधिः स्वीकृतः । यदि सोऽप्युपाधिः सर्वगतः स्यात्कुत्र तद्युत्क्रान्त्यादयो मुख्याः संभवेयुः । तस्मादसर्वगतान्यक्षाणि । मध्यमपरिमाणेष्वदृश्यत्वविवक्षया सूत्रकारेणाणुशब्दः प्रयुक्तः " ।

* पुनरप्यन्यच्चिन्तितम्—

"स्वतन्त्रा देवतन्त्रा वा वागाद्याः स्यात्स्वतन्त्रता ।
नोचेद्वागादिजो भोगो देवानां स्यान्न चाऽऽत्मनः ॥
श्रुतमग्न्यादितन्त्रत्वं भोगोऽग्न्यादेस्तु नोचितः ।
देवदेहेषु सिद्धत्वाज्जीवो भुङ्क्ते स्वकर्मणा ॥

वागादीन्यक्षाणि स्वस्वविषये स्वातन्त्र्येण प्रवर्तन्ते न तु देवतापरतन्त्राणि । अन्यथा वागादिजन्यस्य भोगस्य देवानां भोक्तृत्वान्न जीवात्मनो भोगः स्यादिति प्राप्ते ब्रूमः— अग्निर्वाग्भूत्वा मुखं प्राविशदित्यादौ वागादीनामग्न्याद्यनुगृहीतत्वं श्रूयते । अतो देवपरतन्त्रैवेन्द्रियप्रवृत्तिः । न चैतावता देवानामत्र भोक्तृत्वम् । महापुण्यफलं देवत्वं प्राप्तानामधमभोगस्यानुचितत्वाद्देवतादेहेषु परमभोगस्य सिद्धत्वाच्च । मनुष्यादिजीवस्तु देवप्रेरितैरक्षैरापादितं भोगं स्वकर्मफलतया भुङ्क्त इत्युपपद्यते । तस्माद्देवतापरतन्त्राणीन्द्रियाणि " ।

\+ पुनरप्यन्यच्चिन्तितम्—

"प्राणस्य वृत्तयोऽक्षाणि प्राणात्तत्त्वान्तराणि वा ।
तद्रूपत्वश्रुतेः प्राणनाम्नोक्तत्वाच्च वृत्तयः ॥
श्रमाश्रमादिभेदोक्तेर्गौणे तद्रूपनामनी ।
आलोचकत्वेनान्यानि प्राणो नेताऽक्षदेहयोः" ॥ इति ।

इह वागादीन्यक्षाणि मुख्यप्राणवृत्तयो भवितुमर्हन्ति । कुतः । तेषां प्राणरूपत्वश्रवणात् । " त एतस्यैव सर्वे रूपमभवन् " इति श्रुतेः । किंच प्राणशब्देनैव तानि लोके व्यवह्रियन्ते म्रियमाणस्य प्राणा नाद्यापि निर्गच्छन्तीत्यादौ । श्रुतिश्च वागादीनां प्राणनामैकतामाह— " न वै वाचो न चक्षूंषि न श्रोत्राणि न मनांसीत्याचक्षते प्राणा

*ज्योतिराद्यधिष्ठानं तु तदामननात्—ब्र० सू० अ० २ पा० ४ अ० ७ सू० १४ । + त इन्द्रियाणि तद्व्यपदेशादन्यत्र श्रेष्ठात्—ब्र० सू० अ० २ पा० ४ अ० ८ सू० १७ ।

१ ष °ख्याः स्युः । त° ।

इत्येवाऽऽचक्षते " इति । तस्मान्न प्राणादन्यानि तत्त्वानीति प्राप्ते ब्रूमः—" तानि मृत्युः श्रमो भूत्वोपयेमे तस्माच्छ्राम्यत्येव वाक् " इत्यादिना वागादीनां स्वस्वविषयेषु श्रान्त्यादिमभिधाय " अथेममेव नाऽऽप्नोद्योऽयं मध्यमः प्राणो यः संचरंश्चासंचरंश्च न व्यथते " इति प्राणस्य स्वव्यापारे श्रान्त्यभावमाह । अयमेको भेदः । तथा प्राणसंवादे वागादिनिर्गमनप्रवेशयोर्देहस्य मरणोत्थानाभावमभिधाय प्राणनिर्गमनप्रवेशयोर्मरणोत्थाने दर्शयति । अत एवमादिभेदोक्तेर्वागादीनां प्राणरूपत्वं प्राणनामत्वं च गौणम् । स्वामिभृत्यन्यायेन च प्राणानुवर्तित्वात् । व्यवहारभेदश्च भूयानुपलभ्यते । स्वस्वविषयं परिच्छिद्याऽऽलोचकानीन्द्रियाणि । प्राणस्त्वक्षाणां देहस्य च नेता । तस्माद्बहुश्रमादिवैलक्षण्यात्प्राणात्तत्त्वान्तराणीन्द्रियाणि[1] ।

एतेषामेकादशेन्द्रियाणां मध्ये मनसो मुख्यत्वात्तन्नाम्ना मनोमयकोश इत्युच्यते। प्राधान्यं च मनसो वागादीन्द्रियैः स्वस्वव्यवहारेषूपजीव्यत्वादुपपद्यते । वागादयस्तु विवक्षादिदृक्षाशुश्रूषादिरूपां प्रज्ञाशब्दाभिधेयां मनोवृत्तिं पुरस्कृत्यैव व्यवहरन्ति । एतच्चान्वयव्यतिरेकाभ्यां प्रपञ्चय कौषीतकिनः समामनन्ति—" प्रज्ञया वाचं समारुह्य वाचा सर्वाणि नामान्याप्नोति प्रज्ञया चक्षुः समारुह्य चक्षुषा सर्वाणि रूपाण्याप्नोति[2] " इत्यादिरन्वयः । " नहि प्रज्ञापेता वाङ्नाम किंचन प्रज्ञापयेदन्यत्र मे मनोऽभूदित्याह नाहमेतन्नाम प्राज्ञासिषमिति । नहि प्रज्ञापेतं चक्षू रूपं किंचन प्रज्ञापयेदन्यत्र मे मनोऽभूदित्याह नाहमेतद्रूपं प्राज्ञासिषम् " इत्यादिर्व्यतिरेकः ।

एतस्मिन्सर्वेन्द्रियसमष्टिरूपे मनोमयकोशे स्वात्मत्वमुपादिश्य तदेव हृदि दृढं वासयितुमुपासनाविधिमभिप्रेत्योपास्यस्वरूपं दर्शयति—

**स वा एष पुरुषविध एव । तस्य पुरुषविधताम् । अन्वयं पुरुषविधः । तस्य यजुरेव शिरः । ऋग्दक्षिणः पक्षः । सामोत्तरः पक्षः । आदेश आत्मा । अथर्वाङ्गिरसः पुच्छं प्रतिष्ठा,** इति ।

**स वा इत्यादिना** । यो मनोमयः प्राणमयादभ्यन्तर आत्मत्वेनोपदिष्टः स एवैष संकल्पयाम्यहमित्यनुभूयमान उपासनार्थं पञ्चावयवोपेतः पुरुषाकार **एव** भवति । पूर्ववन्मूषानिषिक्तद्रुतताम्रन्यायेन प्राणमयमनुसृत्य **पुरुषविधत्वम्** । यजुरादयस्त्रयो वेदत्रयगता मन्त्राः । आदिश्यते विधीयतेऽनेनेत्यादेशो विधायकं ब्राह्मणवाक्यम् । अथर्वाख्येना(णा)ङ्गिरोनामकेन च महर्षिणा दृष्टाश्चतुर्थवेदगता मन्त्रा **अथर्वाङ्गिरसः** । तेषां चैहिकाविष्टप्राप्त्यनिष्टपरिहारौ प्रति साधनत्वेन **प्रतिष्ठात्वम्** । यद्यपि शब्दात्मका यजुरादयो न मनोरूपास्तथाऽपि तदालोचिका मनोवृत्तिविशेषा यजुरादिशब्दैरुपलक्ष्यन्ते।

---

१ ख. °णि । २ ख स° । ९ °ति " इत्यन्व° । ३ घ. °न्त्रा° ।

पूर्ववदस्मिन्मनोमयेऽपि श्लोकमुदाहरति—

तदप्येष श्लोको भवति ।

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यकेऽष्टमप्रपाठके
तृतीयोऽनुवाकः ॥ ३ ॥

अथ चतुर्थोऽनुवाकः ।

यतो वाचो निवर्तन्ते । अप्राप्य मनसा सह । आनन्दं ब्रह्मणो विद्वान् । न बिभेति कदाचनेति, इति ।

वाचकाः शब्दा ज्ञापकेन **मनसा सह** ब्रह्मणः स्वरूपभूतमानन्दमप्राप्य यस्माद्ब्रह्मानन्दान्निवर्तन्ते तद्ब्रह्मानन्दं विद्वान्मनोमयोपाधिविशिष्टमुपासीनः कदाचिदपि न बिभेति । जातिगुणाद्यभावान्न ब्रह्मणि वाचकशब्दप्रवृत्तिः ।

एतच्च नैष्कर्म्यसिद्धावुक्तम्—

"षष्ठीगुणक्रियाजातिरूढयः शब्दहेतवः ।
नाऽऽत्मन्यन्यतमोऽमीषां तेनाऽऽत्मा नाभिधीयते" ॥ इति ।

नोऽपि वस्तूनि संकल्पयत्तदानीमीदृगिति वा तादृगिति वा संकल्पयति । न चैतभयं ब्रह्मणि संभवति । तस्मान्मनो ब्रह्मणो निवर्तते ।

तदेतत्पञ्चकोशविवेकेऽभिहितम्—

"कीदृक्तदिति चेत्पृच्छेरीदृक्ता नास्ति तत्र हि ।
यदनीदृगतादृक्च तत्स्वरूपं विनिश्चिनु ॥
अक्षाणां विषयस्त्वीदृक्परोक्षस्तादृगुच्यते ।
विषयी नाक्षविषयः स्वत्वान्नास्य परोक्षता" ॥ इति ।

पूर्वत्र यथाऽन्नमयोपाधिविशिष्टस्य प्राणमयोपाधिविशिष्टस्य च ब्रह्मण उपासनमुक्तम्, एवमत्रापि मनोमयोपाधिविशिष्टस्योपासनं विवक्षितम् । अन्यथा यजुरादिषु शिरःपक्षादिकल्पनावैयर्थ्यं प्रसज्येत । विद्वानित्यत्र विदिधातुरुपासनवाची । विद्युपास्तिक्रियोरुपास्तिप्रकरणे पर्यायत्वदर्शनात् । एतच्चाऽऽवृत्त्यधिकरणे भाष्यकारैरुदाहृतम्—विद्विदिनोपक्रम्योपासिनोपसंहरति "यस्तद्वेद यत्स वेद" इत्यत्र "अनु म एतां भगवो देवतां शाधि यां देवतामुपास्से" इति । क्वचिच्चोपासिनोपक्रम्य विदिनोपसंहरति । यथा—"मनो ब्रह्मेत्युपासीत" इत्यत्र "भाति च तपति च कीर्त्या यशसा ब्रह्मवर्चसेन य एवं वेद", इति । तस्माद्वेदनमत्रोपासनम् । तेन चोपासनेनेहामुत्र च भीतिर्न भवति । निरन्तरमुपासीनस्य

---

१ ग. श्लोको भवति । २ घ. °न्ते तं ब्रह्मा° । ३ घ. नास्मिन्नन्यत° । ४ क. ख. घ. ङ. °च्छेदीदृ° । ५ क. ग. ङ. °पास्त इ° ।

रागद्वेषाद्यवसराभावादैहिकभीत्यभावः क्रममुक्तिसद्भावाच्चाऽऽमुष्मिकभीत्यभावः। उभयमपि विवक्षित्वा कदाचनेत्युक्तम्।

मनोमयोपदेशेऽस्य तात्पर्यं दर्शयति—

**तस्यैष एव शारीर आत्मा। यः पूर्वस्य, इति।**

प्राणमयः शरीरं तत्स्वामी मनोमय आत्मेति दृढनिश्चयो जायत इत्यर्थः। बृहदारण्यके बालाक्यजातशत्रुसंवादे प्राणात्मवादिनं बालाकिं प्रति प्राणस्यानात्मत्वं बोधयितुमजातशत्रुर्बालाकिना सह कस्यचित्पुरुषस्य सुप्तस्य समीपे गत्वा शास्त्रप्रसिद्धैः प्राणनामभिश्चतुर्भिस्तं पुरुषमामन्त्र्य तावता तस्मिन्ननुत्थिते सति जडत्वेन प्राणस्यानात्मत्वं निश्चित्य प्राणादन्यं चेतनमात्मानं दर्शयितुं पाणिना तं पुरुषं पुनः पुनरापिष्य बोधयांचकार। ततश्चेतन आत्मोत्तस्थौ। तथा च श्रूयते—"तौ ह सुप्तं पुरुषमाजग्मतुस्तमेतैर्नामभिरामन्त्रयांचक्रे। बृहत्पाण्डरवासः सोम राजन्निति। स नोत्तस्थौ। तं पाणिनाऽऽपेषं बोधयांचकार। स होत्तस्थौ" इति।

अथ प्राणमयान्निवृत्तस्य मनोमयकोशादप्यन्तःप्रवेशाय विज्ञानमयकोशमुपदिशति-

**तस्माद्वा एतस्मान्मनोमयात्। अन्योऽन्तर**
**आत्मा विज्ञानमयः। तेनैष पूर्णः, इति।**

कामसंकल्पादिवृत्तिसमूहरूपो यो मनोमयः प्रत्यगात्मोपाधित्वादात्मत्वेनोपदिष्टः[1] तस्मादेवैतस्मादहं कामयेऽहं संकल्पयामीत्येवमनुभूयमानादभ्यन्तरो विज्ञानमयाख्योऽन्य आत्माऽस्ति। तेन विज्ञानमयेनान्तरवस्थितेन बहिःस्थितो मनोमयः पूर्णो वर्तते। सत्त्वगुणकार्यायां ज्ञानशक्तौ तमोमिश्रभागो यथा रागद्वेषादितामसधर्मोपेतं मनो भवति तथा रजोमिश्रो भागो राजसेन कर्तृत्वेन[3] धर्मेणोपेतं विज्ञानं भवति मनोवृत्तीनां मध्ये विशिष्टमहं कर्तेत्येवंरूपं वृत्तिज्ञानं यस्य कर्तृत्वधर्मोपेतस्य वस्तुनो ग्राहकं भवति तद्वस्तु विज्ञानं तस्य विकारो विज्ञानमयः। रजोमिश्रसत्त्वगुणकार्यं हि विज्ञानमहंप्रत्ययविषयाभिमन्तृरूपेण विक्रियते। तमेतमभिमन्तारं सर्वे जना अहंप्रत्ययेन विषयं कुर्वन्ति। द्विविधो मनसः प्रत्यय इदंप्रत्ययोऽहंप्रत्ययश्चेति। तत्रेदंप्रत्ययो बहिर्मुखतया प्रमातुरन्यपदार्थं प्रमेयं विषयी करोति। अहंप्रत्ययस्त्वन्तर्मुखः प्रमातारमेव विषयी करोति। न चात्र प्रमातृप्रमेयसांकर्यदोषः शङ्कनीयः। दृष्टत्वे तस्य दोषत्वाभावात्। नहि दृष्टेऽनुपपन्नं नामेति न्यायात्। योऽयमहंप्रत्ययाविषयो

१ ग °त्वाण्डुर°। २ क. घ. ङ. °नोपादि°। ३ क. ख. घ ङ. °र्तृत्वध°। ४ °धर्मोपे°। ५ ङ. न त्वत्र।

भिमन्ता सर्वेषु प्रमाणव्यवहारेषु प्रमाता सोऽयमत्र विज्ञानमयः । एतमेवोद्दिश्याऽऽथर्वणिकाः—"चक्षुश्च द्रष्टव्यं च श्रोत्रं च श्रोतव्यं च" इत्यादिना प्रमाणप्रमेयजातं सर्वमनुक्रम्य सर्वव्यवहारकर्तारं पृथगेव विस्पष्टमामनन्ति—"एष हि द्रष्टा स्प्रष्टा श्रोता घ्राता रसयिता मन्ता बोद्धा कर्ता विज्ञानात्मा पुरुषः" इति । कौषीतकिनश्च—"प्रज्ञया वाचं समारुह्य" इत्यादिना विषयेन्द्रियव्यवहारस्य सर्वस्यान्वयव्यतिरेकाभ्यां मनोधीनत्वमाम्नायाशेषव्यवहारकर्तारं पृथगामनन्ति—"न वाचं विजिज्ञासीत वक्तारं विद्यात्" इत्यादिना । नन्वात्मैव व्यवहारस्य कर्ता भवति । नैत्वसौ विज्ञानमयाख्यश्चतुर्थः कोशः । अत एव भगवान्बादरायणो द्वितीयाध्यायस्य तृतीयपादे जीवात्मविचारे—"कर्ता शास्त्रार्थवत्त्वात्" [ ब्र० सू० अ० २ पा० ३ सू० ३३ ] इति सूत्रयामास । नायं दोषः । आत्मकर्तृत्वस्यौपाधिकत्वात् । एतच्च "यथा च तक्षोभयथा" [ ब्र० सू० अ० २ पा० ३ सू० ४० ] इत्येवं सूत्रितम् । लोके तक्षा यथा बाह्यसाधनैर्वास्यादिभिर्युक्तः प्रासादस्य कर्ता भवति । साधनहीनस्तु नैव कर्ता । तथाऽयमात्माऽपि स्वरूपतोऽसङ्ग एव सन्वागादिकरणसहितः कर्तेति सूत्रार्थः । तर्हि पूर्वोक्तबाह्येन्द्रियान्तःकरणसमूहरूपमनोमयस्य संयोगेनैवाऽऽत्मनः कर्तृत्वसिद्धौ किमनेन विज्ञानमयेनेति चेन्मैवम् । अनेन न्यायेन तक्षण्यपि वैयर्थ्यस्याऽऽपादयितुं शक्यत्वात् । वास्यादिसाधनसंयुक्तस्य ब्राह्मणादेरेव प्रासादकर्तृत्वे सति व्यर्थस्तक्षा स्यात् । यदि ब्राह्मणादौ प्रासादगोचरज्ञानक्रियाशक्त्योरभावात्तक्षाऽपेक्ष्येत तर्ह्यत्रापि सर्वव्यवहारगोचरज्ञानक्रियाशक्तियुक्तो विज्ञानमयोऽपेक्ष्यते । न ह्यसङ्गस्याऽऽत्मन आरोपमन्तरेण शक्तिद्वयं संभवति । आरोपश्च क्वचिन्मुख्यस्यैवाऽऽधारान्तरे दृश्यते । बिलगते हि सर्पे मुख्यं सर्पत्वं रज्ज्वावारोप्यमाणं दृष्टम् । तस्मादत्रापि विज्ञानमये मुख्यं शक्तिद्वयं चिदात्मन्यारोप्यताम् । एतदेवाभिप्रेत्य वाजसनेयिनः समामनन्ति—"योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः स समानः सन्नुभौ लोकावनुसंचरति ध्यायतीव लेलायतीव" इति । अत्र योऽयं चैतन्यज्योतिःस्वरूपः पुरुषो विज्ञानमयोपाधिकः स पुरुषस्तेनोपाधिना समानः परिच्छिन्नः सन्नुपाधिं संचरन्तमनु स्वयमपि लोकावुभौ संचरति । स्वयमसंचरन्नेवोपाधिसंचारेण च संचारवानिवोपलभ्यते । यथा घटे देशान्तरं प्रति नीयमाने घटावच्छिन्नस्याऽऽकाशस्यापदेशे नयनं न स्वतस्तद्वत् । सोऽयमर्थः श्रुताविवशब्देन स्पष्टी क्रियते । उपाधौ ध्यायति सति चिदात्मा स्वयमपि ध्यायन्निवोपलभ्यते । तथोपाधौ लेलायमाने स्वयमपि लेलायन्निवोपलभ्यते । एतमेवोपाधिप्रयुक्तमुत्क्रान्तिगमनागमनादिसंसारं भगवान्सूत्रयामास—"तद्गुणसारत्वात्तु तद्व्यपदेशः" [ ब्र० सू० अ० २ पा० ३ सू० २९ ] इति ।

---

१ ग. °दि । न° । २ ग. घ. °र्ता । न° । ३ ख. न वि° । ४ ब. मुख्ये । ५ ग. °नादि° ।

एवं च सति कर्तृत्वमपि विज्ञानमयोपाधौ वर्तमानमात्मन्यारोप्यत इत्यभ्युपगन्तव्यम्। सोऽयं कर्तृत्वशक्तियुक्तो **विज्ञानमयः** करणत्वशक्तियुक्तान्मनोमयादभ्यन्तरः। ननु मनसा सहितान्येकादशेन्द्रियतत्त्वानि पञ्चवृत्त्युपेतं प्राणतत्त्वं चेत्येतावदेव लिङ्गशरीरं **मीमांसाशास्त्रे** विचारितम्। न तु विज्ञानाख्यं किंचित्तत्त्वमिति चेत्**प्राणपादे** तद्विचाराभावेऽपि ततः **पूर्वस्मिन्पादे** जीवात्मनि संसारधर्मोपादकत्वेन तद्गुणसारत्वादित्यादिना विचारितत्वात्। अङ्गीकृतेऽपि विज्ञानाख्ये बुद्धितत्त्वे लिङ्गशरीरस्य सप्तदशसंख्या पूर्यते। सा च संख्या **भगवद्भिरुदाहृता**—"अपञ्चीकृतपञ्चमहाभूतानि तत्कार्यं च सप्तदशकं लिङ्गम्" इति।

तस्याश्च संख्यायाः संख्येयानि तत्त्वानि **विश्वरूपाचार्यै**र्दर्शितानि—

" ज्ञानेन्द्रियाणि पञ्चैव तथा कर्मेन्द्रियाण्यपि।
वायवः पञ्च बुद्धिश्च मनः सप्तदशं विदुः" ॥ इति।

नन्वेकस्यैवान्तःकरणतत्त्वस्य मनोबुद्ध्यहंकारचित्ताख्याश्चत्वारो वृत्तिभेदाः। संशयात्मकं मनः। निश्चयात्मिका बुद्धिः। अभिमानात्मकोऽहंकारः। चेतनात्मकं चित्तमिति वृत्तीनां लक्षणानि। एताश्चतस्रो वृत्तयस्तद्विषयाश्चाऽऽ**थर्वणिकै**रनुक्रान्ताः—"मनश्च मन्तव्यं च बुद्धिश्च बोद्धव्यं चाहंकारश्चाहंकर्तव्यं च चित्तं च चेतयितव्यं च" इति। एते च वृत्तिविशेषाः क्षणिकाः कालभेदेनैवोत्पद्यन्ते "युगपज्ज्ञानानुत्पत्तिर्मनसो लिङ्गम्" इति **न्यायात्**। तथा सति वृत्तिमात्रस्वरूपयोर्मनोमयविज्ञानमययोरन्नमयप्राणमयवत्पृथक्तत्त्वरूपत्वाभावाद्भिन्नकालीनत्वाच्चान्तर्बहिर्भावो न युक्त इति चेत्। न। करणरूपेण कर्तृरूपेण च तयोस्तत्त्वभेदाङ्गीकारात्। पूर्वोक्ता मनोबुद्ध्यादयश्चत्वारोऽपि करणस्यैव व्यापारविशेषाः। कर्तृरूपं तु करणात्पृथगेव तत्त्वम्। तच्च बुद्धिशब्देन विज्ञानशब्देनाहंशब्देन च तत्र तत्र व्यवह्रियते। तत्र **कठाः** कर्तरि बुद्धिशब्दमेवमामनन्ति—"आत्मानं रथिनं विद्धि शरीरं रथमेव तु। बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेव च। इन्द्रियाणि हयानाहुर्विषयांस्तेषु गोचरान्" इति। चिदात्मा रथस्वामी। अचिद्रूपा दर्पणसदृशी चैतन्यप्रतिबिम्बस्य कर्तृत्वधर्मस्य वाऽऽधारभूता बुद्धिः सारथिः। सा हि चिच्छायोपेतत्वेन चेतना कर्तृत्वेन च सारथिवत्स्वतन्त्रा सती प्रग्रहसदृशेन मनोरूपेण करणेन हयसदृशानीन्द्रियाणि नियमयन्ती रथसदृशं शरीरं व्यापारयति। अतोऽत्र बुद्धिमनसोस्तत्त्वभेदः। बुद्धिस्थायित्वमेककालवर्तित्वं चावगम्यते। विज्ञानशब्दोऽपि तत्रैवाऽऽम्नायते—"विज्ञानसारथिर्यस्तु मनःप्रग्रहवान्नरः। सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्" इति। बुद्धेरान्तरत्वविवक्षयोत्कर्षस्तत्रैवाऽऽम्नातः—"इन्द्रि-

१ ग. °ते हि वि°। २ ग. 'वोत्क्रम'। ३ ग. च बुद्धेः स्था°। ४ ख. °त्रैव वर्णितः।

भ्य: परा ह्यर्था अर्थेभ्यश्च परं मनः । मनसस्तु परा बुद्धिः " इति । तथा प्रत्यगा-मदर्शनार्थं निरोधसमाधिरूपं योगं ब्रुवती श्रुतिर्विज्ञानस्याभ्यन्तरत्वं दर्शयति—' यच्छेद्वाङ्मनसी प्राज्ञस्तद्यच्छेज्ज्ञान आत्मनि " इति । प्रथमतो वागादीनि बाह्यानी-न्द्रियाण्यभ्यन्तरे मनसि नियम्य तदपि मनस्ततोऽप्यान्तरे ज्ञानात्मनि नियच्छेत् । ज्ञानात्मशब्देनात्र विज्ञानमयोऽभिधीयते । न तु चिदात्मा । तस्योत्तरत्र तद्यच्छेच्छान्त आत्मनीति वक्ष्यमाणत्वात् । परब्रह्मरूपस्य प्रत्यगात्मनः संसारार्थं विज्ञानं प्रथममु-त्थितं[1] ततो मनस्ततोऽपि बहिः प्राणः । सोऽयं क्रमः संसारवर्णनप्रस्तावे **वाजसनेयि**-भिराम्नायते—" स वा अयमात्मा विज्ञानमयो मनोमयः प्राणमयः " इति । सोऽयं बुद्धिविज्ञानशब्दाभ्यामभिधीयमानः पदार्थः सर्वैरप्यहंशब्देन व्यवह्रियते । **भाष्यका**-रा अध्यासमुदाहरन्तः पुत्रभार्यादिकं देहेन्द्रियमनांसि चोदाहृत्य तद्दृष्टान्तेन विज्ञानमय-स्याध्यासमुदाजह्रुः—" एवमहंप्रत्ययिनमशेषस्वप्रचारसाक्षिणि प्रत्यगात्मन्यध्यस्य " इति । **समन्वयसूत्रभाष्येऽ**प्येवमाहुः—" तेनैवाहंकर्त्राऽहंप्रत्ययिना सर्वाः क्रिया निष्पाद्यन्ते तत्फलं च स एवाश्नाति 'तयोरन्यः पिप्पलं स्वाद्वत्ति' इति श्रुतेः" इति । अयमेव कर्ता भोक्ता **नैयायिका**दिमतसिद्धो जीवात्मा । **सांख्या**श्चैवमाहुः—अन्तः-करणं त्रिविधमिति । तत्रेन्द्रियाणामेकादशसंख्यापूरकं मनोनामकमेकम् । अहंकार-तत्त्वं द्वितीयम् । महत्तत्त्वं तृतीयम् । तेष्वहंकारमेवं लक्षयन्ति । अभिमानोऽहंकार । स एष चितिच्छायोपेतोऽहंकारोऽत्र **विज्ञानमयः** । तेन विज्ञानमयेन मनोम-य पूर्णत्वात्तादृशमनोमयव्याप्तप्राणमयेन पूर्णोऽन्नमयेऽप्यापादमस्तकमहं मनुष्य इत्य-भिमान उपलभ्यते ।

अथ विज्ञानमये स्वात्मत्वबुद्धिदार्ढ्यार्थमुपासनं विधित्सुरुपास्यस्वरूपं निरूपयति—

**स वा एष पुरुषविध एव । तस्य पुरुषविधताम् ।**
**अन्वयं पुरुषविधः । तस्य श्रद्धैव शिरः । ऋतं**
**दक्षिणः पक्षः । सत्यमुत्तरः पक्षः । योग**
**आत्मा । महः पुच्छं प्रतिष्ठा , इति ।**

पूर्वोक्तप्रकारेण श्रुतिषु नैयायिकादिमतेषु लोकव्यवहारे च प्रसिद्धः कर्ता स सोऽस्माभिरहं कर्तेत्यनुभूयमानो विज्ञानमयः । शिरःपक्षादिकल्पनयोपासितं मनो-मनु स्वयमपि ताम्रप्रतिमान्यायेन शिरःपक्षादिकल्पनया पुरुषाकार एव भवति । यद्यपि श्रद्धादयो वृत्तिरूपत्वान्मनोमयस्य कार्याः, तथाऽपि विज्ञानमयस्य कर्तृ-करणतद्वृत्तिस्वामित्वान्मनोवृत्तय एतदीया अपि भवन्तीत्यभिप्रेत्य विज्ञानमयस्य

१ ग. घ. °तोऽपि बहिर्मन° । २ घ. चिच्छा° ।

श्रद्धा शिर इत्युच्यते । गुरुशास्त्राभ्यामभिहिते तत्त्वे तदवबोधोपाययोश्च परमो विश्वासः श्रद्धा । ऋतसत्यशब्दाभ्यामप्यत्र तत्तत्कर्तृत्वाभिमानरूपं वृत्तिद्वयं विवक्षितम् । योगः संप्रज्ञातासंप्रज्ञातसमाधिद्वयम् । " योगश्चित्तवृत्तिनिरोधः " इति योगशास्त्रे सूत्रितत्वात् । महःशब्देन महतः परमितिश्रुत्यन्तरोक्तमव्याकृतस्य प्रथमकार्यरूपं हिरण्यगर्भाख्यं महत्तत्त्वं विवक्षितम् । तच्च सर्वेषामहंप्रत्ययगम्यानां कर्त्रात्मनां समष्टिरूपत्वेन प्रतिष्ठा । एतदेवाभिप्रेत्योत्तरतापनीये समाम्नायते—" सर्वाहंमानी हिरण्यगर्भः " इति ।

अस्मिन्विज्ञानमयेऽपि पूर्ववच्छ्लोकमुदाहरति—

तदप्येष श्लोको भवति ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यकेऽष्टमप्रपाठके चतुर्थोऽनुवाकः ॥ ४ ॥

अथ पञ्चमोऽनुवाकः ।

विज्ञानं यज्ञं तनुते । कर्माणि तनुतेऽपि च । विज्ञानं देवाः सर्वे । ब्रह्म ज्येष्ठमुपासते । विज्ञानं ब्रह्म चेद्वेद । तस्माच्चेन्न प्रमाद्यति । *शरीरे पाप्मनो हित्वा । सर्वान्कामान्त्समश्नुत इति, इति ।

यदेतत्कर्तृत्वशक्तियुक्तं विज्ञानं तदेव ज्योतिष्टोमादीन्यज्ञाननुतिष्ठति । एतदीयमनुष्ठानं तत्साक्षिणि चिदात्मनि भ्रान्त्या परिकल्प्यते । तथा कृषिवाणिज्यादिलौकिककर्माण्यपि विज्ञानेनैव क्रियन्ते । तदेतल्लौकिकवैदिकसर्वक्रियाकर्तृरूपमाध्यात्मिकं विज्ञानमिन्द्रादयः सर्वे देवा ज्येष्ठब्रह्मरूपेणोपासते । महत्तत्त्वरूपं हिरण्यगर्भाख्यं प्रथमोत्पन्नज्येष्ठशरीरम् । " स यो हैतन्महः प्रथमजं यक्षम् " इति श्रुतेः । यद्वा पूज्यम् । तथा—" हिरण्यगर्भः समवर्तताग्रे " इति श्रुत्यन्तरम् ।

स्मृतिश्च—"स वै शरीरी प्रथमः स वै पुरुष उच्यते ।
आदिकर्ता स भूतानां ब्रह्माऽग्रे समवर्तत " ॥ इति ।

इन्द्रादिवद्यः पुमान्विज्ञानोपाधिकं ब्रह्म यद्युपासीत तदुपासीनश्च यावज्जीवं तस्माद्विज्ञानोपाधिकाद्ब्रह्मणो यदि न प्रमाद्येत्, उक्तविधं ब्रह्माहमस्मीत्येवं प्रत्ययप्रवाहं परित्यज्य मनुष्योऽहं कर्ता भोक्ता सुखी दुःखीत्येवं प्राकृतजनवद्व्यवहारः प्रमादः

* अत्र शकाराकारस्य सानुदात्तः पाठोऽपि वैदिकेषु प्रसिद्धः ।

१ ग. °रूपर्तृ° । २ ध. °रूपाहि° । ३ ग. स व्यय° । ४ ङ. °नस्य या° । ५ ङ. नो । ६ ग. °त्येव प्र° ।

यदि न कुर्यात्तदानीमयं शरीरे वर्तमान एव सन्भाविजन्मरूपदुःखहेतून्सर्वान्पाप्मनः परित्यज्य ब्रह्मलोके संकल्पमात्रसंपादितान्सर्वान्भोगान्भुक्त्वा तत्त्वज्ञानोदये सति विमुच्यते । इन्द्रादिदेवानां स्त्रीशूद्रवद्वेदाध्ययनाभावेऽप्यस्ति वैदिकब्रह्मविद्यायामधिकारः । शूद्रादेस्तु वेदमुखेनाधिकाराभावेऽपि स्मृतिपुराणादावस्त्यधिकारः प्रथमाध्यायस्य तृतीयपादे + चिन्तितः—

"नाधिक्रियन्ते विद्यायां देवाः किंवाऽधिकारिणः ।
विदेहत्वेन सामर्थ्यहानेर्नैषामधिक्रिया ॥
अविरुद्धज्ञानवादिमन्त्रादेर्देहसत्त्वतः ।
अर्थित्वादेश्च सौलभ्याद्देवाद्या अधिकारिणः" ॥ इति ।

बृहदारण्यके तृतीयाध्याये श्रूयते—"तद्यो यो देवानां प्रत्यबुध्यत स एव तदभवत्तथर्षीणाम्" इति । देवादीनां मध्ये यो यो ब्रह्म बुबुधे स स एव ब्रह्माभवदित्यर्थः । तत्र देवर्ष्यादयो विद्यायां नाधिक्रियन्त इति प्राप्तम् । कुतः । अर्थी समर्थो विद्वाञ्शास्त्रेणापर्युदस्तोऽधिक्रियत इत्युक्तानामधिकारहेतूनामशरीरेषु देवेष्वसंभवात् । न च मन्त्रार्थवादादिभ्यो देवानां विग्रहवत्त्वम् । विध्येकवाक्यतापन्नानां मन्त्रादीनां स्वार्थे तात्पर्याभावादिति प्राप्ते ब्रूमः—त्रिविधो ह्यर्थवादः । गुणवादोऽनुवादो भूतार्थवादश्चेति । तथा चाऽऽहुः—

"विरोधे गुणवादः स्यादनुवादोऽवधारिते ।
भूतार्थवादस्तद्धानादर्थवादस्त्रिधा मतः" ॥ इति ।

आदित्यो यूपो यजमानः प्रस्तर इत्यत्र प्रत्यक्षविरोधे सत्यादित्यादिवद्यूपादेर्यज्ञकत्वगुण आदित्यादिशब्दैरुपलक्षित इति गुणवादः । "अग्निर्हिमस्य भेषजम्" "वायुर्वै क्षेपिष्ठा देवता" इत्यादिषु मानान्तरसिद्धार्थवादत्वादनुवादत्वम् । तयोरुभयोः तात्पर्यं मा भूत् । "इन्द्रो वृत्राय वज्रमुदयच्छत्" इत्यादिष्वविरुद्धेषु भूतार्थ... स्वतः प्रामाण्यवादे स्वार्थे तात्पर्यस्य निवारयितुमशक्यत्वात्पदैकवाक्यतया स्वार्थेऽवान्तरतात्पर्यं प्रतिपाद्य पश्चाद्वाक्यैकवाक्यतया विधिषु महातात्पर्यं भूतार्थवादाः प्रतिपद्यन्ते । मन्त्रेष्वप्ययं न्यायो योज्यः । तथा च मन्त्रार्थवादादिबलाद्देवादीनां विग्रहवत्त्वे श्रवणादिषु सामर्थ्यं सुलभम् । अर्थित्वं चैश्वर्यस्य क्षयित्वसातिशयित्वदर्शनान्मोक्षसाधनब्रह्मविद्याविषय उपपद्यते । विद्वत्ता चोपनयनाध्ययनराहितानामपि स्वयंभातवेद-

+ तदुपर्यपि बादरायणः संभवात्—ब्र० सू० अ० १ पा० ३ अ० ९ सू० २६ ।

१ ख. °वधि° । २ ग. °तीये पा° । ३ क. ग. °रुद्धाज्ज्ञान° । ४ ग. स ए° । ५ ग. °द्वानाधि° । ६ ख. °माण्यादेव स्वा° ।

त्वात्सुलभैव। तस्माद्देवादीनां विद्याधिकारो न निवारयितुं शक्यः। यद्यप्यादित्यादीनां देवानामादित्यादिध्यानमिश्रासु सगुणब्रह्मविद्यासु ध्येयानामन्येषामादित्यादीनामसंभवा-दादित्यत्वादिप्राप्तिलक्षणविद्याफलस्य सिद्धत्वाच्च माऽस्त्वधिकारः। तथाऽपि निर्गुण-विद्यायामधिकारे को दोषः। तस्मादस्त्येवाधिकारः।

शूद्राधिकारोऽपि तत्रैव* चिन्तितः—

"शूद्रोऽधिक्रियते वेदविद्यायामथवा नहि।
अत्रैवर्णिकदेवाद्या इव शूद्रोऽधिकारवान्॥
देवाः स्वयंभातवेदाः शूद्रोऽध्ययनवर्जनात्।
नाधिकारी श्रुतौ स्मार्ते त्वधिकारो न वार्यते॥

छान्दोग्यस्य चतुर्थाध्याये संवर्गविद्यायामाम्नायते—"आजहारेमाः शूद्रानेनैव मुखेनाऽऽलापयिष्यथाः" इति। अयमर्थः। जानश्रुतिर्नाम कश्चिच्छिष्यो गोसहस्रं दुहितरं मुक्ताहारं रथं कांश्चिद्ग्रामांश्चोपायनत्वेनाऽऽनीय रैक्वनामकं गुरुमुपससाद। तस्य रैक्वस्य वचनमेतत्। हे शूद्र जानश्रुत इमा गोसहस्राद्या आजहाराऽऽहृतवानसि। अनेनैव दुहित्राद्युपायनमुखेन मच्चित्तं प्रसाद्योपदेशयिष्यसीति। तत्र शूद्रोऽपि वेदवि-द्यायामधिकारवानिति प्राप्तम्। कुतः। अत्रैवर्णिकदेवदृष्टान्तेन शूद्रस्याप्यत्रैवर्णिकस्य तत्संभवादिति प्राप्ते ब्रूमः—अस्ति देवशूद्रयोर्वैषम्यम्। उपनयनाध्ययनाभावेऽपि स्वयं-प्रतिभातवेदा देवास्तादृशस्य सुकृतस्य पूर्वमुपार्जितत्वात्। शूद्रस्तु तादृशसुकृतराहित्यान्न स्वयंप्रतिभातवेदः। नापि तस्य वेदाध्ययनमस्त्युपनयनाभावात्। अतो विद्वत्ताख्यस्या-धिकारहेतोरभावान्न श्रौतविद्यायां शूद्रोऽधिकारी। कथं तर्ह्युदाहृतवाक्ये जानश्रुति-विषयः शूद्रशब्दो यौगिकोऽयं न रूढ इति ब्रूमः। विद्याराहित्यजनितया शुचा गुरुं दुद्रावेति शूद्रः। न च रूढ्या योगस्यापहारो रूढेरत्रासंभवात्। अस्मिन्नुपाख्याने क्षत्तृ-प्रेरणाद्यैश्वर्योपन्यासेन जानश्रुतेः क्षत्रियत्वावगमात्। ननु शूद्रस्य वेदविद्यानधिकारे सति मुमुक्षायां सत्यामपि मुक्तिर्न स्यादिति चेन्मैवम्। स्मृतिपुराणादिमुखेन ब्रह्मविद्योदये सति मुक्तिसिद्धेः। तस्मान्न शूद्रो वेदविद्यायामधिक्रियते"।

सगुणब्रह्मविदो देहपातात्प्रागेव पुण्यपापत्यागस्तृतीयाध्यायस्य तृतीयपादे+ चिन्तितः—

"कर्मत्यागो मार्गमध्ये यदि वा मरणात्पुरा।
उत्तीर्य विरजां त्यागस्तथा कौषीतकिश्रुतेः॥

---

* शुगस्य तदनादरश्रवणात्तदाद्रवणात्सूच्यते हि—ब्र० सू० अ० १ पा० ३ अ० १० सू० ३४। + सांपराये तर्तव्याभावात्तथा ह्यन्ये—ब्र० सू० अ० ३ पा० ३ अ० १६ सू० २७।

१ 'शमिच्छसी'।

कर्मप्राप्यफलाभावान्मध्ये साधनवर्जनात् ।
**ताण्डिश्रुतेः** पुरा त्यागो बाध्यः **कौषीतकिक्रमः** ॥

पूर्वाधिकरणोक्तसुकृतदुष्कृतपरित्यागो ब्रह्मलोकमार्गस्य मध्ये भवितुमर्हति । तल्लो-कसमीपमार्गवर्तिनद्युत्तरणानन्तरं तच्छ्रवणात् "स आगच्छति विरजानदीं तां मनसै-वात्येति तत्सुकृतदुष्कृते विधूनुते" इति । तस्मान्मार्गमध्ये परित्याग इति प्राप्तो ब्रूमः—ब्रह्मलोकमार्गमध्ये ब्रह्मप्राप्तिव्यतिरिक्तस्य सुकृतदुष्कृताभ्यां प्राप्यस्य फलस्या-भावात्तयोर्नदीपर्यन्तनयनं निरर्थकम् । किंच मरणात्प्रागपरित्यक्तयोः सुकृतदुष्कृतयो-र्मार्गमध्ये परित्यागस्य साधनं न संभवति । देहरहितेन साधनमनुष्ठातुमशक्यत्वात् । न च मरणात्पुरा तत्त्यागे प्रमाणाभावः । "अश्व इव रोमाणि" इति **ताण्डिश्रुतौ** तदवगमात् । तथा च सति श्रुत्या नदीमुत्तीर्य परित्याग इत्ययं **कौषीतकि**-प्रोक्तः क्रमो बाधनीयः । तस्मान्मरणात्प्रागेवोपासकस्य सुकृतदुष्कृतयोः परित्यागः" ।

अथ विज्ञानमयं बुद्धवतस्तदुपासकस्य मनोमये शरीरत्वबुद्धिदार्ढ्यं पर्यवस्यतीति दर्शयति—

**तस्यैष एव शारीर आत्मा । यः पूर्वस्य,** इति ।

पूर्ववद्योजनीयम् । लोके करणस्य कुठारादेरात्मत्वं नास्ति । तथा मनोमयस्यापि करणस्याऽऽत्मत्वाभावाच्छरीरकोटावन्तर्भावः परिशिष्यते ।

**तस्माद्वा एतस्माद्विज्ञानमयात् । अन्यो-न्तर आत्माऽऽनन्दमयः । तेनैष पूर्णः ।**

अथ विज्ञानमयकोशेऽप्यात्मत्वबुद्धिं वारयितुमानन्दमयमुपदिशति—**तस्माद्वा** इत्या-दिना । आनन्दः परस्य ब्रह्मणः स्वरूपम् "आनन्दो ब्रह्मेति व्यजानात्" "विज्ञान-मानन्दं ब्रह्म" इत्यादिश्रुति**भ्यः** । तस्याऽऽनन्दस्य विकारो वक्ष्यमाणप्रियमोदादिस-हित **आनन्दमयः** । यद्यप्यानन्दो निर्विकारस्तथाऽपि घटाद्युपाधिभिराकाश इव सात्त्विकान्तःकरणवृत्त्युपाधिभिः परिच्छेदे कल्पिते सति प्रियादिरूपतया विक्रियते । सोऽयमानन्दमयः कर्तृत्वाभिमानयुक्ताद्विज्ञानमयादभ्यन्तरः पृथगेवाऽऽत्मा । तेनाऽऽ-नन्दमयेनैष पूर्वोक्तो विज्ञानमयः **पूर्णः** । यथा प्राणमयेन व्याप्ते देहे कृत्स्नेऽपि प्राण-कार्यं चलनमुपलभ्यते । यथा च मनोमयेन व्याप्ते प्राणविशिष्टे देहे सर्वस्मिन्नपि मनः-कार्यभूता चेतनत्वलक्षणा ज्ञानशक्तिरुपलभ्यते । यथा च विज्ञानमयेन व्याप्ते मनःप्राण-मयविशिष्टे देहे कृत्स्नेऽप्यहं करोमीति कर्तृत्वमुपलभ्यते । एवमानन्दमयेन व्याप्ते विज्ञानमनःप्राणविशिष्टे देहे हस्तपादादिषु सुखविशेषा उपलभ्यन्ते । तदेतदानन्दमयं-

१ ग. घ. °रजां न° । २ ख. °था स° । ३ ख. °त्वदा° ।

पूर्णत्वम् । सुखवद्दुःखमपि हस्तादिषूपलभ्यत इति चेदुपलभ्यतां नाम । दुःखात्मकवृत्तिहेतुना मनोमयेन देहस्य पूर्णतया तदुपपत्तेः । दुःखस्य मनोमयधर्मत्वं सुखस्याऽऽनन्दमयधर्मत्वं चोपरिष्टाद्विस्पष्टी करिष्यते । अत्रेदं चिन्तनीयम् । कोऽयमानन्दो नाम किं दुःखनिवृत्तिराहोस्विद्भावरूप इति । तत्र दुःखाभाव इति तावत्प्राप्तम् । लोके क्षुत्पिपासारोगादिजनितस्य दुःखस्य निवृत्तौ सुखबुद्धिदर्शनात् । ननु विरोधिनि दुःखे वर्तमाने भावरूपं सुखं तिरोधीयते[1] । अतः सुखाविर्भावकाले दुःखनिवृत्तिरपेक्षितेत्येककालीनतया दुःखनिवृत्तौ सुखत्वभ्रम इति चेन्न । दुःखनिवृत्तिव्यतिरेकेण ज्वरमोचनकाले कस्यचिद्भावरूपस्यानुभवाभावात्[2] । तस्माद्दुःखनिवृत्तिरेवाऽऽनन्द इति प्राप्ते ब्रूमः—अकस्मादुत्पन्नविपञ्चीस्वरश्रवणादन्तरेणापि दुःखपरामर्शमानन्दावभासेन भावरूपत्वं सिध्यति । अभावत्वे तु प्रतियोगिनिरूप्यत्वेन । दुःखस्मृतिपुरःसरमेव प्रतीयेत[3] । घटाभावः पटाभाव इत्यादौ प्रतियोगिपूर्वकप्रतीतिनियमात् । एतच्च पूर्वाचार्यैरेव साधितम् । आनन्दो दुःखाभावो न भवति तदनिरूप्यत्वात् । यद्दुःखेन न निरूप्यते तद्दुःखाभावो न भवति यथा घटः । यद्वा । आनन्दोऽयं भावरूपः प्रतियोग्यनिरूप्यत्वाद्घटवत् । यद्वा । आनन्दोऽयं भावरूपः सातिशयत्वाद्दुःखवदिति । सातिशयत्वं चोपरिष्टात्सार्वभौमाद्यानन्देषु स्पष्टी भविष्यति । सिद्धे भावरूपत्वे पुनरप्येतच्चिन्तनीयम् । किमसावानन्दः क्रियारूपः किंवा गुणरूप उत कस्यचित्प्रतिबिम्ब आहोस्विदवच्छिन्नः पदार्थोऽथवाऽनवच्छिन्नः स्वतन्त्रो वेति । तत्र तावत्क्रियारूप इति प्राप्नोति । कुतः । टुनदि समृद्धावित्यस्माद्धातोरानन्दशब्दनिष्पत्तेः । कौषीतकिनश्च कर्मेन्द्रियाणां मध्ये गुह्येन्द्रियस्याऽऽनन्दक्रियोपेतं विषयमामनन्ति—"प्रज्ञयोपस्थं समारुह्योपस्थेनाऽऽनन्दं रतिं प्रजातिं चाऽऽप्नोति" इति । उपस्थजन्ययाऽऽनन्दक्रियया व्याप्यमानः शरीरावयवसंयोगोऽत्राऽऽनन्दशब्देनोच्यते । संयोगकालीना क्रीडा रतिः । संयोगफलभूतप्रजोत्पत्तिः प्रजातिः । यथा वागादीन्द्रियजन्या अभिवदनादयः क्रियाविशेषाः । तथोपस्थजन्य आनन्दोऽपि क्रियाविशेषः । तथा च सांख्या आहुः—"वचनादानविहरणोत्सर्गानन्दास्तु पञ्चानाम्" इति । आथर्वणिकाश्च यथोक्तक्रियाविशिष्टान्कर्मेन्द्रियविषयानामनन्ति—"वाक्च वक्तव्यं च हस्तौ चाऽऽदातव्यं चोपस्थश्चाऽऽनन्दयितव्यं च वायुश्च विसर्जयितव्यं च पादौ च गन्तव्यं च" इति । तस्याश्चोपस्थजन्याया आनन्दक्रियाया मनोमयान्तःपातित्वादानन्दमयस्य विज्ञानमयादभ्यन्तरत्वमयुक्तमिति चेन्नैवम् । त्वदुक्तक्रियाया अतिरिक्तस्याऽऽनन्दस्यात्र विवक्षितत्वात् । स चाऽऽनन्दः कर्तृत्वभोक्तृत्वोपेतस्याऽऽत्मनो मनःसंयोगजन्यः क्षणिको गुण इति वैशेषिकाणां मतम् । बुद्धिसुखदुःखेच्छादीनां नवानां तैश्चाऽऽत्मविशेषगुणत्वा-[4]

---

१ ख. °ते । ततः । २ क. ग. ङ. °नुभावा° । ३ घ. प्रतीयते । ४ घ. तैरात्म° ।

ङ्गीकारात् । सांख्यास्तु मन्यन्ते—'आत्मनोऽसङ्गत्वादिच्छायाः प्रकृतेर्गुणत्रयपारिणामाः । तत्र सुखं सत्त्वगुणपरिणामः । प्रवृत्ती रजोगुणपरिणामः । प्रमादस्तमोगुणपरिणामः' इति ।

तथा च भगवताऽप्युक्तम्—

" सत्त्वं सुखे संजयति रजः कर्मणि भारत ।
ज्ञानमावृत्य तु तमः प्रमादे संजयत्युत " ॥ इति ।

न्यायैकदेशिनस्त्वेवमाहुः—'यद्विषयसुखमस्ति तद्दुःखानुषङ्गाद्दुःखमेव । साधनसंपादनप्रयासेन सुखस्य तारतम्येन विनाशेन च दुःखोत्पत्तेर्दुःखानुषङ्गो द्रष्टव्यः । मोक्षदशायां तु नित्यसुखमात्मगुणभूतं ज्ञानेनाऽऽत्मगुणेन विषयी क्रियते । अतो मोक्षः पुरुषार्थः' इति । त एते वैशेषिकादिपक्षाः पुरुषबुद्धिभिरुत्प्रेक्षिताः । श्रुतिस्त्वात्मस्वरूपभूतस्य नित्यानन्दस्य स्वतन्त्रद्रव्यस्य लेशो विषयानन्द इत्याचष्टे—" एषोऽस्य परम आनन्दः । एतस्यैवाऽऽनन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति " इति । एतमेवार्थं कश्चिद्योगी स्वकीयं विवेकं प्रकटयन्नुदाजहार—

" आनन्ददुग्धोदधिमध्यवर्ती कणांस्तदीयान्विषयानलोत्थान् ।
आस्वादयन्कालमियन्तमेवं वृथाऽप्यनैषं हि विमूढचेताः " ॥ इति ।

सोऽयमानन्दलेशो द्विविधः । प्रतिबिम्बोऽवच्छिन्नश्चेति । प्रतिबिम्बपक्षः पूर्वाचार्यैरेवमुदाहृतः—

" अथात्र विषयानन्दो ब्रह्मानन्दांशरूपभाक् ।
निरूप्यते द्वारभूतस्तदंशत्वं श्रुतिर्जगौ ॥
एषोऽस्य परमानन्दो योऽखण्डैकरसात्मकः ।
अन्यानि भूतान्येतस्य मात्रामेवोपभुञ्जते ॥
शान्ता घोरास्तथा मूढा मनसो वृत्तयस्त्रिधा ।
वैराग्यं क्षान्तिरौदार्यमित्याद्याः शान्तवृत्तयः ॥
तृष्णा स्नेहो रागलोभावित्याद्या घोरवृत्तयः ।
संमोहो भयमित्याद्याः कथिता मूढवृत्तयः ॥
वृत्तिष्वेतासु सर्वासु ब्रह्मणश्चित्स्वभावता ।
प्रतिबिम्बति शान्तासु सुखं च प्रतिबिम्बति ॥
रूपं रूपं बभूवासौ प्रतिरूप इति श्रुतिः ।
उपमा सूर्यकादीति सूत्रयामास सूत्रकृत् ॥

१ घ. 'तिगु' । २ ख. ग. 'रमान' ।

एक एव तु भूतात्मा भूते भूते व्यवस्थितः ।
एकधा बहुधा चैव दृश्यते जलचन्द्रवत् ॥
जलप्रविष्टश्चन्द्रोऽयमस्पष्टः कलुषे जले ।
विस्पष्टो निर्मले तद्वद्द्वेधा ब्रह्मापि वृत्तिषु ॥
घोरमूढासु मालिन्यात्सुखांशोऽत्र तिरोहितः ।
ईषन्नैर्मल्यतस्तत्र चिदंशः प्रतिबिम्बति ॥
यथाऽतिनिर्मले नीरे वह्नेरौष्ण्यस्य संक्रमः ।
न प्रकाशस्य तद्वत्स्याच्चिन्मात्रोद्भूतिरत्र हि ॥
काष्ठे त्वौष्ण्यप्रकाशौ द्वावुद्भवं गच्छतो यथा ।
शान्तासु सुखचैतन्ये तथैवोद्भूतिमाप्नुते " ॥ इति ।

प्रतिबिम्बपक्ष इत्थमुदीरितः । अथावच्छिन्नपक्ष उच्यते । देहेन्द्रियाद्युपाधौ स्वयमेव भासमानस्य जीवात्मनः स्वरूपभूतो य आनन्दः सोऽयमवच्छिन्नोऽतिशयेन प्रीतिविषयत्वात् । आत्मन आनन्दरूपत्वं तद्विषयत्वं च **वाजसनेयिन** आमनन्ति—"तदेतत्प्रेयः पुत्रात्प्रेयोऽन्यस्मात्सर्वस्मादन्तरतरं यदयमात्मा" इति । अयमहंप्रत्ययेनानुभूयमानो देहेन्द्रियादिसाक्ष्यात्मेति यदस्ति तदेतदतिशयेनाभ्यन्तरं स्वरूपं तदेव वित्तपुत्रादिभ्यस्तारतम्येन प्रत्यासन्नेभ्योऽतिशयेन प्रियम् ।

तच्च तारतम्यं **वार्तिककारो** दर्शयति—

" वित्तात्पुत्रः प्रियः पुत्रात्पिण्डः पिण्डात्तथेन्द्रियम् ।
इन्द्रियाच्च प्रियः प्राणः प्राणादात्मा परः प्रियः " ॥ इति ।

आत्मव्यतिरिक्तेषु वित्तादिष्वात्मशेषत्वोपाधिना प्रीतिः । आत्मनि तु निरुपाधिकप्रीतित्वेन तस्याः प्रीतेः परत्वम् । एतच्च सर्वं **मैत्रेयीब्राह्मणे**—" न वा अरे पत्युः कामाय पतिः प्रियो भवत्यात्मनस्तु कामाय पतिः प्रियो भवति " इत्यादिभिर्बहुभिरुदाहरणैः प्रपञ्चितम् ।

तानि चोदाहरणानि कैश्चिदेवं संगृहीतानि—

" पतिजायापुत्रवित्तपशुब्राह्मणभूमिपाः ।
लोका देवा वेदभूते सर्वं चाऽऽत्मार्थतः प्रियम् " ॥ इति ।

मुख्यप्रीतिविषयत्वादात्मा मुख्यानन्दस्वरूपभूतः । एकैकदेहमात्रवर्तित्वादवच्छिन्नः । स च स्वाभाविकानन्दत्वाद्बिम्बरूपः । तदीयः प्रतिबिम्बोऽनुकूलवित्तपुत्रादिगोचरासु

१ ख. जलं प्र° । घ. जले प्र° । २ ख. °मः । प्रकाशयति त° । ३ घ. °रं रू° । ४ क. ख. ङ. तत एव । ५ क. ङ. °देव सं° । ६ क. ख. ग. ङ. °तिर्जाया° । ७ घ. °णबाहुजाः । लो° । ८ घ. °का वेशा देवभू° । ९ क. ङ. °र्वं वाऽऽत्मा° । १० ग. घ. °म्बभूतः । त° ।

शान्तवृत्तिष्ववभासते। तस्य प्रतिबिम्बस्य जलदर्पणादिप्रतिबिम्बवन्मिथ्यात्वादवच्छिन्नस्य वस्तुत्वेऽप्यवच्छेददोषोपेतत्वान्न तयोर्मुख्यानन्दत्वम्। यस्त्ववच्छेदरहितो ब्रह्मस्वरूपभूत आनन्दः स मुख्यः। तथा च च्छन्दोगा नारदसनत्कुमारसंवादे समामनन्ति—"सुखं त्वेव विजिज्ञासितव्यमिति सुखं भगवो विजिज्ञास इति। यो वै भूमा तत्सुखं नाल्पे सुखमस्ति। भूमैव सुखं भूमा त्वेव विजिज्ञासितव्य इति भूमानं भगवो विजिज्ञास इति। यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा। अथ यत्रान्यत्पश्यत्यन्यच्छृणोत्यन्यद्विजानाति तदल्पम्। यो वै भूमा तदमृतमथ यदल्पं तन्मर्त्यम्" इति। अस्यायमर्थः। शोकस्य पारं तारयेत्येवं नारदेन प्रार्थितः सनत्कुमारः शोकतरणाय सुखरूपमेव त्वया विचारयितव्यमित्युवाच। तद्विचारमङ्गीकृतवते नारदाय भूमपदार्थं सुखत्वेनोपदिदेश। बहोर्भावो भूमा। यथा प्रकरणोपपदयोः संकोचहेत्वोरसत्त्वेन निरतिशयबृहत्त्ववाची ब्रह्मशब्द इति पूर्वत्रोक्तम्, एवमत्रापि निरतिशयबाहुल्यवाची भूमशब्दः। लोके हि धनाल्पत्वे सुखं न दृष्टम्। किंतु धनबाहुल्य एव सुखं दृष्टम्। तस्मात्सुखात्मको भूमैव विचारणीय इत्युक्त्वा तद्विचाराभिमुखाय भूमलक्षणं यत्र नान्यदित्यादिनोपदिदेश। लोकव्यवहारे हि कश्चिद्द्रष्टा स्वस्मादन्यद्रूपं चक्षुषा पश्यति। सेयं द्रष्टृदृश्यदर्शनरूपा काचित्त्रिपुटी। तथा श्रोतृश्रोतव्यश्रवणविज्ञातृविज्ञातव्यविज्ञानादयस्त्रिपुट्यो यस्मिन्पदार्थे न सन्ति स पदार्थो भूमा। यस्मिंस्तु मायारूपे त्रिपुट्यो विद्यन्ते तन्मायारूपमल्पम्। तयोर्मध्ये भूमा नाशरहितः। अल्पं तु विनश्वरम्। तस्मिन्नल्पे द्वैतरूपे दुःखनिमित्तानां संभवात्तदल्पं दुःखात्मकम्। भूम्नि त्वद्वैते तदभावात्सुखात्मको भूमेति। सोऽयं भूमा त्रिपुटीरहितयोः सुषुप्तिसमाध्योः सुखात्मकोऽनुभूयते। जागरणव्युत्थानयोस्तु त्रिपुटीयुक्तयोर्लोकव्यवहाररूपोऽल्पाख्यः पदार्थो मूर्खेण तत्त्वविदा च दुःखात्मकोऽनुभूयते। अतो दुःखमिश्रत्वादवच्छिन्नो जीवात्मस्वरूपभूत आनन्दस्तत्प्रतिबिम्बरूपो वृत्त्यानन्दश्च न मुख्यः। किंतु भूमैव मुख्यानन्द इति सिद्धम्।

**स वा एष पुरुषविध एव। तस्य पुरुषविधताम्। अन्वयं पुरुषविधः। तस्य प्रियमेव शिरः। मोदो दक्षिणः पक्षः। प्रमोद उत्तरः पक्षः। आनन्द आत्मा। ब्रह्म पुच्छं प्रतिष्ठा।**

एतस्याऽऽनन्दस्य विकारे प्रियमोदादिरूप आनन्दमये स्वात्मत्वबुद्धिदार्ढ्यार्थमुपानीयं स्वरूपं दर्शयति—**स वा इत्यादिना**। य आनन्दमयो विज्ञानमयादभ्यन्तरः

१ घ. यस्मिन्माया°। २ घ. °दा चानुभू°।

स एवैषोऽहं सुखी भोक्तेत्येवमनुभूयमानो विज्ञानमयस्य शिरःपक्षादिपुरुषाकारमनु स्वयमपि पुरुषाकार एव प्रियमोदप्रमोदाः सात्त्विकवृत्तिप्रतिबिम्बिता आनन्दाः। तत्राभीष्टपुत्रादिदर्शनजन्यं प्रियम्। तल्लाभजन्यो मोदः। तत्कृतोपकारजन्यः प्रमोदः। यथोक्तवृत्त्युपादानभूताज्ञाने प्रतिबिम्बित आनन्दः। यद्वा वृत्तिप्रतिबिम्बानां प्रतियोगिजीवात्मस्वरूपभूतोऽवच्छिन्नो बिम्बस्थानीयः स आनन्दः। अनवच्छिन्नो मुख्य आनन्दो ब्रह्म तदेवेरेतरेषां प्रतिष्ठाऽऽधारः। अवच्छिन्नस्य प्रतिबिम्बानां च तदधीनत्वात्। यद्यपि प्रियमोदप्रमोदा मनसः करणरूपस्य वृत्तिविशेषतया कर्तृरूपाद्विज्ञानमयाद्बहिर्भूतास्तथाऽप्यान्तरस्यावच्छिन्नजीवानन्दस्यानवच्छिन्नब्रह्मानन्दस्य वा प्रतिबिम्बं धारयन्तीत्यान्तरत्वमभिप्रेत्य विज्ञानमयादभ्यन्तर आत्माऽऽनन्दमय इत्युक्तम्। तमेतमानन्दमयमात्मानमुपासीनो यदा भावनया साक्षात्करोति तदा पुच्छत्वेनोपचरिते ब्रह्मण्यप्यैकाग्र्यं प्रतिपन्ना मनोवृत्तिः प्रतिबिम्बाभावाद्ब्रह्मतत्त्वं साक्षात्करोत्येव "दृश्यते त्वग्र्यया बुद्ध्या" इति श्रुतेः। यथा मणिप्रभायां मणित्वभ्रान्त्या प्रवर्तमानस्यार्थान्मणितत्त्वसाक्षात्कारस्तद्वत्।

अयमेवार्थात्सिद्धो ब्रह्मतत्त्वसाक्षात्कार उपास्तिफलमित्यभिप्रेत्य श्रुतिः फलान्तरमनभिधाय केवलं ब्रह्म पुच्छं प्रतिष्ठेत्येवं सर्वजगदाधारभूतब्रह्मतत्त्वोपदेशे पर्यवसिता ततोऽस्मिन्नानन्दमयकोशे प्रधानभूतस्य ब्रह्मणः प्रतिपादकं श्लोकमुदाहरति—

तदप्येष श्लोको भवति।

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यकेऽष्टमप्रपाठके पञ्चमोऽनुवाकः॥ ५॥

अथाष्टमे षष्ठोऽनुवाकः।

असन्नेव स भवति। असद्ब्रह्मेति वेद चेत्। अस्ति ब्रह्मेति चेद्वेद। सन्तमेनं ततो विदुरिति, इति।

लोके हि जलाहरणचाक्षुषदर्शनादिव्यवहारविषयं घटमुद्दिश्य प्राणिनः सर्वेऽप्ययं घटोऽस्तीति ब्रुवते। तद्विपर्यये तु घटो नास्तीति च वदन्ति। अतो व्यवहारवासनायुक्तः पुमानव्यवहार्यस्य ब्रह्मणोऽसत्त्वं मन्यते। अन्यस्तु विवेकी व्यवहार्याणां भूतानां भौतिकानां च श्रुतियुक्त्यनुभूतिभिर्मायामयत्वनिश्चयादसत्त्वं प्रतिपद्यते व्यवहारातीतस्य ब्रह्मणः श्रुत्यादिभिः सत्यत्वनिश्चयात्सत्त्वमेव प्रत्येति। तत्र ब्रह्मणोऽसत्त्वं यो वेद स पुमानसन्नेव स्यात्। अन्नमयादिकोशानामनात्मत्वस्य प्रतिपादितत्वात्तदतिरिक्तस्य ब्रह्मणः स्वयमनङ्गीकृतत्वाच्च। यस्तु पञ्चकोशातीतं ब्रह्म

१ घ. °णभूतस्य। २ ख. ग. °ह्मत्वं सा°। ३ घ. °नप्यव्यव°।

स्तीति वेद तस्य पुंसस्तदेव ब्रह्म स्वरूपम् । ततो ब्रह्मास्तित्ववेदनादेनं विवेकिनं सन्तं विद्यमानं सात्मकं जानन्ति शास्त्रपारं गताः । अथवा योऽसद्ब्रह्मेति वेद सोऽसन्नसाधुरेव भवति । वर्णाश्रमादिव्यवस्थालक्षणस्य सर्वस्य सन्मार्गस्य ब्रह्मप्रतिपत्त्यर्थतया ब्रह्मापलापेन सर्वसन्मार्गदूषको नास्तिको भवति । अस्तित्ववादिनमुक्तविपर्ययेण सन्तं सर्वसन्मार्गस्थापकमाहुः । एतदेवाभिप्रेत्य **कठा** आमनन्ति—" अस्तीत्येवोपलब्धव्यः " इति ।

अथोपासकस्याऽऽनन्दमये बुभुत्सोश्च[1] ब्रह्मतत्त्वे त्वात्मबुद्धिं द्रढयितुमाह—

**तस्यैष एव शारीर आत्मा । यः पूर्वस्य,** इति ।

य आनन्दमयोऽस्ति स **एष एव तस्य पूर्वस्य** विज्ञानमयस्य **शारीरः** स्वामी । विज्ञानमयः शरीरम् । आनन्दमय आत्मेत्युपासकं प्रति योजनीयम् । बुभुत्सुं प्रति त्वेवं योजयेत् । यो ब्रह्म पुच्छमित्युक्तः पदार्थ एष एव तस्य पूर्वस्य प्रियमोदादिचतुष्टयस्य **शारीर आत्मा** । प्रियादिकं शरीरं तस्मिञ्शरीरेऽवस्थितं ब्रह्मैवाऽऽत्मेति । एतदेवाभिप्रेत्य **वार्तिककारा** आहुः—

" मिथ्यात्मनां हि सर्वेषां सत्यादिगुणलक्षणम् ।
व्याविद्धाशेषसंसारमात्मानं तं प्रचक्षते ॥
न ह्यात्मवान्भवेत्सर्पो दण्डाद्यध्यासरूपिणा ।
आत्मना ह्येष सत्येन सर्पो रज्ज्वात्मनाऽऽत्मवान् " ॥ इति ।

अथ मीमांसा । तत्रैकदेशिनां विचारः **प्रथमाध्यायस्य प्रथमपादे*** दर्शितः—

"संसारी ब्रह्म वाऽऽनन्दमयः संसार्ययं भवेत् ।
विकारार्थमयट्शब्दात्प्रियाद्यवयवोक्तितः ॥
अभ्यासोपक्रमादिभ्यो ब्रह्माऽऽनन्दमयो भवेत् ।
प्राचुर्यार्थो मयट्शब्दः प्रियाद्याः स्युरुपाधिगाः " ॥ इति ।

तैत्तिरीयके देहप्राणमनोबुद्ध्यानन्दरूपा अन्नमयप्राणमयमनोमयविज्ञानमयानन्दमयसंज्ञाः[2] पञ्च पदार्थाः क्रमेणैकैकस्मादान्तराः पठिताः । तत्र सर्वान्तर आनन्दमयः संसारी परमात्मा वेति संदेहे[3] । संसारीति तावत्प्राप्तम् । कुतः । आनन्दस्य विकार आनन्दमय इति व्युत्पत्तेः संसारिणि संभवात् । अविक्रिये परमात्मन्यसौ न संभवति । किंच—" तस्य प्रियमेव शिरः । मोदो दक्षिणः पक्षः । प्रमोद उत्तरः पक्षः ।

* आनन्दमयोऽभ्यासात्—ब्र० सू० अ० १ पा० १ अ० ६ । सू० १२ ।

१. °त्सोर्वाऽऽत्मतत्त्वे त्वात्मत्वबु° । २ ख. °ह्ः । आनन्दमय. सं° । ३ क. ख. ग. ङ. °ति प्राप्त° ।

आनन्द आत्मा । ब्रह्म पुच्छं प्रतिष्ठा " इत्यानन्दमयस्य पञ्चावयवा उच्यन्ते । अपेक्षितविषयदर्शनजन्यं सुखं प्रियम् । तल्लाभजन्यो मोदः । तद्भोगजन्यः प्रमोदः । सुषुप्त्यादौ भासमानमज्ञानोपहितं सुखसामान्यमानन्दः । निरुपाधिकं सुखं ब्रह्म । प्रियादीनां पञ्चावयवानां शिरआदिरूपत्वमुपास्तिप्रतिपत्तिसौकर्याय कल्प्यते । कल्पितस्याऽऽनन्दमयस्य शिरः पक्षौ चेत्यवयवत्रयम् । आत्मशब्देन मध्यशरीरं चतुर्थावयवत्वेनोच्यते । पुच्छमपरभागः । प्रतिष्ठाऽऽधारः पञ्चमोऽवयवः । न च निरंशस्य परमात्मनोऽवयवा युक्ताः । तस्मात्संसार्येवाऽऽनन्दमय इत्येवं प्राप्ते ब्रूमः—आनन्दमयः परमात्मा । कुतः । अभ्यासात् । " सैषाऽऽनन्दस्य मीमाꣳसा भवति । एतमानन्दमयमात्मानमुपसंक्रामति " इत्यादिनाऽऽनन्दमयोऽभ्यस्यते । अभ्यासश्च तात्पर्यलिङ्गम् । तात्पर्यं च वेदान्तानां ब्रह्मण्येवेत्यवोचाम । किंच—"सत्यं ज्ञानमनन्तं ब्रह्म " इति ब्रह्मोपक्रमात् " इदं सर्वमसृजत " इति सर्वजगत्स्रष्टृत्वादिभ्यश्चाऽऽनन्दमयो ब्रह्म । न च ब्रह्मणि मयट्शब्दानुपपत्तिः । प्राचुर्यार्थसंभवात् । प्रियाद्यवयवा अपि विषयदर्शनाद्युपाधिकृता भविष्यन्ति । तस्मात्परमात्माऽऽनन्दमय इत्येकदेशिनां मतम् ।

इदानीं स्वमतानुसारेणाधिकरणमुच्यते—

"अन्याङ्गं स्वप्रधानं वा ब्रह्म पुच्छमिति श्रुतम् ।
स्यादानन्दमयस्याङ्गं पुच्छेऽङ्गत्वप्रसिद्धितः ॥
लाङ्गूलासंभवादत्र पुच्छेनाऽऽधारलक्षणा[1] ।
आनन्दमयजीवोऽस्मिन्नाश्रितोऽतः प्रधानता" ॥ इति ।

" ब्रह्म पुच्छं प्रतिष्ठा " इति यच्छ्रुतं ब्रह्म तत्किमानन्दमयस्याङ्गत्वेन निर्दिश्यत उत स्वयं[2] प्राधान्येन प्रतिपाद्यत इति संशयः । आनन्दमयस्यावयवत्वेनेति तावत्प्राप्तम् । लोके पुच्छशब्दस्यावयववाचित्वेन प्रसिद्धत्वादिति प्राप्त उच्यते— न पुच्छशब्दोऽवयववाची । किंतु लाङ्गूलवाची । न चाऽऽनन्दमयस्य लाङ्गूलं संभवति । लाङ्गूलस्य गवादिलक्षणान्नमयावयवत्वात् । अतः पुच्छशब्दस्य मुख्यार्थासंभवे सति योग्यतावशादत्राऽऽधारो[3] लक्ष्यते । ब्रह्माऽऽनन्दमयस्य जीवस्याऽऽधारस्तत्कल्पनाधिष्ठानत्वात् । न चाऽऽनन्दमयः परमात्मा । प्राचुर्यार्थस्वीकारेऽप्यल्पदुःखसद्भावप्रतीतेः । तस्माज्जीवाधारत्वाद्ब्रह्म प्राधान्येन प्रतिपाद्यते । तथा[4]—" असन्नेव स भवति । असद्ब्रह्मेति वेद चेत् " इत्यादिब्रह्माभ्यासः " ब्रह्मविदाप्नोति " इति ब्रह्मोपक्रमश्चानुकूलो भवति । अतः कठवल्ल्युक्तपुरुषन्यायेन ब्रह्मैव ज्ञेयम् । न त्वाकाशादिसृष्टिरन्नमयादिकोशाश्च ।

---

१ क. ख. ङ. °क्षणम् । आ° । २ घ. स्वप्रा° । ३ घ. °शादाधा° । ४ ख. °था चास° ।

स च न्यायस्तृतीयाध्यायस्य *तृतीयपादेऽभिहितः—

" सर्वा परम्पराऽक्षादेर्ज्ञेया पुरुष एव वा ।
ज्ञेया सर्वा श्रुतत्वेन वाक्यानि स्युर्बहूनि हि ॥
पुमर्थः पुरुषज्ञानं तत्र यत्नः श्रुतेर्महान् ।
तद्बोधाय श्रुतोऽक्षादिर्वैद्य एकः पुमानतः ॥

कठवल्लीषु पठ्यते—" इन्द्रियेभ्यः परा ह्यर्था ह्यर्थेभ्यश्च परं मनः । मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान्परः । महतः परमव्यक्तमव्यक्तात्पुरुषः परः । पुरुषान्न परं किंचित्सा काष्ठा सा परा गतिः " इति । अस्यायमर्थः—मनसा विषयानभिलष्य पश्चादिन्द्रियैर्बाह्यान्विषयानाप्नोति । तत्र बाह्यविषयेभ्य इन्द्रियाणामान्तरत्वात्परत्वं प्रसिद्धम् । इन्द्रियेभ्यश्चाभिलष्यमाणत्वदशापन्ना अर्था आन्तरास्तेभ्योऽप्यभिलाषात्मिका मनोवृत्तिरान्तरा । वृत्तेरपि वृत्तिमती बुद्धिरभ्यन्तरा । बुद्धेरपि बुद्ध्युपादानभूतो महच्छब्दवाच्यो हिरण्यगर्भरूप आत्माऽऽन्तरः । महतोऽपि तदुपादानभूतमव्यक्ताख्यं मूलाज्ञानमान्तरम् । अव्यक्तादपि तदधिष्ठानभूतश्चिद्रूपः पुरुषोऽभ्यन्तरः । पुरुषादभ्यन्तरं न किंचिदस्ति । पुरुष एवाभ्यन्तरतारतम्यस्य विश्रान्तिभूमिः । पुरुषार्थकामैः परमो गन्तव्यः प्रदेशश्चेति । तत्र यथा पुरुषः श्रुत्या तात्पर्येण प्रतिपाद्य एवमिन्द्रियादिपरम्पराऽपि प्रतिपाद्यैव । अन्यथा तदुपन्यासवैयर्थ्यात् । बहूनां प्रतिपादने वाक्यभेदः स्यादिति चेद्बाढम् । सन्त्येव तानि बहूनि वाक्यानि । एकवाक्यत्वस्यासंभवादिति प्राप्ते ब्रूमः—पुरुषज्ञानस्याशेषसंसारनिदानभूताज्ञाननिवर्तकत्वात्पुरुष एव ज्ञेयतया प्रतिपाद्यः । अत एव वाक्यशेषे पुरुषज्ञानायैव महता प्रयत्नेन योग उपदिष्टः[1] ।

" एष सर्वेषु भूतेषु गूढोत्मा न प्रकाशते ।
दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः " ॥ इति ।

अयमर्थः—सर्वाभ्यन्तरत्वेन गूढ आत्मा बहिर्मुखानां( णां ) न प्रकाशते । अन्तर्मुखानां( णां ) तु प्रकाशते । अन्तर्मुखा ये सूक्ष्मतत्त्वदर्शनशीलास्तैर्योगाभ्यासेनैकाग्र्यमापन्नया बुद्ध्या सूक्ष्मवस्तुविषयया द्रष्टुं शक्यत इति । न च पुरुषस्यैव प्रतिपाद्यत्वे परम्परोपदेशवैयर्थ्यम् । बहिर्मुखस्य चित्तस्य क्रमेण पुरुषप्रवेशे परम्परायाः साधनत्वात् । तस्मात्पुरुष एव ज्ञातव्यः " ।

अनेन न्यायेन ब्रह्मण आनन्त्यमुपपादयितुमाकाशादिसृष्टिरुक्ता । गुहाहितत्वमुपपादयितुं पञ्चान्नमयादिकोशा उपन्यस्ताः । ज्ञातव्यं तु ब्रह्मैव । तच्च सत्यज्ञानादिलक्षणं गुहाहितत्वेन प्रत्यगात्मस्वरूपं चेति स्थितम् ।

* आध्यानाय प्रयोजनाभावात्—ब्र० सू० अ० ३ पा० ३ अ० ७ सू० १४ ।

१ क. ख. ङ. °लक्ष्य प° । २ क. ङ. उपादिष्टः ।

इत्थं ब्रह्मोपदेशरूपं श्रवणप्रकरणं परिसमाप्य बहिर्मुखाना( णा )मुपपादनरूपम् मननप्रकरणस्याऽऽरम्भे शिष्यप्रश्नान्प्रतिजानीते—

**अथातोऽनुप्रश्नाः,** इति ।

उपदेशानन्तरमुपदिष्टेऽर्थे यस्मात्कारणाच्छिष्यस्य बुद्धिदोषेण **बहवः** संदेहाः प्राप्ताः भवन्त्यतः कारणादुपदिष्टानुरूपाः **प्रश्नाः** क्रियन्ते । अत्राथशब्देन विवक्षितं श्रवणमननयोः पूर्वापरभावमन्यत्र विस्पष्टमेव **श्रुतिराह**—“ श्रोतव्यो मन्तव्यः ” इति । तयोः स्वरूपमेवं **स्मर्यते**—“ श्रोतव्यः श्रुतिवाक्येभ्यो मन्तव्यश्चोपपत्तिभिः ” इति तयोः प्रयोजनं विभज्याऽऽ**म्नायते**—“ भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ” इत्युपदेशेन ब्रह्मतत्त्वे ज्ञाते सति प्रत्यगात्मनोऽन्तःकरणेन सह तादात्म्यभ्रमस्वरूपं ग्रन्थिर्निवर्तते । उपपत्तिपर्यालोचनरूपेण मननेन संशयाश्छिद्यन्ते । तस्मादत्र च्छेत्तव्यसंशयोपन्यासरूपाः प्रश्नाः क्रियन्त इत्यर्थः ।

प्रतिज्ञातान्प्रश्नानुपन्यस्यति —

**उताविद्वानमुं लोकं प्रेत्य । कश्चन गच्छती३ । आहो विद्वानमुं लोकं प्रेत्य । कश्चित्समश्नुता३ उ,** इति ।

यदुक्तम्—“ब्रह्मविदाप्नोति परम्” इति तेन बुद्धिस्थेन तत्प्रतियोगिन्यविदुषि द्वौ प्रश्नौ क्रियेते । **उत**शब्दः प्रश्नद्योतकः किमित्येतस्मिन्नर्थे वर्तते । **चन**शब्दोऽपिशब्दार्थवाची । **अमुं लोक**मिति पुरोवर्ती परमात्मोच्यते । किमविद्वान्यः कोऽपि देहात्प्रेत्य परमात्मानं गच्छतीति श्रौत **आद्यः** । अथवा न गच्छतीत्यर्थसिद्धो द्वितीयः प्रश्नः । तथा विद्वद्विषयावपि द्वौ प्रश्नावित्येवं चत्वारः **प्रश्नाः** । सर्वजगत्कारणस्य जीवरूपेण देहेषु प्रविष्टस्य ब्रह्मणो विद्वदविद्वत्साधारणत्वेन विदुषस्तत्प्राप्तावविद्वानपि प्राप्नुयात् । अविदुषोऽप्राप्तौ विद्वानपि न प्राप्नुयादिति चतुर्णां प्रश्नानामभिप्रायः । यद्वा श्रूयमाणौ विद्वदविद्वद्विषयौ द्वावेव प्रश्नौ । पूर्ववाक्यसूचितेन प्रश्नेन सह समुच्चितत्वाद्बहुवचननिर्देशः ।

पूर्ववाक्ये हि—“असद्ब्रह्मेति वेद चेदस्ति ब्रह्मेति चेद्वेद ” इतिकोटिद्वयोपन्यासेन सूचितो ब्रह्मसद्भावविषयः प्रथमः प्रश्नः । एतस्य प्रश्नस्योत्तरत्वेन गुरुर्ब्रह्मणः सद्भावं साधयितुं सृष्टिमुपन्यस्यति —

**सोऽकामयत । बहु स्यां प्रजायेयेति । स तपोऽतप्यत । स तपस्तप्त्वा । इद५ सर्वमसृजत,** इति ।

---

१ घ. °विद्यते । २ क. घ. ङ. °षयेऽपि । ख. °षये द्वौ ।

ब्रह्म पुच्छं प्रतिष्ठेति निर्दिष्टो योऽयं ब्रह्मपदार्थोऽन्नमयादीनामानन्दमायान्तानां पञ्चानां कोशानां शारीर आत्मेत्युक्तः सोऽयमात्मा सृष्टेः पूर्वमेक एवाद्वितीयः सन्स्वशक्तिसंयोगात्कामितवान् । आत्मन्याश्रिता मायाशक्तिः कामनाकारेण विक्रियामापद्यत इत्यर्थः । न ह्यविक्रियस्य चिदेकरसस्य मायामन्तरेण कामः संभवति । *यद्यप्यस्तीश्वरस्य मायाकल्पितः कामस्त+थाऽपि कामित्वेन जीववन्नित्यतृप्तो न स्यादिति चेन्न । लीलाश्वासादिदृष्टान्तेन मीमांसायां परिहृतत्वात् । कामितार्थस्य क्वचिदपि विघाताभावादपि जीववैषम्यम् । अत एव—"सत्यकामः सत्यसंकल्पः" इत्यन्यत्राऽऽम्नातम् । कामनाप्रकार एव निर्दिश्यते—बहु स्यां प्रभूतं भवेयम् । नन्वाकाशस्य घटादिपदार्थान्तरोपाधिकृतं बहुवचनं दृष्टमद्वितीयस्य तु कथं बहुतेत्याशङ्क्योच्यते—प्रजायेय प्रकर्षेण पूर्वावस्थितात्स्वरूपादाधिक्येनोत्पद्येय । ननु विद्यमानः पिता पुत्रमुत्पादयति न तु स्वयमुत्पद्यते । तथा सत्यत्रापि जगदुत्पादकस्य ब्रह्मणः स्वोत्पत्त्यभावात्प्रजायेयेत्युक्तिरनुपपन्नेति चेन्न । उत्पद्यमानयोर्नामरूपयोर्ब्रह्मणोऽत्यन्तभेदाभावात् । यथा समुद्रादाविर्भवन्तस्तरङ्गादयो नात्यन्तं[1] भिन्नास्तथा ब्रह्मशक्तौ मायायामवस्थिते पूर्वमनभिव्यक्ते नामरूपे पश्चादभिव्यज्यमाने सती ब्रह्मणः सद्रूपतामपरित्यज्यैव स्वयमपि सद्रूपत्वेन भासेते । एतदेवाभिप्रेत्य वाजसनेयिन आमनन्ति—"तद्धेदं तर्ह्यव्याकृतमासीत्तन्नामरूपाभ्यामेव व्याक्रियत" इति । तस्माद्ब्रह्मण एव मायया जगद्रूपेण प्रतिभासात्प्रजायेयेत्युक्तिरुपपद्यते । स परमात्मोक्तप्रकारेण कामयमानस्तपोऽतप्यत । तपःशब्देन ज्ञानमुच्यते । "यस्य ज्ञानमयं तपः" इति श्रुत्यन्तरात् । सृज्यमानजगद्रचनालोचनमकरोदित्यर्थः । न खलु परमेश्वरस्य कृच्छ्रचान्द्रायणादिरूपेण तपसा किंचित्प्रयोजनमस्ति । स परमेश्वरः स्रष्टव्यवस्तुपर्यालोचनं कृत्वा प्राणिकर्मनिमित्तानुरूपमिदं सर्वं जगद्देशतः कालतो नाम्ना रूपेण च सर्वप्राणिभिः सर्वावस्थैरनुभूयमानं सृष्टवान् । अत्र कामयितृत्वपर्यालोचकत्वजगत्स्रष्टृत्वरूपैर्हेतुभिः[2] परमात्मनः सद्भावः प्रतिपाद्यते । असद्वादी तावदेवं मन्यते—यद्यदस्ति तत्सर्वं नामरूपात्मकमित्याकाशादिभूतेषु देवतिर्यगादिभौतिकदेहादिषु चेत्यादिव्याप्तिर्दृष्टा । परमात्मा तु नामरूपाभ्यामन्यः "आकाशो वै नाम नामरूपयोर्निर्वहिता ते यदन्तरा तद्ब्रह्म" इति श्रुत्यन्तरात् । यस्तु परमात्मा ब्रह्मेत्यादिव्यवहारः सोऽपि तत्सद्भावं साधयितुं न प्रभवति । नरविषाणादिवत्तस्य विकल्पमात्रत्वात् । "शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः" इति हि पातञ्जलं सूत्रम् । ततो नामरूपे ब्रह्मणो व्यावर्तमाने स्वव्याप्यं[3] सद्भावमपि व्यावर्तयतः । एवं च सति

* यदीत्यर्थः । + तर्हीत्यर्थः ।

१ ग. 'त्यन्तभि' । २ ख. 'ष्टत्वादिरू' । ३ ग. 'व्याप्तं स' ।

" असद्वा इदमग्र आसीत् " " यतो वाचो निवर्तन्ते " " अथात आदेशो नेति नेति " " अस्थूलमनण्वह्रस्वम् " इत्याद्याः श्रुतयोऽनुगृहीता भविष्यन्ति। तस्मान्नास्ति ब्रह्मेति । तमेतमसद्वादिनं प्रति सद्भावः साध्यते । परमात्मा सद्रूपः कामयितृत्वात्स्वर्गादिकामयितृवत् । पर्यालोचकत्वाद्राजमन्त्रिवत् । स्रष्टृत्वात्कुम्भकारादिवत्। यत्तु नामरूपयोः सत्त्वं भवतोदाहृतं तदेवास्मदभिप्रेतं ब्रह्म । सद्रूपे ब्रह्मण्यधिष्ठाने मायया नामरूपयोः कल्पितत्वात् । असद्वा इत्यादेस्त्वर्थो वक्ष्यते ।

किंच ब्रह्म सद्रूपं प्रवेष्टृत्वाद्यथा गृहादौ प्रवेष्टा पुरुष इत्यभिप्रेत्य प्रवेशं दर्शयति—

**यदिदं किंच । तत्सृष्ट्वा । तदेवानुप्राविशत्, इति ।**

हिरण्यगर्भादिस्थावरान्तं शरीरजातं यत्किंचिदस्ति तत्सर्वं **सृष्ट्वा तदेव** सृष्टं शरीरजातं परमात्मा **प्राविशदि**त्यर्थः । अत्रेदं चिन्तनीयम् । यः परमात्मा स्रष्टाऽस्ति स किं तेनैव रूपेण प्राविशत्किंवा रूपान्तरेणेति । तत्र सृष्ट्वेति क्त्वाप्रत्ययेन सृष्टिप्रवेशयोः समानकर्तृकत्वावगमात्स्रष्टृरूपेणैव प्रवेश इति चेन्न । मृत्पिण्डवदुपादानस्य प्रवेशानुपपत्तेः । न खलु यो मृत्पिण्डो घटाकारेण परिणतः स एव घटमनुप्रविशति । तथा शरीराकारेण परिणतस्य स्रष्टुस्तेष्वेव शरीरेषु कथं प्रवेशो घटेत । ननु तर्हि रूपान्तरेण प्रवेशोऽस्तु । यथा मृत्पिण्डविकारे घटे पुनरन्या चूर्णरूपा मृत्प्रविशति । तथेश्वररूपेण प्रवेशाभावे जीवरूपेण प्रवेशः स्यात् । मैवम् । अद्वयस्य रूपद्वयाभावात् । तदङ्गीकारेऽपि प्रवेष्टव्यप्रदेशाभावात् । उपादानत्वेन सर्वकार्येषु पूर्वमेवानुगतोऽवतिष्ठते । तथासति परमात्मशून्यप्रदेशाभावेन कुत्रायं प्रविशेत् । अवस्थिते परमात्मन्येव प्रविशेदिति चेन्न । तदेवानुप्राविशदिति सृष्टे कार्ये प्रवेशश्रवणात् । सृष्टं शरीररूपं कार्यं पुनर्जीवलक्षणकार्यान्तराकारेण परिणमते। सोऽयं परिणामः प्रवेश इति चेन्न । कुम्भाकारपरिणामस्य पुनः शरीराकारपरिणामादर्शनात् । जलसूर्यकादिप्रतिबिम्बवत्प्रवेशः स्यादिति चेन्मैवम् । अपरिच्छिन्नत्वादमूर्तत्वाद्विप्रकृष्टदेशावस्थितस्य प्रतिबिम्बाधारस्याभावाच्च । परिच्छिन्नो मूर्तश्च सूर्यबिम्बो विप्रकृष्टदेशस्थे जलादौ प्रतिबिम्बितो भवति । ब्रह्म तु न परिच्छिन्नम् नापि मूर्तम् । न च ब्रह्मणो विप्रकृष्टदेशवर्ती कश्चिदुपाधिरस्ति । तस्मान्न केनापि प्रकारेण प्रवेश उपपादयितुं शक्यते । अत्रोच्यते । जगत्सृष्टिवदयं प्रवेश उपपादनीयः । अचिन्त्यरचनारूपं जगद्यथा परमेश्वरो मायाबलेन ससर्ज तथा मायाबलेनैव प्रविशतु । अथोच्येत । येयमाकाशादिका मायामयी सृष्टिर्न तां वस्तुत्वबुद्ध्या श्रुतिः प्रतिपादयति । किं तर्हि मृद्घटन्यायेन कार्यस्य कारणव्यतिरेकेणाभावं विवक्षित्वा ब्रह्मण आनन्त्यं पूर्वत्र प्रतिज्ञातमुपपादयितुं भ्रान्तिसिद्धा सृष्टिरनूद्यत इति

१ ध. ॰वेशानु॰ ।

तर्हि प्रतिज्ञातं गुहानिहितत्वं पञ्चकोशोपन्यासद्वारेण ब्रह्म पुच्छमित्युपपाद्य पुनरपि तदेव स्पष्टी कर्तुं भ्रान्तिसिद्धः प्रवेशोऽनूद्यताम् । यथा कश्चित्पुमान्गृहं निर्माय तत्र प्रविश्या-भ्यन्तरे स्थित उपलभ्यते, एवं ब्रह्माप्याकाशादिकार्यं सृष्ट्वा तस्यान्तः प्रविष्टमिव हृदय-पुण्डरीकेऽवस्थितायां बुद्धौ द्रष्टृ श्रोतृ विज्ञात्रित्येवं विशेषवदुपलभ्यते । सोऽयमस्य प्रवेश इत्युपचर्यते । वाजसनेयिभिरप्ययं प्रवेश आम्नायते—" स एष इह प्रविष्ट आनखा-ग्रेभ्यो यथा क्षुरः क्षुरधानेऽवहितः स्याद्विश्वंभरो वा विश्वंभरकुलाय: " इति ।

एतस्य वाक्यस्यार्थो वार्तिकसारे विस्पष्टमाख्यातः—

" तच्छब्देन परामृष्टः साक्ष्यव्याकृतभासकः ।
एतच्छब्देन कार्यस्थः प्रत्यक्ष उपदिश्यते ॥
अद्वितीयमधिष्ठानं कार्यस्थः सद्वयस्तयोः ।
स एष इत्यभेदोक्तिर्दुष्करेति न चोद्यताम् ॥
अज्ञातवस्तुतत्त्वस्य दुष्करं नास्ति किंचन ।
नीलीकृतं नभः पश्य चक्षुषा नीलवस्त्रवत् ॥
योग्यायोग्यव्यपेक्षेयं मानव्यवहृतौ भवेत् ।
कल्पनामात्रनिष्पत्तेर्नापेक्षाऽज्ञानभूमिषु ॥
इहेत्यनेन सूत्रादिस्थाणुपर्यन्तविग्रहाः ।
उच्यन्ते तेषु जीवोऽयं विस्पष्टमुपलभ्यते ॥
प्रविष्ट इति शब्देन चिदाभासतमोन्विता ।
जीवत्वेनोपलब्धिर्या चितः सैषाऽभिधीयते ॥
चिदाभासप्रवेशस्तु प्रत्यङ्मोहे स्वतो भवेत् ।
तत्कार्येष्वनुवृत्तः सन्नुपाधिश्चित्प्रवेशने ॥
जपाकुसुमरक्तत्वं स्फटिके कल्पितं यथा ।
चिदाभासप्रवेशोऽयं चित्यध्यारोप्यते तथा ॥
सूत्रादिस्थाणुपर्यन्तं जगत्सृष्ट्वाऽऽत्ममायया ।
स्वाभाविकस्वभावेन स एवं प्राविशत्परः ॥
आनखाग्रेभ्य इत्युक्त्वा मर्यादाऽस्य प्रवेशने ।
उष्णस्पर्शेन चैतन्यं नखाग्रावधि लक्ष्यते ॥

१ क. ख. ङ. °लक्ष्यते । २ घ. पश्येच्चक्षु° । ३ ख. °तयोश्चि° । ४ ग. °र्याऽन्विता ख. एव । ६ क. ख. ङ. °त्युक्त्वा म° । ७ क. ख. ङ. उक्ता स्प° । ८ घ. लभ्यते ।

सामान्येन विशेषाच्च चिद्देहं[1] व्याप्य वर्तते।
दृष्टान्ताभ्यां द्वयी वृत्तिर्द्विविधाऽऽभ्यामिहोच्यते ॥
दारु कृत्स्नमभिव्याप्य यथाऽग्निर्दारुणि स्थितः।
संव्याप्य देहमखिलं तद्वदात्मा व्यवस्थितः ॥
तस्थावसंव्याप्य यथा क्षुरपात्रं[2] क्षुरस्तथा।
श्रोत्रादिनाडीमध्यस्थस्तनुमव्याप्य संस्थितः ॥
क्षुरपात्रे स्थानभेदाद्विभिद्यन्ते यथा क्षुराः।
चैतन्यानि विभिद्यन्ते तथा नाडीविभेदतः ॥
प्राप्नोति वृत्ती द्वे जीवः स्वप्नजाग्रदवस्थयोः।
सामान्यवृत्तिमेवैकां सुषुप्ते प्रतिपद्यते ॥
सामान्यवृत्तिर्या साऽत्र जीवनायोपयुज्यते।
विशेषवृत्तयो देहे शब्दाद्यालोचनोद्यताः ॥
प्रवेशवाक्यं पदशस्तात्पर्याच्च स्फुटीकृतम्।
तदनुग्राहको न्याय इदानीं प्रविचार्यते ॥
किं देवदत्तगृहवत्प्रवेशोऽथोपलाहिवत्।
जलार्कबिम्बवत्किंवा यद्वा द्रव्यगुणादिवत् ॥
फलबीजवदाहोस्विन्नाऽऽद्यः सर्वगतत्वतः।
देवदत्तः परिच्छिन्नः सांशश्चाऽऽत्मा तु नो तथा ॥
अव्यावृत्राननुगतयाथात्म्यादात्मवस्तुनः।
परिच्छेदाद्यसंभाव्यं नेति नेतीतिवारणात् ॥
नातोऽनवच्छिन्नतनोर्निर्विभागात्मवस्तुनः।
पूर्वस्थानवियोगेन नूत्नस्थानान्तरागमः ॥
न द्वितीयोऽपरिणतेरश्मान्तं[3] सर्परूपतः।
भूतानि परिणम्यन्ते न त्वात्मा परिणामवान् ॥
न तृतीयोऽर्कजलयोरिव देहचिदात्मनोः।
न संयोगविभागौ स्तो येन तद्वत्प्रवेशनम् ॥
न चतुर्थोऽपारतन्त्र्याद्द्रव्यतन्त्रा गुणादयः।
न चाऽऽत्मा देहतन्त्रोऽयं सर्वेश्वर इति श्रुतेः ॥
न पञ्चमोऽविक्रियत्वाद्बीजं विक्रियया युतम्।
षड्भावविक्रियाहीन आत्मा शास्त्रेषु निश्चितः ॥

---

१ घ. चिद्देत्रं व्या°। २ ग. °पात्रे क्षु°। ३ घ. °रश्मान्तः स°।

आधाराधेयता सर्पशिलयोः फलबीजयोः ।
अंशांशितेति वैषम्यान्न तत्र पुनरुक्तता ॥
परिच्छिन्नो जीव एव देहेषु प्रविशत्यतः ।
न दोष इति चेन्मैवं स्रष्टुरेव प्रवेशनात् ॥
तत्सृष्ट्वाऽथ तदेवानुप्राविशत्स इति श्रुतेः ।
सष्टृप्रवेष्ट्रोरेकत्वं स्याद्भुक्त्वा व्रजतीतिवत् ।
अतः केनाप्युपायेन प्रवेशो घटते न हि ॥
इति प्राप्ते पूर्वपक्षे प्रवेश उपपाद्यते ।
अप्रविष्टस्वभावोऽयं दिग्देशाद्यनभिप्लुतेः ॥
कल्पितोऽस्य प्रवेशः स्याज्जलपात्रार्कबिम्बवत् ।
विभागाद्यंशवैषम्येऽप्यस्ति साम्यं विवक्षितम् ॥
उपाधिस्थोपलब्ध्यादिसाम्यं केन निवार्यते ।
उपाधावुपलब्धत्वमन्यथात्वेन भासनम् ॥
बहुत्वभानमित्येतद्दृष्टदार्ष्टान्तयोः समम् ।
तेजोधिकं रवेर्बिम्बमशक्यं द्रष्टुमञ्जसा ॥
तथाऽपि जलमध्ये तद्बिम्बं सम्यगवेक्ष्यते ।
स्वयंप्रकाश आत्मैवं नोपलभ्योऽनुपाधिकः ॥
जडदेहाद्युपाधौ तु विस्पष्टमुपलभ्यते ।
दर्पणाभिहता दृष्टिः पर्यावृत्य स्वमाननम् ॥
व्याप्नुवत्याभिमुख्येन व्यत्यस्तं दर्शयेन्मुखम् ।
देहाद्युपप्लुतैवं धीरात्मानं व्याप्नुवत्यसौ ॥
अविक्रियं विक्रियाभियुक्त इत्यवभासयेत् ।
एकोऽप्यनेकधा भाति तरणिः पात्रभेदतः ॥
एवं नानादेहभेदाद्भात्यात्मैकोऽप्यनेकधा ।
निर्धूताशेषनानात्वं तद्धेतुरविभागवान् ॥
अनन्यसाक्षिकोऽपीद्दक्स्यात्प्रवेशभ्रमादयम्[3] ।
द्रष्ट्रादिरूपरहितः प्रत्यगात्माऽभवत्पुरा ॥
नामरूपजनौ सत्यां द्रष्टृत्वादियुतो भवेत् ।
द्रष्टृश्रोत्रादिरूपो यो यश्च द्रष्ट्रादिवर्जितः ॥




१ क. ख. ङ. °शत्वतः । २ घ. °भिमुखा दृ° । ३ क. ङ. °वेशाद्भ्रमा° ।

बुद्धितत्कारणोपाधी क्षेत्रज्ञेश्वरसंज्ञकौ ।
जिघ्राणीममहं गन्धमिति यो वेत्त्यविक्रियः ॥
स सर्वसाक्षी पूर्वाभ्यामुपलक्षणमर्हति ।
अप्पात्रोत्थापिताद्भानोर्दिवि भानुर्यथेक्ष्यते ॥
सर्वसाक्षी तथा धीस्थात्कर्तृभोक्त्रादिलक्षणात् ।
प्रकाशात्मा यथा चन्द्रः शाखाग्रादतथाविधात् ॥
लक्ष्यस्तथा चिदात्माऽपि कारणोपाधितो जडात् ।
जीवत्वभ्रान्तिरेवैषा प्रत्यग्बोधोपयोगतः ॥
जलपात्रार्कसाम्येन प्रवेश इति कल्प्यते ।
दिग्देशकालशून्यस्य प्रवेशो बिलसर्पवत् ॥
न त्वञ्जसा परस्यास्ति तेनाविद्याप्रकल्पितः ।
अविद्यया तु साक्ष्येव[1] केवलोऽप्यविवेकतः ॥
बुद्ध्यादिकार्यगैर्धर्मैः प्रतिबिम्बवदीक्ष्यते ।
अग्निः सूर्यो मरुच्चेति दृष्टान्ताः श्रुत्युदीरिताः ॥
अप्रविष्टस्वभावोऽतः कार्यमात्माऽविशज्जगत् ।
अग्निर्यथैको भुवनं काष्ठ[2]कोष्ठादिरूपकम् ॥
प्रविष्टः प्रतिरूपोऽभूदप्रविष्टोऽपि सन्[3]स्वतः ।
वायुर्यथैको भुवनं नानाव्यजनरूपकम् ॥
प्रविष्टो बहुरूपोऽभूदप्रविष्टोऽपि सन्स्वतः ।
सूर्यो यथोदपात्रेषु प्रविष्टो बहिरेव सन् ॥
तथाऽऽत्माऽप्यप्रविष्टः सन्[4]प्रविष्ट इव लक्ष्यते ।
यथा सृष्ट्यादयः क्लृप्ताः प्रवेशोऽपि तथेक्ष्यताम् ॥
युक्त्या नैवोपपद्यन्ते सृष्ट्याद्याः कल्पितास्ततः ।
नासतो जन्मना योगः सतः सत्त्वान्न चेष्यते ॥
कूटस्थे विक्रिया नास्ति तस्मादज्ञानतो जनिः ।
रूपं रूपमितीयं तु स्पष्टमृक्प्रत्यगात्मनः ॥
याथात्म्यदर्शनायैव[5] सृष्ट्यादीन्यभ्यभाषत ।
क्षुरपात्राख्यदृष्टान्ताद्विशेषेण प्रवेशनम् ॥
इन्द्रियेष्वपि विस्पष्टमुपलभ्यत्वमात्मनः ।
यदग्निकाष्ठदृष्टान्तात्सामान्येन प्रवेशनम् ॥

---

१ ग. °क्ष्येत्रं के° । २ क. ख. ङ. 'ष्ठलोष्टादि' । ३ ग. स स्वतः । ४ ग. स प्रवि° ५ ग. °नाप्त्यैव ।

तदधिष्ठानरूपेण कार्यव्यापित्वमुच्यते ।
अधिष्ठानारोप्यभावमन्तरेण न कुत्रचित् ॥
व्याप्यव्यापकयोः कृत्स्नस्वरूपव्याप्तिरिष्यते ।
अत्यन्तभिन्नयोर्व्याप्तिर्नहि दृष्टा गवाश्वयोः ॥
नाप्यत्यन्तमभिन्नस्य व्याप्यव्यापकवर्जनात् ।
भेदाभेदौ वास्तवौ तु दुर्लभौ तेन शिष्यते ॥
अधिष्ठानारोपितयोरेवं व्याप्तिर्बलादियम् ।
तमसैव यथा सर्पं स्रक्प्रविष्टा न तु स्वतः ॥
प्रत्यगज्ञानकार्याणि स्वात्मैवं मायया बलात् ।
व्यापित्वमुपलभ्यत्वमिति द्वेधा प्रवेशनम् ॥
सिद्धं प्रवेशाद्ये दोषास्तान्निराचक्ष्महेऽधुना ।
पर एव प्रविष्टश्चेत्प्रविष्टानामनेकतः ॥
तदनन्यत्वतः प्राप्ता महेशस्याप्यनेकता ।
नैष दोषोऽस्य चोद्यस्य विपरीतत्वसंभवात् ॥
बहूनामेकतादात्म्यादेकत्वं किं न चोद्यते ।
नियामकश्चाऽऽगमोऽत्र स च भेदं निवारयेत् ॥
कल्प्यैः सर्पादिभिर्भेदैर्न च रज्जुर्विभिद्यते ।
एको देवो निविष्टोऽत्र बहुधेति श्रुतीरणात् ॥
वियद्वदेक एवैष ईश्वरोऽभ्युपगम्यताम् ।
संसारित्वात्प्रविष्टानां परस्य तदभेदतः ॥
संसारित्वं प्रसक्तं चेन्न क्षुधाद्यत्ययश्रुतेः ।
सुखदुःखविमोहादिदर्शनान्नेति चेन्न तत् ॥
न लिप्यते लोकदुःखैर्लोकबाह्य इति श्रुतेः ।
उपाधिजनितो योऽयं चिदाभासोऽवभासते ॥
दुःखाद्यनुभवस्तत्र सावकाशो भविष्यति ।
दुःखी यदि भवेदात्मा कः साक्षी दुःखिनो भवेत् ॥
दुःखिनः साक्षिता नैव साक्षिणो दुःखिता तथा ।
नर्ते स्याद्विक्रियां दुःखी साक्षिता का विकारिणः ॥
धीविक्रियासहस्राणां साक्ष्यतोऽहमविक्रियः ।
शरीरेन्द्रियसंघात आत्मत्वेनाभिमानिनाम् ॥

---

१ क. ख. ग. ङ. प्रविष्टा ये दो° ।

चिदाभासयुतां बुद्धिं विशिंषन्ति सुखादयः ।
उदासीनो यथा पश्येद्भण्डिनं कलहोद्यतम् ॥
सुखदुःखादिमद्बुद्धिं साक्षी तद्वदसंहतः ।
एवं सति पराच्येव दुःखं प्रत्यक्षमीक्ष्यताम् ॥
प्रतीच्यात्मनि वेदोऽयमक्षादीनि निषेधति ।
विज्ञातारमरे केन विजानीयादिति श्रुतिः ।
विदिताविदिताभ्यां तदन्यदेवेति च श्रुतिः ॥
अहं दुःखीतिविज्ञानमात्मच्छायैककर्मकम् ।
आत्मन्यारोप्यते भ्रान्तैर्विद्वद्भिश्चोपचर्यते ॥
नासिकाग्रे महद्दुःखं पादाङ्गुष्ठाग्र इत्यपि ।
देहावयवगं दृष्टं दुःखमात्मनि तत्कथम् ॥
प्रतीचि चेद्भवेद्दुःखं व्याप्नुयाद्बोधवद्वपुः ।
चिद्वद्द्रष्टृस्वरूपत्वात्प्रतिकूलं च नो भवेत् ॥
आत्मनश्चैव भोगाय सर्वं प्रियमिति श्रुतेः ।
सुखमात्मैकविषयमिति चेत्तन्न युज्यते ॥
यत्र वा ऽन्यक्लृप्तिः स्यात्तत्रान्योऽन्यत्प्रपश्यति ।
इति भ्रान्तात्मविषयं श्रुतं द्वैतं सुखादिकम् ॥
यत्र त्वात्मैव सर्वं[2] स्यात्तत्र कं[3] केन पश्यति ।
इति बुद्धात्मनि द्वैतं सुखदुःखादि वारितम् ॥
तुभ्यं न रोचते पापान्मया त्वित्यनुभूयते ।
प्रत्यक्प्रवणया दृष्ट्या संसारः कोऽपि नाऽऽत्मनि ॥
इच्छाद्वेषादिमानात्मेत्येवं समयबन्धनम् ।
तार्किकैः क्रियतां तत्तु नैव युक्त्योपपद्यते ॥
नित्यानुमेय आत्मा चेन्मनसा तस्य दुःखिता ।
न भयाद्दृश्य आत्मा चेद्द्रष्टृभावः प्रसज्यते ॥
दृश्यत्वं द्रष्टृता चास्य निरंशत्वान्न युज्यते ।
सांशत्वे स्यादनित्यत्वं नातो दुःखित्वमात्मनः ॥
अदुःखित्वे परस्येष्टे तदन्यस्याप्यभावतः ।
कस्य दुःखनिवृत्त्यर्थमारम्भोपनिषत्त्वया ॥
प्रत्यगज्ञानहेतूत्थदुःखित्वादिभ्रमोऽत्र यः ।
तद्ध्वंसमात्रसिद्ध्यर्थमारम्भोपनिषन्मया ॥

१ ग °द्द्रष्टुः स्व° । २ ग. घ. सर्वः । ३ ख ग. कं ।

नवसंख्येयमात्रेक्षी दशमो विभ्रमाद्यथा ।
न वेत्ति दशमोऽस्मीति वीक्षमाणोऽपि तान्नव ॥
निःशेषानात्मदृक्कुद्रदनिर्ज्ञातात्मतत्त्वकः ।
न वेत्त्यैकात्म्यमस्तीति वीक्षमाणोऽप्यनात्मनः ॥
दशमोऽसीतिवाक्योत्थसम्यग्ज्ञानानलार्चिषा ।
प्लुष्टात्मदशमाज्ञानो दशमोऽस्मीति वीक्षते ॥
तथा तत्त्वमसीत्यादिवाक्योत्थज्ञानवह्निना ।
प्लुष्टाऽनात्मतमस्तज्जं चैकात्म्यं प्रतिपद्यते ॥
प्रत्यगज्ञानहेतूत्थशास्त्राचार्यादिसाधनः ।
तद्विरुद्धं निजैकात्म्यं प्रत्यपद्यत मायया ॥
प्रविष्टमुपजीव्यापि दोषः कोऽपि न वादिभिः ।
इहाऽऽपादयितुं शक्यः प्रवेशस्तेन सुस्थितः " ॥ इति ।

अन्यान्यपि प्रवेशवाक्यान्येवं व्याख्येयानि । "पुरः पुरुष आविशत्" इति मधुब्राह्मणवाक्यम् । "विराजं देवताः कोशांश्च सृष्ट्वा प्रविश्यामूढो मूढ इव व्यवहरन्नास्ते मायथैव" इत्युत्तरतापनीयवाक्यम् । सर्वगतस्य देहे प्रवेशाय प्राणवायुरूपोपाधिः साधनम् । तथा च मैत्रेयोपनिषद्यामनन्ति—"स वायुमिवाऽऽत्मानं कृत्वाऽभ्यन्तरं प्राविशत्" इति । तस्य वायोः प्रवेशनिर्गमावात्मन्यध्यारोप्य व्यवह्रियेते । तदेतदाथर्वणिकैः पठ्यते—"स ईक्षांचक्रे कस्मिन्न्वहमुत्क्रान्त उत्क्रान्तो भविष्यामि कस्मिन्वा प्रतिष्ठिते प्रतिष्ठास्यामीति स प्राणमसृजत" इति । यद्यपि लिङ्गदेहः कृत्स्नोऽप्यात्मनः स्थूलशरीरे प्रवेशोपाधिस्तथाऽपि प्राणस्य तत्र प्राधान्यं द्रष्टव्यम् । स च लिङ्गोपाधिः पादाग्रयोः प्रविश्योर्ध्वमारुह्योपरि स्थितयोरूर्वोरुदर उरसि शिरसि च प्रतितिष्ठति । तदेतदैतरेयिणः—"तं प्रपदाभ्यां प्रापद्यत ब्रह्मेमं पुरुषम्" इत्यादिना समामनन्ति । ननु "स ईक्षत कतरेण प्रपद्यै" इति वाक्येन परमात्मनः प्रवेशद्वारविचारमाम्नाय "स एतमेव सीमानं विदार्यैतया द्वारा प्रापद्यत" इति वाक्येन मूर्धन्यवस्थितं सुषुम्नाग्ररूपं द्वारं भित्त्वा तेन द्वारेणान्तराविशत्, इत्यैतरेयिण एव समामनन्ति । अतो वाक्ययोर्विरोध इति चेन्न । विषयभेदेन व्यवस्थितत्वात् । लौकिकव्यवहारहेतोर्लिङ्गदेहस्य पादाग्रप्रवेशः । तत्त्वाभिव्यञ्जिकायाः समाधिशब्दवाच्याया एकाग्रायाश्चित्तवृत्तेः सुषुम्नायां संभवेन तदुपाधिकस्य तत्र प्रवेश इति व्यवस्था । एतदेवाभिप्रेत्याऽऽम्नायते—" सुषुम्ना तु परे लीना विरजा ब्रह्मरूपिणी " इति । यदप्यैतरेयिण आमनन्ति—"अग्निर्वाग्भूत्वा मुखं प्राविशत् । वायुः

१ ग. °मेऽस्तीति । २ ख. प्लुष्ट्वाऽऽत्म° । ३ ख. °ज्ञानं द° । ४ घ. °ब्रारू° ।

प्राणो भूत्वा नासिके प्राविशत्" इत्यादि । तत्र पादाग्रद्वारा देहे प्रविष्टस्य लिङ्गशरीरस्यावयवा वागादयः स्वस्वदेवताभिरग्न्यादिभिरनुगृहीता मुखच्छिद्रादिगोलकेषु व्यवस्थिता इत्येतावद्विवक्षितम् । यदपि च्छन्दोगैराम्नायते—"अनेन जीवेनाऽऽत्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि" इति, । तत्र प्राणधारकत्वं जीवत्वं तेनोपाधिना युक्तः प्रविशति । तदेवं सर्वासामपि श्रुतीनां पर्यालोचनया परमात्मनो जीवत्वेन प्रवेश इति सिद्धम् ।

अथ मीमांसा । तत्र जीवस्य नामरूपस्रष्टृत्वाभावो द्वितीयाध्यायस्य चतुर्थपादे* चिन्तितः—

" नामरूपव्याकरणे जीवः कर्ताऽथवेश्वरः ।
अनेन जीवेनेत्युक्तेर्व्याकर्ता जीव इष्यते ॥
जीवान्वयः प्रवेशेन संनिधेः सर्वसर्जने ।
जीवोऽशक्तः शक्त ईश उत्तमोक्तिस्तथेक्षितुः ॥

ईश्वरेण पञ्चभूतेषु सृष्टेषु भौतिकयोर्दृश्यमानयोर्महीधरादिनामरूपयोर्जीव एव स्रष्टा स्यात् । कुतः । " अनेन जीवेनाऽऽत्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि " इति जीवरूपस्यैव सृष्टावन्वयश्रवणादिति प्राप्ते ब्रूमः—जीवेनानुप्रविश्येति प्रवेशने जीवोऽन्वेति संनिहितत्वात् । जीवेन व्याकरवाणीत्युक्तौ व्यवहितान्वयः स्यात् । नहि जीवस्य गिरिनदीनिर्माणे शक्तिरस्ति । ईश्वरस्तु सर्वशक्तियुक्तः "पराऽस्य शक्तिर्विविधा" इति श्रवणात् । किंच व्याकरवाणीत्युत्तमपुरुषोऽपीश्वरपक्षे समञ्जसः । तस्मादीश्वर एव नामरूपयोः स्रष्टा । कथं तर्हि घटपटादौ कुलालादेर्निर्मातृत्वम्, ईश्वरप्रेरणादिति ब्रूमः । तस्मादीश्वर एव सर्वकर्तेति सिद्धम् " ।

तत्रैव तृतीयपादे दशमाधिकरणमारभ्य सप्तदशाधिकरणपर्यन्तैरष्टभिरधिकरणैर्जीवविचाराः प्रवर्तिताः । तत्र = दशमाधिकरणमारचयति—

" जीवस्य जन्ममरणे वपुषो वाऽऽत्मनो हि ते ।
जातो मे पुत्र इत्युक्तेर्जातकर्मादितस्तथा ॥
मुख्ये ते वपुषो भाक्ते जीवस्यैते अपेक्ष्य हि ।
जातकर्म च लोकोक्तिर्जीवापेतेतिशास्त्रतः ॥

लोके जातो मे पुत्र इति व्यवहाराच्छास्त्रे जातकर्मादिसंस्कारोक्तेश्च जन्ममरणे जीवस्येति प्राप्ते ब्रूमः—जीवस्य जन्ममरणाङ्गीकारे कृतनाशाकृताभ्यागमप्रसङ्गस्य

* संज्ञामूर्तिक्लृप्तिस्तु त्रिवृत्कुर्वत उपदेशात्–ब्र० सू० अ० २ पा० ४ अ० ९ सू० २० । = चराचरव्यपाश्रयस्तु स्यात्तद्व्यपदेशो भाक्तस्तद्भावभावित्वात् ब्र०सू०अ० २ पा० ३ अ० १० सू० १६ ।

१ ब प्रवेश इति । २ घ. °क्तिरये° ।

दुर्वारत्वाद्देहगते एव जन्ममरणे जीवस्योपचर्येते । औपचारिके एव ते अपेक्ष्य लोकव्यवहारकर्मशास्त्रयोः प्रवृत्तिः । उपनिषच्छास्त्रं तु जीवापेतं वाव किलेदं म्रियते न जीवो म्रियत इति । जीवविमुक्तस्यैव शरीरस्य मुख्यमरणमभिधाय जीवस्य तन्निराचष्टे । तस्माद्वपुषो जन्ममरणे "

*एकादशाधिकरणमारचयति—

" कल्पादौ ब्रह्मणो जीवो वियद्वज्जायते न वा ।
सृष्टेः प्रागद्वयत्वोक्तेर्जायते विस्फुलिङ्गवत् ॥
ब्रह्माद्वयं जातबुद्धौ जीवत्वेन विशेत्स्वयम् ।
औपाधिकं जीवजन्म नित्यत्वं वस्तुतः श्रुतम् ॥

" एकमेवाद्वितीयम् " इति सृष्टेः प्रागद्वयत्वं श्रूयमाणं ब्रह्मव्यतिरिक्तस्य जीवस्यानुत्पत्तौ नोपपद्यते । श्रुतिश्च विस्फुलिङ्गदृष्टान्तेन जीवस्योत्पत्तिं प्रतिपादयति— " यथाऽग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्त्येवमेवास्मादात्मनः सर्वे प्राणाः सर्वे लोकाः सर्वे देवाः सर्वाणि भूतानि सर्व एत आत्मानो व्युच्चरन्ति " इति । तस्मात्कल्पादौ वियदादिवद्ब्रह्मणो जीवो जायत इति प्राप्ते ब्रूमः—यदद्वयं ब्रह्म तदेव जातायां बुद्धौ जीवरूपेण प्रविशति । " तत्सृष्ट्वा तदेवानुप्राविशत् " इति श्रुतेः । अतो जीवानुत्पत्तौ नाद्वयश्रुतिविरोधः । विस्फुलिङ्गश्रुतिस्त्वौपाधिकजन्माभिप्रायेण[3] प्रवृत्ता । अन्यथा कृतनाशाकृताभ्यागमादिदोषः[4] स्यात् । वस्तुतत्त्वाभिप्रायेण तु नित्यत्वं श्रुतिर्ब्रूते—" नित्यो नित्यानां चेतनश्चेतनानाम् " इति । तस्मात्कल्पादौ जीवो नोत्पद्यते " ।

+द्वादशाधिकरणमाचयति—

" अचिद्रूपोऽथ चिद्रूपो जीवोऽचिद्रूप इष्यते ।
चिदभावात्सुषुप्त्यादौ जाग्रच्चिन्मनसा कृता ॥
ब्रह्मत्वादेव चिद्रूपश्चित्सुषुप्तौ न लुप्यते ।
द्वैतादृष्टिर्द्वैतलोपान्न हि द्रष्टुरिति श्रुतेः ॥

तार्किका मन्यन्ते—सुषुप्तिमूर्छासमाधिषु चैतन्याभावादचिद्रूपो जीवः । जागरणे त्वात्ममनःसंयोगाच्चैतन्याख्यो गुणो जायत इति । तदसत् । चिद्रूपस्य ब्रह्मण एव जीवरूपेण प्रवेशश्रवणात् । न च चैतन्यं सुषुप्त्यादौ लुप्यते सुषुप्त्यादिसाक्षित्वेनावस्थानात् । अन्यथा सुषुप्त्यादिपरामर्शायोगात् । कथं तर्हि सुषुप्त्यादौ द्वैताप्रतीति-

* नाऽऽत्माऽश्रुतेर्नित्यत्वाच्च ताभ्यः—ब्र० सू० अ० २ पा० ३ अ० ११ सू० १७ । + ज्ञोऽत एव—ब्र० सू० अ० २ पा० ३ अ० १२ सू० १८ ।

१ ख. मुख्यं म° । २ ग. एवाऽऽत्मा° । ३ क. ख ङ. 'दात्प्रवृ° । ४ घ. 'शादि° । ङ. शादिदोषप्रसक्तत्वात् । ब° । ५ ख. °तावन्निरि° ।

रिति चेद्द्वैतलोपादिति ब्रूमः । तथा च श्रुतिः—" यद्वै तन्न पश्यति पश्यन्वै तन्न पश्यति न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यतेऽविनाशित्वान्न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यत्पश्येत् " इति । अस्यायमर्थः—तत्र सुषुप्तौ जीवः किमपि न पश्यतीति यल्लौकिकैरुच्यते तदसत् । पश्यन्नेव जीवस्तदानीं न पश्यतीति भ्रान्त्या केवलं व्यपदिश्यते । कथं[2] तद्दर्शनमित्यत्र हेतुरुच्यते—द्रष्टुरात्मनः स्वरूपभूताया दृष्टेर्लोपो नाहि विद्यते विनाशरहित[3]स्वभावत्वात् । अन्यथा लोपवादिनोऽपि निःसाक्षिकस्य लोपस्य वक्तुमशक्यत्वात् । कथं तर्हि लौकिकानां न पश्यतीतिभ्रम इत्यत्र हेतुरुच्यते[4]— यद्ब्रह्मचैतन्यादन्यत्क्रियाकारकफलरूपेण विभक्तं जगदाख्यं[5] द्वितीयं वस्तु तन्नास्ति तस्य स्वकारणे लीनत्वात् । अतो[6] जागरण इव द्रष्टृदृश्यदर्शनव्यवहाराणामभावान्न पश्यतीति लौकिकानां भ्रम इति । तस्माच्चिद्रूपो जीवः " ।

*त्रयोदशाधिकरणमारचयति—

" जीवोऽणुः सर्वगो वा स्यादेषोऽणुरितिवाक्यतः ।
उत्क्रान्तिगत्यागमनश्रवणाच्चाणुरेव सः ॥
साभासबुद्ध्यणुत्वेन तदुपाधित्वतोऽणुता ।
जीवस्य सर्वगत्वं तु स्वतो ब्रह्मत्वतः श्रुतम् ॥

" एषोऽणुरात्मा चेतसा वेदितव्यः " इत्यणुत्वं श्रुतम् । " अस्माच्छरीरादुत्क्रामति " इत्युत्क्रान्तिः । " चन्द्रमसमेव ते सर्वे गच्छन्ति " इति गतिः । " तस्माल्लोकात्पुनरे(रै)ति " इत्यागमनम् । न ह्युत्क्रान्त्यादयः सर्वगतस्योपपद्यन्ते । मध्यमपरिमाणस्य तदुपपत्तावप्यणुत्वश्रुतिर्विरुध्यते । अनित्यत्वं च दुर्वारम् । तस्मादणुर्जीव इति प्राप्ते ब्रूमः—चैतन्यप्रतिबिम्बसहिता बुद्धिरसर्वगता तदुपाधिकत्वाज्जीवस्याणुत्वोत्क्रान्त्यादय उपपन्नाः । स्वतस्तु जीवस्य ब्रह्मरूपत्वात्सर्वगतत्वम् । " स वा एष महानज आत्मा "" सर्वव्यापी सर्वभूतान्तरात्मा " इत्यादौ सर्वगतत्वं श्रुतम् । तस्मात्सर्वगतो जीवः " ।

=चतुर्दशाधिकरणमारचयति—

" जीवोऽकर्ताऽथवा कर्ता धियः कर्तृत्वसंभवात् ।
जीवकर्तृतया किं स्यादित्याहुः सांख्यमानिनः ॥

---

* उत्क्रान्तिगत्यागतीनाम्—ब्र०सू०अ० २ पा० ३ अ० १३ सू० १९ । = कर्ता शास्त्रार्थवत्त्वात्—ब्र० सू० अ० २ पा० ३ अ० १४ सू० ३३ ।

---

१ ग 'श्यन्नेत' । २ घ. 'थं दर्श' । ३ ग. 'तत्वा' । ४ घ. 'ते ब्रह्म' । ५ घ. 'ख्यात्कि' । ६ ग. 'ख्यं यद्द्वि' । ७ क. ख. ङ. 'तो मर' ।

करणत्वान्न धीः कर्त्री यागश्रवणलौकिकाः ।
व्यापारा न विना कर्त्रा कस्माज्जीवस्य कर्तृता ॥

बुद्धेः परिणामित्वेन क्रियावेशात्मकं कर्तृत्वं संभवति न त्वसङ्गस्याऽऽत्मन इति यत्सांख्यैरुक्तं तदसंगतम् । करणत्वेन क्लृप्तशक्तिकाया बुद्धेः कर्तृता कल्पयितुं न शक्या । कुठारादावदर्शनात् । बुद्धेः कर्तृत्वेन करणान्तरस्य कल्पनीयत्वाच्च । न च मा भूत्कर्तृतेति वाच्यम् । पूर्वकाण्डोक्तयागादिव्यापाराणामुत्तरकाण्डोक्तश्रवणादिव्यापाराणां लौकिककृष्यादिव्यापाराणां च कर्तृसापेक्षत्वात् । तस्माज्जीवः कर्ता ” ।

*पञ्चदशाधिकरणमारचयति—

“कर्तृत्वं वास्तवं किंवा कल्पितं वास्तवं भवेत् ।
यजेतेत्यादिशास्त्रेण सिद्धस्याबाधितत्वतः ॥
असङ्गो हीति तद्बाधात्स्फटिके रक्ततेव[2] तत् ।
अध्यस्तं धीचक्षुरादिकरणोपाधिसंनिधेः ॥

पूर्वाधिकरणे[3] प्रतिपादितस्य कर्तृत्वस्य बाधाभावाद्वास्तवं[4] तदिति प्राप्ते ब्रूमः— “ असङ्गो ह्ययं पुरुषः ” इति श्रुत्या कर्तृत्वसङ्गो बाध्यते । यथा जपाकुसुमसंनिधिवशात्स्फटिके रक्तत्वमध्यस्तं तथाऽन्तःकरणसंनिधिवशात्कर्तृत्वमात्मन्यध्यस्यते ” ।

×षोडशाधिकरणमारचयति—

“प्रवर्तकोऽस्य रागादिरीशो वा रागतः कृषौ ।
दृष्टा प्रवृत्तिर्वैषम्यमीशस्य प्रेरणे भवेत् ॥
सस्येषु वृष्टिवज्जीवेष्वीशस्याविषमत्वतः ।
रागोऽन्तर्याम्यधीनोऽत ईश्वरोऽस्य प्रवर्तकः ॥

लोके कृषीवलादीनां रागद्वेषावेव प्रवर्तकौ दृष्टौ । तदनुसाराद्धर्माधर्मकर्तुर्जीवस्यापि तावेव प्रवर्तकावभ्युपेयौ । ईश्वरस्य प्रवर्तकत्वे कांश्चिज्जीवान्धर्मे प्रवर्तयति कांश्चिदधर्म इति वैषम्यं दुर्वारम् । तस्मान्नेश्वरः प्रवर्तक इति प्राप्ते ब्रूमः—न तावदीश्वरे वैषम्यदोषप्रसङ्गः । वृष्टिवत्साधारणनिमित्तत्वात् । यथा वृष्टेः सस्याभिवृद्धिहेतुत्वेऽपि व्रीहियवादिवैषम्ये बीजानामेव निमित्तत्वम् । तथेश्वरस्य[5] यथायथं जीवाः प्रवर्तन्तामित्यभ्यनु-

* यथा च तक्षोभयथा—ब्र० सू० अ० २ पा० ३ अ० १५ सू० ४० । × परात्तु तच्छ्रुतेः—ब्र० सू० अ० २ पा० ३ अ० १६ सू० ४१ ।

१ घ. कर्तृशक्तिर्न कल्पयितुं श° । २ घ. °तेतिवत् । ३ ध. °रणप° । ४ घ. °स्तवम° ...ति । ५ घ. °त्वसंयोगो बा° । ६ घ. °स्य जी° ।

ज्ञया साधारणप्रवर्तकत्वे ऽपि न वैषम्यम् । पूर्वकृतकर्मणां वासनानां च वैषम्यहेतुत्वात् । कर्मणां फलहेतुत्वमेव न कर्मान्तरहेतुत्वमिति चेत् । सत्यम् । सुखदुःखरूपस्य फलस्य प्रदानाय जीवं व्यापारयत्कर्मार्थात्कर्मान्तरमपि निष्पादयतीति दुर्वारं हेतुत्वम् । वासनानां तु साक्षादेव कर्महेतुत्वम् । तथा चेश्वरस्य कुतो वैषम्यप्रसङ्गः । यत्तु रागस्य प्रवर्तकत्वदर्शनमुदाहृतं तत्तथैवास्तु नैतावतेश्वरस्य प्रवर्तकत्वहानिः । सर्वान्तर्यामिणेश्वरेण रागस्यापि नियम्यमानत्वात् । तस्मादीश्वरो जीवस्य प्रवर्तकः ” ।

* सप्तदशाधिकरणमारचयति—

“किं जीवेश्वरसांकर्यं व्यवस्था वा श्रुतिद्वयात् ।
अभेदभेदविषयात्सांकर्यं न निवार्यते ॥
अंशोऽवच्छिन्न आभास इत्यौपाधिककल्पनैः ।
जीवेशयोर्व्यवस्था स्याज्जीवानां च परस्परम् ॥

तत्त्वमस्यादिश्रुतिर्जीवेशयोरभेदं प्रतिपादयति । आत्मा द्रष्टव्य इत्यादिना द्रष्टृद्रष्टव्यरूपेण भेदः प्रतीयते । तथा च सति भेदश्रुतिबलात्तावज्जीवो नास्तीत्यपलपितुमशक्यम् । अभेदश्रुत्या चेश्वरात्पृथक्त्वेन व्यवस्थापयितुं न शक्यते । तस्माद्विद्यमानस्य जीवस्येश्वरेण सांकर्यं दुर्वारम् । परस्परं च जीवानामीश्वराभेदद्वारा सांकर्यमानुषङ्गिकम् । तस्माद्ब्रह्मवादिनो न जीवेश्वरव्यवस्थेति प्राप्ते ब्रूमः——यद्यपि गोमहिषवज्जीवेश्वरयोरत्यन्तं भेदो वास्तवो नास्ति तथाऽपि व्यवहारदशायामुपाधिकल्पितं भेदमाश्रित्य शास्त्राणि त्रेधा जीवं निरूपयन्ति । “ममैवांशो जीवलोके जीवभूतः सनातनः” इत्यंशत्वमवगम्यते । “स समानः सन्नुभौ लोकावनुसंचरति” इति श्रुतौ विज्ञानमयस्य जीवस्य विज्ञानशब्दवाच्यया बुद्ध्या समानपरिमाणनिर्देशाद्घटाकाशवदवच्छिन्नत्वं प्रतीयते ।

“ एक एव तु भूतात्मा भूते भूते व्यवस्थितः ।
एकधा बहुधा चैव दृश्यते जलचन्द्रवत् ” ॥

इत्याभासत्वमवगम्यते । तस्मात्सुलभैव ब्रह्मवादिनो जीवेश्वरव्यवस्था । जीवानां च परस्परमनेकजलपात्रस्थबहुसूर्यप्रतिबिम्बवद्व्यवहारव्यवस्था सुतरामुपपद्यते । तस्मान्न कोऽपि दोष इति सिद्धम् ” ।

* अंशो नानाव्यपदेशादन्यथा चापि दाशकितवादित्वमधीयत एके—ब्र० सू० अ० २ पा० ३ अ० १७ सू० ४३ ।

१ घ. ‘ र तद्वेतु’ । २ ख. ‘ध हे°’ । ३ क. ख ङ. ‘तथाऽस्तु’ ४ घ. ‘स्तु न ता°’ । ५ क ग. ङ. ‘त्यन्तभे’ । ६ घ. इत्येवमश° ।

जीवस्य लोकान्तरगमनरूपः संसारप्रकारस्तृतीयाध्यायस्य प्रथमपादे षड्भिरधिकरणैर्विचारितः । तत्र *प्रथमाधिकरणमारचयति—

" अवेष्टितो वेष्टितो वा भूतसूक्ष्मैः पुमान्व्रजेत् ।
भूतानां सुलभत्वेन यात्यवेष्टित एव सः ॥
बीजानां दुर्लभत्वेन निराधारेन्द्रियागतेः ॥
पञ्चमाहुत्यभुक्तेश्च जीवस्तैर्याति वेष्टितः ॥

पूर्वपादप्रतिपादितः प्राणोपाधिको जीवः शरीरान्तरप्राप्तिवेलायामितो निर्गच्छन्भाविशरीरबीजैः सूक्ष्मभूतैरवेष्टितो गच्छति । पञ्चभूतानां सर्वत्र सुलभत्वेनेतो नयनस्य निरर्थकत्वादिति प्राप्ते ब्रूमः—भूतमात्रस्य सुलभत्वेऽपि देहबीजानि न सर्वत्र सुलभानि । तस्मादितो नेतव्यानि । किंच जीवोपाधिभूतेन्द्रियाणां भूताधारत्वमन्तरेण परलोकगमनं न संभवति । जीवनदशायामदर्शनात् । श्रुतिश्चैवमाह— " पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति " इति । अस्यायमर्थः— द्युलोकपर्जन्यपृथिवीपुरुषयोषितः पञ्च पदार्था उपासनायामग्नित्वेन परिकल्पिताः । तेष्वग्निषु स्वर्गाय गच्छन्पुनरागच्छंश्च जीव आहुतित्वेन परिकल्पितः । इष्टापूर्तकारी जीवः स्वर्गमारुह्योपभोगेन कर्मणि क्षीणे पर्जन्ये पतित्वा वृष्टिरूपेण भूमिं प्राप्यान्नद्वारेण पुरुषं प्राप्य रेतोद्वारेण योषितं प्रविश्य शरीरं गृह्णाति । ततोऽप्शब्दोपलक्षितानि देहबीजानि पञ्च भूतानि जीवेन सह द्युलोकादिपञ्चसु स्थानेषु गत्वा पञ्चमे स्थाने शरीरभावं प्राप्य पुरुषशब्दवाच्यानि भवन्तीति । तस्माद्बीजैर्वेष्टित एव परलोकं गच्छति " ।

+द्वितीयाधिकरणमारचयति—

" स्वर्गावरोही क्षीणानुशयः सानुशयोऽथवा ।
यावत्संपातवचनात्क्षीणानुशय इष्यते ॥
जातमात्रस्य भोगित्वादैकभव्यविरोधतः ।
चरणश्रुतितः सानुशयः कर्मान्तरैरयम् ॥

स्वर्गमुपभुज्य ततोऽवरोहन्पुरुषो निरनुशय इहाऽऽगच्छति । अनुशयो नाम कर्मशेषः । जीवमनुशेत इति व्युत्पत्तेः । न च स्वर्गादवरोहतोऽनुशयः संभवति । अनुशयफलस्य सर्वस्य तत्रैवोपभुक्तत्वात् । अत एवावरोहविषया श्रुतिः—" यावत्संपातमुषित्वाऽथैतमेवाध्वानं पुनर्निवर्तन्ते " इत्याह । संपतत्यनेन कर्मणा स्वर्गमिति संपातः

* तदन्तरप्रतिपत्तौ रंहति संपरिष्वक्तः प्रश्ननिरूपणाभ्याम्—ब्र० सू० अ० ३ पा० १ अ० १ सू० १ । + कृतात्ययेऽनुशयवान्दृष्टश्रुतिभ्यां यथेतमनेवं च—ब्र० सू० अ० ३ पा० १ अ० २ सू० ८ ।

१ ग. घ. °पादे प° । २ घ. °लोके ग° । ३ क. ग. घ. ङ. लोके ग° । ४ क. ख. ङ. °त्या गथेन° । ५ ख. °नावर्तते " इ° ।

कर्मसमूहः संपातमनतिक्रम्य यावत्संपातं निःशेषं कर्मफलं भोक्तुं तत्रोषित्वेत्यर्थः। तस्मात्कर्मशेषरहितोऽवरोहतीति प्राप्ते ब्रूमः—स्वर्गार्थमनुष्ठितस्य कर्मणः साकल्येनोपभोगेऽप्यनुपभुक्तानि संचितानि पुण्यपापानि बहून्यस्य विद्यन्ते। अन्यथा सद्यःसमुत्पन्नस्य बालस्येह जन्मन्यनुष्ठितयोर्धर्माधर्मयोरभावात्सुखदुःखोपभोगो न स्यात्। यत्तु कैश्चिदुच्यते—एकस्मिञ्जन्मन्यनुष्ठितः कर्मसमूह उत्तरस्मिन्नेकस्मिन्नेव जन्मन्युपभोगेन क्षीयत इति। तदसत्। इन्द्रादिपदप्रापकाणामश्वमेधादीनां विड्वराहादिदेहप्रापकाणां पापानां च युगपदुपभोगासंभवेनैकभाविकः कर्मानुशय इतिमतस्य विरुद्धत्वात्। ततश्चैकस्मिञ्जन्मन्यनुष्ठितानां मध्ये ज्योतिष्टोमादिकर्मणि भुक्तेऽपि कुतो न कर्मान्तराण्यवशिष्येरन्। यावत्संपातशब्दश्च स्वर्गप्रदकर्मविषयो न त्वितरकर्मविषयः। श्रुतिश्च स्वर्गादवरुह्य पञ्चम्यामाहुतौ शरीरं गृह्णतां पुरुषाणां च तद्धेत्वोः पुण्यपापयोः सद्भावं दर्शयति—"य इह रमणीयचरणा अभ्याशो ह यत्ते रमणीयां योनिमापद्येरन्ब्राह्मणयोनिं वा क्षत्रिययोनिं वा वैश्ययोनिं वा। अथ य इह कपूयचरणा अभ्याशो ह यत्ते कपूयां योनिमापद्येरञ्श्वयोनिं वा सूकरयोनिं वा चाण्डालयोनिं वा" इति। रमणीयचरणाः सुकृतकर्माणः कपूयचरणाः पापकर्माणः। अभ्याशो ह यदित्यव्ययसमुदायस्य क्षिप्रत्वमर्थः। तदेवं सानुशया अवरोहन्तीति स्थितम्"।

*तृतीयाधिकरणमारचयति—

"चन्द्रं याति न वा पापी ते सर्व इति वाक्यतः।
पञ्चमाहुतिलाभार्थं भोगाभावेऽपि यात्यसौ॥
भोगार्थमेव गमनमाहुतिर्व्यभिचारिणी।
सर्वश्रुतिः सुकृतिनां याम्ये पापिगतिः श्रुता॥

"ये[1] वै के चास्माल्लोकात्प्रयन्ति चन्द्रमसमेव ते सर्वे गच्छन्ति" इति श्रवणाच्चान्द्रमसाख्ये स्वर्गे पापिनोऽपि गतिरस्ति। यद्यपि पापिनस्तत्र भोगो न संभवति तथाऽपि पुनरागत्य शरीरग्रहणे पञ्चमाहुतिलाभाय स्वर्गगतिरभ्युपेयेति प्राप्ते ब्रूमः—भोगार्थमेव स्वर्गगमनं न पञ्चमाहुतिलाभार्थं पञ्चमाहुतेर्व्यभिचारित्वाद्द्रोणादीनां योषिदाहुतेरभावात्सीतादीनां पुरुषाहुतेरप्यभावात्। "ते सर्वे" इति श्रुतिस्तु सुकृतिविषया। पापिनां तु यमलोके गतिः श्रुता—"वैवस्वतꣳ संगमनं जनानां यमꣳ राजानꣳ हविषा दुवस्यत" इति। पापिजनैर्गन्तव्यं यमं प्रीणयतेत्यर्थः। तस्मान्न पापिनां स्वर्गे गतिः"।

---

* अनिष्टादिकारिणामपि च श्रुतम्—ब्र०सू० अ० ३ पा० १ अ० ३ सू० १२।

---

१ ग. ये के। २ क. ग. °पापज°।

*चतुर्थाधिकरणमारचयति—

"वियदादिस्वरूपत्वं तत्साम्यं वाऽवरोहिणः ।
वायुर्भूत्वेत्यादिवाक्यात्तत्तद्भावं प्रपद्यते ॥
खवत्सूक्ष्मो वायुवशो युक्तो धूमादिभिर्भवेत् ।
अन्यस्यान्यस्वरूपत्वं न मुख्यमुपपद्यते ॥

स्वर्गादवरोहप्रकार एवं श्रूयते—" अथैतमेवाध्वानं पुनर्निवर्तन्ते । यथेतमाकाशमाकाशाद्वायुं वायुर्भूत्वा धूमो भवति धूमो भूत्वाऽभ्रं भवति । अभ्रं भूत्वा मेघो भवति मेघो भूत्वा प्रवर्षति" इति । यथेतं यथा गतं तथेत्यर्थः । तत्र स्वर्गादवरोहतो जीवस्याऽऽकाशादिस्वरूपत्वं भवति । वायुर्भूत्वेत्यादिना तत्तद्भावप्रतिपत्तेः श्रुतत्वादिति प्राप्ते ब्रूमः—अन्यस्यान्य[3]रूपत्वासंभवादाकाशप्राप्तिर्नामाऽऽकाशवत्सौक्ष्म्यं विवक्षितम् । वायुभावो वायुवशता । धूमादिभावो धूमादिभिः संपर्क इति निर्णयः " ।

+पञ्चमाधिकरणमारचयति—

"व्रीह्यादेः प्राग्विलम्बेन त्वरया वाऽवरोहति ।
तत्रानियम एव स्यान्नियामकविवर्जनात् ॥
दुःखं व्रीह्यादिनिर्याणमिति तत्र विशेषितम् ।
विलम्बस्तेन पूर्वत्र त्वराऽर्थादवसीयते ॥

प्रवर्षणानन्तरं व्रीह्यादिभाव आम्नायते—" त इह व्रीहियवा ओषधिवनस्पतयस्तिलमाषा जायन्ते " इति । प्रागेतस्माद्व्रीह्यादिभावादाकाशादौ विलम्बत्वरयोर्नियामकत्वाभावादनियम[4] इति प्राप्ते ब्रूमः—व्रीह्यादिभावमभिधायानन्तरम्—" अतो वै खलु दुर्निष्प्रपतरम् " इति व्रीह्यादिभावान्निर्गमनं दुःखमिति ब्रुवती श्रुतिर्व्रीह्यादौ विलम्बं[6] विशेषयति । ततोऽर्थात्पूर्वत्र त्वरेत्यवसीयते " ।

*षष्ठाधिकरणमारचयति—

"व्रीह्यादौ जन्म तेषां स्यात्संश्लेषो वा जनिर्भवेत् ।
जायन्त इति मुख्यत्वात्पशुहिंसादिपापतः ॥
वैधान्न पापसंश्लेषः कर्मव्यापृत्यनुक्तितः ।
श्वविप्रादौ मुख्यजनौ चरणव्यापृतिः श्रुता ॥

---

* साभाव्यापत्तिरुपपत्तेः—ब्र० सू० अ० ३ पा० १ अ० ४ सू० २२ । + नातिचिरेण विशेषात्—ब्र० सू० अ० ३ पा० १ अ० ५ सू० ६ । *अन्याधिष्ठिते पूर्ववदभिलापात्—ब्र० सू० अ० ३ पा० १ अ० ६ सू० २४ ।

---

१ घ. °ह ए° । २ ख. अत्र । ३ घ. °न्यस्वरू° । ४ घ. °यतिरिति । ५ घ. दुःशकमि° । ६ घ. विलम्बनं । ७ घ. °त्पूर्वं त्व° ।

आकाशादाविव तिलव्रीह्यादौ न संश्लेषमात्रं किंतु व्रीह्यादिरूपेण मुख्यं जन्म विवक्षितम्। जायन्त इति श्रवणात्। न च स्वर्गे सुकृतफलमनुभूयावरोहतः पापफलस्य स्थावरजन्मनोऽसंभवः। तद्धेतोः पशुहिंसादेर्विद्यमानत्वात्। तस्मान्मुख्यं जन्मेति प्राप्ते ब्रूमः—वैधत्वान्न पशुहिंसादिपापमतो जायन्त इति श्रुत्या संश्लेषमात्रं विवक्षितम्। न तु मुख्यं जन्म कर्मव्यापारानभिधानात्। यत्र तु मुख्यं जन्म विवक्षितं तत्र कर्मव्यापारमभिधत्ते— "रमणीयचरणाः कपूयचरणाः" इति। तस्मात्स्वर्गादवरोहतां व्रीह्यादौ संश्लेषमात्रमिति स्थितम्"।

तत्रैव द्वितीयपादे चतुर्भिरधिकरणैः स्वप्नाद्यवस्था विचारिताः। तत्र * प्रथमाधिकरणमारचयति—

" सत्या मिथ्याऽथवा स्वप्नसृष्टिः सत्या श्रुतीरणात्।
जाग्रद्देशाविशिष्टत्वादीश्वरेणैव निर्मिता॥
देशकालाद्यनौचित्याद्बाधितत्वाच्च सा मृषा।
अभावोक्तेर्द्वैतमात्रसाम्याज्जीवानुवादतः॥

"अथ रथान्रथयोगान्पथः सृजते" इति श्रुत्या स्वप्ने रथादीनां सृष्टिरीरिता। अतो वियदादिसृष्टिवद्व्यवहारदशायां सत्या भवितुमर्हति। न च जाग्रद्देशस्य स्वप्नदेशस्य च कंचिद्विशेषं पश्यामः। तत्काले भोजनादीनां तृप्त्याद्यर्थक्रियाकारित्वात्। अतो विमता सृष्टिः सत्येश्वरकर्तृकत्वाद्वियदादिसृष्टिवदिति प्राप्ते ब्रूमः—स्वप्नसृष्टिर्मृषा। कुतः। उचितदेशकालाद्यसंभवात्। न हि केशसहस्रांशपरिमिते नाडीमध्ये गिरिनदीसमुद्रादीनामुचितो देशोऽस्ति। न हि निशीथे शयानस्य सूर्यग्रहणोचितः कालोऽस्ति। नाप्यनुपनीतस्य बालस्य पुत्रोत्सवादिहर्षनिमित्तान्युचितानि। किंच स्वप्नोपलब्धानां पदार्थानां स्वप्न एव बाधो दृश्यते। कदाचित्तरुत्वेनावसीयमानः पदार्थस्तदैव गिरित्वेनावसितो भवति। यदुक्तं स्वप्नसृष्टिं श्रुतिर्ब्रूत इति तत्रापि सा श्रुतिरभावपूर्विकामेव सृष्टिमाह—"न तत्र रथा रथयोगा न पन्थानो भवन्ति। अथ रथान्रथयोगान्पथः सृजते" इति वस्तुतोऽसन्तो रथाद्याः शुक्तिकारजतवदवभासन्त इति श्रुतेरभिप्रायः यदपि जाग्रत्साम्यमुक्तं तदप्यप्रयोजकम्। अनुचितदेशकालादेर्भूयसो वैलक्षण्यस्योक्तत्वात्। यदपीश्वरनिर्मितत्वमुक्तं तदप्यसत्। "एष सुप्तेषु जागर्ति कामं कामं पुरुषो निर्मिमाणः" इति जीवस्यैव स्वप्नभोगनिर्मातृत्वेन श्रुत्याऽप्युच्यमानत्वात्। तस्मात्स्वप्नसृष्टिर्मृषा"।

* संध्ये सृष्टिराह हि—ब्र० सू० अ० ३ पा० २ अ० १ सू० १।

१ घ. °व व्री°। २ ख. मुख्यज°। ३ ग. पश्या°। ४ घ. °वसीयते। य°। ५ घ. °वदेव भा°। ६ घ. °व स्वप्न°।

* द्वितीयाधिकरणमारचयति—

" नाडीपुरीतद्ब्रह्माणि विकल्पन्ते सुषुप्तये ।
समुच्चितानि वैकार्थ्याद्विकल्पन्ते यवादिवत् ।
समुच्चितानि नाडीभिरुपसृप्य पुरीतति ।
हृत्स्थब्रह्मणि यात्यैक्यं विकल्पे त्वष्टदोषता ।

" आसु तदा नाडीषु सृप्तो भवति " इति श्रुतौ सुषुप्तिकाले नाडीप्रवेशो गम्यते । " ताभिः प्रत्यवसृप्य पुरीतति शेते " इति श्रुतौ पुरीतदाश्रितत्वं प्रतीयते । " य एषोऽन्तर्हृदय आकाशस्तस्मिञ्शेते " इति श्रुत्यन्तरादाकाशशब्दवाच्यब्रह्माश्रितत्वं प्रतीयते । तान्येतानि नाड्यादिस्थानानि विकल्पितानि भवितुमर्हन्ति । एकप्रयोजनत्वात् । यथा व्रीहिभिर्यजेत यवैर्यजेतेत्यत्र पुरोडाशनिष्पादकत्वस्य प्रयोजनस्यैकत्वेन विकल्प आश्रितस्तथाऽत्रापि सुषुप्त्याख्यं प्रयोजनमेकम् । तस्मात्कदाचित्पुरीतति स्वपिति कदाचिन्नाडीषु स्वपिति कदाचिद्ब्रह्मणीति नाड्यादीनां विकल्पे प्राप्ते ब्रूमः—एकप्रयोजनत्वमसिद्धम् । पृथगुपयोगस्य सुवचत्वात् । तथा हि नाड्यस्तावच्चक्षुरादीन्द्रियेषु संचरतो जीवस्य हृदयनिष्ठं ब्रह्म गन्तुं मार्गभूता भविष्यन्ति । अत एव श्रुत्यन्तरे ताभिः प्रत्यवसृप्येति तृतीयया साधनत्वं नाडीनां श्रुतम् । हृदयवेष्टनरूपं तु पुरीतत्प्रासादादिवदावरकं भविष्यति । ब्रह्म तु मञ्चकवदाधारः । अतो यथा द्वारेण प्रविश्य प्रासादे पर्यङ्के शेते तथा नाडीभिः प्रत्यवसृप्य पुरीतति ब्रह्मणि जीवः शयिष्यत इत्युपकारभेदान्नाड्यादीनां समुच्चयः । सुषुप्तौ ब्रह्मणि जीवावस्थाने तु आधाराधेयभावो न प्रतिभातीति चेदेकीभावादिति ब्रूमः । यथा सोदकः कुम्भस्तटाकजले प्रक्षिप्तो मग्नः सन्पृथङ्न प्रतिभाति तथाऽन्तःकरणोपाधिको जीव आवरकाज्ञानमाहितो ब्रह्मणि मग्नत्वान्न पृथगवभासते । अत एव श्रुत्यन्तरे सुषुप्तौ जीवस्य ब्रह्मणा सह तादात्म्यसंपत्तिमाह—" सता सोम्य तदा संपन्नो भवति " इति । यस्तु विकल्पस्त्वयोक्तः सोऽष्टदोषग्रस्तत्वादनुपपन्नः । तथा हि—यदा जीवो नाडीषु शेते तदा पुरीतद्ब्रह्मवाक्ययोः प्राप्तं प्रामाण्यं परित्यक्तं स्यात् । अप्राप्तं चाप्रामाण्यं स्वीक्रियेत । यदा पुनः पुरीतद्ब्रह्मणोः शेते तदा पुरीतद्ब्रह्मवाक्ययोः पूर्वत्यक्तं प्रामाण्यं स्वीक्रियेत । पूर्वस्वीकृतं चाप्रामाण्यं परित्यज्येतेति प्राप्तपरित्यागोऽप्राप्तस्वीकारस्त्यक्तस्वीकारः स्वीकृ-

* तदभावो नाडीषु तच्छ्रुतेरात्मनि च—ब्र० सू० अ० ३ पा० २ अ० २ सू० ७ ।

१ क. ङ. °कल्पन्ते । २ क. घ. ङ. °कल्पयन्ते । ३ ख. ङ. सुप्तौ । ४ ग. °रात्त्वाका° । ५ ख. °त्वप्र° । ६ क. ग. ङ. °प्रदेशस्य । ७ ख. संचरन्त्यो । ८ ख. घ. °साद्यदाव° । ९ क. ख. ङ. °धारम् । अतो । १० ख. प्रतीयत इति । ११ ख. घ. स्तडागज° । १२ ख. मग्नो न पृथग्भाति° । मग्नो न पृथग्भाति । १३ क. ग. घ. ङ. °हिते ब्र° ।

तपरित्यागश्चेतिदोषचतुष्टयं पुरीतद्ब्रह्मवाक्यकोटौ। तथा नाडीवाक्यकोट्यामपि दोषचतुष्टये योजिते सत्यष्टौ दोषाः संपद्यन्ते। तस्मात्समुच्चय एव ग्राह्यो न तु विकल्पः।"

*तृतीयाधिकरणमारचयति—

"यः कोऽप्यनियमेनात्र बुध्यते सुप्त एव वा।
उदबिन्दोरिवाशक्तेर्नियन्तुं कोऽपि बुध्यते॥
कर्माविद्यापरिच्छेदादुदबिन्दुर्विलक्षणः।
स एव बुध्यते शास्त्रात्तदुपाधेः पुनर्भवात्॥

यथा समुद्रे प्रक्षिप्तो जलबिन्दुः स एव नियमेन पुनरुद्धर्तुमशक्यस्तथा सुषुप्तं ब्रह्मप्राप्तो यो जीवः स एव बुध्यत इति नियन्तुमशक्यत्वाद्यः कोऽपि बुध्यत इति प्राप्ते ब्रूमः—विषम उपन्यासः। चिद्रूपो जीवः कर्माविद्यावेष्टितो ब्रह्मणि निमज्जति उदबिन्दुस्त्ववेष्टित इति वैषम्यम्। यथा गङ्गोदकपरिपूर्णः पिहितद्वारः काचकुम्भः समुद्रे निक्षिप्तः पुनरुद्ध्रियते, तत्रत्यं गङ्गाजलं तदेव पुनर्विवेक्तुं शक्यते। तथा स एव जीवः प्रतिबुध्यताम्। अत एव श्रुतिराह—"व्याघ्रो वा सिंहो वा वृको वा वराहो वा कीटो वा पतङ्गो वा दंशो वा मशको वा यद्यद्भवन्ति तत्तत्तदा भवन्ति" इति व्याघ्रादयो ये जीवाः सुप्तेः पूर्वं यच्छरीरं प्राप्य वर्तन्ते त एव जीवाः सुप्तेरूर्ध्वं प्रतिबुध्यमानास्तदेव शरीरं प्राप्नुवन्तीत्यर्थः। न च सुषुप्तौ ब्रह्मप्राप्तस्य जीवस्य मुक्तवत्पुनरुद्भवानुपपत्तिः। तदवच्छेदकस्योपाधेः सत्त्वेन तदुद्भवे जीवोद्भवसंभवात्‌ तस्माद्यः सुप्तः स एव प्रतिबुध्यते"।

+चतुर्थाधिकरणमारचयति—

"किं मूर्छा जाग्रदादौ किंवाऽवस्थान्तरं भवेत्।
अन्यावस्था न प्रसिद्धा तेनैका जाग्रदादिषु॥
न जाग्रत्स्वप्नयोरेका द्वैताभावान्न सुप्तता।
मुखादिविकृतेस्तेनावस्थाऽन्या लोकसंमता॥

जाग्रत्स्वप्नसुषुप्तिभ्योऽन्यस्या अवस्थाया अप्रसिद्धत्वान्मूर्छाया जाग्रदादावन्तर्भाव इति प्राप्ते ब्रूमः—परिशेषादवस्थान्तरमभ्युपेयम्। न तावज्जाग्रत्स्वप्नयोरन्तर्भावो द्वैतप्रतीत्यभावान्नापि सुषुप्तौ विलक्षणत्वात्। सुषुप्तः पुमान्प्रसन्नवदनः समश्वासो निष्कम्पशरीरो भवति। मूर्छितस्तु विकृतमुखो विषमश्वासः शरीरकम्पादियुक्तो भवति। यद्यपि जाग्र

* स एव तु कर्मानुस्मृतिशब्दविधिभ्यः—ब्र० सू० अ० ३ पा० २ अ० ३ सू० ९। + मुग्धेऽर्धसंपत्तिः परिशेषात्—ब्र० सू० अ० ३ पा० २ अ० ४ सू० १०।

१ ख. ग. काञ्चनकुम्भः। २ म. ब. °न्ति तदा भवन्तीति। ३ ख. ग. सुषुप्ते°। ४ ब. °दावन्त°।

दादिवद्दैनंदिनत्वाभावान्न मूर्छाया बालकादिषु प्रसिद्धिरस्ति तथाऽपि कादाचित्कीं मूर्छावस्थां विज्ञाय वृद्धाश्चिकित्सन्ते। तस्मादन्येयमवस्था। तदेवमधिकरणचतुष्टयेन त्वंपदार्थः शोधितः। तत्र स्वप्नसृष्टेर्मिथ्यात्वेन सुखदुःखकर्तृत्वाद्यवभासेऽपि जीवोऽसङ्ग एवेति शोधितः। सुप्तौ ब्रह्मैक्येन तदेवासङ्गत्वमनुभावितम्। तस्यैव पुनः प्रतिबोधेनानित्यत्वशङ्का निराकृता। मूर्छाविचारेण श्वासादिसर्वव्यवहारलोपेऽपि मरणे जीवविनाशो न शङ्कनीय इति दर्शितम्"।

तदनुप्रविश्य। सच्च त्यच्चाभवत्। निरुक्तं चानिरुक्तं च। निलयनं चानिलयनं च। विज्ञानं चाविज्ञानं च। सत्यं चानृतं च सत्यमभवत्।

परमात्मनो देहे भोक्तृजीवरूपेण प्रवेशमुपजीव्य सद्भावं साधयित्वा भोग्यद्रव्याकारेणाप्येतत्साधयितुं तदाकारपरिणामं प्रदर्शयति—तदनुप्रविश्येत्यादिना। तत्सृष्टं देहजातं भोक्तृरूपेणानुप्रविश्यानन्तरं सदादिभोग्यवस्त्वाकारेण ब्रह्म परिणतमभूत्। सच्छब्देन प्रत्यक्षगम्यं पृथिव्यप्तेजोरूपं भूतत्रयमुच्यते। त्यच्छब्देन परोक्षं वाय्वाकाशरूपं भूतद्वयम्। बृहदारण्यके मूर्तामूर्तब्राह्मणे—"तदेतन्मूर्तं यदन्यद्वायोश्चान्तरिक्षाच्च" इति वाय्वाकाशव्यतिरिक्तस्य पृथिव्यादिभूतत्रयस्य मूर्तत्वमभिधाय "एतत्सत्" इति सच्छब्दवाच्यत्वं तस्योक्तम्। अथामूर्ते—"वायुश्चान्तरिक्षं च" इत्यभिधाय "एतत्त्यत्" इति त्यच्छब्दस्तत्र प्रयुक्तः। अतश्चाक्षुषत्वपरोक्षत्वाभ्यां विभक्तं यज्जगदस्ति तत्सर्वमत्र शब्दद्वयेनोपलक्ष्यते। चकारद्वयेन तयोरुभयोरभावौ समुच्चीयेते। एतच्चतुष्टयरूपेण ब्रह्म परिणतमभूत्। निःशेषेण वक्तुं शक्यं निरुक्तम्। घटोऽयं पुरोदेशवर्ती पृथुबुध्नोदराकारो मृन्मयः स्थूलो जलाधारक्षम इत्यादिना निःशेषेण वक्तुं शक्यते। तद्विपरीतमनिरुक्तम्। इक्षुक्षीरादिमाधुर्यावान्तरभेदः केतकीचम्पकादिगन्धावान्तरभेद इत्यादिकं सामान्याकारेणोच्यते। न तु निःशेषेण वक्तुं शक्यते। चकारौ पूर्ववत्। निलयनं नीडमाधारः पुष्पगुडादिः। तद्विपरीतमनिलयनम्। आधेयो गन्धरसादिः। विज्ञानं चेतनं गवाश्वादि। तद्विपरीतमविज्ञानमचेतनं काष्ठकुड्यपाषाणादि। सत्यं लोकव्यवहारे बाधरहितं शुक्तिरज्जुस्थाण्वादि। अनृतं तु व्यवहारदशायामारोपितं रजतसर्पचोरादि। एतैरुदाहरणैः शीतोष्णसुखदुःखमानावमानादिकः सर्वोऽपि जगद्विभाग उपलक्ष्यते। उपरितनसत्यशब्देन ब्रह्मोच्यते। सत्यं ज्ञानमित्यादिवाक्ये ब्रह्मणः सत्यश-

---

१ ख. ग. °ह्सन्ति। त°। २ ख. °स्वाद्याभा°। ३ ख °त्यतादाश°। ४ ख °शोधाऽऽज्ञ°। ५ ग. °गादिदं त°। ६ ख. °श्वादिः। त°। ७ ख. °णादिः। स°। ८ ख. °रादिः। ए°। ९ ख. जगद्व्यवहार। १० ग. ङ. °क्ष्यते।

ब्दार्थत्वावगमात् । सच्च त्यच्चेत्यादिजगद्विभागरूपेण ब्रह्मैव परिणतमभूत् । ब्रह्म सद्रूपं भवितुमर्हति भोग्याकारेण परिणतत्वात्क्षीरादिवदिति श्रुतेरभिप्रायः ।

यदिदं किंच । तत्सत्यमित्याचक्षते ।

ब्रह्मणः सद्भावं युक्तिभिः साधयित्वा विद्वदनुभवेनापि साधयति—यदिदं किंचेत्यादिना । भोक्तृभोग्यरूपं यत्किंचिदिदं जगद्दृश्यते तद्वस्तुतो जगन्न भवति किंतु सत्यमबाध्यं ब्रह्मेति विवेकिन आचक्षते । तस्माद्विद्वदनुभवसिद्धस्य ब्रह्मणोऽसत्त्वमयुक्तम् ।

तदप्येष श्लोको भवति ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यकेऽष्टमप्रपाठके षष्ठोऽनुवाकः ॥ ६ ॥

अथ सप्तमोऽनुवाकः ।

असद्वा इदमग्र आसीत् । ततो वै सदजायत । तदात्मान५ स्वयमकुरुत । तस्मात्तत्सुकृतमुच्यत इति ।

यथोक्तब्रह्मसद्भावप्रकाशकं मन्त्रमुदाहरति—तदप्येष इत्यादिना । इदं नामरूपाभ्यामभिव्यक्तं जगदुत्पत्तेः पूर्वमसदेवानभिव्यक्तमेवाऽऽसीत् । ततो वै तस्मादेवानभिव्यक्तनामरूपाद्ब्रह्मणः सदजायताभिव्यक्तनामरूपं जगदुत्पन्नम् । न चात्र पितुर्विभक्तः पुत्र इव ब्रह्मणो विभक्तं जगत् । किंतु तद्ब्रह्माऽऽत्मानं सच्चिदानन्दैकरसस्वरूपं स्वयं कर्त्रन्तरनैरपेक्ष्येणाकुरुत जगदाकारेण कृतवत् । न खलु जगदुपादानं मृत्तिकास्थानीयं कुलालस्थानीयं निमित्तं च किंचिद्ब्रह्मव्यतिरिक्तमस्ति किंतु ब्रह्मैवोभयस्थानीयम् । यस्मादेवं तस्मात्तद्ब्रह्म सुकृतमित्यनेन शब्देनोच्यते । सुशब्दोऽत्र स्वयंशब्दपर्यायः । कृतशब्दः कर्तृशब्दपर्यायः । सुकृतं स्वयं कर्तृ ब्रह्मेत्येवं शास्त्रीविद्भिरुच्यते । जीवास्तु न स्वयं कर्तारः किं त्वन्तर्यामिप्रेरिताः कुर्वन्ति "य आत्मानमन्तरो यमयति" "एष त आत्माऽन्तर्याम्यमृतः" "एष एव साधु कर्म कारयति" "केनापि देवेन हृदि स्थितेन यथा नियुक्तोऽस्मि तथा करोमि" इत्यादिश्रुतिस्मृतिभ्यः ।

यद्वै तत्सुकृतम् । रसो वै सः । रस५ ह्येवायं लब्ध्वाऽऽनन्दी भवति ।

स्वयंकर्तृत्वप्रसिद्धिरपि ब्रह्मणः सद्भावं साधयति । * अतः प्रकारान्तरेण तं साधयि

---

* एतदपेक्षयाऽन्यप्रकारेणेत्यर्थः ।

त्मानन्दरूपतामाह—यद्वैतदित्यादिना । यदेतत्पूर्वोक्तं सुकृतशब्दवाच्यं ब्रह्मास्ति स ब्रह्मपदार्थो रस एव । लोकेऽपि तृप्तिलक्षणस्याऽऽनन्दस्य हेतुर्मधुरादिपदार्थो रस इत्युच्यते । ब्रह्मापि कृतकृत्यत्वादिलक्षणस्य तत्त्वविदामानन्दस्य हेतुत्वाद्रसो भवति । रसनीयवेदान्तवाक्यजनितमनोवृत्तिज्ञानेनाऽऽस्वादनीयमिति ब्रह्मणो रसत्वम् । प्रीतिपुरःसरं रसग्रहणमास्वादनम् । ब्रह्म च जिज्ञासुभिः प्रीतिपूर्वकमेव गृह्यते । प्रीतिश्चाऽऽनन्दमन्तरेण न संभवति । तस्माद्रसशब्देन ब्रह्मण आनन्दरूपत्वमुच्यते । नन्वानन्दरूपत्वाभावेऽपि धर्मो जिज्ञासुभिः प्रीतिपूर्वकमेव गृह्यते । नैवम् । धर्मे मुख्यप्रीत्यभावात् । स्वर्गलक्षणसुखसाधनत्वोपाधिनैव हि धर्मे प्रीतिः । ब्रह्म तु स्वस्मादुत्तमस्य कस्यचित्सुखस्य साधनं न भवति । ततो मुख्यप्रीतिविषयत्वादानन्दरूपं ब्रह्म । तदेतदानन्दत्वं रसं ह्येवायमित्यादिनोपपाद्यते । अयं तत्त्ववित्पुरुषो रसं लब्ध्वा साक्षात्कृत्य धन्योऽस्मीत्येवमानन्दवान्भवति । तत्त्वविदो लौकिकः परितोषहेतुः स्रक्चन्दनवनितादिलाभो न भवति । किं त्वात्मलाभ एव । विरक्तस्य स्रगादौ लाभबुद्ध्यभावात् । " आत्मलाभान्न परं विद्यते " इत्यादिशास्त्रात् । तस्माद्विद्वत्परितोषहेत्वानन्दरूपत्वादपि ब्रह्मणः सत्त्वमभ्युपेयम् । हिशब्देन विद्वत्प्रसिद्धिरेव प्रदर्शिता ।

को ह्येवान्यात्कः प्राण्यात् । यदेष आकाश आनन्दो न स्यात् । एष ह्येवाऽऽनन्दयाति ।

किंच देहादिचेष्टावैषयिकानन्दहेतुत्वादपि ब्रह्मास्तीत्यभिप्रेत्य तदुभयहेतुत्वं दर्शयति—को ह्येवान्यादित्यादिना । आकाश इति सप्तम्यन्तः प्रथमान्तो वा । सप्तमीपक्षे गुहायां परमे व्योमन्नित्यत्राभिहितो योऽर्थः स एवात्रापि द्रष्टव्यः । प्रथमान्तत्वपक्षे त्वा समन्तात्काशते स्वप्रकाशत्वेनावभासत इत्याकाशः । तथाविध एष पूर्ववाक्ये रसत्वेनोक्त आत्मरूप आनन्दो यदि न स्यात्तदानीं को ह्येव को नाम कर्ता देहस्यान्तरन्याद्वागादीन्द्रियैश्चेष्टेत । अन चेष्टायामिति धातुः । को वा प्राण्यात्प्राणनकर्म श्वासं कुर्यात् । चक्षुरादीन्द्रियसाधनक्रियाकर्तृत्वमात्मन आथर्वणिका आमनन्ति—" एष हि द्रष्टा स्प्रष्टा श्रोता घ्राता रसयिता मन्ता बोद्धा कर्ता विज्ञानात्मा पुरुषः " इति । लोके प्राणसदसद्भावयोर्जन्ममरणदर्शनात्प्राण एवाऽऽत्मेति मूढप्रसिद्धिस्तामेवोपजीव्य बृहदारण्यके प्राणात्मत्ववादी बालाकिर्ब्रह्मात्मैवादिनाऽजातशत्रुणा सह संवादं चकार । ततोऽत्र दर्शनादिक्रियाणां कर्ता प्राण इति भ्रमं वारयितुं कः प्राण्यादिति पृथगुक्तिः । आनन्दात्मनोऽसत्त्वे प्राणेन साधनेन श्वासक्रियां कः कुर्यात् । प्राणस्य श्वासक्रियां प्रति करणत्वमेव कर्तृत्वं त्वात्मन इत्ययमर्थ उषस्तिब्राह्मणेऽपि स्पष्टमाम्नातः—" यः

१ घ. °नीयं वे° । २ ख. °स्मीत्याव° । ३ घ. °त्वत्ववा° ।

प्राणेन प्राणिति स त आत्मा सर्वान्तरः " इति । यद्यप्यसङ्गस्याऽऽनन्दात्मन इन्द्रियादिचेष्टाकर्तृत्वं स्वतो न संभवति तथाऽपि विज्ञानमयकोशोपाधिकस्य तत्संभवति । अतश्चेष्टाहेतुत्वादस्ति ब्रह्म । योऽयं चेष्टाहेतुरानन्दोऽस्त्येष एव सर्वान्प्राणिन आनन्दयाति पारितोषयति । अभीष्टविषयलाभे सति मनो विषयाभिमुख्यं परित्यज्य विषयान्तराभिलाषोदयात्पूर्वमन्तर्मुखं प्रत्यगात्मानन्दमनुभवति । सोऽयं लोके विषयानन्द इत्युच्यते । अत्र विवेकिजनप्रसिद्धिद्योतनार्थो हिशब्दः । अतस्तद्धेतुत्वादपि ब्रह्मास्तीत्यभ्युपगन्तव्यम् ।

यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते । अथ सोऽभयं गतो भवति ।

इत्थं कामयितृत्वादिभिर्हेतुभिर्ब्रह्मणः सद्भावसाधनादस्ति नास्ति वेत्ययं संशयो निराकृतः । अथ क्रमप्राप्तमविद्वद्विषयं संशयं बहुवक्तव्यसद्भावात्तावदवस्थाप्याऽऽदौ विद्वद्विषयं ब्रह्मप्राप्तिसंशयमपाकारोति—यदा ह्येवेत्यादिना । एष जिज्ञासुरेतस्मिन्सद्भावसाधनेन प्रवर्तते स्वानुभवगम्ये ब्रह्मणि प्रतिष्ठां स्वात्मैत्वबुद्धिदार्ढ्यं यदा लभते, अथ तदानीं स विद्वानभयं जन्ममरणादिभयरहितं मुक्तिपदं प्राप्नोति । एवशब्देन कालविलम्बो व्यावर्त्यते । यदा जानाति तदैव प्राप्नोति । अस्मिन्नर्थे विद्वत्प्रसिद्धिं हिशब्दो दर्शयति । अदृश्यादिविशेषणैश्चतुर्भिर्ब्रह्म विशिष्यते । चक्षुरादीन्द्रियैरगम्यत्वाददृश्यम् । अत एव कठैराम्नायते—" नैव वाचा न मनसा प्राप्तुं शक्यो न चक्षुषा " इति । आत्म्यमात्मीयं लिङ्गं तद्रहितमनात्म्यमनुमानेनाप्यगम्यमित्यर्थः । एतदप्यन्यत्राऽऽम्नातम्—"निर्विकल्पमनन्तं च हेतुदृष्टान्तवर्जितम् " इति । यद्यपि शरीरत्रयं जीवात्मसंबन्धिलिङ्गं जगत्कर्तृत्वमीश्वरलिङ्गं तथाऽपि निष्प्रपञ्चब्रह्मात्मतत्त्वस्य साधने न किंचिल्लिङ्गमस्ति । निःशेषेण वक्तुं शक्यं निरुक्तं तद्विपरीतमनिरुक्तम् । न ब्रह्मतत्त्वस्याभिधायकः कश्चिच्छब्दोऽस्ति " यतो वाचो निवर्तन्ते " इति श्रुतेः । अदृश्यत्वादिभिस्त्रिभिर्विशेषणैः प्रत्यक्षानुमानागमगम्यत्वं निराकृतम् । तावता कृत्स्नकार्यप्रपञ्चवैलक्षण्यं सिद्धम् । अनिलयनमनाधारम् "स भगवः कस्मिन्प्रतिष्ठित इति स्वे महिम्नि" इति श्रुत्यन्तरात् । मूलाज्ञानस्य प्रमाणत्रयगम्यत्वाभावेऽपि ब्रह्मण्याश्रितत्वात्साधारत्वमस्तीति तद्वैलक्षण्यार्थमनिलयनमित्युच्यते । अभयं प्रतिष्ठामित्यभयशब्देन द्वैतराहित्यमित्युच्यते । बिभेत्यस्मादिति व्युत्पत्त्या भयं ब्रह्मव्यतिरिक्तं वस्तु कथ्यते " द्वितीयाद्वै भयं भवति " इति श्रुत्यन्तरात् । अहमन्यो ब्रह्मान्यदित्येतादृशं द्वैतं भयं तद्रहितमभयं तद्यथा भवति तथा प्रतिष्ठां लभत इति योजनीयम् ।

१ घ. °गान° । २ ख. °त्मनु° । ३ घ. प्राप्तो भवति । ४ ग. °णग° । ५ क. ख. ग. ङ. °त्यनुष्य° ।

**यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते । अथ तस्य भयं भवति ।**

विदुषो ब्रह्मप्राप्तिनिश्चयेन यथा संशयो निराकृत एवमविदुषो ब्रह्मप्राप्त्यभावनिश्चयेन संशयमपाकरोति—**यदा ह्येवैष** इत्यादिना । उच्छब्दोऽपिशब्दार्थे वर्तते । अरशब्दोऽल्पवाची । अन्तरशब्दो भेदवाची । एष लौकिकः पुमानेतस्मिन्ब्रह्मण्यल्पमपि भेदं स्वातिरिक्तत्वं **यदा कुरुते** । स्वस्माद्भेदेन ब्रह्म पश्यति तदैव तस्य जन्ममरणादिसंसारभयं **भवति** । जीवब्रह्मभेदस्य,वास्तवत्वाभावाभिप्रायेणाल्पमपीत्युक्तम् । भेददर्शिनः संसारप्राप्तौ श्रुत्यन्तरसिद्धिं हिशब्देन दर्शयति । " मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति " " ब्रह्म तं परादाद्योऽन्यत्राऽऽत्मनो ब्रह्म वेद " इत्याद्याः श्रुतयो द्रष्टव्याः ।

ननु यः पुमान्कर्मकाण्डार्थमुपास्यं सगुणं ब्रह्म वा जानाति तस्यापि विद्यावत्त्वेन निर्गुणब्रह्मज्ञानिवन्मुक्तिः स्यादित्याशङ्क्य निराचष्टे—

**तत्त्वेव भयं विदुषोऽमन्वानस्य, इति ।**

तुशब्दो मुक्तिशङ्कां निवर्तयति । **विदुषोऽप्यमन्वानस्य** ब्रह्मतत्त्वमजानतो भेददर्शित्वात्तदेव भयमत्यन्तमूढस्येव जन्ममरणसंसारभयं भवति ।

**तदप्येष श्लोको भवति ॥**

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यकेऽष्टमप्रपाठके सप्तमोऽनुवाकः ॥ ७ ॥

अथाष्टमोऽनुवाकः ।

**भीषाऽस्माद्वातः पवते । भीषोदेति सूर्यः । भीषाऽस्मादग्निश्चेन्द्रश्च । मृत्युर्धावति पञ्चम इति ।**

विद्यान्तरयुक्तस्यापि ब्रह्मतत्त्वज्ञानरहितस्य भयमित्यस्मिन्नर्थे श्लोकमुदाहरति—**तदप्येष** इत्यादिना । यः पूर्वजन्मनि प्रकृष्टे ज्ञानकर्मणी अनुष्ठायास्मिञ्जन्मनि वायुदेवत्वेनोत्पन्नः सोऽयं तथाविधमहिमोपेतोऽपि देवोऽपि **अस्मादन्तर्यामिरूपाद्ब्रह्मणो भीषा** भयेन **पवते** । निरन्तरमनलसः संचरति । एवं सूर्यादिषु योजनीयम् । अग्निरिन्द्रश्च स्वव्यापारं कुरुत इति शेषः । उक्तदेवताचतुष्टयापेक्षया **मृत्योः पञ्चमत्वम्** । स च क्षीणायुषः प्राणिनो मारयितुं तत्र तत्र सदा **धावति** । यद्यप्यसङ्गस्य ... णस्य ब्रह्मणो भयहेतुत्वं नास्ति तथाऽपि मायोपाधिकस्यान्तर्यामित्वेन तत्संभवति ।

---

१ ख. °र्थे ।

तदुक्तं वार्तिककारैः—" नियम्यकार्यमापेक्ष्य नियन्तैष तमोवधिः " इति । श्रुत्यन्तरं च—" यो वायुमन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः । एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः " इत्यादिकमुदाहार्यम् ।

अस्य च भयहेतोर्नियामकस्यान्तर्यामिणो ब्रह्मत्वं प्रथमाध्यायस्य द्वितीयपादे* चिन्तितम्—

" प्रधानं जीव ईशो वा कोऽन्तर्यामी जगत्प्रति ।
कारणत्वात्प्रधानं स्याज्जीवो वा कर्मणो मुखात् ॥
जीवैकत्वामृतत्वादेरन्तर्यामी परेश्वरः ।
द्रष्टृत्वादेर्न प्रधानं न जीवोऽपि नियम्यतः ॥

बृहदारण्यके पञ्चमाध्याये याज्ञवल्क्य उद्दालकं प्रत्याह—" यः पृथिव्यां तिष्ठन्पृथिव्या अन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः " इति । तत्र पृथिव्यादिजगत्प्रति योऽन्तर्यामी श्रूयते तस्मिन्नेष संशये सति प्रधानमिति प्राप्तम् । तस्य सकलजगदुपादानत्वेन स्वकार्यं प्रति नियामकत्वसंभवात् । अथवा जीवोऽन्तर्यामी । स हि धर्माधर्मरूपं कर्मानुष्ठितवान् । तच्च कर्म स्वफलदानाय फलभोगसाधनं जगदुत्पादयति । अतः कर्मद्वारा जगदुत्पादकत्वाज्जीवोऽन्तर्यामीति प्राप्ते ब्रूमः—" एष त आत्माऽन्तर्याम्यमृतः " इत्यन्तर्यामिणो जीवतादात्म्यममृतत्वं च श्रूयते । तथा पृथिव्यन्तरिक्षादिषु सर्ववस्तुष्वन्तर्यामित्वोपदेशेन सर्वव्यापित्वं प्रतीयते । तेभ्यो हेतुभ्योऽन्तर्यामी परमेश्वरः । न च प्रधानस्यान्तर्यामित्वं संभवति, " अदृष्टो द्रष्टाऽश्रुतः श्रोता " इति द्रष्टृत्वश्रोतृत्वाद्यवगमात् । अचेतनस्य प्रधानस्य तदसंभवात् । नापि जीवोऽन्तर्यामी " य आत्मानमन्तरो यमयति " इति जीवस्य नियम्यत्वश्रवणात् । तस्मादन्तर्यामी परमेश्वरः । एतस्माद्भयमज्ञानिन एव । न तत्त्वविदः " ।

तदेवं सर्वेषां प्रश्नानामुत्तरं संपन्नम् । पूर्वत्र यदुक्तं " सोऽश्नुते सर्वान्कामान्सह " इति, यदपि "रसो वै सः" इत्यानन्दरूपत्वं सूत्रितं तदुभयं निर्णेतुं विचारमवतारयति—

सैषाऽऽनन्दस्य मीमांसा भवति, इति ।

तच्छब्देन मीमांसायाः श्रुत्यन्तरप्रसिद्धिः प्रदर्श्यते । बृहदारण्यके हि—" स यो मनुष्याणां राद्धः समृद्धो भवत्यन्येषामधिपतिः सर्वैर्मानुष्यकैर्भोगैः संपन्नतमः स मनुष्याणां परम आनन्दः " इत्यादिनाऽऽनन्दनिर्णयः प्रपञ्चितः । राद्धो देहेन्द्रिय

* अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशात्—ब्र० सू० अ० १ पा० २ अ० ५ सू० १८ ।

१ ग. तस्य । २ ख. °रमावतारयति । घ. °रय° । ३ ख. °त्यान° ।

पाटवलक्षणसिद्ध्युपेतः। सम्ब्रुद्धो विद्यादिगुणसंपन्नः। एतच्छब्देनानन्तरग्रन्थे वक्ष्यमाणतां दर्शयति। किमयं ब्रह्मानन्दो लौकिकानन्दवद्विषयविषयिसंबन्धेन जन्यत आहोस्वित्स्वाभाविक इत्येषा मीमांसा प्रवर्तते।

तत्र स्वाभाविकं ब्रह्मानन्दं विवेक्तुं द्वारभूता अन्ये विषयानन्दाः क्रमेणोपन्यस्यन्ते। एतेषां ब्रह्मानन्दलेशत्वान्निश्चयद्वारत्वमुपपन्नम्। तल्लेशत्वं चैवं द्रष्टव्यम्। अविद्यया विवेके तिरस्क्रियमाणे सत्युत्कृष्यमाणायां चाविद्यायां हिरण्यगर्भमारभ्य मनुष्यपर्यन्तेषु जीवेषु ब्रह्मानन्दस्तत्तत्कर्मवशाद्विषयादिसाधनसंबन्धवशाच्च यथाविज्ञानं भाव्यमानतयाऽपक्षीयमाणश्चलो व्यवस्थितो लौकिकः संपद्यते। स एव पुनरविद्याकामकर्मप्रकर्षेण मनुष्यगन्धर्वादिषु हिरण्यगर्भपर्यन्तमुत्तरोत्तरभूमिषु शतगुणोत्कर्षयुक्तोऽकामहतविद्वच्छ्रोत्रियप्रत्यक्षो विभाव्यते। विद्यया त्वविद्याकृते विषयविषयिविभागे निवृत्ते सति स्वाभाविकः परिपूर्ण एक एवाऽऽत्मानन्दोऽवतिष्ठते। तस्य द्वारभूतेषु विषयानन्देष्वस्मत्प्रसिद्धमानन्दमादौ तावद्दर्शयति—

**युवा स्यात्साधुयुवाऽध्यायकः। आशिष्ठो दृढिष्ठो बलिष्ठः। तस्येयं पृथिवी सर्वा वित्तस्य पूर्णा स्यात्। स एको मानुष आनन्दः, इति।**

मनुष्यस्य बाल्ये विषयगुणानभिज्ञत्वात्स्रक्चन्दनवनितादिविषयानन्दो नास्ति। वार्धके तदभिज्ञत्वेऽपि भोक्तुमसमर्थत्वादसौ नास्ति। अतो यौवनमेव परिशिष्यत इत्यभिप्रेत्य युवा स्यादित्युक्तम्। यौवनेऽपि कुरूपत्वक्रोधादिग्रस्तस्य दुःखबाहुल्यात्तद्वारणाय साधुयुवेत्युच्यते। तादृशस्यापि चतुःषष्टिकलासु चतुर्दशविद्यास्वेकस्या अप्यभावे दुःखं भवेदिति तद्व्यावृत्त्यर्थमध्यायक इत्युक्तम्। विद्यावतोऽपि कार्येषु मन्दप्रवृत्तेरग्निमान्द्यादिना भोजनादौ रुचिहीनस्य वा सुखं न भवतीति तन्निवृत्त्यर्थमाशिष्ठ इत्युक्तम्। आशुतमः सर्वकार्येषु शीघ्रं प्रवर्तत इत्यर्थः। यद्वा सर्वेषु भोज्यद्रव्येषु रुचिबाहुल्येऽऽशितृतमः। ईदृशस्यापि मनोदार्ढ्याभावे सति न युद्धादौ धृतिः स्यादिति तद्वारणाय दृढिष्ठ इत्युक्तम्। धैर्ययुक्तोऽपि शारीरबलहीनोऽश्वारोहणादावक्षमः स्यादिति वारयितुं बलिष्ठ इत्युक्तम्। एतावता भोक्तृत्वसंपत्तिरुक्ता। तस्येयमिति भोग्यसंपत्तिरुच्यते। चतुर्दिक्षु समुद्रवेष्टिता या पृथिवी सा सर्वाऽपि वित्तस्य पूर्णा भोग्यद्रव्यजातेन पूरिता। एतच्चान्येषामधिपतिरित्यादिकस्य श्रुत्यन्तरोक्तस्योपलक्षणम्। यदि सार्वभौमस्यैतत्सर्वं संभवेत्तदानीमयं मानुष आनन्दो भवति। इतोऽर्वाचीनेषु दुःखमिश्रत्वादानन्दा एव न संभवन्ति। न खलु कश्चिदपि मनुष्यो यथोक्तसा-

१ ख. °स्वतनि°। २ क. ङ °लोऽव°। ३ ख. °पक्षो°। ४ ख. °यासु चैक°। ५. तद्वारणाय।

र्वभौमादन्यः क्वचिदपि सर्वतस्तृप्तिमानुपलभ्यते । आनन्दो नाम तृप्तिः । तस्याः काञ्चि-द्विषयाभिलाषो विरोधी । स चालब्धे विषये कस्यचित्कस्मिंश्चिदवश्यं संभवत्येव । सार्वभौमस्य तु सर्वविषयाणां मनुष्यलोकवर्तिनां लब्धत्वेन विरोध्यभावान्निर्विघ्ना तृप्ति-रभिव्यज्यते ।

एवं च सति यावद्यावदभिलाषनिवृत्तिरुत्कृष्टा भवति तावत्तावदानन्दोऽप्युत्कृष्यते । एतदेवाभिप्रेत्य पूर्वोक्तादानन्दादधिकमुदाहरति—

**ते ये शतं मानुषा आनन्दाः ( १ ) । स एको मनुष्य-गन्धर्वाणामानन्दः । श्रोत्रियस्य चाकामहतस्य, इति ।**

ते पूर्वोक्ताः सार्वभौमनिष्ठा **मानुषा आनन्दाः** शतसंख्याका ये सन्ति सोऽयमा-नन्दसंघो **मनुष्यगन्धर्वाणामेक आनन्दो** भवति । शतसंख्याकेषु सार्वभौमेषु यावती तृप्तिस्तावती मनुष्यगन्धर्वस्यैकस्य विद्यते । अस्मिन्कल्पे मनुष्याः सन्तो विद्याकर्मवि-शेषानुष्ठानेन गन्धर्वत्वं प्राप्ता मनुष्यगन्धर्वाः । ते ह्यन्तर्धानादिशक्तियोगेन मनुष्येभ्य उत्कृष्टाः ।

स चोत्कर्षो वार्तिके दर्शितः—

"सुगन्धिनः कामरूपा अन्तर्धानादिशक्तयः ।
नृत्यगीतादिकुशला गन्धर्वाः स्युर्नृलौकिकाः" ॥ इति ।

ततस्तेषां मनुष्यवदानन्दप्रतिघातः प्रायेण नास्ति । कदाचित्प्रसक्तस्यापि परिहारार्थं साधनसंपत्तिरस्ति । तथा सति चित्तप्रसादविशेषात्सुखविशेषाभिव्यक्तिरुपपद्यते । सार्व-भौमस्य मनुष्यत्वेन तदीयस्याऽऽनन्दस्यास्माभिरपेक्षितुं शक्यत्वान्न तत्र श्रोत्रिय उदा-हृतः । मनुष्यगन्धर्वास्त्वन्तरिक्षलोकवासिनः "यक्षगन्धर्वाप्सरोगणसेवितमन्तरि-क्षम्" इति श्रुत्यन्तरात् । अतस्तदीयस्याऽऽनन्दस्याप्रसिद्धत्वात्तत्प्रसिद्धिं मनुष्यलोके दर्शयितुं श्रोत्रिय उदाह्रियते । "श्रोत्रियंश्छन्दोऽधीते" इति पाणिनिना सूत्रित-त्वात् । स हि सर्वेषु लोकेषु वर्तमानस्याऽऽनन्दहेतोर्विषयस्य भोगे प्रयाससाध्यत्वसा-तिशयत्वानित्यत्वदोषाञ्शास्त्रानुभवाभ्यां निश्चित्य तत्र निष्कामो भवति । तथा सति मनुष्यगन्धर्वलोकगतान्विषयान्भुञ्जानस्य यावानानन्दस्तावानकामहतवेदविच्छ्रोत्रिय-स्यापि विद्यते । अकामहतत्वं तु गन्धर्वलोकानभिज्ञस्य मूढस्येदानीं विद्यमानमपि कालान्तरेण शास्त्रादभिजानानस्य तल्लोकभोगेच्छायामुत्पन्नायां निवर्तते । श्रोत्रियस्य तु तद्दोषदर्शिनः कदाचिदपि कामानुत्पत्तेरकामहतत्वं सुस्थितम् । ननु गन्धर्वस्य नृत्यगीतादिभिस्तदा कदाचित्तद्वृत्त्युल्लासलक्षणो हर्षशब्दाभिधेय आनन्द उप-

१ ग. व. मृचगी° । २ ग. व. नृचगी° ।

द्यते । न त्वसावकामहतस्य श्रोत्रियस्य विद्यत इति चेन्मा भूदयं हर्षः । तस्य क्षणिकत्वेन चित्तविकारत्वेन च मुख्यानन्दत्वाभावाद्विषयप्राप्त्या तदिच्छायां निवृत्तायां हर्षादिविकारेषु च शान्तेषु या तृप्तिर्भङ्गिरनुगच्छेत्यसौ च मुख्यानन्दः ।

तथा च स्मर्यते—

"यच्च कामसुखं लोके यच्च दिव्यं महत्सुखम् ।
तृष्णाक्षयसुखस्यैते नार्हतः षोडशीं कलाम्" ॥ इति ।

तृप्तिरूपश्चाऽऽनन्दो गन्धर्वेण समानोऽकामहतस्य श्रोत्रियस्य विद्यते। यथोक्तपर्यायद्वयमुत्तरेष्वपि पर्यायेषु चित्तस्य प्रसादातिशयमनुसृत्य तृप्तिलक्षणस्याऽऽनन्दस्याऽऽविर्भावातिशयो व्याख्येयः ।

तत्र तृतीयपर्यायमाह—

ते ये शतं मनुष्यगन्धर्वाणामानन्दाः । स एको देवगन्धर्वाणामानन्दः । श्रोत्रियस्य चाकामहतस्य, इति ।

सृष्टिकाल एव देवलोके समुत्पन्ना गायका देवगन्धर्वाः ।

चतुर्थं पर्यायमाह—

ते ये शतं देवगन्धर्वाणामानन्दाः । स एकः पितृणां चिरलोकलोकानामानन्दः । श्रोत्रियस्य चाकामहतस्य, इति ।

चिरकालस्थायी यो लोकस्तमालोकयन्त इति चिरलोकलोकाः ।

पञ्चमं पर्यायमाह—

ते ये शतं पितृणां चिरलोकलोकानामानन्दाः ।
स एक आजानजानां देवानामानन्दः ।
( २ ) । श्रोत्रियस्य चाकामहतस्य, इति ।

पितृलोकादूर्ध्वभावी कश्चिदाजानाख्यो देवलोकविशेषस्तत्रोत्पन्ना आजानजाः ।

षष्ठं पर्यायमाह—

ते ये शतमाजानजानां देवानामानन्दाः । स एकः कर्मदेवानां देवानामानन्दः । ये कर्मणा देवानपियन्ति । श्रोत्रियस्य चाकामहतस्य, इति ।

---

१ ख. °भङ्ग्यनु° । २ ग. घ. °च्छति सैव मु° । ३ ख. घ. °ञ्चमप° ।

आजानजदेवभोगादप्युत्तमं भोगं प्राप्तुं ये वैदिकं कर्मविशेषमनुष्ठाय देवान्प्राप्नुवन्ति ते कर्मदेवाख्या देवाः ।

सप्तमं पर्यायमाह—

ते ये शतं कर्मदेवानां देवानामानन्दाः । स एको देवानामानन्दः । श्रोत्रियस्य चाकामहतस्य, इति ।

त्रयस्त्रिंशद्धविर्भुजोऽत्र देवशब्देन विवक्षिताः ।

अष्टमं पर्यायमाह—

ते ये शतं देवानामानन्दाः । स एक इन्द्रस्याऽऽनन्दः ( ३ ) । श्रोत्रियस्य चाकामहतस्य, इति ।

इन्द्रो हविर्भुजां स्वामी ।

नवमं पर्यायमाह—

ते ये शतमिन्द्रस्याऽऽनन्दाः । स एको बृहस्पतेरानन्दः । श्रोत्रियस्य चाकामहतस्य, इति ।

बृहस्पतिरिन्द्रस्याऽऽचार्यः ।

दशमं पर्यायमाह—

ते ये शतं बृहस्पतेरानन्दाः । स एकः प्रजापतेरानन्दः । श्रोत्रियस्य चाकामहतस्य, इति ।

प्रजापतिर्विराट्पुरुषः ।

एकादशं पर्यायमाह—

ते ये शतं प्रजापतेरानन्दाः । स एको ब्रह्मण आनन्दः । श्रोत्रियस्य चाकामहतस्य (४), इति ।

ब्रह्मा हिरण्यगर्भः कृत्स्नसंसारमण्डलव्यापी समष्टिव्यष्टिरूपः सूत्रात्मा । स च शरीरिणां मध्ये प्रथमः " हिरण्यगर्भः समवर्तताग्रे " इति श्रुतेः ।

" स वै शरीरी प्रथमः स वै पुरुष उच्यते ।
आदिकर्ता स भूतानां ब्रह्माऽग्रे समवर्तत " ॥ इति स्मृतेश्च ।

तेन सांसारिक आनन्दोत्कर्षस्तत्र विश्राम्यति । उक्तरीत्या श्रोत्रिये सर्वेषामानन्दानां सद्भावेन सोऽश्नुते सर्वान्कामान्सहेत्ययमर्थ उपपादितो भवति ।

१ क. ख. घ. ङ. °नदे° । २ घ. अतः ।

तदेवं परमानन्दद्वारभूतः सांसारिक आनन्दोत्कर्ष आगमेन श्रोत्रियप्रत्यक्षेण चोदाहृतः । अथ बोधनीयं ब्रह्मानन्दं दर्शयति—

**स यश्चायं पुरुषे । यश्चासावादित्ये । स एकः**, इति ।

पुरुषशब्देन बुभुत्सुर्मनुष्यो विवक्षितः । तस्मिन्कश्चिदानन्दो विद्यते । तत्सद्भावे यौक्तिकप्रसिद्धिरनुभवप्रसिद्धिश्च सोऽयमित्येताभ्यां पदाभ्यां क्रमेण निर्दिश्यते । तत्र यौक्तिकप्रसिद्धिः श्रुत्यन्तरे प्रपञ्चिता—"आत्मनस्तु कामाय सर्वं प्रियं भवति" इति प्रतिज्ञाय पुत्रवित्तादिरूपस्य सर्वस्य भोग्यजातस्याऽऽत्मशेषतया प्रियत्वे सत्यात्मनः परप्रीतिविषयत्वेनाऽऽनन्दरूपत्वमुपपादितं भवति । तथा सर्वदाऽहं भूयासं कदाचिदपि ममासत्त्वं मा भूदित्येवमात्मन आनन्दरूपत्वं सर्वैः प्राणिभिरनुभूयते । चकारो बुभुत्सुसजातीयप्राण्यन्तर्गतानन्दसमुच्चयार्थः । तेनाऽऽध्यात्मिक आधिभौतिकश्च सर्वोऽप्यानन्दः संगृहीतो भवति । वेदे प्रायेणास्माल्लोकादमुं लोकमित्यादाविदमदःशब्दौ प्रत्यक्षपरोक्षवाचकौ । ततोऽत्राप्यस्माकं परोक्ष आदित्यदेहेऽवस्थित आनन्दोऽसावित्यनेन शब्देन विवक्षितः । चकार आदित्यसजातीयदेवतान्तरगतानन्दसमुच्चयार्थः । तेनाऽऽधिदैविकः सर्वोऽप्यानन्दः संगृहीतो भवति । एवं च सत्यध्यात्ममधिभूतमधिदैवं च सर्वेषूपाधिषु योऽयमानन्दोऽस्ति स सर्वोऽपि स्वरूपेणैक एव न तु भिद्यते । मानुषानन्दो देवानन्द इत्येव[illegible] प्रतीकार [illegible]धिविशे[illegible]रमेव हि भेदः प्रतीयते । यथा घटाकाशो मठाकाश इत्येवमु[illegible]विवित्स उपसं[illegible]दस्तद्वत्सर्वोऽयमखण्डैकरसो ब्रह्मानन्दस्तदीयो हिरण्यगर्भादिस्थावरान्तोपाधिकृतश्च भेदः श्रुत्यन्तरे विस्पष्टमाम्नातः—"एषोऽस्य परम आनन्द एतस्यैवाऽऽनन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति" इति । यस्याखण्डैकरसस्यास्य समुद्रस्थानीयस्याऽऽनन्दस्य बिन्दुस्थानीया हिरण्यगर्भाद्यानन्दाः सोऽयमेक आनन्दो बुभुत्सुभिर्बोद्धव्य इत्येवं मीमांसया निर्णयः संपन्नः ।

यथोक्तानन्दवेदनस्य फलं दर्शयति—

**स य एवंवित् । अस्माल्लोकात्प्रेत्य । एतमन्नमयमात्मानमुपसंक्रामति । एतं प्राणमयमात्मानमुपसंक्रामति । एतं मनोमयमात्मानमुपसंक्रामति । एतं विज्ञानमयमात्मानमुपसंक्रामति । एतमानन्दमयमात्मानमुपसंक्रामति**, इति ।

यः पुमानेवमुक्तप्रकारेण निजानन्दं वेत्ति स पुमाननेनैव क्रमेण तमानन्दं प्राप्नोति । सत्यज्ञानादिलक्षणं ब्रह्म स्वकीयमायाशक्तिवशादाकाशादिकमस्मद्देहान्तं जगत्सृष्ट्वा

१ ग. °त्वेना° । २ ख. °खण्डर° ।

देहादिपञ्चकोशरूपायां गुहायां प्रविष्टमिवाभ्यन्तरे निरुपाधिकरूपेण साक्षात्कारयोग्यं सदवतिष्ठते । तच्चाखण्डैकरसं परमानन्दस्वरूपमित्ययमुक्तप्रकारः । तेन प्रकारेण विदितवत आनन्दप्राप्तौ क्रमोऽभिधीयते । भोक्ता भोग्यं चेति द्विविधं जगद्ब्रह्मणा सृष्टम् । तत्र प्रत्यक्चैतन्यरूपमात्मानमारभ्य देहपर्यन्तोऽहंप्रत्ययगम्यो जगद्भागो भोक्ता । देहाद्बहिरिदंप्रत्ययेनावलोक्यमानः पुत्रभार्यादिरूपो जगद्भागो भोग्यः । तत्र यद्यप्यात्मव्यवहारोऽस्ति तदीयसुखदुःखयोरहं सुखी दुःखीत्येवं सर्वैरभिगम्यमानत्वात्, तथाऽपि पुत्रादिषु स्वस्माद्भेदस्य विस्पष्टं भासमानत्वाद्गौणमेवाऽऽत्मत्वं न तु मुख्यमित्यभिप्रेत्य श्रुतिस्तत्राऽऽत्मत्वबुद्धिं निवारयितुमन्नमयमात्मानमुपदिदेश । बुभुत्सुरपि तदेतदवगम्यास्माल्लोकादिदंप्रत्ययेनावलोक्यमानात्पुत्रादेः प्रेत्य प्रत्यावृत्य तत्र निरपेक्षो भूत्वाऽन्नमयं श्रुतिबोधितमेतमुपसंक्रामति प्राप्नोति । पुत्रादिसुखदुःखयोः स्वकीयत्वाभिमानं परित्यज्यान्नमयमात्रे पर्यवस्यतीत्यर्थः । एवं क्रमेण प्राणमयाद्युपसंक्रमणं द्रष्टव्यम् । आनन्दमयमुपसंक्रम्य तत्रापि प्रियादिचतुष्टयं क्रमेण परित्यज्य ब्रह्म पुच्छमित्युक्तेऽखण्डैकरसानन्दे पर्यवस्यतीत्यर्थः । नन्वेवंविच्छब्देन किं परमात्मा विवक्षितः किंवा ततोऽन्यः कश्चित् । नाऽऽद्यः । तस्य वेदितव्यत्वेन वेदितृत्वानुपपत्तेः । न द्वितीयः । तत्त्वमस्यादिश्रुतिविरोधात् । नैष दोषः । परमात्मन एव देहेन्द्रियाद्युपाधिविशिष्टत्वाकारेण वेदितृत्वमखण्डैकरसानन्दरूपत्वेन वेद्यत्वमित्युभयोपपत्तेः । ननु य एतेरानन्दाः । संक्रमतीति श्रूयते । संक्रमणं नाम दृढसंयोगरूपप्राप्तिः । जलूका तृणे संक्रामतीत्यादौ तथा दृष्टत्वात् । न हि देहेन्द्रियाद्युपाधिविशिष्टस्य वेदितुरन्नमयादिषु यथोक्तसंक्रमणं संभवतीति चेन्न । संक्रमशब्देनात्र भ्रान्तिविनाशलक्षणस्य विद्याफलस्य विवक्षितत्वात् । तथा च भाष्यकारैरुक्तम्—"एतास्मिन्नविद्याविभ्रमनाशे संक्रमशब्द उपचर्यते" इति । न हि मुख्यसंक्रमणस्य वेदनमात्रं साधनं भवति । कज्जलमयमित्यादिज्ञानमात्रेण तत्संक्रमणादर्शनात् । अस्माल्लोकात्प्रेत्येत्यनेनैव वाक्येन प्रथमपर्याये बाह्यपुत्रादिविषयभ्रान्तिनाशोऽभिहित इति चेदेवं तर्ह्यन्नमयसंक्रमणोक्त्या पुत्रादिभ्रमस्य पुनरनुत्पत्तिर्विवक्ष्यताम् । अत एवास्माभिर्देहमात्रे पर्यवस्यतीति संक्रमणाभिप्रायोऽभिहितः । अनेनैव न्यायेन प्राणमयात्मवेदने सत्यन्नमयात्मत्वभ्रमस्य विनष्टस्य पुनरनुत्पत्तिः प्राणमयसंक्रमणम् । एवमुत्तरत्रापि द्रष्टव्यम् । अन्नमयादिषु मुख्यात्मत्वाभावेऽप्यहंप्रत्ययगम्यत्वलक्षणं भ्रान्तिप्रतीतमात्मत्वमभ्युपेत्यान्नमयमात्मानमित्यात्मशब्दः प्रयुक्तः । आनन्दमयकोशगतस्य प्रियाद्यवयवचतुष्टयस्याऽऽनन्दे मुख्यानन्दब्रह्मण्यवाङ्मनसगोचरत्वमभिप्रेत्य विद्यमानमपि तत्संक्रमणं श्रुत्या नोक्तम् ।

१ ग, स्पष्टं । २ ग. °योः स्वीकृतत्वा° । ३ ख °मणञ्च° । ४ म. °मणे त्वया प° ।

अथाभिप्रेतमवाङ्मनसगोचरत्वं स्पष्टीकर्तुं श्लोकमुदाहरति—

**तदप्येष श्लोको भवति ॥**

**इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यकेऽष्टमप्रपाठकेऽष्टमोऽनुवाकः ॥ ८ ॥**

अथ नवमोऽनुवाकः ।

**यतो वाचो निवर्तन्ते । अप्राप्य मनसा सह । आनन्दं ब्रह्मणो विद्वान् । न बिभेति कुतश्चनेति, इति ।**

मनोमयप्रस्तावश्लोके व्याख्यातं तदनुसंधेयम् । किंच वाचोऽभिधायकाः शब्दास्ते [।] सविकल्पेषु वस्तुषु व्युत्पन्नाः । प्रयोक्तृभिस्तु वस्तुत्वसामान्यान्निर्विकल्पेऽपि ब्रह्मणि [प्र]काशनाय प्रयुज्यमाना अप्यनभिधाय निवर्तन्ते । स्वकीयादभिधानसामर्थ्याद्धीयन्ते । [म]नश्चातीन्द्रियार्थे शब्दानुसारेण सर्वत्र प्रवर्तते न तु स्वातन्त्र्येण । तथा सत्यत्र शब्देषु [नि]वृत्तेषु तैः सह स्वयमपि निवर्तते । अतो ब्रह्मानन्दस्य हिरण्यगर्भानन्दादाधिक्यादे-[र्या]वदिति वक्तुमवगन्तुं वा न शक्यते । तादृशं ब्रह्मणः स्वरूपभूतमानन्दं लक्षणा-[वृ]त्त्या शब्देष्वेव बोधयत्सु तथैव मनसा यः पुमान्वेत्ति स पुमान्कुतोऽपि न बिभेति । [स]र्वत्र प्रस्तावानुसारेण मनोमयोपाधिविशिष्टं ब्रह्मोपासीनस्येह जन्मनि जन्मान्तरे वा [क]दाचिदपि भीतिर्नास्ति । प्रसक्ताया भीतेः प्रतीकारसद्भावादित्यभिप्रेत्योक्तम् । इह [अ]द्वितीयब्रह्मानन्दं प्रमाणेन विजानतो भयकारणमेव नास्तीत्यभिप्रेत्य कुतश्चनेत्युक्तम् । ["]द्वितीयाद्वै भयं भवति" इति श्रुत्या स्वातिरिक्तं वस्तु भयकारणम् । तच्चाद्वितीये [ब्र]ह्मणि नास्तीत्यभिप्रायः ।

[त]दुक्तं वाक्यवृत्तिकारैः—

"त्वमर्थमेवं निश्चित्य तदर्थं चिन्तयेत्पुनः ।
अतद्व्यावृत्तिरूपेण साक्षाद्विधिमुखेन च" ॥ इति ।

तत्र सत्यं ज्ञानमनन्तं ब्रह्मेत्येतद्विधिमुखम् । एतस्मिन्विधिरूपे बोधे गुणानामानन्दस्व-[ज्यो]तिष्ट्वादीनामुपसंहारः पूर्वमुदाहृतः । यतो वाचो निवर्तन्त इत्यतद्व्यावृत्तिरूपम् । [अस्थ]ूलमनण्वह्रस्वमित्यादीनामुपसंहारस्तृतीयाध्यायस्य तृतीयपादे * चिन्तितः—

" निषेधानामसंहारः संहारो वा न संहृतिः ।
आनन्दादिवदात्मत्वं नैषां संभाव्यते यतः ॥

* अक्षरधियां त्ववरोधः सामान्यतद्भावाभ्यामौपसदवत्तदुक्तम्—ब्र० सू० अ० ३ पा० ३ [अधिक]० २० सू० ३३ ।

१ घ. °न्दस्याऽऽहि° । २ ग. °ब्देष्ववबो° । ३ घ, °सक्तभी° । ४ घ. °च्चाद्वये । [५] ग. वा । ६ क. ख. ग. ङ. °खम् । त° ।

श्रुतानामाहृतानां च निषेधानां समा यतः ।
आत्मलक्षकता तस्माद्दार्ढ्यायास्तूपसंहृतिः ॥

अस्थूलमनण्वह्रस्वमित्यादिना ब्रह्मबोधनाय **गार्गीब्राह्मणे** केचिन्निषेधाः श्रुताः तथा **कठवल्लीषु**—"अशब्दमस्पर्शमरूपमव्ययम्" इति । एवमन्यत्राप्युदाहार्यम् । त निषेधानां परस्परमुपसंहारो नास्त्यानन्दसत्यत्वादिधर्मवदात्मस्वरूपत्वभावेनोपसंहा प्रयोजनाभावादिति प्राप्ते ब्रूमः—यथा **स्वशाखायां** श्रूयमाणानां निषेधानामात्मस्वरू पत्वाभावेऽप्यात्मोपलक्षकत्वं तथा **शाखान्तरेभ्य** उपसंहृतानां निषेधानामपि तत्सम नम् । न च स्वशाखोक्तनिषेधैरेवोपलक्षणसिद्धावितरोपसंहारवैयर्थ्यं दार्ढ्याधिक्यार्थत्वात् अन्यथा स्वशाखायामपि द्वित्रि(त्र)प्रतिषेधमात्रेण तत्सिद्धावितरवैयर्थ्यं प्रसज्येत । तस्म न्निषेधा उपसंहर्तव्याः" ।

उपसंहृते नेति नेतीतिनिषेधे कश्चिद्विशेषस्तत्रैव **द्वितीयपादे** * चिन्तितः—

" ब्रह्मापि नेति नेतीति निषिद्धमथवा नहि ।
द्विरुक्त्या ब्रह्मजगती निषिध्येते[४] उभे अपि ॥
वीप्सेयं नेतिशब्दोक्ता सर्वदृश्यनिषिद्धये ।
अनिदं सत्यसत्यं च ब्रह्मैकं शिष्यतेऽवधि ॥

" द्वे वाव ब्रह्मणो रूपे मूर्तं चैवामूर्तं च " इत्येतस्मिन्**ब्राह्मणे** महता प्रबन्धे पृथिव्यप्तेजोलक्षणं मूर्तरूपं वाय्वाकाशादिलक्षणममूर्तं च रूपं प्रपञ्च्यान्ते ब्रह्मोपदेष्टुमि **दमुक्तम्**—" अथात आदेशो नेति नेति " इति । अस्यायमर्थः । रूपद्वयकथना न्तरं रूपिणो ब्रह्मणो वक्तव्यत्वान्नेति नेतीत्ययं ब्रह्मोपदेश इति पूर्वपक्षी मन्यते जगत एकस्यैवैकेन नेतिशब्देन निषिद्धत्वे[५] द्वितीयो नेतिशब्दो निरर्थकः स्यात् । अ नकारेण द्वितीयेन ब्रह्मापि निषिध्यत इति प्राप्ते ब्रूमः—न तावद्द्वितीयस्य निषेधस्य वैयर्थ्यं वीप्सार्थत्वात् । सत्यां च वीप्सायां यद्यद्दृश्यत इतिशब्दनिर्देशार्हं च तत्स ब्रह्म न भवतीति निषिद्धं भविष्यति । अन्तरेण तु वीप्सामेकेनैव[६] नकारेण मूर्तामूर्तयो प्रकृतत्वेनेतिशब्दनिर्देशार्हयोर्निषेधे सति मूर्ताद्यभावस्य मूलाज्ञानस्य चानिषिद्धत्वात् योर्ब्रह्मत्वं प्रसज्येत । ननु सत्यामपि वीप्सायामस्त्येव दोषः । वीप्साया निरङ्कुशत्वा द्ब्रह्मापि निषिध्यत इति तन्न । ब्रह्मणो[८] दृश्यत्वाभावेन निषेध्यसमर्पकेतिशब्दानर्ह

* प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूयः—ब्र० सू० अ० ३ पा० २ अ० ६ सू० २२

१ ख. °क्षणता । २ घ. गार्गिब्रा° । ३ क. ग. घ. ङ. °क्यात् । अ० । ४ क. ख. ग ङ. निषेध्येते । ५ ग. निषेध्यत्वे । ६ क. ख. ग ङ. °केन न° । ७ क. ग. ङ. °निषेधाच° ८ क. ख. ङ. °णो निषेध्यत्वा° ।

त्वात्। किंचाथात आदेश इति महता संरम्भेण ब्रह्मोपदेष्टुं प्रतिज्ञाय तदेव ब्रह्म निषे-न्ती श्रुतिः कथं न व्याहन्येत। वाक्यशेषश्च न ब्रह्मनिषेधे संगच्छेत। वाक्यशेषे। सत्यस्य सत्यमित्यादिना विवक्षितस्य ब्रह्मणो लौकिकसत्याद्गिरिनदीसमुद्रादेरधिकमा-न्तिकं सत्यत्वं सूचयितुं नाम निर्दिष्टम्। सर्वनिषेधपक्षे सर्वमप्येतत्कदर्थितं स्यात्। स्मान्न ब्रह्म निषिध्यते"।

ननु न बिभेति कुतश्चनेति यदुक्तं तदसत्। धर्माधर्मजनितसंतापस्य भयहेतोर्विद्यमा-त्वादित्याशङ्क्याऽऽह—

**एतꣳ ह वाव न तपति। किमहꣳ साधु**

**नाकरवम्। किमहं पापमकरवमिति,** इति।

मरणकाले प्रत्यासन्ने सति सर्वेषां प्राणिनां मनस्येतादृशी चिन्ता संतापं जनयति। दृशी चिन्तेति चेत्साऽभिधीयते—पुरा यौवने देहेन्द्रियादिपाटवे सति द्रव्यादिसाध-संपत्तौ च सत्यामहं साधु स्वर्गलोकादिसाधनं यागदानादिकं पुण्यं कर्म किमिति न तवानस्मि। नरकसाधनं परद्रव्यापहारादिकं पापं कर्म किमिति कृतवानस्मीति। चिन्ता सर्वेषां संतापहेतुरप्येतं ब्रह्मविदमेकमेव पुरुषं न तपति।

तापाभावे हेतुमाह—

**स य एवं विद्वानेते आत्मानꣳ स्पृणुते,** इति।

यः पुमानेते पुण्यपापकर्मणी एवं संतापहेतुत्वेन विद्वान्भवति शास्त्रोपपत्तिभ्यां नाति स पुमान्कर्मप्रयुक्तसंतापनिवारणायाऽऽत्मानं स्पृणुते प्रीणयति बलयति। स्पृ प्रीतिबलयोरिति धातुः। अयमात्मा साक्षी न तु धर्माधर्मयोः कर्तेत्येवं निश्चयेन परहितः प्रीतो भवति। ब्रह्माहमितिनिश्चयेन धर्माधर्मतत्फलादिकृत्स्नसंसारहेतोरवि-द्या अपि निवृत्तत्वात्प्रबलो भवति। नास्य धर्माधर्मादिकृतः पराजयः कदाचिदपि तीत्यर्थः।

नन्वात्मनोऽकर्तृत्वे ब्रह्मत्वे वाऽवगतेऽपि प्रवर्तमानैर्देहेन्द्रियैः पुण्यपापे अवश्यं पद्येते पूर्वानुष्ठिते अपि विद्येते एवेत्याशङ्क्याऽऽह—

**उभे ह्येवैष एते आत्मानꣳ स्पृणुते। य एवं वेद,** इति।

यः पुमानेवं पुण्यपापयोस्तापहेतुत्वमात्मज्ञानस्य च तापनिवारकत्वं वेद। एते पुण्यपापे आत्मानमेव स्पृणुते पश्यति। धातूनामनेकार्थत्वमिति हि वैयाकरण-

---

१ क. ख. ङ. °धतीतिश्रु°। २ ख. ङ. °सत्यगिरि°। ३ क. ख. ङ. °न्तिकस°। ४ ग. °दि°। ५ ग. पुण्यक°। ६ ख. °धर्मकृ°।

न्यायः। शास्त्रदृष्ट्या तयोः पुण्यपापयोः परमात्मस्वरूपत्वमेवानुसंदधाति। न तु मायाकल्पितं पुण्यपापरूपत्वम्। अस्मिन्नर्थे तत्त्ववित्प्रसिद्धिं दर्शयितुं हिशब्दः प्रयुक्तः। यदा ब्रह्मविदः स्वात्मव्यतिरेकेण पूर्वानुष्ठिते पश्चादनुष्ठास्यमाने च पुण्यपापे स्वरूपेण न स्तस्तदा तच्चिन्ताकृतस्तापो नास्तीति किमु वक्तव्यमित्यभिप्रायः।

पापराहित्यं चतुर्थाध्यायस्य प्रथमपादे*चिन्तितम्—

"ज्ञानिनः पापलेपोऽस्ति नास्ति वाऽनुपभोगतः।
अनाश इति शास्त्रेषु घोषाल्लेपोऽस्य विद्यते॥
अकर्त्रात्मधिया वस्तुमहिम्नैव न लिप्यते।
अश्लेषनाशावप्युक्तावङ्गे घोषस्तु सार्थकः॥

"नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि" इति भोगमन्तरेण पापाविनाशस्य सर्वशास्त्रप्रसिद्धत्वाद्ब्रह्मज्ञानिनोऽप्यस्ति पापलेप इति प्राप्ते ब्रूमः—तत्र तावन्निर्गुणब्रह्मात्मतत्त्वविदः पापलेपशङ्काऽपि नोदेति। नाकार्षं न करोमि न करिष्यामीति कालत्रयेऽप्यकर्तृब्रह्मस्वरूपेण निश्चितत्वात्। न ह्यकर्तुर्लेपं च मन्दा अपि शङ्कन्ते। नापि सगुणब्रह्मविदो लेपोऽस्ति। अश्लेषविनाशयोः श्रुतत्वात्। ब्रह्मसाक्षात्कारादूर्ध्वं देहेन्द्रियव्यवहारवशात्संभावितस्य पापस्याश्लेषः श्रूयते—"तद्यथा पुष्करपलाश आपो न श्लिष्यन्त एवमेवंविदि पापं कर्म न श्लिष्यते" इति। साक्षात्कारात्पूर्वं त्विह जन्मनि जन्मान्तरेषु च संचितस्य पापसंघस्य विनाशः श्रूयते—"तद्यथेषीकातूलमग्नौ प्रोतं च प्रदूयेतैवं हास्य सर्वे पाप्मानः प्रदूयन्ते" इति। नाभुक्तमित्यादिशास्त्रं तु सगुणनिर्गुणब्रह्मज्ञानरहितविषयम्। तस्मान्नास्ति ज्ञानिनः पापलेपः" इति।

पुण्यराहित्यं च तत्रैव×चिन्तितम्—

"पुण्येन लिप्यते नो वा लिप्यतेऽसौ श्रुतत्वतः।
न हि श्रौतेन पुण्येन श्रौतं ज्ञानं विरुध्यते॥
अलेपो वस्तुसामर्थ्यात्समानः पुण्यपापयोः।
श्रुतं पुण्यं पापतया तरणं च समं श्रुतम्॥

मा भूत्पापलेपः पुण्यलेपस्तु विद्यते। पुण्यस्य श्रौतत्वेन श्रौतब्रह्मज्ञानेन सह विरोधाभावादिति प्राप्ते ब्रूमः—अकर्ताऽऽत्मा वस्तुसामर्थ्यात्पापवत्पुण्येनापि न लिप्यते। सगुणज्ञानिनस्तूपासनव्यतिरिक्तं काम्यं पुण्यं पापवद्धमजन्मदेहहेतुत्वात्पापंसममेवेति

* तदधिगम उत्तरपूर्वाधयोरश्लेषविनाशौ तद्व्यपदेशात्—ब्र० सू० अ० ४ पा० १ अ० १ सू० १३। × इतरस्याप्येवमसंश्लेषः पाते तु—ब्र० सू० अ० ४ पा० १ अ० १४ सू० १४।

१ ग. पापरहितत्वं। २ ग. घ. °ति पा°। ३ ग. °णब्रह्मवि°। ४ घ. °धर्म°।

वा पापत्वेनैव दहरविद्यावाक्यशेषे श्रुतिः परामृशति—" सर्वे पाप्मानोऽतो निव-
ते " इति । अस्यायमर्थः । सुकृतं दुष्कृतं तत्फलं च पूर्ववाक्ये यद्यदनुक्रान्तं ते
पाप्मानोऽस्मादुपासकान्निवर्तन्ते । किंच—"उभे ह्येवैष एते तरति" इति श्रुतिः
यपापयोरुभयोर्ज्ञानिना तरणं सममेव ब्रूते । तस्मात्पापवत्पुण्येनापि न लिप्यते " ।
प्रारब्धयोरविनाशस्तत्रैव* चिन्तितः—

"आरब्धे नश्यतो नो वा संचिते एव नश्यतः ।
उभयत्राप्यकर्तृत्वं तद्बाधः सदृशः खलु ॥
आदेहपातं[1] संसारश्रुतेरनुभवादपि ।
इषुचक्रादिदृष्टान्तान्नैवाऽऽरब्धे विनश्यतः ॥

ज्ञानात्पूर्वं संचिते पुण्यपापे द्विविधे । आरब्धे अनारब्धे च । तयोरकर्तृत्वमात्मनः
ानं तद्बाधश्च समः । ततोऽनारब्धवदारब्धयोरपि ज्ञानोदयसमय एव विनाश इति
ते ब्रूमः—श्रुत्यनुभवयुक्तिभ्य आरब्धयोरविनाशो गम्यते "तस्य तावदेव चिरं यावन्न
मोक्ष्येऽथ संपत्स्ये " इति श्रुतेः । अस्यायमर्थः । तस्य तत्त्वविदो मुक्तिर्विलम्ब-
नाऽपि नात्यन्तं विलम्बते । किंतु गर्भाधानकाले क्लृप्तस्याऽऽयुषः क्षयाभावेन याव-
ः प्राणैर्न विमोक्ष्यते तावदेव विलम्बते । अथ देहप्राणवियोगे सति ब्रह्म संपद्यत
। यथाऽऽनया श्रुत्या तत्त्वविदोऽप्यादेहान्तं संसारोऽङ्गीकृतस्तथा विद्वदनुभावोऽ-
स्मिन्नर्थे स्फुटः । युक्तिश्चोच्यते । यथा लोके तूणानिष्ठेषु बाणेषु धानुष्कस्य स्वीकार-
त्यागयोः स्वातन्त्र्येऽपि मुक्ते बाणे स्वातन्त्र्यं न दृश्यते । स तु बाणो वेगे क्षीणे
पतति । एवं कुलालचक्रभ्रमणमुदाहर्तव्यम् । तथा दार्ष्टान्तिके[2] ब्रह्मज्ञानस्याप्य-
ब्धकर्मनाशकत्वे स्वातन्त्र्यमस्तु न त्वारब्धे कर्मणि । आरब्धस्य प्रवृत्तफलत्वात् ।
तैः श्रुत्यादिभिरारब्धस्थितिर्नाभ्युपगम्येत तदोपदेष्टुरभावाद्विद्यासंप्रदाय उच्छिद्येत ।
ावदविद्वानुपदेष्टेति वक्तुं शक्यम् । विद्वांस्तु ज्ञानसमय एव मुच्यत इति को
ोपदेष्टा संभवति । तस्मान्नाऽऽरब्धयोर्नाशः " ।
नित्यकर्मणो[3] नाशाभावस्तत्रैव+ चिन्तितः—

"नश्येन्नो वाऽग्निहोत्रादि नित्यं कर्म विनश्यति ।
यतोऽयं वस्तुमहिमा न क्वचित्प्रतिहन्यते ॥

* अनारब्धकार्ये एव तु पूर्वे तदवधेः—ब्र० सू० अ० ४ पा० १ अ० ११ सू० १५ ।
+ ...ग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात्—ब्र० सू० अ० ४ पा० १ अ० १२ सू० १६ ।

१ घ. °देहपातं सं° । २ क. ग. ङ. °न्तिकब्र° । ३ क. ग. घ. ङ. °र्मसु ना° । ४ ख. °ना° ।

अनुषक्तफलांशस्य नाशोऽप्यन्यो न नश्यति ।
विद्यायामुपयुक्तत्वाद्व्राग्यश्लेषस्तु काम्यवत् ॥

ज्ञानात्पूर्वमिह जन्मनि जन्मान्तरे वाऽनुष्ठितं यदग्निहोत्रादि नित्यं कर्म तस्यापि काम्य-कर्मवदकर्त्रात्मवस्तुबोधमहिम्ना नाशोऽभ्युपेय इति प्राप्ते ब्रूमः —द्वावंशौ नित्यकर्मण एकोंऽशः प्राधान्येन चित्तशुद्धिप्रदः । अपरोंऽशोऽनुषङ्गेण स्वर्गादिफलप्रदः । तस्य नाशोऽस्तु नाम । चित्तशुद्धिप्रदस्य तु विद्यायामुपयुक्तत्वान्न नाशो वर्णयितुं शक्यः । न हि लोके भोगेनोपक्षीणं व्रीह्यादिकं नष्टं मन्यते । यत्तु ज्ञानादूर्ध्वं नित्यं कर्म तस्य काम्यवदश्लेषः " ।

अङ्गावबद्धोपास्तिरहितस्यापि नित्यकर्मणो विद्यायामुपयुक्तत्वं तत्रैव* चिन्तितम्—

"किमङ्गोपास्तिसंयुक्तमेव विद्योपयोग्युत ।
केवलं च प्रशस्तत्वात्सोपास्त्येवोपयुज्यते ॥
केवलं वीर्यवद्विद्यासंयुक्तं वीर्यवत्तरम् ।
इति श्रुतेस्तारतम्यादुभयं ज्ञानसाधनम् ॥

विद्यासाधनं नित्यं कर्म द्विविधं संभाव्यते । अङ्गावबद्धोपास्तिसहितं तद्रहितं च । तत्र सोपासनस्य कर्मणः प्रशस्तत्वात्तदेव विद्यासाधनं न तूपास्तिरहितमिति प्राप्ते ब्रूमः—" यदेव विद्यया करोति तदेव वीर्यवत्तरं भवति " इति श्रुतिः सोपासनस्य कर्मणोऽतिशयेन वीर्यमस्तीति वदन्ती निरुपासनस्यापि वीर्यमात्रमभ्यनुजानाति । अन्यथा तरप्प्रत्ययानुपपत्तेः । तस्मात्सोपासननिरुपासनयोस्तारतम्येन विद्यासाधनत्वम् " ।

ज्ञानिनो मुक्तिनियमस्तृतीयाध्यायस्य तृतीयपादे+ चिन्तितः—

" ब्रह्मतत्त्वविदो मुक्तिः पाक्षिकी नियताऽथवा ।
पाक्षिक्यपान्तरतमःप्रभृतेर्जन्मवर्णनात् ॥
नानादेहोपभोक्तव्यमीशोपास्तिफलं बुधाः ।
भुक्त्वाऽधिकारपुरुषा मुच्यन्ते नियता ततः ॥

पुराणेषु—वेदप्रवर्तक आचार्योऽपान्तरतमा विष्णोराज्ञया द्वापरान्ते कृष्णद्वैपायनरूपेण शरीरान्तरं जग्राहेति स्मर्यते । तथा सनत्कुमारः स्कन्दरूपेणैव पार्वतीपरमेश्वराभ्यामजायत । एवमन्येऽपि वसिष्ठादयस्तत्त्वज्ञानिन एव सन्तस्तत्र तत्र शापाद्वा वराद्वा स्वेच्छया वा शरीरान्तराणि जगृहुरितिस्मरणान्मुक्तिस्तत्त्वविदां पाक्षि-

* यदेव विद्ययेति हि—ब्र० सू० अ० ४ पा० १ अ० १३ सू० १८ । + यावदधिकारमवस्थितिराधिकारिकाणाम्—ब्र० सू० अ० ३ पा० ३ अ० १९ सू० ३२ ।

१ ग. व. मन्यन्ते । २ ग. घ. °न्मदर्शना° । ३ घ. °भोक्तृत्वमी° ।

कीति प्राप्ते ब्रूमः—य एते त्वयोदाहृताः पुरुषास्ते सर्वे जगन्निर्वाहकारिणः । ते च पूर्वस्मिन्कल्पे महता तपसा परमेश्वरमुपास्यास्मिन्कल्पे नानादेहोपभोग्यमाधिकारपदं लेभिरे । क्षीणे च प्रारब्धे कर्मणि मोक्ष्यन्ते । तथाऽनारब्धकर्मणां तत्त्वज्ञानेन दाहस्य निवारयितुमशक्यत्वात्तत्त्वविदो मुक्तिर्नियतैव "।

एतस्यार्थस्याऽऽक्षेपसमाधानरूपा चिन्ता चतुर्थाध्यायस्य* प्रथमपादे कृता—

" बहुजन्मप्रदारब्धयुक्तानां नास्त्युतास्ति मुक् ।
विद्यालोपे कृतं कर्म फलदं तेन नास्ति मुक् ॥
आरब्धं भोजयेदेव न तु विद्यां विलोपयेत् ।
सुप्तबुद्धवदश्लेषतादवस्थ्यात्कुतो न मुक् ॥

अधिकारिपुरुषाणां मुक्तिर्नास्ति प्रारब्धभोगाय बहुषु जन्मसु स्वीकृतेषु तत्र पूर्वा-[1]र्जितविद्यायां लुप्तायां यत्कर्म क्रियते तस्य फलप्रदत्वे सत्युत्तरोत्तरजन्मपरम्पराया अवश्यंभावित्वादिति प्राप्ते ब्रूमः—आरब्धं कर्म स्वफले सुखदुःखे भोजयेत् । तदर्थमेव प्रवृत्तत्वात् । न हि विद्याविलोपार्थं किंचित्कर्म पूर्वमनुष्ठितम् । येन कर्मवशाद्विद्यालोप[2] आशङ्क्येत । न च मरणव्यवधानमात्रेण विद्यालोपः सुषुप्तिव्यवधाने तल्लोपादर्शनात् । अतो विद्यायामवस्थितायां बहुजन्मभिरपि[3] क्रियमाणैः कर्मभिरश्लेषादस्त्यधिकारिणां मुक्तिः "।

यद्यप्येतद्गुणोपसंहारे निर्णीतं तथाऽपि तस्यैवाऽऽक्षेपसमाधाने इत्यनवद्यम् । अनुवाकार्थमुपसंहरति—

इत्युपनिषत् ।

## इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यकेऽष्टमप्रपाठके नवमोऽनुवाकः समाप्तः ॥ ९ ॥

ब्रह्मविदिदमेकविꣳशतिरन्नादन्नरसमयात्प्राणो व्यानोऽपान आकाशः पृथिवी पुच्छꣳ षड्विꣳशतिः प्राणं यजुर्ऋक्सामाऽऽदेशोऽथर्वाङ्गिरसः पुच्छं द्वाविꣳशतिर्यतः श्रद्धर्तꣳ सत्यं योगो महोऽष्टादश विज्ञानं प्रियं मोदः प्रमोद आनन्दो ब्रह्म

---

* भोगेन त्वितरे क्षपयित्वा संपद्यते—ब्र० सू० अ० ४ पा० १ अ० १४ सू० १९ ।

---

१ ख. तत्पूर्वा° । २ ख, घ °द्यालो° । ३ क ग. घ, ङ. °हुभि° । ४ ग. °दमय-मिदमे° ।

पुच्छं द्वाविꣳशतिरसंस्रेवाष्टाविꣳशतिरसत्षोडश भीषाऽस्मादेक-
पञ्चाशद्यतः कुतश्चैकादश * ।

सह नाववतु । सह नौ भुनक्तु । सह वीर्यं करवावहै ।
तेजस्वि नावधीतमस्तु मा विद्विषावहै ॥

ॐ शान्तिः शान्तिः शान्तिः ।

हरिः ॐ ।

+ इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यकेऽष्टमोऽध्यायः
समाप्तः ॥ ८ ॥

ब्रह्मविदाप्नोति परमित्यादि य एवं वेदेत्यन्तेन ग्रन्थेन या प्रतिपादिता से-
मितिशब्देन परामृश्यते । सा चोपनिषद्रहस्यविद्या । उपनिषण्णमस्यां परं श्रेय इ-
व्युत्पत्तेः । तादृशी विद्याऽभिहितेति शेषः ॥

इति श्रीमत्सायणाचार्यविरचिते श्रीबुक्कणसाम्राज्यधुरंधरमाधवविद्यारण्यपरमेश्व-
रसंबन्धिवेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्ये वारुण्यपरनामधेय-
सांहित्यामुपनिषदि ब्रह्मवल्ल्याख्यो द्वितीयोऽनुवाकः ॥ २ ॥
*समाप्तोऽयमष्टमः प्रपाठकः ।

---

* ग. पुस्तक एतदग्रे—" ब्रह्मविद्य एवं वेदेत्युपनिषत् " इत्यधिकम् । + अत्राप्यध्याय-
रिसमाप्तिर्वैदिकमतानुसरणेनैव । भाष्यकारमतेन तु भृगुर्वै वारुणिरित्यारभ्य "इत्युपनिषत्" इत्यन्तो-
स्यैव प्रपाठकस्य तृतीयोऽनुवाकोऽस्त्यतो भाष्यकाराणां मतेन " अम्भस्य पारे " इत्यादिर्नारायणो-
निषदेव नवमप्रपाठकरूपा । तेषां मतेनाऽऽरण्यकस्य नव प्रपाठका एवेत्यूहनीयं विपश्चिद्भिः । *अ-
भाष्यकारमतेन प्रपाठकसमाप्तिर्नास्तीत्युल्लेख उपरिगतटिप्पणे कृतः स तत्र ज्ञातव्यः ।

---

१ ग. °स्मान्मानुषो मनुष्यगन्धर्वाणां देवगन्धर्वाणां पितॄणां चिरलोकलोकानामाजा-
नजानां कर्मदेवानां देवानामिन्द्रस्य बृहस्पतेः प्रजापतेर्ब्रह्मणः स यश्चा संक्रामत्येक°
२ ग. °तः कुतश्चनैका° ।

## *अथ तैत्तिरीयारण्यके नवमप्रपाठकस्याऽऽरम्भः ।

तत्र प्रथमोऽनुवाकः ।

हरिः ॐ ।

सह नाववतु । सह नौ भुनक्तु । सह वीर्यं करवावहै । तेजस्वि नावधीतमस्तु मा विद्विषावहै ॥

ॐ शान्तिः शान्तिः शान्तिः ।

भृगुर्वै वारुणिः । वरुणं पितरमुपससार । अधीहि भगवो ब्रह्मेति ।

द्वितीयानुवाके ब्रह्मविद्या निरूपिता । अथ तृतीयानुवाके तत्साधनानि निरूप्यन्ते । यद्यपि सांहित्युपनिषदि बहिरङ्गसाधनानि कर्माण्युपासनानि चाभिहितानि तथाऽपि विचाररूपमन्तरङ्गसाधनं नोक्तमिति तदत्राभिधीयते । तस्मिन्नभिहिते तदङ्गानि मननादीन्यर्थप्याभिहितानि भविष्यन्ति । तत्राऽऽदौ विद्यास्तुत्यर्थमुपाख्यानमाह—भृगुरित्यादिना । अस्ति कश्चिन्महर्षिर्भृगुर्नाम गोत्रप्रवर्तकः । वैशब्देन मन्त्रब्राह्मणगता तत्प्रसिद्धिः स्मर्यते । "भृगूणां त्वाऽङ्गिरसां व्रतपते व्रतेनाऽऽदधामि" इति "भृग्वाङ्गिरसामादध्यात्" इति हि मन्त्रब्राह्मणे आम्नायेते । स च भृगुर्वरुणस्य पुत्रः पितरं वरुणं गुरुत्वेनोपसन्नवान् । गुरूपसत्तिश्च श्रुत्यन्तरेऽभिहिता—"तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्" इति । अधीहीत्यादिगुरूपसत्तिमन्त्रः । हे भगवो भगवन्पूज्यस्वरूप गुरो ब्रह्माधीहि अधिकं स्मर चित्तेन स्मृत्वोपदिशेत्यर्थः ।

ईदृशानामुपाख्यानानां विद्यास्तुत्यर्थत्वं तृतीयाध्यायस्य चतुर्थपादे+ चिन्तितम्—

"पारिप्लवार्थमाख्यानं किंवा विद्यास्तुतिः स्तुतेः ।<br>
ज्यायोऽनुष्ठानशेषत्वं तेन पारिप्लवार्थता ॥<br>
मनुर्वैवस्वतो राजेत्येव तत्र विशेषणात् ।<br>
अत्र विद्यैकवाक्यत्वभावाद्विद्यास्तुतिर्भवेत् ॥

"अथ ह याज्ञवल्क्यस्य द्वे भार्ये बभूवतुः" "जनको ह वैदेह आसांचक्रे" इत्या-

---

* भाष्यकारमतेनायं नवमप्रपाठको नास्ति किं त्वष्टमस्यैवायं तृतीयोऽनुवाक इतीदमप्यूर्ध्वं प्रतपृष्ठोल्लिखितटिप्पणात् । +पारिप्लवार्था इति चेन्न विशेषितत्वात्—ब्र० सू०अ० ३ पा० ४अ० ४सू० २३ ।

---

१ क. ख. ङ. °हित्यामुप° । २ क. ख. ङ. °न्यर्थादभि° । ३ क. ख. ङ. भवन्ति । ४ घ. °भानादि° । ५ ख. °थ या° ।

दिकमुपनिषदि श्रूयमाणमाख्यानं पारिप्लवार्थं भवितुमर्हति। अश्वमेधयागे रात्रिषु राजानं सकुटुम्बमुपवेश्य तस्याग्रे वैदिकान्युपाख्यानान्यन्यानि पुण्यान्यध्वर्युणा वक्तव्यानि। तदिदं पारिप्लवाख्यं कर्म "पारिप्लवमाचक्षीत" इतिवाक्येन विहितम्। तदर्थत्वे सत्यौ. पनिषदाख्यानान्यनुष्ठानायोपयुज्येरन्। ज्यायोऽनुष्ठानं विद्यास्तुतेस्तस्मात्पारिप्लवार्थमिति प्राप्ते ब्रूमः—प्रथमेऽहनि मनुर्वैवस्वतो राजा द्वितीयेऽहनि यमो वैवस्वतो राजेत्येवमाद्याख्यानानां पारिप्लवार्थानां विशेषितत्वादौपनिषदानामाख्यानानां तच्छेषत्वं न संभवति। संनिहितविद्यास्तावकत्वे तु विद्यावाक्यैरेकवाक्यता लभ्यते। तस्माद्विद्यास्तावकमाख्यानम्"।

ब्रह्मबोधद्वारोपदेशं दर्शयति—

तस्मा एतत्प्रोवाच। अन्नं प्राणं
चक्षुः श्रोत्रं मनो वाचमिति, इति।

तस्मै समन्त्रकमुपसन्नाय भृगव एतदन्नादिकं बोधद्वारमुक्तवान्। अन्नमयप्राणमयमनोमयानां कोशानामुपादानकारणान्यन्नप्राणमनांसि चक्षुःश्रोत्रवाचोऽपि मनोवद्द्वारभूताः। इतिशब्दोऽनुक्तानां त्वगादिज्ञानेन्द्रियाणां पाणिपादादिकर्मेन्द्रियाणां च प्रदर्शनार्थः। शाखाग्रे चन्द्र इत्यत्र यथा चन्द्रदर्शने समीपवर्तिनी वृक्षशाखा लक्षकत्वेन द्वारं तथा गुहाहितब्रह्मदर्शने तदुपलक्षकाण्यन्नप्राणादीनि द्वाराणि। तद्द्वारत्वं च बृहदारण्यके विस्पष्टमाम्नातम्—"प्राणस्य प्राणमुत चक्षुषश्चक्षुरुत श्रोत्रस्य श्रोत्रमुतान्नस्यान्नं मनसो ये मनो विदुः। ते निचिक्युर्ब्रह्म पुराणमग्र्यम्" इति। प्राणादिकल्पनाधिष्ठानतया प्राणादिरूपं ब्रह्म प्राणादिद्वारेण वेदितुं सुशकम्। अहंबुद्धिगम्येष्वन्नप्राणादिषु मध्ये ब्रह्मान्वेषणीयमित्यभिप्रायः।

तꣳ होवाच। यतो वा इमानि भूतानि
जायन्ते। येन जातानि जीवन्ति। यत्प्रयन्त्य-
भिसंविशन्ति। तद्विजिज्ञासस्व। तद्ब्रह्मेति।

अथ ब्रह्मलक्षणस्य तद्बोधहेतोर्विचारस्य चोपदेशं दर्शयति—तꣳ हेत्यादिना। द्वारं श्रुत्वा[३] तदवबोधायात्यन्तमुत्सुकं तं भृगुमवेक्ष्याऽऽसक्त्वातिशयेन तदीयं[४] प्रश्नं विना स्वयमेव वरुणः पुनरप्युवाच। हशब्द औत्सुक्यप्रसिद्धिद्योतनार्थः। इमान्याकाशादीनि पञ्च महाभूतानि भौतिकदेहोपेता हिरण्यगर्भादिस्तम्बान्ताः सर्वे प्राणिनश्च यतो वस्तुनो

---

१ ग. घ. °वानां २ ग. घ. °क्यैक°। ३ क ख. ङ. °त्वा ऽऽस°। ४ क, ख. ग. ङ. °दीयप्र°।

जायन्ते । वैशब्दः "स इमाँल्लोकानसृजत" इत्यादिश्रुत्यन्तरप्रसिद्धिद्योतनार्थः । उत्पन्नानि च भूतानि येन वस्तुना जीवन्ति स्थितिं लभन्ते । प्रयन्ति नाशं प्रतिपद्यमानानि भूतानि यद्वस्त्वभिसंविशन्ति साकल्येन प्रविशन्ति, यथा फेनतरङ्गबुद्बुदादीनामुत्पत्तिस्थितिलयाः समुद्रे भवन्ति तद्वत्, जगदुत्पत्तिस्थितिलयकारणं वस्तु विचारय, तदेव वस्तु त्वया पृष्टं ब्रह्म । इतिशब्द उत्तरसमाप्त्यर्थः ।

विचारकर्तव्यता च प्रथमाध्यायस्य प्रथमपादे* चिन्तिता—

" अविचार्यं विचार्यं वा ब्रह्माध्यासानिरूपणात् ।
असंदेहाफलत्वाभ्यां न विचारं तदर्हति ॥
असाध्योऽहंबुद्धिसिद्धोऽसङ्गं ब्रह्म श्रुतीरितम् ।
संदेहान्मुक्तिभावाच्च विचार्यं ब्रह्म वेदतः " ॥ इति ।

" आत्मा वा अरे द्रष्टव्यः श्रोतव्यः " [बृह० २ । ४ । ५] इत्यत्राऽऽत्मदर्शनं फलमुद्दिश्य तत्साधनत्वेन श्रवणं विधीयते । श्रवणं नाम वेदान्तवाक्यानां ब्रह्मणि तात्पर्यं निर्णेतुमनुकूलो न्यायविचारः । तदेतद्विचारविधायकं वाक्यं विषयः । न चायं विषयः श्लोकेन संगृहीतः । संदेहसंग्रहेणैवार्थात्तत्संग्रहप्रतीतेः । ब्रह्मविचारात्मकन्यायनिर्णायकं शास्त्रमनारभ्यमारभ्यं वेति संदेहः । पूर्वोत्तरपक्षयुक्तिद्वयं सर्वत्र संदेहे बीजमुन्नेयम् । तत्रानारभ्यमिति तावत्प्राप्तम् । विषयप्रयोजनयोरभावात् । संदिग्धं हि विचारस्य विषयो भवति । ब्रह्म त्वसंदिग्धम् । तथा हि तत्किं ब्रह्माकारेण संदिग्धमुत आत्माकारेण वा । नाऽऽद्यः । "सत्यं ज्ञानमनन्तं ब्रह्म" [तैत्ति० २ । १ । १] इत्यादिवाक्येन ब्रह्माकारस्य निश्चयात् । न द्वितीयः । अहंप्रत्ययेनाऽऽकारस्यापि निश्चयात् । अध्यस्तात्मविषयत्वेन भ्रान्तोऽहंप्रत्यय इति चेन्न, अध्यासानिरूपणात् । तमःप्रकाशवद्विरुद्धस्वभावयोर्जडाजडयोर्देहात्मनोः शुक्तिकारजतवदन्योन्यतादात्म्याध्यासो न निरूपयितुं शक्यते । तस्मादभ्रान्ताभ्यां श्रुत्यहंप्रत्ययाभ्यां निश्चितस्यासंदिग्धत्वान्न विचारस्य विषयोऽस्ति । नापि प्रयोजनं पश्यामः । उक्तप्रकारेण ब्रह्मात्मनि निश्चितेऽपि मुक्त्यदर्शनात् । तस्माद्ब्रह्म न विचारमर्हतीति शास्त्रमनारम्भणीयमिति पूर्वपक्षः । अत्रोच्यते—शास्त्रमारम्भणीयं विषयप्रयोजनसद्भावात् । श्रुत्यहंप्रत्यययोर्विप्रतिपत्त्या संदिग्धं ब्रह्मात्मवस्तु । "अयमात्मा ब्रह्म" [बृह० २ । ५ । १९] इति श्रुतिरसङ्गं ब्रह्माऽऽत्मत्वेनोपदिशति । अहं मनुष्य इत्याद्यहंबुद्धिर्देहादितादात्म्याध्यासेनाऽऽत्मानं गृह्णाति । अध्यासस्य च दुर्निरूपत्वमलंकाराय ।

* अथातो ब्रह्मजिज्ञासा—ब्र० सू० अ० १ पा० १ अ० १ सू० १ ।

तस्मात्संदिग्धं वस्तु विषयः । तन्निश्चयेन च मुक्तिलक्षणं प्रयोजनं श्रुत्या विद्वदनुभवेन च प्रसिद्धम् । तस्माद्वेदान्तवाक्यविचारमुखेन(ण) ब्रह्मणो विचारार्हत्वाच्छास्त्रमारम्भणीयमिति[1] सिद्धान्तः ।

विचारो हि लक्षणप्रमाणाभ्यां वस्तुतत्त्वनिर्णयावधिकः । लक्षणं च तत्रैव* चिन्तितम्—

"लक्षणं ब्रह्मणो नास्ति किंवाऽस्ति नहि विद्यते ।
जन्मादेरन्यनिष्ठत्वात्सत्यादेश्चाप्रसिद्धितः ॥
ब्रह्मनिष्ठं कारणत्वं स्याल्लक्ष्म स्रग्भुजंगवत् ।
लौकिकान्येव सत्यादीन्यखण्डं लक्षयन्ति हि ॥

"यतो वा इमानि भूतानि जायन्ते । येन जातानि जीवन्ति । यत्प्रयन्त्यभिसंविशन्ति । तद्विजिज्ञासस्व । तद्ब्रह्मेति" [ तैत्ति० ३ । १ । १ ] इति । "सत्यं ज्ञानमनन्तं ब्रह्म" [ तैत्ति० २ । १ । १ ] इति[2] च वाक्यद्वयं विषयः । प्रयन्ति म्रियमाणानीत्यर्थः । अत्र श्रूयमाणं ब्रह्मलक्षणं घटते न घटते वेति संशये[3] न घटते । तथा हि किं जन्मादिकं ब्रह्मलक्षणमुत सत्यादिकम् । नाऽऽद्यः । तस्य जगन्निष्ठत्वेन ब्रह्मसंबन्धाभावात् । द्वितीयेऽपि लोकप्रसिद्धसत्यज्ञानादिस्वीकारे भिन्नार्थत्वादखण्डं ब्रह्म न सिध्येत् । अप्रसिद्धस्य[4] तु सत्यादेर्लक्षणत्वमयुक्तम् । तस्मात्तटस्थलक्षणं स्वरूपलक्षणं च न विद्यते । अत्रोच्यते—जन्मादेरन्यनिष्ठत्वेऽपि तत्कारणत्वं ब्रह्मणि कल्पनया संबद्धं तटस्थलक्षणं भविष्यति । यो भुजंगः सा स्रगितिवत् । यज्जगत्कारणं तद्ब्रह्मेति कल्पितेनापि वस्तुनो लक्षयितुं शक्यत्वात् । भिन्नार्थानामपि पितृसुतभ्रातृजामात्रादिशब्दानामेकदेवदत्तपर्यवसायित्वे यथा न विरोधः, तथा लोकसिद्धभिन्नार्थवाचिसत्यादिशब्दानामखण्डब्रह्मपर्यवसायित्वे स्वरूपलक्षणसिद्धिरित्युभयमुपपन्नम्"।

तल्लक्षणोपपादनाय वेदकर्तृत्वं तत्रैव+चिन्तितम्—

"न कर्तृ ब्रह्म वेदस्य किंवा कर्तृ न कर्तृ तत् ।
विरूप नित्यया वाचेत्येवं नित्यत्ववर्णनात् ॥
कर्तृनिःश्वसिताद्युक्तेर्नित्यत्वं पूर्वसाम्यतः ।
सर्वावभासिवेदस्य कर्तृत्वात्सर्वविद्भवेत् ॥

* जन्माद्यस्य यतः—ब्र० सू० अ० १ पा० १ अ० २ सू० २ । + शास्त्रयोनित्वात्—ब्र० सू० अ० १ पा० १ अ० ३ सू० ३ वर्णकम् १ ।

१ क. ख. ङ. °द्धम् । २ घ. ङ. ति वा° । ३ ख °शयो न । ४ क. ग. घ. ङ. °स्य स° ।

" अस्य महतो भूतस्य निःश्वसितमेतद्यदृग्वेदो यजुर्वेदः सामवेदः " (बृह० २। ४। १०) इति वाक्यं विषयः । यदृग्वेदादिकमस्ति तदेव तस्य नित्यसिद्धस्य ब्रह्मणो निःश्वास इवाप्रयत्नेन सिद्धमित्यर्थः । ब्रह्म वेदं न करोति करोति वेति संदेहः[1] । न करोति, वेदस्य नित्यत्वात् । वाचा विरूप नित्ययेत्येतस्मिन्मन्त्रे[2] विरूपेति देवतां संबोध्य नित्यया वाचा स्तुतिं प्रेरयेत्येवं प्रार्थ्यते । नित्या वागृगादिवेद एव ।

"अनादिनिधना नित्या वागुत्सृष्टा स्वयंभुवा ।
आदौ वेदमयी दिव्या यतः[3] सर्वाः प्रवृत्तयः " ॥ इति स्मृतेः ।

अतो न वेदकर्तृ ब्रह्मेति प्राप्ते ब्रूमः—ब्रह्म वेदस्य कर्तृ भवितुमर्हति । कुतः । निःश्वसितन्यायेनाप्रयत्नेनोत्पत्त्यवगमात् । "तस्माद्यज्ञात्सर्वहुत ऋचः सामानि जज्ञिरे" इति सर्वैर्यज्ञैर्हूयमानाद्यज्ञशब्दवाच्याद्ब्रह्मणो विस्पष्टमेव वेदोत्पत्तिश्रवणाच्च । अप्रयत्नोत्पत्त्यैवार्थं[4] बुद्ध्वा रचितैः कालिदासादिवाक्यैर्वैलक्षण्यादपौरुषेयत्वम् । प्रतिसर्गं पूर्वसाम्येनोत्पत्तेः प्रवाहरूपेण नित्यता । सर्वजगद्व्यवस्थावभासिवेदकर्तृत्वनिरूपणेन ब्रह्मणः सर्वज्ञत्वं निरूपितं भवति " ।

लक्षणमुपपाद्याऽऽगमव्यवस्थापनं तत्रैव* चिन्तितम्[5]—

"अस्त्यन्यमेयताऽप्यस्य किंवा वेदैकमेयता ।
घटवत्सिद्धवस्तुत्वाद्ब्रह्मान्येनापि मीयते ॥
रूपलिङ्गादिराहित्यान्नास्य[6] मान्तरयोग्यता ।
तं त्वौपनिषदेत्यादौ प्रोक्ता वेदैकमेयता ॥

" तं त्वौपनिषदं पुरुषं पृच्छामि " इति शाकल्यं प्रति याज्ञवल्क्येनोक्ते वाक्ये परब्रह्मरूपस्य पुरुषस्योपनिषद्वेद्यत्वं प्रतीयते । तद्वाक्यं विषयः । तत्र ब्रह्मणः प्रत्यक्षादिगम्यत्वमस्ति नवेति संशयः । पूर्वपक्षस्तु विस्पष्टः । रूपरसाद्यभावान्नेन्द्रिययोग्यता । लिङ्गसादृश्यादिराहित्याच्च नानुमानोपमानादियोग्यता । उपनिषत्स्वेवाधिगम्यत इति व्युत्पत्त्या " नावेदविन्मनुते तं बृहन्तम् " इत्यन्यनिषेधश्रुत्या च वेदैकमेयत्वम् । भाष्यकारैर्जन्मादिसूत्रे—"श्रुत्यादयोऽनुभवादयश्च यथासंभवमिह प्रमाणम् " इत्यन्यमेयत्वमङ्गीकृतमिति चेत् । बाढम् । प्रथमतः श्रुत्यैव प्रमिते ब्रह्मणि पश्चादनुवादरूपेणानुमानानुभवयोरङ्गीकारात् । अतो वेदैकमेयं ब्रह्म " ।

---

* ब्र० सू० अ० १ पा० १ अ० ३ सू० ३ द्वितीयं वर्णकम् ।

---

१ ग. संशयः । २ क. ग. ध. ङ. °येत्यस्मि° । ३ व. ततः । ४ ख. °त्पत्तौ चार्थं । ५ ग. विचारितम् । ६ ग. °लाद्विराहित्यान्ने° ।

वेदस्य तु ब्रह्मप्रमाणत्वं तत्रैव* चिन्तितम्—

"वेदान्ताः कर्तृदेवादिपरा ब्रह्मपरा उत ।
अनुष्ठानोपयोगित्वात्कर्त्रादिप्रतिपादकाः ॥
भिन्नप्रकरणाल्लिङ्गषट्काच्च ब्रह्मबोधकाः ।
सति प्रयोजनेऽनर्थहानेऽनुष्ठानतोऽत्र किम् ॥

स्पष्टौ विषयसंदेहौ । जीवप्रकाशकवाक्यानि कर्तृपराणि ब्रह्मप्रकाशकवाक्यानि देतापराणि सृष्टिप्रकाशकवाक्यानि साधनपराणि । तथा सति वेदान्तानामनुष्ठानोपयोगि भविष्यति । ब्रह्मपरत्वे त्वनुष्ठानासंभवान्निष्प्रयोजनत्वं स्यात् । तस्माद्वेदान्ताः कर्तृदेवसाधनप्रतिपादकाः । अत्रोच्यते—ब्रह्मपरा वेदान्ताः । कुतः । भिन्नप्रकरणपठितानां तेकर्त्रादिप्रतिपादकतया कर्मशेषत्वासंभवात्तात्पर्यनिश्चयहेतुलिङ्गषट्केन ब्रह्मपरत्वसंभवाच्च

लिङ्गषट्कं च पूर्वाचार्यैर्निरूपितम्—

"उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम् ।
अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिश्चये" ॥ इति ।

"सदेव सोम्येदमग्र आसीत्" इत्युपक्रमः । "ऐतदात्म्यमिदं सर्वं तत्सत्यं आत्मा तत्त्वमसि" इत्युपसंहारः । तयोर्ब्रह्मविषयत्वेनैकरूप्यमेकं लिङ्गम् । असकृत्त्वमसीत्युक्तिरभ्यासः । मानान्तरानवगम्यत्वमपूर्वत्वम् । एकविज्ञानेन सर्वविः फलम् । सृष्टिस्थितिप्रलयप्रवेशनियमनानि पञ्चार्थवादाः । मृदादिदृष्टान्ता उपपत्तय एतैर्लिङ्गैर्ब्रह्मपरत्वं निश्चेयम्[3] । न चानुष्ठानमन्तरेण प्रयोजनाभावः । नायं सर्प इदाविव बोधादनर्थनिवृत्तेः संभवात् ।

वेदान्तानां विधिपरत्वाभावस्तत्रैव+ चिन्तितः—

"प्रतिपत्तिं विधित्सन्ति ब्रह्मण्यवसिता उत ।
शास्त्रत्वात्ते विधातारो मननादेश्च कीर्तनात् ॥
नाकर्तृतन्त्रेऽस्ति विधिः शास्त्रत्वं शंसनादपि[4] ।
मननादिः पुरा बोधाद्ब्रह्मण्यवसितास्ततः ।

एकदेशी मन्यते—ब्रह्मपरत्वेऽपि वेदान्ता न ब्रह्मण्येव पर्यवस्यन्ति । किं

---

* तत्तु समन्वयात्—ब्र० सू० अ० १ पा० १ अ० ४ सू० ४ प्रथमं वर्णकम् । + अ० पा० १ अ० ४ सू० ४ द्वितीयं वर्णकम् ।

---

१ ब. °र्थहे° । २ ग. घ. °राग° । ३ ख. निर्णेयम् । ४ घ. शासनादपि । ५ ख. °नादि ।

पारोक्ष्येण ब्रह्मतत्त्वं प्रतिपाद्य पश्चादपरोक्षप्रतिपत्तिं विदधाति । तथा सति वेदान्तानां शासनाच्छास्त्रत्वमुपपद्यते । किंच " श्रोतव्यः " इति श्रवणं[1] शाब्दज्ञानात्मकं विधाय " मन्तव्यो निदिध्यासितव्यः " इत्यनुभवज्ञानात्मकं मननादिकं स्पष्टमेव विधीयते । तस्मात्प्रतिपत्तेर्विधातारो वेदान्ता इति प्राप्ते ब्रूमः—न प्रतिपत्तेर्विधिः संभवति । कर्तुमकर्तुमन्यथा कर्तुमशक्यत्वेनापुरुषतन्त्रत्वात् । शास्त्रत्वं तु नानुष्ठेयशासनादेव नियतम् । सिद्धवस्तुशंसनेनापि तदुपपत्तेः । न च[2] शाब्दज्ञाने[3] जाते पश्चादनुभवात्मकं मननादिकं विधीयत इति वक्तुं युक्तम् । दशमस्त्वमसीतिवच्छब्दस्यैवापरोक्षानुभवजनकत्वेन शाब्दबोधात्पुरैवासंभावनाविपरीतभावनानिवृत्तये व्यापाररूपस्य कर्तृतन्त्रस्य मननादेर्विधानात् । तस्मात्तत्त्वमसीत्यादयो वेदान्ता ब्रह्मण्यवसिताः " इति ।

योऽयं वेदान्तमुखेन ब्रह्मतत्त्वनिर्णयफलको विचारः सोऽयं तद्विजिज्ञासस्वेत्यनेन वाक्येन विहितः । शाखान्तरेऽप्ययं विधिः श्रूयते—" श्रोतव्यो मन्तव्यो निदिध्यासितव्यः " इति । तदर्थ एवं स्मर्यते—

"श्रोतव्यः श्रुतिवाक्येभ्यो मन्तव्यश्चोपपत्तिभिः ।
मत्वा च सततं ध्येय एते दर्शनहेतवः " ॥ इति ।

पुराणेऽपि पठ्यते—

"तत्र तावन्मुनिश्रेष्ठाः श्रवणं नाम केवलम् ।
उपक्रमादिभिर्लिङ्गैः शक्तितात्पर्यनिर्णयः ॥
सर्ववेदान्तवाक्यानामाचार्यमुखतः प्रियात् ।
वाक्यानुग्राहकन्यायशीलनं मननं भवेत् ॥
निदिध्यासनमैकाग्र्यं श्रवणे मननेऽपि च ।
उत्पत्तावन्तरङ्गं हि ज्ञानस्य श्रवणं बुधाः ॥
तटस्थमन्यव्यावृत्त्या मननं चिन्तनं तथा ।
इतिकर्तव्यकोटिस्थाः शान्तिदान्त्यादयस्तथा " ॥ इति ।

एतान्येव श्रवणमनननिदिध्यासनानि कहोलब्राह्मणे पाण्डित्यबाल्यमौनशब्दैर्व्यवहृत्य विहितानि—" ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेत् । बाल्यं च पाण्डित्यं च निर्विद्याथ मुनिरमौनं च मौनं च निर्विद्याथ ब्राह्मणः " इति । निर्विद्य निःशेषेण संपाद्यार्थं त्रितयानुष्ठानादूर्ध्वं ब्रह्मस्वरूपत्वाविर्भावान्मुख्यब्राह्मणो भवतीत्यर्थः । अत्र मननोपयुक्तधीशुद्धिपरेण बाल्यशब्देन मननमुपलक्ष्यते ।

---

१ ग. 'णं शब्द' । २ ङ. तु । ३ क. घ. ङ. शब्दज्ञाने । ४ ख. °थ तृतीया° ।

धीशुद्धिपरत्वं च तृतीयाध्यायस्य चतुर्थपादे* चिन्तितम्—

"बाल्यं वयः कामचारो धीशुद्धिर्वा प्रसिद्धितः।
वयस्तस्याविधेयत्वात्कामचारोऽस्तु नेतरत् ॥
मननस्योपयुक्तत्वाद्भावशुद्धिर्विवक्षिता।
अत्यन्तानुपयोगित्वाद्विरुद्धत्वाच्च न द्वयम् ॥

"बाल्येन तिष्ठासेत्" इत्यत्र बालस्य भावो बाल्यमिति प्रसिद्ध्या वयो भवेत्। अथ तस्य विध्यनर्हत्वम्। तर्हि बालस्य कर्मेति व्युत्पत्त्या कामचारवादादिकमस्तु। सर्वथाऽपि न धीशुद्धिर्बाल्यमिति प्राप्ते ब्रूमः—पाण्डित्यमौनाख्ययोः श्रवणनिदिध्यासनयोर्मध्ये मननं विधेयत्वेन श्रुत्या विवक्षितम्। तस्य च भावशुद्धिरुपयुक्ता। रागद्वेषमानावमानादिदोषग्रस्तत्वेन बहिष्प्रवृत्ति मपरित्यज्य मन्तुमशक्यत्वात्। बालस्य कर्मेति व्युत्पत्तिस्तु बालेच्छाचारे भावशुद्धौ च समाना। वयःकामचारौ तु मननस्यात्यन्तमनुपयुक्तौ प्रत्युत विरोधिनौ मूढस्य बहिष्प्रवृत्तस्य वा मनसो मननविनाशकत्वात्। तस्माद्भावशुद्धिरेव बाल्यं नेतरदुभयम्"।

मुनित्वस्य विधिकल्पनं तत्रैव+ चिन्तितम्—

"अविधेयं विधेयं वा मौनं किं न विधीयते।
प्राप्तं पाण्डित्यतो मौनं ज्ञानवाच्युभयं यतः ॥
निरन्तरज्ञाननिष्ठा मौनं पाण्डित्यतः पृथक्।
विधेयं तद्भेददृष्टिप्राबल्ये तन्निवृत्तये ॥

**कहोलब्राह्मणे** श्रूयते—"तस्माद्ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेत्। बाल्यं च पाण्डित्यं च निर्विद्याथ मुनिः" इति। अस्यायमर्थः। यस्माद्ब्रह्मभावः परमः पुरुषार्थस्तस्माद्ब्रह्म बुभूषुरुपनिषत्तात्पर्यनिर्णयरूपं पाण्डित्यं निःशेषेण संपाद्य बालवन्नीरागद्वेषत्वेन युक्तोऽसंभावनानिराकरणाय युक्तीरनुचिन्तयन्नवस्थातुमिच्छेत्। ततः पाण्डित्यबाल्ये निःशेषेण संपाद्याथ मुनिरिति। तत्र भवेदिति विध्यश्रवणान्मुनित्वं न विधेयम्। न च विधिः कल्पयितुं शक्यः। पाण्डित्यशब्देन प्राप्तस्य मौनस्यापूर्वार्थत्वाभावात्। पण्डितस्य विदुषो भावः। पाण्डित्यमिति ज्ञानवाचकोऽयं शब्दः। तथा मुनिशब्दोऽपि मन ज्ञान इत्यस्माद्धातोस्तन्निष्पत्तेः। तस्मात्प्राप्तस्य मौनस्य न विधि-

* अनाविष्कुर्वन्नन्वयात्—ब्र०सू० अ० ३ पा० ४ अ० १५ सू० ५०। + सहकार्यन्तरविधिः पक्षेण तृतीयं तद्वतो विध्यादिवत्—ब्र० सू० अ० ३ पा० ४ अ० १४ सू० ४७।

१ ग. °त्वं तृ°। २ ग. °ध्यागे च°। ३ ख. °था न। ४ ख. °योर्मन°। ५ ग. घ. °वृत्तिं प°। ६ ग. घ °स्तु भा°। ७ ख तत्र। ८ ग. ङ. बाल्यव°।

ल्पनमिति प्राप्ते ब्रूमः—पूर्वोक्तस्य पाण्डित्यस्य पुनर्मुनिशब्देनाभिधाने प्रयोजनाभा-न्निरन्तरज्ञाननिष्ठापूर्वार्थो मुनिशब्देन विवक्षितः। ततस्तिष्ठासेदितिपदानुवृत्त्या विधि-यते। अस्ति च ज्ञाननैरन्तर्येण प्रयोजनम्। प्रबलभेदवासनावासितस्य तन्निवृत्त्यर्थ-त्वात्। तस्मान्निदिध्यासनात्मकं मौनं विधेयम्"।

यथोक्तश्रवणाद्यावृत्तिश्चतुर्थाध्यायस्य प्रथमपादे* चिन्तिता—

"श्रवणाद्याः सकृत्कार्या आवृत्त्या वा सकृद्यतः।
शास्त्रार्थस्तावता सिध्येत्प्रयाजादौ सकृत्कृते॥
आवृत्त्या दर्शनान्तास्ते तण्डुलान्तावघातवत्।
दृष्टेऽत्र संभवत्यर्थे नादृष्टं कल्प्यते बुधैः॥

"सकृत्कृते कृतः शास्त्रार्थः" इतिन्यायेन श्रवणादीनां प्रयाजादिवत्सकृदेवा-नुष्ठानमिति प्राप्ते ब्रूमः—उक्तन्यायस्यादृष्टफलविषयत्वादत्र ब्रह्मसाक्षात्कारलक्षणस्य दृष्टफलस्य संभवात्। "दृष्टे संभवत्यदृष्टं न कल्पनीयम्" इतिन्यायेनावघातवत्फल-सिद्धिपर्यन्तं श्रवणाद्या आवर्तनीयाः"।

आवृत्तेन विचारादिना यतो वा इत्यादिलक्षणलक्षितं ब्रह्म साक्षात्क्रियते। तस्मिंश्च लक्षणवाक्ये यत इत्येतस्मिन्पदे यदित्येतत्प्रातिपदिकं सर्वनामत्वेऽपि जन्मादिसंनिधि-बलात्तदपेक्षितं कारणत्वं ब्रूते। तत्र पञ्चम्या उपादानार्थत्वे निमित्तं ब्रह्मव्यतिरिक्तम-पेक्ष्येत। तन्निमित्तार्थत्वे चोपादानापेक्षेति चेन्न। उपादानार्थत्वात् "जनिकर्तुः प्रकृतिः" "×हेतौ च" इति सूत्रद्वयेनोभयत्र पञ्चमीविधानात्। ननु यतो जायन्ते तद्ब्रह्मेत्येतावतैव लक्षणसिद्धौ स्थितिप्रलयश्रवणं व्यर्थमिति चेन्मैवम्। =कुविन्दवत्केवलं निमित्तत्वं व्युदसितुं स्थितिहेतुत्वम्। तन्तुसंयोगवत्केवलमसमवायित्वं व्युदसितुं लयहेतुत्वम्। ततो जन्मस्थितिलयैर्निमित्तासमवाय्युपादानत्वानि सिध्यन्ति। ननु भूतानामुत्पत्त्यदर्श-नाद्भौतिकानां भूतकार्यत्वान्न ब्रह्मोपादानमिति चेन्न। भूतोत्पत्तेरागमसिद्धत्वात्। अस्ति पृथिवी सन्त्याप इत्येवं भूतानां सदनुरक्तत्वेन प्रतिभासात्सद्वस्तु भूतोपादानम्। तच्च वस्तु ब्रह्म। भौतिकोत्पत्तौ भूतानि मृदः पिण्ड इव सतोऽवान्तरावस्थारूपाणि। उपादानं तु मृदिव सद्वस्त्वेव। सन्घटः सच्छरीरमित्येवं सदनुरक्तत्वेनैव भौतिकानां प्रतिभासात्। यथा प्राकृतानां पामराणां दृग्धतन्त्वनुरक्तस्य पटस्य तन्तव उपादानं तद्वत्। आकाशकालादय उत्पद्यन्ते विभक्तत्वाद्घटशरावादिवत्। इत्येवं तन्नित्यत्व-

* आवृत्तिरसकृदुपदेशात्—ब्र० सू० अ० ४ पा० १ अ० १ सू० १। × इदं चिन्त्यम्। व्याध्याय्यां हेतौ चेतिसूत्रानुपलब्धेः। अथवा हेतौ चेतिशब्देन हेताविति सप्तम्यन्तपदानुवृत्तियुक्तं भाषा गुणेऽस्त्रियामितिसूत्रमुपलक्षणीयम्। = पटकारवत्।

१ ख. °नं प्रबलम्। भे°। २ ग. घ. °म्या अपा°। ३ ग. घ. °पेक्षते।

वादिनं प्रति प्रयोक्तव्यम् । सृज्यस्य सर्वजगतो विचित्रत्वात् । तदन्यथानुपपत्त्या स्रष्टुर्ब्रह्मणः सर्वज्ञत्वं सर्वशक्तित्वं च सिध्यति । न हि विचित्रप्रासादविषयज्ञानशक्तिभ्यां विना तन्निर्मातृत्वं कस्यचिद्दृष्टम् । यद्यपि निरिन्द्रियब्रह्मणः सर्ववस्तुज्ञानकारणानि प्रत्यक्षप्रमाणानि न सन्ति तथाऽपि श्रुतियुक्तिभ्यां सर्वज्ञत्वमभ्युपेयम् । "यः सर्वज्ञः सर्ववित्" इति श्रुतिः । युक्तिश्चैवं द्रष्टव्या— सर्वविषयाकारधारिषु मायापरिणामेषु प्रतिबिम्बितं चैतन्यं सर्वानुभव इत्युच्यते । तस्य च विषयैराध्यासिकसंबन्धाद्वर्तमानसर्वज्ञानं तावत्सिद्धम् । अतीतविषयाणां तदवच्छिन्नमायावृत्तीनां च निवृत्तौ तत्संस्कारा अस्मदादिवदतीतविषयाः स्मृतिरूपा मायापरिणामा भवन्ति । तत्प्रतिबिम्बितानुभवेनातीतसर्वज्ञानमपि सिध्यति । तथा सृष्टेः प्रागपि स्रक्ष्यमाणपदार्थविषयस्य कुलालादिषु दृष्टत्वादागामि सर्वज्ञानमपि स्वमायापरिणामवशात्सिध्यति । तस्माद्युक्तं सर्वज्ञत्वम् । सर्वशक्तयश्च श्रुतिस्मृतिप्रसिद्धाः । "पराऽस्य शक्तिर्विविधा" इति श्रुतिः ।

> "शक्तयः सर्वभावानामचिन्त्यज्ञानगोचराः ।
> यतो हि ब्रह्मणस्तास्तु सर्गाद्या भावशक्तयः" ॥ इति स्मृतिः ।

ईदृशस्य सर्वशक्तेर्ब्रह्मणो जगज्जन्मादिकारणत्वं लक्षणम् । जन्मादेर्जगन्निष्ठत्वेऽपि तत्प्रतियोगिकस्य कारणत्वस्य ब्रह्मणि वर्तमानतया लक्षणत्वं संभवति । न च क्रियावेशात्मकत्वरूपस्य कारणतया लक्षणतया प्रकृष्टप्रकाशश्चन्द्र इत्यादाविव लक्ष्यस्वरूपान्तर्भावे ब्रह्मणः कूटस्थत्वस्य हानिरेतेति वाच्यम् । काकाश्रयत्ववदौपाधिकत्वेन तटस्थत्वात् । काकवन्तो देवदत्तस्य गृहा इत्यत्र काकाधिकरणत्वं न गृहेऽन्तर्भवति । काकविगमेऽपि गृहैकदेशभङ्गबुद्ध्यभावात् । अतो गृहस्य काकावस्थानोपाधिकधर्मत्वात्काकाधिकरणत्वं यथा तटस्थलक्षणं तथा जन्माद्युपाधिकधर्मकारणत्वं तटस्थलक्षणम् । तस्य च लक्षणस्य मिथ्यात्वान्नाद्वैतहानिः । यः सर्पः स रज्जुर्यद्रजतं सा शुक्तिरित्यत्र मिथ्याभूतोऽपि सर्पो रजतं चाऽऽध्यासिकसंबन्धवशाद्यथा रज्जोर्लक्षणं तथा कारणत्वमपि लक्षणं भविष्यति । कारणत्वेऽपि ब्रह्मणोऽधिष्ठानमात्रत्वाद्विकारांशे मायाया एव प्रयोजकत्वान्नासङ्गत्वहानिः । सर्वस्मिञ्जगति सत्तास्फूर्त्याकारे ब्रह्मणोऽनुगतत्वाद्विक्रियमाणत्वाकारेण मायाया अप्यनुगतत्वादुभयं मिलित्वोपादानम् । तत्र गुणप्राधान्यविवेके विवक्षानुसारेण द्विसूत्रन्यायो वा शक्तिशक्तिमन्न्यायो[3] वाऽधिष्ठानारोप्यन्यायो वा योजनीयः । यथा सूत्रद्वयनिर्मितरज्ज्वा संयुक्तं सूत्रद्वयं समप्राधान्यभावेनोपादानं तथा जगतो ब्रह्म माया चेत्युभयप्राधान्यं केचिदाहुः । अन्ये त्वेवं मन्यन्ते—यथा शक्तिमानग्निर्दहतीत्यत्र शक्तेर्दाहनिर्वाहकत्वेऽपि शक्तिमत्पारतन्त्र्या-

१ ख. श्रुतेः । २ ख. °धारेषु । ३ ग °क्तिम° । ४ ख. °मत्‌ स्यात° ।

द्म्रः प्राधान्यं तथा मायायाः शक्तित्वेनोपसर्जनत्वाच्छक्तिमतो ब्रह्मण एव प्राधान्यमिति । अपरे त्वेवमाहुः—यथा रज्जुव्यतिरेकेण सर्पस्य शरीराभावेऽपि भ्रान्तिकाले रज्जुतिरस्कारेण व्यवह्रियमाणतया सर्पप्राधान्यं तथा मायायाः प्राधान्यमिति ।

**स तपोऽतप्यत । स तपस्तप्त्वा ।**

**इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके नवमप्रपाठके प्रथमोऽनुवाकः ॥ १ ॥**

अथ द्वितीयोऽनुवाकः ।

**अन्नं ब्रह्मेति व्यजनात् । अन्नाद्ध्येव खल्विमानि भूतानि जायन्ते । अन्नेन जातानि जीवन्ति । अन्नं प्रयन्त्यभिसंविशन्तीति ।**

सर्वथाऽपि श्रूयमाणं जगत्कारणत्वं मायाविशिष्टस्य ब्रह्मण उपपन्नम् । जगत्कारणत्वरूपेण तटस्थलक्षणेनोपलक्षितस्य ब्रह्मणो विज्ञाने विचारः साधनमित्येवं श्रुतवतो भृगोः प्रथमपर्याये संपन्नं निश्चयं दर्शयति—**स तप इत्यादिना** । तपःशब्देनाऽऽश्रमचतुष्टयधर्मो विवक्षितः । तस्य ब्रह्मज्ञानहेतुत्वात् । अनाश्रमिधर्मस्य जपादेरपि तद्धेतुत्वं यद्यपि निर्णीतं तथाऽप्याश्रमिणां धर्मोऽतिप्रशस्तः । तथा च **बादरायणेन** सूत्रितम्—"अतस्त्वितरज्ज्यायो लिङ्गाच्च" (ब्र० सू० अ० ३ पा० ४ सू० ३९) इति । आश्रमधर्मेऽपि तपःशब्दः **श्रुतिस्मृत्योः** प्रयुज्यते । "तपो हि स्वाध्यायः" इति ब्रह्मचारिधर्मः[1] । "एतत्खलु वाव तप इत्याहुर्यः स्वं ददाति" इति गृहस्थधर्मः । "तपो नानशनात्परम्" इति वनस्थधर्मः ।

"मनसश्चेन्द्रियाणां च ह्यैकाग्र्यं परमं तपः ।
तज्ज्यायः सर्वधर्मेभ्यः स धर्मः पर उच्यते" ॥ इति यतिधर्मः ।

तत्र स्वाध्यायेन ब्रह्मावबोधे प्रमाणं संपादितं भवति । दानेन विविदिषोत्पद्यते । "विविदिषन्ति यज्ञेन दानेन" इति **श्रुतेः** । अनशनस्येन्द्रियदर्पनिवारकत्वं प्रसिद्धम् । ऐकाग्र्यस्य साक्षादेव ज्ञानहेतुत्वं "दृश्यते त्वग्र्यया बुद्ध्या" इत्या**म्नातम्** । अतः स **भृगुः** स्वाध्यायपूर्वकमैकाग्र्यरूपं तपः कृतवान् । तेनैकाग्र्येण युक्तो विचार्य जगज्जन्मस्थितिलयहेतुत्वलक्षणयोजनेनान्नस्य ब्रह्मत्वं निश्चितवान् । भूतशब्देन स्थूलदेहा विवक्षिताः[2] । तेषामन्नादुत्पत्तौ लोकप्रसिद्धिद्योतनाय हिशब्दः । गर्भाशयस्थितान्नरसात्मकत्वेन शुक्रशोणित[3]व्यतिरिक्तं कारणं व्यावर्तयितुमेवकारः । "अन्नात्पुरुषः" इत्यादिश्रौतप्रसिद्ध्यर्थः **खलुशब्दः** । यद्यप्याकाशादिभूतानि स्वरूपेणान्नान्नोत्पद्यन्ते

१ ख. ग. °र्मः । यदन्न° । २ क. ख. घ. ङ. °तमत्र° । ३ ग. ङ. शुक्लशो° ।

तथाऽपि देहाकारपरिणतानां तेषां जन्मान्नाधीनमित्यन्नस्य जगद्धेतुत्वमभिप्रेतम् । अत्र तपःशब्देनोर्ध्वरेतसामाश्रमाणां धर्मो विवक्षितः ।

तेषां सद्भावस्तृतीयाध्यायस्य **चतुर्थपादे***चिन्तितः—

"नास्त्यूर्ध्वरेताः किंवाऽस्ति नास्त्यसावविधानतः ।
वीरघातो विधेः क्लृप्तावन्धपङ्ग्वादिगा स्मृतिः ॥
अस्त्यपूर्वविधेः क्लृप्तेर्वीरहाऽनाग्निको गृही ।
अन्धादेः पृथगुक्तत्वात्स्वस्थानां श्रूयते विधिः ॥

**पूर्वाधिकरणे** स्वतन्त्रमात्मविज्ञानमित्युक्तम् । तस्य चाऽऽत्मज्ञानस्योर्ध्वरेतःस्वाश्रमेषु सुलभत्वादाश्रमसद्भावश्चिन्त्यते । तत्र नास्त्यूर्ध्वरेता इति प्राप्तम् । कुतः । विध्यभावात् । छान्दोग्ये—" त्रयो धर्मस्कन्धाः । यज्ञोऽध्ययनं दानमिति प्रथमः । तप एव द्वितीयः । ब्रह्मचार्याचार्यकुलवासी तृतीयः " इत्यत्र यज्ञाद्युपलक्षितगार्हस्थ्यस्य तपःशब्दलक्षितवानप्रस्थत्वस्य नैष्ठिकब्रह्मचर्यस्य च परामर्शमात्रं गम्यते । न तु विधिरुपलभ्यते । न चापूर्वार्थत्वेन विधिः कल्पयितुं शक्यः । " वीरहा वा एष देवानां योऽग्निमुद्वासयते " इत्यग्न्युद्वासनलक्षणस्य गार्हस्थ्यपरित्यागस्य निन्दितत्वात् । " चत्वार आश्रमाः " इति **स्मृतिस्तु** गार्हस्थ्यधर्मानधिकृतान्धपङ्ग्वादिविषया भविष्यति । न ह्यन्धस्याऽऽज्यावेक्षणाद्युपेते कर्मण्यधिकारोऽस्ति । नापि पङ्गोर्विष्णुक्रमणाद्युपेते कर्मण्यधिकारः । तस्माच्चक्षुरादिपाटवयुक्तस्याऽऽत्मज्ञानोपयुक्त ऊर्ध्वरेता आश्रमो नास्तीति प्राप्ते ब्रूमः—अस्त्यूर्ध्वरेता आश्रमः । विध्यश्रवणेऽप्यपूर्वार्थत्वेन कल्पयितुं शक्यत्वात् । न च वीरघातदोषः । उत्सन्नाग्निकगृहिविषयत्वाद्वीरहत्यायाः । यत्त्वन्धादिविषयत्वं स्मृतेरुक्तम् । तदसत् । " अथ पुनरव्रती वा व्रती वा स्नातको वाऽस्नातको वोत्सन्ना×ग्निरनग्निको वा यदहरेव विरजेत्तदहरेव प्रव्रजेत् " इति विरक्तानां गार्हस्थ्यानधिकृतानां पृथक्संन्यासविधानात् । न च चक्षुरादिपाटववतामाश्रमान्तरविधिः कल्पनीयः । **जाबालश्रुतौ** प्रत्यक्षविध्युपलम्भात्—" ब्रह्मचर्यं समाप्य गृही भवेद्गृहाद्वनी भूत्वा प्रव्रजेत् " इति । तस्मादस्त्याश्रमान्तरम् " ।

आश्रमाणामवरोहाभावस्तत्रैव= चिन्तितः—

" अवरोहोऽस्त्याश्रमाणां न वा रागात्स विद्यते ।
पूर्वधर्मश्रद्धया वा यथाऽऽरोहस्तथैच्छिकः ॥

---

* परामर्शं जैमिनिरचोदनां चापवदति हि—ब्र० सू० अ० ३ पा० ४ अ० ९ सू० १८ वर्णकम् १ । × जायामरणेन नष्टाग्निरुत्सन्नाग्निः । पूर्वमेवाग्निपरिग्रहरहितोऽनग्निः । = तद्भूतस्य तु नातद्भावो जैमिनेरपि नियमातद्रूपाभावेभ्यः—ब्र० सू० अ० ३ पा० ४ अ० १० सू० ४० ।

---

१ व. इति ।

रागस्यातिनिषिद्धत्वाद्विहितस्यैव धर्मता ।
आरोहनियमोक्त्यादेर्नावरोहोऽस्ति शास्त्रतः ॥

"ब्रह्मचर्यं समाप्य गृही भवेद्गृहाद्वनी भूत्वा प्रव्रजेत्" इत्याश्रमाणामारोह इच्छाधीनो यथा भवति तथा पारिव्राज्याद्वानप्रस्थ इत्याद्यवरोहोऽपि क्वचिद्रागवशात्क्वचित्पूर्वाश्रमश्रद्धावशाच्च युक्त इति प्राप्ते ब्रूमः—रागस्तावन्मिथ्याज्ञानमूलत्वान्निषिद्धः । न च पूर्वाश्रमधर्मश्रद्धा युज्यते । उत्तराश्रमिणं प्रत्यविहितत्वेन धर्मत्वाभावात् । न हि यो येनानुष्ठातुं शक्यते श्रद्धीयते च स तस्य धर्मो भवति । किं तर्हि यो यं प्रति विहितः स तस्य धर्मः । किंच "ततो न पुनरेयात्" इत्यवरोहनिषेधेनाऽऽरोहो नियम्यते । न चाऽऽरोहवदरोहे शिष्टाचारो दृश्यते । तस्मान्नास्त्यवरोहः" ।

आश्रमभ्रंशे प्रायश्चित्तं तत्रैव*चिन्तितम्—

"भ्रष्टोर्ध्वरेतसो नास्ति प्रायश्चित्तमथास्ति वा ।
अदर्शनोक्तेर्नास्त्येतद्व्रतिनो गर्दभः पशुः ॥
उपपातकमेवैतद्व्रतिनो मधुमांसवत् ।
प्रायश्चित्ताच्च संस्काराच्छुद्धिर्यत्नपरं वचः ।

नैष्ठिकब्रह्मचर्यादूर्ध्वरेतस्त्वं प्राप्य पुनः स्त्रीप्रसङ्गेन भ्रष्टस्य प्रायश्चित्तं नास्ति ।

"आरूढो नैष्ठिकं धर्मं यस्तु प्रच्यवते पुनः ।
प्रायश्चित्तं न पश्यामि येन शुध्येत्स आत्महा" ॥

इति प्रायश्चित्तादर्शनवचनात् । "अथ यो ब्रह्मचारी स्त्रियमुपेयात्स गर्दभं पशुमालभेत" इत्यस्ति प्रायश्चित्तमित्युच्येत । तन्न । तस्य व्रतिविषयत्वात् । उपकुर्वाणाख्यो यो वेदाध्ययनाङ्गत्वेन ब्रह्मचर्यव्रतमनुतिष्ठति तद्विषयमिदं प्रायश्चित्तवचनम् । तस्मादूर्ध्वरेतस्त्वाद्भ्रष्टस्य नास्ति प्रायश्चित्तमिति प्राप्ते ब्रूमः—यथोपकुर्वाणस्य मधुमांसभक्षणमुपपातकमिति प्रायश्चित्तपुनःसंस्कारौ विद्येते तद्वदूर्ध्वरेतसोऽपि गुरुदारादिभ्योऽन्यत्र प्रवृत्तिरुपपातकमेवं तत् । न तु महापातकम् । ततः प्रायश्चित्तात्पुनःसंस्काराच्च शुद्धिर्भवति । यदि महापातकेष्वपरिगणितत्वेनोपपातकत्वमाश्रित्य प्रायश्चित्तमुच्येत तर्ह्यदर्शनवचनस्य का गतिरिति चेद्यत्नपरं तद्वाक्यमिति ब्रूमः । अत एव प्रायश्चित्तं न पश्यामीत्याह । न तु नास्तीति । प्रायश्चित्तं तु गर्दभपशुरेव ब्रह्मचारित्वस्य समत्वात् । तथा वनस्थपरिव्राजकयोरपि भ्रंशे प्रायश्चित्तं स्मर्यते—"वानप्रस्थो दीक्षाभेदे कृच्छ्रं द्वादशरात्रं चरित्वा

* न चाऽऽधिकारिकमपि पतनानुमानात्तदयोगात्—ब्र० सू० अ०३ पा०४ अ०११ सू० ४१ ।

१ क. ख. ग. ङ. °त्तमाश्र° । २ क. ख. ङ. येन स्वनु° । ३ घ. °स्त्येव व्रति° । ४ क. ङ. ग. ङ. °व- । न । ५ क. ग. ङ. °द्विरिति । ६ घ. °त्वेन तद्रूप° । ७ घ. समानत्वा° ।

महाकक्षं वर्धयेत्। भिक्षुर्वनस्थवत्सोमवृद्धिवर्जम्" इति। कक्षवृद्धिर्वनावाप: सोमवृद्धिरपि स एव"।

प्रायश्चित्तेनाऽऽमुष्मिकमात्रशुद्धिस्तत्रैव* दर्शिता—

"शुद्धः शिष्टैरुपादेयस्त्याज्यो वा दोषहानितः।
उपादेयोऽन्यथा शुद्धिः प्रायश्चित्तकृता वृथा॥
आमुष्मिक्येव शुद्धिः स्यात्ततः शिष्टास्त्यजन्त्यमुम्।
प्रायश्चित्तादृष्टिवाक्यादशुद्धिस्त्वैहिकीष्यते॥

पूर्वोक्तप्रायश्चित्तापादितशुद्ध्यन्यथानुपपत्त्या कृतप्रायश्चित्तस्य शिष्टैः सह व्यवहारोऽस्तीति प्राप्ते ब्रूमः—आमुष्मिकशुद्धिसद्भावेऽपि प्रायश्चित्तादर्शनवचनादैहिकशुद्ध्यभावाच्छिष्टैरेष न व्यवहार्यः"।

एतेष्वाश्रमेषु लोकविशेषप्राप्तिहेतोः प्रवृत्तिलक्षणस्य तपसो ज्ञानसाधनत्वाभावान्निवृत्तिलक्षणस्यैकाग्र्यादिरूपस्य तपसो ज्ञानहेतुत्वं तत्रैव+ चिन्तितम्—

"लोककाम्याश्रमी ब्रह्मनिष्ठामर्हति वा न वा।
यथावकाशं ब्रह्मैव ज्ञातुमर्हत्यवारणात्॥
अनन्यचित्तता ब्रह्मनिष्ठाऽसौ कर्मठे कथम्।
कर्मत्यागी ततो ब्रह्मनिष्ठामर्हति नेतरः॥

"त्रयो धर्मस्कन्धाः" इत्याश्रमानधिकृत्य "सर्वे एते पुण्यलोका भवन्ति" इत्याश्रमानुष्ठायिनां पुण्यलोकफलमभिधाय "ब्रह्मसंस्थोऽमृतत्वमेति" इति मोक्षसाधनत्वेन ब्रह्मनिष्ठा प्रतिपाद्यते। सेयं ब्रह्मनिष्ठा पुण्यलोककामिन आश्रमिणोऽपि संभाव्यते। आश्रमकर्माण्यनुष्ठाय यथावकाशं ब्रह्मनिष्ठायाः कर्तुं सुशकत्वात्। न हि लोककामी ब्रह्म न जानीयादिति निषेधोऽस्ति। तस्मात्सर्वस्याऽऽश्रमिणोऽस्ति ब्रह्मनिष्ठेति प्राप्ते ब्रूमः—ब्रह्मनिष्ठा नाम सर्वव्यापारपरित्यागेनानन्यचित्ततया ब्रह्मणि समाधिः। न चासौ कर्मशूरे संभवति। कर्मानुष्ठानत्यागयोः परस्परविरोधात्। तस्मात्कर्मत्यागिन एव ब्रह्मनिष्ठा"।

**तद्विज्ञाय। पुनरेव वरुणं पितरमुपससार। अधीहि भगवो ब्रह्मेति। त१ होवाच। तपसा ब्रह्म विजिज्ञासस्व। तपो ब्रह्मेति। स तपोऽतप्यत। स तपस्तप्त्वा॥**

**इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके नवमप्रपाठके द्वितीयोऽनुवाकः॥ २॥**

---

* बहिस्तूभयथाऽपि स्मृतेराचाराच्च—ब्र० सू० अ० ३ पा० ४ अ० १२ सू० ४३। + अ० ३ पा० ४ द्वितीयाधिकरणस्य द्वितीयं वर्णकम्।

१ ख. °स्तां त्रि°।

अथ तृतीयोऽनुवाकः ।

---

**प्राणो ब्रह्मेति व्यजानात् । प्राणाद्ध्येव खल्विमानि भूतानि जायन्ते । प्राणेन जातानि जीवन्ति । प्राणं प्रयन्त्यभिसंविशन्तीति ।**

अथ भृगोर्द्वितीयपर्याये संपन्नं निश्चयं दर्शयति– **तद्विज्ञायेत्यादिना** । तत्पूर्वोक्तमन्नस्य ब्रह्मत्वं **विज्ञाय** लक्षणसद्भावाद्विशेषेण निश्चित्य तस्मिन्नपरितुष्टो बुभुत्सति संशयवशात् । पुनरपि मन्त्रपुरःसरं गुरुमुपससारैव न त्वालस्यं कृतवान् । अपरितुष्टस्य भृगोरयमाशयः । वाजसनेयिनस्तावदेवमामनन्ति–– " अन्नं ब्रह्मेत्येवमाहुः । तन्न तथा पूयति वा अन्नमृते प्राणात् " इति । अन्नस्य पूतिगन्धस्तत्कार्ये देहे स्पष्टमुपलभ्यते । विष्णुपुराणेऽप्यसौ दर्शितः–––

" स्वदेहाशुचिगन्धेन न विरज्येत यः पुमान् ।
विरागकारणं तस्य किमन्यदुपदिश्यते" ॥ इति ।

तस्माद्देहोत्पत्तिस्थितिलयकारणस्याप्यन्नस्य ब्रह्मत्वमयुक्तमिति । तस्योपसन्नस्य भृगोर्वरुणः पूर्वोक्तमैकाग्र्यरूपं **तप** एव साधनत्वेनोपदिदेश । तस्य च तपसो ब्रह्मसाक्षात्कारं प्रत्यन्तरङ्गत्वविवक्षया **तपो ब्रह्मे**त्यभेद उपचारितः । सत्यज्ञानादिस्वरूपलक्षणवाक्येन ब्रह्मण्युपदिष्टे सत्यागमप्रमेयत्वेन धर्माधर्मवत्परोक्षमेव ब्रह्मावगम्येत । ऐकाग्र्यबुद्ध्या द्रष्टुं शक्यमित्यभिप्रेत्य ब्रह्मस्वरूपमनुक्त्वा वरुणस्तप एवोक्तवान् । भृगुश्चैकाग्र्यचित्तेन पूर्वोक्तं जगत्कारणत्वलक्षणं योजयित्वा **प्राणस्य** ब्रह्मत्वं निश्चितवान् । **ऐतरेयिणः** प्राणस्य देहोत्पत्तिनिमित्तत्वं व्यतिरेकमुखेणाऽऽमनन्ति— " न ह वा ऋते प्राणाद्रेतः सिच्यते यद्वा ऋते प्राणाद्रेतः सिच्येत पूयेन्न संभवेत् " इति । कश्चिज्जीवो लिङ्गदेहयुक्तः स्वर्गान्नरकाद्वा वृष्टिद्वारेणाऽऽगत्यान्नेन सह पुरुषं प्रविश्य रेतसा सह योषिद्गर्भं यदा प्रविशति तदा तद्रेतस्त्वन्तःप्रविष्टेन प्राणवायुना शोषं प्राप्य पिण्डादिक्रमेण देहमुत्पादयति । प्राणाभावे तु देहं नोत्पादयतीत्यर्थः । यथोत्पत्तिहेतुत्वं तथा जीवनहेतुत्वमपि कौषीतकिभिराम्नायते—" यावदस्मिञ्शरीरे प्राणो वसति तावदायुः " इति । प्राणोत्क्रान्तौ देहस्य मरणं प्रसिद्धम् । तस्मादुपादानत्वाभावेऽपि जन्मादित्रितयनिमित्तत्वात्प्राणो ब्रह्मेति भृगोर्निश्चयः ।

**तद्विज्ञाय । पुनरेव वरुणं पितरमुपससार । अधीहि भगवो ब्रह्मेति । तꣳ होवाच । तपसा ब्रह्म विजिज्ञासस्व । तपो**

---

१ क. ख. ङ. °पपन्न° ।

ब्रह्मेति । स तपोऽतप्यत । स तपस्तप्त्वा ।

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके नवमप्रपाठके
तृतीयोऽनुवाकः ॥ ३ ॥

अथ चतुर्थोऽनुवाकः ।

मनो ब्रह्मेति व्यजानात् । मनसो ह्येव खल्वि-
मानि भूतानि जायन्ते । मनसा जातानि
जीवन्ति । मनः प्रयन्त्यभिसंविशन्तीति ॥

अथ तृतीयपर्याये संपन्नं निश्चयं दर्शयति—**तद्विज्ञायेत्यादिना** । प्राणस्य जड-त्वाद्ब्रह्मत्वमयुक्तम् । " प्रज्ञानं ब्रह्म विज्ञानमानन्दं ब्रह्म " इत्यादौ ब्रह्मणश्चेतनत्वं प्रतीयते । मनश्च ज्ञानशक्तित्वाच्चेतनम् । जन्मादिकारणत्वं लक्षणं च मनसि विद्यते । यथा पूर्वत्र गर्भे प्राणप्रवेशस्य देहोत्पत्तिनिमित्तत्वमुक्तम्, तथा प्राणप्रवेशोऽपि मनोधीनतयाँ तत्प्रश्नोत्तरवाक्ययोराथर्वणिकैराम्नायते—' कथमायात्यस्मिञ्शरीरे ' इति गार्ग्यस्य प्रश्नः । " मनोकृतेनाऽऽयात्यस्मिञ्शरीरे " इति पिप्पलादस्योत्तरम् । मनोकृतो मनःकृत ईदृशं देहं प्राप्स्यामीत्येवंविधो मरणकालीनः कर्मप्रेरिते मनसि जायमानः संकल्पः । तेन संकल्पेन पूर्वदेहावसानजनितेन तत्रत्यः प्राणोऽस्मिञ्शरीरे समायाति । अयमर्थस्तस्यामेव श्रुतौ विस्पष्टमाम्नायते—" इन्द्रियैर्मनसि संपद्यमानैर्यच्चित्तस्तेनैष प्राणमायाति प्राणस्तेजसा युक्तः सहाऽऽत्मना यथासंकल्पितं लोकं नयति" इति । मरणकाले मनसि वृत्तिलयं प्राप्नुवद्भिर्वागादीन्द्रियैः सहितो जीवो यस्मिन्भाविदेहोचितवृत्तियुक्तो[2] भवति तेन भाविदेहविषयज्ञानेन सहैष जीवः प्राणमायाति प्राणप्रधानो भवति । स च प्राणस्तेजसा भाविदेहध्यानलक्षणेन युक्तो लिङ्गदेहं सर्वं जीवात्मना सह संकल्पानुसारिणं लोकं प्रापयति । तत्र दृष्टान्तो बृहदारण्यके समाम्नातः—" तद्यथा तृणजलायुका तृणस्यान्तं गत्वाऽन्य-माक्रममाक्रम्याऽऽत्मानमुपसंहरत्येवमेवायमात्मेदं शरीरं निहत्याविद्यां गमयित्वाऽन्य-माक्रममाक्रम्याऽऽत्मानमुपसंहरति " इति । [यथा] तृणेषु संचरन्ती जलूका तृणान्तं प्राप्य प्रथमं मुखेन तृणान्तरमवलम्ब्य ततः पृष्ठभागं तृणान्तरं नयति तथा जीवात्मा मरणकाले स्वकीयत्वाभिमानपरित्यागेनेदं वर्तमानशरीरमविद्यां गमयित्वा चैतन्यराहित्यमापाद्य मनसा देहान्तरं भावयित्वा कृत्स्नदेहं लिङ्गविशिष्टं स्वात्मानं देहान्तरं नयति । तस्माद्देहविशिष्टाः प्राणिनो **मनसो** जायन्ते । कृषिवाणिज्यादे-

१ क. ख. ग. ङ. °या प्रश्नो° । २ घ. °देहे चित्तवृ° ।

जीवनोपायस्य मनसा विचार्य संपाद्यत्वान्मनसो जीवनहेतुत्वम् । उक्तरीत्या मनसाऽभिमानपरित्यागेन मरणाल्लयहेतुत्वं च । तस्माल्लक्षणसद्भावान्मनसो ब्रह्मत्वं निश्चितम् ।

तद्विज्ञाय । पुनरेव वरुणं पितरमुपससार । अधीहि भगवो ब्रह्मेति । तꣳ होवाच । तपसा ब्रह्म विजिज्ञासस्व । तपो ब्रह्मेति । स तपोऽतप्यत । स तपस्तप्त्वा ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके नवमप्रपाठके चतुर्थोऽनुवाकः ॥ ४ ॥

अथ पञ्चमोऽनुवाकः ।

विज्ञानं ब्रह्मेति । व्यजानात् । विज्ञानाद्ध्येव खल्विमानि भूतानि जायन्ते । विज्ञानेन जातानि जीवन्ति । विज्ञानं प्रयन्त्यभिसंविशन्तीति ।

अथ चतुर्थपर्याये संपन्नं निश्चयं दर्शयति—तद्विज्ञायेत्यादिना । मनसश्चक्षुरादिवत्करणत्वेन कर्तृपरतन्त्रत्वान्न ब्रह्मत्वं युक्तम् । विज्ञानस्य तु कर्तृत्वं "विज्ञानं यज्ञं तनुते" इति स्पष्टमेवाऽऽम्नातम् । तल्लक्षणं च तत्र सुलभम् । कर्मद्वारा देहोत्पत्तिहेतुत्वात् । "यत्कर्म कुरुते तदभिसंपद्यते । पुण्यो वै पुण्येन कर्मणा पापः पापेन" इत्यादिश्रुतेः । लौकिककृष्यादेः कर्तृत्वेन जीवनहेतुत्वं मरणकारणयुद्धादिप्रवृत्त्या लयहेतुत्वं च । तस्माल्लक्षणलक्षितस्य विज्ञानस्य ब्रह्मत्वं युक्तम् ।

तद्विज्ञाय । पुनरेव वरुणं पितरमुपससार । अधीहि भगवो ब्रह्मेति । तꣳ होवाच । तपसा ब्रह्म विजिज्ञासस्व । तपो ब्रह्मेति । स तपोऽतप्यत । स तपस्तप्त्वा ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके नवमप्रपाठके पञ्चमोऽनुवाकः ॥ ५ ॥

अथ षष्ठोऽनुवाकः ।

आनन्दो ब्रह्मेति व्यजानात् । आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते । आनन्देन जातानि जीवन्ति । आनन्दं प्रयन्त्यभिसंविशन्तीति ।

अथ पञ्चमपर्याये संपन्नं निश्चयं दर्शयति—तद्विज्ञायेत्यादिना । कर्तृत्वस्य क्लेशा-

१ घ. °कनीत्या । २ ग. 'नत्या' । ३ क. ग. 'र्यायसं' ।

त्मकत्वान्न विज्ञानस्य ब्रह्मत्वं युक्तम् । किंचान्नादिविज्ञानान्तानां चतुर्णामपि न सर्वभूतोत्पत्तिहेतुत्वमस्ति । आकाशादिभूतानामन्नादिभ्यो भौतिकेभ्यो जन्मासंभवात् । आनन्दस्य तु क्लेशरहितत्वात्स्वरूपेण सर्वाभीष्टतया परमपुरुषार्थत्वादाकाशादिसर्वभूतकारणत्वाच्च ब्रह्मत्वं मुख्यमेव संभवति । तस्याऽऽनन्दस्य स्वरूपं छन्दोगा आमनन्ति— "यो वै भूमा तत्सुखं नाल्पे सुखमस्ति भूमैव सुखम्" इति । द्वौ हि पदार्थौ भूमाऽल्पं चेति । तत्र बहोर्भावो भूमेति व्युत्पत्तेर्बाहुल्यात्मको यः पदार्थस्तदेव सुखं न तु भूम्न उपरितनेऽल्पपदार्थे सुखमस्ति । भूमा तु सुखं भवत्येव । तयोर्भूमाल्पयोर्लक्षणभेदस्तत्रैवाऽऽम्नातः—"यत्र नान्यत्पश्यति स भूमा । अथ यत्रान्यत्पश्यति तदल्पम्" इति । अन्यो द्रष्टा स्वातिरिक्तमन्यद्द्रष्टव्यं पश्यतीत्यादयस्त्रिपुट्यो यस्मिन्नद्वैतपदार्थे न सन्ति सोऽयमद्वैतपदार्थो भूमा । त्रिपुटीरूपं द्वैतं यस्मिञ्जगत्यस्ति तज्जगदल्पम् । तयोर्भूमाल्पयोर्नित्यत्वानित्यत्वे च तत्रैवाऽऽम्नायेते— "यो वै भूमा तदमृतमथ यदल्पं तन्मर्त्यम्" इति । द्वैतावस्थयोर्जाग्रत्स्वप्नरूपयोर्दुःखमेव प्रायेणानुभूयते । यदि क्वचित्कदाचित्सुखं स्यात्तदपि साधनप्रयासतारतम्यविनाशित्वदोषैरुपेतत्वाद्दुःखमेव ।

तदुक्तं श्रेयोमार्गकारैः—

"इह बत दुर्लभलाभाः सुखलेशा[2] भाङ्गिनो यतः शरीरभृताम् ।
तेऽपि च दुःखायातो दुःखानि पुनस्ततोऽपि दुःखानि" ॥ इति ।

अनेनाभिप्रायेण नाल्पे सुखमस्तीत्युक्तम् । अद्वैतावस्थयोस्तु सुषुप्तिसमाध्योः सुखमेव स्वप्रकाशमवतिष्ठते । न च तस्य दुःखाभावत्वं शङ्कनीयम् । अभावस्य स्वप्रकाशत्वासंभवात् । प्रमाणेन विना भासमानत्वात्स्वप्रकाशत्वम् । न खल्वद्वैतं प्रमाणेन तदा प्रमीयते । तथा सति द्वैतापत्त्या सुषुप्तिभङ्गप्रसङ्गात् । भासमानत्वं विप्रतिपत्त्यभावादवगन्तव्यम् । यदा जाग्रत्स्वप्नौ विप्रतिपत्तिमकृत्वा जनोऽभ्युपगच्छति तदा सुषुप्तिसमाधी अप्यविप्रतिपत्त्याऽभ्युपसंगच्छत्येव । तस्मात्साधनमन्तरेण भासमानतया स्वप्रकाशत्वाददद्वैतस्य न दुःखाभावत्वम् । + विषयलाभवत्सुषुप्तिसमाध्योः प्रीतिविषयत्वादद्वैतं सुखरूपम् । सर्वे जना असति कर्तव्यान्तरे सौषुप्तं सुखं काङ्क्षन्तः शेरते । तत्त्वज्ञानिनश्च सुखाभिलाषेणैव निर्विकल्पं समाधिं कुर्वन्ति । उभयेऽप्युत्तरकाले सुखमहमस्वाप्सं सुखमहं समाहितवानस्मीति तत्सुखमनुस्मरन्ति । आभ्यां सुषुप्तिसमाधिदृष्टान्ताभ्यां द्वैतसृष्टेः प्राचीनमप्यद्वैतं सुखमित्यवगन्तव्यम् । तस्माददद्वैतरूपादानन्दादेवेमान्याकाशादीनि हिरण्यगर्भादीनि च द्वैतरूपाणि भूतान्युत्पद्यन्ते । ननु द्वैताद्वैतरूपौ

+ किं तर्हीत्यादिः ।

१ ग संभवन्ति । २ "च. °लेशभ° ।

सृष्टिप्रलयावहोरात्रवत्क्रमेण पुनः पुनः पर्यावर्तेते । तथा सत्येकस्य वस्तुनः परस्परवि-रुद्धरूपद्वयासंभवादेकस्य स्वाभाविकत्वमितरस्याऽऽगन्तुकत्वं च वक्तव्यम् । तत्र कस्य स्वाभाविकत्वं कस्य वाऽऽगन्तुकत्वं युक्तम् । उच्यते । साधननैरपेक्ष्यत्वमद्वैतस्य सुषुप्तौ संप्रतिपन्नम् । द्वैतरूपं तु जागरणमहि विषयादिबहुसाधनसापेक्षम् । तस्मात्स्वाभावि-काद्वैतरूप आनन्दो जगत आगन्तुकस्य द्वैतरूपस्योपादानम् । यथा समुद्र एकः फेन-तरङ्गबुद्बुदादीनामनेकेषामुत्पत्तिस्थितिलयहेतुस्तद्वत् । तदेतज्जगत्कारणत्वलक्षणेन लक्षि-तमानन्दमद्वैतरूपं ब्रह्मैकाग्र्यलक्षणेन तपसा भृगुः साक्षात्कृतवान् । तस्मात्तदेव तपो मुख्यं साधनम् । तस्य चैकाग्र्यरूपस्य परमतपसः संपादनाय बहुविधा उपायाः पात-ञ्जलादियोगशास्त्रे प्रपञ्चिताः ।

यथोक्ताख्यायिकायां जगत्कारणत्वेन विचारितस्य ब्रह्मण आनन्दरूपस्य साक्षात्कारे चित्तैकाग्र्यरूपं तपोऽन्तरङ्गसाधनमित्युक्तम् । अन्नादिभ्यो विज्ञानान्तेभ्यश्चतुर्भ्योऽति-रिक्तमानन्दरूपं यथा तत्त्वं तथैवाऽऽनन्दादप्यधिकं तत्त्वान्तरमिति शङ्कां वारयितुं विद्यामुपसंहरति—

**सैषा भार्गवी वारुणी विद्या । परमे व्योमन्प्रतिष्ठिता, इति ।**

तच्छब्देन श्रुत्यन्तरप्रसिद्धिरुच्यते । "ब्रह्मा देवानां प्रथमः संबभूव विश्वस्य कर्ता भुवनस्य गोप्ता । स ब्रह्मविद्यां सर्वविद्याप्रतिष्ठामथर्वाय ज्येष्ठपुत्राय प्राह" इत्येका श्रुतिः । "अथाऽऽश्वलायनो भगवन्तं परमेष्ठिनं परिसमेत्योवाच । अधीहि भगवन्ब्रह्मविद्यां वरिष्ठाम्" इत्यपरा श्रुतिश्च । एतच्छब्द एकाग्रचित्तजन्यानुभवप्र-सिद्धिमाचष्टे । भृगुणा लब्धा भार्गवी । वरुणेन प्रोक्ता वारुणी । तादृशी विद्या परमे व्योमनि ब्रह्मतत्त्वे परिसमाप्ता । "तस्माद्वा एतस्मादात्मन आकाशः संभूतः" इति यदुक्तं तदेतदपरं व्योम । "एतस्मिन्खल्वक्षरे गार्गि आकाश ओतश्च प्रोतश्च" इति यदव्याकृतं श्रुतं तदेतन्मध्यमं व्योम । ऋचो अक्षरे परमे व्योमन्निति श्रुतम-विनश्वरमृगादिकल्पनाधिष्ठानमृग्वेदादिप्रतिपाद्यं यद्ब्रह्मतत्त्वं तदेतदुत्तमं व्योम । न ह्येतस्मादधिकं किंचिद्वेद्यमस्ति । तथा च श्वेताश्वतरा आमनन्ति—"एतज्ज्ञेयं नित्यमेवाऽऽत्मसंस्थं नातः परं वेदितव्यं हि किंचित्" इति । तस्मादस्मिन्ब्रह्मणि विद्या समाप्ता ।

एकाग्रचित्तस्योत्तमाधिकारिणः सेयं विद्या सुलभा । यस्तु सांसारिकफलकामनया चञ्चलचित्तस्तस्य तत्फलसाधनोक्तिव्याजेन चित्तैकाग्र्यहेतुमुपासनं विधत्ते—

**स य एवं वेद प्रतितिष्ठति । अन्नवानन्नादो भवति । महा-**

---

१ ख. °स्परं वि° । २ क. ख. ग. ङ. °पेक्षत्वम् । ३ ख. °विकोऽद्वै° । ४ घ. °क्षणल° ।

न्भवति । प्रजया पशुभिर्ब्रह्मवर्चसेन । महान्कीर्त्या ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके नवमप्रपाठके षष्ठोऽनुवाकः ॥ ६ ॥

अथ सप्तमोऽनुवाकः ।

अन्नं न निन्द्यात् । तद्व्रतम्, इति ।

एवंशब्दः प्रकृतं परामृशति । अन्नं ब्रह्मेत्यारभ्याऽऽनन्दो ब्रह्मेत्येतदन्तं प्रकृतम् । तत्र ब्रह्मज्ञानं प्रत्यन्नस्य प्रथमद्वारत्वात्तस्मिन्प्रतीके ब्रह्मदृष्टिं विधत्ते—यः पुमानन्नं ब्रह्मेत्युपास्ते स पुमान्मनश्चाञ्चल्यराहित्येन प्रतिष्ठितो भवति । किंच प्रभूतान्नयुक्तस्तदन्नमत्तुं समर्थो रोगादिरहितो[1] भवति । पुत्रपौत्रादिप्रजया गवाश्वादिपशुभिर्वेदशास्त्राभ्यासरूपेण ब्रह्मवर्चसेन तत्तद्विषयजनितकीर्त्या च समृद्धो भवति । यस्मादन्नेन द्वारभूतेनोपासितेन ब्रह्मज्ञानं लभते तस्मादयमुपासको गुरुमिवान्नं न निन्द्यात् । तद्व्रतमिति तदेतदनिन्दनमस्योपासकस्य व्रतं नियमेन संपादनीयम् । तदतिक्रमे[2] सत्युपासनमङ्गविकलं स्यात् ।

अथोपासनान्तरं विधातुमुपास्यं दर्शयति—

प्राणो वा अन्नम् । शरीरमन्नादम् । प्राणे शरीरं प्रतिष्ठितम् । शरीरे प्राणः प्रतिष्ठितः । तदेतदन्नमन्ने प्रतिष्ठितम्, इति ।

यथा शरीरस्यान्तरे[3] भुक्तमन्नं भवति तथा शरीरमध्येऽवस्थानात्प्राण एवान्नम् । मध्यवर्तिनस्तस्य प्राणरूपस्यान्नस्य[4] धारणाच्छरीरमन्नादं भोक्तृरूपं गृहमध्यवर्तिस्तम्भवद्देहमध्यवर्तिप्राणस्य देहधारित्वात्प्राणे शरीरं प्रतिष्ठितं भवति । प्राणस्य देहधारणत्वं प्राणसंवादे श्रूयते—" अहमेवैतत्पञ्चधाऽऽत्मानं प्रविभज्यैतद्बाणमवष्टभ्य विधारयामि " इति । शरीरस्य च प्राणधारणत्वं प्रत्यक्षम् । तदेतत्प्राणशरीरयोरन्योन्याधारत्वं चिन्तनीयम् । किंच प्राणस्यान्तरवस्थानेनान्नत्वं पूर्वमुक्तम् । देहस्यान्नकार्यत्वादन्नत्वम् । तथा सत्युभयोरन्नत्वात्पूर्वोक्तरीत्या[5] परस्पराधारत्वाच्चान्नमेवान्ने प्रतिष्ठितमित्यपि चिन्तनीयम् ।

उपास्यमभिधाय तदुपासनं विधत्ते—

स य एतदन्नमन्ने प्रतिष्ठितं वेद प्रतितिष्ठति । अन्नवानन्नादो

१ क. ख. ग. ङ. रोगरहितो । २ ख. °मे तदुपा° । ३ ख. °रीरान्त° । ४ ° रूपान्न° । ५ घ. ङ. °क्तनीत्या ।

भवति। महान्भवति प्रजया पशुभिर्ब्रह्मवर्चसेन। महान्कीर्त्या ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके नवमप्रपाठके सप्तमोऽनुवाकः ॥ ७ ॥

अथाष्टमोऽनुवाकः।

अन्नं न परिचक्षीत। तद्व्रतम्, इति।

अथान्यदुपास्यं दर्शयति—

आपो वा अन्नम्। ज्योतिरन्नादम्। अप्सु ज्योतिः प्रतिष्ठितम्। ज्योतिष्यापः प्रतिष्ठिताः। तदेतदन्नमन्ने प्रतिष्ठितम्, इति।

पीतानामपामुदराग्निना जीर्णत्वादपामन्नत्वम्। ज्योतिषश्चान्नादत्वम्। वृष्ट्युदके विद्युता(द)ग्निदर्शनाद्देहसंतापेन स्वेददर्शनाच्च जलज्योतिषोरन्योन्यप्रतिष्ठितत्वम्। अत एव परस्परान्नत्वम्।

उपासनं विधत्ते—

स य एतदन्नमन्ने प्रतिष्ठितं वेद प्रतितिष्ठति। अन्नवानन्नादो भवति। महान्भवति प्रजया पशुभिर्ब्रह्मवर्चसेन। महान्कीर्त्या ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके नवमप्रपाठकेऽष्टमोऽनुवाकः ॥ ८ ॥

अथ नवमोऽनुवाकः।

अन्नं बहु कुर्वीत। तद्व्रतम्, इति।

पूर्वत्र भोजनकाले प्राप्तमन्नमसम्यक्त्वबुद्ध्या न परिहरणीयमित्युक्तम्। इह त्वतिथिभ्यो दातुं बहुसंपादनमुच्यते।

पुनरप्यन्यदुपास्यं दर्शयति—

पृथिवी वा अन्नम्। आकाशोऽन्नादः। पृथिव्यामाकाशः प्रतिष्ठितः। आकाशे पृथिवी प्रतिष्ठिता। तदेतदन्नमन्ने प्रतिष्ठितम्, इति।

अधस्तादुपरिष्टाच्च वर्तमानस्याऽऽकाशस्य मध्येऽवस्थानात्पृथिव्या अन्नत्वमाकाशस्यान्नादत्वम्। मुग्धदृष्ट्योपरिष्टादाकाशस्योपलब्धेस्तयोराधाराधेयभावः। विचारदृष्ट्याकाश आधारः। तयोः परस्परान्नत्वं चिन्तनीयम्।

उपासनं विधत्ते—

**स य एतदन्नमन्ने प्रतिष्ठितं वेद प्रतितिष्ठति। अन्नवानन्नादो भवति। महान्भवति प्रजया पशुभिर्ब्रह्मवर्चसेन। महान्कीर्त्या॥**

इतिकृष्णयजुर्वेदीयतैत्तिरीयारण्यके नवमप्रपाठके नवमोऽनुवाकः॥ ९॥

अथ दशमोऽनुवाकः।

**न कंचन वसतौ प्रत्याचक्षीत। तद्व्रतम्**, इति।

निवासार्थं स्वगृहे समागतं कमपि न निवारयेत्।

यथोक्तव्रतनिर्वाहकमुपायं प्रसङ्गाद्विधत्ते—

**तस्माद्यया कया च विधया बह्वन्नं प्राप्नुयात्**, इति।

यस्मादभ्यागताय निवासे दत्ते सत्यन्नमपि दातव्यमन्यथा प्रत्यवायश्रवणात्। "एतद्वृङ्क्ते पुरुषस्याल्पमेधसो यस्यानश्नन्वसति ब्राह्मणो गृहे" [काठ० वल्ली० १] इत्यदातुरैहिकामुष्मिककृत्स्नफलवर्जनमाम्नायते तस्मादन्नं दातुं याजनाध्यापनप्रतिग्रहाणां मध्ये येन केनापि प्रकारेणान्नसमृद्धिं संपादयेत्।

अत्र शिष्टाचारं दर्शयति—

**अराध्यस्मा अन्नमित्याचक्षते**, इति।

यो गृहे समागच्छति तस्मा आगतायान्नमराधि संपन्नमित्येवान्नवन्तो विद्वांस आचक्षते, न तु परिहरन्ति।

बह्वन्नसंपादने फलातिशयाय दानविशेषे फलविशेषं दर्शयति—

**एतद्वै मुखतोऽन्नꣳ राद्धम्। मुखतोऽस्मा अन्नꣳ राध्यते। एतद्वै मध्यतोऽन्नꣳ राद्धम्। मध्यतोऽस्मा अन्नꣳ राध्यते। एतद्वा अन्ततोऽन्नꣳ राद्धम्। अन्ततोऽस्मा अन्नꣳ राध्यते (१)। य एवं वेद**, इति।

यदन्नं संपादितमस्त्येतदेवान्नं मुखतो राद्धं भवति। मुख्ये देशे तीर्थक्षेत्रविशेषे मुख्यकाले संक्रान्त्यमावास्यादिरूपे मुख्यायाभ्यागताय वेदशास्त्रतदध्ययनानुष्ठानपराय मुख्यया वृत्त्या श्रद्धाप्रणिपातसत्कारादिरूपया मुख्येन दात्रा सात्त्विकेन दत्तमित्यं

एतत्सात्त्विकदानं भगवतोदाहृतम्—

" दातव्यमिति यद्दानं दीयतेऽनुपकारिणे ।
देशे काले च पात्रे च तद्दानं सात्त्विकं स्मृतम् " ॥ इति ।

यः पुमानेवं सात्त्विकं दानप्रकारं वेद विदित्वाऽनुतिष्ठति । अस्मै जन्मान्तरे मुख्यक्रमेणैवान्नं संपद्यते । मध्यतोऽन्नत इति वाक्यद्वयं राजसतामसदानपरत्वेन व्याख्येयम् ।

तच्च भगवता दर्शितम्—

" यत्तु प्रत्युपकारार्थं फलमुद्दिश्य वा पुनः ।
दीयते च परिक्लिष्टं तद्राजसमुदाहृतम् ॥
अदेशकाले यद्दानमपात्रेभ्यश्च दीयते ।
असत्कृतमवज्ञातं तत्तामसमुदाहृतम् " ॥ इति ।

फलवाक्यमपि तदनुसारेण व्याख्येयम् । उपासनाङ्गभूतव्रतप्रसङ्गेन दानानुसारी फलविशेषोऽभिहितः ।

**क्षेम इति वाचि । योगक्षेम इति प्राणापानयोः । कर्मेति हस्तयोः । गतिरिति पादयोः । विमुक्तिरिति पायौ । इति मानुषीः समाज्ञाः ।**

अथोपासनान्येव कानिचिद्विधत्ते—क्षेम इतीत्यादिना । यद्वागिन्द्रियरूपं प्रतीकमस्ति तस्मिन्ब्रह्म क्षेमरूपेणावस्थितमित्युपासीत । क्षेमो रक्षणम् । प्राणापानयोरुच्छ्वासनिश्वासयोः प्रतीकयोः क्रमाद्योगरूपेण क्षेमरूपेण च ब्रह्मावस्थितम् । अप्राप्तस्य धनादेः प्राप्तिर्योगः । तस्य परिरक्षणं क्षेमः । कर्मशब्देन होमयुद्धादिव्यापारा विवक्षिताः । ब्राह्मणस्य हस्तयोर्होमादिव्यापारः । क्षत्रियस्य हस्तयोर्युद्धादिव्यापारः । अन्यत्रापि यथायोगं द्रष्टव्यम् । ईदृशकर्मरूपेण हस्तयोः प्रतीकयोर्ब्रह्मावस्थितम् । गमनरूपेण पादयोरवस्थितम् । मलविमोचनरूपेण पायुद्वारेऽवस्थितम् । इत्येवमुक्ताः क्षेम इति वाचीत्यादिका विमुक्तिरिति पायावित्यन्ता मानुषीर्मनुष्यदेहावयवेषु संपादिताः समाज्ञा उपासनाः । सम्यगा समन्तान्निष्पद्यमानाः क्रियाः समाज्ञाः । बहुवचननिर्देशादेकैका पृथगुपासनेत्यवगम्यते ।

**अथ दैवीः । तृप्तिरिति वृष्टौ । बलमिति विद्युति (२) । यश इति पशुषु । ज्योतिरिति नक्षत्रेषु ।**

१ व. °त्त्विकं दा° । २ व. °त्त्विकदा° ।

प्रजातिरमृतमानन्द इत्युपस्थे । सर्वमित्याकाशे ।

उपासनान्तराणि विधत्ते—अथ दैवीरित्यादिना । अथ मनुष्यावयवगतपञ्चोपास्तिकथनानन्तरं दैवीर्देवशरीरगता उपासनाः कथ्यन्ते । वृष्ट्यभिमानिदेवतायां तृप्तिरूपेणावस्थितं ब्रह्म । विद्युदभिमानिदेवतायां बलरूपेणावस्थितम् । पशुदेवतासु यशोरूपेणावस्थितम् । नक्षत्रदेवतासु ज्योतीरूपेणावस्थितम् । प्रजातिः पुत्रोत्पादनम् । अमृतं योषिता सह क्रीडा । आनन्दो गुह्येन्द्रियजन्यः परकीयावयवसंयोगरूपो व्यापारः । अनेन रूपत्रयेणोपस्थाभिमानिदेवतायामवस्थितम् । त्रयस्य गुह्येन्द्रियविषयत्वं कौषीतकिन आमनन्ति—"प्रज्ञयोपस्थं समारुह्योपस्थेनाऽऽनन्दं रतिं प्रजातिं चाऽऽप्नोति" इति । भूतभौतिकरूपं यज्जगदस्ति तेन सर्वेण[1] रूपेणाऽऽकाशाभिमानिदेवतायां ब्रह्मावस्थितम् । एतेषु क्षेम इति वाचीत्यादिषूपासनेषु यथोपासनं फलं द्रष्टव्यम् " तं यथा यथोपासते तदेव भवति " इति श्रुतेः ।

तत्प्रतिष्ठेत्युपासीत । प्रतिष्ठावान्भवति । तन्मह इत्युपासीत । महान्भवति । तन्मन इत्युपासीत । मानवान्भवति (३)। तन्नम इत्युपासीत । नम्यन्तेऽस्मै कामाः । तद्ब्रह्मेत्युपासीत । ब्रह्मवान्भवति । तद्ब्रह्मणः परिमर इत्युपासीत । पर्येणं म्रियन्ते द्विषन्तः सपत्नाः । परि येऽप्रिया भ्रातृव्याः, इति ।

एतच्छ्रुत्यर्थमेवाभिप्रेत्य कानिचित्फलसहितान्युपासनान्युदाहरति—तत्प्रतिष्ठेतीत्यादिना । तद्ब्रह्म प्रतिष्ठा स्थितिहेतुरित्युपासीनेऽशनाच्छादनादिर्जीवनस्थितिहेतुमान्भवति । महो महत्त्वगुणोपेतम् । महान्धनादिभिः समृद्धः । मनो मननशक्त्युपेतम् । मानवान्मननशक्तिमान् । नमो नमनं नमनेन वशीकरणेनोपेतम् । अस्मा उपासकाय कामा नम्यन्ते स्वाधीना भवन्ति । ब्रह्म वेदः । ब्रह्मवान्स्वाधीनवेदः । ब्रह्मणो ब्राह्मणस्य परिमरः परितो वर्तमानस्य द्वेष्यस्य मृत्युरूपः । एनं पर्येतस्योपासकस्य परितो वर्तमाना द्वेषं कुर्वन्तः शत्रवो म्रियन्ते । एते द्वेषमकुर्वन्तोऽप्यप्रिया भ्रातृव्यास्तथाविधा अपि शत्रवः परितो म्रियन्ते ।

स यश्चायं पुरुषे । यश्चासावादित्ये । स एकः (४)। स य एवंवित् । अस्माल्लोकात्प्रेत्य । एत-

---

१ क. ख. ग. ङ. °र्वेणाऽऽका° । २ क. ख. ङ. °क्षीताश° ।

मन्नमयमात्मानमुपसंक्रम्य । एतं प्राणमयमात्मानमुपसंक्रम्य । एतं मनोमयमात्मानमुपसंक्रम्य । एतं विज्ञानमयमात्मानमुपसंक्रम्य । एतमानन्दमयमात्मानमुपसंक्रम्य । इमाँल्लोकान्कामान्नी कामरूप्यनुसंचरन् । एतत्साम गायन्नास्ते ।

यथोक्तोपासनैरस्मिञ्जन्मनि जन्मान्तरे वा चित्तैकाग्र्यं प्राप्तस्य यद्वेदनीयं यच्च वेदनफलं तदुभयं दर्शयति—**स यश्चेत्यादिना** । **स यश्चायं पुरुष** इत्यारभ्यैन**मानन्दमयमात्मानमुपसंक्रम्ये**त्यन्तस्यार्थः **पूर्वानुवाके**ऽभिहितोऽप्यत्र नानाविधोपासनसाध्यस्य चित्तैकाग्र्यरूपस्य तपसः परमपुरुषार्थपर्यवसायित्वं दर्शयितुं पुनरप्यभिहितः । आनन्दमयकोशे ब्रह्म पुच्छमित्यभिहितस्याखण्डैकरसस्याऽऽनन्दस्याऽऽत्मत्वेन साक्षात्कृतत्वात्प्रियमोदादिचतुर्षु कोशावयवेषु ततः पूर्वेषु च कोशेषु बन्धहेतुषु सर्वेषु स्वात्मत्वभ्रमस्य निःशेषेण परित्यक्तत्वादयं मुक्त एव । तथाऽपि जीवत्ययमिति लोकैर्व्यपदिश्यते । देहेन्द्रियादीनां लोकैर्दृश्यमानत्वात् । अतो लोकदृष्ट्या जीवनात्स्वदृष्ट्या मुक्तत्वाच्चासौ जीवन्मुक्तः । स च यथोक्तप्रकारेणाऽऽत्मानमुपसंक्रम्य यावद्देहपातमितरपुरुषवदा**स्ते** । किं कुर्वन् । **कामान्नी कामरूपी** भूत्वा लोकानिमाननुक्रमेण संचरन्कामत इच्छातोऽन्नमत्तीति । भोज्याभोज्यविभागप्रतिपादकविधिनिषेधशास्त्रातिवर्तित्वादस्य कस्यापि गृहे भुङ्क्ते । तथा च **श्रूयते**—"सार्ववर्णिकं भैक्षमाचरन्नुदरपात्रेण" इति । "निस्त्रैगुण्ये पथि विचरतां को विधिः को निषेधः" इत्युक्तत्वाच्च । कामत इच्छातो रूपं वेषधारणमस्यास्तीति **कामरूपी** "अव्यक्तलिङ्गा अव्यक्ताचाराः" इति **श्रुतेः** । इमे लोकाः काशीद्वारवत्यादिभूप्रदेशविशेषास्तेषु क्रमेण संचरति । न तु क्वचिद्गृहं कृत्वा निवसति "अनिकेतवास्यप्रयत्नः" इति **श्रुतेः** । यद्वा—"ब्रह्मादिस्थावरान्ता ये प्राणिनो मम पूः स्मृताः" इत्येवमुपदेशसाहस्र्यामभिहितेन प्रकारेण सर्वात्मत्वनिश्चये पुरुषा येषु येषु लोकेष्वनुसंचरन्ति तत्सर्वं स्वकीयमित्येव परितुष्यन्नवतिष्ठत इत्यर्थः । पुनरपि किं कुर्वन्—**एतत्साम गायन्**नेतदनन्तरमेव वक्ष्यमाणं साम गीत्यात्मकं मन्त्रम् । यद्वा समत्वप्रतिपादकं मन्त्रम् "सर्वेण समस्तेन साम" इति **श्रुतेः** । सर्वदा समस्तेन सामेत्यपि श्रुतं गायन्सामवेदोक्तक्रमेण गीतं[1] कुर्वञ्शिष्यान्प्रति स्वकीयसर्वात्म[2]प्रकटनं गानस्य फलम् ।

हा३वु हा३वु हा३वु (५) । अहमन्नमहमन्नमहमन्नम् ।

---

१ ग. घ. गीतिं । २ घ. °कीयं सार्वात्म्यप्र° ।

अहमन्नादो३ऽहमन्नादो३ऽहमन्नादः । अह५ श्लोक-
कृदह५ श्लोककृदह५ श्लोककृत् । अहमस्मि
प्रथमजा ऋता३स्य । पूर्वं देवेभ्यो अमृतस्य
ना३भायि । यो मा ददाति स इदेव मा३ऽऽ-
वाः । अहमन्नमन्नमदन्तमा३द्मि । अहं विश्वं
भुवनभ्यभवा३म् । सुवर्न ज्योतीः, इति ।

अथ सामस्वरूपं दर्शयति—हा३वु हा३वु इत्यादिना । अहोशब्दस्याऽऽश्चर्यवाचकस्यात्र गानार्थे वर्णविकारे सति हावुशब्दो निष्पद्यते । अतिशयद्योतनार्थं त्रिरावृत्तिः । पूर्वं देहमात्रवर्तिनो मम गुरुशास्त्रप्रसादलब्धज्ञानमात्रेण सर्वात्मकब्रह्मस्वरूपता प्राप्तेति यदस्ति तदिदमत्याश्चर्यमित्यर्थः । अहमन्नमित्यादिना सर्वात्मकत्वानुभवः प्रकटी क्रियते । यद्यदन्नं व्रीहियवगोधूमादिनिष्पाद्यं तत्सर्वमहमेव तस्मिन्नन्ने नामरूपभागस्य मिथ्यात्वादधिष्ठानभागस्य सच्चिदानन्दरूपस्य वस्तुनो मत्स्वरूपत्वात् । एवमन्नादश्लोककृतावपि द्रष्टव्यौ । ब्राह्मणक्षत्रियगवाश्वादिश्चेतनोऽन्नादः । श्लोकशब्दः संघवाची पद्यवाची वा । सैन्यादिरूपं संघं करोति संपादयतीति श्लोककृद्राजादिः । यद्वा काव्यादिग्रन्थेषु पद्यं करोतीति श्लोककृद्विद्वान् । अत्र कृत्स्नान्नकृत्स्नभोक्तृकृत्स्नविद्वत्संग्रहार्थं वाक्येषु वीप्सा । तत्राप्येतत्सर्वात्मकत्वमावश्यकम् । सत्य इव विश्वासोत्पादनार्थाय त्रिरुक्तिः । तस्याश्च विश्वासहेतुत्वं लोके वेदे च प्रसिद्धम् । "त्रिर्वः शपथयाम्यहम्" इत्यादिलोकप्रसिद्धिः । " त्रिपत्या हि देवाः " इति वैदिकप्रसिद्धिः । ऋतास्य ऋतस्य ब्रह्मणः प्रथमजाः प्रथमकार्यभूतो योऽस्ति हिरण्यगर्भः । हिरण्यगर्भकल्पनाधिष्ठानत्वात् । देवेभ्य इन्द्रादिभ्यः पूर्वमेवाहमस्मि । इन्द्रादीनामात्मना सृष्टत्वात् । सा च सृष्टिर्बृहदारण्यके पठ्यते—" तच्छ्रेयोरूपमत्यसृजत क्षत्रं यान्येतानि देवत्रा क्षत्राणीन्द्रो वरुणः सोमो रुद्रः " इत्यादिः । अमृतस्य मोक्षस्य चक्रनाभिवदाश्रयोऽस्मि । यथा रथचक्रस्य नाभिरराणां नेमेश्चाऽऽश्रयस्तद्वदहमपि मोक्षस्याऽऽश्रयः " तरति शोकमात्मवित् " इत्यात्मज्ञानेन मुक्तिश्रवणात् । य आचार्यो मामेवंविधपरमात्मानं ददाति शिष्येभ्य उपदिशति स इत्स एवाऽऽचार्य एवमुक्तप्रकारेण परमात्मतां बोधयित्वा शिष्यानवति । अथवा यः पुमानुदारः सन्मामर्त्तुमन्नरूपं ब्राह्मणादिभ्यो ददाति स इत्स एवावति । "अन्नात्प्राणा भवन्ति" न्नस्य दाता पुरुषो ब्राह्मणादिरूपमावा वक्ष्यमाणप्रकारेणावति ।

१ ग. °दिसं° । २ क. ङ. °रूपसं° । ३ क. ख. ङ. °त्वमवश्यम् । ४ ग. °नाय । ५ क. ख. ङ. °त्रा क्षा° । ६ ख. ङ. °रुणं सो° । ७ ख. रुद्रमित्या° । ८ ग. °मन्न° ।

इत्यादिना कार्यपरम्परामन्नजन्यामाम्नाय—"तस्मादन्नं ददन्सर्वाण्येतानि ददाति" इतीह याज्ञिक्यामुपनिषदि वक्ष्यते । बोधयितव्यः परमात्मरूपो दातव्यान्नरूपश्चाहमेवास्मीत्यर्थः । अहमन्नदेवतारूपः सन्दानमन्तरेण स्वयमेवान्नं भक्षयन्तं लोभयुक्तमतिकृपणं पुरुषमद्मि भक्षयामि । महारौरवादिनरकपातेन विनाशयामीत्यर्थः । "केवलाघो भवति केवलादी" इति श्रुतेः । "भुञ्जते ते त्वघं पापा ये पचन्त्यात्मकारणात्" इतिस्मृतेश्च । अहं विश्वं सर्वं भुवनं लोकजातमभ्यभवमभिभूतवान् । अहमेवेश्वररूपः सन्प्रलयकाले संहृतवानस्मि । सुवःशब्दः स्वर्गस्थमादित्यमुपलक्षयति । नशब्द उपमानार्थः । आदित्यो यथा प्रकाशान्तरनैरपेक्ष्येण स्वयमेव स्वप्रकाशरूपस्तथैवाहं चक्षुरादिनिरपेक्षः सन्नेव चैतन्यज्योतिरस्मि ।

अनेन साम्ना प्रतिपादितः सर्वात्मत्वानुभवः कस्य फलमित्याशङ्क्याऽऽह—

**य एवं वेद , इति ।**

ब्रह्म पुच्छमितिवाक्येनोक्तमखण्डैकरसमानन्दात्मानं यः पुमानन्नमयादिद्वारेण साक्षात्करोति तस्यैतत्फलम् । यद्यपि स य एवंविदिति फलभाग्विद्वान्पूर्वमेव निर्दिष्टस्तथाऽपि विदुष एव फलं नेतरस्याविदुषः । विदुषस्त्ववश्यं फलं भवत्येवेति द्विविधनियमार्थं य एवं वेदेति पुनराम्नातम् ।

अनुवाकार्थमुपसंहरति—

**इत्युपनिषत् ( ६ ) , इति ।**

**इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके नवमप्रपाठके दशमोऽनुवाकः ॥ १० ॥***

भृगुर्वै वारुणिरित्यारभ्य य एवं वेदेत्यन्तेन ग्रन्थेन प्रतिपादिता येयं विद्या सेयमितिशब्देन परामृश्यते । सा चोपनिषच्छब्दवाच्या । तच्छब्दनिर्वचनं तु पूर्वमेव प्रपञ्चितम् । एषोपनिषत्समाप्तेति वाक्यशेषः ॥

+ इति नवमप्रपाठके प्रथमोऽनुवाकः ॥ १ ॥

* एतदग्रे ग. पुस्तके—"राध्यते विधुति मानवान्भवत्येको हा३वु य एवं वेदैकं च" इत्यधिकम् । + एतत्प्रपाठकस्याऽऽदौ—प्रपाठकानुवाकयोर्वैपरीत्यकारणस्योल्लेखष्टिप्पण्यां कृतोऽस्ति स तत्रावलोकनीयः ।

१ ध. °नन्दमात्मा° ।

[*भृगुस्तस्मै यतो विशन्ति तद्विजिज्ञासस्व त्रयोदशान्नं प्राणो मनो विज्ञानं द्वादश द्वादशाऽऽनन्दो दशान्नं न निन्द्यादन्नं न परिचक्षीतान्नं बहु कुर्वीतैकादशैकादश] न कंचनैकंषष्टिर्दश ॥

सह नाववतु । सह नौ भुनक्तु । सह वीर्यं करवावहै । तेजस्वि नावधीतमस्तु मा विद्विषावहै ॥

ॐ शान्तिः शान्तिः शान्तिः + ।

हरिः ॐ ।

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके नवमः प्रपाठकः समाप्तः ॥ ९ ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ॥
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥ १ ॥

इति श्रीमत्सायणाचार्यविरचिते श्रीबुक्कणसाम्राज्यधुरंधरमाधवविद्यारण्यपरमेश्वरसंबन्धिवेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्ये वारुण्यपरनामधेयसांहित्यामुपनिषदि ब्रह्मवल्ल्याख्यस्तृतीयोऽनुवाकः ॥ ३ ॥

समाप्तेयं वारुण्यपरनामधेयवती सांहित्युपनिषत् ।

---

*एतच्चिह्नान्तर्गतग्रन्थस्थाने ग. पुस्तकेऽन्यथा पाठः । स यथा—"भृगुस्तस्मै यतो वै विशन्ति तद्विजिज्ञासस्व तत्त्रयोदशान्नं प्राणो मनो विज्ञानं तद्विज्ञाय तं तपसा द्वादश द्वादशाऽऽनन्द इति सैषा दशान्नं न निन्द्यात्प्राणः शरीरमन्नं न परिचक्षीताऽऽपो ज्योतिरन्नं बहु कुर्वीत पृथिव्यामाकाश एकादशैकादश" इति ।

+ एतदग्रे ग. पुस्तके—"भृगुरित्युपनिषत् । शं नो मित्रः । आवीदृक्काराम् । ॐ शान्तिः" इत्यधिकम् ।

# कृष्णयजुर्वेदीयं तैत्तिरीयारण्यकम्।

## *अथ दशमः प्रपाठकः।

## अथ नारायणोपनिषत्।

(तत्र प्रथमोऽनुवाकः।)

हरिः ॐ।

सह नाववतु। सह नौ भुनक्तु। सह वीर्यं करवावहै।
तेजस्वि नावधीतमस्तु मा विद्विषावहै॥

ॐ शान्तिः शान्तिः शान्तिः॥

इति शान्तिः।

वागीशाद्याः सुमनसः सर्वार्थानामुपक्रमे।
यं नत्वा कृतकृत्याः स्युस्तं नमामि गजाननम्॥ १॥
यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत्।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम्॥ २॥
वारुण्युपनिषद्युक्ता ब्रह्मविद्या [1]ससाधना।
याज्ञिक्यां खिलरूपायां सर्वशेषोऽभिधीयते॥ ३॥

यथा बृहदारण्यके सप्तमाष्टमाध्यायौ खिलकाण्डत्वेनाऽऽचार्यैरुदाहृतौ, तथेयं नारायणी[2]याख्या याज्ञिक्युपनिषदपि खिलकाण्डरूपा तल्लक्षणोपेतत्वात्। कर्मोपासनब्रह्मकाण्डेषु त्रिष्वपि [3]यद्यद्वक्तव्यमवशिष्टं तस्य सर्वस्याभिधानेन प्रकी[4]र्णरूपत्वं खिलत्वम्। बृहदारण्यके सप्तमाध्याये—" पूर्णमदः पूर्णमिदम् " इत्यादिना ब्रह्मतत्त्वमभिहितम्। " ॐ खं ब्रह्म " इत्यादिभिरष्टमाध्यायग[5]तैश्च " यो ह वै ज्येष्ठं च श्रेष्ठं च वेद " इत्यादिभिर्वाक्यैर्नानाविधान्युपासनान्यभिहितानि। " स यः कामयेत [6]महत्प्राप्नुयाम् " इत्यादिना मन्थाख्यं कर्माभिहितम्। [7]तथा पुत्रविशेषादिकामनायुक्ता[8]नां तत्कर्माण्यभिहितानि। एवमत्राप्यम्भस्य पार इत्यादिना ब्रह्मतत्त्वमभिहितम्। " आदित्यो

* अयमेव दशमः प्रपाठक उपनिषत्पञ्चकान्तर्गतनारायणोपनिषदीतनामधेयवान्। इयमेव याज्ञिक्युपनिषत्खिलकाण्डरूपेति भाष्यकृता स्पष्टीकृतम्।

१ ङ सनातना। २ ग. णीया व्याख्या ३ ख. च. झ. यद्व°। ४ ख. ग. च. °र्णकरूपं खि° ५ ख. °गतैः स यो। ६ ख. ग. महान्प्राप्नु°। ७ ख. तत्पुत्र°। ८ च. °नां तु त°।

वा एष एतन्मण्डलम्" इत्यादिनोपासनमभिहितम्। "भूरन्नमग्नये पृथिव्यै स्वाहा" इत्यादिना कर्माण्यभिहितानि। तत्र कर्मणां बाहुल्याद्याज्ञिकीत्युच्यते। तदीयपाठसंप्रदाय उपक्रमे ब्रह्मतत्त्वाभिधानादुपसंहारे च ब्रह्मज्ञानसाधनानां सत्यादीनां संन्यासान्तानामभिधानादुपनिषदित्युच्यते। तदीयपाठसंप्रदायस्तु देशविशेषेषु बहुविध उपलभ्यते। तत्र यद्यपि शाखाभेदः कारणं तथाऽपि तैत्तिरीयशाखाध्यापकैस्तत्तद्देशनिवासिभिः शिष्टैरादृतत्वात्सर्वोऽपि पाठ उपादेय एव। तत्र द्रविडानां चतुःषष्ट्यनुवाकपाठः। आन्ध्राणामशीत्यनुवाकपाठः। कर्णाटकेषु केषांचिच्चतुःसप्ततिपाठः। अपरेषां नवाशीतिपाठः। तत्र वयं पाठान्तराणि यथासंभवं सूचयन्तश्चतुःषष्टिपाठं प्राधान्येन व्याख्यास्यामः। तत्र प्रथमानुवाकस्याऽऽदौ काश्चिदृचो ब्रह्मतत्त्वं प्रतिपादयन्ति। तासु प्रथमामृचमाह—

**अम्भस्य पारे भुवनस्य मध्ये नाकस्य पृष्ठे महतो महीयान्।**

**शुक्रेण ज्योतींषि समनुप्रविष्टः प्रजापतिश्चरति गर्भे अन्तः, इति।**

**अम्भस्य** बहुविधसमुद्रमध्यवर्तिजलस्य **पारे** परतीरे यो महान्प्रौढो लोकालोकपर्वतादिस्ततोऽपि **महीयान्**महत्तरोऽयं परमेश्वरः। **भुवनस्य** पृथिव्यादिलोकस्य **मध्ये** यो महान्मेर्वादिस्ततोऽपि महत्तरः। **नाकस्य पृष्ठे** स्वर्गस्योपरि यो महान्ब्रह्मलोकादिस्ततोऽपि महत्तरः। तथा च छन्दोगा आमनन्ति—"ज्यायान्पृथिव्या ज्यायानन्तरिक्षाज्ज्यायान्दिवो ज्यायानेभ्यो लोकेभ्यः" इति। "स एवाधस्तात्स उपरिष्टात्स पश्चात्स पुरस्तात्स दक्षिणतः स उत्तरतः स एवेद सर्वम्" इति च। स परमेश्वरः **शुक्रेण** भासकेन जीवचैतन्यरूपेण **ज्योतींषि** निर्मलत्वेन भासकान्यन्तःकरणानि **सम्यगनुप्रविष्टः**। "तत्सृष्ट्वा तदेवानुप्राविशत्" इति श्रुतेः। **गर्भे** ब्रह्माण्डरूपेऽन्तर्मध्ये **प्रजापतिर्**विराड्रूपो भूत्वा **चरति** वर्तते। विराड्रूपमाथर्वणिका आमनन्ति—"अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यौ दिशः श्रोत्रे वाग्विवृताश्च वेदाः। वायुः प्राणो हृदयं विश्वमस्य पद्भ्यां पृथिवी" इत्यादि। अग्निः प्रकाशयुक्तो द्युलोकः। सर्वव्यापी परमेश्वरो वस्तुतस्तथाविध एव सन्मायावशाद्देहेषु जीवरूपेण ब्रह्माण्डे च विराड्रूपेणावस्थित इत्यर्थः।

द्वितीयामृचमाह—

**यस्मिन्निदꣳ सं च वि चैति सर्वं यस्मिन्देवा अधि विश्वे निषेदुः।**

**तदेव भूतं तदु भव्यमा इदं तदक्षरे परमे व्योमन्, इति।**

---

१ ग. च. झ. °न्ते। उ°। २ ख. च. °भेदाः का°। ३ ख. °यकशा°। ४ ग. च. झ. °यन्तोऽशीतिपा°। ५ च. °रः। तथा भु°। ६ ख. ग. °था छन्दो°। ७ ख. वाग्वृताश्च। ८ च. °वृताश्च°।

इदं सर्वं जगद्यस्मिन्नव्याकृते मूलकारणे समेति च व्येति च । सृष्टिकाले समुत्पन्नं सत्संगतमपि भवति । शं चेति पाठे सुखमपि प्राप्नोतीति व्याख्येयम् । व्यत्ययेन वी संगतमिति द्रष्टव्यम् । संहारकाले विलीनं सद्विगतमपि भवति । अध्यधिका हिरण्यगर्भविराडादयोऽग्नीन्द्रादयश्च विश्वे सर्वे देवा यस्मिन्नव्यक्ते मूलकारणे निषेदुर्नितरामाश्रित्यावस्थिताः । तदेव सृष्टिसंहारयोर्देवानां चाऽऽधारभूतमव्याकृतमेव । भूतमतीतं जगत् । भव्यं भविष्यज्जगत्, इदं वर्तमानमपि जगत्, तदु तदेवाव्याकृतम् । आ इत्याश्चर्ये । आसीदिति प्रसिद्धिर्वा तस्यार्थः । तत्तादृशमव्याकृतमक्षरे विनाशरहिते परम उत्कृष्टे व्योमन्नाकाशवदमूर्ते परमात्मनि वर्तत इति शेषः ।

तृतीयामृचमाह—

**येनाऽऽवृतं खं च दिवं मही च येनाऽऽदित्यस्तपति तेजसा भ्राजसा च । यमन्तः समुद्रे कवयो वयन्ति *तदक्षरे परमे प्रजाः, इति ।**

वाजसनेयिनो गार्गिब्राह्मणे परमात्मन्याश्रितं यदव्याकृतमभिधीयते—"एतस्मिन्नु खल्वक्षरे गार्ग्याकाश ओतश्च प्रोतश्च" इति, तत्पूर्वस्यामृच्यभिहितम् । अस्यां तु तेनाव्याकृतेनोपहितं जगत्कारणं चैतन्यमभिधीयते । येन सच्चिद्रूपेण कारणेन खमन्तरिक्षलोको दिवं द्युलोको महीं महीलोक इत्येतत्सर्वमावृतं व्याप्तम् । चकाराभ्यां तत्तल्लोकवासिनो देहाः समुच्चीयन्ते । तेऽपि कारणेन व्याप्ताः । अत एवोक्ताः सर्वेऽपि सद्रूपतया भासन्ते । येन परमेश्वरेणानुगृहीत आदित्यस्तेजसा स्वकीयमण्डलान्तर्गतभास्वररूपेण भ्राजसा च प्रसारितरश्मिरूपया दीप्त्या च तपति सर्वमिदं जगदभितप्तं प्रकाशितं च करोति । कवयस्तत्त्वविदो यं परमात्मानं समुद्रेऽन्तः समुद्रोपलक्षितस्य कृत्स्नस्य जगतो मध्ये तन्तूनिव वयन्ति यथा पटस्वरूपे तन्तवोऽनुगतास्तथा जगति ब्रह्मतत्त्वमनुगतं पश्यन्ति । तच्च ब्रह्मतत्त्वमक्षरे विनाशरहिते परम उत्कृष्टे निजस्वरूपेऽवस्थाय प्रजा उत्पादयतीति शेषः । स्वरूपेऽवस्थानं छन्दोगाः प्रश्नोत्तराभ्यामामनन्ति—"स भगवः कस्मिन्प्रतिष्ठित इति स्वे महिम्नि" इति । आधारान्तररहित्यमेव स्वस्मिन्नवस्थानम् । +यदक्षर इति पाठेऽपि तच्छब्दार्थत्वेनैव व्याख्येयम् ।

* यदक्षर इति ख च. झ. पुस्तकपाठः । + ख. पुस्तके तदक्षर इति पाठः ।

१ ग. च. वा गतमि । २ ख. °न्नव्याकृते मू° । ३ ख. °दिव प्र° । ४ ग. °र्वा । °मण्डलान्तर्गतं तादृ° । ५ ख. °न्याप्ते यत्तद् । ६ झ. °मही° । ७ ग. °हितम । तेन कारणेन व्याप्ता अ° । ८ ग. °ण्डलया भा° । च झ. °ण्डलदीप्त्या । भा° । ९ ग. °स्वद्रूपे° । १० ग. °छब्दोऽर्थत्वेन व्या° । ११ ग. व्याख्येयः ।

चतुर्थीमृचमाह—

यतः प्रसूता जगतः प्रसूती तोयेन जीवान्व्यचसर्ज भूम्याम् ।

यदोषधीभिः पुरुषान्पशूꣳश्च विवेश भूतानि चराचराणि, इति ।

पूर्वमन्त्रे जगत्कारणमव्याकृतोपहितं यच्चैतन्यमुक्तं तस्यात्र जगदुपादानत्वं प्रपञ्चयते[1]। "आत्मन आकाशः संभूतः" इत्यारभ्य "अन्नात्पुरुषः" इत्यन्तेन ग्रन्थेन पूर्वमभिहिता जगतः प्रसूती प्रसूतिः सृष्टिरुत्पत्तिर्यस्मादव्याकृतोपहिताच्चैतन्यात्प्रसूता प्रवृत्ता, तच्चैतन्यं कारणभूतं तोयेन जलोपलक्षितेन भूतपञ्चकेन जीवान्मनुष्यगवादीञ्जीवदेहान्व्यचसर्ज[3] भूम्यां जगत्यां विशेषेणोत्सृ(णासृ)जत् । व्यसससर्जेति पाठेऽपि तथैव व्याख्येयम् । तथा यच्चैतन्यरूपं मायाविशिष्टं कारणमोषधीभिर्व्रीहियवादिभिरुपलक्षितमन्नं भूत्वा मनुष्यान्पशूꣳश्च तदुपलक्षितस्थावरजङ्गमशरीराणि सर्वाण्यपि प्रविवेश वृक्षादिषु स्थावरेषु वृष्टिजलरूपेण प्रवेशः । तेन चैतन्येन सर्वं जगत्कवलितमिति शेषः।

पञ्चमीमृचमाह—

अतः परं नान्यदणीयसꣳ हि परात्परं यन्महतो महान्तम् ।

यदेकमव्यक्तमनन्तरूपं विश्वं पुराणं तमसः परस्तात्, इति ।

पूर्ववाक्योक्तेन जगत्कारणत्वाकारेणोपलक्षितं शुद्धं वस्त्वत्र निरूप्यते । यद्वस्तु परादुत्कृष्टाद्धिरण्यगर्भादेरपि परमत्यन्तमुत्कृष्टम् । यच्च महत आकाशादेर्महान्तं महत् । यदप्येकं सजातीयविजातीयस्वगतभेदराहितम् । अव्यक्तमिन्द्रियागम्यम् । अनन्तरूपं देशकालवस्तुपरिच्छेदशून्यम् । विश्वं[10] जगदात्मकम् । पुराणमनादिसिद्धम् । तमसः परस्तादज्ञानात्पृथग्वर्तते । अतो वस्तुनोऽन्यद्वस्त्वणीयसमत्यन्तदुर्लक्ष्यं परमुत्कृष्टं नास्ति ।

विश्वविशेषणेन यत्सर्वजगदात्मकत्वमुक्तं[11][12] तदेतत्षष्ठीसप्तमीभ्यामृग्भ्यां[13][14] प्रपञ्चयति—

तदेवर्तं तदु सत्यमाहुस्तदेव ब्रह्म परमं कवीनाम् । इष्टापूर्तं बहुधा जातं जायमानं विश्वं बिभर्ति भुवनस्य नाभिः ॥

तदेवाग्निस्तद्वायुस्तत्सूर्यस्तदु चन्द्रमाः ।

तदेव शुक्रममृतं तद्ब्रह्म तदापः[15] स प्रजापतिः, इति ।

---

१ ख. °दुत्पादनत्वं च प्र° । ग. च. °दुत्पादनं च प्र° । २ ग. °सूति । प्रसूतिः सृतिरु° । ३ ख. ग. च. °न्व्यसस° । ४ च. झ. °गत्याम् । व्य° । ५ ख. ग. व्यवस° । ६ ख. °गत्यादि° । ग. °गत्यादिलि° । ७ ख. °त्वात्कारणो° । ८ ग. च. झ. °यर° । ९ ग. °दरूपम् । १० ख. °श्वं सर्वज° । ११ ख. यस्य सर्व° । १२ ग. च. °त्सर्वं ज° । १३ ख देव षष्ठी° । १४ ख. °मीभ्यां प्र° । १५ ख. °दापस्तत्प्रजा° ।

मनसा यथावस्तुचिन्तनमृतम्। वाचा तदुच्चारणं सत्यम्। एतदुभयमपि तदेवाधिष्ठानरूपं ब्रह्मैव। कवीनां वेदशास्त्रपारं गतानां परममुत्कृष्टं प्रमाणत्वेनाऽऽदरणीयं यद्ब्रह्म वेदरूपं वस्तु तदपि स्वाधिष्ठानभूतपरब्रह्मात्मकमेव। इष्टं दर्शपूर्णमासादि श्रौतं कर्म। पूर्तं वापीकूपादि स्मार्तं कर्म। तदुभयमपि तदेव ब्रह्म। तथा बहुधा जातं पूर्वकल्पतत्पूर्वकल्पादिरूपेण बहुप्रकारमुत्पन्नमिदानीमपि तथा जायमानं विश्वं सर्वं जगद्भुवनस्य नाभिश्चक्रनाभिवत्सर्वस्य लोकस्याऽऽधारभूतः परमात्मा बिभर्ति। अत आधेयं सर्वमधिष्ठानस्वरूपमेव। अग्निवायुसूर्यचन्द्रमसोऽपि तदेव। तथा शुक्रं दीप्यमानं नक्षत्रादिकममृतं देवैः सेव्यं पीयूषमेतदुभयमपि तदेवाधिष्ठानरूपमेव। यद्ब्रह्म हिरण्यगर्भरूपं तदपि तदधिष्ठानात्मकमेव। या आपो जलोपलक्षितानि पञ्च भूतानि यश्च प्रजापतिर्विराड्रूपस्तदुभयमप्यधिष्ठानरूपमेव। यद्यज्जगदविद्यादृष्ट्या नानाविधं प्रतीयते तत्सर्वं विद्यादृष्ट्याऽखण्डैकरसं ब्रह्मैव। अत एव दृष्टिद्वयमभिप्रेत्य वाजसनेयिन आमनन्ति—"यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति" इत्यविद्यादृष्टिः, "यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्" इति विद्यादृष्टिः।

ननु—"प्रकृतिः पुरुषश्चैव नित्यौ कालश्च स[2]त्तम" इति विष्णुपुराणे कालस्य नित्यत्वाभिधानाद्विद्यादृष्ट्याऽपि ब्रह्मरूपत्वं नास्तीत्याशङ्क्य पुराणस्याविद्यादृष्टिविषयत्वमभिप्रेत्य विद्यादृष्ट्या कालस्य ब्रह्मत्वविवक्षया ब्रह्मणः सकाशादुत्पत्तिमष्टमीनवमीभ्यां दर्शयति—

सर्वे निमेषा जज्ञिरे विद्युतः पुरुषादधि।
कला मुहूर्ताः काष्ठाश्चाहोरात्राश्च सर्वशः॥
अर्धमासा मासा ऋतवः संवत्सरश्च +कल्पताम्।
स आपः प्रदु[3]घे उभे इमे अन्तरिक्षमथो सुवः, इति।

निमिर्नाम जनकस्य पूर्वज आद्यो मिथिलेश्वर आसीदित्युपनिषदि वर्तते। देववरप्रसादात्प्रेष्वक्षिपक्ष्मपातेषु स वर्तते ते निमिषाः, त एव निमेषा इत्युच्यन्ते। पक्ष्मपातपरिमिताः सू[4]क्ष्माः कालविशेषा इत्यर्थः। ते सर्वेऽपि विद्युतः। स्वयंप्रकाशमानात्पुरुषात्परिपूर्णात्परमेश्वरादधिजज्ञिर आधिक्येनोत्पन्नाः। निमेषेभ्योऽप्यधिकाः कालविशेषाः काष्ठाः। ताभ्योऽप्यधिकाः कला[5]ः। ततोऽप्यधिका मुहूर्ताः। तेभ्योऽप्यधिका अहोरात्राः।

---

+ ख. ग. च. पुस्तकेषु कल्पन्तामिति पाठः।

---

१ ग. °मधि°। २ ग. °त्तमः॥ इति। ३ ख. °घे इ°। ४ ख. ग. झ. सूक्ष्मकाः°। ५ ग. °लाः। ताभ्योऽधि°।

तथा च पूर्वग्रन्थकारैरुक्तम्—

" अष्टादश निमेषास्तु काष्ठा त्रिंशत्तु ताः कला ।
तास्तु त्रिंशत्क्षणस्ते तु मुहूर्तो द्वादशास्त्रियाम् ॥
ते तु त्रिंशदहोरात्रः पक्षस्ते दश पञ्च च "॥ इति ।

चकारावनुक्तसमुच्चयार्थौ । तदेव सर्वश इत्यनेन स्पष्टी क्रियते । लवत्रुट्यादिकाः सर्वे कालविशेषाः समुत्पन्ना इत्यर्थः ।

लवत्रुट्योः स्वरूपं पूर्वाचार्यैरुक्तम्—

" नलिनीपत्रसंहत्यां सूक्ष्मसूच्याऽभिभेदने ।
दले दले तु यः कालः स कालो लववाचकः ॥
लवैस्त्रुटिः स्यात्त्रिंशद्भिः " इति ।

अर्धमासाः शुक्लकृष्णपक्षरूपाः । मासाश्चैत्रवैशाखाद्याः । ऋतवो वसन्तग्रीष्माद्याः । ते सर्वेऽपि परमेश्वरादधिजज्ञिरे । तथा संवत्सरश्च प्रभवविभवादिरूपः कल्पतां परमेश्वरादुत्पन्नः । अत एव स्वप्रयोजनसमर्थो भवति । कल्पन्तामिति बहुवचनपाठे सर्वेऽपि कालविशेषाः स्वस्वप्रयोजनसमर्था इति योज्यम् । स परमेश्वरः स्वनिर्मितेन कालविशेषेणोपहितः संस्तत्तत्कालौचित्येनाऽऽपः प्रदुघे । जलोपलक्षितां पृथिवीं दुग्धवान् । प्राणिनामपेक्षितं भोग्यजातं पृथिव्यां संपादितवानित्यर्थः । तथैवान्तरिक्षमेकं स्थानमथो अपि च सुवः स्वर्गोऽपरं स्थानमिमे उभे स्थाने प्रदुघे । तयोरपि स्थानयोर्भोग्यवस्तूनि संपादितवानित्यर्थः ।

ननु काललोकादिसर्वकारणस्य सर्वत्रानुगतत्वात्कुतः प्राणिभिरसौ न गृह्यत इत्याशङ्क्य तस्य परमात्मन ऊर्ध्वत्वाद्याकारविशेषाभावाद्रूपाद्यभावाच्चेति मन्त्रद्वयेन दर्शयति—

नैनमूर्ध्वं न तिर्यञ्चं न मध्ये परिजग्रभत् ।
न तस्येशे कश्चन तस्य नाम महद्यशः ॥
न संदृशे तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्चनैनम् ।
हृदा मनीषा मनसाऽभिक्लृप्तो य एनं विदुरमृतास्ते भवन्ति, इति ।

कश्चिदपि पुरुष एनं परमात्मानं स्तम्भवदूर्ध्वाकारमुपरिस्थितवंशवत्तिर्यगाकारं वा गृहान्तर्वर्तिदेवदत्तवत्कचिन्मध्येऽवस्थितं वा न परिजग्रभत् । नैव परिगृह्णाति । ऊर्ध्वाद्याकाराणां तस्मिन्नभावात् । किंच तस्य परमात्मनः कश्चन कोऽपि

१ च. झ. °सूच्यभिभेदने २ ग. °ष्णरूपाः पक्षाः । मा° । ३ ग. °शालीनं° ।

पुरुषो नेशे नेष्टे मम ग्रहणसौकर्यार्थमीदृग्रूपो भवेति नियन्तुं न समर्थः । अत एव तस्य परमात्मनो महद्यश इति नाम संपन्नम् । अत्यन्तस्वतन्त्रत्वेन तदीययशसोऽभ्यधिकत्वात् । किंचास्य परमात्मनो रूपं नीलपीतादिकं संदृशे प्राणिनां दृष्टिविषये न तिष्ठति । "अशब्दमस्पर्शमरूपम्" इत्यादिश्रुतेः । अतः कश्चन कुशलोऽपि पुमानत्यन्तपटुना चक्षुषैनं न पश्यति । कथं तर्हि गुरुशास्त्रोपदेशयुक्तो गृह्णातीति चेत् । उच्यते । हृदा हृदयपुण्डरीकमध्यवर्तिना मनीषा भौतिकवस्तुगोचराणि मनांसीष्ट इति मनीट् तथाविधेन मनसाऽन्तःकरणेनाभिक्लृप्तः सर्वतो निश्चितो भवति । योगयुक्तं हि मनो लौकिकीर्मनोवृत्तीर्नियमयति । तेन चान्तर्मुखेनै(णै)काग्रेण मनसा परमात्माऽनुभवितुं शक्यते । " दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः " इति श्रुतेः । ये पुरुषा एनं परमात्मानमेकाग्रेण मनसा विदुः साक्षात्कुर्वन्ति, ते पुरुषा अमृता मरणरहिता भवन्ति । देहात्प्राणानामुत्क्रान्तिर्मरणं तच्च तत्त्वविदां नास्ति । "न तस्य प्राणा उत्क्रामन्त्यत्रैव समवलीयन्ते" इति श्रुतेः ।

उक्तार्थदार्ढ्याय प्रदेशान्तरपठितान्मन्त्रानुदाहरति—

अद्भ्यः संभूतो हिरण्यगर्भ इत्यष्टौ, इति ।

"अद्भ्यः संभूतः पृथिव्यै रसाच्च" इत्ययमनुवाकश्चातुर्होत्रीयचयनमन्त्रप्रकरणे समाम्नातः । तस्यानुवाकस्य प्रदर्शनार्थमद्भ्यः संभूत इति प्रतीकमिदं पठितम् । तस्मिन्ननुवाके "तमेवं विद्वानमृत इह भवति" इति परमात्मतत्त्वविदो मरणराहित्यमुक्तम् । "हिरण्यगर्भः समवर्तताग्रे" इत्याद्या अष्टावृचः संहितायाश्चतुर्थकाण्डे प्रथमप्रपाठके समाम्नाताः । ता अपि वेदितव्यस्य परमात्मन उपलक्षकत्वेन हिरण्यगर्भाद्यभिधानादुपयुक्ताः ।

यथा हिरण्यगर्भादयः परमात्मोपलक्षकास्तथा परमात्मना सृष्टं दिगादिकं जंगद्धिमूर्तिश्च परमात्मानमुपलक्षयतीति मन्त्रद्वयेन दर्शयति—

एष हि देवः प्रदिशोऽनु सर्वाः पूर्वो हि जातः स उ गर्भे अन्तः ।
स विजायमानः स जनिष्यमाणः प्रत्यङ्मुखास्तिष्ठति विश्वतोमुखः ॥
विश्वतश्चक्षुरुत विश्वतोमुखो विश्वतोहस्त उत विश्वतस्पात् ।
सं बाहुभ्यां नमति सं पतत्रैर्द्यावापृथिवी जनयन्देव एकः, इति ।

१ ख. च. झ. 'यस्य य' । २ ख. 'देशो गृ' । ३ ख. झ. 'षा लौकिक°' । ४ ग. । ५ ख. °िकविषयान्निवृत्तं भवति । ६ झ. °वनीय' । ७ ग 'ठितत्वान्म' । ८ च. °यद्' । ९ ख च झ. °तायां चतु' । ० ग °द्धिरण्यमूर्ति' ।

**एष** विद्वद्भिरनुभूयमानो **देवः** स्वप्रकाशः परमात्मा[1] **प्रदिशः** प्रकृष्टाः प्राच्याद्या दिश आग्नेय्याद्या[2] विदिशश्च[3] **सर्वाः** **अनुप्रविश्यावस्थितः** । प्रवेशस्य श्रुत्यन्तरप्रसिद्ध्यर्थो **हि**शब्दः । तथा **पूर्वो जातो** हिरण्यगर्भस्वरूपत्वेनायमेव प्रथममुत्पन्नः । **हि**शब्देन "हिरण्यगर्भः समवर्तत" इति **मन्त्रप्रसिद्धिः** सूच्यते । **स उ** स एव परमेश्वरो **गर्भे** अन्तर्ब्रह्माण्डरूपस्य गर्भस्य मध्ये वर्तते । **स** एव **विजायमानो** देवतिर्यगादिरूपेणेदानीं जायते । इतः परमपि **जनिष्यमाणः स** एव । स च **प्रत्यङ्**, अन्नमयादिकोशेभ्य आन्तरः । **मुखा** देहेन्द्रियाध्यक्षत्वेन मुख्यः । विश्वतः सर्वतो मुखानि रूपाद्युपलब्धिद्वाराणि चक्षुरादीनि यस्यासौ **विश्वतोमुखः** । तादृशोऽयं जगदधिष्ठानत्वेन **तिष्ठति** । स च ब्रह्माण्डरूपं देहं धृत्वा सर्वप्राणिदेहस्वरूपत्वात्तदीयैः[4] सर्वैश्चक्षुरादिभिर्युक्त इति विश्वतश्चक्षुरित्यादिपदैरभिधीयते[5] । तत्तल्लोकनिवासिनां प्राणिनां चक्षूंषि तत्र तत्र स्थितान्येवैतदीयानि भवन्ति । अतोऽस्य सर्वत्र[6] चक्षुष्मत्त्वम् । एवं विश्वतोमुखत्वादिकमपि द्रष्टव्यम् स च परमेश्वरो **बाहुभ्यां संनमति** बाहुसदृशाभ्यां धर्माधर्माभ्यां निमित्तकारणाभ्यां सर्वं जगद्वशी करोति । तथा **पतत्रैः** पतनशीलैः पञ्चीकृतपञ्चमहाभूतैः[7] **संनमति** सर्वं जगदुत्पादयति । एवमयं **देवो** द्यावापृथिव्यादिकं कृत्स्नं जगदुत्पादयन्नेक एवावतिष्ठते ।

उक्तार्थे श्रद्धातिशयमुत्पादयितुं मन्त्रद्वयेन गन्धर्ववृत्तान्तं दर्शयति—

**वेनस्तत्पश्यन्विश्वा भुवनानि विद्वान्यत्र विश्वं भवत्येकनीळम्[8] ।**

**यस्मिन्निद्ꣳ सं च वि चैकꣳ[9] स ओतः प्रोतश्च विभु[10] प्रजासु ॥**

**प्र तद्वोचे अमृतं नु विद्वान्गन्धर्वो नाम निहितं गुहासु ।**

**त्रीणि पदा निहिता गुहासु यस्तद्वेद सवितुः पिता सत्**, इति ।

**वेनो नाम गन्धर्वः** सर्वप्राणिनां **गुहासु** बुद्धिषु **निहितममृतं** विनाशरहितं तद्वस्तु स्वानुभवेन **विद्वान्प्रवोचे नु** शिष्येभ्यः प्रोवाच खलु । कीदृशो वेनः । **यत्र** यस्मिन्परमात्मवस्तुनि **विश्वं** सर्वं जगदेकनीडं[11] **भवत्येकत्वेन** विश्वमवस्थितं सत्तादात्म्यं प्राप्नोति तद्वस्तु गुरुशास्त्रप्रसादेन **पश्यन्**साक्षात्कुर्वन्**विश्वा भुवनानि** सर्वानपि लोकान्विद्वाञ्ज्ञानन्वर्तते[12] । आत्मसाक्षात्कारे हि सर्वं जगत्तदात्मकमित्यवगतिर्भवति[13] । किंच तेन[14] दृष्टे यस्मिन्वस्तुनि परमात्मनीदं जगत्सं **च** वि[15] **च** समुत्पद्यते विलीनं च

---

१ झ °त्मा प्रकृ° । २ ख. ग. च. °द्या आ° । ३ ख. ग. °द्याश्च वि° । च. °द्याश्च दि° । ४ ख. ग °दिशः स° । ५ ख. °हत्वात्सर्वप्राणिनां । ६ ग. °त्र चाक्षुष्यत्व° । ७ झ. °शय्यमु° । ८ ग. °नीडम् । ९ झ. चैन्येकꣳ । १० ग. विभुः । ११ ख. च. °नीळं भ° । १२ ख. °द्वान्निजान° । १३ ख. °गदेकात्म° । १४ च. झ. वेनेन । १५ झ. वि चैति सं° ।

भवति। एकमद्वितीयतत्त्वरूपः स परमात्मा विभुर्व्यापी सन्प्रजासु सर्वासु दीर्घतन्तुवदोतस्तिर्यक्तन्तुवत्प्रोतश्चावतिष्ठते। गुहासु प्राणिनां बुद्धिषु त्रीणि पदा जाग्रत्स्वप्नसुषुप्तिरूपाणि त्रीणि स्थानानि निहिताऽवस्थितानि। योऽयं गन्धर्वस्तज्जागराद्यधिष्ठानं वेद स गन्धर्वः सवितुरुत्पादकस्य स्वकीयजनकस्यापि पिता सज्जनको भवति। लोकप्रसिद्धः पिता पुत्रस्य देहमात्रं जनयति। ब्रह्मतत्त्वाभिज्ञस्तु परमात्मरूपेण सर्वजगदुत्पादकत्वाल्लोकप्रसिद्धस्य स्वजनकस्यापि[1] समुत्पादको भवति। "यस्ता विजानात्सवितुः[2] पिता सत्[3]" इतिश्रुत्यन्तरात्।

तस्य परमेश्वरस्य व्यवहारकाले सर्वप्राण्युपकारकत्वं परमार्थदर्शिनो मुक्तिप्रदत्वं च मन्त्रद्वयेन दर्शयति—

स नो बन्धुर्जनिता स विधाता धामानि वेद भुवनानि विश्वा।
यत्र देवा अमृतमानशानास्तृतीये धामान्यभ्यैरयन्त॥
परि द्यावापृथिवी यन्ति सद्यः परि लोकान्परि दिशः परि सुवः।
ऋतस्य तन्तुं विततं विचृत्य[4] तदपश्यत्तदभवत्प्रजासु, इति।

स परमेश्वरो नोऽस्माकं सर्वेषां बन्धुः। अस्मदनुष्ठितसुकृतानुसारेण हितकारित्वात्। जनितोत्पादकः। सर्वस्रष्टृत्वात्। स च विधाता जगतो निर्माता सन्विश्वा भुवनानि सर्वानुत्तमाधमलोकान्धामानि तेषु लोकेषु देवादीनां योग्यानि स्थानानि च वेद जानाति। यत्र तृतीये लोके स्वर्गाख्ये देवा इन्द्रादयोऽमृतमानशानाः सुधां पिबन्तो धामानि स्वकीयस्थानान्यभ्यैरयन्त सर्वतः प्राप्तवन्तः। तत्सर्वं[5] विदित्वा तत्तदनुष्ठितकाम्यकर्मानुसारेण फलं प्रयच्छतीत्यर्थः[6]। ये तु मुमुक्षवस्ते सर्वे विदिततत्त्वाः सन्तो द्यावापृथिवी लोकद्वयं सद्यः परियन्ति बोधक्षण एव सर्वतो व्याप्नुवन्ति। तथा लोकानवशिष्टानन्तरिक्षादीन्परियन्ति। दिशः प्राच्याद्या परियन्ति। सुवः स्वर्गलोकभोगं परियन्ति। सर्वात्मकत्वेन सर्वव्याप्तिरुक्ता। ऋतस्य सत्यस्य[7] परब्रह्मणस्तन्तुमविच्छेदेनावस्थानं विततं विस्तीर्णं यथा भवति तथा विचृत्य[8] गुरुशास्त्रमुखाद्विश्लिष्य तद्ब्रह्मतत्त्वमपश्यद्यः साक्षात्कृतवान्स एव प्रजासु मध्ये तद्ब्रह्मतत्त्वमभवत्। तथाच श्रुत्यन्तरम्—"ब्रह्म[9] वेद ब्रह्मैव भवति" इति।

अम्भस्य पार इत्यादिना तदभवत्प्रजास्वित्यन्तेन ग्रन्थेन प्रतिपादितां ब्रह्मविद्यामुपसंहरति—

परीत्य लोकान्परीत्य भूतानि परीत्य सर्वाः प्रदिशो दिशश्च।

---

[1] ख. च. झ. पि स्वयमु। [2] च. झ. यस्तं वि°। [3] ख. झ. °त्स पितुः। [4] ग. विवृत्य। [5] ख. झ. ततः सर्वं। [6] झ. °च्छन्तीत्य°। [7] ग. हस्य। [8] ग. °मवरुद्ध्य°। [9] ग. विवृत्य। [10] ग. °ह्मविद्ब्रह्मै°।

**प्रजापतिः प्रथमजा ऋतस्याऽऽत्मनाऽऽत्मानमभिसंबभूव**, इति ।

**ऋतस्य** सत्यस्य ब्रह्मणः **प्रथमजाः** प्रथमकार्यभूतः **प्रजापतिः** हिरण्यगर्भो लोकान्भूरादीन्**भूतानि** देवमनुष्यादिप्राणिदेहान्प्रदिश आग्नेय्याद्या **दिशश्च** प्राच्याद्याः **परीत्य** सर्वतो व्याप्य सृष्टिकाले सृष्ट्वा पुनरपि **परीत्य** स्थितिकाले रक्षित्वाऽऽत्मना स्वस्वरूपेण तद्विषयकतत्त्वज्ञानेनेत्यर्थः । **आत्मानं** सत्यज्ञानादिलक्षणम**भिसंबभूव** सर्वतः सम्यक्प्राप्तवान् ।

तदेवं ब्रह्मविद्या प्रतिपादिता । अथ तत्प्राप्तिसाधनभूताः सोपाधिकब्रह्मध्यानजपस्नानादिकर्माङ्गभूता मन्त्राः कर्मकाण्डे पूर्वमनुक्ता अस्मिन्खिलकाण्डेऽभिधीयन्ते । तत्रैकेन मन्त्रेण ब्रह्मप्राप्त्यर्थमन्तर्यामिणं प्रार्थयते—

**सदसस्पतिमद्भुतं प्रियमिन्द्रस्य काम्यम् ।**

**सनिं मेधामयासिषम्**, इति ।

सीदत्यस्मिन्नव्याकृते कारणे सर्वं जगदिति **सदः** । तस्य **पतिं** पालकमन्तर्यामिणं**मयासिषम**हं प्राप्तवानस्मि । शीघ्रं प्राप्तवानित्यनया विवक्षया भूतार्थनिर्देशः । कीदृशं सदसस्पतिम् । **अद्भुत**माश्चर्यरूपम् । मनसाऽप्यचिन्त्यरचनारूपस्य जगतोऽनायासेन निर्मातृत्वमद्भुतत्वम् । **इन्द्रस्य** देवराजस्यापि **प्रियम्** । सोऽप्यन्तर्यामिणं कदा प्राप्स्यामीत्येवमाशास्ते । अत एव सर्वैरन्यैः **काम्यम**पेक्षणीयम् । **सनिं** कर्मफलस्य दातारम् । **मेधां** श्रुताधीतग्रन्थधारणशक्तिं प्रयच्छन्तमिति शेषः ।

अथ वह्न्युपाधिकं परमेश्वरं प्रतीष्टप्राप्तिं प्रार्थयते—

**उद्दीप्यस्व जातवेदोऽपघ्नन्निर्ऋतिं मम ।**

**पशूꣳश्च मह्यमावह जीवनं च दिशो दिश**, इति ।

जाते प्राणिशरीरे जाठराग्निस्वरूपेण विद्यतेऽवतिष्ठत इति जातवेदाः । अथवा जातानुत्पन्नान्यजमानांस्तत्तत्फलदानाय वेत्ति स्वचित्ते निश्चिनोतीति जातवेदाः । हे **जातवेदो** मदनुग्रहार्थमुत्कर्षेण **दीप्यस्व** । किं कुर्वन् । **मम**ानिष्टकारिणीं **निर्ऋतिं** पापदेवता**मपघ्नन्**विनाशयन् । तां विनाश्य ततो [ **मह्यं** ] मदर्थं **पशू**न्गवादीञ्जीवनं दीर्घायुष्यं चकाराभ्यामन्यदपि सर्वं भोग्यजातम**ावह** संपादय । ततः सुखनिवासार्थं **दिशः** प्राच्याद्या निवासयोग्यानि तत्तद्दिग्गतस्थानानि **दिश** देहि ।

संपादितानां गवाश्वादीनामविनाशं प्रार्थयते—

**मा नो हिꣳसीज्जातवेदो गामश्वं पुरुषं जगत् ।**

---

१ ख. °द्याद्याः प्रा° । २ ख. °तार्थेऽयं नि° । ३ ग. घ. ङ. °द्दिगन्तस्था°

अबिभ्रदग्न आगंहि श्रिया मा परिंपातय, इति ।

हे जातवेदस्त्वत्प्रसादान्मदीयं गवादिकं निर्ऋतिर्मा हिंसीन्मा विनाशयतु । जगच्छब्देन गवादिव्यतिरिक्तं गृहक्षेत्रादिकं विवक्षितम् । हेऽग्ने त्वमबिभ्रदधारयन्नरमदपराधं मनस्यधारयित्वाऽऽगहि अस्मदनुग्रहार्थमागच्छ । ततो मां श्रिया धनधान्यादिसंपदा परिपातय सर्वतः प्रापय ।

इत ऊर्ध्वं तेषु तेषु देशेषु श्रुतिपाठा अत्यन्तविलक्षणाः । तत्र विज्ञानात्मप्रभृतिभिः पूर्वैर्निबन्धकारैर्द्राविडपाठस्याऽऽहतत्वाद्वयमपि तमेवाऽऽहत्य व्याख्यास्यामः । *तत्र षड्भिर्गायत्रीभिरात्मप्राप्तिद्वारभूता देवताविशेषाः प्रार्थ्यन्ते । तत्राऽऽदौ विश्वरूपधरं रुद्रं प्रार्थयते—

पुरुंषस्य विद्म सहस्राक्षस्यं महादेवस्यं
धीमहि । तन्नों रुद्रः प्रचोदयांत्, इति ।

"विश्वतश्चक्षुः" इत्यादिमन्त्रोक्तो विराट्पुरुषः सहस्राक्षः, तस्य पुरुषस्य स्वरूपं विद्म जानीमहि लभेमहि वा । तदर्थं तस्य विराड्रूपस्य महादेवस्य स्वरूपं धीमहि ध्यायेम । तत्तत्र ध्याने नोऽस्मान्रुद्रो विराड्रूपो महादेवः प्रचोदयात्प्रचोदयतु प्रेरयतु ।

अथ "बिभ्रद्दोर्भिः कुठारं मृगमभयवरौ सुप्रसन्नो महेशः" इत्याद्यागमप्रसिद्धमूर्तिधरं रुद्रं प्रार्थयते—

तत्पुरुंषाय विद्महें महादेवायं धीमहि ।
तन्नों रुद्रः प्रचोदयांत्, इति ।

तमागमप्रसिद्धं पुरुषाकारं महादेवं जानीमो ध्यायाम च । तत्तस्मिन्ध्यानेऽस्मान्रुद्रः प्रेरयतु ।

"बीजापूरगदेक्षुकार्मुक" इत्यागमप्रसिद्धमूर्तिधरं विनायकं प्रार्थयते—

तत्पुरुंषाय विद्महें वक्रतुण्डायं धीमहि ।
तन्नों दन्तिः प्रचोदयांत्, इति ।

गजसमानवक्त्रत्वेन दीर्घस्य तुण्डस्य रत्नकलशादिधारणार्थं वक्रत्वम् । दन्तिर्महादन्तः ।

* तत्रशब्दानन्तरं—"द्वादशगायत्रीणां मध्ये" इत्यधिकं च. पुस्तके प्रक्षिप्तम् ।

१ च. झ. अत । २ ख. ग. 'न्धनस्य' । ३ ग च. ध्यायेम । ४ क. 'याम: । त' । ५ ख 'त्याद्याग' ।

पुराणादिषु प्रसिद्धं पक्षिराजमूर्तिधरं देवं प्रार्थयते—

तत्पुरुषाय विद्महे सुवर्णपक्षाय

धीमहि। तन्नो गरुडः प्रचोदयात्, इति।

शोभनपतनसाधनपक्षोपेतः सुवर्णपक्षः* ।

"हेमप्रख्यामिन्दुखण्डाङ्कमौलिम्" इत्यागमप्रसिद्धमूर्तिधरीं दुर्गां प्रार्थयते—

कात्यायनाय विद्महे कन्यकुमारिं धीमहि।

तन्नो दुर्गिः प्रचोदयात्, इति।

कृत्तिं वस्त इति कात्यो रुद्रः। स एवायनमधिष्ठानमुत्पादको यस्या दुर्गायाः सा कात्यायनी। कुत्सितमनिष्टं मारयति निवारयतीति कुमारी। कन्या चासौ कुमारी चेति कन्यकुमारी। दुर्गिर्दुर्गा। लिङ्गादिव्यत्ययः सर्वत्र च्छान्दसो द्रष्टव्यः।

"अर्कौघाभं किरीटान्वितमकरलसत्कुण्डलम्" इत्याद्यागमप्रसिद्धमूर्तिधरं देवं प्रार्थयते—

नारायणाय विद्महे वासुदेवाय धीमहि।

तन्नो विष्णुः प्रचोदयात्, इति।

नरशरीराणामुपादानरूपाण्यन्नादिपञ्चभूतानि नारशब्देनोच्यन्ते। तेषु भूतेषु या आपो मुख्यास्ता अयनमाधारो यस्य विष्णोः सोऽयं नारायणः। समुद्रजलशायीत्यर्थः।

तथा च स्मर्यते—

"आपो नारा इति प्रोक्ता आपो वै नरसूनवः।

अयनं तस्य ताः प्रोक्तास्तेन नारायणः स्मृतः" इति॥

स च कृष्णावतारे वसुदेवस्य पुत्रत्वाद्वासुदेवः। स च स्वकीयेन वास्तवेन परब्रह्मरूपेण व्यापित्वाद्विष्णुः। ता एता गायत्र्यश्चित्तशुद्ध्यर्थं ध्यानपुरःसरं जपितव्याः।

अथ स्नानाङ्गभूता मन्त्रा उच्यन्ते। तत्र शिरसि मृत्तिकया सह दूर्वां धारयितुं दूर्वाभिमन्त्रणमन्त्रमाह—

सहस्रपरमा देवी शतमूला शताङ्कुरा। सर्वं

* एतदनन्तरं च. पुस्तके प्रथमं नारायणगायत्रीभाष्यं ततो दुर्गागायत्रीभाष्यमिति क्रमः। तत्र नारायणगायत्रीभाष्यसमाप्त्यनन्तरम्—"अथाऽऽन्ध्रपाठे गायत्रीपाठः। वज्रनखेति। भास्करेति। वैश्वानरेति। एता उपेक्षिताः" इत्यधिकं प्रक्षिप्तम्।

१ ख. °नसा°। २ ख ग. °ण्डान्तमौ°। ३ ग. °मारी धी°। ४ ग. कात्यो। ५ ग. झ. कः। ६ °यि°। ६ झ. °रीरोपा°। ७ झ. °र्थं देवताध्या°।

**हरतु मे पापं दूर्वा दुःस्वप्ननाशिनी,** इति ।

येयं दूर्वाभिमानिनी देवता सा **मे पापं सर्वं हरतु** । कीदृशी, सहस्रसंख्याकेभ्यः पावनहेतुभ्यो द्रव्येभ्यः परमोत्कृष्टा । सा च देवी द्योतनात्मिका । शतसंख्याकानि मूलानि यस्याः सा **शतमूला** । तथा **शताङ्कुरा** । शतशब्देन बहुत्वमात्रमत्रोपलक्ष्यते । दुःस्वप्नकृतमनिष्टफलं नाशयतीति **दुःस्वप्ननाशिनी** ।

अथ मृत्तिकाभिमन्त्रणमन्त्राः, तत्र प्रथममन्त्रमाह—

**अश्वक्रान्ते रथक्रान्ते विष्णुक्रान्ते वसुंधरा ।**

***शिरसा धारिता देवी रक्षस्व मां पदे पदे,** इति ।

येयं भूमिस्तामश्वाः शुद्धिहेतवः स्वपदैराक्रामन्ति, तादृशी भूमिरश्वक्रान्ता । अग्निचयने उखानिर्माणार्थं भूखननप्रदेशस्याश्वाक्रमणविधानादश्वपादानां मृच्छुद्धिहेतुत्वं गम्यते । तथा रथक्रान्ता रथसंचरणेन क्षुण्णा सती शुद्धा भवति । तथा त्रिविक्रमावतारे विष्णुः स्वपदेन भूमिमाक्रामति ततोऽपि शुद्धत्वम् । अश्वरथविष्णुभिराक्रान्ते शुद्धे हे भूमे **वसुंधरा** सर्वाणि वसूनि धारयन्ती सती स्नानकर्मण्येतस्मिन्मदीयशिरसा **धारिता देवी** द्योतमाना त्वं **मां** स्नानार्थं जलमध्ये गच्छन्तं **पदे पदे** रक्षस्व ।

द्वितीयमन्त्रमाह—

**उद्धृताऽसि वराहेण कृष्णेन शतबाहुना ।**

**भूमिर्धेनुर्धरणी लोकधारिणी,** इति ।

हे मृत्तिके त्वं भूमिरूपा सती कृष्णवर्णेन शतसंख्याकबाहुयुक्तेन वराहावतारेण पूर्वमुद्धृताऽसि । कीदृशी भूमिः । **धेनुः** कामधेनुवत्प्रीणयित्री । **धरणी** सस्यानां धारयित्री । **लोकधारिणी** प्राणिनामपि धारयित्री ।

तृतीयमन्त्रमाह—

**मृत्तिके हन मे पापं यन्मया दुष्कृतं कृतम् ।**

**+त्वया हतेन पापेन जीवामि शरदः शतम्,** इति ।

स्पष्टोऽर्थः ।

* एतत्पदद्वयमनिश्चितस्वरकम् । + इदमर्धमज्ञातस्वरकम् ।

१ ख. °तमाना° । २ ख. °ङ्कुराऽत्र श° । ३ ख. च. °त्रमुप° । ४ ग. झ. धारयिष्यामि र° । ५ झ. °श्वाक्राम° । ६ ग. स्वयं प° । ७ ख. °ती तथा स्ना° । ८ ख. °तीयं म° । ९ ख. झ. °तीयं म° ।

पादद्वयात्मकं चतुर्थं मन्त्रमाह—

मृत्तिके देहि मे पुष्टिं त्वयि सर्वं प्रतिष्ठितम्, इति ।

यद्यत्पुष्टिसाधनं यवगोधूमादिद्रव्यं तत्सर्वं हे मृत्तिके त्वयि प्रतिष्ठितम् । तस्मान्मह्यं पुष्टिं देहि ।

पञ्चममन्त्रमाह—

गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम् ।
ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम्, इति ।

तां मृत्तिकाभिमानिनीं देवतामिहास्मिन्स्नानकर्मण्युपह्वये सामीप्येनाऽऽह्वयामि । कीदृशीम् । गन्धद्वारां घ्राणग्राह्यो गन्ध उपलब्धिद्वारं यस्याः सा गन्धद्वारा । अत एव गन्धवती पृथिवीति तार्किका लक्षणमाहुः । दुराधर्षां प्रतिकूलैः पुरुषैरसुरादिभिराधर्षितुं तिरस्कर्तुमशक्याम् । नित्यपुष्टां सर्वदा व्रीह्यादिधान्यैः परिपूर्णाम् । करीषिणीं बहुलेन गोमयेन युक्तां गोमहिष्यादिपशुयुक्तामित्यर्थः । सर्वभूतानां देवतिर्यङ्मनुष्यरूपाणां प्राणिदेहानामीश्वरीमुत्पादकत्वेन नियन्त्रीम् । श्रियं सर्वैः सेव्याम् ।

नाभिदघ्ने जले प्रविश्य जलाभिमन्त्रणमन्त्रमाह—

सुमित्रा न आप ओषधयः सन्तु दुर्मित्रास्तस्मै
भूयासुर्योऽस्मान्द्वेष्टि यं च वयं द्विष्मः, इति ।

या एता आपस्ता एतास्तज्जन्या व्रीहियवाद्योषधयश्च नोऽस्मान्प्रति सुमित्राः स्नानपानभोजनादावनुकूलाः सन्तु । यः शत्रुरस्मासु द्वेषं करोति यस्मिंश्च वयं द्वेषं कुर्म उभयविधाय तस्मै शत्रवे दुर्मित्राः प्रतिकूला भूयासुः स्नानपानभोजनादौ ज्वराजीर्णादिकमुत्पादयन्तु ।

एतैर्मन्त्रैरभिमन्त्रितां मृत्तिकामनुलिप्य नद्यादिजलप्रदेशे जलाधिपतिप्रार्थनार्थं मन्त्रद्वयमाह—

हिरण्यशृङ्गं वरुणं प्रपद्ये तीर्थं मे देहि याचितः ।
यन्मया भुक्तमसाधूनां पापेभ्यश्च प्रतिग्रहः ॥
यन्मे मनसा वाचा कर्मणा वा दुष्कृतं कृतम् ।
तन्न इन्द्रो वरुणो बृहस्पतिः सविता च पुनन्तु पुनः पुनः, इति ।

---

१ ख. °श्रमं म° । २ झ. देवीभि° । ३ ग. व्रीहिधा° । झ. व्रीहियवादि° । ४ ग. °हिषादि° । ५ झ. °नादिष्वनु° । ६ ख. ग. °नभो° ।

सुवर्णमयशृङ्गवदुपर्यवस्थितं मुकुटं यस्यासौ **हिरण्यशृङ्गः**, तादृशं **वरुणं** जलाधिपतिं **प्रपद्ये**ऽनुग्रहार्थं प्राप्नोमि । तादृशो वरुणस्त्वं मया **याचितः** प्रार्थितः **संस्तीर्थ**मवतरणस्थानं **मे देहि** । किंचासाधूनां पापिनां गृहे मया **यद्भुक्तं तथा पापेभ्यः** पापिनां सकाशात्**प्रतिग्रहश्च** यः कृतोऽन्यदपि यद्दुष्कृतं कृतं मानसं वाचिकं कायिकं वाऽनुष्ठितं **मे** मदीयं **तत्सर्वमिन्द्रादयो** देवास्तदा तदा **पुनन्तु** शोधयन्तु ।

जलावस्थितदेवान्प्रति नमस्कारमन्त्रं दर्शयति—

**नमोऽग्नयेऽप्सुमते नम इन्द्राय नमो वरु-**
**णाय नमो वारुण्यै नमोऽद्भ्यः**, इति ।

आपो यस्याग्नेः सन्ति सोऽयमप्सुमान्, जलमध्ये निगूढ इत्यर्थः । तथाविधायाग्नय **इन्द्राय वरुणाय वारुण्यै** वरुणपत्न्यै जलाभिमानिदेवताभ्यश्च नमस्कारोऽस्तु ।

निमज्जनप्रदेशे दुष्टजलापनयनमन्त्रमाह—

**यदपां क्रूरं यदमेध्यं यदशान्तं तदपगच्छतात्**, इति ।

अपां संबन्धि **यत्क्रूरं** रूपं[2] मरणकारणमावर्तादिकं **यच्चामेध्यं** निष्ठीवनादिदुष्टं **यदप्यशान्तं** वात(न्त)श्लेष्मादिजनकं **तत्सर्वम**स्मान्निमज्जनप्रदेशाद**पगच्छतु** ।

निमज्जनमन्त्रावाह—

**अत्याशनादतीपानाद्यच्च उग्रात्प्रतिग्रहात्** ।
**य(त)न्मे वरुणो राजा पाणिना ह्यवमर्शतु** ॥
**सोऽहमपापो विरजो निर्मुक्तो मुक्तकिल्बिषः** ।
**नाकस्य पृष्ठमारुह्य गच्छेद्ब्रह्मसलोकताम्**, इति ।

देवपितृमनुष्यादियज्ञमतीत्य भुक्तमत्याशनम्, देवर्षिपितृतर्पणमतीत्य पीतमुदकमतीपानम्, अशास्त्रवर्ती यः पुमांस्तस्माद्यो धनप्रतिग्रहः, एतैरत्यशनातिपानदुष्प्रतिग्रहैः संपादितं यत्पापं **मे** मदीयं तत्सर्वं **वरुणो राजा** जलस्वामी स्वकीयेन **पाणि**नाऽपनयतु । ततः पापरहितः **सोऽहं** रजोगुणरहितः संसारकारणरागद्वेषादिदोषान्निर्मुक्तोऽत एवानुष्ठास्यमानपापरहितः स्वर्गस्योपरिभागमारुह्य ब्रह्मणा हिरण्यगर्भेण समानभोक्तृत्वं **गच्छेद्**गच्छेयम् ।

---

१ झ. °मयं शृ° । २ ख. °पं मर° । ३ झ. °मस्यग्नि° । ४ ग. झ. °त् । तन्नो व° । ५ ख. °वर्ज्ञाषिपि° । ६ ग. झ. °म्, उच्छास्त्र° । ७ ख. °रत्यत्याश° । ८ ख. °नातीपा° ।

तीर्थभूतानां गङ्गादिनदीनामावाहनमन्त्रमाह—

इमं मे गङ्गे यमुने सरस्वति शुतुद्रि स्तोमꣳ सचता परुष्णिया।
असिक्निया मरुद्वृधे वितस्तयाऽऽर्जीकीये शृणुह्या सुषोमया, इति।

हे गङ्गाद्या नद्यो यूयं परुष्ण्यादिभिर्नदीभिः सह मे मदीयमिमं स्तोमं स्तोत्रं शृणुहि शृणुत। श्रुत्वा तत्राऽऽसचताऽऽगत्य जले तद्द्वारेण मयि च समवेता भवत। गङ्गायमुनासरस्वत्यः प्रसिद्धाः। शुतुद्रीति नद्यन्तरस्य संबोधनम्। मरुद्वृध आर्जीकीय इत्यन्ययोर्नद्योः संबोधनद्वयम्। परुष्णियाऽसिक्निया वितस्तया सुषोमयेति पदचतुष्टयं तृतीयान्तं नदीचतुष्टयवाचकम्।

जले निमग्नस्य प्राणायामार्थमघमर्षणसूक्तमाह—

ऋतं च सत्यं चाभीद्धात्तपसोऽध्यजायत। ततो रात्रिरजायत ततः समुद्रो अर्णवः। समुद्रादर्णवादधि संवत्सरो अजायत। अहोरात्राणि विदधद्विश्वस्य मिषतो वशी। सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्। दिवं च पृथिवीं चान्तरिक्षमथो सुवः, इति।

ऋतं मानसं यथार्थसंकल्पनम्। सत्यं वाचिकं यथार्थभाषणम्। चकाराभ्यामन्यदपि शास्त्रीयं धर्मजातं समुच्चीयते। तत्सर्वमभीद्धादभितः प्रकाशमानात्परमात्मन उत्पन्नम्। कदा समुत्पन्नमित्युच्यते। तपसोऽधि स्रष्टव्यपर्यालोचनलक्षणात्तपस ऊर्ध्वम्। "स तपस्तप्त्वा। इदꣳ सर्वमसृजत" इति श्रुत्यन्तरात्। "यस्य ज्ञानमयं तपः" इति श्रुत्यन्तराच्च। ततः स्वप्रकाशात्परमेश्वराद्रात्रिरुत्पन्ना। अह्नोऽप्येतदुपलक्षणम्। ततस्तस्मात्परमेश्वरात्समुद्र उत्पन्नः। सामान्योक्तस्य लवणोदक्षीरोदद्ध्यादिविशेषमभिप्रेत्यार्णवशब्देन पुनर्विशेष्यते। अवान्तरभेदयुक्तात्समुद्रादध्यूर्ध्वं संवत्सरोपलक्षितः कृत्स्नः कालः समुत्पन्नः। स चोत्पादकः परमेश्वरोऽहोरात्रोपलक्षितान्सर्वान्कालविशेषान्विदधत्सृजन्मिषतो निमेषादियुक्तस्य विश्वस्य सर्वस्य प्राणिजातस्य वशी स्वामी भूत्वा वर्तते। स तादृशो धाता परमेश्वरः सूर्यादिदेवान्पृथिव्यादिलोकांश्च यथापूर्वमतीतसृष्टौ यस्य यादृशं रूपं तादृशमनतिक्रम्याकल्पयत्संकल्पमात्रेण संपादितवान्। दिवं चेत्युपात्तत्वात्सुवःशब्देन भोगविशेषो विवक्षितः।

---

१ ख. श्रुतद्रि। २ ख. °थार्थ सं°। ३ ख. °थार्थ भा°। ४ ख. °मिति तदुच्य°
५ ख. ग. °नक्ष°। ६ ख. °न्नः। स समास्तस्य। ७ ख. °न्नः। तस्याध्युत्पा°। ८ ख. °धदुत्°

अघमर्षणं कृत्वा तत ऊर्ध्वमवगाहनार्थास्तिस्र ऋचो दर्शयति—

**यत्पृथिव्याꣳ रजः स्वमान्तरिक्षे विरोदसी । इमाꣳस्तदापो वरुणः पुनात्वघमर्षणः । एष भूतस्य मध्ये भुवनस्य गोप्ता । एष पुण्यकृतां लोकानेष मृत्योर्हिरण्मयम् । द्यावापृथिव्योर्हिरण्मयꣳ सꣳश्रितꣳ सुवः । स नः सुवः सꣳशिशाधि,** इति ॥

**पृथिव्यां** वर्तमानानामस्माकं **स्वं रजः** स्वकीयं पापं यदस्ति । **आन्तरिक्षे** सर्वतोऽन्तरिक्षलोके **विरोदसी** विशेषेण रोदस्योर्द्यावापृथिव्योर्यत्पापमस्ति । अत्र रोदस्योः पृथगुक्तत्वात्पृथिव्यामितिपदेन भूमेरधस्ताद्वर्तमानः पाताललोको विवक्षितः । सर्वेष्वपि लोकेषु तत्तज्जन्मान्यनुभवतामस्माकं यत्पापमासीत्तत्सर्वं पापं तदनुष्ठातॄनिमानस्मांश्च **वरुणः पुनातु** शोधयतु । पापं विनाश्य शुद्धानस्मान्करोतु । कीदृशो वरुणः । **आपो** जलस्वामित्वेन तद्रूपः । अघानि मर्षयति विनाशयतीत्य**घमर्षणः** । तादृश **एष** वरुणो **भूतस्यातीतस्य भुवनस्य** प्राणिजातस्य **गोप्ता** रक्षिता । तथा +भाव्यस्य भविष्यतो[1]ऽप्यग्रतो **गोप्ता** । **एष** वरुणः **पुण्यकृतां** ज्योतिष्टोमादिकारिणां **लोका**न्प्रयच्छतीति शेषः । **एष** वरुणो **मृत्योः** सर्वप्राणिमारकस्य यमस्य संबन्धिनं **हिरण्मयं** लोकविशेषं पापिनां प्रयच्छतीति शेषः । यत्र **हिरण्मयं** ब्रह्माण्डरूपं **सुवः** स्वर्गशब्दाभिधेयं **द्यावापृथिव्योर्द्युलोकभूलोकयोः संश्रितं** प्रवर्तते । हे वरुण स त्वं **नो**ऽस्मान्प्रति **सुव**स्तादृशं स्वर्गलोकं[2] **संशिशाधि** सम्यगनुगृहाण[3] ।

इति तिसृभिर्ऋग्भिः स्नातवतः पुरुषस्याऽऽचमनार्थं मन्त्रमाह—

**आर्द्रं ज्वलति ज्योतिरहमस्मि । ज्योतिर्ज्वलति ब्रह्माहमस्मि । योऽहमस्मि ब्रह्माहमस्मि । अहमस्मि ब्रह्माहमस्मि । अहमेवाहं मां जुहोमि स्वाहा,** इति ॥

यदेतदुदकरूपम**आर्द्रं** तदेतत्स्वाधिष्ठानचैतन्येन **ज्वलति** प्रकाशते । तच्चाधिष्ठानचैतन्यरूपं **ज्योतिरहमस्मि** । देहेन्द्रियादिभ्यो विवेचितस्य मम तदेव जलाधिष्ठान

+ मध्येपदस्य व्याख्यानमेतत् । मध्येपदस्थाने भाव्यस्येति वा पाठः कल्पनीयः ।

१ ख. °तोऽप्यागामिनोऽपि गो° । २ ख. ब्रह्मलोकं । ३ ख. °ण । ति° । ४ ग. ङ. °° । ५ ग. ङ. °द्वेषाधि° ।

चैतन्यं स्वरूपमित्यर्थः । तदेवोपपाद्यते[1]— यज्ज्योतिर्ज्वलतीत्युक्तं तज्ज्योतिर्ब्रह्मैव । अतो ज्योतिरहमस्मीति वाक्येन ब्रह्माहमस्मीत्युक्तं भवति । न च पूर्वसिद्धं[2] जीवात्मनः स्वरूपं विनाश्य रूपान्तरस्य ब्रह्मत्वलक्षणस्य प्राप्तिर्भवति । किंतु योऽहं पुरा जीवोऽस्मि स एवेदानीमहं ब्रह्मास्मि । वस्तुतो ब्रह्मण्येव मयि पूर्वमज्ञानाज्जीवत्व-मारोपितमासीत् । तस्मिन्नज्ञाने विवेकेनापनीते सति वस्तुतः पूर्वसिद्धमेव ब्रह्मस्वरूप-मिदानीमनुभविताऽस्मि, नतु नूतनं किंचिद्ब्रह्मत्वमागतम्[3] । तस्मादहमेवाहं ब्रह्मभावानु-भववेलायामपि पूर्वसिद्धोऽहमेव न तु योषित्यग्निध्यानवदुपचरितं ब्रह्मत्वम् । तादृशोऽहं जलरूपं मां जुहोमि उदराग्नौ प्रक्षिपामि । हविष्प्रदानवाची स्वाहाशब्दः । मद्देहव-र्तिभ्यो देवेभ्यो जलरूपं हविर्दत्तमित्यर्थः ।

आचमनादूर्ध्वं पुनरपि स्नाने मन्त्रमाह—

अकार्यकार्यवकीर्णी स्तेनो भ्रूणहा गुरुतल्पगः ।
वरुणोऽपामघमर्षणस्तस्मात्पापात्प्रमुच्यते, इति ॥

अकार्यं शास्त्रप्रतिषिद्धं कलञ्जभक्षणादिकं तत्कर्तुं शीलं यस्यासावकार्यकारी । प्रति-षिद्धस्त्रीगमनवानवकीर्णी । ब्राह्मणसुवर्णहर्ता स्तेनः । वेदवेदाङ्गविद्ब्राह्मणो गर्भो वा भ्रूणस्तं हन्तीति भ्रूणहा । गुरुदारगामी तु गुरुतल्पगः । एतादृशपापकारिणमपि माम-घमर्षणः पापविनाशकोऽपां स्वामी वरुणस्तस्मात्सर्वस्मात्पापात्प्रमुच्यते मोचयति ।

रहस्यपापक्षयार्थं स्नानमन्त्रमाह—

रजोभूमिस्त्व माꣳ रोदयस्व प्रवदन्ति धीराः ।
*पुनन्तु ऋषयः पुनन्तु वसवः पुनातु वरुणः पुनात्वघमर्षणः, इति ॥

रजो रजसः पापस्य भूमिः स्थानभूतोऽहमतो हे देव त्वं तत्पापफलभूतया यात-नया मां रोदयस्व । यद्यप्येतत्तवोचितं तथाऽपि धीरा बुद्धिमन्तः शास्त्रपारं गता मामनुगृह्णन्त एवं प्रवदन्ति । तदीयं वाक्यमुदाह्रियते—ऋषयो वसिष्ठादिमुख्या[10] एनं स्नानकारिणं पुनन्तु शोधयन्तु । तथा वसवोऽष्टसंख्याका एनं पुनन्तु । वरुणोऽ-प्येनं पुनातु । अघमर्षणः पापविनाशकोऽन्योऽपि देव एनं पुनातु । एवं धीरैर्म-द्भिरनुगृहीतत्वादृष्यादिभिः पूतं मां त्वमपि यमदेव मा बाधस्व[11] किंत्वनुगृहाणेत्यर्थः ।

* पदद्वयमनिश्चितस्वरकम् ।

१ ख. ग. °ते । ज्योति° । २ ग. °सिद्धजी° । ३ ख. °ब्रह्मत्वत्व° । ४ ख. °ह्मत्वानु° । ५ ख. °र्णी क्षतव्रत. । ब्रा° । ६ °. °ह्मणस्तद्गर्भो । ७ ग. °ति मोचयतु । र° । ८ ग. °भिः । म २ । ९ ग. °यात° । १० ग. वशिष्ठमु° । ११ ख. ग. °स्व, अनु° ।

स्नानादूर्ध्वं जप्यं मन्त्रमाह—

**आक्रान्त्समुद्रः प्रथमे विधर्मञ्जनयन्प्रजा भुवनस्य राजा ।**

**वृषा पवित्रे अधि सानो अव्ये बृहत्सोमो वावृधे सुवान इन्दुः**, इति ॥

समुद्रवत्प्रौढत्वात्संमोदाख्यपरमानन्दस्वभावत्वाद्वा समुद्रः परमात्मा । स च सर्वं जगदाक्रानाक्रान्तवान्व्याप्तवान् । किं कुर्वन् । **प्रथमे** सृष्टेरादिकाले **प्रजा जनयन्** । कीदृशे प्रथमकाले **विधर्मन्**प्राणिभिः पूर्वकल्पेऽनुष्ठिता विविधा धर्मा यस्मिन्काले स्वफलदानार्थमुद्बोध्यन्ते सोऽयं विधर्मा तस्मिन् । स च परमात्मा **भुवनस्य** पालकत्वाद्**राजा** । स्वभक्तानां कामानां वर्षणहेतुत्वाद्**वृषा** । ईदृशः सर्वत्र व्याप्तवान् । किंच **सानो** सानौ पर्वतपार्श्वभागे, **श्रुत्यन्तरे**—“ तं ब्रह्मगिरिरित्याचक्षते ” इति श्रवणाद्ब्रह्मावबोधयोग्यो देहो गिरिस्तदवयवः सानुर्हृदयपुण्डरीकं तच्च **पवित्रं** बाह्यदेहावयववदुच्छिष्टस्पर्शादिदोषाभावाच्छुद्धम**धि** पुरुषार्थहेतुध्यानस्थानत्वादितरावयवेभ्योऽप्यधिकमत एव ध्यातॄणामवनस्य पालनस्य हेतुत्वाद**व्यम्** । हिमवत्पुत्र्या गौर्या ब्रह्मविद्याभिमानिरूपत्वाद्गौरीवाचक **उमाशब्दो** ब्रह्मविद्यामुपलक्षयति । अत एव **तलवकारोपनिषदि** ब्रह्मविद्यामूर्तिप्रस्तावे ब्रह्मविद्यामूर्तिः पठ्यते— “ बहुशोभमानामुमां हैमवतीं तां होवाच ” इति । तद्विषयः परमात्मा तयोमया सह वर्तमानत्वा**त्सोमः**, स च सानौ हृदयपुण्डरीके बृहद्ब्रह्म[2] यथा भवति तथा **वावृधे** वृद्धिं प्राप्तः । पूर्वमविद्यावृतत्वेन संकुचितो जीवो भूत्वा तस्यामविद्यायां विद्ययाऽपनीतायां ब्रह्मत्वाविर्भावात्प्रवृद्ध इव भासत इत्यर्थः । स च सोमः **सुवानो** जीवानां धर्माधर्मयोः प्रेरकः । **इन्दुः** फलदानेन चन्द्रवदाह्लादहेतुः ।

अथानिष्टपरिहारार्थत्वेन जप्या मन्त्रा उच्यन्ते । तत्रैकामृचमाह—

**जातवेदसे सुनवाम सोममरातीयतो निदहाति वेदः ।**

**स नः पर्षदति दुर्गाणि विश्वा नावेव सिन्धुं दुरिताऽत्यग्निः**, इति ॥

वेदांसि वेदनानि ज्ञानानि तानि जातान्युत्पन्नानि यस्मादग्नेः सोऽयं जातवेदाः, आधानेन संस्कृतेऽग्नौ पश्चात्तदा तत्र कर्तव्यविषयाणि ज्ञानान्युत्पद्यन्ते । तस्मै **जातवेदसे** यागकाले लतात्मकं **सोमं सुनवामा**भिषुतं करवाम । स्वयं सर्वं वेत्तीति **वेदो**ऽग्निः । स **चारातीयतो**ऽस्मास्वरातित्वं शत्रुत्वमिच्छतः[3] पुरुषान्**निदहाति** नितरां भस्मी करोति । किंच **सोऽग्निर्नो**ऽस्माकं **विश्वा दुर्गाणि** सर्वा आपदोऽति**पर्षद**तिशयेन नाशितवानित्यर्थः । किंच यथा लोके **नावा सिन्धुं** समुद्रं नाविकस्तारयति तथाऽग्नि**र्दुरितानि** पापान्यतिशयेन तारयतीति शेषः ।

---

१ झ °त्वात्समोदत्वात्पर° । २ झ हृदयथा । ३ झ, °त्रुत्वं वर्तमि° ।

द्वितीयामृचमाह—

तामग्निवर्णां तपसा ज्वलन्तीं वैरोचनीं कर्मफलेषु जुष्टाम्।

दुर्गां देवीꣳ शरणमहं प्रपद्ये सुतरसि तरसे नमः, इति ॥

येयं नवदुर्गाकल्पादिषु मन्त्रशास्त्रेषु प्रसिद्धा तां दुर्गां देवीमहं शरणं प्रपद्ये। कीदृशीम्। अग्निसमानवर्णाम्। तपसा स्वकीयेन संतापेन ज्वलन्तीमस्मच्छत्रून्दहन्तीम्। विशेषेण रोचते स्वयमेव प्रकाशत इति विरोचनः परमात्मा, तेन दृष्टत्वाद्वैरोचनीम्, कर्मफलेषु स्वर्गपशुपुत्रादिषु निमित्तभूतेषु जुष्टामुपासकैः सेविताम्। हे सुतरसि सुष्ठु संसारतरणे हेतो देवि तरसे तारयित्र्यै तुभ्यं नमोऽस्तु।

तृतीयामृचमाह—

अग्ने त्वं पारया नव्यो अस्मान्स्वस्तिभिरति दुर्गाणि विश्वा।

पूश्च पृथ्वी बहुला न उर्वी भवा तोकाय तनयाय शंयोः, इति ॥

हेऽग्ने नव्यः स्तोतव्यस्त्वमस्मान्स्वस्तिभिः क्षेमकारिभिरुपायैर्विश्वा दुर्गाण्यति सर्वा आपदोऽतिशयेन लङ्घयित्वा पारय संसारस्य परतीरं नय। नोऽस्माकं त्वत्प्रसादात्पूश्च या निवासयोग्या पुरी साऽपि पृथ्वी विस्तीर्णा भवतु। उर्वी सर्वस्य निष्पादनयोग्या भूमिरपि बहुला भवतु। त्वं च तोकाय तनयायास्मदपत्याय तदीयपुत्राय च शंयोर्भव सुखस्य मिश्रयिता भव।

चतुर्थीमृचमाह—

विश्वानि नो दुर्गहा जातवेदः सिन्धुं न नावा दुरिताऽतिपर्षि।

अग्ने अत्रिवन्मनसा गृणानोऽस्माकं बोध्यविता तनूनाम्, इति ॥

हे जातवेदो दुर्गहा सर्वासामापदामपहन्ता त्वं विश्वानि दुरिता सर्वाणि पापानि नावा सिन्धुं न समुद्रमिव नोऽस्मानतिपर्षि अतिशयेन तारयसि। हेऽग्नेऽत्रिवदाध्यात्मिकादितापत्रयरहितत्वेनात्रिशब्दवाच्यो जीवन्मुक्तो महर्षिः "आत्मौपम्येन भूतानां दयां कुर्वीत मानवः" इत्येतच्छास्त्रमनुसृत्य "सर्वे च सुखिनः सन्तु सर्वे सन्तु निरामयाः" इत्येवं मनसा यथा सर्वदा भावयति तथा त्वमपि मनसा गृणानो गृणन्नुच्चारयन्भावयन्नस्माकं तनूनामविता रक्षिता भूत्वा बोधि बुध्यस्व सावधानो भवेत्यर्थः।

पञ्चमीमृचमाह—

पृतनाजितꣳ सहमानमुग्रमग्निꣳ हुवेम परमात्सधस्थात्।

---

१ क्ष सत्यानि'। २ ख. °णान उच्चा°। ३ ख. ग. °नो गुणानुचा°।

स नः पर्षदति दुर्गाणि विश्वा क्षामद्देवो अति दुरिताऽत्यग्निः, इति ॥

पृतनाः परकीयसेना जयतीति पृतनाजित्तमत एव सहमानं शत्रूनभिभवन्तमुग्रं भीतिहेतुमग्निं परमादुत्कृष्टात्सधस्थात्स्वकैर्भृत्यैः सहावस्थानदेशाद्धुवेमाऽऽह्वयाम । स न इत्यादि पूर्ववत् । किंचाग्निर्देवः क्षामदस्मदपराधान्क्षममाणोऽतिदुरिताऽतिशयितानि पातकानि ब्रह्महत्यादीन्यतिलङ्घयतीति शेषः ।

षष्ठीमृचमाह—

प्रत्नोषि कमीड्यो अध्वरेषु सनाच्च होता नव्यश्च सत्सि ।

स्वां चाग्ने तनुवं पिप्रयस्वास्मभ्यं च सौभगमायजस्व, इति ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके दशमप्रपाठके नारायणोपानिषदि प्रथमोऽनुवाकः ॥ १ ॥

हेऽग्ने त्वमध्वरेषु यागेष्वीड्यः स्तुत्यः सन्कं सुखं प्रत्नोषि प्रतनोषि विस्तारयसि । सनाच्च कर्मफलस्य दाताऽपि सन्होता होमनिष्पादकः, नव्यः स्तुत्योऽपि भूत्वा सत्सि सीदसि यागदेशे तिष्ठसि । अतो हेऽग्ने स्वां च स्वकीयामपि तनुवं पिप्रयस्वास्मदीयहविषा प्रीणय । ततोऽस्मभ्यं च सौभगं शोभनभाग्योपेतत्वमायजस्व सर्वतो देहि ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्ये दशमप्रपाठके नारायणीयापरनामधेययुक्तायां याज्ञिक्यामुपनिषदि प्रथमोऽनुवाकः ॥ १ ॥

अथ द्वितीयोऽनुवाकः ।

अथ होमार्थान्महाव्याहृतिसंज्ञकान्मन्त्रानाह—

भूरग्नये पृथिव्यै स्वाहा भुवो वायवेऽन्तरिक्षाय स्वाहा सुवरादित्याय दिवे स्वाहा भूर्भुवः सुवश्चन्द्रमसे दिग्भ्यः स्वाहा नमो देवेभ्यः स्वधा पितृभ्यो भूर्भुवः सुवरोम्, इति ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके दशमप्रपाठके नारायणोपानिषदि द्वितीयोऽनुवाकः ॥ २ ॥

भूर्भुवः सुवरोमिति त्रीणि पदान्यव्ययानि । तानि च व्यस्तरूपेण समस्तरूपेण च मन्त्रचतुष्टयरूपतां प्रतिपद्याग्न्यादिदेवताप्रतिपादकानि । तथा सत्ययमर्थः संपद्यते। भूरित्यनेन मन्त्रेण प्रतिपाद्यायाग्नये तन्मन्त्रप्रतिपाद्यायै पृथिव्यै च स्वाहा सुहुतमिदं द्रव्यमस्त्विति । एवमुत्तरेष्वपि त्रिषु मन्त्रेषु योज्यम् । अत्र द्रव्यविशेषस्यानुक्तत्वात्सर्वहोमसाधारणमाज्यमेव द्रव्यमित्यवगन्तव्यम् । फलविशेषस्यानुक्तत्वात्पापक्षयोऽत्र साधारणं फलं द्रष्टव्यम् । चतुर्भिर्मन्त्रैर्यथाशक्ति हुत्वाऽन्ते प्राङ्मुखो नमो देवेभ्य इति मन्त्रेणोपतिष्ठेत । पश्चाद्दक्षिणाभिमुखः स्वधा पितृभ्य इति मन्त्रेणोपतिष्ठेत। स्वधाशब्दः पितृप्रियं नमस्काराद्युपचारं ब्रूते । भूर्भुवः सुवरिति लोकत्रयेऽपि पापरहितो भवामि । ओमित्ययं शब्दोऽङ्गीकारवाचित्वात्तत्र तत्रोचितार्थाङ्गीकारं प्रतिपादयति । नारायणाख्येनेश्वरेण मुनिना वा दृष्टत्वादयं प्रपाठको नारायणीयः ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्ये दशमप्रपाठके नारायणीयापरनामधेययुक्तायां याज्ञिक्यामुपनिषदि द्वितीयोऽनुवाकः ॥ २ ॥

=====

अथ तृतीयोऽनुवाकः ।

अन्नसमृद्धिकामस्य तेष्वेव मन्त्रेषु पाठान्तरमाह—

भूरन्नमग्नये पृथिव्यै स्वाहा भुवोऽन्नं वायवेऽन्तरिक्षाय स्वाहा सुवरन्नमादित्याय दिवे स्वाहा भूर्भुवः सुवरन्नं चन्द्रमसे दिग्भ्यः स्वाहा नमो देवेभ्यः स्वधा पितृभ्यो भूर्भुवः सुवरन्नमोम्, इति ॥

**इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके दशमप्रपाठके नारायणोपनिषदि तृतीयोऽनुवाकः ॥ ३ ॥**

अन्नद्रव्यं स्वाहुतमस्तु । समृद्धमन्नमों प्राप्नोमीत्येतावानेव विशेषः ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्ये दशमप्रपाठके नारयणीयापरनामधेययुक्तायां याज्ञिक्यामुपनिषदि तृतीयोऽनुवाकः ॥ ३ ॥

=====

१ झ. °यपरतां । २ ग. झ. °तिपाद्या° । ३ ग. °याग्न° ।

अथ चतुर्थोऽनुवाकः ।

पूजाकामस्य पुनरप्यन्यपाठमाह—

भूरग्नये च पृथिव्यै च महते च स्वाहा भुवो वायवे चान्तरिक्षाय च महते च स्वाहा सुवरादित्याय च दिवे च महते च स्वाहा भूर्भुवः सुवश्चन्द्रमसे च नक्षत्रेभ्यश्च दिग्भ्यश्च महते च स्वाहा नमो देवेभ्यः स्वधा पितृभ्यो भूर्भुवः सुवर्महरोम्, इति ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके दशमप्रपाठके नारायणोपनिषदि चतुर्थोऽनुवाकः ॥ ४ ॥

महते प्रौढाय पूज्याय वा हिरण्यगर्भाय । चकारैस्तत्तद्देवतानां सेवका देवाः परिगृह्यन्ते । तेभ्योऽपि स्वाहुतमित्युक्तं भवति । महरों पूजां प्राप्नवानि ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्ये दशमप्रपाठके नारायणीयापरनामधेययुक्तायां याज्ञिक्यामुपनिषदि चतुर्थोऽनुवाकः ॥ ४ ॥

अथ पञ्चमोऽनुवाकः ।

पूर्वत्र भूरग्नय इत्यनुवाके सर्वसाधारणाः पापक्षयार्था होममन्त्रा उक्ताः । अथ प्रतिबन्धनिवारणेन मुमुक्षोर्ज्ञानप्राप्त्यर्था होममन्त्रा उच्यन्ते—

पाहि नो अग्न एनसे स्वाहा । पाहि नो विश्ववेदसे स्वाहा । यज्ञं पाहि विभावसो स्वाहा । सर्वं पाहि शतक्रतो स्वाहा, इति ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके दशमप्रपाठके नारायणोपनिषदि पञ्चमोऽनुवाकः ॥ ५ ॥

हेऽग्ने नोऽस्मानेनसो ज्ञानप्रतिबन्धकात्पापात्पाहि रक्ष । तुभ्यमिदं स्वा[हा]मस्तु नोऽस्माकं विश्ववेदसे कृत्स्नतत्त्वज्ञानसिद्ध्यर्थं पाहि तत्साधनसंपादनेन रक्ष । तदर्थं तुभ्यमिदं स्वा[हा]हुतमस्तु । विशेषेण भानं दीप्तिर्विभा सैव वसु धनं

यस्याग्नेः सोऽयं विभावसुः । हे विभावसो यज्ञं विविदिषाहेतुत्वेनास्माभिरनुष्ठीयमानं पाहि निर्विघ्नेन समाप्तिं नीत्वा पालय । शतसंख्याकाः क्रतवो येनाग्निना निष्पाद्यन्ते सोऽयं शतक्रतुः । हे शतक्रतो सर्वं ज्ञानसाधनं गुरुशास्त्रादिकं पाहि ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्ये दशमप्रपाठके नारायणीयापरनामधेययुक्तायां याज्ञिक्यामुपनिषदि पञ्चमोऽनुवाकः ॥ ५ ॥

अथ षष्ठोऽनुवाकः ।

अथ ज्ञानप्रतिपादककृत्स्नवेदान्तप्राप्तिकामेन जप्यं मन्त्रमाह—

यश्छन्दसामृषभो विश्वरूपश्छन्दोभ्यश्छन्दा॰स्याविवेश । सता॰शिक्यः प्रोवाचोपनिषदिन्द्रो ज्येष्ठ इन्द्रियाय ऋषिभ्यो नमो देवेभ्यः स्वधा पितृभ्यो भूर्भुवः सुवरोम्, इति ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके दशमप्रपाठके नारायणोपनिषदि षष्ठोऽनुवाकः ॥ ६ ॥

यः प्रणवश्छन्दसां वेदानां मध्ये ऋषभः श्रेष्ठः, विश्वरूपः सर्वजगदात्मकः, एतद्वेदसारत्वं विश्वरूपत्वं च सांहित्यामुपनिषदि प्रपञ्चितम् । तादृशः प्रणवश्छन्दोभ्यो वेदेभ्यः प्रादुर्भूत इति शेषः । वेदसारत्वेन प्रजापतेः प्रत्यभादित्यर्थः । स पुनश्छन्दांसि गायत्र्यादीन्याविवेश । छन्दोभिरुपलक्षितेषु मन्त्रेषु प्रयोक्तव्यः । तथाच प्रपञ्चसारेऽभिहितम्—"अस्य तु वेदादित्वात्सर्वमनूनां प्रयुज्यते ह्यादौ" इति । तेन प्रणवेन प्रतिपाद्य इन्द्रः परमैश्वर्ययुक्तः परमात्मोपनिषत्प्रोवाचोपनिषदं ब्रह्मविद्यां सर्ववेदान्तसिद्धामुक्तवान् । कीदृश इन्द्रः । सतां शिक्यः साद्भिः कर्मानुष्ठायिभिरुपासकैर्ज्ञानिभिश्च प्राप्तुं शक्यः, ज्येष्ठः कारणत्वेन सर्वस्मात्प्रथमः । किमर्थं विद्यामुक्तवानित्युच्यते—ऋषिभ्य ऋषीणामन्तर्मुखाणां जिज्ञासूनामिन्द्रियाय ज्ञानसामर्थ्यार्थम् । अतोऽहं तत्प्रतिबन्धनिवारणाय देवेभ्यः पितृभ्यश्च नमस्करोमि । भूर्भुवः सुवरों लोकत्रयाव-

१ क. सता॰ । २ ख. क. 'कः पुरोगा॰ । ३ ग. क. 'वश्छन्द ओम् । ४ ख. [illegible]॰ । ५ [illegible] ॰त्वात्सर्वम॰ । ६ ख. 'निति तद्रूप॰ । ६ ग. क. 'र्थाय । अ॰ ।

स्थितान्प्राप्नोमि । देवा(वेदा)निति शेषः । एतदेवाभिप्रेत्य केचिद्भूर्भुवः सुवश्छन्द ओमिति पठन्ति ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्ये दशमप्रपाठके नारायणीयापरनामधेययुक्तायां याज्ञिक्यामुपनिषदि षष्ठोऽनुवाकः ॥ ६ ॥

अथ सप्तमोऽनुवाकः ।

अथ लब्धानां वेदानामविस्मरणाय जप्यं मन्त्रमाह—

**नमो ब्रह्मणे धारणं मे अस्त्वनिराकरणं धारयिता भूयासं कर्णयोः श्रुतं मा च्योढ्वं ममामुष्य ओम्, इति ॥**

**इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके दशमप्रपाठके नारायणोपनिषदि सप्तमोऽनुवाकः ॥ ७ ॥**

**ब्रह्मणे** जगत्कारणाय **नमो**ऽस्तु[1] तत्प्रसादान्मदीये चित्ते ग्रन्थतदर्थयो**र्धारणमस्तु** । [ **अनिराकरणं** ] **निराकरणं** विस्मरणं यथा न भवति तथा **धारयिता भूयासम्** । अमुष्येत्थं प्रार्थयमानस्य **मम कर्णयो**र्यत्किंचिद्वेदशास्त्रादिकं यदा कदाचिदपि **श्रुत**मासीत्तत्सर्वं हे देवा[2] **मा च्योढ्वं** मा विनाशयत[3] । ततोऽहम**ों** प्राप्नुयां स्थिरं धारणमिति **शेषः** ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्ये दशमप्रपाठके नारायणीयापरनामधेययुक्तायां याज्ञिक्यामुपनिषदि सप्तमोऽनुवाकः ॥ ७ ॥

अथाष्टमोऽनुवाकः ।

अथ ज्ञानसाधनं यत्तपश्चित्तैकाग्र्यमस्ति "मनसश्चेन्द्रियाणां च ह्यैकाग्र्यं परमं तपः" इति श्रुतेः[4] । तत्तपः श्रौतस्मार्तसर्वकर्मस्वरूपतया प्रशंसति । यद्वा तथाविधतपःसिद्ध्यर्थं जप्यं मन्त्रमाह—

**ऋतं तपः सत्यं तपः श्रुतं तपः शान्तं तपो[5] दानं**

१ ख. झ. °स्तु । त्वत्प्र° । २ ग. झ. देव । ३ ग. झ. °य । ततोऽ° । ४ झ. स्मृतेः । ५ ग. झ. °पो दमस्तपः शमस्तपो दा° ।

तपो यज्ञं तपो भूर्भुवः सुवर्ब्रह्मैतदुपास्स्वैतत्तपः, इति ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके दशमप्रपाठके नारायणोपनिषद्यष्टमोऽनुवाकः ॥ ८ ॥

ऋतं मनसा यथार्थवस्तुचिन्तनम्। सत्यं वाचा यथार्थभाषणम्। श्रुतं वेदस्य पूर्वोत्तरभागार्थावबोधयोर्मीमांसयोः श्रवणम्। शान्तं शान्तिर्बाह्येन्द्रियाभ्यन्तरेन्द्रियोपरतिः। दानं धनेषु स्वत्वनिवृत्तिः परस्वत्वापादनपर्यन्ता। यज्ञोऽग्निहोत्रादिः। तदेतत्सर्वमर्वाचीनं तपः। भूरादिलोकत्रयात्मकं विराड्देहरूपं यद्ब्रह्मास्ति हे मुमुक्षो एतद्ब्रह्मोपास्स्व विजातीयप्रत्ययरहितं सजातीयप्रत्ययप्रवाहं कुरु। तदेतदुपासनमुत्तमं तपः।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णजुर्वेदीयतैत्तिरीयारण्यकभाष्ये दशमप्रपाठके नारायणीयापरनामधेययुक्तायां याज्ञिक्यामुपनिषद्यष्टमोऽनुवाकः ॥ ८ ॥

अथ नवमोऽनुवाकः।

अथ विहितानुष्ठानरूपं पुण्यं ज्ञानसाधनतया प्रशंसति। निषिद्धाचरणं ज्ञानप्रतिबन्धकतया निन्दति—

यथा वृक्षस्य संपुष्पितस्य दूराद्गन्धो वात्येवं पुण्यस्य कर्मणो दूराद्गन्धो वाति यथाऽसिधारां कर्तेऽवहितामवक्रामेद्यद्युवे युवे ह वा विह्वयिष्यामि कर्तं पतिष्यामीत्येवममृतादात्मानं जुगुप्सेत्, इति ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके दशमप्रपाठके नारायणोपनिषदि नवमोऽनुवाकः ॥ ९ ॥

लोके यथा वृक्षस्योद्यानादौ स्थितस्य चम्पकपाटलकेतकीपुंनागादेः संपुष्पितस्य सम्यग्विकसितपुष्पोपेतस्य यो गन्धः सुरभिरस्ति सोऽयं दूराद्देशाद्वाति वायुना सहाऽऽगच्छति एवं पुण्यकर्मणो ज्योतिष्टोमादेः सत्कीर्तिः सुगन्धसमाना दूराद्वाति मनुष्यलोकात्स्वर्गे गच्छति। तस्मात्पुण्यमनुष्ठेयम्। अथ पापस्य दृष्टान्त उच्यते—यथा लोके राजामात्यादीनां विनोदाय प्रवृत्तो वंशाग्रवृत्तादिदुर्घटव्यापारेष्वत्यन्तकुशलमनाः कश्चित्कर्ते कूपादावगाधे कस्मिंश्चिद्गर्तविशेषेऽवहितां प्रसारितामसिधारां

१ ख. ङ. यज्ञस्तपो। २ ग. 'पास्स्वैत°। ३ ख. °पास्व वि°। ४ ग. °रणरूपं तु ज्ञा° ५ ख. ङ. यवे। ६ ङ 'ह्वयिष्या'। ७ ख. °ममृता°।

सिधारां खड्गधारामवक्रामेत्पादाभ्यां धाराया उपरि गन्तुं प्रवर्तते । तदानीमसौ मनस्येवं विचारयति । **यद्यदि युवे हुवे** हकारो व्यत्ययेन यकारस्थाने पठितः । अत एव केचिद्युवे युव इति पठन्ति । **यौमि यौमि** पुनः पुनः पादमसिधारया मिश्रयामीत्यर्थः । तदाऽहं **विह्वदिष्यामि कर्ते वा पतिष्यामि** । अहमित्येतमर्थं हशब्दो ब्रूते । लकारस्थाने व्यत्ययेन दकारः । असिधारायां पादस्य दृढस्पर्शे पादच्छेदेनाहं विह्वलितो विवशो भविष्यामि दृढस्पर्शाभावे त्वधोवर्तिन्यगाधे गर्ते पतिष्यामीति । **एवं** पापे वर्तमानः पुरुषो विचारयेत् । यद्यहं[3] पापं प्रकटं कुर्यां तदानीमिह लोके निन्दितो भविष्यामि[4] तत्परिहारायाप्रकटं कुर्यां तदाऽपि नरके पतिष्यामीति । ईदृग्विचारयुक्तः पुरुषोऽनृतात्पापादात्मानं जुगुप्सेद्धिङ्मां लोकद्वयभ्रंशहेतुमिति निन्दित्वा पापान्निवारयेत् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्ये दशमप्रपाठके नारायणीयापरनामधेययुक्तायां याज्ञिक्यामुपनिषदि नवमोऽनुवाकः ॥ ९ ॥

***इति प्रथमखण्डः समाप्तः ।**

═════

अथ दशमोऽनुवाकः ।

———

यथोक्तप्रशंसोपेतपुण्यानुष्ठानेन निषिद्धाचरणवर्जितेन शुद्धान्तःकरणस्य पुरुषस्य तत्त्वमुपदेष्टुमयमनुवाक आरभ्यते । तत्र प्रथमामृचमाह—

**अणोरणीयान्महतो महीयानात्मा गुहायां निहितोऽस्य जन्तोः ।**
**तमक्रतुं पश्यति वीतशोको धातुः प्रसादान्महिमानमीशम्, इति ॥**

सच्चिदानन्दैकरसः परमेश्वरः सर्वाधिष्ठानत्वेन सर्वस्य जगतः स्वरूपत्वादात्मशब्देनोच्यते । आत्मशब्दश्च स्वरूपवाचीति प्रसिद्धम् । मायाकार्यभूते लौकिकव्यवहारे सूक्ष्मत्वेन प्रसिद्धः परमाणुर्द्व्यणुकादिरणुशब्दवाच्यः । तस्मादप्ययमात्माऽतिशयेन[5] सूक्ष्मत्वाद**णीयान्** । आकाशादिगादयः परिमाणाधिक्यत्वाल्लोके महच्छब्दवाच्याः । ततोऽप्ययमात्माऽतिशयेनाधिकत्वान्**महीयान्** । परमाणुद्व्यणुकादीनामस्मदादिप्रत्यक्षागम्यत्वाभावेऽपि योगिजनचक्षुर्गम्यत्वमस्ति तदप्यात्मनो नास्तीत्यभिप्रेत्याणीयस्त्व-

* ख. पुस्तके नास्त्येतत् ।

१ ग. झ. °दानीमं । २ झ. यकारः । ३ ग. यदि पा° । ४ ख. °मि । अथ त° । ५ ग. °धिष्ठाने° । ६ झ. °[illegible]° । ७ ग. °न सर्वस° ।

मुक्तम् । आकाशदिगादीनामेकब्रह्माण्डवर्तित्वात्तादृशब्रह्माण्डलक्षकोट्यधिष्ठानत्वमाभिप्रेत्य महीयस्त्वमुक्तम् । तादृशः परमात्माऽस्य देवमनुष्यादिरूपस्य जन्तोर्गुहायां निहितः। गुहाशब्देन हृदयपुण्डरीकमध्यवर्तिनी बुद्धिरुच्यते । गुहू संवरण इत्यस्माद्धातोरुत्पन्नो गुहाशब्दः । बुद्धिश्च हृदयपुण्डरीकेण संवृता तन्मध्यवर्तित्वात् । तस्यां बुद्धावस्य परमात्मनो निहितत्वं नाम विद्ययोपलभ्यमानत्वं न तु बुद्धावाधेयत्वम् । सर्वजगदाधारस्य तदसंभवात् । तं तथाऽवस्थितमीशं शमादिगुणयुक्तोऽधिकारी पुरुषः पश्यति साक्षात्करोति । स चाधिकारो धातुः प्रसादादुपजायते । धाता जगतो विधाता परमेश्वरः, तस्य प्रसादोऽनुग्रहः ।

तथा च पूर्वाचार्यैरुक्तम्—

" ईश्वरानुग्रहादेषां पुंसामद्वैतवासना ।
महाभयकृतत्राणा द्वित्राणामेव जायते " इति ।

कीदृशमीशम् । अक्रतुं संकल्परहितम् । रूपान्नपानादिभोगजातं समीचीनमिति संकल्पनं जीवस्यैव न त्वीशस्य । संकल्पहेतुभूतान्तःकरणोपाधेरभावात् । अतो निरुपाधिकत्वान्महिमानमतिशयेन महान्तम् । ईदृशं परमेश्वरं साक्षात्कृत्य वीतशोको जन्ममरणादिशोकरहितो भवति ।

द्वितीयामृचमाह—

सप्त प्राणाः प्रभवन्ति तस्मात्सप्तार्चिषः समिधः सप्त जिह्वाः ।
सप्त इमे लोका येषु चरन्ति प्राणा गुहाशयान्निहिताः सप्त सप्त, इति ॥

शुद्धान्तःकरणैर्ज्ञातव्यो यः परमात्मोक्तस्तस्य शाखाचन्द्रन्यायेनोपलक्षणार्थं जगत्कारणत्वमुच्यते । तस्मात्परमात्मनो मायाशक्तिविशिष्टात्सप्त प्राणा भवन्ति । अन्यत्र—"सप्त वै शीर्षण्याः प्राणाः" इत्युक्तत्वात्, शिरोवर्तिसप्तच्छिद्रगताः सप्तसंख्याकाश्चक्षुरादयः प्राणाः परमेश्वरादुत्पद्यन्ते । द्वे चक्षुषी द्वे श्रोत्रे द्वे नासिके वागेकेति सप्तत्वम् । तेषां चक्षुरादीनां स्वस्वविषयप्रकाशनशक्तयः सप्तार्चिषः । तैरर्चिर्भिर्गृह्यमाणत्वेन सप्तसंख्यावा विषयाः समिधः । विषयैर्हीन्द्रियाणि समिध्यन्ते प्रकाशयुक्तानि क्रियन्ते । यथैकस्यापि चक्षुरिन्द्रियस्य गोलकभेदेन द्वित्वं तथा रूपस्याप्येकस्य वामदक्षिणरूपग्राहकचक्षुर्वृत्तिभेदाद्द्वित्वं द्रष्टव्यम् । एवं शब्दगन्धयोर्द्वित्वे सति विषयाः सप्त संपद्यन्ते । अथवा समिच्छब्देन सप्तसंख्या न संबध्यते किंतु जिह्वाशब्देन । अग्निजिह्वानां च सप्तत्वमाथर्वणिकैराम्नातम्—

१ ख. °ण्डमध्ये व° । २ ग. °र्तिनीत्या° । ३ ख. शमदमा°दि° । ४ ख. ग. °त्राणां यदि
—२ ... [illegible] ... प्रेक्षमिति ।

काली कराली च मनोजवा च सुलोहिता चापि सुधूम्रवर्णा।
स्फुलिङ्गिनी विश्वरुची च देवी लेलायमाना इति सप्त जिह्वाः" इति।

ाश्च परमेश्वरात्प्रभवन्ति। इमे भूरादयः सप्तसंख्याका **लोकास्तस्मात्प्रभवन्ति।** ेषु सप्तसु लोकेषु देवमनुष्यादिशरीरवर्तिनः **प्राणाश्चरन्ति,** तादृशा लोका उत्पन्ना ति पूर्वत्रान्वयः। गुहा बुद्धिस्तस्यां शेत उपलभ्यत इति गुहाशयः परमेश्वरस्तस्मादु- पन्नाः सप्तर्षयः सप्त समुद्रा इत्यादिकाः सप्तसंख्याकाः पदार्थविशेषा **निहितास्तत्र** त्रावस्थापिताः।

तृतीयामृचमाह—

**अतः समुद्रा गिरयश्च सर्वेऽस्मात्स्यन्दन्ते सिन्धवः सर्वरूपाः।**
**अतश्च विश्वा ओषधयो रसाश्च येनैष भूतस्तिष्ठत्यन्तरात्मा,** इति॥

क्षीरोदधिप्रभृतयः समुद्रविशेषा मेरुप्रभृतयो गिरिविशेषाश्चास्मात्परमेश्वरात्**सर्वे** ाभवन्ति। गङ्गागोदावर्यादयः **सर्वरूपा** बहुविधा नद्योऽस्मात्परमेश्वरादुत्पन्नाः यन्दन्ते प्रवहन्ति। व्रीहियवाद्या **विश्वाः** सर्वा **ओषधयश्च** मधुराम्लादयो **रसाश्चातः** रमेश्वरात्प्रभवन्ति। **एषोऽ**हंप्रत्ययेन गम्यमानो**ऽन्तरात्मा** स्थूलदेहचिदात्मनोर्मध्य- र्ती लिङ्गदेहो **येनौ**षधिरसेन **भूतः** संबद्धः सञ्शरीरे **तिष्ठति,** तादृशो रस उत्पन्न ति पूर्वत्रान्वयः।

चतुर्थीमृचमाह—

**ब्रह्मा देवानां पदवीः कवीनामृषिर्विप्राणां महिषो मृगाणाम्।**
**श्येनो गृध्राणाꣳ स्वधितिर्वनानाꣳ सोमः पवित्रमत्येति रेभन्,** इति॥

अन्तर्बहिर्वर्तिनां प्राणसमुद्रादीनामचेतनानां सृष्टिमुक्त्वा चेतनेषु परमेश्वरस्योत्कृष्ट- ूपेणावस्थानमुच्यते। **देवानाम**ग्नीन्द्रादीनां मध्ये **ब्रह्मा** चतुर्मुखो भूत्वा परमेश्वरो ियामकत्वेनावतिष्ठते। तथा **कवीनां** काव्यनाटकादिकर्तॄणां पुरुषाणां मध्ये **पदवीर्भू-** ाऽवतिष्ठते। व्याकरणे निष्पन्नः सुशब्दविशेषः पदं तद्वेति गच्छतीति पदवीः शब्द- ामर्थ्याभिज्ञो व्यासवाल्मीक्यादिरूप इत्यर्थः। **विप्राणां** वैदिकमार्गवर्तिनां ब्राह्मणानां ध्य **ऋषिस्त**त्तद्गोत्रप्रवर्तको वसिष्ठादिरूपो बभूव। **मृगाणां** चतुष्पदां मध्ये शक्त्या- धिक्येन युक्तो **महिषो** बभूव। गृध्रोपलक्षितानां सर्वेषां पक्षिणां मध्ये प्रबलः **श्येनो** भूव। **वनानां** वृक्षसमूहरूपाणां मध्ये छेदनार्थः **स्वधितिः** परशुर्बभूव। यागहेतुभू-

१ ख. °ना या च स°। २ ग. ज. °ष। ३ क. °ष्ठत्यरू°।

तबल्यात्मकः **सोमो** भूत्वा **रेभः** मन्त्रशब्दयुक्तः सन्**पवित्रं** शुद्धिकारणं गङ्गाजलकुशदर्भादिद्रव्यजातं सर्वमत्येति ।

पञ्चमीमृचमाह—

**अजामेकां लोहितशुक्लकृष्णां बह्वीं प्रजां जनयन्तीꣳ सरूपाम् ।**
**अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः,** इति ॥

व्यवहारदशायां परमेश्वरस्य चतुर्मुखब्रह्मादिशरीरेषु विशेषेणावस्थानमभिधाय यथोक्तजगत्सृष्टेर्मूलकारणभूतां मायाशक्तिमुपजीव्य बुद्धमुक्तपुरुषव्यवस्था प्रदर्श्यते । न जायत इत्यजा मूलप्रकृतिरूपा माया । न ह्यनादेस्तस्या जन्म संभवति । सा च मायैका, इतरस्य सर्वस्य जगतस्तत्कार्यत्वात् । यदाऽसौ तेजोबन्नानि त्रीणि भूतान्युत्पाद्य तद्रूपाऽवतिष्ठते तदानीं लोहितशुक्लकृष्णवर्णैरुपेता भवति । तथा च च्छन्दोगा आमनन्ति—" यदग्ने रोहितꣳ रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्य " इति । अन्नशब्देनात्र पृथिव्युपलक्ष्यते । रजःसत्त्वतमोगुणा वा लोहितादिशब्दैरुपलक्ष्यन्ते । गुणत्रयात्मिका मायेत्युक्तं भवति । सा च देवतिर्यङ्मनुष्यादिरूपां गुणत्रयात्मकत्वेन सरूपां बहुविधां **प्रजां** जनयति । न जायत इत्यजो जीवः, तस्यापि मायावदनादित्वादुत्पत्तिर्नास्ति । तादृशो जीवो द्विविधः—आसक्तो विरक्तश्चेति । तयोर्मध्य **एक** आसक्तो योऽजो जीवः पूर्वोक्तामजां मायां **जुषमाणः** प्रीतिपूर्वकं सेवमानोऽ**नुशेते** तदनुसारेणैव वर्तते । विषयानेव भुञ्जानो विवेकरहितो जन्ममरणप्रवाहरूपेण संचरतीत्यर्थः । अन्योऽजो विरक्तो जीवो **भुक्तभोगामेनां** मायां **जहाति** परित्यजति । विरक्तैः प्रागेव भोगान्भुक्त्वा( गा भुक्ता ) न तूपरिष्टाद्भोक्ष्यन्ते तादृशैर्भोगैर्युक्ता माया भुक्तभोगा तां मायां तत्त्वविवेकेन बाधत इत्यर्थः ।

षष्ठीमृचमाह—

**हꣳसः शुचिषद्वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत् ।**
**नृषद्वरसदृतसद्व्योमसदब्जा गोजा ऋतजा अद्रिजा ऋतं बृहत्,** इति ॥

यः पुमान्विवेकेन मायां परित्यजति तस्य सर्वमपि जगद्ब्रह्मरूपेणावभासत इत्ययमन्त्रो( न्त्रा )र्थः प्रदर्श्यते । तदर्थमादौ जगदनूद्यते हन्ति सर्वदा गच्छतीति **हंस** आदित्यः । स च शुचौ शुद्धे मण्डले ज्योतिर्मध्ये सीदतीति **शुचिषत्**, सूत्रात्मरूपेण

१ ख झ. °णि रूपाण्युत्पा° । २ झ. °न्ते । सा ग° । ३ ग. °यात्मिक° । ४ ख. झ. जनयन्ती । ५ ग. °रणं प्र° । ६ झ. संसर° । ७ झ. °क्ष्यन्ते ता° । ८ झ. बाधितमित्य° । [illegible] । १० ख. प्रदिश्यते ।

जगन्निवासहेतुत्वात् । वसुर्वायुः, तद्रूपः सन्नन्तारिक्षे सीदतीत्यन्तारिक्षसत् । होमनिष्पादक आहवनीयाद्यग्निर्होता तद्रूपेण सोमयागाद्यङ्गभूतायां वेद्यां सीदतीति वेदिषत् । अमावास्यादितिथिविशेषमनपेक्ष्य भोजनयाच्ञार्थं तत्र तत्र गच्छन्पुरुषो वैदेशिकोऽतिथिः, तद्रूपेण दुरोणेषु गृहेषु परकीयेषु सीदतीति दुरोणसत् । नृषु मनुष्येषु कर्माधिकारिजीवरूपेण सीदतीति नृषत् । वरे श्रेष्ठे क्षेत्रे काशीद्वारावत्यादौ पूजनीयदेवरूपेण सीदतीति वरसत् । ऋते सत्ये वैदिके कर्मणि फलरूपेण सीदतीति ऋतसत् । व्योम्न्याकाशे नक्षत्रादिरूपेण सीदतीति व्योमसत् । अद्भ्यो नदीसमुद्रादिगताभ्यः शङ्खमकरादिरूपेण जायत इत्यब्जाः । गोभ्यः क्षीरादिरूपेण जायत इति गोजाः । ऋतं सत्यवचनं तस्मात्कीर्तिरूपेण जायत इति ऋतजाः । अद्रिभ्यः पर्वतेभ्यो वृक्षादिरूपेण जायत इत्यद्रिजाः । हंस इत्यारभ्याद्रिजा इत्यन्तेनोक्तं यज्जगदस्ति तज्जगदृतं सत्यं बृहद्ब्रह्म, अज्ञानिदृष्ट्या जगद्रूपेण भासमानं सर्वं ज्ञानिदृष्ट्या ब्रह्मैवेत्यर्थः ।

सप्तमीमृचमाह—

*यस्माज्जाता न परा नैव किंचनाऽऽस य आविवेश भुवनानि विश्वा ।
प्रजापतिः प्रजया संविदानस्त्रीणि ज्योतीꣳषि सचते स षोडशी, इति ॥

हंसादेः सर्वस्य जगतो ब्रह्मरूपत्वं यदुक्तं तदत्र प्रतिपाद्यते । ब्रह्मव्यतिरिक्तं वस्तु किंचिदस्तीति वदन्वादी प्रष्टव्यः । किमचेतनं जगद्ब्रह्मव्यतिरिक्तमाहोस्विच्चेतनो जीवः । अचेतनत्वपक्षेऽपि किं सृष्टेरूर्ध्वभावि वस्तु ब्रह्मव्यतिरिक्तमुत पूर्वभावि । न तावदूर्ध्वभाविनो व्यतिरिक्तत्वमित्युच्यते । जाता सृष्टेरूर्ध्वमुत्पन्ना प्रजा यस्मात्परमेश्वरात्परा व्यतिरिक्ता न भवति । नापि पूर्वभाविनो व्यतिरिक्तत्वमित्युच्यते सृष्टेः पूर्वं किंचन किमपि ब्रह्मव्यतिरिक्तं वस्तु नैवाऽऽस । "एकमेवाद्वितीयम्" इति श्रुत्यन्तरात् । नापि चेतनस्य जीवस्य ब्रह्मव्यतिरिक्तत्वमित्युच्यते । यः परमेश्वरो विश्वा भुवनानि सर्वलोकवर्तीनि शरीराण्याविवेश जीवरूपेण प्रविवेश । "अनेन जीवेनाऽऽत्मनाऽनुप्रविश्य" इति श्रुत्यन्तरात् । स प्रजापतिः प्रजापालकः परमेश्वरः प्रजया स्वस्मादुत्पन्नया देवातिर्यगादिरूपया संविदानः संसर्गं तादात्म्यं लभमानो वर्तते । स परमेश्वरस्त्रीणि ज्योतींष्यग्न्यादित्यचन्द्ररूपाणि सचते समवैति तादात्म्यसंबन्धं प्राप्नोति । कीदृशः परमेश्वरः । षोडशी प्रश्नोपनिषत्प्रोक्तषोडशकलोपेतः । तत्र हि प्राणश्रद्धादिकं कृत्स्नमपि जगत्षोडशावयवरूपं परमात्मा

* एतदर्धमनिश्चितस्वरकम् ।

१ ख. ग. 'द्वारव°' । २ ख. °सर्गता° ।

ससर्जेति श्रुतम् । तथा सति मृद्घटन्यायेन कार्यकारणयोरव्यतिरेकात्षोडशकलारूपेण जगता सह तादात्म्यसंबन्धादयं षोडशीत्युच्यते ।

अष्टमीमृचमाह —

*विधर्तार[२]ᳪ हवामहे वसोः कुविद्वनाति नः ।

+सवितारं नृचक्षसम्, इति ॥

यथोक्तब्रह्मतत्त्वज्ञानलाभाय परमेश्वरप्रार्थनारूपाः केचिन्मन्त्रा इत अरभ्योच्यन्ते। वसोर्धनस्य ब्रह्मज्ञानरूपस्य विधर्तारं[३] विशेषेण संपादयितारं परमेश्वरं हवामहेऽस्मदनुग्रहार्थमाह्वयामः । नोऽस्माकं तादृशानां कुवित्प्रभूतं तत्त्वज्ञानरूपं धनं वनाति संभजते स परमेश्वरो ददातीत्यर्थः । कीदृशं विधर्तारम्[४] । सवितारमस्मद्बुद्धेः प्रेरकम् । नृचक्षसं नृणां मनुष्याणामधिकारिणामाचार्यरूपेण तत्त्वविद्याप्रवक्तारम् ।

नवमीमृचमाह—

अद्या नो देव सवितः प्रजावत्सावीः सौभगम् ।

परा दुष्ष्वप्नियᳪ सुव, इति ॥

हे सवितः प्रेरक देवाद्यास्मिन्दिने नोऽस्माकं विद्यार्थिनां प्रजावच्छिष्यप्रशिष्यादिप्रजोपेतं सौभगमाचार्यरूपं भाग्यं सावीः प्रेरय प्रयच्छेत्यर्थः । दुष्ष्वप्नियं दुष्टस्वप्नसदृशं द्वैतप्रतिभासं परासुव निराकुरु ।

दशमीमृचमाह—

विश्वानि देव सवितर्दुरितानि परासुव ।

यद्भद्रं तन्म आसुव, इति ।

हे सवितः प्रेरक देव दुरितानि ज्ञानप्रतिबन्धकानि पापानि विश्वानि सर्वाणि परासुव पराकुरु । भद्रं कल्याणमसंभावनाविपरीतभावनारहितं तत्त्वज्ञानं यदस्ति तन्मे मह्यमुपासकायाऽऽसुव साकल्येन प्रयच्छ ।

एकादशीमृचमाह—

मधु वाता ऋतायते मधु क्षरन्ति सिन्धवः ।

माध्वीर्नः सन्त्वोषधीः, इति ॥

ऋतायत ऋतं परं ब्रह्म तदिच्छते मह्यं वाता वायवो मधु माधुर्योपलक्षितं सु

---

* एतत्पदद्वयमानिश्चितस्वरकम् । × एतत्पदद्वयमनिश्चितस्वरकम् ।

---

१ ग °सर्ज वै' इति श्रुत्यन्तरात् । त° । २ झ. विधातार° । ३ झ. विधातारं । ४ ...

यथा भवति तथा वान्त्विति शेषः । प्रबले तु वायौ रोगोत्पत्त्या तत्त्वज्ञानविघ्नः संपद्येते । अतः स मा भूदिति वायोरानुकूल्यं प्रार्थ्यते । एवमुत्तरत्रापि तत्तदानुकूल्यं द्रष्टव्यम् । सिन्धवो नद्यो मधु क्षरन्ति मधुरमारोग्यकरमुदकं संपादयन्त्वित्यर्थः । ओषधीर्व्रीहि-यवादयोऽपि नोऽस्माकं माध्वीर्मधुराः पथ्यरूपाः सन्तु ।

द्वादशीमृचमाह—

मधु नक्तमुतोषसि मधुमत्पार्थिवꣳ रजः ।
मधु द्यौरस्तु नः पिता, इति ॥

नक्तं रात्रावुतापि चोषसि प्रभाते दिवसेऽपि विद्यार्थिनो मधु मधुरमनुकूलं सुख-मस्तु कालकृतोऽपि विघ्नो मा भूदित्यर्थः । पार्थिवं रजः पृथिव्यामवस्थितं शयनादि-स्थानगतं रजोऽपि मधुमन्माधुर्योपेतं कण्टकपाषाणादिराहित्येनानुकूलमस्तु । नोऽस्माकं पिता पितृसदृशी द्यौरपि मध्वस्तु, अतिवृष्ट्यादिप्रातिकूल्यरहिताऽस्तु । "द्यौः पिता पृथिवी माता" इति मन्त्रान्तराद्दिवः पितृत्वम् ।

त्रयोदशीमृचमाह—

मधुमान्नो वनस्पतिर्मधुमाꣳ अस्तु सूर्यः ।
माध्वीर्गावो भवन्तु नः, इति ॥

वनस्पतिश्चूतपनसादिर्नोऽस्मान्प्रति मधुमान्मधुरफलोपेतो जीवनहेतुरस्तु । सूर्योऽपि प्रभूतं संतापमकृत्वा मधुमान्माधुर्येणानुकूलप्रकाशनेन युक्तोऽस्तु । गावोऽपि नोऽस्मान्प्रति माध्वीर्जीवनहेतुमधुरक्षीरोपेता भवन्तु ।

चतुर्दशीमृचमाह—

घृतं मिमिक्षिरे घृतमस्य योनिर्घृते श्रितो घृतमुवस्य धाम ।
अनुष्वधमावह मादयस्व स्वाहाकृतं वृषभ वक्षि हव्यम्, इति ॥

भोग्यजातस्य ज्ञानयोग्यदेहानुकूल्यं प्रार्थ्य ज्ञानसाधनयागादिकर्महेतोरग्नेरानुकूल्यं प्रार्थ्यते । पूर्वे यजमाना अग्नावाहवनीयादिरूपे घृतं मिमिक्षिरे सिक्तवन्तः । मिह सेचन इति धातुः । तद्घृतमस्याग्नेर्योनिरुत्पत्तिकारणम् । घृतेन ज्वालाभिवृद्धिदर्शनात् । अतोऽयमग्निर्घृते श्रितो घृतमाश्रित्यावस्थितः । घृतमेवास्याग्नेर्धाम स्थानं तेजोहेतुर्वा । हेऽग्नेऽनुष्वधं स्वधामन्वस्मदीयं हविःस्वरूपमनुसृत्याऽऽवह देवानत्राऽऽनय । आनीय

---

१ ख. °था भवन्त्वि° । २ ख. °विघ्न° °ं । ३ ख. °द्यन्ते । अ° । ४ ख. सुपथ्यरू°ाः ।
५ ख. °योग्यं दे° । ६ ख. °तमु वा° ।

च मादयस्व हृष्टान्कुरु । हे वृषभ श्रेष्ठ स्वाहाकृतं स्वाहाकारेणास्माभिर्दत्तं हव्यं वक्षि वह देवान्प्रापय ।

पञ्चदशीमृचमाह—

समुद्रादूर्मिर्मधुमाꣳ उदारदुपाꣳशुना सममृतत्वमानट् ।
घृतस्य नाम गुह्यं यदस्ति जिह्वा देवानाममृतस्य नाभिः, इति ॥

समुद्रवदतिप्रभूतात्परमात्मन ऊर्मिरूर्मिसदृशो जडप्रपञ्चो मधुमान्भोग्यत्वेन माधुर्ययुक्त उदारदुदगच्छत् । उत्पन्न इत्यर्थः । यथा लोके समुद्रात्तरङ्गा उत्पद्यन्त एवं हि चिदेकरसात्परमात्मनो जडं भोग्यजातं सर्वमुत्पन्नम् । घृ क्षरणदीप्त्योरिति धातोरुत्पन्नो घृतशब्दः । घृतं दीप्तं स्वप्रकाशं ब्रह्मेत्यर्थः । तस्य ब्रह्मणो यन्नाम प्रणवरूपं गुह्यं सर्ववेदेषु गोप्यमस्ति । तथा च कठैराम्नातम्—"सर्वे वेदा यत्पदमामनन्ति" इति प्रस्तुत्य "तत्ते पदं संग्रहेण ब्रवीम्योमित्येतत्" इति । तेन प्रणवरूपेणोपांशुना ध्यानकाले शनैरुच्चार्यमाणेनामृतत्वमुत्पत्तिविनाशरहितं ब्रह्मतत्त्वं समानट्सम्यगानशे प्राप्नोतीत्यर्थः । तच्च प्रणवाख्यं नाम देवानां जिह्वा देवैर्ध्यानपरैर्निरन्तरमुच्चार्यमाणत्वेन जिह्वेव सर्वदा मुखमध्ये वर्तते । किंचेदं प्रणवरूपं नामामृतस्य विनाशरहितस्य मोक्षस्य नाभी रथचक्रस्य नाभिरिवाऽऽश्रयभूतम् । अनेन हि मुक्तिरूपं फलं प्राप्यते । अत एव कठैराम्नातम्—"एतदेवाक्षरं ज्ञात्वा यो यदिच्छति तस्य तत्" इति । एतस्यामृचि प्रणवस्य मोक्षसाधनत्वमुक्तम् ।

षोडशीमृचमाह—

वयं नाम प्रब्रवामा घृतेनास्मिन्यज्ञे धारयामा नमोभिः ।
उप ब्रह्मा शृणवच्छस्यमानं चतुःशृङ्गोऽवमीद्गौर एतत्, इति ॥

वयं ज्ञानार्थिनः पुरुषा अस्मिञ्ज्ञानयज्ञे घृतेन दीप्तेन स्वप्रकाशेन ब्रह्मणा निमित्तभूतेन प्रणवरूपं नाम प्रब्रवाम सर्वदा ध्यायन्त उच्चारयाम । ततो नमोभिर्नमस्कारैर्युक्ता वयं चित्ते ब्रह्मतत्त्वं सर्वदा धारयाम । ज्ञानस्य यज्ञत्वं भगवतोक्तम्—"स्वाध्यायज्ञानयज्ञाश्च यतयः संशितव्रताः" इति । शस्यमानमस्माभिः प्रणवेन स्तूयमानमुपशृणवत्पार्श्ववर्तिभिस्तत्त्ववेदिभिः स्तूयमानमेतद्ब्रह्मतत्त्वं चतुःशृङ्गोऽकारोकारमकारनादरूपशृङ्गचतुष्टयोपेतो गौरः श्वेतः प्रणवाख्य ऋषभोऽवमीद्वान्तवान् ब्रह्मतत्त्वं प्रत्यपादयदित्यर्थः । अकारादीनां प्रणवमात्राणां शृङ्गत्वमुत्तरतापनीये श्रुतम्—"शृङ्गेष्वशृङ्गं संयोजय" इति । निष्कामैरनुष्ठेयत्वेन निर्मलत्वात्प्रणवस्य

१ ग. °ममम्° । २ ख. °र्मिस° ।

गौरत्वम् । वृषभरूपत्वं च संहितोपनिषद्याम्नातम्—" यश्छन्दसामृषभो विश्वरूपः " इति । एवमनेन प्रतिपादनमुपलक्ष्यते ।

सप्तदशीमृचमाह—

चत्वारि शृङ्गा त्रयो अस्य पादा द्वे शीर्षे सप्त हस्तासो अस्य ।
त्रिधा बद्धो वृषभो रोरवीति महो देवो मर्त्याꣳ आविवेश, इति ॥

शृङ्गा प्रणवस्य यान्यकारादीनि शृङ्गाणि तानि चत्वारि । अस्य प्रणवप्रतिपाद्यत्वेन प्रणवरूपस्य ब्रह्मणस्त्रयः पादाः, पद्यते गम्यते ब्रह्मतत्त्वमेभिरिति पादाः । अध्यात्मं विश्वतैजसप्राज्ञाः । अधिदैवं[2] विराड्ढिरण्यगर्भाव्याकृतानि । द्वे शीर्षे उत्तमाङ्गस्थानीये चिदचिद्रूपे द्वे शक्ती । तथैवास्य ब्रह्मणो भूरादयः सप्त लोका हस्तासो हस्तस्थानीयाः । त्रिधा बद्धोऽकारोकारमकारेषु विश्वतैजसप्राज्ञैर्विराड्ढिरण्यगर्भाव्याकृतैश्च[3] त्रिप्रकारेण[4] संबद्धो वृषभः प्रणवो महस्तेजोरूपं ब्रह्मतत्त्वं रोरवीति, अतिशयेन प्रतिपादयति । तदेव प्रतिपाद्यं स्पष्टी क्रियते—देवः परमेश्वरो मर्त्यान्मनुष्यदेहानाविवेश सर्वतः प्रविष्टः "स एष इह प्रविष्ट आ नखाग्रेभ्यः " इति श्रुत्यन्तरात् ।

अष्टादशीमृचमाह—

त्रिधा हितं पणिभिर्गुह्यमानं गवि देवासो घृतमन्वविन्दन् ।
इन्द्र एकꣳ सूर्य एकं जजान वेनादेकꣳ स्वधया निष्टतक्षुः, इति ॥

त्रिधा हितं शरीरे विश्वतैजसप्राज्ञाख्येन त्रिप्रकारेण ब्रह्माण्डे विराड्ढिरण्यगर्भाव्याकृताख्येन च त्रिः( त्रि )प्रकारेणावस्थितं घृतं दीप्तं स्वप्रकाशं ब्रह्मतत्त्वं देवासो देववत्सात्त्विका अन्तर्मुखाः पुरुषा गवि वाचि तत्त्वमस्यादिवेदरूपायामन्वविन्दन्ननुक्रमेण लब्धवन्तः । कीदृशं घृतम् । पणिभिर्गुह्यमानम् । पण व्यवहारे स्तुतौ चेति धातुः । पणिभिः स्तोतृभिरुपदेष्टृभिराचार्यैः परमरहस्यत्वेन गोप्यमानम् । त्रिधा हितमित्येतदेव विविच्यते । इन्द्रः परमैश्वर्ययुक्तो विराट्पुरुष एकं जागरणरूपं जजानोत्पादितवान् । सूर्यशब्दस्तेजस्वित्वेन हिरण्यगर्भमुपलक्षयति । स च हिरण्यगर्भ एकं स्वप्नरूपं जजान । वेने(वे?)ति धातुः कान्तिकर्मा । वेनात्सर्वदुःखराहित्येन कमनीयादव्याकृतादेकं सुषुप्तरूपं निष्पन्नमिति शेषः । स्वस्मिन्नेव धीयतेऽवस्थाप्यत इत्याश्रयान्तररहिता ब्रह्मरूपा चित्स्वधाशब्देनोच्यते "स भगवः कस्मिन्प्र-

१ ख. °ति । [illegible] । २ ख. ङ. °दैवतं वि° । ३ ग. °श्च त्रिःप्र° । ४ ङ. त्रिभिः प्र° ।

तिष्ठित इति स्वे महिम्नि " इति श्रुत्यन्तरात् । तथा स्वधया अत्यन्तपोषया मित्रा पूर्वोक्ता इन्द्रसूर्यवेना निष्टतक्षुर्जागरणादिकं निष्पादितवन्तः । एताभ्यां द्वाभ्यामृग्भ्यां प्रणवतत्प्रतिपाद्यार्थौ प्रपञ्चितौ ।

*एकोनविंशीमृचमाह—*

**यो देवानां प्रथमं पुरस्ताद्विश्वाधिको रुद्रो महर्षिः ।**
**हिरण्यगर्भं पश्यत जायमानꣳ स नो देवः शुभया स्मृत्या संयुनक्तु,** इति ॥

**यो** देवो **हिरण्यगर्भं पश्यत** साक्षात्करोति । कीदृशं हिरण्यगर्भम् । **देवानां प्रथम**मग्नीन्द्रादीनां मध्य आदिभूतम् । **पुरस्ताज्जायमान**मग्नीन्द्राद्युत्पत्तेः पूर्वमेवोत्पद्यमानम् । अनेन प्राथम्यं स्पष्टीकृतम् । कीदृशो देवः । **विश्वाधिको** विश्वस्य जगतः कारणत्वेन तस्मादधिकः । **रुद्रो** रुद्वैदिकः शब्दस्तं द्रवति प्राप्नोति । वेदप्रतिपाद्य इत्यर्थः । **महर्षि**र्ऋषीणामतीन्द्रियद्रष्टृणां मध्ये महान् । " यः सर्वज्ञः सर्ववित् " इत्यादिश्रुतिप्रतिपाद्य इत्यर्थः । **स** देवस्तादृशः परमेश्वरो **नो**ऽस्मा**ञ्छुभया स्मृत्या** सर्वसंसारनिवर्तकत्वेन शोभनया ब्रह्मतत्त्वानुस्मृत्या **संयुनक्तु** संयुक्तान्करोतु । सोऽयं मन्त्रो ब्रह्मविद्यालब्धये जपितव्य इति मन्त्रलिङ्गादवगम्यते ।

विंशीमृचमाह—

**यस्मात्परं नापरमस्ति किंचिद्यस्मान्नाणीयो न ज्यायोऽस्ति कश्चित् ।**
**वृक्ष इव स्तब्धो दिवि तिष्ठत्येकस्तेनेदं पूर्णं पुरुषेण सर्वम्,** इति ॥

यदुक्तं शुभया स्मृत्या संयुनक्त्विति तत्र स्मरणीयं तत्त्वमत्र निर्दिश्यते—यस्माद्ब्रह्मतत्त्वात्परमुत्कृष्टमपरं निकृष्टं वा वस्तु **किंचिदपि नास्ति** । यस्माद्ब्रह्मतत्त्वादणीयोऽत्यल्पं वस्तु **नास्ति** । ज्यायोऽधिकमपि कश्चित्किंचिदपि वस्तु नास्ति । परापरशब्दाभ्यां गुणोत्कर्षनिकर्षौ विवक्षितौ । ज्यायोणीयःशब्दाभ्यां परिमाणोत्कर्षापकर्षौ । सर्वप्रकारोत्कर्षापकर्षनिषेधेनाद्वितीयत्वं सिध्यति । यथा लोके वृक्षो गमनागमनरहित एकत्रैव स्तब्धोऽवतिष्ठते तद्वदयमद्वितीय **एकः** परमेश्वरः स्तब्धो निर्विकारो **दिवि** द्योतनात्मके स्वप्रकाशस्वरूपे **तिष्ठति** । **तेन पुरुषेण** पूर्णेन चिदेकरसेन परमात्मना **सर्वमिदं** जगत्**पूर्णम्** । जगदाकारो नास्ति ब्रह्मतत्त्वमेवावस्थितमित्यर्थः ।

एकविंशीमृचमाह—

**न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः ।**

परेण नाकं निहितं गुहायां विभ्राजते यद्यतयो विशन्ति, इति ॥

यथोक्तब्रह्मतत्त्वानुस्मरणस्यान्तरङ्गं सर्वत्यागरूपं साधनमत्रोच्यते । अग्निहोत्रादिकं सहस्रसंवत्सरसत्रान्तं यत्कर्म तेन कर्मणा तदमृतत्वं न लभ्यते । "प्रजया पितृभ्यः" इति श्रुतेः पितृविषयादृणाद्विमोचनहेतुर्या पुत्रादिरूपा प्रजा तयाऽप्यमृतत्वं न लभ्यते । "दाने सर्वं प्रतिष्ठितं तस्माद्दानं परमं वदन्ति" इति श्रुतेर्धनदानस्य बहुविधफलसाधनत्वावगमात्तस्य दानस्य निष्पादकं यद्धनमस्ति तेन धनेनाप्यमृतत्वं न लभ्यते । किं तर्हि कर्मप्रजादीनां सर्वेषां लौकिकवैदिकव्यापाराणां त्यागेनैके केचिदेवान्तर्मुखा अमृतत्वमानशुः प्राप्नुवन्ति । यदमृतत्वं यतय इन्द्रियनियमनशीला विशन्ति प्राप्नुवन्ति तदमृतत्वं नाकं परेण स्वर्गादप्युत्कृष्टं सद्गुहायां स्वकीयबुद्धावेकाग्रायां निहितमवस्थितं सद्विभ्राजते विशेषेण दीप्यते । अन्तर्मुखैरनुभूयत इत्यर्थः ।

द्वाविंशीमृचमाह—

वेदान्तविज्ञानसुनिश्चितार्थाः संन्यासयोगाद्यतयः शुद्धसत्त्वाः ।
ते ब्रह्मलोके तु परान्तकाले परामृतात्परिमुच्यन्ति सर्वे, इति ॥

पूर्वस्यामृचि त्यागस्य मोक्षसाधनत्वमुक्तम् । अन्यत्र—"तरति शोकमात्मवित्" "ज्ञानादेव तु कैवल्यं प्राप्यते येन मुच्यते" इत्यादिश्रुतिस्मृतिषु ज्ञानस्यैव मोक्षहेतुत्वमुच्यते । अतोऽस्यामृचि विरोधपरिहाराय ज्ञानसंन्यासयोर्मोक्षे पृथगुपयोग उच्यते । वेदान्ता उपनिषद्वाक्यानि तैरुत्पन्नं सर्वसंसारनिवर्तकत्वेन विशिष्टं ज्ञानं यदस्ति तेन निश्चितो जीवब्रह्मैक्यलक्षणोऽर्थो यैः पुरुषैस्ते वेदान्तविज्ञानसुनिश्चितार्थाः । संन्यासयोगात्संन्यासः पूर्वोक्तः प्रजादित्यागस्तत्पूर्वको योगः, प्रमाणविपर्ययविकल्पनिद्रास्मृतिरूपाणां पञ्चानां चित्तवृत्तीनां निरोधो योगः, "योगश्चित्तवृत्तिनिरोधः" इति पतञ्जलिना सूत्रितत्वात् । तस्माद्योगात् । शुद्धसत्त्वा विषयभोगव्यावृत्तचित्ताः । अत एव यतयो नियमनशीलाः । एतेन ज्ञानं तत्त्वप्रकाशनेनाविद्यानिवर्तकं त्यागस्तु विषयभोगनिवृत्तिद्वारा चित्तशुद्धिहेतुरिति पृथगुपयोग उक्तो भवति । ब्रह्मणो लोको दर्शनं साक्षात्कारः, तस्मिन्नुत्पन्ने सति संसारिविलक्षणास्ते पुरुषाः । वैलक्षण्यद्योतनार्थस्तुशब्दः । तादृशाः पुरुषाः सर्वे परिमुच्यन्ति । ज्ञानिषु देवमनुष्यत्वादिकृत उत्तमाधमभावोऽप्रयोजक इति विवक्षया सर्व इत्युक्तम् । कदा मुच्यन्त इत्याशङ्क्य परान्तकाल इत्युक्तम् । सत्यज्ञाने यो देहपातावसरः सोऽयमपरान्तकालः । पुनर्देहस्य

---

१ झ. °ब्रह्मैतद्य° । २ ख. °माद्दान° । ३ ग. °जाधनादी° । ४ ख झ. °न्यासः । ५ ग. तेन । ६ झ. °च्यन्ते । आँ° । ७ ग. °मानुत्तम° ।

विद्यमानत्वात् । नष्टे त्वज्ञाने यो देहपातावसरः सोऽयं परान्तकालः । पुनर्देहग्रहण-रहितत्वात् । तस्मिन्परान्तकाले संसारबन्धान्मुच्यन्ते । नन्वज्ञानिनोऽपि प्रलयकाले स्थूलसूक्ष्मशरीरद्वयलक्षणाद्बन्धान्मुच्यन्त एवेत्याशङ्क्य परामृतादित्युक्तम् । जगत्कारण-त्वेनोत्कृष्टं परम् । तत्त्वज्ञानमन्तरेण विनाशरहितत्वादमृतं तादृशात्परामृतादव्याकृतादज्ञानिनः प्रलयकालेऽपि न मुच्यन्ते । ज्ञानिनस्तु देहपातावसर एव तादृशादव्याकृतादपि मुच्यन्त इति विशेषः ।

त्रयोविंशीमृचमाह—

**दहं विपापं वरवेश्मभूतं यत्पुण्डरीकं पुरमध्यसꣳस्थम् ।**
**तत्रापि दहे गगनं विशोकं तस्मिन्यदन्तस्तदुपासितव्यम्,** इति ॥

तत्त्वं ज्ञातुमसमर्थस्यात्रोपासनमुच्यते । **यदेतत्पुण्डरीकमष्टदलं** हृदयकमलमस्ति । कीदृशम् । **दहमल्पमङ्गुष्ठमात्रपरिमितत्वात् । विपापं** चित्तैकाग्र्यस्थानत्वेन पापरहितम् । **वरवेश्मभूतं** वरस्य श्रेष्ठस्य परमात्मन उपलब्धिस्थानत्वेनोपासितस्थानत्वेन च गृहरूपम् । **पुरमध्यसंस्थं** हस्तपादादिभिः सर्वैरवयवैः पूर्यत इति पुरं तस्य मध्ये कुसुमरस इवान्तराऽवस्थितम् । **तत्रापि** तस्मिन्नपि पुण्डरीके **दहे**ऽल्पप्रदेशे **गगन**माकाशवदमूर्तं ब्रह्मरूपमस्ति । ब्रह्मणः सर्वगतत्वेऽपि घटाकाशवत्पुण्डरीकस्थानापेक्षयाऽल्पत्वमुपचर्यते । तथा च **श्रुत्यन्तरम्**—" अथ यदिदमस्मिन्ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशः " इति । दहराकाशस्य च ब्रह्मत्वं **दहराधिकरणे** निर्णीतम् । अत एव **विशोकं** शोकरहितं गगनशब्दवाच्यं ब्रह्म । एवं सति **तस्मिन्**पुण्डरीकेऽन्तर्मध्ये यद्ब्रह्मतत्त्वमस्ति **तदुपासितव्यं** विजातीयप्रत्ययरहितेन सजातीयप्रत्ययप्रवाहेण चिन्तनीयम् ।

चतुर्विंशीमृचमाह—

**यो वेदादौ स्वरः प्रोक्तो वेदान्ते च प्रतिष्ठितः ।**
**तस्य प्रकृतिलीनस्य यः परः स महेश्वरः,** इति ॥

**इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके दशमप्रपाठके नारायणोपनिषदि दशमोऽनुवाकः ॥ १० ॥**

वेदानाम् " अग्निमीळे पुरोहितम् " " इषे त्वोर्जे त्वा " इत्यादीनामादिरुपक्रमः, तस्मिन्नुपक्रमे **यः स्वरो** यो वर्णः प्रणवरूपोऽस्ति स च स्वरः प्रणवो वेदान्ते चोपनिष-

१ ख. 'रल' । २ ग. झ. °मृतत्वम् ता । ३ ग. दहरं । ४ ग. विपाप्म ५ ग. शोक-[illegible] । ९ झ. विवेचनीयम् ।

ओमित्येतदक्षरमिदं सर्वमित्यादिकायां प्रतिष्ठितः प्रतिपादितः, स च स्वरः प्रणवो ध्यानकाले प्रकृतावव्याकृते जगत्कारणे लीनो भवति । अकारोकारमकारेषु विराड्हिरण्यगर्भाव्याकृतानि ध्यात्वा विराड्रूपमकारमुकारे प्रविलाप्य तं चोकारं हिरण्यगर्भरूपं मूलप्रकृतिरूपे मकारे प्रविलापयेत् । तस्य च प्रकृतौ लीनस्य प्रणवस्य यः परश्चतुर्थमात्रारूपेण नादे ध्यातव्य उत्कृष्टोऽस्ति, सोऽयं महेश्वरो विज्ञेयः । अनेन मन्त्रेण पूर्वोक्तं गगनशब्दवाच्यं वस्तु प्रपञ्चितम् ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्ये दशमप्रपाठके नारायणीयापरनामधेययुक्तायां याज्ञिक्यामुपनिषदि दशमोऽनुवाकः ॥ १० ॥

अथैकादशोऽनुवाकः ।

पूर्वानुवाकान्ते हृदयपुण्डरीक उपास्यं यन्महेश्वरस्वरूपं निर्दिष्टं तस्मिन्नुपास्यगुणविशेषा अस्मिन्ननुवाके विशेषेण प्रदर्श्यन्ते । तत्र प्रथमामृचमाह—

सहस्रशीर्षं देवं विश्वाक्षं विश्वशंभुवम् ।

विश्वं नारायणं देवमक्षरं परमं प्रभुम्, इति ॥

देवं पूर्वोक्तं महेश्वरं ध्यायेदिति शेषः । कीदृशं देवम् । सहस्रशीर्षं सहस्रशब्देनापरिमितत्वमुपलक्ष्यते । अनन्तशिरस्कमित्यर्थः । सर्वजगदात्मकं विराड्रूपं महेश्वरस्य देहः । तथा सत्यस्मदादिशिरांसि सर्वाण्यपि तदीयान्येवेत्यनन्तशिरस्त्वम्[3] । अनेनैव न्यायेन विश्वानि सर्वाण्यस्मदीयान्यक्षाणीन्द्रियाणि तदीयान्येवेति विश्वाक्षत्वम् । विश्वस्य सर्वस्य जगतः शं सुखमस्माद्भवतीति विश्वशंभुः(भूः), तादृशम् । उक्ते सहस्रशीर्षे विराड्रूपे देहेऽवस्थितस्य महेश्वरस्य निजस्वरूपं द्वितीयार्धेनोच्यते । विश्वं जगदात्मकम् । आरोपितस्य जगतोऽधिष्ठानव्यतिरेकेण वास्तवरूपाभावात् । नारायणशब्दस्य निर्वचनं पुराणेषु दर्शितम्—

"आपो नारा इति प्रोक्ता आपो वै नरसूनवः ।

अयनं तस्य ताः प्रोक्तास्तेन नारायणः स्मृतः" इति ।

जगत्कारणेषु पञ्चभूतेष्ववस्थितं इत्यर्थः[6] । यद्वा प्रकृतेः प(तिर्न)रः । तस्माज्जातानि

१ ग. °षाष्ठव° । २ ख. विस्तरेण । ३ ख. °रस्कत्वम् । ४ ग. °चनम् । ५ ग. ख. °त मित्य° । ६ ख. °र्थः । त° ।

यानि तानि नारशब्देनोच्यन्ते । तान्येतान्ययनं स्थानं यस्य स नारायणः । स एव इन्द्रमित्रादिरूपेणावस्थितत्वाद्देव इत्युच्यते । तथा च शाखान्तरे मन्त्र आम्नातः—"इन्द्रं मित्रं वरुणमग्निमाहुः" इति । न क्षरतीत्यक्षरः[1], अक्षुत[2] इति वा तस्याक्षरत्वम् । कारणत्वेनोत्कर्षात्परमत्वम् । नियन्तुं समर्थत्वात्प्रभुत्वम् ।

द्वितीयामृचमाह—

विश्वतः परमं[3] नित्यं विश्वं नारायणꣳ हरिम् ।
विश्वमेवेदं पुरुषस्तद्विश्वमुपजीवति, इति ॥

विश्वतो जगतो जडवर्गात्परममुत्कृष्टम् । ऋग्वेदेन पुनरुक्तिपरिहारो द्रष्टव्यः[4] । यद्वा स्तुतिरूपत्वादनेन रूपेण ध्यातव्यत्वाच्च नास्ति पुनरुक्तिदोषः । विनाशरहितत्वान्नित्यत्वम् । सर्वात्मकत्वाद्विश्वत्वम् । नारायणत्वं पूर्वमेवोक्तम् । पापस्याज्ञानस्य च हरणाद्धरित्वम् । यदिदं विश्वमिदानीमज्ञानदृष्ट्या[5] प्रदृश्यते तत्सर्वं वस्तुतत्त्वदृष्ट्या पुरुषः परमात्मैव । स च परमात्मा तद्विश्वमुपजीवति स्वस्य व्यवहारार्थमाश्रयति ।

तृतीयामृचमाह—

पतिं[6] विश्वस्याऽऽत्मेश्वरꣳ[7] शाश्वतꣳ[8] शिवमच्युतम् ।
नारायणं महाज्ञेयं विश्वात्मानं परायणम्, इति ॥

विश्वस्य जगतः पालकत्वात्पतिः । आत्मनां जीवानां नियामकत्वादीश्वरः । निरन्तरं वर्तमानत्वाच्छाश्वतः । परममङ्गलत्वाच्छिवः[9] । न च्यवत इत्यच्युतः[10] । नारायणत्वं पूर्वमुक्तम् । ज्ञेयेषु तत्त्वेषु मध्ये प्रौढत्वान्महाज्ञेय[त्व]म् । जगदुपादानत्वेन तदभेदाद्विश्वात्मत्वम् । उत्कृष्टाधारत्वात्[11] परायणत्वम् । सर्वमप्यारोपितं यदधिष्ठाने वर्तते ।

चतुर्थीमृचमाह—

*नारायणः[12] परं ब्रह्म तत्त्वं नारायणः परः ।
नारायणः[13] परो ज्योतिरात्मा नारायणः परः, इति ॥

* ग. पुस्तके पूर्वार्धोत्तरार्धव्यत्यासो वर्तते—"नारायणः परो ध्याता ध्यानं नारायणः परः" इत्यधिकं च ।

१ ख. °त्यक्षर । २ झ. °रः, न च्युत । ३ ख. झ. °रमं नि° । ४ ग. °श्यः । स्तु° । ५ ख. °ज्ञानादृष्ट्य° । ६ ग. झ. °स्पतिम् । आ° । ७ ग. °श्वरं नियन्तारम् । नि° । ८ ग. झ. °श्वतम् । प° । ९ ग. झ. °च्छिवत्वं । न । १० ग. °च्युतम् । ना । ११ ख. °रकत्वं पम° । १२ ख. °यणं प° । १३ ख. °यणप° ।

पुराणेषु नारायणशब्देन व्यवह्रियमाणो यः परमेश्वरः स एव परमुत्कृष्टं सत्यज्ञानानन्दादिवाक्यैः प्रतिपाद्यस्य ब्रह्मणस्तत्त्वम्। अतो नारायणः पर एवाऽऽत्मा न त्वपरो मूर्तिविशेषः। तथा परो ज्योतिर्यदेतदुत्कृष्टं ज्योतिश्छन्दोगैः—"परं ज्योतिरुपसंपद्य" इत्याम्नातं तदपि नारायण एव। तस्मान्नारायणः परमात्मा।

पञ्चमीमृचमाह—

यच्च किंचिज्जग*त्सर्वं दृश्यते श्रूयतेऽपि वा।
अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः, इति।

अस्मिन्वर्तमाने जगति यत्किंचित्समीपवर्ति वस्तुजातं दृश्यते। अपि वा दूरस्थं श्रूयते। तत्सर्वं वस्तुजातमयं नारायणोऽन्तर्बहिश्च व्याप्यावस्थितः। यथा कटकमुकुटाद्याभरणस्योपादानकारणं सुवर्णमन्तर्बहिर्व्याप्यावतिष्ठते तद्वत्।

षष्ठीमृचमाह—

अनन्तमव्ययं कविꣳ समुद्रेऽन्तं विश्वशंभुवम्।
पद्मकोशप्रतीकाशꣳ हृदयं चाप्यधोमुखम्, इति।

अत्र पूर्वार्धेन नारायणस्य वास्तवस्वरूपं संक्षिप्योपन्यस्यते। अनन्तं देशपरिच्छेदरहितम्। अव्ययं विनाशरहितम्। कविं चिद्रूपेण सर्वज्ञम्। समुद्रेऽतिबहुलत्वेन समुद्रसदृशे संसारेऽन्तमवसानरूपम्। यदा नारायणस्य स्वरूपं जानाति तदा संसारः क्षीयत इत्यर्थः। विश्वशंभुवं सर्वस्य संसारसुखस्योत्पत्तिकारणरूपम्। "एतस्यैवाऽऽनन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति" इति श्रुत्यन्तरात्। ईदृशं नारायणस्वरूपमुपासीतेति शेषः। उत्तरार्धेनोपासनस्थानमुच्यते—पद्मकोशप्रतीकाशं यथा लोकेऽष्टदलकमलस्य कोशो मध्यच्छिद्रं तत्सदृशं तच्च हृदयशब्दवाच्यम्। लौकिकं पद्ममूर्ध्वाभिमुखं हृदयपद्मं त्वधोमुखमिति विशेषः।

सप्तमीमृचमाह—

अधो निष्ट्या वितस्त्यान्ते नाभ्यामुपरि तिष्ठति।
+ हृदयं तद्विजानीयाद्विश्वस्याऽऽयतनं महत्, इति।

* जगत्यस्मिन्निति पाठो भाष्यानुरोधी, स च वर्तते क्वचिदिति ग. पुस्तकटिप्पणीतो ज्ञायते।
+ पदत्रयमनिश्चितस्वरकम्।

१ ख. °मावि°। २ ख. °वाक्यप्र°। ३ ख. °पमस्तीति शे°। ४ ख. ङ. °नमु°। ५ ङ. लोके शतद°। ६ ग. °[illegible]°। ७ ग. °ति। आलमाऽऽकलं भाति विश्व°।

निष्टिर्ग्रीवाबन्धः, तस्या अधस्ताद्वर्तते । तत्रापि नाभ्यामुपरि नाभिदेशस्योर्ध्वभागे वितस्त्यान्ते द्वादशाङ्गुलपरिमिता वितस्तिस्तस्यामतीतायामुपरि तिष्ठति । तदेतन्निष्टिनाभ्योर्मध्यदेशवर्ति कमलं हृदयमिति विजानीयात् । तच्च हृदयं विश्वस्य सर्वस्य जगतो महदायतनम् । मनस्तावद्धृदयपुण्डरीके वर्तते "चन्द्रमा मनो भूत्वा हृदयं प्राविशत्" इति श्रुत्यन्तरात् । तेन च मनसा स्वप्नवत्सर्वमिदं जगत्कल्पितम् । "मनोमूलमिदं द्वैतं यत्किंचित्सचराचरम्" इति संप्रदायविद्भिरुक्तत्वात् ।

अष्टमीमृचमाह—

संततꣳ शिलाभिस्तु लम्बत्याकोशसंनिभम् ।

तस्यान्ते सुषिरꣳ सूक्ष्मं तस्मिन्त्सर्वं प्रतिष्ठितम्, इति ।

आकोशः पद्मस्य मुकुलं तत्संनिभं तत्सदृशं हृदयकमलं लम्बति शरीरमध्येऽधोमुखत्वेनावलम्बते । तच्च शिराभिर्नाडीभिः संततं परितः सम्यग्व्याप्तम् । "शतं चैका च हृदयस्य नाड्यः" इति श्रुत्यन्तरात् । तस्य हृदयस्यान्ते समीपे सूक्ष्मं सुषिरं छिद्रं सुषुम्नानाडीनालं तिष्ठति तस्मिन्सुषिरे सर्वमिदं जगत्प्रतिष्ठितमाश्रितम् । तत्र मनसि प्रविष्टे सति सर्वजगदाधारस्य ब्रह्मणोऽभिव्यज्यमानत्वात् ।

नवमीमृचमाह—

तस्य मध्ये महानग्निर्विश्वार्चिर्विश्वतोमुखः ।

सोऽग्रभुग्विभजन्तिष्ठन्नाहारमजरः कविः*, इति ।

तस्य सुषुम्नानालस्य मध्ये महान्प्रौढोऽग्निर्वर्तते । स च विश्वार्चिर्बहुज्वालोपेतः । अत एव ज्वालाविशेषैः परितोऽवस्थितासु सर्वासु नाडीषु संचरणाद्विश्वतोमुखो बहुविधेश्वररूपः । सोऽग्निरग्रभुक्, स्वस्य पुरतः प्राप्तमन्नं भुङ्क्त इत्यग्रभुक् स च भुक्तमाहारं शरीरे सर्वावयवेषु विभजन्प्रसारयंस्तिष्ठन्, अवस्थित इत्यर्थः ।

तथा च भगवतोक्तम्—

"अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः ।

प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधम्" इति ॥

तस्माद्भुक्तमन्नमसौ जरयति न तु स्वयं जीर्यत इत्यजरः । अत एव कविरभिज्ञः कुशल इत्यर्थः ।

---

* एतदग्रे ग. पुस्तके मूले "तिर्यगूर्ध्वमधःशायी रश्मयस्तस्य संतताः" इत्यधिकम् ।

---

१ ग. °र्ध्वदेशभा° । २ ग. °तस्त्यां द्वा° । ३ ख. °स्यामुप° । ४ ग. शिराभि° । ५ ङ. °कोशः । ६ ङ. °मलनाल° । ७ ग. °सुम्नाना° । ८ ग. °सुम्नाना° । ९ ख. °विश्वे श्रि°।

दशमीमृचमाह—

संतापयति स्वं देहमापादतलमस्तकम् ।
तस्य मध्ये वह्निशिखा अणीयोर्ध्वा व्यवस्थिता, इति ।

पादतलमारभ्य मस्तकपर्यन्तं कृत्स्नमपि स्वकीयं देहं सर्वदा संतापयति । सोऽयं शरीरगतः संतापोऽग्निसद्भावे लिङ्गम् । तस्य ज्वालाविशेषैः कृत्स्नदेहव्यापिनोऽग्नेर्मध्ये वह्निशिखा काचिज्ज्वालाऽणीयाऽत्यन्तसूक्ष्मोर्ध्वा सुषुम्नानाडीनालेनोर्ध्वं ब्रह्मरन्ध्रपर्यन्तं प्रसृत्य व्यवस्थिता विशेषेणावस्थिता ।

एकादशीमृचमाह—

नीलतोयदमध्यस्था विद्युल्लेखेव भास्वरा ।
नीवारशूकवत्तन्वी पीता भास्वत्यणूपमा, इति ।

तोयमुदकं ददातीति तोयदो मेघः, स च वर्षितुं जलपूर्णत्वान्नीलवर्णः । तादृशस्य मेघस्य मध्ये स्थिता विद्युल्लेखेव । सेयं पूर्वोक्ताऽग्निशिखा भास्वरा प्रभावती नीवारबीजस्य शूकं दीर्घं पुच्छं यथा तनु भवति तद्वदियं शिखा तन्वी बाह्यवह्निशिखेव पीता भास्वती पीतवर्णा दीप्तियुक्ता भवेत् । सा चाणूपमा लौकिकानां तनूनां सूक्ष्मवस्तूनामुपमा भवितुं योग्या ।

द्वादशीमृचमाह—

तस्याः शिखाया मध्ये परमात्मा व्यवस्थितः ।
स ब्रह्मा स शिवः सेन्द्रः सोऽक्षरः परमः स्वराट्, इति ।

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके दशमप्रपाठके नारायणोपनिषद्येकादशोऽनुवाकः ॥ ११ ॥

तस्याः पूर्वोक्ताया वह्निशिखाया मध्ये जगत्कारणभूतः परमात्मा विशेषेणावस्थितः । तस्योपासनार्थमल्पस्थानत्वेऽपि न स्वयमल्पः, किंतु सर्वदेवात्मकः । ब्रह्मा चतुर्मुखः, शिवो गौरीपतिः, इन्द्रः स्वर्गाधिपतिः, अक्षरो जगद्धेतुर्मायाविशिष्टोऽन्तर्यामीश्वरः " क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते " इति भगवतोक्तत्वात् । परमो मायारहितः शुद्धश्चिद्रूपः । अत एव पारतन्त्र्याभावात्स्वराट्स्वयमेव राजा ।

---

१ झ. °स्तकः । त° । २ ख. °द्भावो लि° । ३ ख. °मध्येऽपि व° । ४ ग. °षुम्नाना° । ५ ग. °द्विज्वालेव । ६ ग. °किकीनां । ७ ख. झ. ब्रह्म । ८ ग. झ. °वः स हरिः से° । ९ झ. इचिद्रू° ।

सहस्रशीर्षमित्यादिवाक्यप्रतिपाद्यं तत्त्वं पद्मकोशप्रतीकाशमित्यादिवाक्योक्तप्रकारेण ध्यायेदिति तात्पर्यार्थः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्ये दशमप्रपाठके नारायणीयापरनामधेययुक्तायां याज्ञिक्यामुपनिषद्येकादशोऽनुवाकः ॥ ११ ॥

====

अथ द्वादशोऽनुवाकः ।

---

पूर्वोक्तप्रकारेणोपासीनस्य पुरुषस्योपास्यदेवतानमस्कारार्थमेकामृचमाह—

**ऋतꣳ सत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गलम् ।**

**ऊर्ध्वरेतं विरूपाक्षं विश्वरूपाय वै नमः, इति ।**

**इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके दशमप्रपाठके नारायणोपनिषदि द्वादशोऽनुवाकः ॥ १२ ॥**

यदेतत्परं ब्रह्म तत्सत्यमबाध्यम् । सत्यं च द्विविधम्, व्यावहारिकं पारमार्थिकं च । हिरण्यगर्भादिकं रूपं व्यावहारिकं सत्यं तन्निवारणेन पारमार्थिकसत्यं प्रदर्शयितुमृतं सत्यमिति विशेष्यते । अत्यन्तसत्यमित्यर्थः । तादृशं ब्रह्म स्वभक्तानुग्रहायोमामहेश्वरात्मकं पुरुषरूपं भवति । तत्र दक्षिणे महेश्वरभागे कृष्णवर्णः । उमाभागे वामे पिङ्गलवर्णः । स च योगेन स्वकीयं रेतो ब्रह्मरन्ध्रे धृत्वोर्ध्वरेता भवति । त्रिनेत्रत्वाद्विरूपाक्षः । तादृशं परमेश्वरमनुस्मृत्येति शेषः । **विश्वरूपाय** जगत्कारणत्वेन सर्वजगदात्मकाय विरूपाक्षाय पुरुषायैव नमस्कारोऽस्तु ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्ये दशमप्रपाठके नारायणीयापरनामधेययुक्तायां याज्ञिक्यामुपनिषदि द्वादशोऽनुवाकः ॥ १२ ॥

====

अथ त्रयोदशोऽनुवाकः ।

---

इदानीमादित्यमण्डले परब्रह्मोपासनमाह—

**आदित्यो वा एष एतन्मण्डलं तपति तत्र ता ऋचस्तदृचा**

---

१ ग. झ. वै नमो न° । २ ख झ. सत्यस्त्वं च । ३ ख. झ. °र्थिकं सत्यस्त्वं प्र° । ४ ...

मण्डलᳬ स ऋचां लोकोऽथ य एष एतस्मिन्मण्डलेऽर्चिर्दीप्यते तानि सामानि स साम्नां लोकोऽथ य एष एतस्मिन्मण्डलेऽर्चिषि पुरुषस्तानि यजूᳬषि स यजुषा मण्डलᳬ स यजुषां लोकः सैषा त्रय्येव विद्या तपति य एषोऽन्तरादित्ये हिरण्मयः पुरुषः, इति ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके दशमप्रपाठके नारायणोपनिषदि त्रयोदशोऽनुवाकः ॥ १३ ॥

नारायणशब्दवाच्यो यः परमेश्वरः पूर्वानुवाकेऽभिहितः स एष आदित्यो वै सोपाधिकः सन्नादित्यरूपेणैव वर्तते । तस्य चाऽऽदित्यस्यैतदस्माभिर्दृश्यमानं मण्डलं वर्तुलाकारमुष्णं तेजस्तपति संतापं करोति । तत्र तस्मिन्मण्डले ता अध्यापकप्रसिद्धा "अग्निमीळे" इत्यादिका ऋचो वर्तन्ते । तत्तस्मात्कारणान्मण्डलमृचा निष्पादितमिति शेषः । स मण्डलभाग ऋग्भिर्निष्पादित ऋचामृगभिमानिदेवतानां लोको निवासस्थानम् । एवमृगात्मकत्वं मण्डलस्य ध्यात्वाऽथानन्तरं सामात्मकत्वं तत्र ध्यातव्यम् । कथमिति तदुच्यते—एतस्मिन्मण्डले य एष यदेतदर्चिर्दीप्यते भास्वरं तेजः प्रकाशते तान्यर्चिःस्वरूपाणि बृहद्रथंतरादिसामानीति ध्यायेत् । सोऽर्चिर्भागः साम्नां सामाभिमानिदेवतानां लोको निवासस्थानम् । अथ सामध्यानानन्तरं यजुरात्मकं ध्यातव्यम् । कथमिति तदुच्यते—य एष शास्त्रप्रसिद्ध एतस्मिन्दृश्यमाने मण्डले तदीयेऽर्चिषि[3] च पुरुषो देवतात्मा वर्तते । तानि देवतास्वरूपाणि यजूंषि "इषे त्वोर्जे त्वा" इत्यादीनि ध्यायेत् । स यजुरात्मकः पुरुषो यजुषा निष्पादितं मण्डलमिति ध्यायेत् । स यजुर्भागो यजुषां यजुरभिमानिदेवतानां लोको निवासस्थानम् । सैषा मण्डलतदर्चिस्तत्रत्यपुरुषरूपा त्रय्येवर्ग्यजुःसामात्मिकैव विद्या तपति प्रकाशते । यः पुरुषोऽत्राभिहित एषोऽन्तरादित्य आदित्यमण्डलमध्ये हिरण्मयो वर्तते । हिरण्मयत्वं चं शाखान्तरे प्रपञ्चितम्—" अथ य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुर्हिरण्यकेश आप्रणखात्सर्व एव सुवर्णः" ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्ये दशमप्रपाठके नारायणीयापरनामधेययुक्तायां याज्ञिक्यामुपनिषदि त्रयोदशोऽनुवाकः ॥ १३ ॥

====

१ ङ. °रभूतं ते° । २ ग. ङ. °षः । म । ३ ग. °चि पु° । ४ ग. ङ. च श्रुत्यन्त° । ५ ख. प °णखा° ।

अथ चतुर्दशोऽनुवाकः ।

———

पूर्वोक्तस्यैवाऽऽदित्यपुरुषस्य सर्वात्मकत्वलक्षणमवशिष्टमुपास्यगुणं दर्शयति—

आदित्यो वै तेज ओजो बलं यशश्चक्षुः श्रोत्रमात्मा मनो मन्युर्मनुर्मृत्युः सत्यो मित्रो वायुराकाशः प्राणो लोकपालः कः किं कं तत्सत्यमन्नमायुरमृतो जीवो विश्वः कतमः स्वयंभूः[1] *प्रजापतिरिति संवत्सरोऽसावादित्यो य एष पुरुष एष भूतानामधिपतिः, इति ।

योऽयमादित्य उपास्यत्वेनोक्तः स एव तेजआद्यधिपत्यन्तसर्वजगदात्मकः । तेजो दीप्तिः । ओजो बलकारणम् । बलं शरीरशक्तिः । यशः कीर्तिः । चक्षुःश्रोत्रे बाह्येन्द्रिये । आत्मा देहः । मनोऽन्तःकरणम् । मन्युस्तद्धर्मः कोपः । मनुः स्वायंभुवादिः । मृत्युर्यमः । सत्यादयः सत्यवचनाद्यभिमानिनो देवताविशेषाः । कः प्रजापतिः । किमित्यनेन वाचा विशेषनिर्देशानर्हं वस्तुजातं विवक्षितम् । कं सुखम् । तच्छब्देन परोक्षं वस्तु विवक्षितम् । सत्यमनृतवर्जनम् । अन्नं व्रीहियवादिकम् । आयुः शतसंवत्सरादिकम् । अमृतो मरणरहितः । जीवश्चिदात्मा । स च विश्वः शरीरभेदेनानेकविधः । कतमोऽतिशयेन सुखस्वरूपः । स्वयंभूः कारणान्तरादनुत्पन्नः प्रजापतिः । प्रजापतिः प्रजापालको राजादिः । इतिशब्दः प्रदर्शनार्थः । इत्यादिकं सर्वमुदाहरणीयमित्यर्थः । तत्र संवत्सररूपस्य कालस्याऽऽदित्येन निष्पादितत्वात्संवत्सर आदित्यस्वरूपः । य एष सर्वात्मकः पुरुषः स एष भूतानां प्राणिनामधिपतिः स्वामी ।

उपास्यगुणानभिधाय फलं दर्शयति—

ब्रह्मणः सायुज्यꣳ सलोकतामाप्नोत्येतासामेव देवतानाꣳ सायुज्यꣳ सार्ष्टिताꣳ समानलोकतामाप्नोति य एवं वेद, इति ।

यः पुमानेवमुक्तप्रकारेण वेदोपास्ते स पुमान्सायुज्यादिफलमाप्नोति । द्विविधमुपासनं हिरण्यगर्भोपासनं तदवयवभूतदेवतोपासनं चेति । तत्र हिरण्यगर्भोपास्तौ भावनाधिक्ये सति ब्रह्मणो हिरण्यगर्भस्य सायुज्यं सहभावं तादात्म्यं प्राप्नोति ।

* पदषट्कमनिश्चितस्वरकम् ।

१ ख. 'अमम्' । २ ग. 'यंभु ब्रह्मैतदमृत एष पुरु' । ३ ख. 'ष आदित्ये पु' । ४ ग.

भावनामान्द्ये सलोकतां हिरण्यगर्भेण सहैकलोकनिवासं प्राप्नोति । देवतोपास्तावपि भावनाधिक्ये सत्येतासामेवेन्द्रादीनां[1] देवतानां सायुज्यं प्राप्नोति । भावनाया मध्यमत्वे ऽति सार्ष्टितां समानैश्वर्यतां प्राप्नोति । मान्द्ये तु समानलोकतां प्राप्नोति ।

उत्तरमन्त्रजपविवक्षयोपास्तिप्रकारमुपसंहरति—

इत्युपनिषत्, इति ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके दशमप्रपाठके नारायणोपनिषादि चतुर्दशोऽनुवाकः ॥ १४ ॥

इत्येवं पूर्वोक्तैरनुवाकैरुक्तोपनिषद्रहस्यभूता विद्या समाप्तेति शेषः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्ये दशमप्रपाठके नारायणीयापरनामधेययुक्तायां याज्ञिक्यामुपनिषदि चतुर्दशोऽनुवाकः ॥ १४ ॥

---

अथ पञ्चदशोऽनुवाकः

---

उपासनायामसमर्थस्याऽऽदित्यदेवताविषयं जप्यं मन्त्रमाह—

घृणिः सूर्य आदित्यो(त्यस्त[2])मर्चयन्ति *तपः
सत्यं मधु क्षरन्ति तद्ब्रह्म तदाप आपो ज्योती
रसोऽमृतं ब्रह्म भूर्भुवः सुवरोम्, इति ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके दशमप्रपाठके नारायणोपनिषादि पञ्चदशोऽनुवाकः ॥ १५ ॥

घृणिर्दीप्तिमान्सूर्य एतन्नामक आदित्योऽदितिदेवतायाः पुत्रः । एतादृशोऽहमस्मि । ईदृशमादित्यं फलार्थिनः सर्वेऽप्यर्चयन्ति । तथा तमादित्यमुद्दिश्य तपश्चरन्तीति शेषः । सत्यमनृतवर्जनम् । अनुतिष्ठन्तीति शेषः । मधु क्षरन्ति मधुरं क्षीरादिकं नैवेद्यरूपेण समर्पयन्ति । तदादित्यरूपं ब्रह्म वेदात्मकं परं ब्रह्म वा । तथा तदादित्यरूपमापः, आपो जलरूपं वृष्टिनिष्पादकत्वात् । तथा समुद्रादिगता या

---

* एतदादि तदाप इत्यन्तममिश्रितस्वरकम् ।

---

१ क्ष. °मेव दे° । २ ग. °त्यो न प्रभावात्यक्षरम् । मधु क्षरन्ति तद्ब्रह्म । सत्यं वै तद्ब्रह्मापो ।

आपो यश्चाग्न्यादिकं ज्योतिर्योऽपि मधुरादिरसो यश्च देवैः पातव्यममृतं यदपि ब्रह्म मन्त्रजातं ये च भूर्भुवः सुवस्त्रयो लोकास्तत्सर्वमोमादित्यरूपं भवतीत्यर्थः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्ये दशमप्रपाठके नारायणीयापरनामधेययुक्तायां याज्ञिक्यामुपनिषदि पञ्चदशोऽनुवाकः ॥ १५ ॥

अथ षोडशोऽनुवाकः ।

रुद्रदेवताकं मन्त्रमाह—

सर्वो॒ वै रु॒द्रस्तस्मै॑ रु॒द्राय॒ नमो॑ अस्तु । पुरु॑षो॒ वै रु॒द्रः सन्म॒हो नमो॒ नमः॑ । विश्वं॑ भू॒तं भुव॑नं चि॒त्रं ब॑हु॒धा जा॒तं जाय॑मानं॒ च यत् । सर्वो॒ ह्ये॑ष रु॒द्रस्तस्मै॑ रु॒द्राय॒ नमो॑ अस्तु, इति ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके दशमप्रपाठके नारायणोपनिषदि षोडशोऽनुवाकः ॥ १६ ॥

यो रुद्रः पार्वतीपतिः पुराणेषु प्रसिद्धः स एव सर्वो जीवरूपेण सर्वशरीरेषु प्रविष्टत्वात्तस्मै सर्वात्मकाय रुद्राय नमोऽस्तु । प्रकृतिपुरुषयोर्मध्ये जडात्मिकां प्रकृतिमपोह्य चिदात्मकः पुरुषो यो विद्यते स एव भक्तानुग्रहाय रुद्रमूर्तिरूपेणावभासते । तस्माद्धेतुतः स रुद्रः सन्महः “ सदेव सोम्येदमग्र आसीत् ” इत्यादिप्रतिपाद्यमबाधितं सद्रूपं तेजः । तादृशाय रुद्राय पुनः पुनर्नमस्कारोऽस्तु । यज्जडं विश्वमस्ति यच्च भूतं चेतनं प्राणिजातमस्ति, इत्थं चेतनाचेतनरूपेण विचित्रं यद्भुवनं जगत्तत्रापि यज्जगज्जातं पूर्वमेवोत्पन्नं यच्चेदानीं जायमानं स सर्वोऽपि प्रपञ्च एष रुद्रो हि तद्व्यतिरेकेण वास्तवस्य जगतो निरूपयितुमशक्यत्वात् । तादृशाय सर्वात्मकाय रुद्राय नमस्कारोऽस्तु ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्ये दशमप्रपाठके नारायणीयापरनामधेययुक्तायां याज्ञिक्यामुपनिषदि षोडशोऽनुवाकः ॥ १६ ॥

अथ सप्तदशोऽनुवाकः ।

रुद्रदेवताकं द्वितीयं मन्त्रमाह—

कद्रुद्राय प्रचेतसे मीढुष्टमाय तव्यसे । वोचेम शंतमं

**हृदे । सर्वो ह्येष रुद्रस्तस्मै रुद्राय नमो अस्तु , इति ।**

**इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके दशमप्रपाठके नारायणोपनिषदि सप्तदशोऽनुवाकः ॥ १७ ॥**

कत्थ श्लाघायामितिधातोरुत्पन्नः कच्छब्दः प्रशंसामाह । ततः कद्रुद्रः प्रशस्तो रुद्रः, तस्मै । प्रचेतसे प्रकृष्टज्ञानयुक्ताय मीढुष्टमाय मिह सेचन इति धातुः । अभीष्टानां कामानामतिशयेन सेक्त्रे, कामप्रदायेत्यर्थः । तव्यसेऽत्राऽऽदौ सकारस्य च्छान्दसो लोपः । स्तव्याय स्तोतुं योग्यायेत्यर्थः । हृदे हृदयवर्तित्वेन तद्रूपाय । शंतममतिशयेन सुखकरं स्तुतिरूपवाक्यं वोचेम कथयाम । सर्वो हीति पूर्ववत् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्ये दशमप्रपाठके नारायणीयापरनामधेययुक्तायां याज्ञिक्यामुपनिषदि सप्तदशोऽनुवाकः ॥ १७ ॥

=====

अथाष्टादशोऽनुवाकः ।

---

पुनरपि तद्देवताकं मन्त्रान्तरमाह—

**नमो *हिरण्यबाहवे हिरण्यपतयेऽम्बिकापतय उमापतये[१] नमो नमः, इति ।**

**इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके दशमप्रपाठके नारायणोपनिषद्यष्टादशोऽनुवाकः ॥ १८ ॥**

बाहुशब्दस्य सर्वावयवोपलक्षणत्वाद्धिरण्यबाहवे भक्तानुग्रहाय सुवर्णमयकृत्स्नशरीरयुक्ताय । हिरण्यपतयेऽस्मदीयहिरण्यपालकाय । अम्बिका जगन्माता पार्वती तस्याः +पतये भर्त्रे । तस्या एवाम्बिकाया ब्रह्मविद्यात्मको देह उमाशब्देनोच्यते । तादृश्या उमायाः पतये स्वामिने रुद्राय पुनः पुनर्नमस्कारोऽस्तु । अनेनानुवाकत्रयेणोक्तानां मन्त्राणां त्वरितरुद्राख्या मन्त्रकल्पेषु प्रसिद्धा । तद्विनियोगस्तु रुद्राध्यायजप[३]शेषत्वेन कल्पेषु द्रष्टव्यः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्ये दशमप्रपाठके नारायणीयापरनामधेययुक्तायां याज्ञिक्यामुपनिषद्यष्टादशोऽनुवाकः ॥ १८ ॥

=====

* ख. पुस्तक एतदग्रे—हिरण्यवर्णायेति ग. पुस्तके—हिरण्यवर्णाय हिरण्यरूपायेति चाधिकं भाष्यासंमतम् । + अत्राग्रे च पत्य इति युक्तं पठितुम् ।

१ ग. ङ. °ने [illegible] । ३ [illegible]

अथैकोनविंशोऽनुवाकः ।

अथाग्निहोत्रकर्मणि होमसाधनद्रव्यस्यं कारणभूतं वृक्षविशेषं विधत्ते—

यस्य वैकङ्कत्यग्निहोत्रहवणी भवति *प्रतिष्ठिताः ।
प्रत्येवास्याऽऽहुतयस्तिष्ठन्त्यथो प्रतिष्ठित्यै, इति ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके दशमप्रपाठके नारायणोपनिषद्येकोनविंशोऽनुवाकः ॥ १९ ॥

अग्निहोत्रे हविर्हूयते यया दर्व्या सेयमग्निहोत्रहवणी । सा च वैकङ्कती विकङ्कताख्येन वृक्षेण निष्पादिता यस्याग्निहोत्रिणो भवति, अस्याग्निहोत्रिण आहुतयः प्रतिष्ठितास्तयाऽग्निहोत्रहवण्या प्रक्षिप्ताः सत्यः प्रतितिष्ठन्त्येव फलप्रदा भवन्त्येव । अथो अपि च प्रतिष्ठित्या अनुष्ठातुश्चित्तशुद्धिद्वारा तत्त्वज्ञानप्रतिष्ठार्थं संपद्यन्ते । मुमुक्षोश्चित्तशुद्धिद्वारा वेदोक्तानां कृत्स्नकर्मणां मोक्षसाधनत्वं द्योतयितुमुपलक्षणत्वेन कर्माङ्गभूतो विकङ्कतवृक्षोऽत्र विहितः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्ये दशमप्रपाठके नारायणीयापरनामधेययुक्तायां याज्ञिक्यामुपनिषद्येकोनविंशोऽनुवाकः ॥ १९ ॥

अथ विंशोऽनुवाकः ।

अथ चित्तशुद्धिहेतूनां कर्मणां संग्रहेणोपयोगमस्मिन्मोक्षप्रकरणे सूचयित्वा प्रतिबन्धकनिवारकान्रक्षोघ्नमन्त्राञ्जप्यत्वेन विधत्ते—

कृणुष्व पाज इति पञ्च, इति ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके दशमप्रपाठके नारायणोपनिषदि विंशोऽनुवाकः ॥ २० ॥

संहितायाः प्रथमकाण्डे द्वितीयप्रपाठकस्यान्तिमानुवाके समाम्नाताः "कृणुष्व पाजः" इत्याद्या ऋचः पञ्च जपितव्या इति शेषः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्ये दशमप्रपाठके नारायणीयापरनामधेययुक्तायां याज्ञिक्यामुपनिषदि विंशोऽनुवाकः ॥ २० ॥

* एतत्पदमनिश्चितस्वरकम् ।

— [illegible]ष्ठिताः ।

अथैकविंशोऽनुवाकः ।

जीवनहेतुक्षेत्रलाभद्वारा मुक्तिहेतुं पृथिवीदेवताकं मन्त्रमाह—

अदितिर्देवा गन्धर्वा मनुष्याः पितरोऽसुरास्तेषाᳪ सर्वभूतानां माता मेदिनी महती मही सावित्री गायत्री जगत्युर्वी पृथ्वी बहुला विश्वा भूता कतमा काया सा सत्येत्यमृतेति वसिष्ठः, इति ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके दशमप्रपाठके नारायणोपनिषद्येकविंशोऽनुवाकः ॥ २१ ॥

अदितिशब्दोऽखण्डितेति व्युत्पत्त्या भूमिमाचष्टे । अत एव निघण्टुकारेण पृथिवीनामसु पठितः । देवादयः पञ्च जातिविशेषा अदितिरूपाः । एते च सर्वप्राणिदेहानामुपलक्षकाः । अतस्तेषां सर्वभूतानां देहोपादानत्वादियमदितिर्माता जननी । मेदिनी मधुकैटभमेदसा जाता । अथवा मेदस्विनी कठिनेत्यर्थः । महती गुणाधिका, तच्च सर्वप्राणिकृतोपद्रवसहिष्णुत्वेनावगन्तव्यम् । मही पूज्या । सावित्री सवितुः प्रेरकस्यान्तर्यामिणः संबन्धिनी । गायत्री गायकान्स्वोपासकांस्त्रायते रक्षतीत्यर्थः । जगती जगदाश्रयभूता । उर्व्यनेकसस्याढ्या । पृथ्व्यनेकविस्तारवती । बहुला निबिडावयवा । विश्वा सर्वात्मिका । भूता प्राणिदेहोत्पत्तेः पूर्वमेव विद्यमाना । कतमाऽतिशयेन सुखरूपा । काया सर्वप्राणिदेहरूपेण परिणता । सा प्रसिद्धा । सत्या व्यवहारदशायां बाधरहिता । इत्येवं वसिष्ठो महामुनिराह । तथैवामृता मरणरहिता चतुर्युगपर्यावर्तनेऽप्यवस्थितेत्येतमप्यर्थं वसिष्ठ एवाऽऽह । अतोऽस्य मन्त्रस्य वसिष्ठ ऋषिरित्यर्थः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्ये दशमप्रपाठके नारायणीयापरनामधेययुक्तायां याज्ञिक्यामुपनिषद्येकविंशोऽनुवाकः ॥ २१ ॥

अथ द्वाविंशोऽनुवाकः ।

वृष्ट्यभावकृतोपद्रवपरिहारेणोपकारिणमब्देवताकं मन्त्रमाह—

आपो वा इदᳪ सर्वं विश्वा भूतान्यापः । प्राणा वा आपः पशव आपोऽन्नमापोऽमृतमापः सम्रा-

१ ख. महता । २ ख °हारि° । ३ ग °पहारि° ।

डापो॒ विरा॒डाप॑ः स्व॒राडाप॒श्छन्दा॒ꣳस्यापो॒
ज्योती॒ꣳष्यापो॒ यजू॒ꣳष्याप॑ः स॒त्यमाप॑ः सर्वा॒
दे॒व॒ता॒ आपो॒ भूर्भुव॒ः सुव॒राप॒ ओम्, इति ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके दशमप्रपाठके नारायणोपनिषदि
द्वाविंशोऽनुवाकः ॥ २२ ॥

यदिदं जगदस्ति तत्सर्वमापो वै जलमेव । कथमिति तदेव प्रपञ्च्यते—विश्वा भूतानि सर्वाणि प्राणिशरीराण्यापो जलं रेतोरूपेण तदुत्पादकत्वात् । प्राणा वै शरीरवर्तिवायवोऽप्यापः, उदकपानेन प्राणानामाप्यायनात् । अत एव च्छन्दोगा आमनन्ति—"आपोमयः प्राणो न पिबतो विच्छेत्स्यते" इति । पशवो गवादयोऽप्यापः क्षीरस्वरूपेण तत्र परिणतत्वात् । * अन्नं व्रीहियवादिकमापः । जलस्यान्नहेतुत्वं प्रसिद्धम् । अमृतं देवैरुपजीव्यं वस्त्वापः । तद्रूपेणापि परिणतत्वात् । सम्यग्राजत इति सूत्रात्मा हिरण्यगर्भः सम्राट् । विस्पष्टं राजत इति ब्रह्माण्डदेहः पुरुषो विराट् । इन्द्रियादिनैरपेक्ष्येण स्वयमेव राजत इत्यव्याकृताभिमानीश्वरः स्वराट् । छन्दांसि गायत्र्यादीनि । ज्योतींष्यादित्यादीनि । यजूंष्यनियताक्षरा मन्त्राः । सत्यं यथार्थकथनम् । सर्वा देवता इन्द्रादयः । भूर्भुवः स्वस्त्रयो लोकाः । सम्राडादिलोकत्रयान्तपदार्थरूपेणाऽऽपः स्तूयन्ते । एताश्चाऽऽपो मूलकारणं परमात्मरूपेण प्रणवप्रतिपाद्या इति वक्तुमोंकारः पठितः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्ये दशमप्रपाठके नारायणीयापरनामधेययुक्तायां याज्ञिक्यामुपनिषदि द्वाविंशोऽनुवाकः ॥ २२ ॥

=====

अथ त्रयोविंशोऽनुवाकः ।

---

माध्याह्निकसंध्यानुष्ठानेऽभिमन्त्रितजलपानार्थं मन्त्रमाह—

आप॑ः पुनन्तु पृथि॒वीं पृ॑थि॒वी पू॒ता पु॑नातु॒ माम् ।
पु॒नन्तु॒ ब्रह्म॑णस्पति॒र्ब्रह्म॑ पू॒ता पु॑नातु॒ माम् ।
यदुच्छि॑ष्टमभो॒ज्यं यद्वा॑ दु॒श्चरि॑तं॒ मम॑ । सर्वं॑ पुनन्तु

---

* * ...अयं भागः ... व्यत्यासो वर्तते ।

**मामापोऽसतां च प्रतिग्रहꣳ स्वाहा,** इति ॥

**इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके दशमप्रपाठके नारायणोपनिषदि त्रयोविंशोऽनुवाकः ॥ २३ ॥**

या **आपः** सन्ति ताः **पृथिवीं पुनन्तु** प्रक्षालनेन शोधयन्तु। सा च **पृथिवी पूता** शुद्धा सती **मामनुष्ठातारं पुनातु** शोधयतु। तथा **ब्रह्मणो** वेदस्य **पतिः** पतिं प्रतिपालकमाचार्यमेता आपः पुनन्तु। तेनाऽऽचार्येणोपदिष्टं **ब्रह्म** वेदस्वरूपं **पूता** स्वयं पूतं सन्मां **पुनातु**। अन्यभुक्तावशिष्टरूपमुच्छिष्टं यदस्ति **यच्चाभोज्यं** भोक्तुमयोग्यं तादृशं कदाचिन्मया भुक्तं **यद्वा दुश्चरितमन्यदपि** प्रतिषिद्धाचरणरूपं **मम** किंचित्संपन्नं तत्सर्वं परिहृत्येति शेषः। ततो **मामापः पुनन्तु**। तथाऽसतां शूद्रादीनां **प्रतिग्रहं च** मया कृतं पुनन्तु। तदर्थमिदमभिमन्त्रितमुदकं **स्वाहा** मदीयवक्त्राग्नौ स्वाहुतमस्तु ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्ये दशमप्रपाठके नारायणीयापरनामधेययुक्तायां याज्ञिक्यामुपनिषदि त्रयोविंशोऽनुवाकः ॥ २३ ॥

=====

अथ चतुर्विंशोऽनुवाकः।

---

सायंसंध्याकाले जलपानार्थं मन्त्रमाह—

**अग्निश्च मा मन्युश्च मन्युपतयश्च मन्युकृतेभ्यः। पापेभ्यो रक्षन्ताम्। यदह्ना पापमकार्षम्। मनसा वाचा हस्ताभ्याम्। पद्भ्यामुदरेण शिश्ना। अहस्तदवलुम्पतु। यत्किंच दुरितं मयि। इदमहं माममृतयोनौ। सत्ये ज्योतिषि जुहोमि स्वाहा,** इति।

**इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके दशमप्रपाठके नारायणोपनिषदि चतुर्विंशोऽनुवाकः ॥ २४ ॥**

योऽयम**ग्निरस्ति यश्च मन्युः** क्रोधाभिमानी देवः, ये **च मन्युपतयः** क्रोधस्वामिनस्तन्नियामका देवाः सन्ति ते सर्वेऽपि **मन्युकृतेभ्यो** मदीयकोपनिष्पादितेभ्यः **पापेभ्यो मा** मां **रक्षन्तां** पापिनं मां तत्पापविनाशनेन पालयन्तु। किं चातीते-

नाह्वा तस्मिन्नहनि यत्पापमकार्षं कृतवानस्मि । केन साधनेन मनआदिभिः शिश्नान्तैरवयवैः । तत्सर्वं पापमहरवलुम्पतु, अहरभिमानी देवो विनाशयतु । परहिंसादिचिन्तनं मानसं पापम् । अप्रियानृतादिभाषणं वाचिकम् । अभिचारमोहा(होमा)दिवं हस्तकृतम् । पादेन गोब्राह्मणस्पर्शादिकं पादकृतम् । अभोज्यभोजनमुदरकृतम् । अगम्यागमनं शिश्नकृतम् । अथवा किमनेन परिमितगणनेन यत्किमपि दुरितं मयि निष्पन्नमिदं पापजातं सर्वं तत्कर्तारं मां च लिङ्गशरीररूपममृतयोनौ मरणरहिते जगत्कारणे सत्ये बाधरहिते ज्योतिषि स्वयंप्रकाशे वस्तुनि जुहोमि प्रक्षिपामि अहमनेन होमेन तत्सर्वं भस्मी करोमीत्यर्थः । तदर्थमिदमभिमन्त्रितं जलं स्वाहा मदीयवक्त्राग्नौ स्वाहुतमस्तु ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्ये दशमप्रपाठके नारायणीयापरनामधेययुक्तायां याज्ञिक्यामुपनिषदि चतुर्विंशोऽनुवाकः ॥ २४ ॥

अथ पञ्चविंशोऽनुवाकः ।

प्रातःसंध्याकाले जलपानार्थं मन्त्रमाह—

सूर्यश्च मा मन्युश्च मन्युपतयश्च मन्युकृतेभ्यः । पापेभ्यो रक्षन्ताम् । यद्रात्रिया पापमकार्षम् । मनसा वाचा हस्ताभ्याम् । पद्भ्यामुदरेण शिश्ना । रात्रिस्तदवलुम्पतु । यत्किंच दुरितं मयि । इदमहं माममृतयोनौ । सूर्ये ज्योतिषि जुहोमि स्वाहा, इति ।

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके दशमप्रपाठके नारायणोपनिषदि पञ्चविंशोऽनुवाकः ॥ २५ ॥

सूर्येऽहर्निष्पादके सूर्योपाधिके । अन्यत्सर्वं पूर्ववद्व्याख्येयम् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्ये दशमप्रपाठके नारायणीयापरनामधेययुक्तायां याज्ञिक्यामुपनिषदि पञ्चविंशोऽनुवाकः ॥ २५ ॥

अथ षड्विंशोऽनुवाकः ।

---

संध्यात्रये मार्जनादूर्ध्वं गायत्र्या आवाहनमन्त्रमाह—

आयातु वरदा देवी अक्षरं ब्रह्म संमितम् । गायत्री छन्दसां माता इदं ब्रह्म जुषस्व नः । ओजोऽसि सहोऽसि बलमसि भ्राजोऽसि देवानां धामनामाऽसि विश्वमसि विश्वायुः सर्वमसि सर्वायुरभिभूरों गायत्रीमावाहयामि, इति ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके दशमप्रपाठके नारायणोपनिषदि षड्विंशोऽनुवाकः ॥ २६ ॥

वरदाऽस्मदभीष्टवरप्रदा देवी गायत्रीछन्दोभिमानिनी देवताऽक्षरं विनाशरहितं संमितं सम्यग्वेदान्तप्रमाणेन निश्चितं ब्रह्म जगत्कारणं परतत्त्वमुद्दिश्याऽऽयात्वागच्छ-त्वस्माकं ब्रह्मतत्त्वं बोधयितुमागच्छत्वित्यर्थः । अयमेवार्थ उत्तरार्धेन स्पष्टी क्रियते—छन्दसां गायत्रीत्रिष्टुबादीनां वेदानां वा माता जननी देवता गायत्री गायत्रीशब्दाभिधेया नोऽस्मानिदं ब्रह्म वेदान्तप्रतिपाद्यं तत्त्वं जुषस्व जोषयतु, उपादिशत्वित्यर्थः । हे गायत्रि देवि त्वमोजोऽसि बलहेतुभूताष्टमधातुरूपाऽसि । सहोऽसि शत्रूणामभिभवनशक्तिरसि । बलमसि शरीरगतव्यवहारसामर्थ्यरूपाऽसि । भ्राजोऽसि दीप्तिरूपाऽसि । देवानामग्नीन्द्रादीनां धाम तेजो यदस्ति तन्नामाऽसि तदेव तव नामेत्यर्थः । विश्वं सर्वजगद्रूपं त्वमेवासि । विश्वायुः संपूर्णायुःस्वरूपाऽसि । उक्तस्यैव व्याख्यानं सर्वमसि सर्वायुरिति । अभिभूः सर्वस्य पापस्य तिरस्कारहेतुरों प्रणवप्रतिपाद्यः परमात्माऽसि । तादृशीं गायत्रीं मदीये मनस्यावाहयामि ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्ये दशमप्रपाठके नारायणीयापरनामधेययुक्तायां याज्ञिक्यामुपनिषदि षड्विंशोऽनुवाकः ॥ २६ ॥

---

अथ सप्तविंशोऽनुवाकः ।

---

गायत्र्या आवाहनादूर्ध्वं प्राणायामार्थं मन्त्रमाह—

ओं भूः । ओं भुवः । ओं सुवः । ओं महः । ओं जनः । ओं तपः । ओं सत्यम् । ओं तत्सवितुर्वरेण्यं

---

१ ख ग °त्रीं छ° । २ ख. ङ. मातेदं । ३ ख. ङ. मे । ४ ङ. °ह्रप° ।

भर्गो देवस्य धीमहि । धियो यो नः प्रचोदयात् ।
ओमापो ज्योती रसोऽमृतं ब्रह्म भूर्भुवः सुवरोम्, इति ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके दशमप्रपाठके नारायणोपनिषदि सप्तविंशोऽनुवाकः ॥ २७ ॥

भूरादयः सत्यान्ता लोकप्रतिपादिकाः सप्त व्याहृतयः । तेषां च लोकानां प्रणवप्रतिपाद्यब्रह्मस्वरूपत्वविवक्षया प्रत्येकं प्रणवोच्चारणम् । तत्सवितुरित्यादिको गायत्रीमन्त्रः । तत्प्रतिपाद्यस्य ब्रह्मत्वविवक्षया तदादौ प्रणवोच्चारणम् । मन्त्रस्य चायमर्थः—सवितुः प्रेरकस्यान्तर्यामिणो देवस्य वरेण्यं वरणीयं श्रेष्ठं तद्भर्गस्तेजो धीमहि ध्यायेम । यः सविता परमेश्वरो नोऽस्मदीया धियो बुद्धिवृत्तीः प्रचोदयात्प्रकर्षेण तत्त्वबोधे प्रेरयतु । तस्य तेजो ध्यायेमेति पूर्वत्रान्वयः । आपो ज्योतिरित्यादिको गायत्र्याः शिरोमन्त्रः, तस्याऽऽद्यन्तयोः प्रणवद्वयं पूर्ववदुच्चार्यते । या आपो नदीसमुद्रादिगताः सन्ति । यच्च ज्योतिरादित्यादिकमस्ति । योऽपि रसो मधुराम्लादिः षड्विधोऽस्ति । यदपि अमृतं देवैः पातव्यमस्ति । तत्सर्वमों प्रणवप्रतिपाद्यं ब्रह्म । किं च भूर्भुवः सुवरित्यभिहिता ये त्रयो लोकाः सन्ति तेऽप्यों प्रणवप्रतिपाद्यं ब्रह्म । अस्य च मन्त्रस्य प्राणायामाङ्गत्वममृतनादोपनिषदि प्रतिपाद्यते—

"सव्याहृतिं सप्रणवां गायत्रीं शिरसा सह ।
त्रिः पठेदायतप्राणः प्राणायामः स उच्यते" ॥ इति ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्ये दशमप्रपाठके नारायणीयापरनामधेययुक्तायां याज्ञिक्यामुपनिषदि सप्तविंशोऽनुवाकः ॥ २७ ॥

=====

अथाष्टाविंशोऽनुवाकः ।

---

तस्मिन्नेव प्राणायामे विकल्पितं मन्त्रान्तरमाह—

ॐ भूर्भुवः सुवर्महर्जनस्तपः सत्यं तद्ब्रह्म तदाप आपो
ज्योती रसोऽमृतं ब्रह्म भूर्भुवः सुवरोम्, इति ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके दशमप्रपाठके नारायणोपनिषद्य-
ष्टाविंशोऽनुवाकः ॥ २८ ॥

पूर्ववद्व्याख्येयम् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्ये दशमप्रपाठके नारायणीयापरनामधेययुक्तायां याज्ञिक्यामुपनिषद्यष्टाविंशोऽनुवाकः ॥ २८ ॥

अथैकोनत्रिंशोऽनुवाकः ।

पुनरपि विकल्पितं मन्त्रान्तरमाह—

**ओं तद्ब्रह्म । ओं तद्वायुः । ओं तदात्मा* ।**
**ओं तत्सर्वम् । ओं तत्पुरोर्नमः, इति ।**

**इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके दशमप्रपाठके नारायणोपनिषद्येकोनत्रिंशोऽनुवाकः ॥ २९ ॥**

**ओं** प्रणवप्रतिपाद्यं तत्सर्ववेदान्तप्रसिद्धं **ब्रह्म** तत्त्वम् । तथा **वायुः** सूत्रात्मरूपो हिरण्यगर्भ **ओं तत्**प्रणवप्रतिपाद्यं वेदान्तप्रसिद्धं ब्रह्मैव । तथैवाऽऽत्मा जीवोऽपि । **ओं** तदिति पूर्ववत् । **सर्वं** जगदों तदिति पूर्ववत् । **पुरः** पुराणि स्थूलसूक्ष्मकारणशरीराणि । **ओं तदिति** पूर्ववत् । तादृशाय ब्रह्मणे **नमो**ऽस्तु । प्राणायामे शक्तितारतम्यमनुसृत्य विकल्पितं मन्त्रत्रयमुक्तम् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्ये दशमप्रपाठके नारायणीयापरनामधेययुक्तायां याज्ञिक्यामुपनिषद्येकोनत्रिंशोऽनुवाकः ॥ २९ ॥

अथ त्रिंशोऽनुवाकः ।

जपादूर्ध्वं गायत्रीदेवताया विसर्जनमन्त्रमाह—

**उत्तमे शिखरे *देवी भूम्यां पर्वतमूर्धनि ।**
**ब्राह्मणेभ्योऽभ्यनुज्ञाता गच्छ देवि यथासुखम्, इति ।**

**इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके दशमप्रपाठके नारायणोपनिषदि त्रिंशोऽनुवाकः ॥ ३० ॥**

* एतदग्रे ग. ङ. पुस्तकयोः ' ॐ तत्सत्यम् ' इत्यधिकम् । + एतत्पदमनिश्चितस्वरकम् ।

१ ङ. °त्पुरो नमः ।

भूम्यामवस्थितो यः पर्वतो मेरुनामकस्तस्य मूर्धन्युपरिभागे यदुत्तमं शिखरमस्ति तस्मिन्नियं गायत्री देवी तिष्ठति। तस्मात्कारणाद्धे देवि ब्राह्मणेभ्यस्त्वदुपासकेभ्यस्त्वदनुग्रहेण परितुष्टेभ्योऽनुज्ञानमभिव्याप्य यथासुखं स्वकीयसुखमनतिक्रम्य स्वस्थाने तास्मिन्नुत्तमशिखरे गच्छ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्ये दशमप्रपाठके नारायणीयापरनामधेययुक्तायां याज्ञिक्यामुपनिषदि त्रिंशोऽनुवाकः ॥ ३० ॥

अथैकत्रिंशोऽनुवाकः ।

गायत्रीदेव्या विसर्जनादूर्ध्वं तत्त्वानुस्मरणभूतस्य ब्रह्मण उपस्थानमन्त्रमाह—

**ओमन्तश्चरति भूतेषु गुहायां विश्वमूर्तिषु ।**
**त्वं यज्ञस्त्वं विष्णुस्त्वं वषट्कारस्त्वं**
**रुद्रस्त्वं ब्रह्मा त्वं प्रजापतिः, इति ।**

**इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके दशमप्रपाठके नारायणोपनिषद्येकत्रिंशोऽनुवाकः ॥ ३१ ॥**

**विश्वमूर्तिषु** देवमनुष्यगन्धर्वादिनानाशरीरयुक्तेषु **भूतेषु** प्राणिषु **गुहायां** बुद्धावन्तर्मध्य **ओं** प्रणवप्रतिपाद्यः परमात्मा **चरति** वर्तते । हे परमात्मन्यो **यज्ञो** ज्योतिष्टोमादिः स **त्व**मेव । यश्च **विष्णु**र्जगत्पालको योऽपि **वषट्कारो** हविष्प्रदानमन्त्रो यश्च **रुद्रः** संहर्ता यश्च **ब्रह्मा** जगत्स्रष्टा यश्च **प्रजापति**र्दक्षादिः प्रजापालकः स सर्वोऽपि त्वमेव ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्ये दशमप्रपाठके नारायणीयापरनामधेययुक्तायां याज्ञिक्यामुपनिषद्येकत्रिंशोऽनुवाकः ॥ ३१ ॥

अथ द्वात्रिंशोऽनुवाकः ।

अथ भोजनादावपां प्राशने मन्त्रमाह—

**अमृतोपस्तरणमसि, इति ॥**

**इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके दशमप्रपाठके नारायणोपनिषदि द्वात्रिंशोऽनुवाकः ॥ ३२ ॥**

पीयमान हे जल त्वममृतं विनाशरहितं प्राणदेवताया उपस्तरणमसि । यथा शयानस्य पुंसो मञ्चकस्योपरितनं पटादिकमुपस्तीर्यते तद्वत्प्राणदेवताया इदमुपस्तरणम् । तथा च वाजसनेयिनः प्राणविद्यायां प्राणदेवतायां जलवस्त्रत्वमामनन्ति—" तस्मादशिष्यन्नाचामेदशित्वाऽऽचामेदेतमेव तदन्नमनग्नं कुरुते " इति ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्ये दशमप्रपाठके नारायणीयापरनामधेययुक्तायां याज्ञिक्यामुपनिषदि द्वात्रिंशोऽनुवाकः ॥ ३२ ॥

=====

अथ त्रयस्त्रिंशोऽनुवाकः ।

जलप्राशनादूर्ध्वं प्राणाहुतिमन्त्रान्दर्शयति—

**प्राणे निविष्टोऽमृतं जुहोमि । प्राणाय स्वाहा ।**

**अपाने निविष्टोऽमृतं जुहोमि । अपानाय स्वाहा ।**

**व्याने निविष्टोऽमृतं जुहोमि । व्यानाय स्वाहा ।**

**उदाने निविष्टोमृतं जुहोमि । उदानाय स्वाहा ।**

**समाने निविष्टोऽमृतं जुहोमि । समानाय स्वाहा ।**

**ब्रह्मणि म आत्माऽमृतत्वाय, इति ।**

**इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके दशमप्रपाठके नारायणोपनिषदि त्रयस्त्रिंशोऽनुवाकः ॥ ३३ ॥**

पञ्चसु शरीरगतवायुभेदेषु मध्ये प्रथमे प्राणनामके वायौ **निविष्ट** आदरयुक्तोऽहममृतं स्वादुभूतमिदं हविर्जुहोमि प्रक्षिपामि । तच्च प्राणदेवतायै **स्वाहा** स्वाहुतमस्तु । एवमपानादिषु योज्यम् । एताभिः पञ्चभिराहुतिभिरमृतत्वाय मोक्षाय **मे** मदीय **आत्मा** जीवो **ब्रह्मणि** परमात्मनि एकी भवत्विति शेषः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्ये दशमप्रपाठके नारायणीयापरनामधेययुक्तायां याज्ञिक्यामुपनिषदि त्रयस्त्रिंशोऽनुवाकः ॥ ३३ ॥

=====

१ ग. °या ब्रह्मणस्तत्त्वमा° । २ ख. °तद° । ३ ख. कुर्वन्ति ।

अथ चतुस्त्रिंशोऽनुवाकः ।

प्राणाहुतिष्वेव विकल्पितानि मन्त्रान्तराणि दर्शयति—

प्राणे निविष्टोऽमृतं जुहोमि । शिवो मां विशाप्रदाहाय । प्राणाय स्वाहा । अपाने निविष्टोऽमृतं जुहोमि । शिवो मां विशाप्रदाहाय । अपानाय स्वाहा । व्याने निविष्टोऽमृतं जुहोमि । शिवो मां विशाप्रदाहाय । व्यानाय स्वाहा । उदाने निविष्टोऽमृतं जुहोमि । शिवो मां विशाप्रदाहाय । उदानाय स्वाहा । समाने निविष्टोऽमृतं जुहोमि । शिवो मां विशाप्रदाहाय । समानाय स्वाहा । ब्रह्मणि म आत्माऽमृतत्वाय, इति ।

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके दशमप्रपाठके नारायणोपनिषदि चतुस्त्रिंशोऽनुवाकः ॥ ३४ ॥

हूयमान हे द्रव्यविशेष त्वं शिवः शान्तो भूत्वा मां प्रविश । किमर्थम् । अप्रदाहाय क्षुत्संपादितदाहशान्त्यर्थम् । अन्यत्पूर्ववद्व्याख्येयम् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्ये दशमप्रपाठके नारायणीयापरनामधेययुक्तायां याज्ञिक्यामुपनिषदि चतुस्त्रिंशोऽनुवाकः ॥ ३४ ॥

अथ पञ्चत्रिंशोऽनुवाकः ।

भोजनादूर्ध्वमपां प्राशने मन्त्रमाह—

अमृतापिधानमसि, इति ।

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके दशमप्रपाठके नारायणोपनिषदि पञ्चत्रिंशोऽनुवाकः ॥ ३५ ॥

पीयमान हे जल त्वममृतमविनश्वरमपिधानमाच्छादकमसि ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्ये दशमप्रपाठके नारायणीयापरनामधेययुक्तायां याज्ञिक्यामुपनिषदि पञ्चत्रिंशोऽनुवाकः ॥ ३५ ॥

अथ षट्त्रिंशोऽनुवाकः।

भुक्तस्यानुमन्त्रणे मन्त्रमाह—

**श्रद्धायां प्राणे निविश्यामृतं हुतम्। प्राणमन्नेनाऽऽप्यायस्व। अपाने निविश्यामृतं हुतम्। अपानमन्नेनाऽऽप्यायस्व। व्याने निविश्यामृतं हुतम्। व्यानमन्नेनाऽऽप्यायस्व। उदाने निविश्यामृतं हुतम्। उदानमन्नेनाऽऽप्यायस्व। समाने निविश्यामृतं हुतम्। समानमन्नेनाऽऽप्यायस्व। ब्रह्मणि म आत्माऽमृतत्वाय, इति॥**

**इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके दशमप्रपाठके नारायणोपनिषदि षट्त्रिंशोऽनुवाकः॥ ३६॥**

वैदिके कर्मणि विश्वासातिशयः श्रद्धा, तस्यां सत्यां प्राणवायौ **निविश्याऽऽदरा**तिशयं कृत्वाऽ**मृत**मविनश्वरं स्वादुभूतमिदं हविर्मया **हुतम्**। हे प्राणाभिमानिदेव हुतेनान्नेनाऽऽप्यायस्व वर्धयस्व। स्पष्टमन्यत्॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्ये दशमप्रपाठके नारायणीयापरनामधेययुक्तायां याज्ञिक्यामुपनिषदि षट्त्रिंशोऽनुवाकः॥ ३६॥

अथ सप्तत्रिंशोऽनुवाकः।

अनुमन्त्रणादूर्ध्वं हृदयाभिमर्शने मन्त्रमाह—

**प्राणानां ग्रन्थिरसि रुद्रो मा विशान्तकः। तेनान्नेनाऽऽप्यायस्व, इति।**

**इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके दशमप्रपाठके नारायणोपनिषदि सप्तत्रिंशोऽनुवाकः॥ ३७॥**

हे हृदयवर्तिन्नहंकार त्वं वायुरूपाणामिन्द्रियरूपाणां च **प्राणानां ग्रन्थिरसि** परस्परमविश्लेषाय ग्रथनहेतुरसि। तादृशस्त्वं रुद्रस्त्वदभिमानिदेवतारूपोऽन्तको दुःखस्य

**विनाशको** भूत्वा मा मां **विश** मच्छरीरे प्रविष्टो भव । **तेन** मद्भुक्तेनान्नेनाऽऽप्या-**यस्व** मामभिवर्धय ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्ये दशमप्रपाठके नारायणीयापरनामधेययुक्तायां याज्ञिक्यामुपनिषदि सप्तत्रिंशोऽनुवाकः ॥ ३७ ॥

=====

अथाष्टात्रिंशोऽनुवाकः ।

क्षुधादिजनितचित्तविक्षेपशान्तेरूर्ध्वं भोक्तुर्जीवस्य परमेश्वररूपत्वानुसंधाने[1] हेतुभूतं मन्त्रं दर्शयति—

**अङ्गुष्ठमात्रः पुरुषोऽङ्गुष्ठं च समाश्रितः ।**

**ईशः सर्वस्य जगतः प्रभुः प्रीणातु[2] विश्वभुक्, इति ।**

**इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके दशमप्रपाठके नारायणोपनिषद्यष्टात्रिंशोऽनुवाकः ॥ ३८ ॥**

हृदयमध्यगत आकाशः स्वाङ्गुष्ठपरिमितः । तत्र वर्तमाना बुद्धिरपि तावती तयाऽवच्छिन्नो जीवरूपः पुरुषोऽप्यङ्गुष्ठमात्रः । स च स्वकीयया ज्ञानक्रियाशक्त्याऽ**ङ्गुष्ठं समाश्रितः** । चकारान्मस्तकं चाऽऽश्रितः । आपादमस्तकव्यापीत्यर्थः । स चोपाधिसंबन्धमन्तरेण स्वकीयेन वास्तवेन रूपेण सर्वस्य जगत **ईशो** नियन्ता । अत ए[3] **विश्वभुक्**सर्वं जगद्भुङ्क्ते । तादृशः स **प्रभुरी**श्वरः **प्रीणातु**, अनेन भोजनेन प्रीतो भवतु ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्ये दशमप्रपाठके नारायणीयापरनामधेययुक्तायां याज्ञिक्यामुपनिषद्यष्टात्रिंशोऽनुवाकः ॥ ३८ ॥

=====

अथैकोनचत्वारिंशोऽनुवाकः ।

जीवात्मन ईश्वरेणाभेदज्ञानं यदस्ति तस्य ज्ञानस्य नैरन्तर्येण साधनं मेधाधीनमतं मेधाभिमानिदेवतां प्रार्थयितुमेकामृचमाह—

**मेधा देवी जुषमाणा न आगाद्विश्वाची भद्रा**

**सुमनस्यमाना । त्वया जुष्टा जुषमाणा दुरु-**

---

१ ग. °धानहेतुं म° । २ ग. ङ. प्रीणाति । ३ ग. प्रसक्तो ।

रुक्तान्बृहद्वदेम विदथे सुवीराः, इति ।

ग्रन्थतदर्थयोर्धारणशक्तिर्मेधा, तदभिमानिनी देवी जुषमाणा प्रीयमाणा सती नोऽस्मान्प्रत्यागादागच्छतु । कीदृशी देवी । विश्वमञ्चतीति विश्वाची सर्वावगाहनक्षमेत्यर्थः । अत एव भद्रा कल्याणी । सुमनस्यमाना शोभनं मनोऽस्मदनुग्राहकमिच्छन्ती । हे देवि त्वया जुष्टाऽनुगृहीता वयं दुरुक्ताञ्जुषमाणाः पुरुषार्थानुपयोगिनो वेदबाह्याञ्शब्दान्सेवमाना वेदैकनिष्ठाः सुवीराः शोभनपुत्रशिष्यादिरूपा विदथे यज्ञेऽनुष्ठिते सति शुद्धान्तःकरणा भूत्वा बृहद्वदेम परब्रह्मतत्त्वं कथयाम ।

तत्रैव द्वितीयामृचमाह—

त्वया जुष्ट ऋषिर्भवति देवि त्वया ब्रह्माऽऽगतश्रीरुत त्वया । त्वया जुष्टश्चित्रं विन्दते वसु नो जुषस्व द्रविणेन मेधे, इति ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके दशमप्रपाठके नारायणोपनिषद्येकोनचत्वारिंशोऽनुवाकः ॥ ३९ ॥

हे देवि मेधाख्ये त्वया जुष्टः सेवितोऽनुगृहीतः पुरुष ऋषिरतीन्द्रियदर्शी भवति । तथा त्वया जुष्टः पुरुषो ब्रह्मा हिरण्यगर्भो भवति । उतापि च त्वया जुष्टः पुरुष आगतश्रीः प्राप्तसंपद्भवति । अत एव त्वया जुष्टः पुरुषश्चित्रं गवाश्वभूहिरण्यधान्यादिकं विविधं वसु धनं विन्दते लभते । हे मेधे देवि सा तादृशी त्वं नोऽस्मान्द्रविणेन धनेन जुषस्व सेवस्वानुगृहाणेत्यर्थः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्ये दशमप्रपाठके नारायणीयापरनामधेययुक्तायां याज्ञिक्यामुपनिषद्येकोनचत्वारिंशोऽनुवाकः ॥ ३९ ॥

====

अथ चत्वारिंशोऽनुवाकः ।

मेधाप्रदानिन्द्रादीन्प्रार्थयते—

मेधां म इन्द्रो ददातु मेधां देवी सरस्वती । मेधां मे अश्विनावुभौ देवावाधत्तां पुष्करस्रजौ, इति ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके दशमप्रपाठके नारायणोपनिषदि चत्वारिंशोऽनुवाकः ॥ ४० ॥

योऽयमिन्द्रो देवो या च सरस्वती देवी यौ च पुष्करस्रजौ पद्ममालायुक्तावुभावश्विनौ देवौ ते सर्वे मे मह्यं मेधां प्रयुच्छन्तु ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्ये दशमप्रपाठके नारायणीयापरनामधेययुक्तायां याज्ञिक्यामुपनिषदि चत्वारिंशोऽनुवाकः ॥ ४० ॥

अथैकचत्वारिंशोऽनुवाकः ।

मेधाप्रदं मन्त्रान्तरं दर्शयति—

अप्सरासु च या मेधा गन्धर्वेषु च यन्मनः । दैवी मेधा *मनुष्यजा सा मां मेधा सुरभिर्जुषताम्, इति ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके दशमप्रपाठके नारायणोपनिषद्येकचत्वारिंशोऽनुवाकः ॥ ४१ ॥

अप्सरासु देवस्त्रीषु या मेधा प्रसिद्धा वर्तते गन्धर्वेषु च देवगायकेषु यन्मनो मेधात्मकमस्ति दैवी हिरण्यगर्भादिदेवेषु स्थिता या मेधा विद्यते मनुष्यजा मनुष्येषु वेदशास्त्रवित्सु या मेधाऽस्ति सा सर्वा मेधा सुरभिः शोभनगन्धा सर्वकामदुघा वा भूत्वा मां जुषतां सेवताम् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्ये दशमप्रपाठके नारायणीयापरनामधेययुक्तायां याज्ञिक्यामुपनिषद्येकचत्वारिंशोऽनुवाकः ॥ ४१ ॥

अथ द्विचत्वारिंशोऽनुवाकः ।

पुनरपि मेधार्थं मन्त्रान्तरमाह—

आ मां मेधा सुरभिर्विश्वरूपा हिरण्यवर्णा जगती जगम्या । ऊर्जस्वती पयसा पिन्वमाना सा मां मेधा सुप्रतीका जुषताम्, इति ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके दशमप्रपाठके नारायणोपनिषदि द्विचत्वारिंशोऽनुवाकः ॥ ४२ ॥

* एतत्पदमनिश्चितस्वरकम् ।

[illegible] ख. जुषन्ताम् ।

मेधाशक्तिर्मा प्रत्यागच्छत्विति शेषः । कीदृशी मेधा, **सुरभिः** शोभनगन्धा कामदुघा वा । **विश्वरूपा** सकलवेदशास्त्रधारणक्षमत्वेन बहुरूपा । **हिरण्यवर्णा** देवताशरीरे हिरण्यसमानवर्णोपेता । **जगती** सर्वत्र वर्तमानत्वेन जगदात्मिका । **जगम्या** पुरुषार्थकामैर्भृशं गन्तुं योग्या । **ऊर्जस्वती** बलवती **पयसा** गोक्षीरादिरसेन **पिन्वमाना**ऽस्मान्प्रीणयन्ती । **सा** तथाविधगुणयुक्ता **मेधा सुप्रतीका** सुमुखी भूत्वा **मां जुषतां** सेवताम् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्ये दशमप्रपाठके नारायणीयापरनामधेययुक्तायां याज्ञिक्यामुपनिषदि द्विचत्वारिंशोऽनुवाकः ॥ ४२ ॥

अथ त्रिचत्वारिंशोऽनुवाकः ।

मेधाविनः पुरुषस्य ज्ञानोत्पादनाय महादेवसंबन्धिषु पञ्चवक्त्रेषु मध्ये पश्चिमवक्त्रप्रतिपादकं मन्त्रमाह—

**सद्योजातं प्रपद्यामि सद्योजाताय वै[2] नमः ।**

**भवे भवे नातिभवे भजस्व[3] माम् । भवोद्भवाय नमः,** इति ॥

**इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके दशमप्रपाठके नारायणोपनिषदि त्रिचत्वारिंशोऽनुवाकः ॥ ४३ ॥**

सद्योजातनामकं यत्पश्चिमवक्त्रं तद्रूपं परमेश्वरं **प्रपद्यामि** प्राप्नोमि । तादृशाय **सद्योजाताय वै नमो**ऽस्तु । हे सद्योजात **भवे भवे** तत्तज्जन्मनिमित्तं **मां न भजस्व** न प्रेरयेत्यर्थः । किं तर्ह्य**तिभवे** जन्मातिलङ्घननिमित्तं **भजस्व** तत्त्वज्ञानाय प्रेरय । **भवोद्भवाय** भवात्संसारादुद्धर्त्रे सद्योजाताय नमोऽस्तु ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णजुर्वेदीयतैत्तिरीयारण्यकभाष्ये दशमप्रपाठके नारायणीयापरनामधेययुक्तायां याज्ञिक्यामुपनिषदि त्रिचत्वारिंशोऽनुवाकः ॥ ४३ ॥

अथ चतुश्चत्वारिंशोऽनुवाकः ।

उत्तरवक्त्रप्रतिपादकं मन्त्रमाह—

**वामदेवाय नमो ज्येष्ठाय नमः श्रेष्ठाय नमो रुद्राय नमः कालाय**

---

१ अ. जुषन्नाम् । २ ख. ङ. वै नमो न° । ३ अ. भवस्व । ४ अ. भवस्व । ५ अ. भवस्व ।

नमः कलविकरणाय नमो बलविकरणाय नमो बलप्रमथनाय नमः सर्वभूतदमनाय नमो मनोन्मनाय नमः, इति ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके दशमप्रपाठके नारायणोपनिषदि चतुश्चत्वारिंशोऽनुवाकः ॥ ४४ ॥

उत्तरवक्त्ररूपो वामदेवस्तस्यैव विग्रहविशेषा ज्येष्ठादिनामकाः । एते च महादेवपीठशक्तीनां वामादीनां नवानां पतयः पुरुषाः । तेभ्यो नवभ्यो नमस्कारोऽस्तु ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्ये दशमप्रपाठके नारायणीयापरनामधेययुक्तायां याज्ञिक्यामुपनिषदि चतुश्चत्वारिंशोऽनुवाकः ॥ ४४ ॥

=====

अथ पञ्चचत्वारिंशोऽनुवाकः ।

=====

दक्षिणवक्त्रप्रतिपादकं मन्त्रमाह—

अघोरेभ्योऽथ घोरेभ्यो घोरघोरतरेभ्यः ।
सर्वतः शर्व सर्वेभ्यो नमस्ते अस्तु रुद्ररूपेभ्यः, इति ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके दशमप्रपाठके नारायणोपनिषदि पञ्चचत्वारिंशोऽनुवाकः ॥ ४५ ॥

अघोरनामको दक्षिणवक्त्ररूपो देवस्तस्य विग्रहा अघोराः सात्त्विकत्वेन शान्ताः । अन्ये तु घोरा राजसत्वेनोग्राः । अपरे तु तामसत्वेन घोरादपि घोरतराः । हे शर्व परमेश्वर ते त्वदीयेभ्यः पूर्वोक्तेभ्यस्त्रिविधेभ्यः सर्वेभ्यो रुद्ररूपेभ्यः सर्वतः सर्वेषु देशेषु सर्वेषु च कालेषु नमोऽस्तु ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्ये दशमप्रपाठके नारायणीयापरनामधेययुक्तायां याज्ञिक्यामुपनिषदि पञ्चचत्वारिंशोऽनुवाकः ॥ ४५ ॥

=====

अथ षट्चत्वारिंशोऽनुवाकः ।

प्राग्वक्त्रप्रतिपादकं मन्त्रमाह—

तत्पुरुषाय विद्महे महादेवाय धीमहि ।

---

... सर्वेभ्यः सर्व शर्व ।

तन्नो रुद्रः प्रचोदयात्, इति ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके दशमप्रपाठके नारायणोपनिषदि षट्चत्वारिंशोऽनुवाकः ॥ ४६ ॥

प्राग्वक्त्रदेवस्तत्पुरुषनामकः । द्वितीयार्थे चतुर्थी । तत्पुरुषं देवं विद्महे गुरुशास्त्रमुखाज्जानीमः । ज्ञात्वा च महादेवाय तं महादेवं धीमहि ध्यायेम । तत्तस्मात्कारणाद्रुद्रो देवो नोऽस्मान्प्रचोदयाज्ज्ञानध्यानार्थं प्रेरयतु ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्ये दशमप्रपाठके नारायणीयापरनामधेययुक्तायां याज्ञिक्यामुपनिषदि षट्चत्वारिंशोऽनुवाकः ॥ ४६ ॥

अथ सप्तचत्वारिंशोऽनुवाकः ।

ऊर्ध्ववक्त्रप्रतिपादकं मन्त्रमाह—

ईशानः सर्वविद्यानामीश्वरः सर्वभूतानां ब्रह्माधिपतिर्ब्रह्मणोऽधिपतिर्ब्रह्मा शिवो मे अस्तु सदाशिवोम्, इति ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके दशमप्रपाठके नारायणोपनिषदि सप्तचत्वारिंशोऽनुवाकः ॥ ४७ ॥

योऽयमूर्ध्ववक्त्रो देवः सोऽयं सर्वविद्यानां वेदशास्त्रादीनां चतुःषष्टिकलाविद्यानामीशानो नियामकः । तथा सर्वभूतानामखिलप्राणिनामीश्वरो नियामकः । ब्रह्माधिपतिर्वेदस्याधिकत्वेन पालकः । तथा ब्रह्मणो हिरण्यगर्भस्याधिपतिः, तादृशो यो ब्रह्माऽस्ति प्रवृद्धः परमात्मा सोऽयं मे ममानुग्रहार्थं शिवः शान्तोऽस्तु । सदाशिवो स एव सदाशिव ओमहं भवामि ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्ये दशमप्रपाठके नारायणीयापरनामधेययुक्तायां याज्ञिक्यामुपनिषदि सप्तचत्वारिंशोऽनुवाकः ॥ ४७ ॥

अथाष्टचत्वारिंशोऽनुवाकः ।

इत्थं तत्त्वज्ञानस्योत्पादकाः पञ्चवक्त्रप्रतिपादकाः पञ्च ब्रह्ममन्त्रा उक्ताः । अथ ज्ञानप्रतिबन्धकब्रह्महत्यादिपापनिवृत्तिहेतवस्त्रिसुपर्णनामका मन्त्रा वक्तव्याः, तत्र प्रथमं मन्त्रमाह—

ब्रह्ममेतु माम् । मधुमेतु माम् । ब्रह्ममेव मधुमेतु माम् ।

---

१ झ. °नो नयक नि° ।

**यास्ते सोम प्रजा वत्सोऽभि सो अहम्। दुष्ष्वप्नहन्दुरुष्षह। यास्ते सोम प्राणाꣳस्ताञ्जुहोमि, इति।**

**ब्रह्म** परब्रह्मतत्त्वं **मामेतु** प्राप्नोतु। **मधु** परमानन्दलक्षणमाधुर्योपेतं वस्तु **मामेतु** प्राप्नोतु। न चात्र ब्रह्ममधुशब्दयोरत्यन्तमर्थभेदः, किं तर्हि **ब्रह्ममेव मधु** शब्दद्वयप्रतिपाद्यमखण्डैकरसं वस्तु **मामेतु** प्राप्नोतु। हे **सोम,** उमा ब्रह्मविद्या तया सह वर्तमान परमात्मंस्ते तव **याः प्रजा** देवमनुष्यादयः सन्ति ता अभिलक्ष्य **सो अहं** स तादृशस्त्वत्सेवकोऽहं **वत्सो** बाल एतासां त्वदीयप्रजानां मध्ये बालवदहं त्वदीयकरुणायोग्यः। अतो हे **दुष्ष्वप्नहन्**संसाररूपस्य दुःस्वप्नस्य घातक परमेश्वर **दुरुष्षह** दुःखमुत्कर्षेणाभिभव। वर्णविकारश्छान्दसः। हे **सोम** परमात्मंस्ते त्वदीयाः प्राणवृत्तयो **याः** सन्ति तान्वृत्तिप्राणांस्त्वयि **जुहोमि** प्रक्षिपामि मदीयमनोवागादयः प्राणास्त्वया निर्मितत्वात्त्वदीया अतस्त्वय्येवोपसंहरामि विषयेभ्य इन्द्रियाणि निरुध्य त्वदेकचित्तो भवामीत्यर्थः॥

उक्तस्य त्रिसुपर्णमन्त्रस्य माहात्म्यं ब्राह्मणरूपेण वाक्येन दर्शयति—

**त्रिसुपर्णमयाचितं ब्राह्मणाय दद्यात्। ब्रह्महत्यां वा एते घ्नन्ति। ये ब्राह्मणास्त्रिसुपर्णं पठन्ति। ते सोमं प्राप्नुवन्ति। आसहस्रात्पङ्क्तिं पुनन्ति। ओम्, इति॥**

**इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके दशमप्रपाठके नारायणोपनिषद्यष्टचत्वारिंशोऽनुवाकः॥ ४८॥**

विद्यान्तराणि सर्वाणि "नापृष्टः कस्यचिद्ब्रूयात्" इति**शास्त्र**मनुसृत्य शिष्येण याच्ञायां कृतायां पश्चादुपदिशन्ति। इमं तु त्रिसुपर्णमन्त्रं शिष्ययाच्ञामन्तरेणैव **ब्राह्मणा**योपदिशेत्। तेनोपदेशेन **ये ब्राह्मणास्त्रिसुपर्णं पठन्ति** त्रिसुपर्णमन्त्रं सर्वदा जपन्ति, एते पुरुषा **ब्रह्महत्यां** विनाशयन्ति। ततस्ते निष्पापाः सन्तः सोमयागं **प्राप्नुवन्ति**। ते यस्यां ब्राह्मणपङ्क्तौ भोजनार्थमुपविशन्ति तां **पङ्क्तिं** सहस्रब्राह्मणपर्यन्तां **पुनन्ति** शुद्धां कुर्वन्ति। तस्मादों प्रणवप्रतिपाद्यः परमात्मैव त्रिसुपर्णमन्त्रस्य देवतेत्यर्थः॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्ये दशमप्रपाठके नारायणीयापरनामधेययुक्तायां याज्ञिक्यामुपनिषद्यष्टचत्वारिंशोऽनुवाकः॥ ४८॥

=====

१ ... ... त्ये। ५ झ. °दीया म°।

अथैकोनपञ्चाशत्तमोऽनुवाकः ।

द्वितीयं त्रिसुपर्णमन्त्रमाह—

ब्रह्म मेधया । मधु मेधया । ब्रह्ममेव मधु मेधया । अद्या नो देव सवितः प्रजावत्सावीः सौभगम् । परा दुष्वप्नियꣳ सुव । विश्वानि देव सवितर्दुरितानि परा सुव । यद्भद्रं तन्म आसुव । मधु वाता ऋतायते मधु क्षरन्ति सिन्धवः । माध्वीर्नः सन्त्वोषधीः । मधु नक्तमुतोषसि मधुमत्पार्थिवꣳ रजः । मधु द्यौरस्तु नः पिता । मधुमान्नो वनस्पतिर्मधुमाꣳ अस्तु सूर्यः । माध्वीर्गावो भवन्तु नः , इति ।

यद्ब्रह्म जगत्कारणं सर्ववेदान्तवेद्यं तन्मेधया गुरूपदिष्टमहावाक्यतदर्थधारणशक्त्या लभ्यतामिति शेषः । मध्वित्यादि पूर्ववत् । अद्या नो देवेत्यादिकमृक्पञ्चकमणोरणीयानित्यनुवाके व्याख्यातम् ।

अस्य त्रिसुपर्णमन्त्रस्य महिमानं दर्शयति—

य इमं त्रिसुपर्णमयाचितं ब्राह्मणाय दद्यात् । भ्रूणहत्यां वा एते घ्नन्ति । ये ब्राह्मणास्त्रिसुपर्णं पठन्ति । ते सोमं प्राप्नुवन्ति । आसहस्रात्पङ्क्तिं पुनन्ति । ओम्, इति ।

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके दशमप्रपाठके नारायणोपनिषद्येकोनपञ्चाशत्तमोऽनुवाकः ॥ ४९ ॥

ब्राह्मणगर्भस्य राजगर्भस्य वा वधो भ्रूणहत्या । अन्यत्पूर्ववत् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्ये दशमप्रपाठके नारायणीयापरनामधेययुक्तायां याज्ञिक्यामुपनिषद्येकोनपञ्चाशत्तमोऽनुवाकः ॥ ४९ ॥

अथ पञ्चाशत्तमोऽनुवाकः ।

तृतीयं त्रिसुपर्णमन्त्रमाह—

ब्रह्म मेधवा । मधु मेधवा । ब्रह्ममेव मधु मेधवा ।

ब्रह्मा देवानां पदवीः कवीनामृषिर्विप्राणां महिषो मृगाणाम्। श्येनो गृध्राणाꣳ स्वधितिर्वनानाꣳ सोमः पवित्रमत्येति रेभन्। हꣳसः शुचिषद्वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत्। नृषद्वरसदृतसद्व्योमसदब्जा गोजा ऋतजा अद्रिजा ऋतं बृहत्, इति।

मेधवा मेधो यज्ञः सोऽस्यास्तीति मेधवत्। यज्ञदानादिसाध्यविविदिषापूर्वकत्वाद्ब्रह्मज्ञानलाभस्य ब्रह्म मेधवदित्युच्यते। अन्यत्पूर्ववत्। "ब्रह्मा देवानां" "हꣳस शुचिषत्" इत्यादिके द्वे ऋचावणोरणीयानित्यनुवाके व्याख्याते।

अस्य त्रिसुपर्णमन्त्रस्य महिमानं दर्शयति—

य इदं त्रिसुपर्णमयाचितं ब्राह्मणाय दद्यात्। वीरहत्यां वा एते घ्नन्ति। ये ब्राह्मणास्त्रिसुपर्णं पठन्ति। ते सोमं प्राप्नुवन्ति। आसहस्रात्पङ्क्तिं पुनन्ति। ओम्, इति।

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके दशमप्रपाठके नारायणोपनिषदि पञ्चाशत्तमोऽनुवाकः ॥ ९० ॥

वेदशास्त्रतदनुष्ठानपरो ब्राह्मणोऽभिषिक्तो राजा वा वीरः। अन्यत्पूर्ववत्॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्ये दशमप्रपाठके नारायणीयापरनामधेययुक्तायां याज्ञिक्यामुपनिषदि पञ्चाशत्तमोऽनुवाकः ॥ ९० ॥

=====

अथैकपञ्चाशत्तमोऽनुवाकः।

ब्रह्मज्ञानप्रतिबन्धकानि यानि महापातकानि तन्निवृत्तये जप्यास्त्रिसुपर्णमन्त्रास्त्रयं भिहिताः। तत्र ब्राह्मणजातिमात्रवधो ब्रह्महत्या पञ्चसु महापातकेषु मध्ये प्रबलं म पातकम्। ततोऽप्यधिकं भ्रूणहननम्। तस्मादप्यधिकं वीरहननम्। ईदृशानामपि तेको यावज्जीवं त्रिसुपर्णजपस्तत्रार्वाचीनानां सुरापानादिपातकानां निवर्तक इति वक्तव्यम्। इत्थं प्रतिबन्धनिवृत्त्युपायमुक्त्वा ज्ञानयोग्यतायै स्वावयवशुद्ध्यर्थं होमा नेकादश मन्त्रानेकादशस्वनुवाकेषु क्रमेण विवक्षुराद्यं मन्त्रमाह—

प्राणापानव्यानोदानसमाना मे शुध्यन्तां ज्योति-

रहं विरजा विपाप्मा भूयास१ स्वाहा, इति ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके दशमप्रपाठके नारायणोपनिषद्येकपञ्चाशत्तमोऽनुवाकः ॥ ५१ ॥

प्राणादयः पञ्च वायवः प्रसिद्धाः । ते सर्वेऽप्यनेनाऽऽज्यहोमेन शुद्धा भवन्तु । ततोऽहं विपाप्मा प्रतिबन्धकोपपातकरहितो विरजाः पापकारणभूतरजोगुणेनापि रहितः सन्यज्ज्योतिर्जगत्कारणं परं ब्रह्म तद्रस्तु भूयासं तदर्थमिदमाज्यं स्वाहुतमस्तु ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्ये दशमप्रपाठके नारायणीयापरनामधेययुक्तायां याज्ञिक्यामुपनिषद्येकपञ्चाशत्तमोऽनुवाकः ॥ ५१ ॥

अथ द्विपञ्चाशत्तमोऽनुवाकः ।

द्वितीयं मन्त्रमाह—

वाङ्मनश्चक्षुःश्रोत्रजिह्वाघ्राणरेतो बुद्ध्याकूतिः संकल्पा मे शुध्यन्तां ज्योतिरहं विरजा विपाप्मा भूयास१ स्वाहा, इति ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके दशमप्रपाठके नारायणोपनिषदि द्विपञ्चाशत्तमोऽनुवाकः ॥ ५२ ॥

वागादीनीन्द्रियाणि । रेतो गुह्येन्द्रियम् । मनःशब्दवाच्यस्यान्तःकरणस्यैव निश्चयात्मिका वृत्तिर्बुद्धिः । अनिश्चयरूपा वृत्तिराकूतिः । इदं समीचीनमितिकल्पनारूपा वृत्तिः संकल्पः । अन्यत्पूर्ववत् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्ये दशमप्रपाठके नारायणीयापरनामधेययुक्तायां याज्ञिक्यामुपनिषदि द्विपञ्चाशत्तमोऽनुवाकः ॥ ५२ ॥

अथ त्रिपञ्चाशत्तमोऽनुवाकः ।

तृतीयं मन्त्रमाह—

शिरःपाणिपादपार्श्वपृष्ठोरूदरजङ्घशिश्नोपस्थपायवो मे शुध्यन्तां

ज्योतिरहं विरजा विपाप्मा भूयास९ स्वाहा, इति ।

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके दशमप्रपाठके नारायणोपनिषदि त्रिपञ्चाशत्तमोऽनुवाकः ॥ ५३ ॥

पूर्वाभ्यामनुवाकाभ्यां सूक्ष्मशरीरशुद्धिरुक्ता। अत्र स्थूलशरीरावयवानां शिरःपाण्यादीनां शुद्धिरुच्यते । लिङ्गाण्डभेदविवक्षया शिश्नोपस्थशब्दौ द्वौ द्रष्टव्यौ । अन्यत्पूर्ववत् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्ये दशमप्रपाठके नारायणीयापरनामधेययुक्तायां याज्ञिक्यामुपनिषदि त्रिपञ्चाशत्तमोऽनुवाकः ॥ ५३ ॥

अथ चतुष्पञ्चाशत्तमोऽनुवाकः ।

चतुर्थं मन्त्रमाह—

त्वक्चर्ममा९सरुधिरमेदोमज्जास्नायवोऽस्थीनि मे शुध्यन्तां ज्योतिरहं विरजा विपाप्मा भूयास९ स्वाहा, इति ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके दशमप्रपाठके नारायणोपनिषदि चतुष्पञ्चाशत्तमोऽनुवाकः ॥ ५४ ॥

अत्र स्थूलशरीरगतानां धातूनां शुद्धिरुच्यते । एकस्यैव धातोर्बाह्यान्तर्भागविवक्षया त्वक्चर्मशब्दौ प्रयुक्तौ । अन्यत्पूर्ववत् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्ये दशमप्रपाठके नारायणीयापरनामधेययुक्तायां याज्ञिक्यामुपनिषदि चतुष्पञ्चाशोऽनुवाकः ॥ ५४ ॥

अथ पञ्चपञ्चाशोऽनुवाकः ।

पञ्चमं मन्त्रमाह—

शब्दस्पर्शरूपरसगन्धा मे शुध्यन्तां ज्योतिरहं विरजा विपाप्मा भूयास९ स्वाहा, इति ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके दशमप्रपाठके नारायणोपनिषदि पञ्चपञ्चाशत्तमोऽनुवाकः ॥ ५५ ॥

१ " °णि स्थिता° २ ग. °रास्थिता° ।

शरीरोपादानपञ्चमहाभूतेष्वाकाशादिषु वर्तमाना गुणाः शब्दादयः । अन्यत्पूर्ववत् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्ये दशमप्रपाठके नारायणीयापरनामधेययुक्तायां याज्ञिक्यामुपनिषदि पञ्चपञ्चाशत्तमोऽनुवाकः ॥ ५५ ॥

अथ षट्पञ्चाशोऽनुवाकः ।

षष्ठं मन्त्रमाह—

**पृथिव्यप्तेजोवायुराकाशा मे शुध्यन्तां ज्योतिरहं विरजा विपाप्मा भूयासꣳ स्वाहा, इति ॥**

**इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके दशमप्रपाठके नारायणोपनिषदि षट्पञ्चाशत्तमोऽनुवाकः ॥ ५६ ॥**

शरीरस्योपादानकारणानि पञ्च महाभूतानि पृथिव्यादीनि । अन्यत्पूर्ववत् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्ये दशमप्रपाठके नारायणीयापरनामधेययुक्तायां याज्ञिक्यामुपनिषदि षट्पञ्चाशत्तमोऽनुवाकः ॥ ५६ ॥

अथ सप्तपञ्चाशत्तमोऽनुवाकः ।

सप्तमं मन्त्रमाह—

**अन्नमयप्राणमयमनोमयविज्ञानमयानन्दमया[1] मे शुध्यन्तां ज्योतिरहं विरजा विपाप्मा भूयासꣳ स्वाहा, इति ॥**

**इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके दशमप्रपाठके नारायणोपनिषदि सप्तपञ्चाशत्तमोऽनुवाकः ॥ ५७ ॥**

अन्नमयादयः पञ्च कोशा वारुण्यामुपनिषद्युक्ताः । अन्यत्पूर्ववत् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैतिरीयारण्यकभाष्ये दशमप्रपाठके नारायणीयापरनामधेययुक्तायां याज्ञिक्यामुपनिषदि सप्तपञ्चाशत्तमोऽनुवाकः ॥ ५७ ॥

१ ख. झ. °मयमानन्दमयमात्मा मे ।

अथाष्टपञ्चाशत्तमोऽनुवाकः ।

अष्टमं मन्त्रमाह—

विविट्यै स्वाहा, इति ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके दशमप्रपाठके नारायणोपनिषद्यष्टपञ्चाशत्तमोऽनुवाकः ॥ ५८ ॥

"विष्लृ व्याप्तौ" इति धातोरुत्पन्नोऽयं शब्दः । विशेषेण विष्टिर्व्याप्तिर्यस्य ब्रह्मणस्तद्विविष्टिः । छान्दसः षकारस्य टकारः । तादृशं ब्रह्मोद्दिश्य स्वाहुतमिदमस्तु ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्ये दशमप्रपाठके नारायणीयापरनामधेययुक्तायां याज्ञिक्यामुपनिषद्यष्टपञ्चाशत्तमोऽनुवाकः ॥ ५८ ॥

अथैकोनषष्टितमोऽनुवाकः ।

नवमं मन्त्रमाह—

कषोत्काय स्वाहा, इति ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके दशमप्रपाठके नारायणोपनिषद्येकोनषष्टितमोऽनुवाकः ॥ ५९ ॥

कष शिष करण इति धातुः । कष्यते क्रियत इति कषो नामरूपकर्मात्मकः कार्यप्रपञ्चः, तस्मिन्नुत्कस्तत्क(स्तं क)र्तुमुत्सुकः कषोत्कः परमेश्वरः, तादृशाय सृष्ट्यभिमुखाय परमेश्वराय स्वाहा स्वाहुतमिदमस्तु ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्ये दशमप्रपाठके नारायणीयापरनामधेययुक्तायां याज्ञिक्यामुपनिषद्येकोनषष्टितमोऽनुवाकः ॥ ५९ ॥

अथ षष्टितमोऽनुवाकः ।

दशमं मन्त्रमाह—

उत्तिष्ठ पुरुष हरित लोहित पिङ्गलाक्षि देहि देहि ददापयिता मे शुध्यन्तां ज्योतिरहं विरजा विपाप्मा भूयासꣲ स्वाहा, इति ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके दशमप्रपाठके नारायणोपनिषदि षष्टितमोऽनुवाकः ॥ ६० ॥

१ ग. °त. विकलांगिमानि ।

विविष्टिशब्दाभिधेयं यद्ब्रह्म तदेव कारणोपाधिकं कपोत्कशब्दाभिधेयम् । पुनरपि वह्निशरीरोपाधिविशिष्टमत्र पुरुषशब्दाभिधेयम् । तत्र पूर्वाभ्यां मन्त्राभ्यां निरुपाधिकं कारणोपाधिकं तद्ब्रह्म प्रार्थ्य शुद्धिहेतुत्वेनात्र सर्वकर्मनिष्पादकवह्निशरीरोपाधिकं प्रार्थ्यते । पुरुष पुरि वह्निशरीरे शयान हे परमात्मन्नात्मनिष्ठौदासीन्यं परित्यज्य मदनुग्रहार्थमुद्युक्तो भव । संबुद्ध्यन्तपुरुषशब्दस्यैव हरितादीनि त्रीणि पदानि विशेषणानि । हे हरित प्रतिबन्धकहरणकुशल हे लोहित रक्तवर्ण हे पिङ्गलाक्षि पिङ्गलनयन देहि देहि पुनः पुनः शुद्धिं मे प्रयच्छ । ददापयिताऽऽचार्यमुखात्तत्त्वज्ञानस्यातिशयेन दापयिता भवेति शेषः । तस्य दापयितव्यस्य ज्ञानस्योत्पत्तये मे मदीयाश्चित्तवृत्तयः शुध्यन्ताम् । ज्योतिरित्यादि पूर्ववत् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्ये दशमप्रपाठके नारायणीयापरनामधेययुक्तायां याज्ञिक्यामुपनिषदि षष्टितमोऽनुवाकः ॥ ६० ॥

=====

अथैकषष्टितमोऽनुवाकः ।

---

एकादशं मन्त्रमाह —

ॐ *स्वाहेति, इति ॥

**इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके दशमप्रपाठके नारायणोपनिषद्येकषष्टितमोऽनुवाकः ॥ ६१ ॥**

ओं प्रणवप्रतिपाद्यं वस्तु भवामि तदर्थमिदं स्वाहुतमस्तु ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्ये दशमप्रपाठके नारायणीयापरनामधेययुक्तायां याज्ञिक्यामुपनिषद्येकषष्टितमोऽनुवाकः ॥ ६१ ॥

=====

अथ द्विषष्टितमोऽनुवाकः ।

---

ज्ञानप्रतिबन्धकमहापातकोपपातकपरिहारेण ज्ञानयोग्यतालक्षणां शुद्धिमुक्त्वा योग्यस्य पुरुषस्यापेक्षितेषु ज्ञानसाधनेषु संन्यासस्य निरतिशयोत्कर्षं वक्तुं सत्यादीन्येकादशोत्कृष्टसाधनानि प्रतियोगित्वेन वक्तव्यानि । तत्र प्रथमं साधनमुपन्यस्यति—

**सत्यं परं पर᳚ँ सत्य᳚ँ सत्येन न सुवर्गाल्लोकाच्च्यवन्ते**

---

* अनिश्चितस्वरकमिदम् ।

कदाचन सताꣳ हि सत्यं तस्मात्सत्ये रमन्ते— , इति ।

यद्वस्तु प्रमाणेन यथा दृष्टं तस्य तथैवाभिवदनं **सत्यं** तच्च **परं** पुरुषार्थसाधनेषूत्कृष्टम् । तत्राऽऽदरार्थं **परं सत्यमिति** पुनर्वचनम् । यद्वा परं ब्रह्म सत्यमबाध्यं तद्वद्यथार्थवचनमपि बाधराहितमिति व्यावहारिकबाधराहित्येनोत्कर्षं विवक्षित्वा दृष्टान्तेन **परं सत्यमित्युक्तम्** । **सत्येन** यावज्जीवं यथार्थकथनेन **स्वर्गलोकात्कदाचिदपि न प्रच्यवन्ते** । अनृतवादिनस्तु केनचित्पुण्येन स्वर्गं प्राप्याप्यनृतवदनदोषेण कर्मफलं संपूर्णतयाऽननुभूयैव स्वर्गात्प्रच्यवन्ते । किंच **हि** यस्मात्कारणात्**सतां** सन्मार्गवर्तिनामृष्यादीनां संबन्धि यथार्थवादित्वं **तस्मात्**कारणात्सतामिदमिति व्युत्पत्तिमाश्रित्य सत्यवादित्वमेव परमं मोक्षसाधनमिति केचिन्महान्तो वदन्तस्तस्मिन्नेव **सत्ये रमन्ते** क्रीडन्ति ।

एकं मतमुक्त्वा द्वितीयं मतमाह—

तप इति तपो नानशनात्परं यद्धि परं तपस्तद्दु-
र्धर्षं तद्दुराधर्षं तस्मात्तपसि रमन्ते— , इति ।

तपः परं मोक्षसाधनमिति केषांचिन्मतम् । तीर्थयात्राजपहोमादीनि यद्यपि बहूनि तपांसि सन्ति तथाऽपि तेषु सर्वेष्व*नशनादुपवासैकभक्तादिरूपादशनवर्जनात्परमुत्कृष्टं **तपो नास्ति** । यद्धचनशनरूपं कृच्छ्रचान्द्रायणादिकं **परं तपोऽस्ति** तद्दुर्धर्षं धर्षितुं सोढुमशक्यम् । अत एवाऽऽ समन्तात्सर्वेषां प्राणिनां तत्तपो दुर्धर्षं दुःशकमित्यनुभूयते । **तस्मात्**करणात्केचन श्रद्धालवः कृच्छ्रचान्द्रायणादिके **तपसि रमन्ते** ।

तृतीयं मतमाह—

दम इति नियतं ब्रह्मचारिणस्तस्माद्दमे रमन्ते— , इति ।

वाक्चक्षुरादीन्द्रियाणां बाह्यानां निषिद्धेभ्यो विषयेभ्यो निवृत्तिर्**दमः**, स एवोत्तमो मोक्षहेतुरिति +मन्यमाना नैष्ठिक**ब्रह्मचारिणो नियतं** सर्वदा वदन्ति । **तस्माद्दमे रमन्ते** ।

चतुर्थं मतमाह—

शम इत्यरण्ये मुनयस्तस्माच्छमे रमन्ते— , इति ।

अन्तःकरणस्य क्रोधादिदोषराहित्यं **शमः**, स एवोत्तमो मोक्षहेतुरित्य**रण्ये** वर्तमाना **मुनयो** वानप्रस्था मन्यन्ते । **तस्मात्ते शमे रमन्ते** ।

---

* अत्र सकलादर्शपुस्तकेष्वनशनमित्येव पाठः । + मन्यमाना इत्याधिकम् । यद्वा मन्यमाना इति परित्यज्य वदन्तीत्यस्य स्थाने मन्यन्त इति पाठ्यम् ।

पञ्चमं मतमाह—

दानमिति सर्वाणि भूतानि प्रशꣳसन्ति
दानान्नातिदुष्करं तस्माद्दाने रमन्ते— , इति ।

गोहिरण्यादीनां स्वकीयानां शास्त्रोक्तवर्त्मना स्व[स्व]त्वपरित्यागपुरःसरं परस्वत्वा-
ादनं दानं तदेवोत्तमं मोक्षसाधनं मत्वा सर्वे प्राणिनः प्रशंसन्ति । दानादतिशयितं
ुष्करं नास्ति । धनरक्षणार्थं प्राणानपि परित्यजतां पुरुषाणामुपलम्भात् । तस्माद्गोभू-
्यादिदाने रमन्ते ।

षष्ठं मतमाह—

धर्म इति धर्मेण सर्वमिदं परिगृहीतं धर्मा-
न्नातिदुश्चरं तस्माद्धर्मे रमन्ते— ,इति ।

स्मृतिपुराणप्रतिपाद्यो वापीकूपतडागादिनिर्माणरूपोऽत्र धर्मो विवक्षितः । स
एवोत्तमो मोक्षहेतुरिति राजामात्यादयः प्रभवो मन्यन्ते । तडागादिरूपेण धर्मेण
सर्वमिदं जगत्परिगृहीतम् । *सर्वेऽपि मनुष्यपश्वादयः स्नानपानादिना तुष्यन्ति ।
ादृशाद्धर्मादन्यदतिदुश्चरं नास्ति । तस्मात्कारणाद्धर्मे रमन्ते प्रभवः ।

सप्तमं मतमाह—

प्रजन इति भूयाꣳसस्तस्माद्भूयिष्ठाः प्रजायन्ते
तस्माद्भूयिष्ठाः प्रजनने रमन्ते— , इति ।

प्रजनः पुत्राद्युत्पादनं तस्यैवोत्त+मसाधनत्वं भूयांसोऽतिबहवः प्राणिनो मन्यन्ते ।
धनिकैर्दरिद्रैः शिष्टैर्नष्टैः पण्डितैश्च सर्वैरपि पुत्रोत्पादनायातिशयेन =प्रयैत्यमानत्वात् ।
तस्मादेकैकस्य पुरुषस्य भूयिष्ठा द्वित्राः पञ्चषा इत्येवं बहवोऽपत्यविशेषा उत्पद्यन्ते ।
तस्मात्कारणाद्भूयिष्ठा अतिबहवः प्राणिनः प्रजोत्पादने रमन्ते ।

अष्टमं मतमाह—

अग्नय इत्याह तस्मादग्नय आधातव्याः— , इति ।

---

* अस्य यत इत्यादिः । + मोक्षं प्रतीत्यार्थिकः शेषः । = प्रयात्यमानत्वादिति पाठ्यम् । ह्रस्वपाठस्तु प्रामादिकः । वाक्यस्यासाधुत्वापत्तेः । धनिकादीनां सर्वेषामित्यार्थिकोऽध्याहारः । तथा च येऽन्यान्प्रयोजयन्ति ते स्वयं कुर्वन्तीति किमु वक्तव्यम् । तेषां च पुत्राद्युत्पादनस्य मुख्यसाधनत्वग्रहाभावे स्वयं तद्यत्नं न कुर्युः परैश्च तं न कारयेयुः । तस्मात्पूर्वोक्तो ग्रहोऽस्त्येव तेषा- मित्याशयः । प्रयत्नस्याऽऽदृतत्वादिति वा पाठः कल्पनीयः । धनिकादिपदेषु षट्सु षष्ठ्यन्ततां प्रकल्प्य ख. पुस्तकस्थः प्रयतमानत्वादिति शोधितपाठ एव वा स्वीकार्यः ।

---

°श भरिग: प° ।

अग्नयो गार्हपत्यादय उत्तमा मुक्तिहेतव इति कश्चिद्वेदार्थपर आह। तस्माद्गृहस्थैरग्नय आधातव्या भवन्ति।

नवमं मतमाह—

अग्निहोत्रमित्याह तस्मादग्निहोत्रे रमन्ते—, इति।

आहितेष्वग्निषु सायं प्रातश्चानुष्ठेयो होमोऽग्निहोत्रं तदुत्तमं मोक्षसाधनमित्यपरः कश्चिद्वेदार्थपर आह। तस्मात्केचिदग्निहोत्रे रमन्ते।

दशमं मतमाह—

यज्ञ इति यज्ञेन हि देवा दिवं
गतास्तस्माद्यज्ञे रमन्ते—, इति।

दर्शपूर्णमासज्योतिष्टोमादिको यज्ञ उत्तमो मोक्षहेतुरित्यपरे वेदार्थपरा मन्यन्ते यस्मादिदानीं वर्तमाना देवाः पूर्वानुष्ठितेन यज्ञेन दिवं गताः स्वर्गलोकं प्राप्ताः, तस्मात्कारणात्केचन वैदिका विद्वांसो यज्ञे रमन्ते।

एकादशं मतमाह—

मानसमिति विद्वाꣳसस्तस्माद्विद्वाꣳस एव मानसे रमन्ते—, इति।

मनसैव निष्पाद्यमुपासनं मानसं तदेवोत्तमं साधनमिति विद्वांसः सगुणब्रह्मविदो मन्यन्ते। तस्मात्कारणात्केचन विद्वांसो वेदगतोपास्तिभागतात्पर्यविदो मानस एवोपासने रमन्ते।

द्वादशं मतमाह—

न्यास इति ब्रह्मा ब्रह्मा हि परः परो
हि ब्रह्मा तानि वा एतान्यवराणि
तपाꣳसि न्यास एवात्यरेचयत्—, इति।

पूर्वकाण्डोक्तानामग्निहोत्रादिकर्मणामारुणिजाबालाद्युपनिषदुक्तप्रकारेण परित्यागो न्यासः, स एवोत्तमो मोक्षहेतुरिति ब्रह्मा हिरण्यगर्भो मन्यते। स च ब्रह्मा परो हि परमात्मरूपो हि। ननु पूर्वोक्तमतानुसारिण इव जीवः। यद्यप्यसौ हिरण्यगर्भो देहधारी तथाऽपि परो हि परमात्मैव ब्रह्मा हिरण्यगर्भ इति वक्तुं शक्यते, तच्छिष्यत्वेन तत्समामज्ञानत्वात्। अत एव श्वेताश्वतरा आमनन्ति—"यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै" इति। यानि पूर्वोक्तसत्यादीनि मानसान्तानि तान्येतानि तपांसि भवन्त्येव तथाऽपि संन्यासमपेक्ष्यावराणि निकृष्टानि।

संन्यास एक एव सर्वाण्यत्यरेचयत्, अतिक्रान्तवान्। उत्तमत्वतारतम्यं तत्र विश्रान्तमित्यर्थः।

उक्तमुत्तमसाधनमुपसंहरति—

य एवं वेदेत्युपनिषत् , इति ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके दशमप्रपाठके नारायणोपनिषदि द्विषष्टितमोऽनुवाकः ॥ ६२ ॥

यः पुमानेवमुक्तप्रकारेण संन्यासस्यान्येभ्यः सर्वेभ्यः साधनेभ्य उत्तमत्वं वेद तस्य विदुष इत्युक्ता विद्योपनिषद्रहस्यभूता भवति ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्ये दशमप्रपाठके नारायणीयापरनामधेययुक्तायां याज्ञिक्यामुपनिषदि द्विषष्टितमोऽनुवाकः ॥ ६२ ॥

अथ त्रिषष्टितमोऽनुवाकः।

पूर्वोक्तं मोक्षसाधनसमूहमुपपादयितुमाख्यायिकामाह—

प्राजापत्यो हाऽऽरुणिः सुपर्णेयः प्रजापतिं पितरमुपससार किं भगवन्तः परमं वदन्तीति तस्मै प्रोवाच—, इति।

प्रजापतेः पुत्रः प्राजापत्यः, स चाऽऽरुणिनामकः। स एव सुपर्णाख्यायाः *स्त्रिया अपत्यत्वात्सुपर्णेय इत्युच्यते। तादृशः पुरुषः स्वकीयं पितरं प्रजापतिमुपससार। उत्तमसाधनजिज्ञासयोपसन्नवान्। उपसद्य चैवं पप्रच्छ। हे प्रजापते भगवन्तः पूज्या महर्षयो मोक्षसाधनेषु किं साधनं परममुत्कृष्टं वदन्ति। एवं पृष्टः प्रजापतिस्तस्मा आरुणये प्रोवाच।

तदुक्तेषु साधनेषु प्रथमं दर्शयति—

सत्येन वायुरावाति सत्येनाऽऽदित्यो रोचते दिवि सत्यं वाचः प्रतिष्ठा सत्ये सर्वं प्रतिष्ठितं तस्मात्सत्यं परमं वदन्ति—, इति।

योऽयं वायुरिदानीमन्तरिक्षे वाति सोऽयं पूर्वजन्मनि मनुष्यः सन्सत्यवादित्वं परिपाल्य तेन सत्येन वायुदेवतात्वं प्राप्येदानीं लोकानुग्रहायान्तरिक्षे वाति। तथैवाऽऽदित्योऽपि पूर्वजन्मानुष्ठितेन सत्येन दिवि रोचते द्युलोके प्रकाशते। यदेत-

*अत्र [illegible]

त्सत्यं तदेतद्वाचो वागिन्द्रियस्य प्रतिष्ठा स्थिरावस्थानम् । अनृतं तु वाचोक्तमपि परैर्निराक्रियत इति न वाचः प्रतिष्ठा । तथा सति लोके सत्ये भाषणे सर्वं प्रामाणिकव्यवहारजातं प्रतिष्ठितं तस्मात्कारणात्सत्यमेव परमं साधनमित्येवं केचिदनुष्ठातारो वदन्ति ।

तत्राऽऽरुणेर्मुखविकासराहित्यलक्षणमपरितोषं दृष्ट्वा द्वितीयं साधनमाह—

तपसा देवा देवतामग्र आयन्तपसर्षयः सुवरन्वविन्दन्तपसा सपत्नान्प्रणुदामारातीस्तपसि सर्वं प्रतिष्ठितं तस्मात्तपः परमं वदन्ति—, इति ।

इदानीं स्वर्गे वर्तमाना अग्नीन्द्रादयो देवा अग्रे पूर्वजन्मन्यनुष्ठितेनाशनपरित्यागरूपेण कृच्छ्रचान्द्रायणादितपसा देवतामायन्निदानींतनं देवतात्वं प्राप्ताः । तथा वसिष्ठादयो महर्षयः पूर्वानुष्ठितेन तपसा सुवरन्वविन्दन्स्वर्गलोकमनुक्रमणे लब्धवन्तः तथा वयमपीदानीमभिचाररूपेण तपसा सपत्नाञ्शत्रूनरातीरस्मदीयद्रव्यलाभविरोधिनः पुरुषानपि प्रणुदाम निराकुर्मः[१] । अन्यदपि सर्वं फलजातं तपसि प्रतिष्ठितम् तस्मादनशनरूपं तपः परमं मोक्षसाधनमिति केचिद्वदन्ति ।

अत्रापि पूर्ववदपरितोषं दृष्ट्वा तृतीयं साधनमाह—

दमेन दान्ताः किल्बिषमवधून्वन्ति दमेन ब्रह्मचारिणः सुवरगच्छन्दमो भूतानां दुराधर्षं दमे सर्वं प्रतिष्ठितं तस्माद्दमः परमं वदन्ति—, इति ।

दान्ता बाह्येन्द्रियनियमयुक्ताः पुरुषास्तेन दमेन स्वकीयं पापं विनाशयन्ति तथा नैष्ठिकब्रह्मचारिणो दमेन स्वर्गमगच्छन् । स च दमो भूतानां प्राणिनां दुराधर्षमाधर्षितुं सर्वतः सोढुं दुःशकः । तस्मिंश्च दमे सर्वमपेक्षितं फलं प्रतिष्ठितम् । तस्मात्कारणाद्दमः परमं मुक्तिसाधनमिति केचिद्वदन्ति । अत्र[३] सर्वत्र पूर्वसाधने परितोषराहित्यादुत्तरसाधनोक्तिर्द्रष्टव्या ।

चतुर्थं साधनमाह—

शमेन शान्ताः शिवमाचरन्ति शमेन नाकं मुनयोऽन्वविन्दञ्छमो भूतानां दुराधर्षं शमे

१ ग. सत्यभाषणोक्तं स° । २ ग. °र्मः । तस्मिंस्तपसि सर्वमपेक्षितं फलं प्रति° । ३ ।

सर्वं प्रतिष्ठितं तस्माच्छमः परमं वदन्ति—, इति ।

शान्ता अन्तःकरणक्रोधादिरहिताः पुरुषास्तेन शमेन शिवं मङ्गलं पुरुषार्थमाचरन्ति । नारदाद्या मुनयः शमेन स्वर्गमलभन्त । अन्यत्पूर्ववत् ।

पञ्चमं साधनमाह—

दानं यज्ञानां वरूथं दक्षिणा लोके दातारꣳ सर्वभूतान्युपजीवन्ति दानेनारातीरपानुदन्त दानेन द्विषन्तो मित्रा भवन्ति दाने सर्वं प्रतिष्ठितं तस्माद्दानं परमं वदन्ति—, इति ।

गोहिरण्यादिदानं यज्ञानां संबन्धिनी दक्षिणा भवति, तस्माद्वरूथं श्रेष्ठम् । लोकेऽपि दातारं पुरुषं वेदशास्त्रविदो मूढाश्च सर्वेऽपि पुरुषा उपजीवन्ति । तथा योद्धॄणां भटानां धनदानेनारातीः शत्रूनपानुदन्त राजानो निराकृतवन्तः । ये तु प्रबला द्विषन्तस्तेऽपि दानेन तुष्टा मित्राणि[1] भवन्ति । अन्यत्पूर्ववत् ।

षष्ठं साधनमाह—

धर्मो विश्वस्य जगतः प्रतिष्ठा लोके धर्मिष्ठं प्रजा उपसर्पन्ति धर्मेण पापमपनुदति[2] धर्मे सर्वं प्रतिष्ठितं तस्माद्धर्मं परमं वदन्ति—, इति ।

तडागप्रपादिनिर्माणरूपो धर्मो विश्वस्य जगतः सर्वस्य प्राणिजातस्य प्रतिष्ठाऽऽश्रय इत्येतत्प्रसिद्धम् । तथा लोके धर्मिष्ठमतिशयेन धर्मे वर्तमानं पुरुषं प्रजाः सर्वा उपसर्पन्ति धर्माधर्मनिर्णयार्थमुपगच्छन्ति । किंच प्रायश्चित्तरूपेण धर्मेण पापं विनाशयन्ति । अन्यत्पूर्ववत् ।

सप्तमं साधनमाह—

प्रजननं वै प्रतिष्ठा लोके साधु प्रजायास्तन्तुं तन्वानः पितॄणामनृणो[3] भवति तदेव तस्या[4] अनृणं तस्मात्प्रजननं परमं वदन्ति—, इति ।

प्रजननं पुत्रोत्पादनं यदस्ति तदेव गृहस्थानां प्रतिष्ठा पुत्रस्य गृहकृत्यनिर्वाहकत्वात् । " सोऽयं मनुष्यलोकः पुत्रेणैव जय्यो नान्येन कर्मणा " इति श्रुतेः । किंच प्रजायाः पुत्रपौत्रादिरूपायास्तन्तुं परम्परां साधु तन्वानः शास्त्रीयमार्गो यथा भवति

---

१ ख. ग. मित्रा । २ ग. °दन्ति ध° । ३ झ. पितॄणा° । ४ ग. तस्य । झ. तस्यानृ° ।

तथा विस्तारयन्पितॄणां मृतानां पितृपितामहादीनामनृणो भवति तदीयमृणं पुत्रिणा प्रत्यर्पितं भवति। यत्प्रजननं तदेव तस्य पुत्रिण ऋणापाकरणहेतुः। अन्यत्पूर्ववत्।

अष्टमं साधनमाह—

अग्नयो वै त्रयीविद्या देवयानः पन्था गार्हपत्य ऋक्पृथिवी रथंतरमन्वाहार्यपचनं यजुरन्तरिक्षं वामदेव्यमाहवनीयः साम सुवर्गो लोको बृहत्तस्मादग्नीन्परमं वदन्ति—, इति।

गार्हपत्यो दक्षिणाग्निराहवनीय इति येऽग्नयः सन्ति त एव त्रयीविद्या वेदत्रयात्मिका वेदत्रयोक्तकर्मसाधनत्वाद्वेदविहितत्वाच्च देवयानो यागद्वारेण देवत्वप्रापको मार्गश्च। किंच तेषामग्नीनां मध्ये गार्हपत्योऽग्निर्ऋग्वेदात्मकः पृथिवीलोकस्वरूपो रथंतरसामात्मकश्चेति प्रशस्यते। अन्वाहार्यपचनो दक्षिणाग्निर्यजुर्वेदान्तरिक्षलोकवामदेव्यसामात्मकः। आहवनीयाग्निस्तु सामवेदस्वर्गलोकबृहत्सामात्मकः। अन्यत्पूर्ववत्।

नवमं साधनमाह—

अग्निहोत्रꣳ सायं प्रातर्गृहाणां निष्कृतिः स्विष्टꣳ सुहुतं यज्ञक्रतूनां प्रायणꣳ सुवर्गस्य लोकस्य ज्योतिस्तस्मादग्निहोत्रं परमं वदन्ति—, इति।

सायं प्रातश्चानुष्ठितमग्निहोत्रं गृहाणां निष्कृतिः क्रयसाधनं मूल्यम्, अग्निहोत्राभावे क्षुधितोऽग्निर्गृहान्दहेत्। किंचाग्निहोत्रं स्विष्टं शोभनयागरूपं सुहुतं शोभनहोमरूपम्। देवतामुद्दिश्य द्रव्यत्यागो यागः। तस्य द्रव्यस्याग्नौ प्रक्षेपो होमः। किंचैतद्यज्ञक्रतूनां प्रायणं प्रारम्भः। अग्न्याधेयमग्निहोत्रं दर्शपूर्णमासावाग्रयणं चातुर्मास्यानि निरूढपशुबन्धः सौत्रामणीति सप्त हविर्यज्ञाः। क्रतुशब्दो यूपवत्सु सोमयागेषु रूढः। अग्निष्टोमोऽत्यग्निष्टोम उक्थ्यः षोडशी वाजपेयोऽतिरात्रोऽप्तोर्यामश्चेति सप्त सोमसंस्थाः क्रतवः। तेषां सर्वेषां यज्ञक्रतूनां प्रारम्भकमग्निहोत्रम्। अत एव स्वर्गस्य लोकस्य ज्योतिः प्रकाशकम्। अन्यत्पूर्ववत्।

दशमं साधनमाह—

यज्ञ इति यज्ञेन हि देवा दिवं गता यज्ञेनासुरानपानुदन्त यज्ञेन द्विषन्तो मित्रा भवन्ति यज्ञे

---

क. °द्वितीर्था°।

सर्वं प्रतिष्ठितं तस्माद्यज्ञं परमं वदन्ति—, इति।

यज्ञ उत्तमं साधनमिति केचिदाहुः। यज्ञो हि देवानां प्रियः। ते हि देवाः पूर्वानुष्ठितेन यज्ञेन स्वर्गं प्राप्ताः। किंच यज्ञेनैव तदा तदा देवा असुरान्विनाशितवन्तः। किंच सर्वकामप्राप्तिसाधनेन ज्योतिष्टोमेन द्वेषशान्तिकामस्य पूर्वं द्वेषं कुर्वन्तोऽपि शत्रवो मित्रा [ मित्राणि ] भवन्ति। अन्यत्पूर्ववत्।

एकादशं साधनमाह—

मानसं वै प्राजापत्यं पवित्रं मानसेन मनसा साधु पश्यति मानसा ऋषयः प्रजा असृजन्त मानसे सर्वं प्रतिष्ठितं तस्मान्मानसं परमं वदन्ति—, इति।

मनसा निष्पाद्यं मानसमुपासनं यदस्ति तदेव प्राजापत्यं प्रजापतिपदप्राप्तिसाधनम्, अत एव पवित्रं चित्तशुद्धिकारणम्। मानसेनोपासनेन युक्तं मनोऽन्तःकरणं यदस्ति तेनैकाग्रेण मनसा साधु पश्यति, अतीतानागतव्यवहितादिवस्तुजातं योगी सम्यक्साक्षात्करोति। एतच्च योगशास्त्रे पतञ्जलिना बहुधा प्रपञ्चितम्। मानसा एकाग्रमनोयुक्ता विश्वामित्रादय ऋषयः स्वसंकल्पमात्रेण बह्वीः प्रजा असृजन्त। अन्यत्पूर्ववत्।

द्वादशं साधनमाह—

न्यास इत्याहुर्मनीषिणो ब्रह्माणम्—, इति।

न्यास इत्युक्तो यो मोक्षहेतुः, तं ब्रह्माणं हिरण्यगर्भरूपं मनीषिणो बुद्धिमन्तो महर्षयः स्मृतिकर्तार आहुः। तथा च "संन्यासाद्ब्रह्मणः स्थानम्" इति स्मर्यते। हिरण्यगर्भप्राप्तेरन्तरङ्गसाधनत्वात्तद्रूपत्वम्।

तमेव संन्यासं स्तोतुं तत्प्राप्यस्य हिरण्यगर्भस्य स्वरूपं प्रपञ्चयति—

ब्रह्मा विश्वः कतमः स्वयंभूः प्रजापतिः संवत्सर इति—, इति।

यो ब्रह्मा हिरण्यगर्भः सोऽयं विश्वः सर्वजगदात्मकः। कतमोऽतिशयेन सुखस्वरूपः। स्वयंभूरुत्पादकाभ्यां मातापितृभ्यां विना स्वयमेवोत्पन्नः। प्रजापतिः प्रजानां पालकः। संवत्सरः कालात्मकः। इतिशब्दः प्रदर्शनार्थः। इत्यादिसर्वस्वरूपत्वमुन्नेयमित्यर्थः।

पुनरपि संन्यासस्तुतये हिरण्यगर्भावयवस्य संवत्सरस्य माहात्म्यं दर्शयति—

संवत्सरोऽसावादित्यो य एष आदित्ये

पुरु॑षः स प॑रमे॒ष्ठी ब्रह्मा॒ऽऽत्मा— , इति ।

योऽयं संवत्सरः काल उक्तः सोऽसावादित्यस्वरूप एव । आदित्यगत्यभ्या*सेन निष्पादित्वात् । य एष तस्मिन्नादित्यमण्डले पुरुषः स एव परमेष्ठी हिरण्यगर्भरूपः, आदित्यमण्डलद्वारेण हिरण्यगर्भस्य प्राप्यत्वात् । स च परमेष्ठी ब्रह्म सर्वजगत्कारणं वस्तु । तथैवाऽऽत्मा सर्वेषां प्रत्यगात्मभूतः ।

एवमादित्यादिद्वारा संवत्सरं प्रशस्य तमादित्यमण्डलद्वारेण सर्वव्यवहारहेतुतया प्रशंसति—

याभि॑रादि॒त्यस्तप॑ति र॒श्मिभि॒स्ताभिः॑ प॒र्जन्यो॑ वर्षति प॒र्जन्ये॑नौषधिवनस्पतयः प्रजा॑यन्त ओषधिवनस्पति॒भिर॑न्नं भवत्य॒न्नेन प्रा॒णाः प्रा॒णैर्ब॒लं ब॒ले॑न तप॒स्तप॑सा श्र॒द्धा श्र॒द्धया॑ मे॒धा मे॒धया॑ मनी॒षा म॑नी॒षया॑ मनो॒ मन॑सा शान्तिः॒ शान्त्या॑ चि॒त्तं चि॒त्तेन॒ स्मृतिः॒ स्मृ॒त्या स्मार॒ꣳ स्मारे॑ण वि॒ज्ञानं॑ वि॒ज्ञाने॑नाऽऽत्मानं॑ वेदयति॒ तस्मा॑द॒न्नं दद॒[1]त्सर्वा॑ण्येतानि॑ ददात्य॒न्नात्प्रा॒णा भ॑वन्ति भू॒ताना॑ं प्रा॒णैर्मनो॒ मन॑सश्च वि॒ज्ञानं॑ वि॒ज्ञाना॑दान॒न्दो ब्रह्म॒ योनिः॑—,इति ।

अयमादित्यो याभिरुष्णस्व[2]रूपाभी रश्मिभिस्तपति प्रभूतं संतापं करोति, ताभिस्तीव्ररश्मिभिर्भूमिगतं जलमादाय पर्जन्यो भूत्वा वर्षति । तेन च पर्जन्येन वृष्टिजनकेन व्रीह्याद्या ओषधयोऽश्वत्थपनसाद्या वनस्पतयश्च प्रकर्षेणोत्पद्यन्ते । ओषधिभिर्वनस्पतिभिश्च भोज्यमन्नं संपद्यते । तेन चान्नेन प्राणाः पोषिता भवन्ति । तैश्च पुष्टैः प्राणैः शरीरे बलं संपद्यते । तेन बलेन कृच्छ्रचान्द्रायणादिरूपं तपः [3]संपद्यते । तेन च तपसा शुद्धचित्तस्य तत्त्वज्ञानविषया श्रद्धा जायते । त[4]या च श्रद्धया पुरुषस्यैवास्तिकस्य मेधा गुरूपदिष्टग्रन्थार्थधा[6]रणशक्तिरुपजायते । तय च मेधया मनीषा तत्त्वविषया बुद्धिरुत्पद्यते । तथा च मनीषया मनो निरन्तरं तत्त्वविषयं मननमुपजायते । तेन च मनसा मनने कामक्रोधादिदोषस्यावसराभावाच्छान्तिरुपजायते । तया च शान्त्या विक्षेपरहितस्य चित्तं चेतनं तत्त्वविषयं प्रमाणजनितं ज्ञानमुपजायते तेन च चित्तेन ज्ञानेन निद्रादिव्यवहारव्यवधानेऽपि तत्त्वविषयां स्मृतिं प्राप्नोति । तया च निद्राद्यनन्तरभाविन्या स्मृत्या स्मारं निरन्तर-

*अभ्यास आवृत्तिः ।

१ ङ. °दत्सर्वा° । २ ख. °रूपर° । ३ ग. ङ. संपाद्यते । ४ ख. °या श्र° । ५ ङ. °या [illegible] । ६ ख. °न्तरं स्म° ।

स्मरणं प्राप्नोति । तेन च **स्मारेण विज्ञानं** विजातीयप्रत्ययव्यवधानराहित्येन विशिष्टं संततं ज्ञानं प्राप्नोति । तेन च **विज्ञानेन** संततेनाऽऽत्मानं **वेदयति** । परमात्मानं सर्वदाऽनुभवति । यस्मादन्नस्योक्तप्राणबलादिपरम्परया परमात्मानुभवहेतुत्वं तस्मा-दीदृशमन्नं **ददन्पुरुषः सर्वाण्येतानि** प्राणादीन्यात्मानुभवान्तानि वस्तूनि **ददाति** । अन्नदानस्य सर्वदानरूपत्वं विस्पष्टयितुमुक्तमेवार्थं पुनरप्यन्नात्प्राणा भवन्तीत्यादि-वाक्येन संक्षिप्योपन्यस्यते । प्राणादिपरम्परयोत्पन्नाद्विज्ञानादानन्दः परमानन्द-रूपो भूत्वा **ब्रह्म** वेदान्तप्रतिपाद्यं **योनिर्जगत्कारणम्** । यद्वा ब्रह्मणो वेदस्य योनिः कारणं तादृग्रूपः स्वयं भवति ।

यथोक्तं संन्यासमेव स्तोतुं तेन संन्यासेन प्राप्ततत्त्वज्ञानं पुरुषं प्रशंसति—

**स वा एष पुरुषः पञ्चधा पञ्चात्मा येन सर्वमिदं प्रोतं पृथिवी चान्तरिक्षं च द्यौश्च दिशश्चावान्तरदिशाश्च स वै सर्वमिदं जगत्स स भूतꣳ स भव्यं जिज्ञासक्लृप्त ऋतजा रयिष्ठाः श्रद्धा सत्यो *महस्वान्तमसोपरिष्टात्—**, इति ।

यः पुरुषः संन्यासपुरःसरं तत्त्वज्ञानं संपादयति **स एवैष पुरुषः** सर्वात्मकः सन्**पञ्चधा** पञ्चभिः प्रकारैः **पञ्चात्मा** पञ्चविधवस्तुस्वरूपो भवति । शब्दस्पर्शादिकं गुणपञ्चकं पृथिव्यादिकं भूतपञ्चकं चक्षुःश्रोत्रादिकं ज्ञानेन्द्रियपञ्चकं वाक्पाण्यादिकं कर्मेन्द्रियपञ्चकं प्राणापानादिकं वायुपञ्चकमेतावतां वस्तूनां स्वरूपभूत इत्यर्थः । यद्वा पञ्चभिरात्मभिर्युक्तः पञ्चधा वर्तते ।

तथा च **पुराणे**ऽभिहितम्—

"भूतात्मा चेन्द्रियात्मा च प्रधानात्मा तथा भवान् ।
आत्मा च परमात्मा च त्वमेकः पञ्चधा स्थितः" ॥ इति ।

**येन** ब्रह्मस्वरूपेण पुरुषेण **सर्वमिदं** जगत्सूत्रे मणिगणा इव **प्रोतं** प्रकर्षेण स्यूतं व्याप्तमित्यर्थः । तदेव सर्वं **पृथिवी** चेत्यादिना प्रपञ्च्यते । **स** एव पृथिव्यादिवस्तु-व्यापी पुरुषः **सर्वमिदं** वर्तमानं **जगत्**, तत्त्वदृष्ट्या व्यतिरेकेणाभावात् । तथा **भूत**मतीतं च जगत्स एव । **भव्यं** भविष्यदपि जगत्स एव । ननु तत्त्ववित्पुरुषो मूढवद्ध-स्तपादादियुक्तदेहरूप एव दृश्यते, न तु सर्वजगत्स्वरूप इति चेत् । मैवम् । यतोऽयं **जिज्ञासक्लृप्तो** जिज्ञासया वेदान्तविचारेण सर्वात्मकतया निश्चितो भवति । **ऋतजा** ऋतेन सत्येन प्रामाणिकेन ज्ञानेन सर्वात्मा जातः, जिज्ञासाकाले भ्रान्तिज्ञानरूपेषु पूर्व-

* १ ग. पुस्तके महस्वांस्तमसो वरिष्ठादिति पाठः ।

[illegible] 'विश्वश्च । ३ ब. 'ष्ट्या तद्व्यति° ।

पक्षेषु निराकृतेषु प्रामाणिकेन सिद्धान्तज्ञानेन तादृशो जातो भवति । स च रयिष्ठा रयिर्धनं गुरूपदेशस्तत्रैव तिष्ठति । न तूपदेशरहितानां प्रतीयत इत्यर्थः । ईदृशस्वरूपविज्ञानस्य श्रद्धया लभ्यत्वादसौ श्रद्धारूपः । "श्रद्धावाँल्लभते ज्ञानम्" इति स्मृतेः । सत्यमबाध्यं यद्ब्रह्म तत्स्वरूपत्वादयं सत्यः । महस्वांस्तेजस्वान्स्वयंप्रकाश इत्यर्थः । अत एव तमसा संसारकारणेनाज्ञानेन वियुक्तत्वादुपरिष्टाद्वर्तते ।

इत्थं संन्यासपूर्वकज्ञानयुक्तं पुरुषं प्रशस्य ज्ञानफलं दर्शयति—

ज्ञात्वा तमेवं मनसा हृदा च भूयो
न मृत्युमुपयाहि विद्वान्— , इति ।

हे, आरुणे त्वं तं परमात्मानं हृदा हृत्पुण्डरीकनियमितत्वाद्धृदयरूपेण मनसैवं पूर्वोक्तसंन्यासरूपसाधनप्रकारेण ज्ञात्वा विद्वांस्तेन ज्ञानेन युक्तः सन्भूयः पुनर्मृत्युं नोपयाहि मा प्राप्नुहि । ज्ञानिनो वर्तमानदेहपाते सति जन्माभावात्पुनर्मृत्युर्नास्तीत्यर्थः ।

बहुधा प्रशस्तं संन्यासमुपसंहरति—

तस्मान्न्यासमेषां तपसामतिरिक्तमाहुः— , इति ।

यस्मात्परमपुरुषार्थस्यान्तरङ्गं साधनं तस्मादेषां सत्यादीनां तपसां मध्ये संन्यासमतिरिक्तमत्युत्कृष्टं साधनं मनीषिण आहुः ।

संन्यासादूर्ध्वं प्रणवेनाऽऽत्मनि समाधिर्विधेयः । तस्मिन्समाधौ विघ्नपरिहारार्थमादावन्तर्यामिणः सर्वकारणत्वेन स्तुतिं दर्शयति—

वसुरण्वो विभूरसि प्राणे त्वमसि संधाता ब्रह्म-
न्त्वमसि विश्वसृत्तेजोदास्त्वमस्यग्नेरसि वर्चोदा-
स्त्वमसि सूर्यस्य द्युम्नोदास्त्वमसि चन्द्रमस उप-
यामगृहीतोऽसि ब्रह्मणे त्वा महसे— , इति ।

हे ब्रह्मन्नन्तर्यामिन्वसुरण्वो वसुनो वस्तुतत्त्वस्य रण्वो रणिता कथयिताऽस्मदनुग्रहार्थमुपदेष्टाऽसि । तथा विभूर्हिरण्यगर्भविराडादिविविधरूपेणोत्पन्नोऽसि प्राणे वायुरूपे जीवात्मनः संधाता संयोजयिता त्वमसि । विश्वं सरति प्राप्नोतीति विश्वसृत्सर्वजगद्व्यापी त्वमसि । भूलोकवर्तिनोऽग्नेस्तेजोदाः प्रकाशप्रदस्त्वमसि । द्युलोकवर्तिनः

१ ख. 'नेनेदृ° । २ ग. °शो भ° । ३ झ. °ति । तदुप° । ४ झ. °नां तथा न प्र° । ५ ग. श्रुतेः । ६ ख. ग. °काशत इ° । ७ झ. °रीकेण । नि° । ८ झ. °श्वसृक्तेजो° । [illegible] 'श्वसक्सर्व° ।

सूर्यस्य वर्चोदाः प्रकाशप्रदस्त्वमसि । तथा चन्द्रमसो शुभ्रोदाः प्रकाशरूपधनप्रदस्त्वमसि । तथा यागेषु सोमरूपः सन्नुपयामेन पार्थिवेन[1] मृन्मयदारुमयपात्रेण गृहीतोऽसि । उपयामशब्दस्य पृथिवीपरत्वं षष्ठकाण्डे मन्त्रव्याख्याने समाम्नातम्—उपयामगृहीतोऽसीत्याहेयं वा उपयामः " इति । उक्तप्रकारं सर्वकर्तारमन्तर्यामिणं त्वा महसे ब्रह्मणे चैतन्यज्योतिःस्वरूपब्रह्मतत्त्वाभिव्यक्त्यर्थं भजामीति शेषः ।

अनेन प्रकारेणान्तर्यामिणं[2] स्तुत्वा परिहृतविघ्नस्य संन्यासिनः समाधिं विधत्ते—

**ओमित्यात्मानं युञ्जीत— , इति ।**

त्रिमात्रं[3] प्रणवमुच्चारयन्सर्ववेदान्तेषु निर्णीतं परमात्मानं स्वरूपत्वेन[4] चित्ते समादध्यात्[5] ।

समाधिसाधनमोंकारं प्रशंसति—

**एतद्वै महोपनिषदं देवानां गुह्यम्— , इति ।**

यत्प्रणवस्वरूपमस्त्येतदेव महोपनिषदं महत्यो बह्व्य उपनिषदः प्रतिपादिका यस्य परमात्मवाचकस्य प्रणवरूपस्य तन्महोपनिषदम् । अकारान्तत्वं छान्दसम् । " सर्वे वेदा यत्पदमामनन्ति तत्ते पदं संग्रहेण ब्रवीम्योमित्येतत् " इति प्रणवस्य सर्वोपनिषत्प्रतिपाद्यत्वं कठवल्लीषु श्रुतम् । तच्च प्रणवरूपं निर्गुणतत्त्वप्रतिपादकं देवानामिन्द्रादीनां गुह्यं गोप्यम् । ते हि शमदमाद्यधिकारसंपत्तिरहिताय प्रणवं नोपदिशन्ति ।

यथोक्तप्रणवसमाधिजनितस्य तत्त्ववेदनस्य फलं दर्शयति—

**य एवं वेद ब्रह्मणो महिमानमा-**
**प्नोति तस्माद्ब्रह्मणो महिमानम्— , इति ।**

यः पुमान्संन्यासादूर्ध्वं प्रणवेन ब्रह्मतत्त्वसमाधिं कुर्वन्नेवं वेदान्तमहावाक्योक्तप्रकारेण वेद ब्रह्मतत्त्वं जानाति, असौ ज्ञानी स्वस्मिन्नविद्याकल्पितं जीवत्वापादकं परिच्छेदमपहाय देशकालवस्तुपरिच्छेदशून्यस्य ब्रह्मणो महिमानं महत्त्वमाप्नोति । तत्त्ववेदनेन जीवत्वभ्रमो[6] निवर्तते ब्रह्मत्वस्वभाव आविर्भवति ततो जीवन्मुक्तो भवतीत्यर्थः । तस्य जीवन्मुक्तस्य प्रारब्धभोगक्षयेण देहपाते सति तस्मात्कृत्स्नाविद्यानिवर्तकाद्वेदनाद्[7]विद्यातत्कार्यवासनालेशरहितस्य मुख्यस्य ब्रह्मणो महिमानं प्राप्नोति । विदेहमुक्तिर्भवतीत्यर्थः ।

---

१ ख. °न मृन्मयेन मृ° । २ ख. °णं च स्तु° । ३ ख. °मात्रप्र° । ४ ग. ङ. चिद्रूपत्वेन । [illegible] । ५ ख ङ. °र्यतद्वास° ।

संन्यासपुरःसरां तत्त्वविद्यामुपसंहरति—

इत्युपनिषत्, इति ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके दशमप्रपाठके नारायणोपनिषदि त्रिषष्टितमोऽनुवाकः ॥ ६३ ॥

इत्येवमतीतेन ग्रन्थेन प्रोक्ता येयं विद्या सेयमुपनिषद्रहस्यविद्या ।

**अथ मीमांसा** । तत्र[1] संन्यासरूपस्य **चतुर्थाश्रमस्य** सद्भावस्तृतीयाध्यायस्य चतुर्थपादे चिन्तितः—

"नास्त्यूर्ध्वरेताः किंवाऽस्ति नास्त्यसावविधानतः
वीरघातो[2] विधेः क्लृप्तावन्धपङ्ग्वादिगा स्मृतिः ॥
अस्त्यपूर्वविधेः क्लृप्तेर्वीरहाऽनग्निको गृही ।
अन्धादेः पृथगुक्तत्वात्स्वस्थानां श्रूयते विधिः ॥

पूर्वाधिकरणे स्वतन्त्र[3]मात्मविज्ञानं कर्मनैरपेक्ष्येण पुरुषार्थसाधनमित्युक्तम् । तस्य चाऽऽत्मज्ञानस्योर्ध्वरेतःस्वाश्रमेषु सुलभत्वादाश्रमसद्भावश्चिन्त्यते । तत्र नास्त्यूर्ध्वरेता इति प्राप्तम् । कुतः विध्यभावात् । त्रयो धर्मस्कन्धा यज्ञोऽध्ययनं दानमिति प्रथमस्तप एव द्वितीयो ब्रह्मचार्याचार्यकुलवासी तृतीय इत्यत्र यज्ञाद्युपलक्षितगार्हस्थ्यस्य तपःशब्दलक्षितवानप्रस्थत्वस्य नैष्ठिकब्रह्मचर्यस्य च परामर्शमात्रं गम्यते, न तु विधिरुपलभ्यते । न चापूर्वार्थत्वेन[4] विधिः कल्पयितुं शक्यः । " वीरहा वा एष देवानां योऽग्निमुद्वासयते" इत्यग्न्युद्वासनलक्षणस्य गार्हस्थ्यपरित्यागस्य निन्दितत्वात्[5] । चत्वार आश्रमा इति स्मृतिस्तु गार्हस्थ्यकर्मानधिकृतान्धपङ्ग्वादिविषया भविष्यति । न ह्यन्धस्याऽऽज्यावेक्षणत्वोपेते कर्मण्यधिकारो[6]ऽस्ति । नापि पङ्गोर्विष्णुक्रमणाद्युपेते कर्मण्यधिकारः । तस्माच्चक्षुरादिपाटवयुक्तस्याऽऽत्मज्ञानोपयुक्त ऊर्ध्वरेता आश्रमो नास्तीति प्राप्ते ब्रूमः । अस्त्यूर्ध्वरेता आश्रमः । विध्यश्रवणेऽप्यपूर्वार्थत्वेन कल्पयितुं शक्यत्वात् । न च वीरघा[7]तदोषः । उत्सन्नाग्निकगृहिविषयत्वाद्वीरहत्यायाः । यत्त्वन्धादिविषयत्वं स्मृतेरुक्तं तदसत् । "अथ पुनरव्रती वा व्रती वा स्नातको वाऽस्नातको वोत्सन्नाग्निरनग्निको वा यदहरेव विरजेत्तदहरेव प्रव्रजेत्" इति विरक्तानां गार्हस्थ्यानधिकृतानां पृथक्संन्यासविधानात् । न च चक्षुरादिपाटववतामाश्रमान्तरविध्यभावः । जाबालश्रुतौ प्रत्यक्षविध्युपलम्भात् "ब्रह्मचर्यं समाप्य गृही भवेद्गृहाद्वनी भूत्वा प्रव्रजेत्" इति । तस्मादस्त्याश्रमान्तरम्" ।

१ ग. °त्र न्या° । २ ग. ङ. 'घातौ वि° । ३ ग. ङ. °न्त्रवि° । ४ ग. ङ. °न क° । ५ ङ. °ति । तथाज्या° । ६ ख. °रो नास्ति । ७ ग. ङ. °घातादिदो° । ८ ग. 'ग्निवि° ।

तत्रैवान्यच्चिन्तितम्—

"लोककाम्याश्रमी ब्रह्मनिष्ठामर्हति वा नवा ।
यथावकाशं ब्रह्मैव ज्ञातुमर्हत्यवारणात् ॥
अनन्यचित्तता ब्रह्मनिष्ठाऽसौ कर्मठे कथम् ।
कर्मत्यागी ततो ब्रह्मनिष्ठामर्हति नेतरः" ॥

त्रयो धर्मस्कन्धा इत्यत्राऽऽश्रमानधिकृत्य सर्व एते पुण्यलोका भवन्तीत्याश्रमानुष्ठायिनां पुण्यलोकफलमभिधाय ब्रह्मसंस्थोऽमृतत्वमेतीति मोक्षसाधनत्वेन ब्रह्मनिष्ठा प्रतिपाद्यते । सेयं ब्रह्मनिष्ठा पुण्यलोककामिन आश्रमिणोऽपि संभाव्यते । आश्रमकर्माण्यनुष्ठाय यथावकाशं ब्रह्मनिष्ठायाः कर्तुं शक्यत्वात् । नहि लोककामी ब्रह्म न जानीयादिति निषेधोऽस्ति । तस्मादस्ति सर्वस्याप्याश्रमिणो ब्रह्मनिष्ठेति प्राप्ते ब्रूमः । ब्रह्मनिष्ठा नाम सर्वव्यापारपरित्यागे सत्यनन्यचित्ततया ब्रह्मणि परिसमाप्तिः । न चासौ कर्मशूरे संभवति । कर्मानुष्ठानत्यागयोः परस्परविरोधात् । तस्मात्कर्मत्यागिन एव ब्रह्मनिष्ठेति स्थितम् । अस्मिन्नर्थे श्रुतिस्मृतिवाक्यानि संक्षिप्य प्रदर्श्यन्ते—

"त्याग एव हि सर्वेषां मोक्षसाधनमुत्तमम् ।
त्यजतैव हि तज्ज्ञेयं त्यक्तुः प्रत्यक्परं पदम् ॥
मुक्तेश्च बिभ्यतो देवा मोहेनापिदधुर्नरान् ।
ततस्ते कर्मसूद्युक्ताः प्रवर्तन्तेऽविचक्षणाः ॥
अतः संन्यस्य सर्वाणि कर्माण्यात्मावबोधतः ।
हत्वाऽविद्यां धियैवेयात्तद्विष्णोः परमं पदम्" ॥

इति भाल्लविशाखायामामनन्ति ।

"सशिखं वपनं कृत्वा बहिः सूत्रं त्यजेद्बुधः ।
यदक्षरं परं ब्रह्म तत्सूत्रमिति धारयेत् ॥
ज्ञानशिखिनो ज्ञाननिष्ठा ज्ञानयज्ञोपवीतिनः ।
ज्ञानमेव परं तेषां पवित्रं ज्ञानमुच्यते ॥
अग्नेरिव शिखा नान्या यस्य ज्ञानमयी शिखा ।
स शिखीत्युच्यते विद्वान्नेतरे केशधारिणः" [ब्रह्मोप०] ॥

इत्याथर्वणिका आमनन्ति ।

"कुटुम्बपुत्रदारांश्च वेदाङ्गानि च सर्वशः ।
यज्ञं यज्ञोपवीतं च त्यक्त्वा गूढश्चरेन्मुनिः" ॥

इति बाष्कलशा[1]खायामामनन्ति । *सशिखान्केशान्नि[2]राकृत्य विसृज्य यज्ञोपवीतं भूः स्वाहेत्यप्सु जुहुयात् ।

"त्रिदण्डं कुण्डिकां शिक्यं त्रिविष्टब्धमुपानहौ ।
शीतोपघातिनीं कन्थां कौ[3]पीनस्य तु च्छादनम् ॥
पवित्रं स्नानशा[4]टीं च उत्तरासङ्गमेव च ।
यज्ञोपवीतं वेदांश्च सर्वं तद्वर्जयेद्यतिः" ॥

इ[5]ति संन्यासोपनिषद्यधीयते । "अथ परिव्राड्विवर्णवासा मुण्डोऽपरिग्रहः शुचिरद्रोही भैक्षाणो ब्रह्मभूयाय भवति" इति जाबाला आमनन्ति । "अथ परिव्राडेकशाटीपरि[6]वृतो मुण्डोदरपात्र्यरण्यनित्यो भिक्षार्थी ग्रामं प्रविशेदासायं प्रदक्षिणेनाविचिकित्सन्सार्ववर्णिकं भैक्षचरणमभिशस्तपतितवर्जमयज्ञोपवीती शौचनिष्ठः काममेकं वैणवं दण्डमाददीत" इति मैत्राय[8]णशाखायामभिहितम् । "कन्थाकौपीनोत्तरासङ्गादीनां त्यागिनो यथाजातरूपधरा निर्ग्रन्था निष्परिग्रहाः" इति संवर्तश्रुतिः । "गृहस्थो ब्रह्मचारी वानप्रस्थो वा लौकिकाग्नीनुदराग्नौ समारोपयेद्गायत्रीं च स्ववाचाऽग्नौ समारोपयेदुपवीतं भूमौ वाऽप्सु वा विसृजेत्" इत्यादि[10]रारुणिश्रुतिः ॥

"यथोक्तान्यपि कर्माणि परिहाप्य द्विजोत्तमः ।
आत्मज्ञाने शमे च स्याद्वेदाभ्यासेन यत्नवान् ॥
एतद्द्विजन्मसाफल्यं ब्राह्मणस्य विशेषतः ।
प्राप्यैतत्कृतकृत्यो हि द्विजो भवति नान्यथा ॥
यदा तु विदितं त[11]त्स्यात्परं ब्रह्म सनातनम् ।
तदैकदण्डं संगृह्य उपवीतं शिखां त्यजेत्" ॥

इत्यादयः स्मृतय उदाहार्याः ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्ये दशमप्रपाठके नारायणीयापरनामधेययुक्तायां याज्ञिक्यामुपनिषदि त्रिषष्टितमोऽनुवाकः ॥ ६३ ॥

====

* एतदादि जुहुयादित्यन्तं संन्यासोपनिषदि नोपलभ्यते । अनन्तरोक्तं श्लोकद्वयं तु किंचिद्भिन्नानुपूर्वीकं वर्तते ।

१ ग. ङ. °शाखीया आम° । २ ङ. °निकृत्य वि° । ३ ग. ङ. °पीनाच्छादनं तथा । प° । ४ ग. ङ. टीं च उ° । ५ ख. °ति कठा अधी° । ६ ख. °रितो । ७ ख. ग. °शस्तं प° । ८ ङ. °यणीशा° । ९ ख. °भिधीयते । क° । १० ख. ङ. °दिर्वारुणी श्रु° । ११ ग. ङ.

अथ चतुःषष्टितमोऽनुवाकः ।

संन्यासस्यैव ब्रह्मज्ञानं प्रत्यन्तरङ्गसाधनत्वाज्जिज्ञासोः संन्यास एव युक्तो न तु कर्मानुष्ठानमित्युक्तम् । तर्हि निष्पन्ने तत्त्वसाक्षात्कारे कर्माण्यनुष्ठीयन्तामित्येतां शङ्कां निवारयितुमत्र तत्त्वज्ञानिव्यवहाराणां लौकिकानां सर्वेषां यागरूपत्वमुच्यते । न हि यागस्य यागाधिकारशङ्काऽस्ति । अतोऽस्मिन्ननुवाके पूर्वभागेन( ण ) योगिनोऽवयवा यज्ञाङ्गद्रव्यत्वेनाऽऽम्नायन्ते—

तस्यैवं विदुषो यज्ञस्याऽऽत्मा यजमानः श्रद्धा पत्नी शरीरमिध्ममुरो वेदिर्लोमानि बर्हिर्वेदः शिखा हृदयं यूपः काम आज्यं मन्युः पशुस्तपोऽग्निर्दमः शमयिता दक्षिणा वाग्घोता प्राण उद्गाता चक्षुरध्वर्युर्मनो ब्रह्मा श्रोत्रमग्नीत्, इति ।

तस्य पूर्वोक्तस्य संन्यासिन एवं विदुषः पूर्वोक्तप्रकारेण ब्रह्मणो महत्त्वं साक्षात्कृतवतो जीवन्मुक्तस्य संबन्धी यो यज्ञोऽस्ति तस्य यज्ञस्य देहेन्द्रियादिसाक्षी य आत्मा स एव यजमानसदृशः, तस्य स्वामित्वात् । या तु तदन्तःकरणे श्रद्धारूपा चित्तवृत्तिः सा पत्नी । यच्च शरीरं तदिध्मम् । एवमुरआद्यवयवानां वेद्यादिरूपत्वोपचारो योजनीयः । यस्तु दमाख्यः शमयिता सर्वेन्द्रियोपशमकारी चित्तवृत्तिविशेषः, तस्य दक्षिणारूपत्वमुन्नेयम् । वागादीनां होत्राद्यृत्विग्रूपत्वमुन्नेयम् ।

अथास्यानुवाकस्य द्वितीयभागेन योगिव्यवहारस्य ज्योतिष्टोमावयवक्रियारूपत्वं दर्शयति—

यावद्ध्रियते सा दीक्षा यदश्नाति तद्धविर्यत्पिबति तदस्य सोमपानं यद्रमते तदुपसदो यत्संचरत्युपविशत्युत्तिष्ठते च स प्रवर्ग्यो यन्मुखं तदाहवनीयो या व्याहृतिराहुतिर्यदस्य विज्ञानं तज्जुहोति यत्सायं प्रातरत्ति तत्समिधं यत्प्रातर्मध्यंदिनꣳ सायं च तानि सवनानि, इति ।

यावन्तं कालं भोजनमकृत्वा ध्रियते विदुषा धार्यते सा[3] धृतिर्दीक्षाख्यसंस्काररूपा । एवं भोजनादौ हविरादिरूपत्वमुन्नेयम् ।

---

[1] ग. झ. 'मुत्तरत्राप्यव° । [2] ग. °यः । दमात् दमाख्यस्तु श° । झ. °यः । दमस्तु

अथास्यानुवाकस्य तृतीयभागेन जीवन्मुक्तस्य संबन्धिनां कालविशेषाणां नानाविधयागरूपत्वमाह—

ये अहोरात्रे ते दर्शपूर्णमासौ येऽर्धमासाश्च मासाश्च ते चातुर्मास्यानि य ऋतवस्ते पशुबन्धा ये संवत्सराश्च परिवत्सराश्च तेऽहर्गणाः सर्ववेदसं वा एतत्सत्रं यन्मरणं तदवभृथः, इति ।

संवत्सराश्च परिवत्सराश्चेति चकाराभ्यामिदावत्सरानुवत्सरेद्वत्सराः समुच्चीयन्ते । प्रभवादिषु षष्टिसंवत्सरेष्वेकैकं पञ्चकं युगशब्दाभिधेयं तस्मिंश्च युगे पञ्चापि क्रमेण संवत्सरपरिवत्सरेदावत्सरानुवत्सरेद्वत्सरसंज्ञका द्रष्टव्याः ।

तथाच कालनिर्णये संग्रहकारेणोदाहृतम्—

"चान्द्राणां प्रभवादीनां पञ्चके पञ्चके युगे ।
संपरीदान्विदित्येतच्छब्दपूर्वास्तु वत्सराः" इति ॥

**अहर्गणा** द्विरात्रत्रिरात्रादयः । **सर्ववेदसं** सर्वस्वदक्षिणाकम् । अत्रैतच्छब्देन प्रकृताहोरात्रादिपरिवत्सरान्तसर्वकालसमष्ट्युपलक्षितं योगिन आयुर्विवक्ष्यते । यदायुस्तत्सर्वस्वदक्षिणोपेतं[1] सत्रमित्यर्थः ।

अस्यानुवाकस्य चतुर्थभागेन सर्वयज्ञात्मकं योगिन उपासीनस्य[2] क्रममुक्तिलक्षणं फलमाह—

एतद्वै जरामर्यमग्निहोत्रꣳ सत्रं य एवं विद्वानुदगयने प्रमीयते देवानामेव महिमानं गत्वाऽऽदित्यस्य सायुज्यं गच्छत्यथ यो दक्षिणे प्रमीयते पितृणामेव महिमानं गत्वा चन्द्रमसः सायुज्यं[3] गच्छत्येतौ वै सूर्याचन्द्रमसोर्महिमानौ ब्राह्मणो विद्वानभिजयति तस्माद्ब्रह्मणो महिमानमाप्नोति तस्माद्ब्रह्मणो महिमानमित्युपनिषत्, इति ॥

**इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके दशमप्रपाठके नारायणोपनिषदि चतुःषष्टितमोऽनुवाकः ॥ ६४ ॥**

जरामरणावधिकं[4] यद्योगिचरितमस्ति तदेतद्वेदोक्ताग्निहोत्रादिसंवत्सरसत्रान्तकर्मस्व-

१ ख. ग. °वेद° । २ म. °स्य कर्मम° । ३ ग. ङ. °यज्ञफललोकतामप्नोत्ये° । ४ ग. जननम° ।

रूपमित्येवं यः पुमान्विद्वानुपासीन उत्तरायणे म्रियते, स उपासको देवानामिन्द्रादीनां महिमानमैश्वर्यं प्राप्य तदूर्ध्वमादित्यस्य सायुज्यं सहवासं तादात्म्यं वा भावनातारतम्येन प्राप्नोति । अथ पूर्वोक्तवैलक्षण्येन य उपासको दक्षिणायने म्रियते स उपासकः पितॄणामग्निष्वात्तादीनामैश्वर्यं प्राप्य चन्द्रमसः सायुज्यं पूर्ववत्प्राप्नोति य एवमेतौ सूर्याचन्द्रमसोर्महिमानावनुभवन्ब्राह्मणस्त(णः स त)त्र सगुणब्रह्मरूपं हिरण्यगर्भं विद्वांस्तल्लोकवासिनामुपदेशिनामुपासीनोऽभिजयति । हिरण्यगर्भसाक्षात्काररूपं प्राप्नोति । तस्मात्साक्षाकारात्तल्लोकवासिदेहपातादूर्ध्वं हिरण्यगर्भलोकं गत्वा तत्र ब्रह्मणो हिरण्यगर्भस्य महिमानमैश्वर्यं प्राप्नोति । तत्रोत्पन्नब्रह्मतत्त्वसाक्षात्कारस्तस्माज्ज्ञानाद्ब्रह्मलोकविनाशादूर्ध्वं सत्यज्ञानादिलक्षणस्य ब्रह्मणो महिमानं महत्त्वं च प्राप्नोति । इत्युपनिषदितिवाक्येन यथोक्तविद्यायास्तत्प्रतिपादकग्रन्थस्य चोपसंहारः क्रियते ।

अथ मीमांसा । तृतीयाध्यायस्य तृतीयपादे चिन्तितम्—

> "पुंविद्यैका विभिन्ना वा तैत्तिरीयकताण्डिनोः ।
> मरणावभृथत्वादिसाम्यादेकेति गम्यते ॥
> बहूनां रूपभेदेन किंचित्साम्यस्य बाधनात् ।
> न विद्यैक्यं तैत्तिरीये ब्रह्मविद्याप्रशंसनात् ॥

अस्ति तैत्तिरीये पुरुषविद्या—"तस्यैवं विदुषो यज्ञस्याऽऽत्मा यजमानः" इति । तथा ताण्डिनां शाखायामपि श्रूयते—"पुरुषो वाव यज्ञः" इति । सेयमेकैव पुरुषविद्या । यन्मरणं तदवभृथो मरणमेवावभृथ इत्युभयत्र समानधर्मश्रवणात्प्रातःसवनादीनां च समानत्वादिति प्राप्ते ब्रूमः । वेद्यस्वरूपस्य भूयान्भेद उपलभ्यते । तथाहि—विदुषो यो यज्ञस्तस्य यज्ञस्याऽऽत्मेति तैत्तिरीयके व्यधिकरणे षष्ठ्यौ । अन्यथाऽऽत्मा यजमान इति व्याघातात् । विद्वानेव यज्ञः स एव यजमान इति कथं न व्याहन्येत । ताण्डिनां तु पुरुषयज्ञयोः सामानाधिकरण्यं श्रुतमित्येको रूपभेदः । आत्मयजमानादिकं च सर्व[म]त्र श्रुतं ताण्डिशाखायां नोपलभ्यते । यत्तु ताण्डिनामुपलभ्यते त्रेधा विभक्तस्याऽऽयुषः सवनत्रयत्वमित्यादि न तत्किंचिदपि तैत्तिरीयके पश्यामः । अतो मरणावभृथत्वाद्यल्पसाम्यबाधाद्विद्ययोर्भेद उचितः । अपि च न तैत्तिरीयाणामुपासनमिदं किं तर्हि ब्रह्मविद्याप्रशंसा । तस्यैवं विदुष इति ब्रह्मविदोऽनुक-

---

१ ग. झ °पासकानभि° । २ ख. झ °लोके ग° । ३ झ. °कब्रह्मवि° । ४ ग. झ. °सायां तृ° । ५ ग. झ. °म्—" इयं विद्यैका भि° । ६ ग. झ. °देऽपि कि° । ७ ख. झ °ण्डिशा° । ८ ङ. °ति । एवमे° । ९ ख. ग. भूयानभे° । १० झ. °द एवोचि° । ११ ख. °नुत्कर्ष° । झ °नुकमणा° ।

र्षणात् । तस्मान्न विद्यैक्यशङ्कायामप्यवकाशोऽस्ति" क्रममुक्तिरंत(स्त्व)स्मिन्ननुवाके तत्त्वज्ञानिसेवानिमित्ताऽभिहितेत्यशेषमतिमङ्गलम् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्ये दशमप्रपाठके चतुःषष्टितमोऽनुवाकः ॥ ६४ ॥

सह नाववतु । सह नौ भुनक्तु । सह वीर्यं करवावहै । तेजस्वि नावधीतमस्तु मा विद्विषावहै ॥

ॐ शान्तिः शान्तिः शान्तिः ।

हरिः ॐ ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके दशमः प्रपाठकः समाप्तः ॥ १० ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ॥
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥ १ ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कणभूपालसाम्राज्यधुरंधरेण श्रीमत्सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्ये दशमः प्रपाठकः समाप्तः ॥ १० ॥

समाप्तमिदं कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्यम् ।

====

१ झ. °थैक्यश° । २ ग. झ. °स्ति । एतस्मि° ।

# *अथ परिशिष्टम् ।

## कृष्णयजुर्वेदीयतैत्तिरीयारण्यके दशमः प्रपाठकः ।

## नारायणोपनिषत् ।

---

तत्र प्रथमोऽनुवाकः ।

---

हरिः ॐ ।

+सह नाववतु । सह नौ भुनक्तु । सह वीर्यं करवावहै । तेजस्वि नावधीतमस्तु मा विद्विषावहै ।

ॐ शान्तिः शान्तिः शान्तिः ॥

इति शान्तिः ।

विचार्य सर्ववेदान्तैः संचार्य हृदयाम्बुजे ।
प्रचार्य सर्वलोकेषु आचार्यं शंकरं भजे ॥ १ ॥
पद्मपादो विश्वरूपो हस्तामलकत्रोटकौ ।
अद्वैतदीक्षागुरवः साचार्याः पञ्च पान्तु माम् ॥ २ ॥
एतानि पद्मपत्राणि चत्वारि हृदयाम्बुजे ।
मामकीने प्रकाशन्तां भुक्तिमुक्तिप्रसिद्धये ॥ ३ ॥
नमो नमः कारणकारणात्मने नमो नमो मङ्गलमङ्गलात्मने ॥
नमो नमो वेदविदां मनीषिणामुपासनीयाय नमो नमस्ते ॥ ४ ॥
यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ॥
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ ५ ॥
वारुण्युपनिषद्युक्ता ब्रह्मविद्या सनातना ॥
याज्ञिक्यां फ(खि)लरूपायां सर्वशेषोऽभिधीयते ॥ ६ ॥

यथा **बृहदारण्यके सप्तमाष्टमाध्यायौ** खिलकाण्डत्वेनाऽऽचार्यैरुदाहृतौ तथेयं नारा-

---

* परिशिष्टसंगृहीतमेतन्नारायणोपनिषद्भाष्यं केन प्रणीतमिति न जानीमः, परं चास्य पुस्तकद्वयमुपलब्धम् । भाष्यं चैतदशीत्यनुवाकात्मकैतद्देशीयवैदिकपाठप्रसिद्धमूलानुरोध्यस्त्यतोऽत्र परिशिष्टरूपेण समूलं संगृहीतम् । अस्मिंश्च भाष्य उपक्रमे प्रायः सायणाचार्यकृतभाष्यस्यैवोल्लेखो दृश्यते । अग्रेऽपि यत्र सायणाचार्यभाष्यानुरोधि मूलं वर्तते तत्र प्रायः सायणाचार्यकृतभाष्योल्लेखो दृश्यते ।

× अत्र ङ. पुस्तके मूले ॐ शं नो मित्रः शं वरुणः । ०अवतु वक्तारम् । ॐ शान्तिः ॥ १ ॥ इत्यधिकम् ।

यणीयाख्या याज्ञिक्युपनिषदपि खिलकाण्डरूपा, तल्लक्षणोपेतत्वात् । कर्मोपासनाब्रह्मतत्त्वज्ञानेषु किंचिदवशिष्टं तस्य सर्वस्याभिधानेन प्रकीर्णरूपत्वं खिलत्वम् । **बृहदारण्यके सप्तमाध्याये**—"पूर्णमदः पूर्णम्" इत्यादिना ब्रह्मतत्त्वमभिहितम् । "ॐ खं ब्रह्म" इत्यादिभि**रष्टमाध्याय**गतैश्च " यो ह वै ज्यैष्ठ्यं(ज्येष्ठं) च श्रैष्ठ्यं(श्रेष्ठं) च वेद" इत्यादिभिर्वाक्यैर्नानाविधान्युपासनान्यभिहितानि । " अथ यः कामयेत महत्प्राप्नुयाम्" इत्यादिना मन्थाख्यं कर्माभिहितम् । तथा पुत्रविशेषादिकामनायुक्तानां तु तत्तत्कर्माण्यभिहितानि । एवमत्रापि "अम्भस्य पारे" इत्यादिना ब्रह्मतत्त्वमभिहितम् । "आदित्यो वा एष एतन्मण्डलम्" इत्यादिनोपासनमभिहितम् । "भूरन्नमग्नये पृथिव्यै स्वाहा" इत्यादिना कर्माण्यभिहितानि । तत्र कर्मणां बाहुल्याद्याज्ञिकीत्युच्यते । उपक्रमे ब्रह्मतत्त्वाभिधाना-[*दुपसंहारे च तत्साधनानां सत्यादीनां संन्यासान्तानामभिधाना]दुपनिषदित्युच्यते । तदीयपाठसंप्रदायस्तु देशविशेषेषु बहुविध उपलभ्यते । तत्र यद्यपि शाखाभेदः कारणं तथाऽपि **तैत्तिरीयशाखाध्यायैः**स्तत्तद्देशनिवासिभिः शिष्टैरादृतत्वात्सर्वोऽपि पाठ उपादेय एव । तत्र द्राविडानां चतुःषष्ट्यनुवाकक्रमपाठः । कर्णाटकेषु केषांचिच्चतुःसप्ततिः(ति) पाठः । अपरेषां चाशीतिपाठः । तत्र वयं पाठान्तराणि सूचयन्तश्चतुःषष्टन(न्तोऽशीत्य)नुवाकपाठं प्राधान्येन व्याख्यास्यामः । [तत्र] प्रथमानुवाकस्याऽऽदौ काश्चिदृचो ब्रह्मतत्त्वं प्रतिपादयन्ति, तासु प्रथमामृचमाह—

**ॐ अम्भस्य पारे भुवनस्य मध्ये नाकस्य पृष्ठे महतो महीयान् ।**

**शुक्रेण ज्योतीꣳषि समनुप्रविष्टः प्रजापतिश्चरति गर्भे अन्तः,** इति ।

**अम्भस्य** बहुविधसमुद्रवर्तिजलस्य **पारे** परतीरे यो महान्प्रौढो लोकालोकपर्वतादिस्ततोऽपि **महीयान्**महत्तरोऽयं महे(परमे)श्वरः । तथा **भुवनस्य** भूगोलस्य **मध्ये** महान्मेर्वादिस्ततोऽपि महत्तरः । **नाकस्य पृष्ठे** स्वर्गस्योपरि यो महान्ब्रह्मलोकादिस्ततोऽपि महत्तरः । तथा च **छन्दोगा** आमनन्ति—" ज्यायान्पृथिव्या ज्यायानन्तरिक्षाज्ज्यायान्दिवो ज्यायानेभ्यो लोकेभ्यः " इति । " स एवाधस्तात्स उपरिष्टात्स पश्चात्स पुरस्तात्स दक्षिणतः स उत्तरतः स एवेदꣳ सर्वम्" इति(च) । स परमेश्वरः **शुक्रेण** जीवचैतन्यरूपेण भासकेन **ज्योतींषि** निर्मलत्वेन भासकान्यन्तःकरणानि सम्यगनुप्रविष्टः । " तत्सृष्ट्वा तदेवानुप्राविशत् " इति श्रुतेः । **गर्भे** ब्रह्माण्डरूपेऽन्तर्मध्ये **प्रजापति**र्विराड्रूपो भूत्वा **चरति** प्रवर्तते । विराड्रूप**माथर्वणिका** आमनन्ति—"अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यौ दिशः श्रोत्रे वाग्विवृताश्च वेदाः । वायुः प्राणो हृदयं विश्वमस्य पद्भ्यां पृथिवी " इत्यादि । अग्निः प्रकाशयुक्तो द्युलोकः ।

* त्रुटितमिदं चतुःषष्ट्यनुवाकानुरोधिभाष्यात्संगृहीतम् । प्रकृते तस्यास्य च तौल्यात् ।

सर्वव्यापी परमेश्वरो वस्तुतस्तथाविध एव सन्मायावशाद्देहेषु जीवरूपेण ब्रह्माण्डे च विराड्रूपेणावस्थित इत्यर्थः ।

द्वितीयामृचमाह—

**यस्मिन्निदꣳ सं च वि चैति सर्वं यस्मिन्देवा अधि विश्वे निषेदुः ।**
**तदेव भूतं तदु भव्यमा इदं तदक्षरे परमे व्योमन्**, इति ।

**इदं सर्वं** जगद्यस्मिन्नव्याकृते मूलकारणे **समेति च** [ व्येति च । ] सृष्टिकाले समुत्पन्नं सत्संगतमपि भवति । शं चेति पाठे सुखमपि प्राप्नोतीति व्याख्येयम् । व्यत्ययेन वा समिति द्रष्टव्यम् । संहारकाले विलीनं सद्विगतमपि भवति । **अध्य-**धिका हिरण्यगर्भविराडादयो **देवा विश्वे** सर्वेऽ(र्वे य)स्मिन्नव्याकृते मूलकारणे **निषेदु-**र्नितरामाश्रित्यावस्थिताः , **तदेव** सृष्टिसंहारयोर्देवानां चाऽऽधारभूतमव्याकृतमेवेत्यर्थः । [ ***भूतमतीतं** जगत् । **भव्यं** भविष्यज्जगदिदं वर्तमानमपि जगत्तदु तदेवाव्याकृतम् ।] **आ** इत्याश्चर्ये । प्रसिद्धिर्वा तस्यार्थः । तत्तादृशमव्याकृतम**क्षरे** विनाशरहिते **परम** उत्कृष्टे **व्योमन्नाकाशवदमूर्ते** परमात्मनि वर्तत इति **शेषः** ।

तृतीयामृचमाह—

**येनाऽऽवृतं खं च दिवं महीं च येनाऽऽदित्यस्तपति तेजसा भ्राजसा च ।**
**यमन्तः समुद्रे कवयो वयन्ति यदक्षरे परमे प्रजाः**, इति ।

**वाजसनेयिनो गार्गिब्राह्मणे** परमात्मन्याश्रितं यदव्याकृतमधीयते–"एतस्मिन्खल्वक्षरे गार्ग्याकाश ओतश्च प्रोतश्च" इति तत्पूर्वस्यामृच्याभिहितम् । अस्यां तु तेनाव्याकृतेनोपहितं जगत्कारणं चैतन्यमभिधीयते । **येन** सच्चिद्रूपेण कारणेन **खमन्तरिक्ष-**लोको **दिवं** द्युलोको **महीं** भूलोक इत्येतत्सर्व**मावृतं** व्याप्तम् । चकाराभ्यां तत्तल्लोकवासिनो देहाः समुच्चीयन्ते । तेऽपि कारणेन व्याप्ताः । अत एवोक्ताः सर्वेऽपि तद्रूपतया भासन्ते । येन परमेश्वरेणानुगृहीत **आदित्यस्तेजसा** स्वकीयमण्डलान्तर्गतभास्वररूपेण **भ्राजसा च** प्रसारितरश्मिरूपया दीप्त्या च **तपति** सर्वमिदं जगदभितप्तं प्रकाशितं च करोति । **कवयस्तत्त्वविदो यं** परमात्मानं **समुद्रेऽन्तः** समुद्रोपलक्षितस्य कृत्स्नस्य जगतो मध्ये तन्तूनिव **वयन्ति** । यथा पटस्वरूपे तन्तवोऽनुगतास्तथा जगति ब्रह्मतत्त्वमनुगतं पश्यन्ति । तच्च ब्रह्मतत्त्व**मक्षरे** विनाशरहिते **परम** उत्कृष्टे निजस्वरूपेऽवस्थाय **प्रजा** उत्पादयतीति शेषः । स्वरूपेऽवस्थानं **छन्दोगाः** प्रश्नोत्तराभ्यामामनन्ति—

---

* चतुःषष्ट्यनुवाकानुरोधिभाष्यात्संगृहीतं त्रुटितत्वात्प्रकृते तेनास्य विरोधाभावात् ।

"स भगवन्कस्मिन्प्रतिष्ठित इति स्वे महिम्नि" इति । आधारान्तरराहित्यमेव स्वस्मिन्नवस्थानम् । यदक्षर इति *पाठेऽपि तच्छब्दार्थत्वेनैव व्याख्येयम् ।

चतुर्थीमाह—

**यतः प्रसूता जगतः प्रसूती तोयेन जीवान्व्यचसर्ज भूम्याम् ।**
**यदोषधीभिः पुरुषान्पशूꣳश्च विवेश भूतानि चराचराणि, इति ।**

पूर्वमन्त्रे जगत्कारणमव्याकृतोपहितं यच्चैतन्यमुक्तं तस्य त्रिजगदुत्पाद(पादा)नत्वं प्रपञ्च्यते । आत्मन आकाश· संभूत इत्यारभ्यान्नात्पुरुष इत्यन्तेन ग्रन्थेन पूर्वमभिहिता **जगतः [ प्रसूती ]** प्रसूतिः सृष्टिरुत्पत्तिर्यतो यस्मादव्याकृताच्चैतन्यात्**प्रसूता** प्रवृत्ता तच्चैतन्यं क(का)रणभूतं **तोयेन** जलोपलक्षितेन भूतपञ्चकेन **जीवान्**मनुष्यगवादीञ्जीवदेहान्**भूम्यां** भूमौ **व्यचसर्ज** विशेषेणासृजत् । व्यससर्जेति पाठेऽपि तथैव व्याख्येयम् । तथा च चै(यच्चै)तन्यरूपं मायाविशिष्टं कारण**मोषधीभि**र्व्रीहियवादिभिरुपलक्षितमन्नं भूत्वा **पुरुषान्**मनुष्यान्**पशूंश्च** तदुपलक्षितानि स्थावरजङ्गमशरीराण्यपि **प्रविवेश**। वृक्षादिस्थावरेषु वृष्टिजलरूपेण प्रवेशः । तेन चैतन्येन सर्वं जगत्पालितमिति शेषः ।

पञ्चमीमृचमाह—

**अतः परं नान्यदणीयसꣳ हि परात्परं यन्महतो महान्तम् ।**
**यदेकमव्यक्तमनन्तरूपं विश्वं पुराणं तमसः परस्तात् (१), इति ।**

पूर्ववाक्योक्तेन जगत्कारणत्वाकारेणोपलक्षितं शुद्धं वस्त्वत्र निरूप्यते । यद्वस्तु **परा**दुत्कृष्टाद्धिरण्यगर्भादेरपि **पर**मत्यन्तमुत्कृष्टम् , **यच्च महत** आकाशादे**र्महान्तं** महत् , **यदप्येकं** सजातीयविजातीयस्वगतभेदरहितम् , **अव्यक्त**मिन्द्रियागम्यम् , **अनन्तरूपं** देशकालवस्तुपरिच्छेदशून्यं, **विश्वं** जगदात्मकं '**पुराण**मनादिसिद्धं' **तमसः परस्ताद**ज्ञानात्पृथग्वर्तते । **अतो** वस्तुनोऽन्यद्वस्त्व**णीयस**मत्यन्तदुर्लक्ष्यं **पर**मुत्कृष्टं **नास्ति** ।

विश्वविशेषणेन यत्सर्वजगदात्मकत्वमुक्तं तदेतत्षष्ठीसप्तमीभ्यामृग्भ्यां प्रपञ्चयति—

**तदेवर्तं तदु सत्यमाहुस्तदेव ब्रह्म परमं कवीनाम् ।**
**इष्टापूर्तं बहुधा जातं जायमानं विश्वं बिभर्ति भुवनस्य नाभिः ॥**
**तदेवाग्निस्तद्वायुस्तत्सूर्यस्तदु चन्द्रमाः ।**
**तदेव शुक्रममृतं तद्ब्रह्म तदापः स प्रजापतिः ॥**

---

* पाठे सत्यर्पीति योज्यम् ।

मनसा यथावस्तु चिन्तनमृतं वाचा तदुच्चारणं सत्यमेतदुभयमपि तदेवाधिष्ठानं ब्रह्मैव । कवीनां वेदशास्त्रपारं गतानां परमुत्कृष्टं प्रमाणत्वेनाऽऽदरणीयं यद्ब्रह्म वेदरूपं वस्तु तदपि स्वाधिष्ठानवस्तु( भूत )परब्रह्मात्मकमेव । इष्टं दर्शपूर्णमासादि श्रौतं कर्म पूर्तं वापीकूपादि स्मार्तं कर्म तदुभयमपि तदेव ब्रह्म । तथा बहुधा जातं पूर्वकल्पतत्पूर्वकल्पादिरूपेण बहुप्रकारमुत्पन्नमिदानीमपि तथा जायमानं विश्वं सर्वं जगद्भुवनस्य नाभिश्चक्रनाभिवत्सर्वलोकस्याऽऽधारभूतः परमात्मा बिभर्ति । अत आधेयं सर्वमधिष्ठानस्वरूपमेव । अग्निवायुसूर्यचन्द्रमसोऽपि तदेव । तथा शुक्रं दीप्यमानं नक्षत्रादिकममृतं देवैः सेव्यं पीयूषमेतदुभयमपि तदेवाधिष्ठानरूपमेव । यद्ब्रह्म हिरण्यगर्भरूपं तदेतदधिष्ठानात्मकमेव । याश्चाऽऽपो जलोपलक्षितानि पञ्च भूतानि यश्च प्रजापतिर्विराड्रूपस्तदुभयमप्यधिष्ठानरूपमेव । यद्यज्जगदविद्यादृष्ट्या नानाविधं प्रतीयते तत्सर्वं विद्यादृष्ट्याऽखण्डैकरसं ब्रह्मैव । अत एव दृष्टिद्वयमभिप्रेत्य वाजसनेयिनः समामनन्ति—" यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति " इत्यविद्यादृष्टिः । " यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत् " इति विद्यादृष्टिः ।

ननु—" प्रकृतिः पुरुषश्चैव नित्यौ कालश्च सत्तम " इति विष्णुपुराणे कालस्य नित्यत्वाभिधानाद्विद्यादृष्ट्याऽपि ब्रह्मरूपत्वं नास्तीत्याशङ्क्य पुराणस्याविद्यादृष्टिविषयत्वमभिप्रेत्य विद्यादृष्ट्या कालस्य ब्रह्मत्वविवक्षया ब्रह्मणः सकाशादुत्पत्तिमष्टमीनवमीभ्यां दर्शयति—

> सर्वे निमेषा जज्ञिरे विद्युतः पुरुषादधि ।
> कला मुहूर्ताः काष्ठाश्चाहोरात्राश्च सर्वशः ॥
> अर्धमासा मासा ऋतवः संवत्सरश्च कल्पन्ताम् ।
> स आपः प्रदुघे उभे इमे अन्तरिक्षमथो सुवः, इति ।

निमिर्नाम जनकस्य पूर्वज आद्यो मिथिलेश्वर आसीदित्युपनिषदि वर्तते । देवप्रसादाद्येष्वक्षिपक्ष्मपातेषु [ स ] वर्तते [ ते निमिषाः । ] त एव निमेषा उच्यन्ते । पक्ष्मपातपरिमिताः सूक्ष्माः कालविशेषा इत्यर्थः । ते सर्वे विद्युतः स्वयंप्रकाशमानात्पुरुषात्परमेश्वरादधिजज्ञिरे आधिक्येनोत्पन्नाः । निमेषेभ्योऽप्यधिकाः कालविशेषाः काष्ठास्ताभ्योऽप्यधिकाः कलास्ततोऽप्यधिका मुहूर्तास्तेभ्योऽप्यधिका अहोरात्राः ।

तथा च पूर्वग्रन्थकारैरुक्तम्—

> " अष्टादश निमेषास्तु काष्ठा त्रिंशत्तु ताः कला ।
> तास्तु त्रिंशत्क्षणस्ते तु मुहूर्तो द्वादशास्त्रियाम् ॥
> ते तु त्रिंशदहोरात्रः पक्षस्ते दश पञ्च च ।

चकारावनुक्तसमुच्चयार्थौ । सर्वेऽपि कालविशेषाः समुत्पन्ना इत्यर्थः । लवत्रुट्यादि-स्वरूपं पूर्वाचार्यैरुक्तम्—

" नलिनीपत्रसंहत्याः सूक्ष्मसूच्यभिभेदने ।
दले दले तु यः कालः स कालो लववाचकः ॥
लवैस्त्रुटिः स्यात्त्रिंशद्भिः " इति ।

अर्धमासाः शुक्लकृष्णरूपा मासाश्चैत्रवैशाखाद्या ऋतवो वसन्तग्रीष्माद्याः सर्वेऽपि परमेश्वरादधिजज्ञिरे । तथा संवत्सरश्च प्रभवादिरूपः कल्पन्तां परमेश्वरादुत्पन्नः * । अत एव स्वप्रयोजनसमर्थो भवति । कल्पन्तामिति + बहुवचनपाठे कालविशेषाः स्वस्व-प्रयोजनयोग्या इति योज्यम् । [ स ] परमेश्वरः स्वनिर्मितेन कालविशेषेणोपलक्षितः संस्ततः कालौचित्येनाऽऽपः प्रदुघे जलोपलक्षितां पृथिवीं दुग्धवान् । प्राणिनामपेक्षितं भोग्यजातं पृथिव्यां संपादितवानित्यर्थः । तथैवान्तरिक्षमेकं स्थानमथो अपि च सुवः स्वर्गोऽपरं स्थानमिमे उभे अपि स्थाने प्रदुघे, तयोरपि स्थानयोर्भोग्यं वस्तु संपादित-वानित्यर्थः ।

ननु काललोकादिसर्वकारणस्य सर्वत्रानुगतत्वात्कुतः प्राणिभिरसौ न गृह्यत इत्याशङ्क्यैतस्य परमात्मन ऊर्ध्वाद्याकारविशेषाभावाद्रूपाद्यभावाच्चेति मन्त्रद्वयेन दर्शयति—

**नैनमूर्ध्वं न तिर्यञ्चं न मध्ये परिजग्रभत् ।**
**न तस्येशे कश्चन तस्य नाम महद्यशः ( २ ) ॥**
**न संदृशे तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्चनैनम् ।**
**हृदा मनीषा मनसाऽभिक्लृप्तो य एनं विदुरमृतास्ते भवन्ति, इति ।**

कश्चिदपि पुरुष एनं परमात्मानं स्तम्भवदूर्ध्वाकारगृपरिस्थितका(शा)लावंशव-त्तिर्यगाकारं वा गृहान्तर्वर्तिदेवदत्तवत्क्वचिन्मध्ये वा स्थितं न परिजग्रभत्, [न परि-गृह्णाति ] ऊर्ध्वत्वाद्याकाराणां तस्मिन्नभावात् । किंच तस्य परमात्मनः कश्चन कोऽपि पुरुषो नेशे नेष्टे नामग्रहणे सौकर्यार्थमीदृग्भवेति नियन्तुं न समर्थः । अत एव तस्य परमात्मनो महद्यश इति नाम संपन्नम् । अत्यन्तस्वतन्त्रत्वेन तदीययशसोऽभ्यधिक-त्वात् । किंचास्य परमात्मनो रूपं नीलपीतादिकं संदृशे प्राणिनां दृष्टिविषये न तिष्ठति । "अशब्दमस्पर्शमरूपम्" इत्यादिश्रुतेः । कश्चन कुशलोऽपि पुमानत्यन्तं पटुना चक्षुषैनं [न] पश्यति । कथं तर्हि गुरुशास्त्रोपदेशयुक्तो गृह्णातीति चेदुच्यते—हृदा

* एकवचनस्थाने व्यत्ययेन बहुवचनमित्यभिप्रायेणेदम् । + कल्पन्तामिति यथाश्रुतं बहुवच-नमेवेति स्वीकारेऽपि बाधकाभाव इति वक्तुमाह ।

हृदयपुण्डरीकमध्यवर्तिना **मनीषा** लौकिकवस्तुगोचराणि मनांसीष्ट इति मनीट्तथा-विधेन **मनसाऽन्तःकरणेनाभिक्लृप्तः** सर्वतो निश्चितो भवति । योगयुक्तं हि मनो लौकिकीर्मनोवृत्तीर्नियमयति । तेन चान्तर्मुखेनै(णै)काग्रेण मनसा परमात्माऽनुभवितुं शक्यते । "दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः" इति श्रुतेः **ये** पुरुषा **एनं** परमात्मानं मनसा **विदुः** साक्षात्कुर्वन्ति ते पुरुषा **अमृता** मरणरहिता भवन्ति । देहात्प्राणानामुत्क्रान्तिर्मरणं तच्च तत्त्वविदां नास्ति "न तस्य प्राणा उत्क्रामन्त्यत्रैव समवलीयन्ते" इति श्रुतेः ।

उक्तार्थदाढर्च्याय प्रदेशान्तरपठितान्मन्त्रानुदाहरति—

**अद्भ्यः संभूतो हिरण्यगर्भ इत्यष्टौ, इति ।**

अद्भ्यः संभूतः पृथिव्यै रसाच्चेत्ययमनुवाकश्चातुर्होत्रि(त्री)यचयनमन्त्रप्रकरणे समाम्नातः, तस्यानुवाकस्य [प्र]दर्शनार्थमद्भ्यः संभूत इति प्रतीकमिदं पठितम् । तस्मिन्ननुवाके तमेवं विद्वानमृत इह भवतीति परमात्मतत्त्वविदो मरणराहित्यमुक्तम् । "हिरण्यगर्भः समवर्तताग्रे" इत्यष्टावृचः संहितायाश्चतुर्थकाण्डे प्रथमप्रपाठके समाम्नाताः * ।

---

* एतदग्रेऽधिको ग्रन्थो वर्तते स यथा—

( अद्भ्यः संभूतः पृथिव्यै रसाच्च ।

विश्वकर्मणः समवर्तताधि । तस्य त्वष्टा विदधद्रूपमेति ॥

तत्पुरुषस्य विश्वमाजानमग्रे, इति ।

अद्भ्य उदकेभ्यः पृथिव्यै पृथिव्याः । व्यत्ययो बहुलमिति पाणिनीयस्मरणादत्र विभक्तिव्यत्ययः । रसशब्दः क्षीराज्यादि(दिषु) प्रसिद्धः । आज्यस्य तेजस्त्वं "तेजो वा आज्यम्" इति श्रुतेः । अनया रीत्या रसात्तेजस इत्यर्थः संपद्यते । पृथिव्यप्तेजसां ग्रहणं वाय्वाकाशयोरुपलक्षणम् । तथा चायमर्थः । विश्वकर्मणो विश्वं ब्रह्माण्डं कर्म कार्यं यस्य तस्माद्विश्वकर्मणः पञ्चभूतद्वारा संभूत उत्पन्नः । यद्वा रसशब्दः परमात्मनो विशेषणं "रसो वै सः" इति वारुण्युपनिषद्युक्तत्वात् । आब्रह्मस्तम्बपर्यन्तानां देवतिर्यङ्मनुष्याणां पाञ्चभौतिकत्वप्रसिद्धेरादित्यस्यापि पाञ्चभौतिकत्वं प्रसिद्धम् । किंचैवंभूत आदित्यश्चन्द्रनक्षत्रग्रहतारकादितेजोस्वदेवताभ्य इन्द्रादीतरदेवताभ्यश्चाप्यधिकस्तजसोत्कृष्टः समवर्तत बभूव । अपि च त्वष्टा देदीप्यमान आदित्यस्तस्य परमात्मनो रूपं तेजो विदधद्धरन्नेत्युदेत्युदयाचलमारोहतीत्यर्थः । सूर्यादिषु यत्तेजस्तत्परमात्मसंबन्धीति सर्ववेदान्तडिण्डिमः । य एवंविधः सविता तस्य पुरुषस्य पूर्णस्याग्रे दृष्टिपथे तत्प्रसिद्धमा समन्ताज्जायत इत्याजानं समस्तं विश्वं वर्तत इति शेषः । निखिलजगत्प्रतिभानं भगवदादित्याधीनमित्यभिप्रायः ।

द्वितीयमन्त्रमाह—

**वेदाहमेतं पुरुषं महान्तम् । आदित्यवर्णं तमसः परस्तात् ।**

**तमेवं विद्वानमृत इह भवति । नान्यः पन्था विद्यतेऽयनाय, इति ।**

कश्चन सूर्योपासकः स्वानुभवं प्रकटयति। एनमाकाशमण्डले दृश्यमानं पुरुषं पूर्णमादित्यस्य वर्ण इव वर्णः कान्तिर्यस्य तमादित्यवर्णमादित्यस्य समानोपमाभावात् सो(त्वो)पमानं स्तु(श्रु)त्या प्रयुक्तं तमसोऽन्धकारात्परस्ताद्दूरे वर्तमानं भगवन्तं सवितारमहं वेद जानामि। किंच तं पूर्वोक्तविशेषणविशिष्टमेवं पूर्वोक्तविधया वक्ष्यमाणविधया च विद्वाञ्जानन्नमृतो भवति। अयनाय मोक्षमार्गायान्यः पन्था न विद्यते।

तृतीयमन्त्रमाह—

प्रजापतिश्चरति गर्भे अन्तः। अजायमानो बहुधा विजायते।
तस्य धीराः परिजानन्ति योनिम्। मरीचीनां पदमिच्छन्ति वेधसः, इति।

प्रजानां पतिः पालको गर्भे रोदस्योर्मध्ये चरति संचरति। किंच स्वयमजायमानोऽनुत्पद्यमानो बहुधा चराचररूपेण विजायते। सूर्य एव सर्वात्मको जायत इत्यर्थः। ये पुण्यपुरुषा गुरुप्रकारस्य कर्तारो मरीचीनां वेदविशेषाणां पदं स्थानमिच्छन्ति ते धीरा वेधसो जगतां विधातुस्तस्य सूर्यस्य योनिं कारणं परमात्मानं परितः सर्वत्र पूर्णत्वेन जानन्ति जानीयुरित्यर्थः।

चतुर्थमन्त्रमाह—

यो देवेभ्य आतपति। यो देवानां पुरोहितः।
पूर्वो यो देवेभ्यो जातः। नमो रुचाय ब्राह्मये, इति।

यो देवेभ्यः कर्मानुष्ठानद्वारा देवानामुपकारार्थमातपति यो देवानां पुरोऽग्रे हितो हितकारी यः समस्तदेवेभ्यः पूर्वः प्रथमं जात उत्पन्नः सर्वदेवज्येष्ठस्तस्मै रुचाय देदीप्यमानाय ब्रह्मणः परमात्मनः पुत्रो ब्राह्मिस्तस्मै ब्राह्मये सूर्यदेवाय नमोऽस्तु।

पञ्चमं मन्त्रमाह—

रुचं ब्राह्मं जनयन्तः। देवा अग्रे तदब्रुवन्।
यस्त्वेवं ब्राह्मणो विद्यात्। तस्य देवा असन्वशे, इति।

देवा देवः परमात्माऽग्रे महान्सर्गादावृचमृग्वेदरूपं ब्राह्मं ब्रह्मणो देव(वेद?)स्य संबन्धिनं सर्ववेदान्तवेद्यमित्यर्थः। सूर्यं जनयन्त उत्पादयंस्तद्वक्ष्यमाणं वाक्यमब्रुवन्नब्रवीत्। पूज्यत्वात्परमात्मन एकवचने बहुवचनप्रयोगो वेदेन कृतः। ननु देवा इति बहुवचनमिन्द्रादिदेवतापरं किमर्थं न भवतीति चेन्न। तेषां सूर्यजनकत्वे मानाभावात्। पूर्वो यो देवेभ्य इत्यत्रेन्द्रादिभ्यः पूर्वं सूर्योत्पत्तिश्रवणाच्च। तद्वक्ष्यमाणवचनं दर्शयति—यो ब्राह्मणः। तुशब्द एवकारार्थः। एवं पूर्वोक्तरीत्या विद्याज्जानाति तस्य ब्राह्मणस्य वशे स्वाधीने देवाः शचीपतिप्रमुखा असन्भवन्ति। इति सूर्यनारायण[स्य] स्वरूपेण परिज्ञाने सर्वदेववशीकारः फलमिति भावः।

षष्ठमन्त्रमाह—

ह्रीश्च ते लक्ष्मीश्च पत्न्यौ। अहोरात्रे पार्श्वे। नक्षत्राणि रूपम्।
अश्विनौ व्यात्तम्। इष्टं मनिषाण। अमुं मनिषाण। सर्वं मनिषाण, इति।

पूर्वमन्त्रे सूर्यं परोक्षतया स्तुत्वैतन्मन्त्रेऽपरोक्षतयाऽभिष्टौति। भो भगवन्नादित्य निखिलजगत्संजीवन ते तव लक्ष्मीरिन्दिरा ह्रीर्हरति सौन्दर्येण मनांसीति ह्रीर्मनोहराऽतिसुन्दरी भारती। अनयैव व्युत्पत्त्या ह्रीशब्दः पार्वतीवाचकोऽपि द्रष्टव्यः। सरस्वती लक्ष्मीः पार्वती च पत्न्यौ भार्याः।

सूर्यस्य श्रुतिस्मृतिपुराणेषु त्रिमूर्त्यात्मकत्वेन प्रसिद्धत्वात् । [अहोरात्रे पार्श्वे । स्पष्टम् ]। नक्षत्राणि रूपमाकारः । अश्विनौ व्यात्तं मुखम् । चकाराभ्यां सर्वं ब्रह्माण्डं तदवयभूतमित्यर्थः । एवमभिष्टुतो भगवाञ्श्रीसूर्यो भक्ताय प्रत्यक्षो भूत्वा ब्रवीति । भो भक्तेष्टमभीष्टं मन्मत्त इषाणेच्छ प्रार्थय । अमुं परलोकमिषाण । यद्यन्मनसि वर्तते तत्सर्वमिषाण । अत्र दैर्घ्यं छान्दसम् । अनित्यतन्त्र एकतवर्गनिष्ठत्वात्तकारस्थाने नकारप्रयोगश्छान्दसः । एवं सूर्येणोक्तो भक्तस्तत्सर्वं प्रार्थितवान् । सूर्योऽपि दत्तवान् । अयमपि कृतार्थो जातः ।

[ अथ ] प्रथमामृचमाह—

हिरण्यगर्भः समवर्तताग्रे । भूतस्य जातः पतिरेक आसीत् ।
स दाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम, इति ।

यस्मात्परमात्मनः सकाशाद्धिरण्यगर्भश्चतुर्मुखो ब्रह्माऽग्रे सृष्ट्यादौ समवर्तत संभूतो जातः । स च यत्प्रसादाद्भूतस्य भुवनजातस्यैक एव पतिरासीत् । स परमात्मा पृथिवीं द्यामिमां प्रत्यक्षामुतापि दाधार धृतवान् । तं परमात्मानं विनाऽन्यस्मै कस्मै हविषा हविष्मता यज्ञेन विधेम विध्यनुष्ठानं कुर्मो न कस्मैचित्किंतु तस्यैव प्रीत्यर्थं सर्वं श्रौतं स्मार्तं कर्म कुर्मः ।

द्वितीयामाह—

यः प्राणतो निमिषतो महित्वैक इद्राजा जगतो बभूव ।
य ईशे अस्य द्विपदश्चतुष्पदः कस्मै देवाय हविषा विधेम, इति ।

यः परमात्मा प्राणतः प्राणवतो निमिषतो निमिषवतो जङ्गमस्य स्थावरस्य च महित्वेन( नो ) मह पूजायामेक इदेक एव राजा बभूव । यः परमात्माऽस्य ब्रह्माण्डस्य मध्ये विद्यमानान्द्विपदो मनुष्यपक्ष्यादींश्चतुष्पदो गोमहिष्यादीनीशे शिक्षयति सर्वप्राणिहृदयपुण्डरीके स्थित्वाऽन्तर्यामितया जगत्सर्वं पुण्यपापेषु प्रेरयति, तं परमात्मानं विनेत्यादि पूर्ववत् ।

तृतीयामाह—

य आत्मदा बलदा यस्य विश्व उपासते प्रशिषं यस्य देवाः ।
यस्य छायाऽमृतं यस्य मृत्युः कस्मै देवाय हविषा विधेम, इति ।

य आत्मानं जीवरूपं ददातीत्यात्मदो बलमन्नादिपुष्टिं ददातीति बलद उभयत्र दैर्घ्यं छान्दसम् । यस्य परमात्मनः प्रशिषमाज्ञां विश्वे सर्वे मनुष्याः सर्वेऽपि देवा उपासते मूर्ध्ना परिपालयन्ति । यस्य परमात्मनश्छायाऽऽश्रयः शरणागतत्वममृतं मोक्षहेतुर्यस्याशरणागतत्वं मृत्युर्नरकहेतुः । तं परमात्मानं विनेत्यादि पूर्ववत् ।

चतुर्थीमाह—

यस्येमे हिमवन्तो महित्वा यस्य समुद्रꣳ रसया सहाऽऽहुः ।
यस्येमाः प्रदिशो यस्य बाहू कस्मै देवाय हविषा विधेम, इति ।

इमे भूमण्डले विद्यमाना हिमवन्तो हिमवत्पर्वतप्रभृतिमहामेरुविन्ध्यसह्यत्रिकूटाचलप्रभृतिपर्वताः, यस्य परमात्मनो महित्वा महित्वानि विभूतयः । हिमवन्त इत्यत्र हिमाचलस्य सर्वपर्वतराजन्यत्वात्तन्नामपूर्वकं छत्रिन्यायेनेतरेषां ग्रहणम् । यतो जगन्माता भागीरथी च तदुत्तरे ( तत्र स्थिता? ) तस्मादित्यर्थः । किंच रसाशब्दो नदीवाची । जातावेकवचनम् । रसया नद्या गङ्गादिसर्वनदीभिः

[ सह ] समुद्रं लवणादिसमुद्रान्यस्य परमात्मनो विभूतिमाहुर्वेदाः कथयन्ति । इमाश्चतस्रः प्राच्यादिदिशो यस्य परमात्मनोऽवयवाः । प्रदिशो विदिश आग्नेय्याद्या यस्य परमात्मनो बाहू । अनया रीत्या गिरिनदीवृक्षादि सर्वं परमात्मनो विभूतिरित्युक्तम् । तं परमात्मानं विनेत्यादि पूर्ववत् ।

अथ पञ्चमी—

यं क्रन्दसी अवसा तस्तभाने अभ्यैक्षेतां मनसा रेजमाने ।
यत्राधि सूर उदितौ व्येति कस्मै देवाय हविषा विधेम, इति ।

यत्र ययोर्द्यावापृथिव्योरभ्यन्तराले सूरः सूर्य उदितः सन्व्येति शिशुमारचक्रं परितो भ्राम्यति । ते द्यावापृथिव्यौ कीदृश्यौ, क्रन्दसी अतिवृष्टिविद्युत्पातादिना प्रलयाधारत्वेन च क्रन्दनस्य प्राणिरोदनस्य हेतुभूते । एतेन लयकारणत्वमुक्तम् । किंचावसा रक्षकेणान्नेन तस्तभाने जीवानां स्थितिं कुर्वाणे । एतेन जीवनहेतुत्वमुक्तम् । एतदुपलक्षणमुत्पत्तेरपि । जगदुत्पत्तिस्थितिलयकारणभूते । रेजमाने विराजमाने । एवंविधे रोदस्यौ यं परमात्मानं मनसा निर्मलमनोवृत्त्याऽभितः सर्वत ऐक्षेतामाध्यायतः । तं परमात्मानं विनेत्यादि पूर्ववत् ।

अथ षष्ठी—

येन द्यौरुग्रा पृथिवी च दृढे येन सुवः स्तभितं येन नाकः ।
यो अन्तरिक्षे रजसो विमानः कस्मै देवाय हविषा विधेम, इति ।

उग्राऽशनिपातादिना क्रूरा द्यौः पृथिवी च येन परमात्मना[दृढे] दृढीकृते सर्वप्राणिधारणपोषणक्षमे कृते । येन परमात्मना सुवरादित्यमण्डलं स्तभितमन्तरिक्षे निराधारं स्थापितम् । अत एव भूमौ न पतति । येन परमात्मना नाकः स्वर्गनिष्ठविशेषः पुण्यात्मनामुपभोगाय निर्मितः । यः परमात्माऽन्तरिक्षे भुवर्लोके रजसो वृष्टिरूपोदकस्य विमानो निर्माणकर्ता तं परमात्मानं विनेत्यादि पूर्ववत् ।

अथ सप्तमीमाह—

आपो ह यन्महतीर्विश्वमायं दक्षं दधाना जनयन्तीरग्निम् ।
ततो देवानां निरवर्ततासुरेकः कस्मै देवाय हविषा विधेम, इति ।

यद्यदा जगतीं निर्मातुं संकल्पितवांस्ततस्तदा परमात्माऽऽप उदकानि निरवर्ततोत्पादयामास आप इत्यत्र प्रथमाया द्वितीयायां तात्पर्यम् । आपः कीदृशीर्महतीः पूज्याः समुद्रादिरूपेण महापरिमाणा वा । पुनः कीदृशीरा समन्तादयः शुभावहो विधिर्यस्य तदायं दक्षं समस्तप्राणिधारणपोषणक्षमं विश्वं दधाना धारयन्तीः । अग्निं जनयन्तीः । परमात्मा कीदृश एकोऽद्वितीयो देवादीनामसुर्ब्रह्मादीनां प्राणभूतो ह किल । निरवर्ततत्यत्रान्तर्णिच्प्रत्ययार्थो बोध्यः । तं परमात्मानं विनेत्यादि पूर्ववत् ।

अथाष्टमीमाह—

यश्चिदापो महिना पर्यपश्यद्दक्षं दधाना जनयन्तीरग्निम् ।
यो देवेष्वधि देव एक आसीत्कस्मै देवाय हविषा विधेम, इति ।

दक्षं श्रौतस्मार्तकर्मानुष्ठानक्षममग्निं दधाना अग्निं जनयन्तीः । वडवाग्नेः समुद्रोदके विद्यमानत्वात् । आप उदकानि चिद्रूपो यः परमात्मा महिना महिम्ना । मलोपश्छान्दसः । पर्यपश्यन्निखिलजीवजीवने साधनत्वेनापश्यत् । यः परमात्मा सर्वेषु देवेष्वध्यधिकत्वेनैको देव आसीत् । त परमात्मानं विना कस्मै देवाय हविषा विधेम न कस्मैचित्किंतु तत्प्रीत्यर्थमेव । सप्त पाकयज्ञाः सप्त हविर्यज्ञाः सप्त सोमसंस्था आहत्यैकविंशतिसंस्था अन्यत्पूर्तवापीकूपतटाकगोदानभूदानादि चानुष्ठाय समर्पयामः । व्याख्यातमन्यद्यत्किंचित् । )

---

अथेदानीं यथा हिरण्यगर्भादयः परमात्मन उपलक्षकास्तथा परमात्मना सृष्टं दिगादिकं जगद्विस्फूर्तिश्च परमात्मानमुपलक्षयतीति मन्त्रद्वयेन दर्शयति—

एष हि देवः प्रदिशोऽनु सर्वाः पूर्वो हि जातः स उ गर्भे अन्तः ।
स विजायमानः स जनिष्यमाणः प्रत्यङ्मुखास्तिष्ठति विश्वतोमुखः ॥
विश्वतश्चक्षुरुत विश्वतोमुखो विश्वतोहस्त उत विश्वतस्पात् ।
सं बाहुभ्यां नमति सं पतत्रैर्द्यावापृथिवी जनयन्देव एकः ॥

[एष] विद्वद्भिरनुभूयमानो देवः स्वप्रकाशः परमात्मा प्रदिशः प्रकृष्टाः प्राच्याद्या आग्नेय्याद्याश्च दिशः सर्वा अनुप्रविश्यावस्थितः । प्रवेशस्य श्रुत्यन्तरप्रसिद्ध्यर्थो हिशब्दः । तथा पूर्वो जातो हिरण्यगर्भरूपत्वेनायमेव प्रथममुत्पन्नः । हिशब्देन हिरण्यगर्भः समवर्ततेतिमन्त्रप्रसिद्धिः सूच्यते । स उ स एव परमेश्वरो गर्भेऽन्तर्ब्रह्माण्डरूपस्य गर्भस्य मध्ये वर्तते । स एव विजायमानो देवतिर्यगादिरूपेणेदानीं जायते इतः परमपि जनिष्यमाणः स एव । स च प्रत्यङ्ङन्नमयादिकोशेभ्य आन्तरः । मुखा देहेन्द्रियाध्यक्षत्वेन मुख्यः । विश्वतः सर्वतो मुखानि रूपाद्युपलब्धिद्वाराणि चक्षुरादीनि यस्य सो विश्वतोमुखस्तादृशोऽयं जगद्विधानत्वेन तिष्ठति । स च ब्रह्माण्डरूपदेहवत्त्वात्सर्वप्राणिना च तद्देहस्वरूपत्वात्तदीयैः सर्वैश्चक्षुरादिभिर्युक्त इति विश्वतश्चक्षुरित्यादिभिः पदैरभिधीयते । तत्तल्लोकनिवासिनां प्राणिनां चक्षूंषि तत्र तत्र स्थितान्येवैतदीयानि भवन्ति । अतोऽस्य सर्वतश्चक्षुष्मत्त्वम् । एवं विश्वतोमुखत्वादिकं द्रष्टव्यम् । स च परमेश्वरो बाहुभ्यां संनमति बाहुसदृशाभ्यां धर्माधर्माभ्यां निमित्तकारणाभ्यां सर्वं जगद्वशी करोति । तथा संपतत्रैः पतनशीलैः पञ्चीकृतपञ्चमहाभूतैः संनमति सर्वं जगदुत्पादयति । एवमयं द्यावापृथिव्यादिकं कृत्स्नं जगदुत्पादयन्नेक एवावतिष्ठते ।

उक्तार्थे श्रद्धातिशयमुत्पादयितुं मन्त्रद्वयेन गन्धर्ववृत्तान्तं दर्शयति—

वेनस्तत्पश्यन्विश्वा भुवनानि विद्वान्यत्र विश्वं भवत्येकनीळम् ।
यस्मिन्निद५ सं च वि चैक५ स ओतः प्रोतश्च विभुः प्रजासु ॥

प्र तद्वोचे अमृतं नु विद्वान्गन्धर्वो नाम निहितं गुहासु ॥
त्रीणि पदा निहिता गुहासु यस्तद्वेद सवितुः पिता सत् (२), इति ।

वेनो नाम गन्धर्वः सर्वप्राणिनां गुहासु बुद्धिषु निहितममृतं विनाशरहितं तद्वस्तु स्वानुभवेन विद्वान्प्रवोचे नु शिष्येभ्यः प्रोवाच खलु । कीदृशो वेनः । यत्र यस्मिन्परमात्मवस्तुनि विश्वं जगदेकनीलं(ळं) भवत्येकत्वेन ... विश्वमवस्थितं सत्तादात्म्यं प्राप्नोति तद्वस्तु गुरुशास्त्रप्रसादेन पश्यन्साक्षात्कुर्वन्विश्वा भुवनानि सर्वानपि लोकान्विद्वाननुवर्तते । आत्मसाक्षात्कारे हि सर्वं जगत्तदात्मकमित्यवगतिर्भवति । किंच ... दृष्टे यस्मिन्वस्तुनि परमात्मनीदं जगत्सं[च वि]चैति ... स्वयमत्र ... विलीनं च भवति । एकमद्वितीयतत्त्वरूपः [स] परमात्मा विभुर्व्यापी प्रजासु दीर्घतन्तुवदोतस्तिर्यक्तन्तुवत्प्रोतश्चावतिष्ठते । गुहासु प्राणिनां बुद्धिषु त्रीणि पदा जाग्रत्स्वप्नसुषुप्तिरूपाणि त्रीणि स्थानानि निहिताऽवस्थितानि ... । योऽयं गन्धर्वस्तज्जागराद्यनु(धि)ष्ठानं वेद स गन्धर्वः सवितुरुत्पादकस्य , स्वकीयजनकस्यापि पिता सज्जनको भवति । लोकप्रसिद्धः पिता पुत्रस्य देहमात्रं जनयति ब्रह्मतत्त्वाभिज्ञस्तु परमात्मरूपेण सर्वजगदुत्पादकत्वाल्लोकप्रसिद्धस्य ... जनकस्यापि स्वयमुत्पादको भवति । "यस्ता विजानात्सवितुः पिता सत्" इति श्रुत्यन्तरात् ।

तस्य परमेश्वरस्य व्यवहारकाले सर्वप्राण्युपकारकत्वं परमात्मदर्शिनो मुक्तिप्रदत्वं च मन्त्रद्वयेन दर्शयति—

स नो बन्धुर्जनिता स विधाता धामानि वेद भुवनानि विश्वा ।
यत्र देवा अमृतमानशानास्तृतीये धामान्यभ्यैरयन्त ॥
परि द्यावापृथिवी यन्ति सद्यः परि लोकान्परि दिशः परि सुवः ।
ऋतस्य तन्तुं विततं विचृत्य तदपश्यत्तदभवत्प्रजासु, इति ॥

स परमेश्वरो नोऽस्माकं सर्वेषां बन्धुः । अस्मदनुष्ठितसुकृतानुसारेण हितकारित्वात् । जनितोत्पादकः । भोक्तृ ( स्रष्टृ ) त्वात् । स च विधाता जगतो निर्माता सन्विश्वा भुवनानि सर्वानुत्तमाधमलोकान्धामानि तेषु देवादीनां योग्यानि स्थानानि च वेद जानाति । यत्र तृतीये लोके देवा इन्द्रादयोऽमृतमानशानाः सुधां पिबन्तो धामानि स्वकीयस्थानान्यभ्यैरयन्त सर्वतः प्राप्तवन्तः । तत्सर्वं विदित्वा तत्तदनुष्ठितकाम्यकर्मानुसारेण फलं प्रयच्छतीत्यर्थः । इह तु मुमुक्षवस्ते सर्वे विदिततत्त्वाः सन्तो द्यावापृथिवी लोकद्वयं सद्यः परियन्ति , बन्धमोक्ष ( मोक्षण ) एव सर्वतो व्याप्नुवन्ति । तथा लोकानव[ शिष्टा ]नन्तरिक्षादीन्परियन्ति । दिशः प्राच्याद्याः परियन्ति । सुवः ... यो देवेष्वाभ्रियन्ति । सर्वात्मकत्वेन सर्वव्याप्तिरुपपन्ना । ऋतस्य

सत्यस्य परब्रह्मणस्तत्त्वमविच्छेदेन दर्शनं विततं विस्तीर्णं यथा भवति तथा [विचृत्य] विचृत्य गुरुशास्त्रानुसाराद्विविच्य तदृतं तत्त्वमपश्यत्स साक्षात्कृतवान्स एव प्रजासु मध्ये तद्ब्रह्मतत्त्वमभवत् । तथा च श्रुत्यन्तरम्— " ब्रह्मविद्ब्रह्मैव भवति " इति ।

अम्भस्येत्यादिना तदभवत्प्रजास्वित्यन्तेन ग्रन्थेन प्रतिपादितां ब्रह्मविद्यामुपसंहरति—

परीत्य लोकान्परीत्य भूतानि परीत्य सर्वाः प्रदिशो दिशश्च ।
प्रजापतिः प्रथमजा ऋतस्याऽऽत्मनाऽऽत्मानमभिसंबभूव, इति ।

ऋतस्य सत्यस्य ब्रह्मणः प्रथमजाः प्रथमकार्यभूतः प्रजापतिर्हिरण्यगर्भो रूपा-( लोका )न्भूरादीन्भूतानि देवमनुष्यादिप्राणिदेहान्प्रदिश आग्नेय्याद्या दिशश्च प्राच्याद्याः [ परीत्य ] सर्वतो व्याप्य सृष्टिकाले सृष्ट्वा पुनरपि परीत्य स्थितिकाले रक्षित्वाऽऽत्मना स्वस्वरूपेण तद्विषयतत्त्वज्ञानेनेत्यर्थः । आत्मानं सत्यज्ञानादिलक्षणमभिसंबभूव सम्यक्सर्वतः प्राप्तवान् ।

तदेवं ब्रह्मविद्या प्रतिपादिता । अतस्तत्प्राप्तिसाधनभूताः सोपाधिकब्रह्मज्ञानजप-ध्यानादिकर्माङ्गभूता मन्त्राः कर्मकाण्डे पूर्वमनुक्ता अस्मिन्खिलकाण्डेऽभिधीयन्ते । तत्र केन मन्त्रेण ब्रह्मप्राप्त्यर्थं [ * मन्तर्यामिणं प्रार्थयते—

सदसस्पतिमद्भुतं प्रियमिन्द्रस्य काम्यम् ।
सनिं मेधामयासिषम्, इति ।

सीदत्यस्मिन्नव्याकृते कारणे सर्वं जगदिति सदः, तस्य पतिं पालकमन्तर्यामिणमयासिषमहं प्राप्तवानस्मि । शीघ्रं प्राप्तवानित्यनया विवक्षया भूतार्थे ] निर्देशः । कीदृशं सदसस्पतिमद्भुतमाश्चर्यरूपम् । मनसाऽप्यचिन्त्यरचनारूपस्य जगतोऽनायासेन निर्मातृत्वमद्भुतत्वम् । इन्द्रस्य देवराजस्यापि प्रियम् । सोऽप्यन्तर्यामिणं कदा प्राप्स्यामीत्येवमाशास्ते । अत एव सर्वैरन्यैः काम्यमपेक्षणीयम् । सनिं कर्मफलस्य दातारम् । मेधां श्रुत्यादि ( ताधीत )ग्रन्थधारणशक्तिं प्रयच्छन्तामिति शेषः ।

अथ वह्न्युपाधिकं परमेश्वरं प्रतीष्टप्राप्तिं प्रार्थयते—

उद्दीप्यस्व जातवेदोऽपघ्नन्निर्ऋतिं मम ( ४ )
पशूꣳश्च मह्यमावह जीवनं च दिशो दिश, इति ।

जाते प्राणिशरीरे जाठराग्निरूपेण विद्यतेऽवातिष्ठत इति [ जातवेदाः । हे ] जातवेदो मदनुग्रहार्थमुत्कर्षेण दीप्यस्व । किं कुर्वन् । ममानिष्टकारिणीं निर्ऋतिं पापदेवताम-

* एतच्चिह्नान्तर्गतं चतुःषष्टपत्राङ्कभाष्यात्संगृहीतम् । [illegible] साम्यात् ।

गजसमानवक्त्रत्वेन दीर्घस्य तुण्डस्य रत्नकलशादिधारणार्थं वक्रत्वम् । दन्तिर्महादन्तः ।

[नन्दिकेश्वरं प्रार्थयते—]

तत्पुरुषाय विद्महे चक्रतुण्डाय धीमहि (५) ।

तन्नो नन्दिः प्रचोदयात्, इति ।

तद्यं परमशिववाहनरूपं नन्दिकेश्वरं वयं विद्महे [धीमहि च] । कथंभूतम् । पुरुषाय पुरुषं कामरूपित्वाज्ज्ञानुचित्स्वेच्छया तिर्यक्त्वं परिहाय च्छ(धृ)तदिव्यपुरुषविग्रहम् । पुनश्चक्रतुण्डाय चक्रतुण्डं चक्रमिव तुण्डं यस्य यथा चक्रायुधं विष्णुप्रयुक्तं समु[द्य]द्रक्षांसि हन्ति तथा स्वारूढपरमशिवस्य रक्षोभिः सह संगरप्रसङ्गे स्वमुखेन तान्यत्तीत्यर्थः । तत्स नन्दिर्नन्दी नः प्रचोदयात् ।

[षडाननं प्रार्थयते—]

तत्पुरुषाय विद्महे महासेनाय धीमहि ।

तन्नः षण्मुखः प्रचोदयात्, इति ।

तद्यं वयं विद्महे धीमहि च तत्स षण्मुखः [illegible] प्रचोदयात् । यं कथंभूतम् । पुरुषाय पुरुषम् । अनया(अथ स्नानाङ्गभूता मन्त्राः) [illegible] पूर्णत्वात् । [महासेनाय] महती देवसेना यस्य तस्मै । तमित्य[illegible]मन्त्रानाह—

[गरुडं प्रार्थयते—]

तत्पुरुषाय विद्महे सुवर्णपक्षाय धीमहि ।

तन्नो गरुडः प्रचोदयात्, इति ।

स्पष्टोऽयं मन्त्रः ।

[ब्रह्म प्रार्थयते—] शताङ्कुरा ।

वेदात्मनाय नाश(शि)नी । [illegible]र्भाय धीमहि ।

तन्नो ब्रह्म प्र[illegible]री परुषः इति ।

सहस्रेण शतेन

त(य) ब्रह्म णः(नः) पुण्यापुण्येषु [illegible] प्रेरय[illegible] तद्वयं विद्महे, गुरुकुले क्लिष्टा वेदान्तश्रवणादिना जानीमहे । ज्ञात्वा च निदिध्यासनयं वध (नार्थत्वधि)या सततं धीमहि, अखण्डं तदेवाहमिति दिवानिशं मामृते(?) [illegible]यामः । कथंभूतम् । वेदात्मनाय वर्णव्यत्ययेन वेदात्मकाय, शाखोपशाखोपेतसर्ववेदस्वरूपमित्यर्थः । हिरण्यगर्भाय चतुर्मुखब्रह्मस्वरूपमित्यर्थः । वेदाहिरण्यगर्भयोरुपलक्षकत्वेन सर्वात्मकमिति यावत् । सेयं परमगायत्री ।

[ नारायणं प्रार्थयते— ]

नारायणाय विद्महे वासुदेवाय धीमहि ।

तन्नो विष्णुः प्रचोदयात्, इति ।

ततो(यो) विष्णुर्नः प्रचोदयति तं विद्महे धीमहि च । कथंविधम् । भक्तानां नराणां समूहो नारं तस्यायनमाधार[स्त]म् । वसुदेवस्यापत्यं पुमान्वासुदेवस्तम् ।

[ नरसिंहं प्रार्थयते— ]

वज्रनखाय विद्महे तीक्ष्णदꣳष्ट्राय धीमहि ( ६ ) ।

तन्नो नारसिꣳहः प्रचोदयात्, इति ।

नरसिंह एव नारसिंहः । वज्रनखाय तीक्ष्णदंष्ट्राय तस्मै प(यैत्येतत्प)दयोजना पूर्ववत्सेयम् (ज्ञेया) । अयसा (कस्मा)त्स्तम्भादवतीर्य स्वनखैर्हिरण्यकशिपुजठरभेत्तुः कृत(त्त!)तदीयान्त्रयज्ञोपवीतस्य भगवतो नरकण्ठीरवगाय(रूपस्य) [वज्रनखत्वं तीक्ष्णदंष्ट्रत्वं च युक्तमेव] ।

[ आदित्यं प्रार्थयते— ]

[illegible] [illegible]विद्महे महद्युतिकराय धीमहि ।

[illegible] आदित्यः प्रचोदयात्, इति ।

अदितेर्देवमातुरपत्यमादित्यः । भा भूर्लोकाय(क ए)व दीप्तिस्तत्कर्ता भास्करः । महती त्रिलोकीगोचरा द्युतिर्महद्युतिस्तत्कर्ता महद्युतिकरः । आन्महत इत्यादिना प्राप्तस्याऽऽ[त्वस्य] लोपश्छान्दसः । अन्यदतीतवद्योजयितव्यम् ।

अग्निं प्रार्थयते—

वैश्वानराय विद्महे लाली[illegible] धीमहि ।

तन्नो अग्निः प्र[illegible] ।

स्वस्मिन्दत्तानि हव्यानि य[illegible]न्यदेवताभ्यो नयतीत्यग्निः । विश्वेभ्यो नरेभ्यो हितो वैश्वानरः । लौकि[illegible]रानुकूल्येन सर्वप्राणिहित इति यावत् । लालीलायेत्यत्र पृषोदरादेराकृति[illegible] नणो(वर्णो) लुप्यते । [हे] लालीलायेत्यर्थः । हेला स्या(स्वा)कुटुम्बिकी [illegible] सर्वदेवताग्रगण्यत्वलक्षणा च क्रीडा यस्य(स्या)[स्ति] स हेलाली[ल]स्तस्मै हेलालीलाय । यद्वा वैश्वानराय विद्म हेलालीलायेत्यका(स्येवं) पदच्छेदः । तथा च मन्त्रान्तरप्रयोगः । यद्वा वा सत्यमुत यत्र विद्मेति । पूर्वत्राऽऽत्मनेपदमत्र परस्मैपदम् । उभयत्र बहुवचनमेवात एवार्थैक्यम् । अन्यदतिक्रान्तवद्योजयितव्यम् ।

आदिशक्तिं प्रार्थयते—

कात्यायनाय विद्महे कन्यकुमारिं धीमहि।
तन्नो दुर्गिः प्रचोदयात्, इति।

छान्दसप्रयोगं लोकानुसारेण व्याख्यास्यामः। दाक्षायणी सती किल दक्षस्य पितुर्याज्ञिके पावके भाविगिरिराजन्यभागधेयोदयवशेन दिव्यं परममङ्गलास्पदं कायं तिरश्चक्रे। ततः परमयोगिन्यां मेनकायां प्रालेयाचलादाविश्चक्रे। जनित्वाऽऽदौ (?) कन्या चासौ प्राक्पाणिग्रहणात्कुमारी चेति कन्यकुमारी तत्संबुद्धौ हे कन्यकुमारि। [यद्वा] कनति देदीप्यत इति कन्या। कन कान्तौ। कुत्सितं प (पा)रतन्त्रा(न्त्र्या)दिलक्षणं बाल्यं मारयति, क्रीडावशेन करपल्लवाभ्यां पदपङ्कजाभ्यां च कुं भूमिं मारयतीति वा कुमारी। हे कन्यकुमारि भो हैमवति भो मैनकेयि त्वां विद्महे, हरिहरविरिञ्च्यादिभिराराध्यां सर्वत उत्कृष्टां भक्त्यैकसुलभां जानीमहे। विदित्वा च रात्रिंदिवं धीमहि। भुक्तिमुक्तिप्रदात्रीमिति शेषः। कस्मै, कात्यायनाय स्वपित्रे। यथा रामकृष्णादिरूपेणावतीर्णस्य भगवतो बहवो मातापितरस्तथा भगवत्या अपि देवकार्यचिकीर्षया ज[ग]दनुजिघृक्षया चावतीर्णायाः। राक्षसैर्दुःखेन गम्या दुर्गा(र्गिः)। इकारान्तत्वं छान्दसम्।

एवं द्वादश गायत्र्यो व्याख्याताः। अथ स्नानाङ्गभूता मन्त्रा उच्यन्ते। तत्र शिरसि मृत्तिकया सह दूर्वां धारयितुं दूर्वाभिमन्त्रणमन्त्रानाह—

सहस्रपरमा देवी शतमूला शताङ्कुरा।
सर्वꣳ हरतु मे पापं दूर्वा दुःस्वप्ननाशिनी, इति।

येयं दूर्वाभिमानिनी देवता सा मे पापं सर्वं हरतु। कीदृशी। सहस्रसंख्याकेभ्यः पावनहेतुभ्यो द्रव्येभ्यः परमोत्कृष्टा। सा च देवी द्योतनात्मिका। शतसंख्याकानि मूलानि यस्याः सा शतमूला। तथा शताङ्कुरा। शतशब्देन बहुत्वमात्रमुपलक्ष्यते। दुःस्वप्नकृतमनिष्टं नाशयतीति दुःस्वप्ननाश(शि)नी।

काण्डात्काण्डात्प्ररोहन्ती परुषः परुषः परि (७)।
एवा नो दूर्वे प्रतनु सहस्रेण शतेन च, इति॥

काण्डादि[illegible]ति हिनस्ति पातकमिति दूर्वा तत्संबुद्धौ हे दूर्वे। दुर्वी हिंसायाम्। हे तृ[illegible] नोऽस्माञ्शतेन सहस्रेण च पौत्रदौहित्राद्यनेकप्रकारैः प्रतनु प्रकृष्टं [illegible] [भवति तथा] विस्तारय। त्वं किंभूता। परुषः [परुषः] परि प्रतिपर्व [illegible] रोहन्ती। काण्डात्काण्डात्प्रतिमूलात्सकाशाच्च प्ररोहन्तीति

१ ख. ङ. नाशनी।

[संबन्धः]।(*अयमभिप्रायः ।) दूर्वाया एष स्वभावः । प्रतिपर्व भूसंपर्कवशात्पादप्रसारः। पादेषु प्रसृतेषु तत्रैव पर्व मूलं भवति तस्मादेव मूलात्पुनरङ्कुरोदयस्त एवाङ्कुराः पुनर्दूर्वालतायन्ते ताभ्यो लताभ्यः पुनः पर्वपरम्परेति। एवा, एवं प्रकारेणोत्पद्यमानेत्यर्थः । एवमित्यव्ययविभक्तेराङादेशश्छान्दसः । [अयमभिप्रायः—] हे दूर्वे यथा पूर्वोक्तभङ्ग्या त्वद्वंशवृद्धिस्तथाऽस्मद्वंशं वर्धयेति ।

या श॒तेन॑ प्रत॒नोषि॑ स॒हस्रे॑ण वि॒रोह॑सि ।

तस्या॑स्ते देवीष्टके वि॒धेम॑ ह॒विषा॑ व॒यम् , इति ।

**या शतेनेति** । हे देवि पिशङ्गया कान्त्या देदीप्यमाने । इष्टैर्मन्त्रैर्भक्तैः कायते शब्द्यते स्तूयत इतीष्टका तत्संबुद्धौ हे **इष्टके** । कै गै शब्दे सूत्वा(?) । **ते** तव संबन्धिनीं परिचर्यां **वयं हविषा** हविष्प्रदानैर्**विधेम** कुर्मः । ते किंविधायास्तस्याः । सा का **या** त्वं **शतेन** स्वान्वयं **प्रतनोषि सहस्रेण** च **विरोहस्युत्पद्यसे** । एतद्भावार्थः पूर्वमन्त्रे प्रपञ्चितः ।

अथ मृत्तिकाभिमन्त्रणमन्त्राः । तत्र प्रथममन्त्रमाह—

अ॒श्व॒क्रा॒न्ते र॑थक्रा॒न्ते वि॒ष्णुक्रा॑न्ते व॒सुंध॑रा ।

शिर॑सा धा॒रयि॑ष्यामि र॒क्षस्व॒ मां॑ प॒दे प॑दे, इति ।

येयं भूमिस्तामश्वाः शुद्धिहेतवः स्वपदैराक्रामन्ति तादृशी भूमिर**श्वक्रान्ता** । अग्निचयन उखानिर्माणार्थमृत्स्था[प]नप्रदेशस्था(स्या)श्वाक्रमणविधानादश्वपदानां मृच्छुद्धिहेतुत्वं गम्यते । तथा **रथक्रान्ता** रथचरणेन क्षुण्णा सती शुद्धा भवति । तथा त्रिविक्रमावतारे विष्णुः स्वपदेन भूमिमाक्रामति ततोऽपि शुद्धत्वम् । अश्वरथविष्णुभिः क्रान्ते शुद्धे हे भूमे **वसुंधरा** सर्वाणि वसूनि धारयतीति तथा [तादृशीं त्वां] स्नानकर्मण्येतस्मिन्मदीयशिरसा [धारयिष्यामि] धारिता देवी [च] द्योतमाना [सती] त्वं मां स्नानार्थं गच्छन्तं पदे [पदे] रक्षस्व ।

द्वितीयमन्त्रमाह—

भूमि॑र्धे॒नुर्धर॑णी लो॒कधा॑रिणी ।

उ॒द्धृता॑ऽसि व॒राहे॑ण कृ॒ष्णेन॑ श॒तबा॑हुना , इति ।

हे मृत्तिके त्वं प्रलयकाल एकार्णवीभूतायां सप्तार्णव्यां निमग्ना सती **कृष्णवर्णेन** शतसंख्याकबाहुयुक्तेन वराहावतारेण पूर्वमुद्धृताऽसि । कीदृशी भूमिः, **धेनुः** कामधेनुवत्प्रीणयित्री । **धरणी** सस्यानां धारयित्री । **लोकधारिणी** प्राणिनामपि धारयित्री ।

---

* धनुश्चिह्नान्तर्गतो ग्रन्थोऽधिकः ।

तृतीयमन्त्रमाह—

मृत्तिके हन मे पापं यन्मया दुष्कृतं कृतम् ।
मृत्तिके ब्रह्मदत्ताऽसि काश्यपेनाभिमन्त्रिता ।
मृत्तिके देहि मे पुष्टिं त्वयि सर्वं प्रतिष्ठितम् ( ८ ), इति ।

षट्पादेयमनुष्टुम्महापङ्क्तिच्छन्दस्का । हे मृत्तिके प्रशस्तमृद्यन्मया दुष्कृतमकर्तव्यं पापं कृतं तद्धन विनाशय । किंच यतस्त्वं ब्रह्मणा परमात्मना दत्ता भूमिरूपेण स्थापिता ब्रह्मदत्ताऽसि । ननु मामेवमभिमन्त्र्य कः स्नाति स्मेत्यत आह—काश्यपेन तदुपलक्षितैः परमर्षिभिः स्नानादिकालेऽभिमन्त्रिता तद्दुष्कृतं च हतवत्यसि । अतः शिष्टाचारप्राप्तत्वाद्वयम[प्य]भिमन्त्रयाम इति भावः । किंच मे मह्यं पुष्टिं देहि । यतः पृथिवीरूपायां त्वयि सर्वं चतुर्विधं भूतजातं प्रतिष्ठितं वर्तते । अतस्त्वय्यधिष्ठिताय मह्यं पुष्टिं देहीत्यर्थः । अनन्यपदेन संबुद्धित्रयं भक्त्यतिशयप्रयोजनम् ।

चतुर्थमन्त्रमाह—

मृत्तिके प्रतिष्ठिते सर्वं तन्मे निर्णुद मृत्तिके ।
तया हतेन पापेन गच्छामि परमां गतिम्, इति ।

प्रतितिष्ठन्ति प्राणिनोऽस्यामिति प्रतिष्ठिता तत्संबुद्धौ हे प्रतिष्ठिते मृत्तिके मे मत्संबन्धि तत्प्रसिद्धं सर्वं पापं निर्णुद विनाशय । हे मृत्तिके तया प्रसिद्धया त्वया पापेन हतेन सता सति तृतीया । पापे हते सतीत्यर्थः । परमां गतिमपवर्गं गच्छामि ।

एवं दूर्वां मृत्तिकां च दक्षिणहस्ते गृहीत्वा मन्त्रैरभिमन्त्र्याथेन्द्रादप्यभयादिकं प्रार्थ्यते द्वाभ्यां मन्त्राभ्याम् । [ तत्र प्रथमं मन्त्रमाह— ]

यत इन्द्र भयामहे ततो नो अभयं कृधि ।
मघवञ्छग्धि तव तन्न ऊतये विद्विषो विमृधो जहि, इति ।

हे इन्द्र मघवन्यतोऽस्मात्पाप्मनो रिपोर्निरयाद्व(च्च व)यं भयामहे बिभेम ततः पापादिभ्यः सकाशान्नोऽस्मभ्यमभयं कृधि कुरु । निष्पापा निःशत्रवो निर्निरया[illegible] त्वत्प्रसादाद्भविष्याम इति भावः । न केवलं पाप्मादित्रितयादभयप्रदानमपि तु तत्पाप्मादित्रितयं शग्धि शातय विनाशयेति यावत् । किंच भक्तत्वेन तव संबन्धिनां नोऽस्माकमूतये रक्षणाय विद्विषोऽन्तर्बहिः शत्रूञ्जहि संहर । कथंभूतान् । विमृध्नन्ति पीडयन्तीति विमृधस्तान् । क्विपि द्वितीयाबहुवचनम् ।

[ द्वितीयं मन्त्रमाह ]

स्वस्तिदा विशस्पतिर्वृत्रहा विमृधो वशी ।
वृषेन्द्रः पुर एतु नः स्वस्तिदा अभयंकरः, इति ।

इन्द्रः स्नानार्थमुद्युक्तानां नोऽस्माकं पुरः पुरस्तात्समक्षमेतु रक्षितुमागच्छतु । कथंभूतः । स्वस्तीहलोकसंबन्धिसौख्यं ददातीति स्वस्तिदः(दा) । सोराजा(डा)देशः । विशो भक्तायाः प्रजायाः पतिः पालकः । वृत्रं हन्तीति वृत्रहा । विमृधः शत्रून्वशाति स्वाधीनी करोतीति वशी वशीकृतरक्षःसंघ इत्यर्थः । वृषति पुष्करावर्तकादीन्मेघानाज्ञाप्य सिञ्चति भूमिमिति वृषा । स्वस्ति परलोकसंबन्धि कल्याणं ददातीति स्वस्तिदाः । ददातेः क्विप् । अभयंकरः स्पष्टम् ।

अथैकेन मन्त्रेणेन्द्रादिभ्यः स्वस्तिपोषो याच्यते स्नानावसरे नक्रग्रहादिजन्या पीडा मा भूदिति—

स्वस्ति न इन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः ।
स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु, इति ।

इन्द्रो नोऽस्मभ्यं स्वस्ति दधातु पोषयतु । किंविधः, वृद्धश्रवाः समृद्धयशाः । पूषा नः स्वस्ति दधातु । किंविधः , विश्ववेदा बहुज्ञानो बहुधनो वा । तार्क्ष्यो गरुडो नः स्वस्ति दधातु । किंविधः, अरिष्टनेमिः । द्राघीयसा पथा गमनेऽपि राक्षसैर्वाऽनुपहिंसितरथः । रथैकदेशवाचिना नेमिशब्देन [रथ] उपलक्ष्यते । बृहस्पतिरिन्द्रपुरोधा नः स्वस्ति दधातु । निगदव्याख्यानम् ।

अथैकेन मन्त्रेण सोमेन्द्रौ प्रार्थ्येते—

आपान्तमन्युस्तृपलप्रभर्मा धुनिः शिमीवाञ्छरुमाँ ऋजीषी ।
सोमो विश्वान्यतसा वनानि नार्वागिन्द्रं प्रतिमानानि देभुः, इति ।

सोमश्चन्द्रमा विश्वानि सर्वाणि वनान्योषधीवनस्पतीन्पुष्णातीति शेषः । वनशब्देनात्रोद्भिज्जमात्रं लक्ष्यते । केन साधनेन पुष्णाति । अतसा, गगनमण्डले स्वकीयसंततगमनेन । अत सातत्यगमने । सोमः कथंभूतः । आपान्तमन्युः । नुमागमस्याऽऽर्षत्वादापातमन्युः । उपर्युपरि क्रोधवानित्यर्थः । यथा मातापित्रादयः शिशुषु बाधा व्याकुप्यन्ति जातुचित्कायेन च नतु कदाचिदप्यन्तरङ्गेण, तथा भगवाञ्नक्षत्रवल्लभोऽपि भक्तेष्वनुजिघृक्षयैतादृक्कोप आपान्तमन्युरित्युच्यते । अहो इदमापातरमणीयमित्यादावापातशब्द उपर्युपरि पर्यायतया प्रयुज्यते । पुनः कथंभूतः । तृपलानां चन्द्रकान्तशिलानां प्रभेव प्रभा यस्य स तृपलप्रभः । मधुनो माक्षिकादेः प्रियो माधुनिः(?) ।

मघोर्वसन्तस्य वा । वसन्ते खलु रोहिणीनायकः सम्यगवभासते । पर्जन्यस्य पटलहिमादेस्तदानीमभावात् । शमीवृक्षो यस्य प्रियत्वेन वर्तते [ स शिमीवान् ] । शमीवानिति वक्तव्ये शिमीवानिति प्रयोगश्छान्दसो द्रष्टव्यः । यथा बिल्ववृक्षः शैवस्तथा शमीवृक्षोऽपि शैव इति हेतोर्बिल्वपत्रवच्छमीपत्राण्यपि चन्द्रशेखरमस्तके समर्प्यन्त इति शमीचन्द्रयोरेकाधिकरणत्वादन्योन्यप्रियत्वम् । तथा शरुमान्बहुसौख्यवान् । तथर्जीषी, अतिदीप्तिमान् । एवं सोमं स्तुत्वेन्द्रं स्तौति—अर्वाग्वचनव्यत्ययः । अर्वाञ्चि । इन्द्रापेक्षया यान्यर्वाचीनानि प्रतिमानान्युपमानानि [ तानि ] गुणपराक्रमादिभिरिन्द्रं न देभुः । दम्भु हिंसायाम्, अस्माल्लिटि *बहुवचनम् । न पीडयन्ति स्मेत्यर्थः । लोके खलु स्वस्यान्यदुपमानं दुःखावहं मत्तुल्यं वर्तत इति चिन्तासंपादकत्वात् । तदभावे मत्सदृशो नास्तीति निरतिशयमहिमप्राप्तेः । एवमनुपमानोऽनन्यतुल्यः शचीपतिरस्मानवत्विति वाक्यशेषः ।

अथैकेन परात्मा प्रार्थ्यते—

**ब्रह्म जज्ञानं प्रथमं पुरस्ताद्वि सीमतः सुरुचो वेन आवः ।**

**स बुध्निया उपमा अस्य विष्ठाः सतश्च योनिमसतश्च विवः, इति ।**

परं ( रं ) ब्रह्म त्रिलोकाविति्रया ( कान्प्रति व्या ) वः स्वप्रकाशेन विवृतानकरोत् । "व्यवहिताश्च" इत्युपसर्गक्रिययोर्व्यवधानम् । लोकान्कीदृशः । सुतरां रोचन्ते शोभन्त इति सुरुचस्तान् । ब्रह्म कीदृक् । प्रथमं सर्वदेवतादिमम् । पुरस्तात्प्राच्यां दिशि सूर्यरूपेण जज्ञानं जायमानम् । विराजादिजनैः पुरस्तात्प्राग्घिरण्यगर्भरूपेण वा जज्ञानम् । जनेः शानचि शपः श्लौ सति जज्ञानमिति रूपम् । तथा वेनः । व्यत्ययेन वेनं सर्वकमनीयम् । "वी कान्त्यादौ" । किमारभ्य सीमतः । द्वितीयायां तसिल् ( यान्तात्तसिः ) । सीमानं मर्यादाम् । भूलोकमध्यभागमारभ्य सुरुचश्रीह्लोकान्व्यावः प्रकाशितवानि ( वदि ) ति भावः । वी कान्त्यादावस्मान्व्याङ्पूर्वाल्लु- ( ल्लु ) ङि मध्यमैकवचनेऽपि व्यत्ययेन प्रथमपुरुषो ग्राह्यः । त्रैलोक्यप्रकाशमेव स्फुटी करोति । स व्यत्यनेन तद्ब्रह्म बुध्नियाः प्राच्याद्या दिशः सतो विद्यमानस्य घटपटादेर्योनिं स्थानमसतोऽमूर्तस्य वाय्वादेश्च योनिं प्रभवं विवः प्रकाशयति । × वृणोतेः शपि लुप्ते लगुणे (?) च विवरिति रूपम् । अमाङ्योगेऽपि तिङोऽडप्राप्तिश्छान्दसी । बुध्नियाः कीदृशः । उप समीपे मान्ति तिष्ठन्ति भूतानि यासु ता उपमाः सावकाशा इत्यर्थः । माङ्माने वर्तने चेति धातुपाठः । अत एवास्य जगतो विष्ठा विविधस्थानभूताः । विविधं

* प्रथमपुरुषस्येति शेषः । × वेवेतेर्लङि शपि लुप्ते द्वित्वेऽत्वेऽगुणे चेति वक्तुं युक्तम् ।

१ छ. °रनक्षत्रेषत्या त्रिष्टुब्गाज्ञवल्क्यो वृद्धा ( व्रद्या ) न° ।

तिष्ठन्ति यास्विति व्युत्पत्तिः । अम्बाम्बगोभूमीत्यादिना षत्वम् । एतादृग्बुध्नियाः सद्-सद्योनिं च ब्रह्मैव प्रकाशयति " तस्य भासा सर्वमिदं विभाति " इति मन्त्रान्तरादिति भावः । बुध्ना ( बुध्निया ) वै दिश इति श्रुतेः ( तिः ) ।

अथ पुन्द्र्धार्भ्यां पुनर्गृहीतमृत्तिकाशुद्ध्यर्थं पृथिवी प्रार्थ्यते । [तत्र प्रथममन्त्रमाह]—

स्योना पृथिवि भवा नृक्षरा निवेशनी ।

यच्छा नः शर्म सप्रथाः, इति ।

हे **पृथिवि** विशाले भूमे त्वं **नोऽ**स्मभ्यं **स्योना** । षोऽन्तकर्मणि । दुःखान्त-कर्त्री भव । **शर्मै**हिकामुष्मिकसुखमपि **यच्छ** देहि । छान्दसं दीर्घत्वम् । कथं-भूता । नॄन्मनुष्यांस्तदुपलक्षितचतुर्विधभूतग्रामं क्षारयत्युत्पादयतीति **नृक्षरा** । उत्पा-दितान्ग्रामारण्यादिस्थानेषु निवेशयति यथायथं स्थापयतीति **निवेशनी** । प्रथया मलमूत्रगण्डूषनिष्ठीवनादिसहिष्णुतालक्षणया कीर्त्या सह वर्तमाना **सप्रथाः** ।

द्वितीयमाह—

गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम् ।

ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम्, इति ।

या पूर्वोक्तरीत्या मयाऽभिष्टुता तां भूदेवतामिहास्मिन्स्नानकर्मण्युपह्वये समीपमा-ह्वयामि । कथंभूताम् । श्रीयते चतुर्विधैर्जन्तुभ्मद्भिरिति श्रीस्तां **श्रियम्** । गन्धो द्वारमनुमापकलिङ्गं यस्याः सा **गन्धद्वारा** ताम् । इयं पृथिवी भवितुमर्हति गन्धव-त्त्वादित्यनुमानगम्यामित्यर्थः । **दुराधर्षां** कुद्दालखननाद्युपायसहस्रैरप्यप्रकम्प्याम् । नित्यं नानाविधैः सस्यैर्नगरग्रामादिभिर्गिरिनदीसमुद्रद्वीपादिभिश्च पुष्टा **नित्यपुष्टा** नित्या चासौ पूर्वोक्तैः पुष्टेति वा ताम् । **करीषिणीं** कृषीवलैर्बीजावापाय कृष्यमा-णाम् । करीषं गोमयमस्यामस्तीति **करीषिणी** ताम् । करिणो (करीषा) [लक्षणया] गवादिपशवो यस्यां सन्ति सा करीषिणी तामिति वा । नानाविधचतुष्पाद्वतीमित्यर्थः । **सर्वभूतानामीश्वरीम्** । स्पष्टम् ।

एतैर्मन्त्रैरभिमन्त्रितां मृत्तिकामापादतलमस्तकमुपलिप्य जलप्रवेशनार्थान्प्रार्थनाम-न्त्रानाह—

श्रीर्मे भजतु । अलक्ष्मीर्मे नश्यतु । विष्णुमुखा वै

देवाश्छन्दोभिरिमाँल्लोकाननपजय्यमभ्यजयन् ।

महां इन्द्रो वज्रबाहुः षोडशी शर्म यच्छतु (१०), इति ।

---

१ छ. °भ्यां परिगृही° ।

मे मां श्रीर्गजान्तलक्ष्मीर्भजतु । मे मत्संबन्धिन्यलक्ष्मीर्ज्येष्ठा देवी नश्यतु । अस्मत्तोऽस्मत्कुलीनतोऽस्मद्बन्धुवर्गतोऽस्मद्ग्रामतोऽस्मद्राष्ट्रतो बहुयोजनान्तरितं दुरित- (दूरी भ)वत्वित्यर्थः । किंच ये विष्णुमुखा लक्ष्मीपतिप्रधाना देवाश्छन्दोभिर्वेदवि- हितैः साधनैरिमानृ(न)ध्यक्षांश्चतुर्दशसंख्याकाँल्लोकानभ्यजयन् । चिरायोपभोगाय लेभिरे । अभिपूर्वो जयतिर्लेभिकर्मा । कथम् । अनपजय्यं रक्षोनायकैरपजेतुमशक्यं यथा तथा । ते ना(चा)भीष्टप्रदा भूयासुरिति वाक्यशेषः । वै प्रसिद्धौ । अपि च वज्रबाहुरिन्द्रोऽपि नः शर्म यच्छतु । कीदृशः । महांस्त्रिलोकीपूज्यः । षोडश कला अस्य सन्तीति षोडशी राकाचन्द्रः । लुप्तोपमा, स यथा सर्वाभीष्ट [प्रद]स्तथेन्द्र इति । यद्वा षोडशीति षोडशाक्षरा श्रीविद्योच्यते तज्जयीय(पस्य)पूर्वक[र्तृ]त्वादिन्द्रोऽपि षोडशी तज्जपप्रभावाद्देवपतिरैन्द्रीं पदवीमाजगामेति प्रसिद्धेः ।

स्वस्ति नो मघवा करोतु हन्तु पाप्मानं योऽस्मान्द्वेष्टि, इति ।

स्वस्तीति । यजुः । मघवा शचीपतिर्नः स्वस्ति करोतु । यः पाप्माऽस्मान्द्वेष्टि तं पाप्मानं हन्तु ।

सोमानꣳ स्वरणं कृणुहि ब्रह्मणस्पते । कक्षीवन्तं य औशिजम् ।

शरीरं यज्ञशमलं कुसीदं तस्मिन्त्सीदतु योऽस्मान्द्वेष्टि, इति ।

सोमानमिति हे ब्रह्मणस्पते शाखोपशाखासहितानां वेदानां परिपालक हे पर- मात्मन्मां सोमानं सोमलताभिषोतारं स्वरणं सर्वशाखासूदात्तादिस्वरनेतारं च कृणुहि कुरुष्व । त्वदनुग्रहात्स्वरादियुक्तं वेदानधीत्य सोमादिक्रतून्करिष्यामीत्यर्थः । किंच । उशिङ्नाम माता तस्या अपत्यं पुमानौशिजः । नामतः [कक्षीवन्तं] कक्षीवान् । विभक्तिव्यत्ययः । यः परमर्षिः स मम शरीरं यज्ञशमलं यज्ञक्रतुविषयं [शमं]श्रमं श्रमसहिष्णुत्वं लाति स्वी करोतीति यज्ञशमलं [तादृशं] करोतु । किंच यः शत्रुरस्मा- न्द्वेष्टि स तस्मिन्सीदतु चिरकालं तिष्ठतु । कस्मिन्यत्कुसीदं नरकम् । कुत्सितं यथा तथा सीदन्ति पापिनोऽस्मिन्निति व्युत्पत्तिः ।

जानुदघ्ने जले प्रविश्य जप्यौ मन्त्रावाह—

चरणं पवित्रं विततं पुराणं येन पूतस्तरति दुष्कृतानि ।

तेन पवित्रेण शुद्धेन पूता अति पाप्मानमरातिं तरेम, इति ।

अनेन मन्त्रेण लक्ष्मीपतिचरणारविन्दं स्तूयते । तेन वैष्णवेन चरणेन पूताः पवि- त्रान्तःकरणा वयमरातिं नरकहेतुत्वेन शत्रुभूतं पाप्मानमतितरेम । तेन कीदृशेन ।

---

१ छ. तज्जापीय° ।

पवित्रेण शुद्धेन स्पष्टम् । तेन केन येन पूतो मर्त्यो दुष्कृतानि तरति । यच्चरणं पवित्रम् । विततं विस्तृतम्, भूम्यन्तरिक्षस्वर्गाणामाक्रान्तत्वात् । पुराणं पुरातनम् । विष्णोः पुराणपुरुषत्वात्तदवयवानामपि पुराणत्वम् । अयमेव मन्त्रो ब्राह्मणचरणक्षालनेऽपि विनियुज्यते ।

सजोषा इन्द्र सगणो मरुद्भिः सोमं पिब वृत्रहञ्छूर विद्वान् ।
जहि शत्रूँ्रप मृधो नुदस्वाथाभयं कृणुहि विश्वतो नः, इति ।

सजोषा इति । हे वृत्रहन्हे शूर हे इन्द्रास्मदभिकृतेष्वग्निष्टोमादिक्रतुषु समागत्याग्नौ हूयमानं सोमं पिब । त्वं कथंभूतः । समानाऽऽस्थान्तःकरणवृत्त्यनुरूपा जोषा प्रीतिर्यस्यासौ सजोषाः । गणैः स्वकीयपरिचारकैः सह वर्तत इति सगणः । विद्वान्सर्वज्ञः । कैः सह, मरुद्भिः सह देवताभिः सह । मरुच्छब्दोऽत्र देवतामात्रवचनः । अपि(जहि) शत्रूँ्रप मृध इत्यत्र " दीर्घादटि समानपादे " इति नस्य रुत्वं पूर्वस्य सानुनासिकत्वं च । तथा च शत्रून्[प]मृध इति पदच्छेदः । शत्रूञ्जहि । मृधः क्विपि द्वितीयाबहुवचनम् । सङ्ग्रामानपनुदस्व विनाशय । अथानन्तरं नोऽस्मभ्यं विश्वतः सर्वतोऽभयं कृणुहि ।

नाभिद्वयसजले स्थित्वा जप्यान्मन्त्रानाह—

सुमित्रा न आप ओषधयः सन्तु दुर्मित्रास्तस्मै
भूयासुर्योऽस्मान्द्वेष्टि यं च वयं द्विष्मः, इति ।

नोऽस्मान्प्रत्याप ओषधयश्च सुमित्राः सुहृदः सन्तु । योऽस्मान्द्वेष्टि यं च वयं द्विष्मस्तस्मै दुर्मित्रा दुर्हृदो भूयासुः । अस्मभ्यं सुखं शत्रुभ्यो दुःखं चाब्देवता ओषधिवनस्पतिदेवताश्च कुर्वन्त्वित्यभिप्रायः ।

आपो हि ष्ठा मयोभुवस्ता न ऊर्जे दधातन ( ११ ), ।
महे रणाय चक्षसे । यो वः शिवतमो रसस्तस्य भाजयतेह नः । उशतीरिव मातरः । तस्मा अरं गमाम वो यस्य क्षयाय जिन्वथ । आपो जनयथा च नः, इति ।

आप इति । हि ष्ठेत्यत्र 'हि' 'स्थ' इति पदच्छेदः । हे आपो हि यस्मात्कारणाद्या यूयं मयोभुवः स्थ स्नानपानादिहेतुत्वेन सुखं प्रापयित्र्यो भवथ तस्मात्कारणाद्यू(त्ता यू)यं नो युष्मद्भक्तानस्मान्दधातन पोषयत । कस्मै प्रयोजनाय, चक्षसे परमात्मदर्शनाय । कथंभूताय । रणाय रमणीयाय । तथा मह्यते पूज्यत इति मट्तस्मै महे

१ ङ. सुबधा' ।

मोक्षरूपफलत्वान्महते, *भुक्तिमुक्तिप्रयोजनायास्मान्पोषय । अन्यथा जीवनं व्यर्थमित्यभिप्रायः । किंच हे आपो **वो** युस्माकं **यः शिवतमः** कल्याणतमो **रसो** माधुर्यलक्षणोऽस्ति **तस्येहास्यां** भुवि विद्यमाना**न्नोऽस्मान्भाजयत** पवित्रयत(पात्रयत) स्थानं कुरुतेत्यर्थः । यथा भाजने जलं तिष्ठति तथा युष्मदीयो रसोऽस्मासु तिष्ठात्विति भावः । अत्र निदर्शनं प्रदर्शयति । [**मातर**] **इव** यथा मातरः स्वापत्यमुत्तमगुडादि प्रापयन्ति तथा । कथंभूताः । **उशतीरुशत्योऽ**पत्यवृद्धिं कामयमानाः । पुत्रदुहित्रादिस्नेहवत्य इति यावत् । किंच हे आपो **वो** युष्मान्वयमर[मल]मत्यर्थं **शरणं गमाम** प्राप्नुमः । कस्मै प्रयोजनाय शरणीकरणम्, यस्माद(यस्या)स्मदीयस्य पापजालस्य **क्षयाय** विप्रणाशाय यूयं **जिन्वथ** प्रीतिं कुरुथ, म(त)स्मै तत्क्षयार्थमेव । युष्माभिरपि मत्त[प्रिय]त्वादस्मत्पापक्षयार्थमेव यत्नः क्रियतेऽस्माभिरप्येतदर्थमेव युष्मच्चरणं शरणं क्रियते । अन्यथा कथमस्मत्पापक्षयार्थे युष्माभिरुद्यम्यतामित्यभिप्रायः । किंच भो अब्देवता **नोऽस्माञ्जनयथ** पुत्रदुहित्रादिजननसमर्थान्कुरुथ ।

इतःपरं द्वाभ्यां मन्त्राभ्यां वरुणाभिधानामधिष्ठानदेवतां प्रार्थयते—

**हिरण्यशृङ्गं वरुणं प्रपद्ये तीर्थं मे देहि याचितः ।**
**यन्मया भुक्तमसाधूनां पापेभ्यश्च प्रतिग्रहः ॥**
**यन्मे मनसा वाचा कर्मणा वा दुष्कृतं कृतम् ।**
**तन्न इन्द्रो वरुणो बृहस्पतिः सविता च पुनन्तु पुनः पुनः, इति ।**

सुवर्णमयशृङ्गवदुपर्यवस्थितं मुकुटं यस्यासौ **हिरण्यशृङ्गस्ता**दृशं **वरुणं** जलाधिपतिं **प्रपद्ये** । अनुग्रहार्थं प्राप्नोमि । तादृशो वरुणस्त्वं [**मे**] मया **याचितः** प्रार्थितः संस्तीर्थमावरणस्थानं **देहि** । किंचासाधूनां पापिनां गृहे **मया यद्भुक्तम्**, तथा **पापेभ्यः** पापिनां सकाशात्प्रति**ग्रहश्च** यः कृतः, अन्यदपि **यद्दुष्कृतं** मानसं वाचिकं कायिकं चानुष्ठितं **मे** मदीयं तत्सर्वमिन्द्रादयो देवास्तदशेषं ( दा तदा ) **पुनन्तु** शोधयन्तु ।

जलावस्थितदेवान्प्रति नमस्कारमन्त्रं दर्शयति—

**नमोऽग्नयेऽप्सुमते नम इन्द्राय नमो वरुणाय**
**नमो वारुण्यै नमोऽद्भ्यः ( १२ ), इति ।**

आपो यस्याग्नेः सन्ति सोऽयमप्सुमाञ्जलमध्ये निगूढ इत्यर्थः । [तथाविधायाग्नय] **इन्द्राय वरुणाय वारुण्यै** वरुणपत्न्यै जलाभिमानिदेवताभ्यश्च **नमस्कारोऽस्तु** ।

---

* अत्र भुक्तिशब्दोऽधिक इव भाति ।

निमज्जनप्रदेशे दुष्टजलापनयन[मन्त्र]माह—

यदपां क्रूरं यदमेध्यं यदशान्तं तदपगच्छतात्, इति।

अपां संबन्धि यत्क्रूरं रूपं मरणकारणमावर्तादिकं यच्चामेध्यं निष्ठीवनादिदुष्टं यदप्यशान्तं वातश्लेष्मादिजनकं तत्सर्वमस्मान्निमज्जनप्रदेशादपगच्छतु।

निमज्जनमन्त्रानाह—

अत्याशनादतीपानाद्यच्च उग्रात्प्रतिग्रहात्।
तन्नो वरुणो राजा पाणिना ह्यवमर्शतु॥
सोऽहमपापो विरजो निर्मुक्तो मुक्तकिल्बिषः।
नाकस्य पृष्ठमारुह्य गच्छेद्ब्रह्म सलोकताम्, इति।

देवर्षिपितृमनुष्यादियज्ञमतीत्य भुक्तमत्याशनम्। देवर्षिपितृतर्पणमतीत्य पीतमुदकमतिपानम्। इच्छावर्ती यः पुमांस्तस्माद्यो धनप्रतिग्रहः स उग्रः। एतैर [त्य]शनातिपानदुष्प्रतिग्रहैः संपादितं यत्पापं मदीयं तत्पू(त्स)र्वं वरुणो राजा जलस्वामी स्वकीयेन पाणिनाऽपनयतु। ततः पापरहितः सोऽहं रजोगुणरहितः संसारकारणरागद्वेषादिदोषान्निर्मुक्तोऽत एवानुष्ठिता(ष्ठास्यमाना)त्यशनातिपानपापरहितः स्वर्गस्योपरिभागमारुह्य ब्रह्मणा हिरण्यगर्भेण समानलोकत्वं गच्छे[द्गच्छे]यम्।

यश्चाप्सु वरुणः स पुनात्वघमर्षणः, इति।

यश्चेति। यजुः। अप्सु सप्तसमुद्रोदकेषु नानाविधमहानदीनददीर्घिकाकूपाद्युदकेषु च यो वरुणोऽधिष्ठितः सन्वर्तते स नः पुनातु। कथंविधः। अघं महापातकमपि कर्षति(मर्षयति) विनाशयतीत्यघमर्षणः।

तीर्थभूतानां गङ्गादीनामावाहनमन्त्रमाह—

इमं मे गङ्गे यमुने सरस्वति शुतुद्रि स्तोमं सचता परुष्णिया।
असिक्निया मरुद्वृधे वितस्तयाऽऽर्जीकीये शृणुह्या सुषोमया, इति।

हे गङ्गे विश्वनाथराजधानीसमीपस्थे भागीरथि हे यमुन आदित्यतनये हे सरस्वति नदीरूपेण विद्यमाने ब्रह्मपत्नि हे शुतुद्र्येतन्नामसरिद्वरे हे आर्जीकीय एतन्नाम्नि सरिद्वरे हे मरुद्वृध एतन्नामसरिद्वरे यूयं मे व्यत्ययेन मयेमं मनःपूर्वकं वाचा पठ्यमानं स्तोमं स्तुतिरूपमन्त्रसमुदायं शृणुहि व्यत्ययेन शृणुत। श्रुत्वा च युष्मद्युष्मत्स्थानेभ्य आसचत। उपसर्गव्यवधानं सचतेर्दैर्घ्यं च च्छान्दसम्। आगच्छत। मां पावयितुं यथावाञ्छितं दातुं च प्रकृतस्नानस्थानजलमध्यभागं ×प्रतीति शेषः। संनिधद्ध्वं च।

+ प्रति संनिधद्ध्वं चेति शेष इत्यादिपाठो युक्तः।

काभिः सह । परुष्णी नाम नदी तया **परुष्णिया** । असिक्नी नाम नदी तयाऽसि**क्निया** । उभयत्र तृतीयायामक्षरविश्लेषश्छान्दसः । वितस्त्वा(स्ता) नाम नदी तया **वितस्तया** सह । सुषोमा नाम नदी तया **सुषोमया** सह । प्रार्थयितुरयमाशयः— यद्यप्यहमेतन्मन्त्रोक्तानामनुक्तानां च महानदीनां रोधांसि गत्वा चिरकालं स्थित्वा स्नात्वा पीत्वा च दिवसानपनेतुमक्षमस्तथाऽप्यहं यत्र कुत्रचिद्ध्रदकूपाद्युदकेन स्नानं कुर्वाण एतेन मन्त्रेण गङ्गाद्या नदीरुपतिष्ठ उपस्थिताश्चाऽऽगत्य संनिदधतां संनिधाय च मदीयानां महतामप्येनसां विनाशं विदधतां विधाय चैवं मामभिदधतां पूतोऽसि शुद्धोऽसि भुङ्क्ष्व भौमान्भोगान्सकुटुम्बः सपरिवारः साश्रितवर्गश्च भुक्त्वा चान्ते यथेच्छं पुण्यकृतां लोकानाप्नुहीति ।

जले निमग्नस्य प्राणायामार्थमघमर्षणसूक्तमाह—

**ऋतं च सत्यं चाभीद्धात्तपसोऽध्यजायत ।**
**ततो रात्रिरजायत ततः समुद्रो अर्णवः ( १३ ), ।**
**समुद्रादर्णवादधि संवत्सरो अजायत ।**
**अहोरात्राणि *विदधद्विश्वस्य मिषतो वशी ॥**
**सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत् ।**
**दिवं च पृथिवीं चान्तरिक्षमथो सुवः,** इति ।

तिसृणामृचामेकैव पदयोजना । अभित इद्धोऽभीद्धः । ञिइन्धी दीप्तौ । सर्वतो देदीप्यमानः परमात्मा । तस्मादभीद्धात्परमात्मनः सकाशादृतं यावज्ज्ञानोदयस्तावत्तथ्यं पृथिव्यादिभूतपञ्चकमजायतोत्पन्नम् । किंच सत्यं यावज्ज्ञानोदयस्तावत्तथ्यं भुवनचतुर्दशकमजायतोत्पन्नम् । पञ्चभूतानां चतुर्दशभुवनानां च सत्यत्वस्य ज्ञानोदयावधित्वात् । ज्ञानोत्तरकालं मिथ्यात्वाङ्गीकारात् । चकारद्वयं तदन्तर्वर्तिप्राणिवर्गं समुच्चिनोति । ननु भूतपञ्चकं भुवनचतुर्दशकं च कदा समुत्पन्नमिति चेच्छृणु । तपसोऽधि पर्यालोचनादूर्ध्वम् । अहं ब्रह्माण्डमेवमेवमुत्पादयामीत्यमित्थं जीवयामीति पर्यालोचनानन्तरमजायतेत्यर्थः । तथाच श्रुतिः—"सोऽकामयत बहु स्यां यदिदं किंच" इति । तप पर्यालोचन इति धातुपाठादत्र तपःशब्देन पर्यालोचनमुच्यते । लोकानुभवोऽपि कुलालो घटमुत्पादयामीत्यालोच्य घटमुत्पादयति [शरावमुत्पादयामी]त्यालोच्य शरावमुत्पादयतीत्यादि । ततो भूतभुवनोत्पत्त्यनन्तरं रात्रिस्त्रियामाऽजायत । औपलक्षण्येना[ह]रप्यजायतेति मन्तव्यम् ततोऽह्न उत्पत्तिमनु समुद्रः सप्तधा भिन्नः पारावारोऽजायत । अर्णास्य-

* विदधदित्यपि पाठः प्रसिद्धो वैदिकेषु ।

१ क. °नारणं जा° ।

म्भांसि विद्यन्तेऽस्मिन्नित्यर्णवो वापीकूपतटाकादिरजायत । **समुद्रादर्णवादधि** समुद्रार्णवजन्मनः पश्चात्**संवत्सर** एकादशमासात्मको द्वादशमासात्मकस्त्रयोदशमासात्मकश्चाजायत । संवत्सरः कथंभूतः । **अहोरात्राणि** औपलक्षण्येन घटिकामुहूर्तप्रहरादि(दीं)श्च **विदधद्विदधानः** कुर्वाण इति यावत् । पुनः कथंभूतः । **वशी** स्वाधीनकर्ता । कस्य, **विश्वस्य** जगतः । कथंभूतस्य, **मिषतो** निमेषं कुर्वतः । उपलक्षणमेतदनिमिषत इत्यत्र(स्य) । व्यापारं कुर्वतोऽकुर्वतश्चराचरात्मकस्येति भावः । संवत्सरात्मा कालः परमात्मनः सकाशादुत्पन्नः सन्सर्वं जगद्वशी करोतीत्यभिप्रायः । नन्वाधाराधेयभावेन विद्यमानं सर्वं ब्रह्माण्डं परमात्मोत्पादयामासेत्युक्तं तत्कथमाकारमुत्पादयामासेत्यत्राऽऽह । **धाता** परमेश्वरः **सूर्याचन्द्रमसौ** पुष्पवन्तौ **पृथिवीमन्तरिक्षं दिवं सुवर्लोकत्रयस्थं** भोग्यजातम् । **अथो** अध इत्येतस्मिन्नर्थ ओदन्तमव्ययम् । अधस्ताद्विद्यमानं लोकसप्तकमपि **यथापूर्वं** पूर्वपूर्वकल्पेषु यथा यथाऽ**कल्पयद**जनयत्तथा तथेदानींतने कल्पेऽप्यकल्पयदित्यर्थः । चकारावुक्तमनुक्तं समुच्चिनुवाते । केचित्तु ऋतं यथार्थभाषणं सत्यं यथार्थं संकल्पनमिति व्याचक्षते । तेषां व्याख्याने भूतभुवनोत्पत्त्यनन्तरमित्यादावध्याहर्तव्यम् । अन्यथा भूतानि भुवनानि च नोत्पन्नानि चेत्कुतः प्राणिनः कुतो वा वाङ्मनसादिव्यापारः कथं वा समुद्राद्युत्पत्तिः, अस्मदुक्तं वा श्रद्धेयम् ।

अघमर्षणं कृत्वाऽत ऊर्ध्वमवगाहनार्था ऋचो दर्शयति—

**यत्पृथिव्याꣳ रजः स्वमान्तरिक्षे विरोदसी ।**
**इमाꣳस्तदापो वरुणः पुनात्वघमर्षणः ॥**
**पुनन्तु वसवः पुनातु वरुणः पुनात्वघमर्षणः ।**
**एष भूतस्य मध्ये भुवनस्य गोप्ता ॥**
**एष पुण्यकृतां लोकानेष मृत्योर्हिरण्मयम् ।**
**द्यावापृथिव्योर्हिरण्मयꣳ सꣳश्रितꣳ सुवः ( १४ ), ।**
**स नः सुवः सꣳशिशाधि, इति ।**

पृथिव्यां वर्तमानानामस्माकं [स्वं] **रजः** स्वकीयं पापं **यदस्ति । आन्तरिक्षे** सर्वतोऽन्तरिक्षलोके **विरोदसी** द्यावापृथिव्योर्यत्पापमस्ति । अत्र रोदस्योः पृथगुक्तत्वात्पृ**थिव्यामिति**पदेन भूमेरधस्ताद्वर्तमानः पाताललोको विवक्षितः । सर्वेष्वपि लोकेषु तत्तज्जन्मान्यनुभवतामस्माकं यत्पापमस्ति तत्सर्वं पापं तदनुष्ठातॄनि**मानस्मांश्च वरुणः पुनातु** शोधयतु । पापं विनाश्य शुद्धानस्मान्करोतु । कीदृशो वरुणः । **आपो** जलस्वामित्वेन तद्रूपः । अघानि मर्षयति विनाशयतीत्यघमर्षणः । किंच **वसवः पुनन्तु** ।

**वरुणः पुनातु । अघमर्षणनामर्षिः पुनातु** । तादृश **एष वरुणो भूतस्यातीतस्य भुवनस्य** प्राणिजातस्य **गोप्ता** रक्षिता । तथा भूतस्य भव्यस्य भविष्यतोऽपि(?) जगतो गोप्ता । **एष एव वरुणः पुण्यकृतां** ज्योतिष्टोमादिकारिणां लोकान्प्रयच्छतीति शेषः । **एष वरुणो मृत्योः** सर्वप्राणिमारकस्य संबन्धिनं **हिरण्मयं** लोकविशेषं प्राणि( पापि )-नां प्रयच्छतीति शेषः । **यत्तु हिरण्मयं** ब्रह्माण्डरूपं **सुवः** स्व[र्ग]शब्दाभिधेयं **द्यावा-पृथिव्योर्द्युलोकभूलोकयोः संश्रितं** वर्तते, हे वरुण **स** त्वं **नो**ऽस्मान्प्रति **सुवस्तादृशं** स्वर्गलोकं **संशिशाधि** सम्यगनुगृहाण ।

स्नातवतः पुरुषस्याऽऽचमनमन्त्रानाह—

**आर्द्रं ज्वलति ज्योतिरहमस्मि । ज्योतिर्ज्वलति**
**ब्रह्माहमस्मि । योऽहमस्मि ब्रह्माहमस्मि । अहमस्मि**
**ब्रह्माहमस्मि । अहमेवाहं मां जुहोमि स्वाहा,** इति ।

यदेतदुदकरूप**मार्द्रं** तदेतत्स्वाधिष्ठानचैतन्येन **ज्वलति** प्रकाशते । तच्चाधिष्ठानचैत-न्यरूपं [ **ज्योतिरहमस्मि** । ] तदेवोपपाद्यते । यज्ज्योतिर्ज्वलतीत्युक्तं तज्ज्योति-र्ब्रह्मैवातो ज्योतिरहमस्मीति वाक्येन **ब्रह्माहमस्मी**त्युक्तं भवति, नतु पूर्ववज्जीवाशिवा-त्मनः स्वरूपं विनाश्य रूपान्तरस्य ब्रह्म[ त्व ]लक्षणस्य प्राप्तिर्भवति । किं तर्हि **योऽहं** पुरा जीवो**ऽस्मि** स एवेदानीमहं **ब्रह्मास्मि** । वस्तुतो ब्रह्मण्येव मयि पूर्वमज्ञा-नाज्जीवत्वमारोपितमासीत्तस्मिन्नज्ञाने विवेकेनापनीते सति वस्तुतः पूर्वसिद्धमेव ब्रह्मरूप-त्वमिदानीमनुभवतो न तु नूतनं किंचिद्ब्रह्मत्वमागतम् । अहमहमेवाहंकारसाक्ष्येव( वा )-[ स्मि ] न त्वहंकारस्वरूपः, **अहं ब्रह्मा**स्मि, तस्मादहमेव, अहं ब्रह्मतत्त्वानुभववेला-यामपि पूर्वसिद्धोऽहमेव । नतु योषित्यग्निध्यानवदुपचरितं ब्रह्मत्वम् । तादृ-शो**ऽहं** जलरूपं **मां जुहोमि** । आधा ( उद ) राग्नौ प्रक्षिपामि । हविष्प्रदानवाची **स्वाहाशब्दः** । **मद्देह**वर्तिभ्यः प्राणाद्यभिमानिभ्यो देवेभ्यो जलरूपं हविर्दत्तमित्यर्थः ।

आचमनादूर्ध्वं पुनरपि स्नाने मन्त्रमाह—

**अकार्यकार्यवकीर्णी स्तेनो भ्रूणहा गुरुतल्पगः ।**
**वरुणोऽपामघमर्षणस्तस्मात्पापात्प्रमुच्यते,** इति ।

अकार्यं **शास्त्रप्रतिषिद्धं** कलञ्जभक्षणादिकं तत्कर्तुं शीलं यस्यासा**वकार्यकारी** । प्रतिषिद्ध**स्त्रीगमनवानवकीर्णी** । ब्राह्मणसुवर्णहर्ता **स्तेनः** । वेदवेदाङ्गविद्ब्राह्मणो गर्भो वा [ भ्रूण ]स्तं हन्तीति **भ्रूणहा** । गुरुदारगामी तु **गुरुतल्पगः** । एतादृशपापका-रिणमपि **मामघमर्षणः** पापविनाशकोऽपां स्वामी **वरुणस्तस्मा**त्सर्वस्मात्**पापात्प्रमु-च्यते मोचयतु** ।

रहस्यपापक्षयार्थे स्नानमन्त्रमाह—

रजोभूमिंस्त्व माꣳ रोदयस्व प्रवदन्ति धीराः, इति ।

यजुः । हे परमात्मन्नहं यद्यपि रजोभूमिः पापस्थानं तथाऽपि तु(त्व) । अनुस्वारलोपश्छान्दसः । त्वं मां न रोदयस्व । नकारोऽध्याहर्तव्यः । मदीयपापफलं मां भोजयितुं न रोदय किंतु पापं विनाश्यानुगृहाणेति धीरा धीमन्तः शास्त्रपारं गताः प्रवदन्ति । य(त)तोऽहमपि प्रवदामीत्यर्थः ।

स्नानादूर्ध्वं जप(प्यं) मन्त्रमाह—

आक्रान्त्समुद्रः प्रथमे विधर्मञ्जन-
नयन्प्रजा भुवनस्य राजा ।
वृषा पवित्रे अधि सानो अव्ये बृह-
त्सोमो वावृधे सुवान इन्दुः ( १५ ), इति ।

पुरस्ताद्यशो गुहासु मम चक्रतुण्डाय धीमहि तीक्ष्णदꣳष्ट्राय धीमहि परि प्रतिष्ठितं देभुर्यच्छतु दधातनाद्ध्योऽर्णवः सुवो राजैकं च ।। १ ।।

रुद्रो रुद्रश्च दन्तिश्च नन्दिः षण्मुख एव च । गरुडो ब्रह्म विष्णुश्च नारसिꣳहस्तथैव च । आदित्योऽग्निश्च दुर्गिश्च क्रमेण द्वादशाम्भसि । *म मं व च म सु वे ना व भा वैं कात्यायनाय ।।

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके दशमप्रपाठके नारायणोपनिषदि प्रथमोऽनुवाकः ।। १ ।।

समुद्रवत्प्रौढत्वादसङ्गात्मनः परमानन्दस्वभावत्वाद्वा समुद्रः परमात्मा । स च सर्वं जगदा[क्राना]क्रान्तवान्व्याप्तवान् । किं कुर्वन् । प्रथमे सृष्टेरादिकाले प्रजा जनयन् । कीदृशे प्रथमे काले, विधर्मन्विधर्मणि । प्राणिभिः पूर्वकल्पेऽनुष्ठिता विविधा धर्मा यस्मिन्काले स्वफलदानार्थमुद्बोध्यन्ते सोऽयं विधर्मा तस्मिन् । स च परमात्मा भुवनस्य पालकत्वाद्राजा । स्वभक्तानां कामानां वर्षणहेतुत्वाद्वृषा । ईश्वरः(दृशः) सर्वत्र व्याप्तवान् । सानो सानौ पर्वतपार्श्वभागे । श्रुत्यन्तरे 'तं ब्रह्मगिरिरित्याचक्षते' इति श्रवणाद्ब्रह्मावबोधयोग्योऽयं देहो गिरिस्तदवयवः सानुर्हृदयपुण्डरीकम् । तच्च पवित्रं बाह्यदेहावयववदुच्छिष्टस्पर्शादिदोषाभावाच्छुद्धम् । अधि पुरुषार्थहेतुभूत[ध्यान]स्थानत्वादितरावयवेभ्योऽप्यधिकम् । अत एव ध्यातॄणामवनस्य पालनस्य हेतुत्वादव्यम् । हिमवत्पुत्र्या गौर्या ब्रह्मविद्याभिमानित्वाद्गौरीवाचक उमाशब्दो ब्रह्मविद्यामुपलक्षयति । अत

* एतत्प्रभृति कात्यायनायेत्यन्तं ज. पुस्तके नास्ति ।

एव तलवकारोपनिषदि ब्रह्मविद्यामूर्तिप्रस्तावे ब्रह्मविद्यामूर्तिः पठ्यते—"बहुशोभमानामुमां हैमवतीं तां होवाच" इति । तद्विषयः परमात्मा तयोमया सह विद्यमानत्वात्सोमः, स च सानौ हृदयपुण्डरीके बृहद्ब्रह्म यथा भवति तथा वावृधे वृद्धिं प्राप्तः । पूर्वमविद्यावृतत्वेन संकुचितो जीवो भूत्वा तस्यामविद्यायां विद्ययाऽपनीतायां ब्रह्मत्वाविर्भावात्स वृद्ध इत्यवभासत इत्यर्थः । स च सोमः सुवानो जनानां धर्माधर्मयोः प्रेरकः । इन्दुः फलदानेन चाऽऽह्लादहेतुः ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यकदशमप्रपाठके नारायणोपनिषदि भाष्ये प्रथमोऽनुवाकः ॥ १ ॥

=====

अथ द्वितीयोऽनुवाकः ।

---

तत्रा(अथा)निष्टपरिहारार्थत्वेन जप्या मन्त्रास्तत्र प्रथमामृचमाह—

**जातवेदसे सुनवाम सोममरातीयतो निर्दहाति वेदः ।**
**स नः पर्षदति दुर्गाणि विश्वा नावेव सिन्धुं दुरिताऽत्यग्निः॥इति।**

वेदांसि वेदनानि ज्ञानानि तानि जातान्युत्पन्नानि यस्मादग्नेः सोऽयं जातवेदाः । आधानेन संस्कृतेऽग्नौ पश्चात्कर्तव्यविषयाणि ज्ञानान्युत्पद्यन्ते तस्मै **जातवेदसे** यागकाले लतात्मकं **सोमं सुनवामाभिषुतं** करवाम । स्वयं सर्वं वेत्तीति **वेदोऽग्निः**, स चा**रातीयतो**ऽस्मास्वरातित्वं कर्तुमिच्छतः पुरुषा**न्निदहाति** नितरां भस्मी करोति । किंच **सोऽग्निर्नो**ऽस्माकं **विश्वा दुर्गाणि** सर्वा आपदोऽ**तिपर्षत्**, अतिशयेन नाशितवानित्यर्थः । किंच यथा लोके **नावा सिन्धुं** समुद्रं [नाविकस्तारयति तथाऽग्नि**र्दुरिता** दुरितानि पापान्यतिशयेन] तारयतीति शेषः ।

द्वितीयामृचमाह—

**तामग्निवर्णां तपसा ज्वलन्तीं वैरोचनीं कर्मफलेषु जुष्टाम् ।**
**दुर्गां देवीꣳ शरणमहं प्रपद्ये सुतरासि तरसे नमः,** इति ।

येयं वन(?)दुर्गाकल्पादिषु वन(?)शास्त्रेषु प्रसिद्धा तां **दुर्गां देवीं शरणं प्रपद्ये** । कीदृशीम् । [ **अग्निवर्णाम्,** ] अग्निसमानवर्णाम् । **तपसा** स्वकीयेन संतापेन **ज्वलन्ती**मस्मच्छत्रून्दहन्तीम् । विशेषेण रोचते स्वयमेव प्रकाशत इति विरोचनः परमात्मा तेन दृष्टत्वा**द्वैरोचनीम्** । **कर्मफलेषु** स्वर्गपशुपुत्रादिषु निमित्तभूतेषु **जुष्टा**मुपासकैः सेविताम् । हे **सुतरासि** सुष्ठु संसारतरणहेतो देवि **तरसे** तारयित्र्यै तुभ्यं **नमो**ऽस्तु ।

तृतीयामाह—

अग्ने त्वं पारया नव्यो अस्मान्त्स्वस्तिभिरति दुर्गाणि विश्वा ।

पूश्च पृथ्वी बहुला न उर्वी भवा तोकाय तनयाय शंयोः, इति ।

हेऽग्ने नव्यः स्तोतव्यस्त्वमस्मान्स्वस्तिभिः क्षेमकारिभिरुपायैर्विश्वा दुर्गाण्यति सर्वा आपदोऽतिशयेन लङ्घयित्वा पारय संसारपारं(पर)तीरं नय । नोऽस्माकं त्वत्प्रसादात्पूश्च निवासयोग्या पुरी पृथ्वी सा विस्तीर्णा भवतु । उर्वी सस्यनिष्पादनयोग्या भूमिरपि बहुला भवतु । त्वं च तोकाय तनयायास्मदपत्याय तदीयपुत्राय च शंयोर्भव सुखस्य मिश्रयिता भव ।

चतुर्थीमाह—

विश्वानि नो दुर्गहा जातवेदः सिन्धुं न नावा दुरिताऽतिपर्षि ।

अग्ने अत्रिवन्मनसा गृणानोऽस्माकं बोध्यविता तनूनाम्, इति ।

हे जातवेदो दुर्गहा सर्वासामापदामपहन्ता विश्वानि त्वं दुरिता सर्वाणि पापानि नावा सिन्धुं न समुद्रमिव नोऽस्मानतिपर्षि अतिशयेन तारयसि । हेऽग्नेऽत्रिवदाध्यात्मिकादितापत्रयराहितत्वेनात्रिशब्दवाच्यो जीवन्मुक्तो महर्षिः "आत्मौपम्येन भूतानां दयां कुर्वीत मानवः" इत्येतच्छास्त्रमनुसृत्य "सर्वे च सुखिनः सन्तु सर्वे सन्तु निरामयाः" इत्येवं मनसा यथा सर्वदा भवति ( भावयति ) तथा त्वमपि मनसा गृणान उच्चारयन्भावयन्नस्माकं तनूनामविता रक्षिता भूत्वा बोधि बुध्यस्व सावधानो भवेत्यर्थः ।

पञ्चमीमाह—

पृतनाजितꣳ सहमानमुग्रमग्निꣳ हुवेम परमात्सधस्थात् ।

स नः पर्षदति दुर्गाणि विश्वा क्षामद्देवो अति दुरिताऽत्यग्निः, (*१), ।

पृतना परकीयसेना तां जयतीति पृतनाजित्तम् । अत एव सहमानं शत्रूनभिभवन्तमुग्रं भीतिहेतुमग्निं परमादुत्कृष्टात्सधस्थात्स्वकीयैर्भृत्यैः सहावस्थानदेशाद्धुवेमाऽऽह्वयामः । स न इत्यादि पूर्ववत् । किंचाग्निर्देवः क्षामदस्मानपराधिनः क्षममाणोऽतिदुरिताऽतिशयितानि पातकानि ब्रह्महत्यादीन्यति लङ्घयतीति शेषः ।

षष्ठीमृचमाह—

प्रत्नोषि कमीड्यो अध्वरेषु सनाच्च होता नव्यश्च सत्सि ।

स्वां चाग्ने तनुवं पिप्रयस्वास्मभ्यं च सौभगमायजस्व, इति ।

---

* ग. पुस्तकेऽयं मन्त्रो नास्ति ।

---

१ ङ. °हृतां त्वं ।

हेऽग्ने त्वमध्वरेषु यागेष्वीड्यः स्तुत्यः सन्कं सुखं प्रत्नोषि प्रतनोषि विस्तारयसि। सनाच्च कर्मफलस्य दाताऽपि सन्होता हो[ता हो]मनिष्पादको नव्यः स्तुत्योऽपि भूत्वा सत्सि सीदसि यागदेशे तिष्ठसि। अतो हेऽग्ने स्वां च स्वकीयामपि तनुवं प्रियस्व स्वकीयहविषा प्रीणय। ततोऽस्मभ्यं च सौभगं शोभनभाग्योपनीतत्वमायजस्व सर्वतो देहि।

सप्तमीमृचमाह—

गोभिर्जुष्टमयुजो निषिक्तं तवेन्द्र विष्णोरनुसंचरेम।

नाकस्य पृष्ठमभि संवसानो वैष्णवीं लोक इह मादयन्ताम्*[२]। इति

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके दशमप्रपाठके नारायणोपनिषदि द्वितीयोऽनुवाकः॥ २॥

हे इन्द्र वयं तव व्यत्ययेन त्वामनुसंचरेम। भृत्या इव त्वत्सेवका भवेमेत्यर्थः। तव कथंभूतस्य। न युज्यते पापैर्दुःखैश्चेत्ययुक्तस्यायुजः। तथा विष्णोः सर्वयागेषु व्यापकशीलस्य। किमुद्दिश्य, गोभिर्धेनुभिर्जुष्टं निषेवितममृतधाराभिर्निषिक्तं महाभाग्यमुद्दिश्येति शेषः। किंच सर्वे देवा मां मादयन्तां वाञ्छितप्रदानैर्हर्षयन्तु। कुत्र। इह लोके भूमौ। सर्वे देवाः कथंविधाः, नाकस्य पृष्ठमुपरिभागमभि सर्वतः संवसानो व्यत्ययेन संवसाना आश्रित्य विद्यमानाः। मां कथंभूतम्। वैष्णवीं विष्णुसंबन्धिनीं भक्तिं कुर्वाणामिति शेषः॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यकदशमप्रपाठके नारायणीयापरनामधेययुक्तायां याज्ञिक्यामुपनिषदि भाष्ये द्वितीयोऽनुवाकः॥ २॥

====

अथ तृतीयोऽनुवाकः।

---

इतः परं पापक्षयार्थद्वाराऽन्नकामस्य होममन्त्रानाह। भूसंस्काराद्याज्यसंस्कारान्तं स्वगृह्योक्तविधया कर्म कृत्वैतैर्मन्त्रैराज्यं मन्त्रलिङ्गादन्नं वा होतव्यम्। अयं प्रधानयागः स्विष्टकृदादि च पुनर्गृह्येण विधिना कर्तव्यम्—

भूरन्नमग्नये पृथिव्यै स्वाहा भुवोऽन्नं वायवेऽन्तरिक्षाय स्वाहा सुवरन्नमादित्याय दिवे स्वाहा भूर्भुवः सुवरन्नं

---

* एतदग्रे "अग्निश्चत्वारि च" इति परिगणनं क्वचित्प्रसिद्धम्।

चन्द्रमसे दिग्भ्यः स्वाहा नमो देवेभ्यः स्वधा
पितृभ्यो भूर्भुवः सुवरन्नमोम् ( ३ ) , इति ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके दशमप्रपाठके नारायणोपनिषदि तृतीयोऽनुवाकः ॥ ३ ॥

भूर्भुवः सुवरिति त्रीणि पदान्यव्ययानि त्रैलोक्याधिष्ठानदेवतावाचकानि च । भूः पृथिव्यधिष्ठानदेवता मह्यमन्नं दद्यादिति शेषः । तदर्थं च चरुरूपमन्नं मयाऽस्मिन्स्मार्ताग्नौ स्वाहा सुहुतमस्तु । कस्मै । अग्नये पृथिव्यधिष्ठिताय पृथिव्या अग्न्यधिष्ठात्र्यै च । पर्यायद्वयेऽप्येवमेव व्याख्याप्रकारः । चतुर्थपर्याये तु भूः, भुवः, सुवः, एतास्तिस्रोऽधिष्ठात्र्यो मह्यमन्नं दद्युरिति शेषः । समानमन्यत् । एवं प्रधानयाग(गं) स्विष्टकृता कृत्वाऽन्ते प्राङ्मुखीभूय नमो देवेभ्य इति मन्त्रेण देवान्दक्षिणामुखः स्वधा पितृभ्य इति मन्त्रेण पितॄंश्चोपतिष्ठते । स्वधाशब्दः पितृप्रियं नमस्काराद्युपचारं ब्रूते । दैव्यत्वाद्धोमस्य *तु(?) । पिण्डदानादिपैतृकप्रकरणे पठितोऽयमेव स्वधाशब्दः पितॄनुद्दिश्येदं कव्यं स्वधा सुनिहितमस्त्वित्यमुमर्थं ब्रूते । ओंकारोऽभ्यनुज्ञां कथयति । अस्मत्प्रार्थितमन्नं दातुं भूर्भुवः सुवस्तिस्रो देवता ओम्, दद्यामेत्यङ्गी कुर्वन्त्वित्यर्थः ।

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यकदशमप्रपाठके नारायणीयापरनामधेययुक्तायां याज्ञिक्यामुपनिषदि भाष्ये तृतीयोऽनुवाकः ॥ ३ ॥

अथ चतुर्थोऽनुवाकः ।

इतः परं केवलपापक्षयार्था मन्त्रा उच्यन्ते । आज्यमेवात्र होतव्यं नान्यन्मन्त्रलिङ्गाभावात् । आज्यस्य सर्वहोमसाधारणत्वात् । फलान्तरानुक्तेः पापक्षय एव फलम् ।

भूरग्नये पृथिव्यै स्वाहा भुवो वायवेऽन्तरिक्षाय स्वाहा सुवरादित्याय दिवे स्वाहा भूर्भुवः सुवश्चन्द्रमसे दिग्भ्यः स्वाहा नमो देवेभ्यः स्वधा पितृभ्यो भूर्भुवः सुवरग्न ओम् ( ४ ) , इति ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके दशमप्रपाठके नारायणोपनिषदि चतुर्थोऽनुवाकः ॥ ४ ॥

* अयं तुशब्दोऽधिक इव भाति ।

भूरादयस्तिस्रो लोके प्रसिद्धा इदमाहुतिद्रव्यं स्वीकृत्यास्मत्पापं निवारयन्त्विति शेषः । हेऽग्ने त्वमपि मत्प्रार्थितमोम्, कर्तुमङ्गी कुरु ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यकदशमप्रपाठके नारायणीयापरनामधेययुक्तायां याज्ञिक्यामुपनिषदि भाष्ये चतुर्थोऽनुवाकः ॥ ४ ॥

अथ पञ्चमोऽनुवाकः ।

महत्त्वकामस्य तत्फलका होममन्त्रा उच्यन्ते—

**भूरग्नये च पृथिव्यै च महते च स्वाहा भुवो वायवे चान्तरिक्षाय च महते च स्वाहा सुवरादित्याय च दिवे च महते च स्वाहा भूर्भुवः सुवश्चन्द्रमसे च नक्षत्रेभ्यश्च दिग्भ्यश्च महते च स्वाहा नमो देवेभ्यः स्वधा पितृभ्यो भूर्भुवः सुवर्महरोम्, इति ।**

**इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यकदशमप्रपाठके नारायणोपनिषदि पञ्चमोऽनुवाकः ॥ ५ ॥** [1]

तिस्रो देवता महर्महत्त्वं सर्वपूज्यत्वं दद्युरिति शेषः । महत इत्यग्न्यादीनां विशेषणं वचनलिङ्गविपरिणामेना[न्यत्राप्य]न्वेतव्यम् । एतत्सर्वं मान्त्रिक्यो देवता ओमङ्गी कुर्वन्तु । समानमन्यत् ।

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यकदशमप्रपाठके नारायणीयापरनामधेययुक्तायां याज्ञिक्यामुपनिषदि भाष्ये पञ्चमोऽनुवाकः ॥ ५ ॥

अथ षष्ठोऽनुवाकः ।

पूर्वत्र भूरग्नय इत्यनुवाके सर्वसाधारणाः पापक्षयार्था होममन्त्रा उक्ताः । अथ प्रतिबन्धनिवारणेन मुमुक्षोर्ज्ञानप्राप्त्यर्थं होममन्त्रा उच्यन्ते—

**पाहि नो अग्न एनसे स्वाहा । पाहि नो विश्ववेदसे स्वाहा । यज्ञं पाहि विभावसो स्वाहा । सर्वं पाहि शतक्रतो स्वाहा, इति ॥**

**इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यकदशमप्रपाठके नारायणोपनिषदि षष्ठोऽनुवाकः ॥ ६ ॥** [2]

---

१ ब. १९ ॥ २ ग. २० ॥

**हेऽग्ने नोऽस्मानेनसो** ज्ञानप्रतिबन्धकात्पापात्**पाहि** रक्ष । तुभ्यमिदं **स्वाहा** सुहुतमस्तु । **नोऽ**स्माकं **विश्ववेदसे** कृत्स्नतत्त्वज्ञानसिद्ध्यर्थं **पाहि** तत्साधनसंपादनेन पालय । तदर्थं तुभ्यमिदं **स्वाहा** सुहुतमस्तु । विशेषेण भानं दीप्तिर्विभा सैव वसु धनं यस्याग्नेः सोऽयं विभावसुः । हे **विभावसो यज्ञं** विविदिषाहेतुत्वेनास्माभिरनुष्ठीयमानं **पाहि,** निर्विघ्नेन समाप्तिं नीत्वा पालय । शतसंख्याः क्रतवो येनाग्निना निष्पाद्यन्ते सोऽयं शतक्रतुः । हे **शतक्रतो सर्वं** ज्ञानसाधनं गुरुशास्त्रादिकं पाहि ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यकदशमप्रपाठके नारायणीयापरनामधेययुक्तायां याज्ञिक्यामुपनिषदि भाष्ये षष्ठोऽनुवाकः ॥ ६ ॥

=====

अथ सप्तमोऽनुवाकः ।

पुनरपि पूर्वोक्तप्रयोजनकाहुतिचतुष्टयमन्त्रा उच्यन्ते—

**पाहि नो अग्न एकया । पाह्युत द्वितीयया । पाह्यूर्जं तृतीयया । पाहि गीर्भिश्चतसृभिर्वसो स्वाहा, इति ।**

**इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके दशमप्रपाठके नारायणोपनिषदि सप्तमोऽनुवाकः ॥ ७ ॥**

**हेऽग्ने हे वसो** जगन्निवासहेतो त्वमेकयर्ग्वेदलक्षणया **गिराऽभिष्टुतः सन्नोऽस्मान्पाहि** । तदर्थमिदमाज्यं तुभ्यं **स्वाहा** सुहुतमस्तु । स्वाहाशब्दः सर्वत्रानुषज्यते । **उतापि च द्वितीयया** यजुर्वेदरूपया **गिराऽभिष्टुतः सन्नोऽस्मान्पाहि स्वाहा** । किंच **तृतीयया** सामवेदात्मिकया गिराऽभिष्टुतः सन्**नः** संबन्ध्यूर्जमन्नमन्नरसं च **पाहि स्वाहा**। अपि चर्ग्यजुःसामाथर्वणरूपाभिश्चतसृभि[र्गीर्भिरभि]ष्टुतः सन्**नः** पाहि **स्वाहा** ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यकदशमप्रपाठके नारायणीयापरनामधेययुक्तायां याज्ञिक्यामुपनिषदि भाष्ये सप्तमोऽनुवाकः ॥ ७ ॥

=====

अथाष्टमोऽनुवाकः ।

अर्थ ( थ ) ज्ञानप्रतिपादककृत्स्नवेदान्तप्राप्तिकामेन जप्यं मन्त्रमाह—

**यश्छन्दसामृषभो विश्वरूपश्छन्दोभ्यश्छन्दाश्स्याविवेश । सचाश् शिक्यः पुरोवाचोपनिषदिन्द्रो ज्येष्ठ इन्द्रियाय**

ऋषिभ्यो नमो देवेभ्यः स्वधा पितृभ्यो भूर्भुवः सुवश्छन्द ओम्, इति ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यकदशमप्रपाठके नारायणोपनिषद्यष्टमोऽनुवाकः ॥ ८ ॥

यः प्रणवश्छन्दसां वेदानां मध्य ऋषभ ( भो ) ज्येष्ठो विश्वरूपः सर्वजगदात्मकः । एतदेवर्षभत्वं विश्वरूपत्वं च सांहित्यामुपनिषदि प्रपञ्चितम् । तादृशः प्रणवश्छन्दोभ्यो वेदेभ्यः प्रादुर्भूत इति शेषः । वेदसारत्वेन प्रजापतेः प्रत्यभादित्यर्थः । स पुनश्छन्दांसि गायत्र्यादीन्याविवेश । छन्दोभिरुपलक्षितेषु मन्त्रेषु प्रयोक्तव्यः । तथा च प्रपञ्चसारेऽभिहितम्—" अस्य [ तु ] वेदादित्वात्सर्वम [ नूनां ] प्रयुज्यते ह्यादौ " इति । तेन प्रणवेन प्रतिपाद्य इन्द्रः परमैश्वर्ययुक्तः परमात्मोपनिषत्पुरोवाच । उपनिषद्ध ( षदं ब्र ) ह्म [ विद्यां ] वेदान्तसिद्धान्तमुक्तवान् । कीदृश इन्द्रः । सचां सतां शिक्यः सद्भिः कर्मानुष्ठायिभिरुपासकैर्ज्ञानिभिश्च प्राप्तुं शक्यः । ज्येष्ठः कारणत्वेन सर्वस्मात्प्रथमः । किमर्थं विद्यामुक्तवान्, तदुच्यते । ऋषिभ्य ऋषीणामन्तर्मुखानां ( णां ) जिज्ञासूनामिन्द्रियाय ज्ञानसामर्थ्याय । अतोऽहं तत्प्रतिबन्धनिवारणाय देवेभ्यश्च पितृभ्यश्च नमस्करोमि । भूर्भुवःसुवर्लोकत्रयावस्थितं छन्दो मन्त्रब्राह्मणात्मकं वेदमों प्राप्नोति ( मि ) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यकदशमप्रपाठके नारायणीयापरनामधेययुक्तायां याज्ञिक्यामुपनिषदि भाष्येऽष्टमोऽनुवाकः ॥ ८ ॥

====

अथ नवमोऽनुवाकः ।

---

अथ लब्धानां वेदानामविस्मरणाय जप्यं मन्त्रमाह—

नमो ब्रह्मणे धारणं मे अस्त्वनिराकरणं धारयिता भूयासं कर्णयोः श्रुतं मा च्योढ्वं ममामुष्य ओम्, इति ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यकदशमपाठके नारायणोपनिषदि नवमोऽनुवाकः ॥ ९ ॥

ब्रह्मणे जगत्कारणाय नमोऽस्तु । तत्प्रसादान्मदीये चित्ते ग्रन्थतदर्थयोर्धारणमस्तु । अनिराकरणं निराकरणं विस्मरणं यथा न भवति तथा धारयिता भूयासम् । अमुष्येत्थं प्रार्थयमानस्य मम कर्णयोर्यत्किंचिद्वेदशास्त्रादिकं यदा कदाचि-

---

१ च. २२ ॥ २ छ. °र्थ्यार्थाय । अ° । ३ घ. २३ ॥

दपि श्रुतमासीत्तत्सर्वं [ हे ] देव **मा च्योढ्वं मा विनाशय । ततोऽहमीं प्राप्नुयां** स्थिरं धारणमिति शेषः ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यकदशमप्रपाठके नारायणीयापरनामधेययुक्तायां याज्ञिक्यामुपनिषदि भाष्ये नवमोऽनुवाकः ॥ ९ ॥

=====

अथ दशमोऽनुवाकः ।

———

अथ ज्ञानसाधनं चित्तैकाग्र्यरूपं तपोऽस्ति, " **मनसश्चेन्द्रियाणां च ह्येकाग्र्यं परमं तपः** " इति श्रुतेः । तत्तपः श्रौतस्मार्तसर्वकर्मस्वरूपतया प्रशंसति । यद्वा तथाविध-तपःसिद्ध्यर्थं जप्यं मन्त्रमाह—

**ऋतं तपः सत्यं तपः श्रुतं तपः शान्तं तपो दमस्तपः शमस्तपो दानं तपो यज्ञं तपो भूर्भुवः सुवर्ब्रह्मैतदुपास्यैतत्तपः, इति ॥**

**इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यकदशमप्रपाठके नारायणोपनिषदि दशमोऽनुवाकः ॥ १०* ॥**

**ऋतं** मनसा यथार्थवस्तुचिन्तनम । **सत्यं** वाचा यथार्थं भाषणम् । **श्रुतं वेदस्य** पूर्वोत्तरभागार्थावबोधायोभयोर्मीमांसयोः श्रवणम् । **शान्तं** शान्तिर्बा [ ह्येन्द्रियाभ्यन्तरे-न्द्रियोपरतिः ] **दमो** दमनं यथोक्तोपवासादिभिः शरीरकर्षणम् । **शमः** शत्रुष्वपि क्रोधराहित्यम् । **दानं** धनेषु स्वत्वनिवृत्तिः परस्वत्वापादनपर्यन्तम् । **यज्ञो**ऽग्निहोत्रा-दीनि [ कर्माणि ] तदेतत्सर्वमर्वाचीनं **तपः । भूरादि**लोकत्रयात्मकविराड्देव(ह)रूपं यद्ब्रह्मास्ति हे मुमुक्षवे**तद्ब्रह्मोपास्य** विजातीयप्रत्ययरहितं सजातीयप्रत्ययप्रवाहं कुरु । **एतदुपासनं तपः ॥**

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यकदशमप्रपाठके नारायणोपनिषदि भाष्ये दशमोऽनुवाकः ॥ १० ॥

=====

अथैकादशोऽनुवाकः ।

———

अथ विहितानुष्ठानरूपं पुण्यं ज्ञानसाधनतया प्रशंसति । निषिद्धाचरणरूपं तु ज्ञान-प्रतिबन्धकतया निन्दति—

**यथा वृक्षस्य संपुष्पितस्य दूराद्गन्धो वात्येवं पुण्यस्य**

* अत्र घ. पुस्तके (२४) अङ्को वर्तते ।

कर्मणो दूराद्गन्धो वाति यथाऽसिधारां कर्तेऽवहितामवक्रामे यद्युवे युवे हवा विह्वयिष्यामि कर्तं पतिष्यामीत्येवममृतादात्मानं जुगुप्सेत्, इति ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यकदशमप्रपाठके नारायणोपनिषद्येकादशोऽनुवाकः ॥ ११ ॥

यथा वृक्षस्योद्यानादौ स्थितस्य चम्पकादिलक्षणस्य संपुष्पितस्य सम्यग्विकसितपुष्पोपेतस्य यो गन्धः [सुरभिरस्ति सोऽयं] दूराद्दूरदेशाद्वाति वायुना सहाऽऽगच्छति, एवं पुण्यस्य कर्मणो ज्योतिष्टोमादेः सत्कीर्तिः सुगन्धसमाना दूराद्वाति । मनुष्यलोकात्स्वर्गे गच्छति । तस्मात्पुण्यमनुष्ठेयम् । अथ पापस्य दृष्टान्त उच्यते—यथा लोके कश्चित्कदाचित्केनाचिद्धेतुना[कर्ते] गर्ते गर्तस्योपरि तिर्यक्काष्ठवदवहितां प्रसारितामसिधारामहमवक्रामे पादाभ्यामुपर्युपरि गच्छामि(मी) तीच्छति तदा] यद्यदि युवे युवे याम्यायामि तदाऽसिधारया पादयोर्दृढस्पर्शो भविष्यति । [ततः] पादच्छेदस्य(दः स्यात् ।) यदि दृढस्पर्शाभावः [कर्ते] कर्ते गर्ते पतिष्यामि । उभयथा दुःखमेवेति विह्वयिष्यामि विह्वलितो भविष्यामि तस्मादस्मात्कर्मण उपरम इति चिन्तयति *यथैवं मुमुक्षुरप्यमृतान्मोक्षप्राप्तिहेतोरात्मानमन्तःकरणं स्थिरीकृत्य पापाज्जुगुप्सेत् । यदि पापं प्रकटं कारिष्यामि तदा लोकैरहं निन्द्ये यदि रहसि+ तदा नरके याम्यैरहं पीड्ये तस्माद्बहीं रहसि च न पापं करिष्य इत्युपरम्यताम् ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यकदशमप्रपाठके नारायणोपनिषदि भाष्य एकादशोऽनुवाकः ॥ ११ ॥

====

अथ द्वादशोऽनुवाकः ।

---

यथोक्तप्रशंसोपेतपुण्यानुष्ठानेन निषिद्धाचरणवर्जितेन शुद्धान्तःकरणस्य पुरुषस्य तत्त्वमुपदेष्टुमयमनुवाक आरभ्यते । तत्र प्रथमामृचमाह—

अणोरणीयान्महतो महीयानात्मा गुहायां निहितोऽस्य जन्तोः ।
तमक्रतुं पश्यति वीतशोको धातुः प्रसादान्महिमानमीशम्, इति ॥

सच्चिदानन्दरसः परमेश्वरः सर्वाधिष्ठानत्वेन सर्वस्य जगतः स्वरूपत्वादात्मशब्देनोच्यते । आत्मशब्दः स्वरूपवाचीति प्रसिद्धम् । मायाकार्यभूते लौकिकव्यवहारे सूक्ष्म-

* यथेत्याधिकम् । + करिष्यामीति संबध्यते ।

त्वेन प्रसिद्धः परमाणुद्व्यणुकादिरणुशब्दवाच्यः । तस्मादप्ययमात्माऽतिशयेन सूक्ष्मत्वाद**णीयान्** । आकाशादिगादयः परिमाणाधिक्याल्लोके महच्छब्दवाच्याः । ततोऽप्ययमात्माऽतिशयेनाधिकत्वान्**महीयान्** । परमाणुद्व्यणुकादीनामस्मदादिप्रत्ययगम्यत्वाभावेऽपि योगिजनचक्षुर्गम्यत्वमस्ति तदप्यात्मनो नास्तीत्यभिप्रेत्याणीयस्त्वमुक्तम् । आकाशादिगादीनामेकब्रह्माण्डवर्तित्वात्तादृशब्रह्माण्डलक्षकोट्यधिष्ठान त्व]मभिप्रेत्य महीयस्त्वमुक्तम् । तादृशः परमात्माऽस्य देवमनुष्यादिरूपस्य **जन्तोर्गुहायां निहितः** । गुहाशब्देन हृदयपुण्डरीकवर्तिनी बुद्धिरुपलक्ष्यते । ‘ गुहू संवरणे ’ इत्यस्माद्धातोरुत्पन्नो गुहाशब्दः । बुद्धिश्च हृदयपुण्डरीकेण संवृता तन्मध्यवर्तित्वात् । तस्यां बुद्धावस्य परमात्मनो निहितत्वं नाम विद्ययोपलभ्यत्वम्, नतु बुद्धावाधेयत्वम् । सर्वजगदाधारस्य तदसंभवात् । [तं] तथाविधं गुहावस्थित**मीशं** शमदमादिगुणयुक्तोऽधिकारी पुरुषः **पश्यति** । साक्षात्करोति । स चाधिकारो **धातुः प्रसादा**दुपजायते । धाता जगतो विधाता परमेश्वरस्तस्य प्रसादोऽनुग्रहः ।

तथा च **पूर्वाचार्यै**रुक्तम्—

“ ईश्वरानुग्रहादेषां पुंसामद्वैतवासना ।
महाभयकृतत्राणा द्वित्राणां यदि जायते ” ॥

कीदृशमीशम् । **अक्रतुं** संकल्परहितम् । स्नानपानादिभोगजातं समीचीनमिति संकल्पनं जीवस्यैव न त्वीश्वरस्य, संकल्पहेतुभूतान्तःकरणोपाधेरभावात् । अतो निरुपाधिकत्वान्**महिमान**मतिशयेन महान्तमीश्वरम् । ईदृशं परमेश्वरं साक्षात्कृत्य **वीतशोको** जन्ममरणादिशोकरहितो भवति ।

द्वितीयामृचमाह—

**सप्त प्राणाः प्रभवन्ति तस्मात्सप्तार्चिषः समिधः सप्त जिह्वाः ।**
**सप्त इमे लोका येषु चरन्ति प्राणा गुहाशयान्निहिताः सप्त सप्त,** इति ॥

शुद्धान्तःकरणैर्यो ज्ञातव्यः परमात्मोक्तस्तस्य शाखाचन्द्रन्यायेनोपलक्षणार्थं जगत्कारणत्वमुच्यते । **तस्मा**त्परमात्मनो मायाशक्तिविशिष्टात्**सप्त प्राणाः प्रभवन्ति** । अन्यत्र सप्त वै शीर्षण्याः प्राणा इत्युक्तत्वाच्छिरोवर्तिसप्तच्छिद्रगताः सप्तसंख्याकाश्चक्षुरादयः प्राणाः परमेश्वरादुत्पद्यन्ते । द्वे चक्षुषी द्वे ने( श्रो )त्रे द्वे नासिके मुखमेकमिति सप्तत्वम् । तेषां चक्षुरादीनां स्वस्वविषयप्रकाशनशक्तयः **सप्तार्चिषः** । तैरर्चिभिर्गृह्यमाणत्वेन **सप्त**संख्याका विषयाः **समिधः** । विषयैरिन्द्रियाणि समिध्यन्ते प्रकाशयुक्तानि क्रियन्ते । यथैकस्यापि चक्षुरिन्द्रियस्य गोलकभेदेन द्वित्वम्, तथा रूपस्याप्येकस्य वामदक्षिणरूपनिर्वाहकचक्षुर्भेदाद्द्वित्वं द्रष्टव्यम् । एवं शब्दगन्धयोर्द्वित्वे सति विषयाः सप्त संपद्यन्ते । अथवा समिच्छब्देन सप्तसंख्या न संबध्यते किंतु जिह्वाशब्देन ।

अग्नौ(ग्नि)जिह्वानां च सप्तत्वमाथर्वणिकैराम्नातम्—

" काली कराली च मनोजवा च सुलोहिता या च सुधूम्रवर्णा ।
स्फुलिङ्गिनी विश्वरुची च देवी लेलायमाना इति सप्त जिह्वाः " इति ।

ताः परमेश्वरात्प्रभवन्ति । इमे भूरादयः **सप्तसंख्याका लोकास्तस्मात्प्रभवन्ति** । **येषु** सप्तसु लोकेषु देवमनुष्यादिशरीरवर्तिनः **प्राणाश्चरन्ति** तादृशा लोका उत्पन्ना इति पूर्वत्रान्वयः । गुहा बुद्धिस्तस्यां शेत उपलभ्यत इति **गुहाशयः** परमेश्वरस्तस्मा**न्निहिता** उत्पन्नाः सप्तर्षयः सप्त समुद्रा इत्यादिकाः **सप्त**संख्याकाः पदार्थविशेषाः ।

अथ तृतीयामाह—

**अतः समुद्रा गिरयश्च सर्वेऽस्मात्स्यन्दन्ते सिन्धवः सर्वरूपाः ।**
**अतश्च विश्वा ओषधयो रसाच्च येनैष भूतस्तिष्ठत्यन्तरात्मा,** इति ॥

[सर्वे क्षीरोदधिप्रभृतयः समुद्रविशेषा] मेरुप्रभृतयो गिरिविशेषाश्चा[तोऽ]स्मात्परमेश्वरादुत्पन्नाः । **सर्वरूपा** नानादिगभिमुखाः **सिन्धवः स्यन्दन्ते** प्रवहन्ति । व्रीहियवाद्या **विश्वाः** सर्वा **ओषधयश्चो**त्पन्नाः । कथंभूतात्परमात्मनः । **रसात्** । विद्वदनुभवनीयात् । रसो वै स इति पूर्वमुक्तत्वात् । **एषो**ऽहंप्रत्ययेन गम्यमानः । **अन्तरात्मा** स्थूलदेहचिदात्मनोर्मध्यवर्ती यो लिङ्गदेही(हः) । **येनौ**षधिरसेन **भूतो**ऽधिष्ठितः संस्तिष्ठति । अत इति पूर्वेणान्वयः ।

[चतुर्थीमृचमाह—]

**ब्रह्मा देवानां पदवीः कवीनामृषिर्विप्राणां महिषो मृगाणाम् ।**
**श्येनो गृध्राणाꣳ स्वधितिर्वनानाꣳ सोमः पवित्रमत्येति रेभन् ,** इति ॥

अन्तर्बहिर्वर्तिनां प्राणसमुद्रादीनामचेतनानां सृष्टिमुक्त्वा चेतनेषु परमेश्वरस्योत्कृष्टरूपेणावस्थानमुच्यते । **देवानाम**ग्नीन्द्रादीनां मध्ये **ब्रह्मा** चतुर्मुखो भूत्वा परमेश्वरो नियामकत्वेनावतिष्ठते । तथा **कवीनां** काव्यनाटकादिकर्तॄणां पुरुषाणां मध्ये पदवीत्वेनावतिष्ठते । व्याकरणनिष्पन्नः सुशब्दविशेषः पदं तद्वेति गच्छतीति **पदवीः** । शब्दसामर्थ्याभिज्ञो व्यासवाल्मीक्यादिरूप इत्यर्थः । **विप्राणां** वैदिकमार्गवर्तिनां ब्राह्मणानां मध्य **ऋषिस्त**[त्त]द्ग्रोत्रप्रवर्तको **वसिष्ठा**दिरूपो बभूव । **मृगाणां** चतुष्पदानां मध्ये शक्त्याधिक्ययुक्तो **महिषो** बभूव । **गृध्रो**पलक्षितानां सर्वेषां पक्षिणां मध्ये प्रबलः **श्येनो** बभूव । **वनानां** वृक्षसमूहरूपाणां छेदनार्थं **स्वधितिः** परशुर्बभूव ।

---

१ ङ. °द्विव° ।

यागहेतुभूतवल्ल्यात्मकः सोमो भूत्वा रेभन्मन्त्रशब्दयुक्तः सन्पवित्रं शुद्धिकरणं गङ्गाजलकुशदर्भादिकद्रव्यजातं सर्वमत्येति ।

पञ्चमीमृचमाह—

अजामेकां लोहितशुक्लकृष्णां बह्वीं प्रजां जनयन्तीꣳ सरूपाम् ।

अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः(१*),इति।

व्यवहारदशायां परमेश्वरस्य चतुर्मुखब्रह्मादिशरीरेषु विशेषेणावस्थानमभिधाय यथोक्तजगत्सृष्टेर्मूलकारणभूतां मायाशक्तिमुपजीव्य बद्धमुक्तपुरुषव्यवस्था प्रदर्श्यते । न जायत इत्यजा मूलप्रकृतिरूपा माया । न ह्यनादेस्तस्या जन्म संभवति । सा च मायैका । इतरस्य सर्व [स्य] जगतस्तत्कार्यत्वात् । यदाऽसौ तेजोबन्नानि त्रीणि रूपाण्युत्पाद्य तद्रूपाऽवतिष्ठते तदानीं लोहितशुक्ल[कृष्ण]वर्णैरुपेता भवति । तथा छन्दोग आमनन्ति—"यदग्ने रोहितꣳ रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्य' इति । अन्नशब्देनात्र पृथिव्युपलक्ष्यते । रजःसत्त्वतमोगुणा वा लोहितादिशब्दैरुपलक्ष्यन्ते । गुणत्रयात्मिका मायेत्युक्तं भवति । सा च देवतिर्यङ्मनुष्यादिरूपां गुणात्रितयात्मकत्वेन सरूपां बहुविधां प्रजां जनयन्ती । न जायत इत्यजो जीवस्तस्यापि मायावदनादित्वादुत्पत्तिर्नास्ति । तादृशो जीवो द्विविधः । आसक्तो विरक्तश्च । तयोर्मध्य एक आसक्तो जीवः पूर्वोक्तामजां मायां जुषमाणः प्रीतिपूर्वकं सेवमानोऽनुशेते तदनुसारेणैव वर्तते । विषयानेव भुञ्जानो विवेकरहितो जन्ममरणप्रवाहरूपेण संसरतीत्यर्थः अन्यो विरक्तो जीवो भुक्तभोगामेनां मायां जहाति परित्यजति । विरक्तैः पूर्वमेभोगान्भुक्त्वा (ग॰ भुक्ता) नतूपरिष्टाद्भोक्ष्यन्ते तादृशैर्भोगैर्भुक्ता भुक्तभोगा तां मायां तत्त्वविवेकेन बाधतामि (त इ) त्यर्थः ।

षष्ठीमृचमाह—

हꣳसः शुचिषद्वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत् ।

नृषद्वरसदृतसद्व्योमसदब्जा गोजा ऋतजा अद्रिजा ऋतं बृहत्, इति ॥

यः पुमान्विवेकेन मायां परित्यजति तस्य सर्वमपि जगद्ब्रह्मरूपेणावभासत इत्ययमर्थोऽत्र प्रदर्श्यते । एतदर्थमादौ जगदनूद्यते । हन्ति सर्वदा गच्छतीति हंस आदित्यः स च [शुचौ] शुद्धे मण्डले ज्योतिर्मये सीदतीति शुचिषत् । सूत्रात्मस्वरूपेण जगन्निवासहेतुत्वाद्वसुर्वायुस्तद्रूपः सन्नन्तरिक्षे सीदतीत्यन्तरिक्षसत् । होमनिष्पादक आहवनीयाद्यग्निर्होता तद्रूपेण सोमयागा[द्य]ङ्गभूतायां वेद्यां सीदतीति वेदिषत् । अमावास्यादितिथिविशेषमनपेक्ष्य भोजनयाच्ञार्थं तत्र तत्र गच्छन्पुरुषो वैदेशिकोऽतिथिस्तद्रूपे

* अत्र घ. पुस्तके ( २६ ) अङ्को वर्तते ।

दुरोणेषु गृहेषु परकीयेषु सीदतीति दुरोणसत् । नृषु मनुष्येषु कर्माधिकारिजीवरूपेण सीदतीति नृषत् । वरे श्रेष्ठे क्षेत्रे काशीद्वारवत्यादौ पूजनीयरूपेण सीदतीति वरसत् । ऋते सत्ये वैदिके कर्मणि फलरूपेण सीदतीति ऋतसत् । व्योम्न्याकाशे नक्षत्रादिरूपेण सीदतीति व्योमसत् । अब्द्भ्यो नदीसमुद्रादिगताभ्यः शङ्खमकरादिरूपेण जायत इत्यब्जाः । गोभ्यः क्षीरादिरूपेण जायत इति गोजाः । ऋतं सत्यं वचनं तस्मात्कीर्तिरूपेण जायत इति ऋतजाः । अद्रिभ्यो वृक्षादिरूपेण जायत इत्यद्रिजाः । हंस इत्यारभ्याद्रिजा इत्यन्तेनोक्तं यज्जगदस्ति तज्जगदृतं सत्यं बृहद्ब्रह्म । अज्ञानिदृष्ट्या जगद्रूपेण भासमानं सर्वं ज्ञानिदृष्ट्या ब्रह्मैवेत्यर्थः ।

सप्तमीमृचमाह—

घृतं मिमिक्षिरे घृतमस्य योनिर्घृते श्रितो घृतम्वस्य धाम ।
अनुष्वधमावह मादयस्व स्वाहाकृतं वृषभ वक्षि हव्यम्, इति ।

भोग(ग्य)जातस्य ज्ञानभो(यो)ग्यदेहानुकूल्यं प्रार्थ्य[मिति तदर्थं] ज्ञानसाधनयागादिकर्महेतोरग्नेरानुकूल्यं प्रार्थयते । पूर्व(र्वे) यजमाना अग्नावाहवनीयादिरूपे घृतं मिमिक्षिरे सिक्तवन्तः । मिह सेचन इति धातुः । तद्घृतमस्याग्नेर्योनिरुत्पत्तिकारणं घृतेन ज्वालाभिवृद्धिदर्शनात् । ततोऽयमग्निर्घृते श्रितो घृतमाश्रित्यावस्थितः । घृतमु घृतमेवास्याग्नेर्धाम स्थानं तेजोहेतुर्वा । हेऽग्नेऽनुष्वधं स्वधामन्वस्मदीयं हविःस्वरूपमनुश्रु(सृ)त्याऽऽवह देवानत्राऽऽनय । आनीय च मादयस्व सुहृष्टान्कुरु । हे ऋ(वृ)षभ श्रेष्ठ स्वाहाकृतं स्वाहाकारेणास्माभिर्दत्तं हव्यं वक्षि वह देवान्प्रापय ।

अष्टमीमृचमाह—

समुद्रादूर्मिर्मधुमाꣳ उदारदुपाꣳशुना सममृतत्वमानट् ।
घृतस्य नाम गुह्यं यदस्ति जिह्वा देवानाममृतस्य नाभिः इति ।

समुद्रात्प्रभूतात्परमात्मन ऊर्मिसदृशः प्रपञ्चो मधुमान्भोग्यत्वेन माधुर्ययुक्त उदारदुदगच्छदुत्पन्न इत्यर्थः । यथा लोके समुद्रात्तरङ्ग उत्पद्यत एवं चिदेकरसात्परमात्मनो जडं भोग्यजातं समुत्पन्नम् । घृ क्षरणदीप्त्योरिति धातोरुत्पन्नो घृतशब्दः । घृतं दीप्तं स्वप्रकाशं ब्रह्मेत्यर्थः । तस्य ब्रह्मणो यन्नाम प्रणवरूपं गुह्यं सर्ववेदेष्वस्ति । तथाच काठकैराम्नातम्—"सर्वे वेदा यत्पदमामनन्ति" इति प्रस्तुत्य "तत्ते पदं संग्रहेण ब्रवीम्योमित्येतत्" इति । तेन प्रणवरूपेणोपांशुना ध्यानकाले शनैरुच्चार्यमाणेनामृतत्वमुत्पत्तिविनाशरहितं ब्रह्मतत्त्वं समानट् सम्यगानशे प्राप्नोतीत्यर्थः । तच्च प्रणवाख्यं नाम देवानां जिह्वा देवैर्ध्यानपरैर्निरन्तरमुच्चार्यमाणत्वेन जिह्वेव सर्वदा मुखमध्ये वर्तते । किंचेदं प्रणवरूपममृतस्य विनाशरहितस्य मोक्षस्य नाभी रथचक्रस्य नाभिरिवाऽऽश्रय-

भूतम् । अनेन हि मुक्तिरूपं फलं लभ्यते । अत एव कठैराम्नातम्—"एतदेवाक्ष[रं] [ज्ञात्वा] यो यदिच्छति तस्य तत्" इति । एतस्यामृचि प्रणवस्य मोक्षसाधनत्वमुक्तम् ।

नवमीमृचमाह—

**वयं नाम प्रब्रवामा घृतेनास्मिन्यज्ञे धारयामा नमोभिः ।**

**उप ब्रह्मा शृणवच्छस्यमानं चतुःशृङ्गोऽवमीद्गौर एतत्, इति ।**

**वयं** ज्ञानार्थिनः पुरुषा **अस्मिञ्ज्ञानयज्ञे घृतेनाऽऽदीप्तेन** स्वप्रकाशेन ब्रह्मण निमित्तभूतेन प्रणवरूपं [नाम] **प्रब्रवाम** । सर्वदोच्चारयामः (म, । ततो **नमो[भि]**र्नमस्कारैर्युक्ता वयं चित्ते ब्रह्मतत्त्वं सर्वदा **धारयामः(म)** । ज्ञानस्य यज्ञत्वं भगवतो[क्तम्]—"स्वाध्यायज्ञानयज्ञाश्च यतयः शंसि(संशि)तव्रताः" [इति ] **शस्यमानम**स्माभिः प्रणवेन स्तूयमानमुपशृणवत्पार्श्ववर्तिभिस्तत्त्ववेदिभिः श्रूयमाणमेतद्ब्रह्मतत्त्वं **चतुःशृङ्गोऽ**कारोकारमकारनादरूपशृङ्गचतुष्टयोपेतो **गौरः** श्वेतः प्रणवाख्य ऋषभोऽ**वमीद्**वान्तवान् । ब्रह्मतत्त्वं प्रत्यपादयदित्यर्थः । अकारादीनां प्रणवमात्राणां शृङ्गत्वमु[त्त]रतापनीये श्रुतम्—"शृङ्गेष्वशृङ्गं संयोज्य" इति । निष्कामैरनुष्ठेयत्वेन निर्मलत्वा[त्]प्रणवस्य गौरत्वम् । वृषभरूपत्वं च संहितोपनिषद्याम्नातम्—"यश्छन्दसामृषभो विश्वरूपः" इति । *वचनेन प्रतिपादनमुपलक्ष्यते(!) ।

दशमीमृचमाह—

**चत्वारि शृङ्गा त्रयो अस्य पादा द्वे शीर्षे सप्त हस्तासो अस्य ।**

**त्रिधा बद्धो वृषभो रोरवीति महो देवो मर्त्याँ आविवेश, (२) इति**

**शृङ्गा** प्रणवस्य यान्यकारादीनि [शृङ्गाणि] तानि **चत्वारि** । **अस्य** प्रणवप्रतिपाद्यत्वेन प्रणवरूपस्य ब्रह्मण**स्त्रयः पादाः** । पद्यते गम्यते ब्रह्मत्वमेभिरिति पादाः अध्यात्मं विश्वतैजसप्राज्ञाः । अधिदैवं विराड्ढिरण्यगर्भाव्याकृतानि । **द्वे शीर्षे** उत्तमाङ्गस्थाने चि[दचि]द्रूपे द्वे शक्ती । तथैवास्य ब्रह्मणो भूरादयः **सप्त** लोका **हस्ता[स]** हस्तस्थानीयाः । **त्रिधा बद्धोऽ**कारोकारमकारेषु विश्वतैजसप्राज्ञैर्विराड्ढिरण्यगर्भाव्याकृतैश्च त्रिप्रकारेण संबद्धो **वृषभः** प्रणवो **मह**स्तेजोरूपं ब्रह्मतत्त्वं **रोरवीति**, अतिशयेन प्रतिपादयति । तदेव प्रतिपाद्यत्वं स्पष्टी क्रियते—**देवः** परमेश्वरो **मर्त्यान्म**नुष्यान्**आविवेश** सर्वतः प्रविष्टः । "स एष इह प्रविष्ट आ नखाग्रेभ्यः" इति श्रुत्यन्तरा[त्]

* एतत्प्रभृत्युपलक्ष्यत इत्यन्तो ग्रन्थः प्रकृतानुपयोगीव भवति ॥

एकादशीमृचमाह—

**त्रिधा हितं पणिभिर्गुह्यमानं गवि देवासो घृतमन्वविन्दन् ।**

**इन्द्र एकꣳ सूर्य एकं जजान वेनादेकꣳ स्वधया निष्टतक्षुः,** इति ।

**त्रिधा हितं** शरीरे विश्वतैजसप्राज्ञाख्येन त्रिप्रकारेण ब्रह्माण्डे विराड्ढिरण्यगर्भा-व्याकृताख्येन च त्रिप्रकारेणावस्थितं **घृतं** दीप्तं स्वप्रकाशं ब्रह्मतत्त्वं **देवासो** देववत्सात्त्विका अन्तर्मुखाः पुरुषा **गवि** वाचि तत्त्वमस्यादिवेदरूपायामेवा**न्वविन्दन्ननु**क्रमेण लब्धवन्तः । कीदृशं घृतम् । **पणिभिर्गुह्यमानम्** । पण व्यवहारे स्तुतौ चेति धातुः । पणिभिः स्तोतृभिरुपदेष्टृभिराचार्यैः परमरहस्यत्वेन गोप्यमानम् । त्रिधा हितमित्येतदेवोच्यते । **इन्द्रः** परमैश्वर्ययुक्तो विराट्पुरुष **एकं** जागरणरूपं **जजा**नोत्पादितवान् । **सूर्य**शब्दस्तेजस्वित्वेन हिरण्यगर्भमुपलक्षयति । स च हिरण्यगर्भ **एकं** स्वप्नरूपं **जजान** । वेन ( वे ) तिधातुः कान्तिकर्मा । **वेना**त्सर्वदुःखराहित्येन कमनीयादव्याकृता**देकं** सुषुप्तिरूपं निष्पन्नमिति शेषः । स्वस्मिन्नेव धीयतेऽवस्थाप्यत इत्याश्रयान्तररहिता ब्रह्मरूपा चित्स्वधारूपेणोच्यते । " स भगवः कस्मिन्प्रतिष्ठित इति स्वे महिम्नि " इति श्रुत्यन्तरात् । तया **स्वधया** ब्रह्मरूपा ( प ) याऽन्विताः पूर्वमुक्ता इन्द्रसूर्य**वेना निष्टतक्षुः** । जागरणादिकं निष्पादितवन्तः । एताभ्यां द्वाभ्यामृग्भ्यां प्रणवतत्प्रतिपाद्यार्थौ प्रपञ्चितौ ।

द्वादशी[मृच]माह—

**यो देवानां प्रथमं पुरस्ताद्विश्वाधियो रुद्रो महर्षिः ।**

**हिरण्यगर्भं पश्यत जायमानꣳ स नो देवः शुभया स्मृत्या संयुनक्तु,** इति ।

**यो देवो हिरण्यगर्भं पश्यत** साक्षात्करोति । कीदृशं हिरण्यगर्भम् । **देवानां प्रथमम**ग्नीन्द्रादीनामादिभूतम् । **पुरस्ताज्जायमान**मग्नीन्द्राद्युत्पत्तेः पूर्वमेवोत्पद्यमानम् । अनेन प्राथम्यं स्पष्टीकृतम् । कीदृशो देवः । **विश्वाधियो** विश्वस्य जगतः कारणत्वेन तस्मादधिकः* । **रुद्रः** । रुद्वैदिकः शब्दस्तं द्रवति प्राप्नोति वेदप्रतिपाद्य इत्यर्थः । **महर्षि**र्ऋषीणामतीन्द्रियद्रष्टॄणां मध्ये महान् । यः सर्वज्ञः सर्वविदित्यादिश्रुतिप्रतिपाद्य इत्यर्थः । **स देव**स्तादृशः परमेश्वरो **नो**ऽस्मा**ञ्शुभया स्मृत्या** सर्वसंसारनिवर्तकत्वेन शोभनया ब्रह्मतत्त्वानुस्मृत्या **संयुनक्तु** संयुक्तान्करोतु । सोऽयं मन्त्रो ब्रह्मविद्यालब्धये जपितव्य इति मन्त्रलिङ्गादवगम्यते ।

---

* ककारस्थाने व्यत्ययेन यकार इति भावः ।

---

१ ङ. °नुग्रहेण ।

त्रयोदशी[मृच]माह—

**यस्मात्परं नापरमस्ति किंचिद्यस्मान्नाणीयो न ज्यायोऽस्ति कश्चित् ।**

**वृक्ष इव स्तब्धो दिवि तिष्ठत्येकस्तेनेदं पूर्णं पुरुषेण सर्वम्**, इति ।

यदुक्तं शुभया स्मृत्या संयुनक्त्विति तत्र स्मरणीयं तत्त्वमत्र निर्दिश्यते । **यस्मा**द्ब्रह्मतत्त्वात्परमुत्कृष्ट[मपरं निकृष्टं] वा वस्तु **किंचिदपि नास्ति** । [***यस्माद्ब्रह्मत**त्त्वाद**णीयो**ऽत्यल्पं वस्तु **नास्ति** । तथा **ज्यायो**ऽधिकमपि **कश्चि**त्किंचिदपि वस्तु **नास्ति** । ] परापरशब्दाभ्यां गुणोत्कर्षनिकर्षौ विवक्षितौ । ज्यायोणीयःशब्दाभ्यां परिमाणोत्कर्षापकर्षौ विवक्षितौ । सर्वप्रकारोत्कर्षापकर्षनिषेधेनाद्वितीयत्वं सिध्यति । यथा **वृक्षो** गमनागमनरहित एकत्रैव स्तब्धोऽवतिष्ठते तद्वदयमेवाद्वितीय **एकः** परमेश्वरः स्तब्धो निर्विकारो **दिवि** द्योतनात्मके स्वप्रकाशरूपे **तिष्ठति** । **तेन पुरुषेण** चिदेकरसेनाऽऽ(न परमा)त्मना **सर्वमिदं** जगत्**पूर्णम्** । जगदाकारो नास्ति ब्रह्मतत्त्वमेव स्थितमेवेत्य(मित्य)र्थः ।

चतुर्दशीमृचमाह—

**न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः ।**

**परेण नाकं निहितं गुहायां विभ्राजदेतद्यतयो विशन्ति**, इति ।

यथोक्तब्रह्मतत्त्वस्मरणस्यान्तरङ्गं[1] सर्वत्यागरूपं साधनमत्रोच्यते । अग्निहोत्रादिकं सहस्रसंवत्सरसत्रान्तं यत्कर्म तेन **कर्मणा** तदमृतत्वं **न** लभ्यते । "प्रजया पितृभ्यः" इति श्रुतेः पितृविषयादृणाद्विमोचनहेतुर्या पुत्रादिरूपा **प्रजा** तयाऽ[प्य]मृतत्वं **न** लभ्यते । दाने सर्वं प्रतिष्ठितं तस्माद्दानं परमं वदन्तीतिश्रुतेर्धनदानस्य बहुविधफलसाधनत्वावगमात्तस्य दानस्य निष्पादकं यद्धनमस्ति तेन **धनेना**प्यमृतत्वं **न** लभ्यते । किं तर्हि कर्मप्रजाधनादीनां सर्वेषां लौकिकवैदिकव्यापाराणां **त्यागेनैके** केचिदेवान्तर्मुखा **अमृतत्वमानशुः** प्राप्नुवन्ति । यदमृतत्वं **यतय** इन्द्रियनियमनशीला **विशन्ति** प्राप्नुवन्ति त[देत]दमृतत्वं **नाकं परेण** स्वर्गादप्युत्कृष्टं सद्**गुहायां** स्वकीयबुद्धावेकाग्रायां **निहित**मवस्थितं सद्वि(भ्राजद्वि) भ्राजते विशेषेण दीप्यतेऽन्तर्मुखैरनुभूयत इत्यर्थः ।

पञ्चदशीमृचमाह—

**वेदान्तविज्ञानसुनिश्चितार्थाः संन्यासयोगाद्यतयः शुद्धसत्त्वाः ।**

**ते ब्रह्मलोके तु परान्तकाले परामृतात्परिमुच्यन्ति सर्वे**, इति ।

* त्रुटितोऽयमेतच्चिह्नान्तर्गतो ग्रन्थश्चतुःषष्ठ्यनुवाकानुरोधिभाष्यात्संगृहीतः । प्रकृतग्रन्थस्य तत्रात्र चैक्यात् ।

१ ङ. स्मृत्या. । २ ङ. स्मरणाय ।

पूर्वस्यामृचि त्यागस्य मोक्षसाधनत्वमुक्तम् । अत्र हि (अन्यत्र)—"तरति शोकमात्मवित्" "ज्ञानादेव [तु] कैवल्यं प्राप्यते येन मुच्यते" इत्यादिश्रुतिस्मृतिषु ज्ञानस्य(स्यैव) मोक्षहेतुत्वमुच्यते । अतोऽस्यामृचि विरोधपरिहाराय ज्ञानसंन्यासयोर्मोक्षे पृथगुपयोग उच्यते । वेदान्ता उपनिषद्वाक्यानि तैरुत्पन्नं सर्वसंसारनिवर्तकत्वेन विशिष्टं ज्ञानं यदस्ति तेन सुनिश्चितो जीवब्रह्मैक्यलक्षणोऽर्थो यैः पुरुषैस्ते **वेदान्तविज्ञानसुनिश्चितार्थाः** । संन्यासः पूर्वोक्त(क्तः)प्रजादित्यागस्तत्पूर्वको [*योगः प्रमाणविपर्ययविकल्पनिद्रास्मृतिरूपाणां पञ्चानां चित्तवृत्तीनां विरोधः] "योगश्चित्तवृत्तिनिरोधः" [*इति **पतञ्जलिना** सूत्रितत्वात् । तस्माद्योगाच्छुद्धसत्त्वा विषयभोगव्यावृत्तचित्ताः ] । अत एव **यतयो** नियमशीलाः । एतेन ज्ञानं तत्त्वप्रकाशनेनाविद्यानिवर्तकं त्यागस्तु विषययो(भो)गनिवृत्तिद्वारा चित्तशुद्धिहेतुरिति पृथगुपयोग उक्तो भवति । ब्रह्मणो लोको दर्शनं साक्षात्कारस्तस्मिन्नुत्पन्ने सति संसारिविलक्षणास्ते पुरुषाः । वैलक्षण्यद्योतनार्थस्तुशब्दः । तादृशाः पुरुषाः सर्वे [परिमुच्यन्ति] परिमुच्यन्ते । ज्ञानिषु देवमनुष्यत्वादिकृत उत्तमाधमभावोऽप्रयोजक इति विवक्षया सर्व इत्युक्तम् । कदा मुच्यन्त इत्याशङ्क्य परान्तकाल इत्युक्तम् । सत्यज्ञानेन यो देहपातावसरः सोऽयं परान्तकालः पुनर्देहग्रहणराहितत्वात् । तस्मिन्परान्तकाले संसारबन्धनाद्विमुच्यन्ते । ननु तत्त्व (त्त्वा ) ज्ञानिनोऽपि प्रलयकाले स्थूलसूक्ष्मशरीरद्वयबन्धनान्मुच्यन्त एवेत्याशङ्क्य परामृतादि [ त्युक्तम् । ] जगत्कारणत्वेनोत्कृष्टं परं तत्त्वज्ञानमन्तरेण विनाशरहितत्वादमृतं तादृशात्परामृतादव्याकृतादज्ञानिनः प्रलयकालेऽ[पि] न मुच्यन्ते, ज्ञानिनस्तु देहपातावसर एव तादृशादव्याकृतादपि मुच्यन्त इति [वि]शेषः ।

षोडशीमृचमाह—

> दह्रं विपापं परमेश्मभूतं यत्पुण्डरीकं पुरमध्यसꣳस्थम् ।
> तत्रापि दह्रं गगनं विशोकस्तस्मिन्यदन्तस्तदुपासितव्यम्, इति ।

तत्त्वं ज्ञातुमसमर्थस्य सूक्ष्मोपाय उच्यते । यदेतत्पुण्डरीकमष्टदलमस्ति । कीदृशम् । [ दह्रं ] दहरमल्पम् । विपापं शुद्धं शरीरसंबन्धिदोषैरपरामृष्टत्वात् । परस्याऽऽत्मनो मेश्मभूतं वकारस्थाने मकारश्छान्दसः । वेश्मभूतं गृहभूतं सर्वदा तत्रोपलभ्यत्वात् ।

* त्रुटितोऽयमेतच्चिह्नान्तर्गतो ग्रन्थश्चतुःषष्टयनुवाकानुरोधिभाष्यात्संगृहीतः । प्रकृतग्रन्थस्य तत्रात्र चैक्यात् ।

१ छ. °सारानिव° ।

पुरस्य शरीरस्य मध्ये संस्थितं राज्ञ इव पुरमध्ये प्रासादः । तत्रापि दहरे पुण्डरीके दहं [दहरं] सूक्ष्मं गगनमाकाशवदमूर्तं ब्रह्मरूपमस्ति । ब्रह्मणः सर्वगतत्वेऽपि घटाकाशवत्पुण्डरीकस्थानापेक्षया दहरत्वमुपचर्यते । तथा च श्रुत्यन्तरम्—"[अथ] यदिदमस्मिन्ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशस्तस्मिन्यदन्तस्तदन्वेष्टव्यं तद्वाव विजिज्ञासितव्यम्" इति । दहराकाशस्य च ब्रह्मत्वं दहराधिकरणे निर्णीतम् । अत एव विशोकः शोकरहितं गगनशब्दवाच्यं ब्रह्म । एवं सति तस्मिन्पुण्डरीकेऽन्तर्मध्ये यद्ब्रह्मतत्त्वमस्ति तदुपासितव्यं विजातीयप्रत्ययरहितेन सजातीयप्रत्ययप्रवाहेण चिन्तनीयम् ।

सप्तदशीमृचमाह—

यो वेदादौ स्वरः प्रोक्तो वेदान्ते च प्रतिष्ठितः ।
तस्य प्रकृतिलीनस्य यः परः स महेश्वरः ( ३ ), इति ।
अजोऽन्य आविवेश सर्वे चत्वारि च ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यकदशमप्रपाठके नारायणोपनिषदि द्वादशोऽनुवाकः ॥ *१२ ॥

वेदानाम्—"अग्निमीळे पुरोहितम्" "इषे त्वोर्जे त्वा" इत्या[दीनामा]दिरुपक्रमस्तस्मिन्नुपक्रमे यः स्वरो यो वर्णः प्रणवरूपोऽस्ति [×स च स्वरः प्रणवो वेदान्ते चोपनिषद्योमित्येतदक्षरमिदं सर्वमित्यादिकायां प्रतिष्ठितः प्रतिपादितः, ] स च स्वरः प्रणवो ध्यानकालेऽव्याकृते जगत्कारणे लीनो भवति । अकारोकारमकारेषु विराड्ढिरण्यगर्भाव्याकृतानि ध्यात्वा विराड्रूपमकारमुकारे प्रविलाप्य तं चोकारं हिरण्यगर्भरूपं मूलप्रकृतिरूपे मकारे प्रविलापयेत् । तस्य च प्रकृतौ लीनस्य प्रणवस्य यः परश्चतुर्थमात्रारूपेण नादे ध्यातव्य उत्कृष्टोऽस्ति सोऽयं महेश्वरो विज्ञेयः । अनेन मन्त्रेण पूर्वोक्तं गगनशब्दवाच्यं वस्तु प्रपञ्चितम् ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यकदशमप्रपाठके नारायणोपनिषदि भाष्ये द्वादशोऽनुवाकः ॥ १२ ॥

=====

* अत्र घ. पुस्तके ( २८ ) अङ्को वर्तते । × त्रुटितोऽयमेतच्चिह्नान्तर्गतो ग्रन्थश्चतुःषष्ट्यनुवाकानुरोधिभाष्यात्संगृहीतः । प्रकृतग्रन्थस्य तत्रात्र चैक्यात् ।

अथ त्रयोदशोऽनुवाकः ।

पूर्वानुवाकान्ते हृदयपुण्डरीक उपास्यं यन्महेश्वरस्वरूपं निर्दिष्टं तस्मिन्नुपास्यगुणविशेषा अस्मिन्ननुवाके विस्तरेण प्रदर्श्यन्ते । तत्र प्रथमामृचमाह—

सहस्रशीर्षं देवं विश्वाक्षं विश्वशंभुवम् ।
विश्वं नारायणं देवमक्षरं परमं पदम्, इति ।

देवं पूर्वोक्त महेश्वरं ध्यायेदिति शेषः । कीदृशं देवम् । **सहस्रशीर्षं** सहस्रशीर्षत्वेना( शब्देनात्रा )परिमितत्वमुपलक्ष्यते । अनन्तशिरस्कमित्यर्थः । सर्वजगदात्मकं विराड्रूपं महेश्वरस्य देहः । तथा सत्यस्मदादिशिरांसि सर्वाण्यपि तदीयान्येवेत्यनन्तशिरस्त्वम् । अनेनैव न्यायेन विश्वानि सर्वाण्यस्मदीयान्यक्षाणीन्द्रियाणि तदीयान्येवेति विश्वाक्ष[ त्व ]म् । विश्वस्य सर्व[ स्य ] जगतः शं सुखमस्माद्भवतीति **विश्वशंभुः** ( भूः ) तादृशम् । उक्ते सहस्रशीर्षे विराड्रूपे देहेऽवस्थितस्य महेश्वरस्य निजस्वरूपं द्वितीयार्धेनोच्यते । **विश्वं** जगदात्मकम्, आरोपितस्य जगतोऽधिष्ठानव्यतिरेकेण वास्तवरूपाभावात् ।

नारायणशब्दस्य निर्वचनं पुराणेषु दर्शितम्—

"आपो नारा इति प्रोक्ता आपो वै नरसूनवः ।
अयनं तस्य ताः पूर्वं तेन नारायणः स्मृतः" इति ॥

जगत्कारणेषु पञ्चभूतेष्ववस्थितमित्यर्थः । स एवेन्द्रमित्रादिरूपेणावस्थितत्वाद्देव इत्युच्यते। तथा च शाखान्तरे मन्त्र आम्नातः—"इन्द्रं मित्रं वरुणमग्निमाहुः" इति । न क्षर[ती]ति, अश्रुत इति वा तस्याक्षरत्वम् । कारणत्वेनोत्कर्षात्परमत्वम् । पुनः कथंभूतम् । [पदं] पद्यते ज्ञानिभिः प्राप्यते लक्ष्यत इति पदम् ।

द्वितीयामृचमाह—

विश्वतः परमान्नित्यं विश्वं नारायणꣳ हरिम् ।
विश्वमेवेदं पुरुषस्तद्विश्वमुपजीवति, इति ।

**विश्वतो** जगतो जडवर्गात्परमाद्विभक्तिव्यत्ययः । परममुत्कृष्टम् । ऋग्भेदेन पुनरुक्तिपरिहारो द्रष्टव्यः । स्तुतिरूपत्वादनेन प्रकारेण ध्यातव्यत्वाच्च नास्ति पुनरुक्तिदोषः । विनाशरहितत्वाच्च नित्यत्वम् । [*सर्वात्मकत्वाद्विश्वत्वम् । नारायणत्वं

* त्रुटितोऽयमेतच्चिह्नान्तर्गतो ग्रन्थश्चतुःषष्ट्यनुवाकपाठानुरोधिभाष्यात्संगृहीतः । प्रकृतग्रन्थस्य तत्रात्र चैक्यात् ।

[illegible] । [illegible] यदिदं विश्वमिदानीमज्ञानदृष्ट्या प्रदृश्यते तत्सर्वं वस्तु तत्त्वदृष्ट्या पुरुषः परमात्मैव । स च परमात्मा तद्विश्वमुपजी-वाति, स्वस्य व्यवहारनिर्वाहार्थमाश्रयाति ।

तृतीया[मृच]माह—

> पतिं विश्वस्याऽऽत्मेश्वरꣳ शाश्वतꣳ शिवमच्युतम् ।
> नारायणं महाज्ञेयं विश्वात्मानं परायणम्, इति ।

**विश्वस्य** जगतः पालकत्वात्**पतिम्** । आत्मनां जीवानां नियामकत्वादीश्वरम् । निरन्तरं वर्तमानत्वाच्छा**श्वतम्** । परमङ्गलत्वाच्छि**वम्** । [ न च्यवत इत्यच्युतम् । ] नारायणत्वं पूर्वमुक्तम् । ज्ञेयेषु तत्त्वेषु मध्ये प्रौढत्वान्**महाज्ञेयम्** । जगदुपादानत्वेन तदभेदाद्विश्वात्मत्वम् । उत्कृष्टाधारत्वात्**परायणत्वम्** । सर्वमाप्यारोपितं जगदधिष्ठाने वर्तते ।

चतुर्थीमृचमाह—

> नारायण परो ज्योतिरात्मा नारायणः परः ।
> नारायण परं ब्रह्मतत्त्वं नारायणः परः ॥
> नारायण परो ध्याता ध्यानं नारायणः परः, इति ।

**पुराणेषु** नारायणशब्देन व्यवह्रियमाणो यः परमेश्वरः स एव **परमुत्कृष्टं** सत्य-ज्ञानादिवाक्यप्रतिपादितस्य ब्रह्मणस्तत्त्वम् । अतो **नारायणः पर** एवाऽऽत्मा न त्वपरा मूर्तिविशेषः । तथा **परो ज्योति**र्यदेतदुत्कृष्टं ज्योतिश्छन्दोगैः परं ज्योतिरु-पसंपद्येत्याम्नातं तदपि **नारायण** एव । तस्मान्नारायणः परमात्मा । पुनरपि नारा-यणस्य सर्वात्मकत्वमुच्यते । **नारायणः** । छान्दसत्वात्सर्वत्र विसर्गलोपः । *पर-ब्रह्म वेदान्तवेद्यं चिद्वस्तुतत्त्वमबाधितं यथार्थवस्तु, **परः** सर्वोत्कृष्टो जाड्यादिगुण-व्यतिरिक्तः । ध्याता वेदान्ताधिकारी । **ध्यानं** प्रत्यगात्मगोचरो वृत्तिविशेषः । **परः** पापिनां शत्रुः । एवंविधो **नारायणो** ध्येय इत्यर्थः ।

पञ्चमी[मृच]माह—

> यच्च किंचिज्जगत्सर्वं दृश्यते श्रूयतेऽपि वा ( १ ) ।
> अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः, इति ।

अस्मिन्वर्तमाने जगति यत्किंचित्समीपवर्ति वस्तुजातं **दृश्यते**ऽपि वा दूरस्थं

---

* एतदादि यथार्थवस्त्वित्यन्तं नारायणशब्दार्थस्य स्पष्टीकरणम् ।

यते तत्सर्वं वस्तुजातमयं नारायणोऽन्तर्बहिश्च व्याप्यावस्थितः । यथा कटकमुकुटाद्याभरणस्योपादानकारणं सुवर्णमन्तर्बहिर्व्याप्यावतिष्ठते तद्वत् ।

षष्ठी[मृचमाह]—

अनन्तमव्ययं कवि॰ समुद्रेऽन्तं विश्वशंभुवम् ।
पद्मकोशप्रतीकाश॰ हृदयं चाप्यधोमुखम्, इति ।

अत्र पूर्वार्धेन नारायणस्य वास्तवरूपं संक्षिप्योपन्यस्यते । अनन्तं देशपरिच्छेदरहितम् । अव्ययं विनाशरहितम् । कविं चिद्रूपेण सर्वज्ञम् । समुद्रेऽतिबहुलत्वेन समुद्रसदृशे संसारेऽन्तमवसानरूपम् । यदा नारायणस्य स्वरूपं जानाति तदैव संसारः क्षीयत इत्यर्थः । विश्वशंभुवं विश्वस्य संसार[सुख]स्योत्पत्तिकारणरूपम् । "एतस्यैवाऽऽनन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति" इति श्रुत्यन्तरात् । ईदृशं नारायणरूपमि(मु)[पासीते]ति शेषः । उत्तरार्धेनोपासनस्थानमुच्यते । पद्मकोशप्रतीकाशं यथाऽष्टदलकमलस्य कोशो मध्यच्छिद्रं तत्सदृशं, तच्च हृदयशब्दवाच्यम् । लौकिकं पद्ममूर्ध्वाभिमुखं हृदयपद्मं त्वधोमुखमिति [वि]शेषः ।

सप्तमीमृचमाह—

अधो निष्ट्या वितस्त्यान्ते नाभ्यामुपरि तिष्ठति ।
ज्वालमालाकुलं भाती विश्वस्याऽऽयतनं महत्, इति ।

निष्टिर्ग्रीवाबन्धस्तस्या अधस्ताद्वर्तते । तत्रापि नाभ्यामुपरि नाभिदेशस्योर्ध्वभागे वितस्त्यान्ते द्वादशाङ्गुलपरिमिता वितस्तिः, [ तस्या अन्तेऽवसानभूत ] एवंविधप्रदेशे पूर्वोक्तं यद्धृदयपुण्डरीकं [तिष्ठति] वर्तते, तत्र महत्परब्रह्म भाति । दीर्घश्छान्दसः । कथंभूतम् । विश्वस्य ब्रह्माण्डस्याऽऽयतनमाधार[भूत]म् । ज्वाला*मालाभिः प्रकाशपरम्पराभिराकुलं युक्तम् ।

अष्टमीमृचमाह—

संतत॰ शिलाभिस्तु लम्बत्याकोशसंनिभम् ।
तस्यान्ते सुषिर॰ सूक्ष्मं तस्मिन्त्सर्वं प्रतिष्ठितम्, इति ।

आकोशः पद्ममुकुलं तत्संनिभं तत्सदृशं हृदयकमलं लम्बति हृदय(शरीर)मध्येऽधोमुखत्वेन लम्बते । तच्च शिराभिर्नाडीभिः [संततं] परितः सम्यग्व्याप्तम् । "शतं चैका च हृदयस्य नाड्यः" इति श्रुत्यन्तरात् । तस्य हृदयस्यान्ते समीपे सूक्ष्मं सुषिरं छिद्रं सुषुम्नानाडीनालं तिष्ठति । तस्मिन्सुषिरे सर्वमिदं जगत्प्रतिष्ठितम् श्रितम् । तत्र मनसि प्रविष्टे सति सर्वजगदाधारस्य ब्रह्मणोऽभि[व्यक्त्य]मानत्वात् ।

---

* मूले छान्दसत्वाद्धस्व इति भावः ।

नवमीमृच]माह—

तस्य मध्ये महानग्निर्विश्वार्चिर्विश्वतोमुखः ।
सोऽग्रभुग्विभजन्तिष्ठन्नाहारमजरः कविः ।
तिर्यगूर्ध्वमधःशायी रश्मयस्तस्य संतता, इति ।

तस्य सुषुम्नानालस्य मध्ये महान्प्रौढोऽग्निर्वर्तते। स च विश्वार्चिर्बहुलज्वालोपेतः । अत एव ज्वालाविशेषैः परितोऽवस्थितासु [ सर्वासु नाडीषु ] संसरणाद्विश्वतोमुखो बहुविधमुखः । सोऽग्निरग्रभुक् । स्वस्य पुरतः प्राप्तमन्नं भुङ्क्त इत्यग्रभुक् । स च भुक्तमाहारं शरीरे सर्वावयवेषु विभजन्प्रसारयंस्तिष्ठन्नवतिष्ठत इत्यर्थः । तथा च भगवतोक्तम्—

"अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः ।
प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधम्" इति ।

तस्मादुक्तमन्नमसौ जरयति न तु स्वयं जीर्यत इत्यजरः । अत एव कविरभिज्ञः कुशल इत्यर्थः । किंच तस्याग्ने रश्मयः किरणास्तिर्यगूर्ध्वमधः शेरत इति [तिर्यगूर्ध्वमधःशायी] वचनव्यत्ययः । संतता सर्वतो व्याप्ताः ।

दशमी[मृच ]माह—

संतापयति स्वं देहमापादतलमस्तकः+ ।
तस्य मध्ये वह्निशिखा अणीयोर्ध्वा व्यवस्थितः, इति ।

[ आपादतलमस्तकं ] पादतलमारभ्य मस्तकपर्यन्तम् । वर्णव्यत्ययः । कृत्स्नमपि स्वकीयं देहं सर्वदा संतापयति । सोऽयं शरीरगतः संतापोऽग्निसद्भावे लिङ्गम् । तस्य ज्वालाविशेषैः कृत्स्नदेहव्यापिनोऽग्नेर्मध्ये वह्निशिखा काचिज्ज्वालाऽणीयाऽत्यन्तसूक्ष्मोर्ध्वा सुषुम्नानाडीनालेनोर्ध्वं ब्रह्मरन्ध्रपर्यन्तं प्रसृत्य व्यवस्थितो विशेषेणावस्थिता ।

एकादशीमृचमाह —

नीलतोयदमध्यस्थाद्विद्युल्लेखेव भास्वरा ।
नीवारशूकवत्तन्वी पीता भास्वत्यणूपमा, इति ।

तोयमुदकं ददातीति तोयदो मेघः । स च वर्षितुं जलपूर्णत्वान्नीलवर्णस्तादृशस्य मेघस्य मध्ये स्थिता विद्युल्लेखेव सेयं पूर्वोक्ताऽग्निशिखा भास्वरा । प्रभावती, नीवारबीजस्य शूकं दीर्घपुच्छं यथा तनु भवति तद्वदियं शिखा तन्वी सूक्ष्मा, बहिः (बाह्य)-

---

+ मकारपाठोऽपि वैदिकेषु प्रसिद्धः ।

(वह्नि) शिखेव पीता पीतवर्णा स्यात्, [भास्वती] दीप्तियुक्ता भवेत्, सा च तन्वी (चाणूपमा) * लौकिकानां तनूनां सूक्ष्मवस्तूनामुपमा भवितुं योग्या ।

द्वादशीमृचमाह—

**तस्याः शिखाया मध्ये परमात्मा व्यवस्थितः ।**

**स ब्रह्म स शिवः स हरिः सेन्द्रः सोऽक्षरः परमः स्वराट् (२),** इति ।

**अपि वा संतता पट्टूचं ।**

**इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यकदशमप्रपाठके नारायणोपनिषदि त्रयोदशोऽनुवाकः ॥ १३+ ॥**

**तस्याः** पूर्वोक्ताया वह्निशिखाया **मध्ये** जगत्कारणभूतः **परमात्मा** विशेषेणाव-स्थितः । तस्योपासनार्थमल्पस्थानत्वेऽपि न स्वयमल्पः किंतु सर्वदेवात्मकः । **ब्रह्मा** चतुर्मुखः । **शिवो** गौरीपतिः । **हरि**रिन्दिरापतिः । **इन्द्रः** स्वर्गाधिपतिः । **अक्षरो** जगद्धेतुर्मायाविशिष्टोऽन्तर्यामी । " क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते " इति भगवतोक्तत्वात् । **परमो** मायारहितः शुद्धश्चिद्रूपः । अत एव पारतन्त्र्याभावात्स्व-राट्स्वयमेव राजा । सहस्रशीर्षमित्यादिवाक्यप्रतिपादितं पद्मकोशप्रतीकाशमित्यादिवा-क्योक्तप्रकारेण ध्यायेदिति तात्पर्यार्थः ।

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके दशमप्रपाठके नारायणीयापरनामधेययुक्तायां याज्ञिक्यामुपनिषदि भाष्ये त्रयोदशोऽनुवाकः ॥ १३ ॥

अथ चतुर्दशोऽनुवाकः ।

इदानीमादित्यमण्डले परब्रह्मण उपासनामाह —

**आदित्यो वा एष एतन्मण्डलं तपति तत्र ता ऋचस्तदृचा मण्डलꣳ स ऋचां लोकोऽथ य एष एतस्मिन्मण्डलेऽर्चि-र्दीप्यते तानि सामानि स साम्नां लोकोऽथ य एष एत-स्मिन्मण्डलेऽर्चिषि पुरुषस्तानि यजूꣳषि स यजुषा मण्ड-लꣳ स यजुषां लोकः सैषा त्रय्येव विद्या तपति य**

* लौकिकानामणूनामिति युक्तं पठितुम् । + अत्र घ. पुस्तके ( ३० ) अङ्को वर्तते ।

१ ङ. °वाक्ये प्र° ।

एषोऽन्तरादित्ये हिरण्मयः पुरुषः, इति ।

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यकदशमप्रपाठके नारायणोपनिषदि चतुर्दशोऽनुवाकः[1] ॥ १४ ॥

नारायणशब्दवाच्यो यः परमेश्वरः पूर्वानुवाकेऽभिहितः स **एष आदित्यो वै** सोपाधिकः सन्नादित्यरूपेणैव वर्तते । तस्य चाऽऽदित्य**स्यैतदस्माभिर्दृश्यमानं मण्डलं** वर्तुलाकारमुष्णं तेजस्तपति संतापं **करोति** । **तत्र** तस्मिन्मण्डले **ता** अध्यापकप्रसिद्धा अग्निमीळ इत्यादिका **ऋचो** वर्तन्ते **तत्त**स्मात्कारणान्**मण्डलमृचा** निष्पादितमित्यर्थः । (ति शेषः) । **स** मण्डलभाग ऋग्भिर्निष्पादित ऋचामृगभिमानिदेवानां **लोको** निवासस्थानम् । एवमृगात्मकत्वं मण्डलस्य ध्यात्वाऽथानन्तरं सामात्मकत्वं तत्र ध्यातव्यम् कथमिति, उच्यते । **एतस्मिन्मण्डले य एष** तदेत**दर्चिर्दीप्यते** भास्वरं तेजः प्रकाशते तान्यर्चिःस्वरूपाणि बृहद्रथंतरादि**सामानीति** ध्यायेत् । **सोऽर्चिर्भागः साम्नां** सामाभिमानिदेवानां[2] **लोको** निवासस्थानम् । **अथ** सामध्यानानन्तरं यजुरात्मकत्वं ध्यातव्यम् । कथमित्युच्यते । **य एष** शास्त्रे प्रसिद्ध **एतस्मिन्दृश्यमाने मण्डले** तदीयेऽर्चिषि[च] **पुरुषो** देवतात्मा वर्तते **तानि** देवतारूपाणि **यजूंषी**षे त्वेत्यादीनि [ध्यायेत् । **स** यजुरात्मकः पुरुषो **यजुषा** निष्पादितं **मण्डलमिति** ध्येयः । **स**] यजुर्भागो **यजुषां** यजुरभिमानिदेवतानां **लोको** निवासस्थानम् । **सैषा** मण्डलतदर्चिस्तत्रत्यपुरुषरूपा **त्रय्येव**र्ग्यजुःसामात्मिकैव **विद्या तपात** प्रकाशते । **यः पुरुषो**ऽत्राभिहित **एषोऽन्तरादित्य** आदित्यमण्डलमध्ये **हिरण्मयो** विद्यते । हिरण्मयत्वं शाखान्तरे प्रपञ्चितम—" अथ य एषोऽन्तरादित्ये हिरण्मयः पुरुषो **दृश्यते** हिरण्यश्मश्रुर्हिरण्यकेश आप्रणखात्सर्व एव सुवर्णः " इति ।

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यकदशमप्रपाठके नारायणीयापरनामधेययुक्तायां याज्ञिक्यामुपनिषदि भाष्ये चतुर्दशोऽनुवाकः ॥ १४ ॥

=====

अथ पञ्चदशोऽनुवाकः ।

---

पूर्वोक्तस्यैवाऽऽदित्यपुरुषस्य सर्वात्मकत्वलक्षणमवशिष्टमुपास्यगुणं दर्शयति—

**आदित्यो वै तेज ओजो बलं यशश्चक्षुः श्रोत्रमात्मा**
**मनो मन्युर्मनुर्मृत्युः सत्यो मित्रो वायुराकाशः प्राणो**
**लोकपालः कः किं कं तत्सत्यमन्नममृतो जीवो**

---

१ ग. ॥ ३ ॥ । २ छ °देवनानां ।

**विश्वः कतमः स्वयंभु ब्रह्मैतदमृत एष पुरुष एष भूता-नामधिपतिर्ब्रह्मणः सायुज्यꣳ सलोकतामाप्नोत्येतासा-मेव देवतानाꣳ सायुज्यꣳ सार्ष्टिताꣳ समानलोकता-माप्नोति य एवं वेदेत्युपनिषत्,** इति ।

**इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके दशमप्रपाठके नारायणोपनिषदि पञ्चदशोऽनुवाकः ॥ १५* ॥**

योऽयमुपास्यत्वेनोक्त **आदित्यः** स एव सर्वात्मकत्वात्ते(कः । ते)**जो** दीप्तिः । **ओजो** बलकारणम् । **बलं** शरीरशक्तिः । **यशः** कीर्तिः । **चक्षुः श्रोत्र**मिन्द्रिय-[द्वय]म् । **आत्मा** देहः । **मनो**ऽन्तःकरणम् । **मन्युः** कोपः । **मनु**र्वैवस्व-तादिः । **मृत्यु**र्यमः । **सत्यो मित्रो** देवविशेषौ । **वायुराकाशो** भूतविशेषौ । **प्राणः** पञ्चवृत्तिः । **लोकपाल** इन्द्रादिः । **कः** प्रजापतिः । **कि**मनिर्वचनीयम् । **कं** सुखम् । **तत्**परोक्षम् । । **सत्यं** यथार्थभाषणम् । **अन्न**मोदनादि । **अमृतो** देवसमु-दायो मोक्षो वा । **जीवः** समस्तजीवकोटिः । **विश्वः** सर्वं जगद्विश्वतैजसादिर्वा । **कतमो**ऽ-त्यन्तं सुखम् । **स्वयंभू**त्पत्त्यादिवर्जितं **ब्रह्म** । **एत**त्सर्वमादित्य एवेत्यर्थः । किंचा**मृतो** नित्य **एष** आदित्यः **पुरुषः** पूर्णत्वात् । **एष** आदित्यः सर्वेषां **भूतानामधिपतिः** प्रभुः । इतः परमेतत्परिज्ञातुः फलमाह—**यः** पुमानेवमुक्तप्रकारेण **वेद**ोपास्ते स पुमान्सायुज्यादिफलं प्राप्नोति । द्विविधमुपासनं हिरण्यगर्भोपासनं तदवयवभूतदेवतो-पासनं चेति । तत्र हिरण्यगर्भोपासनाद्भावनाधिक्ये सति **ब्रह्मणो** हिरण्यगर्भस्य **सायुज्यं** सहभावं तादात्म्यं प्राप्नोति । भावनामान्द्ये **सलोकतां** हिरण्यगर्भेण सहैकलोकनिवासं प्राप्नोति । देवतोपास्तावपि भावनाधिक्ये सत्ये**तासामेव** भूरा(वेन्द्रा)दीनां **देवतानां सायुज्यं** प्राप्नोति । भावनायां मध्य[म]त्वे सति **सार्ष्टितां** समानैश्वर्यतां प्राप्नोति । मान्द्ये तु **समानलोकतां** प्राप्नोति । +उत्तरमन्त्रजपविवक्षयोपास्तिप्रकारमुपसंहरति । **इत्येवं** पूर्वोक्तैरनुवाकैरुक्तोप**निषद्**रहस्यभूता विद्या समाप्तेति शेषः ।

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यकदशमप्रपाठके नारायणीयापरनामधेययुक्तायां याज्ञिक्यामुपनिषदि भाष्ये पञ्चदशोऽनुवाकः ॥ १९ ॥

====

* अत्र घ. पुस्तके(३२) अङ्को वर्तते । + उत्तरत्र जपविवक्षयेति, जपशब्दवर्जितं वा, पठितुं युक्तम् ।

१ ङ. °व भूग( भूत ? )री° ।

अथ षोडशोऽनुवाकः ।

इतः परं नूतनशिवालयादिकं कृत्वा तत्र लिङ्गप्रतिष्ठापनावसरे प्रत्यहं पार्थिवलिङ्गप्रतिष्ठापनावसरे च विनियुक्ता जपमात्रेण पापक्षयार्थाश्च पार्वतीपतिर्नमस्कारार्था मन्त्रा उच्यन्ते । "सर्वलिङ्गꣳ स्थापयति" "पवित्रम्" इति च मन्त्रलिङ्गात् । [तत्पाठस्तु]-

निधनपतये नमः । निधनपतान्तिकाय नमः । ऊर्ध्वाय नमः । ऊर्ध्वलिङ्गाय नमः । हिरण्याय नमः । हिरण्यलिङ्गाय नमः । सुवर्णाय नमः । सुवर्णलिङ्गाय नमः । दिव्याय नमः । दिव्यलिङ्गाय नमः । भवाय नमः । भवलिङ्गाय नमः । शर्वाय नमः । शर्वलिङ्गाय नमः । शिवाय नमः । शिवलिङ्गाय नमः । ज्वलाय नमः । ज्वललिङ्गाय नमः । आत्माय नमः । आत्मलिङ्गाय नमः । परमाय नमः । परमलिङ्गाय नमः । एतत्सोमस्य सूर्यस्य सर्वलिङ्गꣳ स्थापयति पाणिमन्त्रं पवित्रम्, इति ।

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके दशमप्रपाठके नारायणोपनिषदि षोडशोऽनुवाकः ॥ १६ ॥

पार्वतीपतये नमोऽस्तु । कथंभूताय । नितरां बहूनि धनानि निधनानि तेषां पतिः कुबेररूपेण तस्मै । निधनानि पातीति निधनपः । भक्तेभ्यस्तनोति विस्तारयतीति तः । निधनपश्चासौ तश्चेति निधनपतः । भक्तानां समीपत्वादान्तिकः । स चासौ स चेति पुनः कर्मधारयः, तस्मै । ऊर्ध्वायोर्ध्वलोकेषु देवतारूपेण विद्यमानायेत्यर्थः । ऊर्ध्वलिङ्गायोर्ध्वलोकेष्वपि गीर्वाणैर्लिङ्गरूपेण स्थापयित्वा पूज्यमानायेत्यर्थः । हिरण्याय सर्वात्मकत्वात्कनकरूपाय । हिरण्यलिङ्गाय कनकनिर्मितलिङ्गाकाराय । शोभनो वर्णः कान्तिर्यस्य तत्सुवर्णं रजतं [तद्रूपाय] । हिरण्यस्योक्तत्वात्सुवर्णशब्दो रूढिमुत्सृज्य योगेन रजतं वदति । सुवर्णलिङ्गाय रजतनिर्मितलिङ्गाकाराय । दिव्याय द्युलोकस्वरूपाय । दिव्यलिङ्गायेन्द्रादिसंस्थापितद्युलोकस्थलिङ्गाकाराय । भवाय संसाररूपाय, भवत्युत्पद्यते ब्रह्माण्डं यस्मादिति वा भवस्तस्मै । भवलिङ्गाय भवशब्देन भवन्तः संसारिणो लक्ष्यन्ते, तैर्भूलोके पूज्यमानशिलामयादिलिङ्गाकाराय । शृणाति प्रलये ब्रह्माण्डं हिनस्तीति शर्वस्तस्मै । शं महत्सुखं वाति गच्छति प्राप्नोतीति शर्वः,

१ ङ. रार्थं म° । २ घ. ॥ २० ॥

शर्वरूपं च तल्लिङ्गं शिवलिङ्गपूजनस्य कल्याणकारित्वात्* । ज्वलाय ज्योतिर्मयत्वात् । ज्वललिङ्गाय भूलोके विद्यमानद्वादशज्योतिर्लिङ्गरूपाय । आत्माय निखिलजगदात्मकाय । लीनं सुरनरादिसर्वप्राणिगुहासु गोपितं ब्रह्म वेदान्तरूपेण गमयति विज्ञापयतीति लिङ्ग आत्मा सर्वजन्तुरूपश्चा ( पः, स चा )सौ लिङ्गश्चेत्यात्मरूप( लिङ्ग )स्तस्मै । यस्मादुत्कृष्टो नास्ति स परमस्तस्मै । पाति जगदिति पः । रमते मोक्षसाम्राज्य इति रमः । स चेति कर्मधारयः । लीनं विलीनमपि सर्वज्ञत्वाद्गच्छत्यवगच्छति जानातीति लिङ्गः । परमश्चासौ लिङ्गश्चेति परमलिङ्गस्तस्मै **परमलिङ्गाय नमः** + । **एतत्** । वचनविभक्तिव्यत्ययः । **एतैः** पूर्वोक्तैर्मन्त्रैः **सर्वलिङ्गं** रससुवर्णाद्यन्यतर( म )निर्मितं लिङ्गमात्रं **स्थापयति** सर्वोऽपि त्रैवर्णिको [लो]कः प्रतिष्ठापयति । लिङ्गं कथंभूतम् । **सोमस्य सूर्यस्य,** औपलक्षण्येन समस्तदेवतानां कारणभूतमिति शेषः । पाण्युपलक्षितसर्वावयवायमाना मन्त्रा वेदवाक्यविशेषा यस्य तत्**पाणिमन्त्रम्**, त्रयीमयशरीरमिति यावत् । पवित्रयति पापिनः स्मरणमात्रेणेति **पवित्रम्** ।

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यकदशमप्रपाठके नारायणीयापरनामधेययुक्तायां याज्ञिक्यामुपनिषदि भाष्ये षोडशोऽनुवाकः ॥ १६ ॥

अथ सप्तदशोऽनुवाकः ।

अथ त्रैवर्णिकानां शास्त्राधिकारिणां ज्ञानोत्पादनाय महादेवसंबन्धिषु पञ्च[सु] वक्त्रेषु मध्ये पश्चिमवक्त्रप्रतिपादकमन्त्रमाह—

**सद्योजातं प्रपद्यामि सद्योजाताय वै नमो नमः । भवे भवे नातिभवे भवस्व माम् । भवोद्भवाय नमः, इति ।**

**इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके दशमप्रपाठके नारायणोपनिषदि सप्तदशोऽनुवाकः ॥ १७ ॥**

**सद्योजात**नामकं यत्पश्चिमवक्त्रं तद्रूपं परमेश्वरं **प्रपद्यामि** प्राप्नोमि । तादृशाय **सद्योजाताय वै नमो**=ऽस्तु । हे सद्योजात **भवे भवे** तत्तज्जन्मनिमित्तं **मां न भवस्व**

*एतदग्रे " तद्रूपाय । शिवाय मङ्गलरूपाय । शिवलिङ्गाय कल्याणज्ञापकाय ।" इति पठितुं युक्तम् । +नमःशब्दावृत्तिः प्रत्येकं सबन्धसूचनार्थेति युक्तं पठितुम् । = अत्र पुनः पुनर्नमोऽस्त्विति युक्तम् ।

न प्रेरयेत्यर्थः किं तर्ह्यतिभवे जन्मातिलङ्घननिमित्तं भवस्व तत्त्वज्ञानाय प्रेरय। भवोद्भवाय संसारादुद्धर्त्रे सद्योजाताय नमोऽस्तु।

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यकदशमप्रपाठके नारायणोपनिषदि भाष्ये सप्तदशोऽनुवाकः ॥ १७ ॥

अथाष्टादशोऽनुवाकः।

उत्तरवक्त्रप्रतिपादकमन्त्रमाह—

वामदेवाय नमो ज्येष्ठाय नमः श्रेष्ठाय नमो रुद्राय नमः कालाय नमः कलविकरणाय नमो बलविकरणाय नमो बलाय नमो बलप्रमथनाय नमः सर्वभूतदमनाय नमो मनोन्मनाय नमः, इति।

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके दशमप्रपाठके नारायणोपनिषद्यष्टादशोऽनुवाकः ॥ १८ ॥

उत्तरवक्त्राय नमोऽस्तु। कथंभूताय। वामं सुन्दरं च तद्देवं दीप्यमानं चेति वामदेवं तस्मै। सर्वजगदुत्पत्तेः पूर्वभावित्वाज्ज्येष्ठाय। प्रशस्ततमत्वाच्छ्रेष्ठाय। प्रलये रोदनहेतुत्वाद्रुद्राय। अत एव सर्वप्राण्यायुःक्षयहेतुत्वात्कालाय। कं सुखं लाति स्वी करोतीति कलं विविधं जगत्क्रियते येनेति विकरणं कलं च तद्विकरणं चेति कलविकरणं तस्मै। रक्षसां बलं विकीर्यते हिंस्यते येन तद्बलविकरणं तस्मै। *सर्वाणि भूतानि दमयति शिक्षयतीति सर्वभूतदमनं तस्मै। मन्यते सर्वं जानातीति मनं सर्वज्ञमुत्कृष्टं मनमुन्मनं सर्वज्ञतमं मनं च तदुन्मनं च[मनोन्मनं] तस्मै।

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यकदशमप्रपाठके नारायणोपनिषदि भाष्येऽष्टादशोऽनुवाकः ॥ १८ ॥

अथैकोनविंशोऽनुवाकः।

दक्षिणवक्त्रप्रतिपादकं मन्त्रमाह—

अघोरेभ्योऽथ घोरेभ्यो घोरघोरतरेभ्यः।

---

* अत्र बलाय बलप्रमथनायेति पदद्वयं त्रुटितम्। तव्द्याख्यानं च "बलाय सकलशक्तिप्रभवत्वात्तद्रूपाय। बलप्रमथनाय स्वेच्छया सकलशक्त्युपसंहारकाय।" इत्यादि स्यात्।

सर्वेभ्यः सर्व शर्वेभ्यो नमस्ते अस्तु रुद्ररूपेभ्यः, इति ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके दशमप्रपाठके नारायणोपनिषद्ये-
कोनविंशोऽनुवाकः ॥ १९ ॥

अघोरनामको दक्षिणवक्त्ररूपो [ यो ] देवस्तस्य विग्रहा अघोराः सात्त्विकत्वेन शान्ताः सौम्याः । अन्ये तु घोरा राजसत्वेनोग्राः । अपरे तु तामसत्वेन घोरादपि [घोरा] घोरतराः । हे *सर्व परमेश्वर ते त्वदीयेभ्यः पूर्वोक्तेभ्यस्त्रिविधेभ्यः स(श)र्वेभ्यो [लयकाले शृणन्ति हिंसन्ति तेभ्यो] रुद्ररूपेभ्यः सर्वतः (सर्वेभ्यः) सर्वेषु देशेषु सर्वेषु च कालेषु नमोऽस्तु ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यकदशमप्रपाठके नारायणीयापरनामधेययुक्तायां याज्ञिक्यामुपनिषदि भाष्य एकोनविंशोऽनुवाकः ॥ १९ ॥

अथ विंशोऽनुवाकः ।

प्राग्वक्त्रप्रतिपादकं मन्त्रमाह—

तत्पुरुषाय विद्महे महादेवाय धीमहि ।
तन्नो रुद्रः प्रचोदयात्, इति ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके दशमप्रपाठके नारायणोपनिषदि
विंशोऽनुवाकः ॥ २० ॥

प्राग्वक्त्रदेवस्तत्पुरुषनामकः । द्वितीयार्थे चतुर्थी । तत्पुरुषं देवं विद्महे गुरुशास्त्रमुखाज्जानीमः । ज्ञात्वा च महादेवाय तं महादेवं धीमहि ध्यायामि(म) । त [त्त]स्मात्कारणाद्रुद्रदेवो नोऽस्मान्प्रचोदयात्, ध्यानज्ञानार्थं प्रचोदयतु ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यकदशमप्रपाठके नारायणीयापरनामधेययुक्तायां याज्ञिक्यामुपनिषदि भाष्ये विंशोऽनुवाकः ॥ २० ॥

अथैकविंशोऽनुवाकः ।

ऊर्ध्ववक्त्रप्रतिपादकं मन्त्रमाह—

ईशानः सर्वविद्यानामीश्वरः सर्वभूतानां ब्रह्माधिपतिर्ब्र-

* तत्सृष्ट्वा तदेवानुप्राविशदिति श्रुत्या सर्वान्तर्यामित्वेन परमेश्वरस्य युक्तमेव सर्वरूपत्वम् ।

१ घ. ३६ । २ घ. ३७ ।

ब्रह्मणोधिपतिर्ब्रह्मा शिवो मे अस्तु सदाशिवोम्, इति ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके दशमप्रपाठके नारायणोपनिषद्ये-
कविंशोऽनुवाकः ॥ २१ ॥

योऽयमूर्ध्ववक्त्रो देवः सोऽयं सर्वविद्यानामीशानो नियामकः । तथा सर्वभूतानामखिलप्राणिनामीश्वरो नियामकः । ब्रह्माधिपतिर्वेदस्याधिकत्वेन पालकः । तथा ब्रह्मणो हिरण्यगर्भस्याधिपतिः तादृशो यो ब्रह्मा प्रवृद्धः परमात्मा सोऽयं मे ममानुग्रहाय शिवः शान्तोऽस्तु । सदाशिवोम्, स एव सदाशिव ओमहं भवामि ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यकदशमप्रपाठके नारायणीयापरनामधेय-
युक्तायां याज्ञिक्यामुपनिषदि भाष्य एकविंशोऽनुवाकः ॥ २१ ॥

====

अथ द्वाविंशोऽनुवाकः ।

---

पुनरपि तद्देवताकं मन्त्रान्तरमाह—

नमो हिरण्यबाहवे हिरण्यवर्णाय हिरण्यरूपाय हिरण्यपतयेऽ-
म्बिकापतय उमापतये पशुपतये नमो नमः, इति ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके दशमप्रपाठके नारायणोप-
निषदि द्वाविंशोऽनुवाकः ॥ २२ ॥

नमः शिवाय । कथंभूताय पशूनामाब्रह्मस्तम्बपर्यन्तानां पतिर्नायकः पशुपतिस्तस्मै ।

"ब्रह्माद्याः स्तम्बपर्यन्ताः पशवः परिकीर्तिताः ।
तेषां हि नायको यस्माच्छिवः पशुपतिः स्मृतः "॥

[ इत्युक्तत्वात् ] उमायाः पतिरुमापतिस्तस्मै । उमाशब्दः कविभिर्व्याख्यातः—"उमेति मात्रा तपसे निषिद्धा पश्चादुमाख्यां सुमुखी जगाम " इति । अम्बिकायाः पार्वत्याः पतिरम्बिकापतिस्तस्मै । हिरण्योपलक्षितनवनिधिपालकत्वाद्धिरण्यपतिस्तस्मै । हिरण्यरूपाय तेजोमयाय । हिरण्यवदनवाप्या दुर्लभा वर्णा वेदाक्षराणि यस्मादुत्पद्यन्ते स हिरण्यवर्णः । यथा दरिद्राणां हिरण्यं दुर्लभं तद्वत्प्राणिनां गुरुकुले स्थित्वा वेदाक्षराणां दुर्लभत्वमिति भावः । हिरण्यबाहवे कनकायमानबाहूपलक्षितसर्वावयवाय नमः+ ॥

इति कृष्णयजुर्वेदीय तैत्तिरीयारण्यकदशमप्रपाठके नारायणीयापरनामधेययुक्तायां
याज्ञिक्यामुपनिषदि भाष्ये द्वाविंशोऽनुवाकः ॥ २२ ॥

---

+ नमःशब्दद्वयं प्रत्येकं संबन्धद्योतनार्थमिति युक्तं पठितुम् ।

---

१ प. ३८ । २ घ. ३ ।

अथ त्रयोविंशोऽनुवाकः ।

पूर्वोक्तप्रकारेणोपासीनस्य पुरुषस्योपास्यनमस्कारार्थमेकामृचमाह—

ऋतꣳ सत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गलम् ।

ऊर्ध्वरेतं विरूपाक्षं विश्वरूपाय वै नमो नमः, इति ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके दशमप्रपाठके नारायणोपनिषदि त्रयोविंशोऽनुवाकः ॥ २३ ॥

यदेतत्परं ब्रह्म तत्सत्यमबाध्यम् । सत्यत्वं च द्विविधं व्यावहारिकं पारमार्थिकं च । हिरण्यगर्भरूपं व्यावहारिकं सत्यं तन्निराकरणेन पारमार्थिकं सत्यं प्रतिपादयितुमृतं सत्यमिति विशेष्यते । अत्यन्तं सत्यमित्यर्थः । तादृशं ब्रह्म भक्तानुग्रहायोमामहेश्वरात्मकपुरुषरूपं भवति । तत्र दक्षिणे महेश्वरभागे कृष्णवर्ण उमाभागे वामे पिङ्गलवर्णः । स च योगेन स्वकीयं रेतो ब्रह्मरन्ध्रे धृत्वोर्ध्वरेता भवति । त्रिनेत्रत्वाद्विरूपाक्षः । तादृशं परमेश्वरमनुश्रुत्येति शेषः । विश्वरूपाय जगत्कारणत्वेन सर्वजगदात्मकाय * विरूपाक्षाय पुरुषायैष नमस्कारोऽस्तु ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यकदशमप्रपाठके नारायणीयापरनामधेययुक्तायां याज्ञिक्यामुपनिषदि भाष्ये त्रयोविंशोऽनुवाकः ॥ २३ ॥

अथ चतुर्विंशोऽनुवाकः ।

रुद्रदेवताकं मन्त्रमाह—

सर्वो वै रुद्रस्तस्मै रुद्राय नमो अस्तु ।

पुरुषो वै रुद्रः सन्महो नमो नमः ।

विश्वं भूतं भुवनं चित्रं बहुधा जातं जायमानं च यत् ।

सर्वो ह्येष रुद्रस्तस्मै रुद्राय नमो अस्तु, इति ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके दशमप्रपाठके नारायणोपनिषदि चतुर्विंशोऽनुवाकः ॥ २४ ॥

यो रुद्रः पार्वतीपतिः पुराणेषु प्रसिद्धः स एव सर्वो जीवरूपेण सर्वशरीरेषु प्रविष्टात् । तस्मै सर्वात्मकाय रुद्राय नमोऽस्तु । प्रकृतिपुरुषयोर्मध्ये जडात्मिका

* इदं पदमधिकम् ।

१ ख. ४० । २ ख. ४१ ।

प्रकृतिमपोह्य चिदात्मकः पुरुषो यो विद्यते स एव भक्तानुग्रहाय रुद्रमूर्तिरूपेणावभासते, तस्माद्य ( द्र ) [ स्तु ] तः सन्महः " सदेव सोम्येदमग्र आसीत् " इति श्रुतिप्रतिपाद्यमबाध्यं रुद्रूपं तेजः । तादृशाय रुद्राय पुनः पुनर्नमस्कारोऽस्तु । यज्जडं विश्वमस्ति यच्च भूतं चेतनं प्राणिजातमस्तीति चेतनाचेतनरूपेण विचित्रं यद्भुवनं जगत्, तत्रापि यज्जगज्जातं पूर्वमेवोत्पन्नं यच्चेदानीं जायमानं स सर्वोऽपि प्रपञ्च एष रुद्रो हि । तद्व्यतिरेकेण वास्तवस्य जगतो निरूपयितुमशक्यत्वात् । तादृशाय सर्वात्मकाय रुद्राय नमस्कारोऽस्तु ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यकदशमप्रपाठके नारायणीयापरनामधेययुक्तायां याज्ञिक्यामुपनिषदि भाष्ये चतुर्विंशोऽनुवाकः ॥ २४ ॥

अथ पञ्चविंशोऽनुवाकः ।

कद्रुद्राय प्रचेतसे मीढुष्टमाय तव्यसे ।

वोचेम शंतमꣳ हृदे ॥

सर्वो ह्येष रुद्रस्तस्मै रुद्राय नमो अस्तु, इति ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके दशमप्रपाठके नारायणोपनिषदि पञ्चविंशोऽनुवाकः ॥ २५ ॥

कद्रुद्रायेति । " कत्थ प्रशंसायाम् " इति धातोरुत्पन्नः कच्छब्दः प्रशंसामाह । ततः कद्रुद्रः प्रशस्तो रुद्रस्तस्मै । प्रचेतसे प्रकृष्टज्ञानयुक्ताय । [मीढुष्टमाय] " मिह सेचने " इति धातुः । अभीष्टानां कामानामतिशयेन सेचकाय । स्तोतुः कामप्रदायेत्यर्थः । तव्यसे, अत्राऽऽदौ सकारस्य च्छान्दसो लोपः । स्तव्याय स्तोतुं योग्यायेत्यर्थः । हृदे हृदयवर्तित्वेन तद्रूपाय, शंतममतिशयेन सुखकरं स्तुतिरूपं वाक्यं वोचेम कथयेम । सर्वो हीति पूर्ववत् ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यकदशमप्रपाठके नारायणीयापरनामधेययुक्तायां याज्ञिक्यामुपनिषदि भाष्ये पञ्चविंशोऽनुवाकः ॥ २५ ॥

अथ षड्विंशोऽनुवाकः ।

अथाग्निहोत्रकर्मणि होमसाधनद्रव्यस्य कारणभूतं वृक्षविशेषं विधत्ते—

यस्य वैकङ्कत्यग्निहोत्रहवणी भवति प्रत्ये-

यास्याऽऽहुतयास्तिष्ठन्त्यथो प्रतिष्ठित्यै, इति ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके दशमप्रपाठके नारायणोपनिषदि षड्विंशोऽनुवाकः ॥ २६ ॥

अग्निहोत्रे हविर्हूयते यया दर्व्या सेयमग्निहोत्रहवणी, सा च वैकङ्कती विकङ्कताख्येन वृक्षेण निष्पादिता यस्याग्निहोत्रिणो भवत्यस्याग्निहोत्रिण आहुतयस्तयाऽग्निहोत्रहवण्या प्रक्षिप्ताः सत्यः प्रतितिष्ठन्त्येव फलप्रदा भवन्त्येव । अथो अपि च प्रतिष्ठित्यै, अनुष्ठातुश्चित्तशुद्धिद्वारा तत्त्वज्ञानप्रतिष्ठार्थं संपद्यन्ते । मुमुक्षोश्चित्तशुद्धिद्वारा वेदोक्तानां कृत्स्नकर्मणां मोक्षसाधनत्वं द्योतयितुमुपलक्षणत्वेन कर्माङ्गभूतो विकङ्कतवृक्षो विहितः ।

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यकदशमप्रपाठके नारायणीयापरनामधेययुक्तायां याज्ञिक्यामुपनिषदि भाष्ये षड्विंशोऽनु[वा]कः ॥ २६ ॥

अथ सप्तविंशोऽनुवाकः ।

चित्तशुद्धिहेतूनां कर्मणां संग्रहेणोपयोगमस्मिन्मोक्षप्रकरणे सूचयित्वा प्रतिबन्धनिवारकान्रक्षोघ्नान्मन्त्राञ्जप्यत्वेनाभिधत्ते —

कृणुष्व पाज इति पञ्च, इति ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके दशमप्रपाठके नारायणोपनिषदि सप्तविंशोऽनुवाकः ॥ २७ ॥

यस्य वैकङ्कत्यग्निहोत्रहवणीत्यनुवाकान्ते कृणुष्व पाज इति पञ्चेति प्रतीकत्वेन पठिताः संहितायां प्रथमकाण्डे द्वितीयप्रपाठके पठिताः पञ्चर्चो [ जपितव्या इति शेषः । ताश्च ] व्याख्यास्यामः । कृणुष्व पाज इति पञ्चानुष्टुप्छन्दस्का वामदेवदृष्टा अग्निदेवताकाः । अस्मिन्नृक्पञ्चके भगवानग्निरभिष्टूयते ।

कृणुष्व पाजः प्रसितिं न पृथ्वीं याहि राजेवामवा इभेन ।
तृष्वीमनु प्रसितिं द्रूणानोऽस्ताऽसि विध्य रक्षसस्तपिष्ठैः ॥

कृणुष्वेति । हेऽग्नेऽस्मदीयकामक्रोधादिशत्रुसंहारार्थं पाजो बलमस्मभ्यं कृणुष्व कुरुष्व तत्र दृष्टान्तः । पृथ्वीं विस्तीर्णां प्रसितिं न प्रसितिमिव जालमिव । नकार उपमार्थः । सीयन्ते बध्यन्ते पक्षिणो यया प्रकर्षेण सा प्रसितिर्जालम् । "षिञ्बन्धने" इति धातुः । यथा पक्षिभक्षका निषादास्तद्बन्धनार्थं जालं विस्तीर्णं प्रसारयन्ति तथा भो भगवन्नग्ने बलं

१ घ. ४३ । २ घ. ४४ ।

प्रसारयेत्यर्थः । ततो राजेव नृप इवामवान्सहायवान्सन्निभेन गजेन तदुपलक्षितचतुरङ्ग-बलेन शत्रून्प्रति याहि गच्छ । अमन्ति भजन्ति स्वामिनमित्यमाः सेवकाः, तद्वानम-वान् । यथा राजा चतुरङ्गबलसहितः सञ्शत्रून्संहर्तुं गच्छति तथा त्वमपि भो भगव-न्नग्नेऽस्मदीयशत्रून्संहर्तुं गच्छेत्यर्थः । त्वं कथंभूतः । तृष्वीं प्रसितिमनु द्रूणानः । अत्र विभक्तिव्यत्ययः । तृष्व्या शीघ्रं संहारसाधनया प्रसित्या शत्रूननु पलायनकाले पश्चा-द्द्रूणानो हिंसयन् । " द्रु हिंसायाम् " इति धातुः । अस्ता । " असु क्षेपे " इति धातुः । बाणानां प्रक्षेपकोऽसि । यस्मादेवं तस्माद्रक्षसो दैतेयांस्तपिष्ठैरतिसंतापहेतुभि-रायुधैर्विध्य ताडय । अस्मिन्मन्त्रे बाह्याभ्यन्तरशत्रुनिवृत्तिरग्निप्रार्थनायाः फलम् ।

तव॑ भ्र॒मास॑ आशु॒या प॑तन्त्य॒नु॑ स्पृश धृष॒ता शोशु॑चानः ।
तपूं॑ष्यग्ने जु॒ह्वा॑ पत॒ङ्गा॑ न संदि॑तो॒ वि सृ॑ज॒ विष्व॑गु॒ल्काः ॥

तवेति । भो भगवन्नग्ने भ्रमासः सर्वत्र प्राणिनः पीडयितुं भ्रमणशीला आशुयाऽहोरा-त्रयोः शीघ्रं यान्तीतस्ततः संचरन्तीत्याशुया । जसो लोपश्छान्दसः । एवंविधा ये पिशाचाः पतन्ति । " पत्लृ गतौ " । इतस्ततो गच्छन्ति । तान्पतङ्गान्पतनशीलान्पिशाचांस्तपूंषि प्रपञ्चतपनशीलानि रक्षांसि च धृषता प्रगल्भेन । " ञिधृषा प्रागल्भ्ये " इति धातुः । तव तेजसेति शेषः । अनुस्पृश दहेत्यर्थः । त्वं कथंभूतः । शोशुचानोऽन्तर्बहिः शत्रून-तिदुःखयन् । यद्वा शोशुचानो देदीप्यमानः । "शुच दीप्तौ" इति धातुः । पुनः कथं-भूतः । जुह्वा स्रुचा हूयमानघृतपुरोडाशादिरूपहविष्या(ष्मा)निति शेषः । पुनः कथंभूतः । "दो अवखण्डने" । राक्षसैः सम्यङ्न दितः खण्डितोऽसंदितः । एवंविधस्त्वं शत्रूणां बाह्यानामान्तराणां च विष्वगुपर्यधस्तिर्यक्सर्वत उल्का अलातज्वाला विसृज प्रसार-येत्यर्थः ।

प्रति॒ स्पशो॒ वि सृ॑ज॒ तूर्णि॑तमो॒ भवा॑ पा॒युर्वि॒शो अ॒स्या अद॑ब्धः ।
यो नो॑ दू॒रे अ॒घशं॑सो॒ यो अन्त्य॑ग्ने॒ मा कि॑ष्टे॒ व्यथि॒राद॑धर्षीत् ॥

प्रतीति । भो भगवन्नग्ने तूर्णितमोऽतिक्षिप्रतमस्त्वं स्पशः । "स्पश बाधने" शकारान्तो द्वितीयाबहुवचनम् । बाधकाञ्शत्रून्प्रति विसृज पाशैर्बद्ध्वा नयेत्यर्थः । किंचास्या अस्मदी-याया विशः पुत्रादिप्रजायाः पायुः पाति रक्षतीति पायू रक्षको भव । किंच नोऽस्माकं दूरेऽन्त्यन्तिके च योऽघशंसोऽघं पापं शंसतीच्छतीत्यघशंसः । " शासि " इच्छायाम् । तमपि पराकुर्विति शेषः । अहमप्यदब्धः शत्रुभिरनुपहिंसितो भवामि । "दम्भु हिंसा-याम्" । किं च किः कोऽपि च्छान्दसोऽयं प्रयोगः । व्यथिर्व्यथको राक्षसस्ते तव पुर-स्तान्माऽऽदधर्षीन्माऽऽधृष्टो भूदित्यर्थः । अग्निदर्शनस्य राक्षसपिशाचादिपलायनहेतु-त्वात् । तथा च नीतिशास्त्रम् —

"दिवा सूर्यप्रतापेन रात्रौ वह्निप्रतापतः ।
पिशाचराक्षसादीनां दूरतस्तु पलायनम् ॥
तस्माद्रात्रौ मनुष्याणां वने मार्गे गृहेऽपि वा ।
वह्निसेवनमाहात्म्यात्पिशाचादिपलायनम्" ॥ इति ।

उदग्ने तिष्ठ प्रत्यातनुष्व न्यमित्राꣳ ओषतात्तिग्महेते ।
यो नो अरातिꣳ समिधान चक्रे नीचा तं धक्ष्यतसं न शुष्कम् ॥

उदिति । भो भगवन्नग्नेऽस्माननुग्रहीतुमुत्तिष्ठ । अस्मान्प्रति दयामातनुष्व । अमित्रान्कामादीन्नितरामोषताद्भस्मी कुरु । "उष दाहे" । किं च भोस्तिग्महेते भोस्तीक्ष्णायुध नोऽस्माकमुपरि यः कश्चिदरातित्वं चक्रे कृतवांस्तमस्मद्द्रोहिणं शुष्कमतसं न कक्षवृक्षादिमिव धाक्षि दग्धं कुरु। नीचा नीचैरधो नरकमार्गे च कुरु । भोः समिधान देदीप्यमान वह्ने । "ञिइन्धी दीप्तौ" । सर्वमेतदस्मदीयं कार्यं साधयेत्यर्थः

ऊर्ध्वो भव प्रति विध्याध्यस्मदाविष्कृणुष्व दैव्यान्यग्ने ।
अव स्थिरा तनुहि यातुजूनां जामिमजामिं प्रमृणीहि शत्रून् ॥

ऊर्ध्व इति । भो भगवन्नग्नेऽस्मद्विभक्तिव्यत्ययः । अस्माकं कामादीन्रिपूनध्यधिकं प्रतिविध्य ताडय। अत एव दैव्यानि देवतासंबन्धीनि सत्कर्माणि सदुपासनानि चाऽऽविष्कृणुष्व प्रकटय । अत एवोर्ध्वः सत्यलोकप्रभृत्यूर्ध्वलोकप्रदो भव। किंच यातुजूनां यातुधानानां पुण्यलोकविरोधिनां रक्षसां स्थिराणि धनूंष्यवतनुहि, अवतीर्णमौर्वीकाणि कुरु । किंच जामिमालस्यादिकं परित्यज्य प्रमृणीहि विनाशय। किंचाजामिमनालस्यं यथा भवति तथा जगत्संहर्तुमुद्युक्ताञ्शत्रून्प्रमृणीहि । "मृ हिंसायाम्" । जामिताऽऽलस्यपीडादावित्यभिधानात् । पञ्चानामृचामयमभिप्रायः । भो भगवन्नग्ने त्रैलोक्यनायकास्मदीयान्तर्बहिःशत्रून्निर्मूल्य सत्कर्मसु प्रवर्त्यान्तःकरणं विमलीकृत्य शतं संवत्सरान्भार्यापुत्रादिभिः सह भुक्तिं दत्त्वा मरणादूर्ध्वं सकुटुम्बाय मह्यं मुक्तिं प्रयच्छेति ।

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यकदशमप्रपाठके नारायणीयापरनामधेययुक्तायां याज्ञिक्यामुपनिषदि भाष्ये सप्तविंशोऽनुवाकः ॥ २७ ॥

====

अथाष्टाविंशोऽनुवाकः ।

---

जीवनहेतुक्षेत्रलाभादिद्वारा मुक्तिहेतुं पृथिवीदेवताकं मन्त्रमाह—

अदितिर्देवा गन्धर्वा मनुष्याः पितरोऽसुरास्तेषाꣳ
सर्वभूतानां माता मेदिनी महता मही सावित्री

गायत्री जगत्युर्वी पृथ्वी बहुला विश्वा भूता कत-
मा काया सा सत्येत्यमृतेति वसिष्ठः, इति ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके दशमप्रपाठके नारायणोपनिषद्य-
ष्टाविंशोऽनुवाकः ॥ २८ ॥

अदितिशब्दोऽखण्डितेति व्युत्पत्त्या भूमिमाचष्टे । अत एव निघण्टुकारेण पृथिवी-नामसु पठितः । देवादयः पञ्च जातिविशेषा अदितिरूपाः । एते तु सर्वप्राणिदेहानामुप-लक्षकाः । अतस्तेषां **सर्वभूतानां** देहोपादानत्वादियमदितिर्माता जननी । **मेदिनी** मधुकैटभमेदसा जाता । अथवा मेदस्विनी कठिनेत्यर्थः । ***महती** गुणाधिका धैर्य-युक्ता वा । तच्च सर्वप्राणिकृतोपद्रवसहिष्णुत्वेनावगन्तव्यम् । **मही** पूज्या । **सावित्री** सवितुः प्रेरकस्यान्तर्यामिणः संबन्धिनी । **गायत्री** गायकान्स्वोपासकांस्त्रायते रक्षती-त्यर्थः । **जगती** जगदाश्रयभूता । **उर्वी**अनेकसस्याढ्या । **पृथ्वी,** अनेकविस्तारवती । **बहुला** निबिडावयवा । **विश्वा** सर्वात्मिका । [**भूता**] प्राणिदेहोत्पत्तेः पूर्वमेव विद्य-माना । **कतमा**ऽतिशयेन सुखरूपा । **काया** सर्वप्राणिदेहरूपेण परिणता । **सा** प्रसिद्धा । **सत्या** व्यवहारदशायां बाधरहिता । इत्येवं वसिष्ठो महामुनिराह । तथैवा**मृता** मर-णरहिता चतुर्युगपर्यावर्तनेऽप्यवस्थितेत्येवमप्यर्थं वसिष्ठ एवाऽऽह । अतोऽस्य मन्त्रस्य **वसिष्ठ** ऋषिरित्यर्थः ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यकदशमप्रपाठके नारायणीयापरनामधेययुक्तायां याज्ञिक्यामुपनिषदि भाष्येऽष्टाविंशोऽनुवाकः ॥ २८ ॥

---

अथैकोनत्रिंशोऽनुवाकः ।

---

वृष्ट्यभावकृतोपद्रवपरिहारेणोपकारिणमब्देवताकं मन्त्रमाह—

आपो वा इदꣳ सर्वं विश्वा भूतान्यापः प्राणा वा आपः
पशव आपोऽन्नमापोऽमृतमापः सम्राडापो विराडापः
स्वराडापश्छन्दाꣳस्यापो ज्योतीꣳष्यापो यजूꣳष्यापः
सत्यमापः सर्वा देवता आपो भूर्भुवः सुवराप ओम्, इति ।

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यकदशमप्रपाठके नारायणोपनिषद्ये-
कोनत्रिंशोऽनुवाकः ॥ २९ ॥

---

* महतेत्यस्य व्याख्यानमेतत् ।

---

१ ख. ४५ । २ ग. ४६ ।

**यदिदं** जगदस्ति तत्सर्वमापो वै जलमेव । कथमिति प्रपञ्च्यते । **विश्वा भूतानि** सर्वाणि शरीराण्यापो जलम् । रेतोरूपेण तदुत्पादकत्वात् । **प्राणा वै** शरीरवर्तिवायवोऽप्यापः । उदकेन प्राणानामाप्यायनात् । अत एव च्छन्दोगा आमनन्ति— " आपोमयः प्राणो न पिबतो विच्छेत्स्यते " इति । **पशवो** गवादयोऽप्यापः । क्षीररूपेण तत्र परिणतत्वात् । **अन्नं** व्रीहियवादिकमापः । जलस्यान्नहेतुत्वं प्रसिद्धम् । **अमृतमापः** । सम्यग्राजत इति सूत्रात्मा हिरण्यगर्भः **सम्राट्** । विस्पष्टं राजत इति ब्रह्माण्डदेहः पुरुषो **विराट्** । इन्द्रियादिनैरपेक्ष्येण स्वयमेव राजत इत्यव्याकृताभिमानीश्वरः **स्वराट्** । **छदांसि** गायत्र्यादीनि । ज्योतींष्यादित्यादीनि । **यजूंष्य**नियताक्षरा मन्त्राः । **सत्यं** यथार्थकथनम् । **सर्वा देवता** इन्द्रादयः । **भूर्भुवः सुवस्त्रयो** लोकाः । सम्राडादिलोकत्रयान्तार्थरूपेणाऽऽपः स्तूयन्ते । एताश्चाऽऽपो मूलकारणपरमात्मरूपेण प्रणवप्रतिपाद्या इति वक्तु**मोंकारः** पठितः ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यकदशमप्रपाठके नारायणीयापरनामधेययुक्तायां याज्ञिक्यामुपनिषदि भाष्य एकोनत्रिंशोऽनुवाकः ॥ २९ ॥

अथ त्रिंशोऽनुवाकः ।

माध्याह्निकसंध्यानुष्ठानेऽभिमन्त्रितजलपानार्थं मन्त्रमाह —

**आपः पुनन्तु पृथिवीं पृथिवी पूता पुनातु माम् ।**
**पुनन्तु ब्रह्मणस्पतिर्ब्रह्म पूता पुनातु माम् ॥**
**यदुच्छिष्टमभोज्यं यद्वा दुश्चरितं मम ।**
**सर्वं पुनन्तु मामापोऽसतां च प्रतिग्रहꣳ स्वाहा,** इति ।

**इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके दशमप्रपाठके नारायणोपनिषदि त्रिंशोऽनुवाकः ॥ ३० ॥**

या **आप**स्ताः **पृथिवीं पुनन्तु** प्रक्षालनेन शोधयन्तु । सा च **पृथिवी पूता** शुद्धा सती **मामनुष्ठातारं पुनातु** शोधयतु । तथा **ब्रह्मणो** वेदस्य **पतिः** पालकमाचार्यमेता आपः **पुनन्तु** । तेनाऽऽचार्येणोपदिष्टं **ब्रह्म** [वेद] स्वरूपं **पूता** स्वयं पूतं सन्मां **पुनातु** । अन्यभुक्तावशिष्टरूपमु**च्छिष्टं यद**स्ति तद**भोज्यं** भोक्तुमयोग्यं तादृशं कदाचिन्मया भुक्तम् । **यद्वा दुश्चरित**मन्यदपि प्रतिषिद्धाचरणरूपं **मम** किंचित्संपन्नं तत्सर्वं परि-

हस्येति शेषः । ततो मामापः पुनन्तु । तथाऽसतां शूद्रादीनां प्रतिग्रहं च मया कृतं पुनन्तु । तदर्थमिदमभिमन्त्रितमुदकं स्वाहा मदीयवक्त्राग्नौ सुहुतमस्तु ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यकदशमप्रपाठके नारायणीयापरनामधेययुक्तायां याज्ञिक्यामुपनिषदि भाष्ये त्रिंशोऽनुवाकः ॥ ३० ॥

====

अथैकत्रिंशोऽनुवाकः ।

सायंसंध्याकाले जलपानार्थं मन्त्रमाह—

**अग्निश्च मा मन्युश्च मन्युपतयश्च मन्युकृतेभ्यः । पापेभ्यो रक्षन्ताम् । यदह्ना पापमकार्षम् । मनसा वाचा हस्ताभ्याम् । पद्भ्यामुदरेण शिश्ना । अहस्तदवलुम्पतु । यत्किंच दुरितं मयि । इदमहं माममृतयोनौ । सत्ये ज्योतिषि जुहोमि स्वाहा, इति ॥**

**इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके दशमप्रपाठके नारायणोपनिषद्येकत्रिंशोऽनुवाकः ॥ ३१ ॥**

योऽयमग्निरस्ति यश्च **मन्युः** क्रोधाभिमानी देवो ये च **मन्युपतयः** क्रोधस्वामिनस्तन्नियामका देवाः सन्ति, ते सर्वेऽपि **मन्युकृतेभ्यो** मदीयकोपनिष्पादितेभ्यः **पापेभ्यो [ मा मां ] रक्षन्तां** पापिनं मां तत्पापविनाशनेन पालयन्तु । किंचातीतेनाह्ना तस्मिन्नहनि **यत्पापमकार्षं** कृतवानस्मि । केन साधनेन, मनआदिभिः शिश्नान्तावयवैः । **तत्सर्वं** पापम**हरवलुम्पतु** । अहरभिमानी देवो विनाशयतु । परहिंसादिचिन्तनं मानसं पापम् । अप्रियानृतादिभाषणं वाचिकम् । अभिचारहोमादिकं हस्तकृतम् । पादेन गोब्राह्मणस्पर्शादिकं पादकृतम् । अभोज्यभोजनमुदरकृतम् । अगम्यागमनं शिश्नकृतम् । अथवा किमनेन परिमितगणनेन, यत्किमपि **दुरितं मयि** निष्पन्नमिदं पापजातं सर्वं तत्कर्तारं **मां** च लिङ्गशरीररूपम**मृतयोनौ** मरणरहिते जगत्कारणे **सत्ये** बाधरहिते **ज्योतिषि** स्वयंप्रकाशे वस्तुनि **जुहोमि** । प्रक्षिपाम्य**हम्**, अनेन होमेन तत्सर्वं भस्मी करोमि । तदर्थमभिमन्त्रितं जलं **स्वाहा** मदीयमुखाग्नौ स्वाहुतमस्तु ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यकदशमप्रपाठके नारायणीयापरनामधेययुक्तायां याज्ञिक्यामुपनिषदि भाष्य एकत्रिंशोऽनुवाकः ॥ ३१ ॥

====

अथ द्वात्रिंशोऽनुवाकः ।

प्रातःसंध्याकाले जलपानार्थं मन्त्रमाह—

सूर्यश्च मा मन्युश्च मन्युपतयश्च मन्युकृतेभ्यः ।
पापेभ्यो रक्षन्ताम् । यद्रात्रिया पापमकार्षम् ।
मनसा वाचा हस्ताभ्याम् । पद्भ्यामुदरेण शिश्ना ।
रात्रिस्तदवलुम्पतु । यत्किंच दुरितं मयि । इदमहं
माममृतयोनौ । सूर्ये ज्योतिषि जुहोमि स्वाहा, इति ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यकदशमप्रपाठके नारायणोपनिषदि[1]
द्वात्रिंशोऽनुवाकः ॥ ३२ ॥

सूर्येऽहर्निष्पादके सूर्योपाधिके । अन्यत्सर्वं पूर्ववद्व्याख्येयम् ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यकदशमप्रपाठके नारायणीयापरनामधेययुक्तायां याज्ञिक्यामुपनिषदि भाष्ये द्वात्रिंशोऽनुवाकः ॥ ३२ ॥

अथ त्रयस्त्रिंशोऽनुवाकः ।

प्राणायामादिषु सर्वत्राऽऽवश्यकस्योंकारस्य प्रसङ्गादृष्यादिकमुच्यते—

ओमित्येकाक्षरं ब्रह्म । अग्निर्देवता ब्रह्म
इत्यार्षम् । गायत्रं छन्दं परमात्मं सरू-
पम् । सायुज्यं विनियोगम्, इति ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यकदशमप्रपाठके नारायणोपनि-[2]
षदि त्रयस्त्रिंशोऽनुवाकः ॥ ३३ ॥

ओमिति यदेकाक्षरमस्ति तद्ब्रह्म समस्तब्रह्माण्डोत्पत्तिस्थितिभङ्गकारणम् । तस्य देवता वाच्यभूतं वस्त्वग्निः । अग्निशब्दोऽत्र रूढ्या देवताविशेषवाचको न भवति अपि तु योगेन परमात्मवाचकः । अङ्गति सर्वं जगद्व्याप्नोतीत्यग्निः । अग्निशब्दोपलक्षितं ब्रह्मेति यत्तदार्षमृषिः । मन्त्रोऽपि ब्रह्म, ऋषिरपि ब्रह्म, देवताऽपि ब्रह्म, सर्वं स्वयमेवेत्यर्थः । गायत्रं दैवी गायत्री छन्दः । विनियोगं विनियोगः । सायुज्यं

१ घ. ४१ । २ घ. ५० ।

सायुज्ये परब्रह्मावाप्तौ । कथंविधे सायुज्ये, [ परमा(मं ] परमात्मलक्षणे । तथा सरूपं सरूपे सर्वजगत्समानरूपे । सर्वात्मक इति यावत् । सर्वत्र व्यत्ययो बोध्यः ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यकदशमप्रपाठके नारायणीयापरनामधेययुक्तायां याज्ञिक्यामुपनिषदि भाष्ये त्रयस्त्रिंशोऽनुवाकः ॥ ३३ ॥

====

अथ चतुस्त्रिंशोऽनुवाकः ।

संध्यात्रय( ये ) मार्जनादूर्ध्वं गायत्र्या आवाहनमन्त्रमाह—

**आयांतु वरदा देवी अक्षरं ब्रह्म संमितम् । गायत्रीं छन्दसां मातेदं ब्रह्म जुषस्व मे । यदह्नात्कुरुते पापं तदह्नात्प्रतिमुच्यते । यद्रात्रियात्कुरुते पापं तद्रात्रियात्प्रतिमुच्यते । सर्ववर्णे महादेवि संध्याविद्ये सरस्वति, इति ॥**

**इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यकदशमप्रपाठके नारायणोपनिषदि चतुस्त्रिंशोऽनुवाकः ॥ ३४ ॥**

**वरदा**ऽस्मदभीष्टवरप्रदा **देवी** गायत्रीछन्दोभिमानिनी देवता**ऽक्षरं** विनाशरहितं **संमितं** सम्यग्वेदान्तप्रमाणेन निश्चितं **ब्रह्म** जगत्कारणं परं तत्त्वमुद्दिश्याऽऽयात्वागच्छतु । अस्माकं ब्रह्मतत्त्वं बोधयितुमागच्छत्वित्यर्थः । अयमेवार्थ उत्तरार्धेन स्पष्टी क्रियते । **छन्दसां** गायत्रीत्रिष्टुबादीनां वेदानां वा **माता** जननी देवता [गायत्रीं] गायत्री गायत्रीशब्दाभिधे (*ये नोऽस्माभिर्ध्येे) या नोऽस्मानि(मे मम)**दं ब्रह्म** वेदान्तप्रतिपाद्यं तत्त्वं **जुषस्व** जोषयतु । उपदिशत्वित्यर्थः । किंच हे **संध्याविद्ये** सायंप्रातःसंधौ भवा संध्या तादृशी या विद्याऽनुष्ठानरूपा तत्संबुद्धौ संध्याविद्ये **सरस्वति** त्वद्भक्तो **यदह्ना**द्यस्मिन्नहनि **पापं कुरुते तदह्ना**त्तस्मिन्नहनि तेन पापेन **प्रतिमुच्यते** विमुच्यतां शुद्धो भूयादिति भावः । **यद्रात्रिया**द्यस्यां रात्रौ । अन्यत्समानम् । एते छान्दसाः प्रयोगाः ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यकदशमप्रपाठके नारायणीयापरनामधेययुक्तायां याज्ञिक्यामुपनिषदि भाष्ये चतुस्त्रिंशोऽनुवाकः ॥ ३४ ॥

====

* धनुश्चिह्नान्तर्गतमधिकमप्रयोजनम ।

अथ पञ्चत्रिंशोऽनुवाकः ।

गायत्र्या आवाहनमन्त्रमाह—

ओजोऽसि सहोऽसि बलमसि भ्राजोऽसि देवानां धामनामाऽसि विश्वमसि विश्वायुः सर्वमसि सर्वायुरभिभूरों गायत्रीमावाहयामि सावित्रीमावाहयामि सरस्वतीमावाहयामि छन्दर्षीनावाहयामि श्रियमावाहयामि गायत्रिया गायत्री छन्दो विश्वामित्र ऋषिः सविता देवताऽग्निर्मुखं ब्रह्मा शिरो विष्णुर्हृदयꣳ रुद्रः शिखा पृथिवी योनिः प्राणापानव्यानोदानसमाना सप्राणा श्वेतवर्णा सांख्यायनसगोत्रा गायत्री चतुर्विꣳशत्यक्षरा त्रिपदा षट्कुक्षिः पञ्चशीर्षोपनयने विनियोगः,—इति ।

हे गायत्रि त्वमोजोऽसि बलहेतुभूताष्टमधातुरूपाऽसि । सहोऽसि शत्रूनभिभवितुं शक्तिरसि । बलमसि शरीरगतव्यवहारसामर्थ्यरूपाऽसि । भ्राजोऽसि दीप्तिरूपाऽसि । देवानामग्नीन्द्रादीनां धाम तेजो यदस्ति तन्नामाऽसि तदेव त्वन्नामेत्यर्थः । देवानां[धा]मासीत्यर्थः । विश्वं सर्वजगद्रूपं त्वमेवाऽसि । विश्वायुः संपूर्णायुःस्वरूपाऽसि । उक्तस्यैव व्याख्यानं सर्वमसि सर्वायुरिति । अभिभूः सर्वस्य पापस्य तिरस्कारहेतुः । ॐ प्रणवप्रतिपाद्यपरमात्माऽसि । तादृशीं गायत्रीं मदीये मनस्येवाऽऽवाहयामि । * अन्यत्स्पष्टम् ।

* सावित्रीमावाहयामीत्यवशिष्टग्रन्थार्थो दत्तात्रेयदिगम्बरानुचरविरचितनारायणोपनिषत्प्रकाशात्संगृह्यते—"सावित्रीं सवितुर्ब्रह्म साक्षात्कारयितुर्ज्ञानप्रकाशकस्य परमात्मन इमामावाहयामि सरस्वतीं ब्रह्मजलधारणप्रश्चोतनाभ्यां वेदाः सरांसि तन्मयत्वात्तद्वतीं सरस्वतीं चतुर्विंशत्यक्षरमन्त्ररूपामावाहयामि । तदङ्गानि च्छन्दर्षीन्गायत्र्याः सर्वमन्त्रमयत्वेन सर्वाणि च्छन्दांसि सर्वांश्चर्षीन्देवताश्च सर्वा आवाहयामि । श्रियं गायत्री सर्ववेदमयी तस्मात्सर्ववेदानां श्रियमावाहयामि । इत्येकगायत्र्यावाहनेनाऽऽत्मनि सर्वमावाहयामीति संकल्पं कृत्वा तामावाह्य तच्छन्दादि स्मृत्वा ध्यानमाचरेत् । तत्र मन्त्रः—गायत्रिया गायत्री छन्दो विश्वामित्र ऋषिः सविता देवताऽग्निर्मुखं ब्रह्मा शिरो विष्णुर्हृदयꣳ रुद्रः शिखा पृथिवी योनिः प्राणापानव्यानोदानसमाना सप्राणा श्वेतवर्णा सांख्यायनसगोत्रा गायत्री चतुर्विꣳशत्यक्षरा त्रिपदा षट्कुक्षिः पञ्चशीर्षोपनयने विनियोगः । इति । गायत्र्या गायत्री छन्दः । विश्वामित्र ऋषिर्मन्त्रद्रष्टा । सविता सर्वं प्रसुवानः परमात्मा देवता तन्मन्त्रत्वात् । इति च्छन्दर्षिदेवतास्मरणम् । ध्यानम्—अग्निः प्रसिद्धो मुखं मुखस्थानीयो गायत्र्या इति संबध्यते । ब्रह्मा चतुर्मुखः शिरः शिरस्थानीयः प्रथमजत्वात् । विष्णुर्हृदयं सर्वस्य(त्र) सूक्ष्मत्वेन स्थितिरतः स्थितेः कर्ता विष्णुर्हृदयम् । रुद्रः शिखा यथा शिखा सर्वावयवातीता तथा रुद्रः प्रलयकरणादतः शिखास्थानीयः ।

गायत्र्यावाहनादूर्ध्वं प्राणायामार्थं मन्त्रमाह—

**ओं भूः । ओं भुवः । ओꣳ सुवः । ओं महः । ओं जनः ।**
**ओं तपः । ओꣳ सत्यम् । ओं तत्सवितुर्वरेण्यं भर्गो देवस्य**
**धीमहि । धियो यो नः प्रचोदयात् । ओमापो ज्योती**
**रसोऽमृतं ब्रह्म भूर्भुवः सुवरोम् , इति ॥**

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यकदशमप्रपाठके नारायणोपनिषदि
पञ्चत्रिंशोऽनुवाकः ॥ ३५ ॥

भूरादि(दयः) सत्यान्त(न्ता) लोकप्रतिपादिकाः सप्त व्याहृतयः । तेषां च लोकानां प्रणवप्रतिपाद्यब्रह्मस्वरूपत्वविवक्षया प्रत्येकं प्रणवोच्चारणम् । तत्सवितुरित्यादिको गायत्री मन्त्रः । तत्प्रतिपाद्यस्य ब्रह्मत्वविवक्षया तदादौ प्रणवोच्चारणम् । मन्त्रस्य चायमर्थः । **सवितुः** प्रेरकस्यान्तर्यामिणो **देवस्य वरेण्यं** वरणीयं श्रेष्ठं तद्भर्गस्तेजो **धीमहि** ध्यायामः । **यः** सविता परमेश्वरो **नोऽ**स्मदीया **धियो** बुद्धिवृत्तीः **प्रचोदया**त्प्रकर्षेण तत्त्वबोधे प्रेरयति तस्य तेजो ध्यायाम इति पूर्वत्रान्वयः । आपो ज्योतिरित्यादि गायत्र्याः शिरः, तस्याऽऽद्यन्तयोः प्रणवद्वयं पूर्ववदुच्चार्यते । या **आपो** नदीसमुद्रादिगताः सन्ति यच्च **ज्योति**रादित्यादिकमस्ति योऽपि **रसो** मधुराम्लादिः षड्विधोऽस्ति यदप्यमृतं देवैः पीतमस्ति तत्सर्वमों प्रणवप्रतिपाद्यं **ब्रह्म** । **भूर्भुवः सुवरों** पूर्ववद्व्याख्येयम् । अस्य मन्त्रस्य प्राणायामाङ्गत्वमनुस्मृतनादोपनिषदि श्रूयते—

" सव्याहृतिं सप्रणवां गायत्रीं शिरसा सह ।
त्रिः पठेदायतप्राणः प्राणायामः स उच्यते " इति ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यकदशमप्रपाठके नारायणीयापरनामधेययुक्तायां याज्ञिक्यामुपनिषदि भाष्ये पञ्चत्रिंशोऽनुवाकः ॥ ३५ ॥

---

पृथिवी योनिर्यं निस्थानीया सर्वप्रसवहेतुत्वात् । प्राणापानव्याणोदानसमाना प्राणादयः पञ्च प्रवाहादि-वायुरूपाः सन्त्यस्यां सा तथोक्ता । सप्राणा इह प्राणैरिन्द्रियैर्वा( र्वा )गादिभिः सप्राणा । श्वेतवर्णा प्रथमं शुद्धगुणप्रधानत्वात् । सांख्यायनसगोत्रा संख्यां गुणसंख्यानमाहुस्ते सांख्याः । सांख्यैरीयते गम्यते प्राप्यते सर्वगुणनिरासात्स सांख्यायनः परमात्मा ब्रह्म सन्मात्रं सांख्यायनेन समानमेकं गोत्रं कुलमुद्भवोऽस्याः सांख्यायनसगोत्रा, इति । देवतारूपत्वेन ध्यानमुक्त्वा मन्त्ररूपत्वेन विवक्षुः पुनर्गायत्रीमुपादत्ते—गायत्री मन्त्ररूपा चतुर्विंशत्यक्षरा चतुर्विंशतिरक्षराण्यस्याः सा तथोक्ता । तेन त्रिपदा त्रयः पादा अस्याः सा त्रिपदा । षट्कुक्षिः षड्वेदाङ्गानि कुक्षयोऽस्याः सर्ववेदरूपायाः सा षट्कुक्षिः । पञ्चशीर्षा चतुर्णां वेदानां चत्वार उपनिषद्भागा ज्ञानप्रतिपादिनः कर्मोपासनकाण्डयोरुपरि स्थिताश्चत्वारि शीर्षाणि शिरांसि, तथेतिहासपुराणानि पञ्चमो वेदो ज्ञानप्रतिपादकत्वात्पञ्चमं शीर्षमस्याः सा पञ्चशीर्षा । इति ध्यात्वाऽनेन मन्त्रेण बटोरुपनयन उपनीतकरणे विनियोग इत्येवं स्मृत्वा पठित्वा च गायत्रीमन्त्रं जपेत् " इति ॥

अथ षट्त्रिंशोऽनुवाकः ।

जपादूर्ध्वं गायत्रीविसर्जनमन्त्रमाह—

उत्तमे शिखरे जाते भूम्यां पर्वतमूर्धनि ।

ब्राह्मणेभ्योऽभ्यनुज्ञाता गच्छ देवि यथासुखम्, इति ॥

**भूम्याम**वस्थितो यः **पर्वतो** मेरुनामकस्तस्य **मूर्धन्यु**परिभागे यदुत्तमं शिखरमस्ति* तस्मिंस्तथाविधा गायत्री देवता तिष्ठति तस्मात्कारणा**द्देवि ब्राह्मणेभ्य**स्त्व[दुपासके-भ्यस्त्व]दनुग्रहेण परितुष्टेभ्योऽनुज्ञानमभिव्याप्य **यथासुखं** स्वकीयं सुखमनतिक्रम्य स्वस्थाने तस्मिन्नुत्तमे शिखरे **गच्छ** ।

**स्तुतो मया वरदा वेदमाता प्रचोदयन्ती पवने द्विजाता ।**

**आयुः पृथिव्यां द्रविणं ब्रह्मवर्चसं मह्यं दत्त्वा प्रजातुं ब्रह्मलोकम्**, इति॥

**इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यकदशमप्रपाठके नारायणोपनिषदि षट्त्रिंशोऽनुवाकः ॥ ३६ ॥**

**स्तुत इति** । पूर्वस्मिन्मन्त्रेऽपरोक्षतयोक्तोऽर्थोऽस्मिन्मन्त्रे परोक्षतया स्पष्टः क्रियते । अत्रेदं वैदिकं रहस्यम् । ब्रह्मलोक आदित्यमण्डलं चोभयमपि गायत्र्या अवस्थानं विकल्पेनान्यतरदिति केचिदाचक्षते । पु(अ)त एवास्माभिः पूर्वस्मिन्मन्त्रेणानु(न्त्रेऽनु)क्तमप्यादित्यमण्डलं गायत्रीनिवासत्वेन मत्वाऽ+ध्याहृत्य व्याख्यातम् । एतस्मिंस्तु मन्त्रेः(न्त्रे) [श्रुतिः] स्वयमेव भगवत्या गायत्र्या वसतित्वेन ब्रह्मलोकं ब्रवीति । तथाचेत्थं व्याख्या तत्र भवति । भगवती गायत्री **ब्रह्मलोकं** ब्रह्मणो भारतीपतेर्लोकं प्रयात्विति वाक्यपरिशेषः । कीदृशं ब्रह्मलोकम् । अतलादिभ्योऽधस्तनेभ्यो भूरादिभ्य ऊर्ध्वतनेभ्यः समस्तेभ्यो लोकेभ्यः प्रकृष्टत्वेन जातः परमात्मनः सकाशादुत्पन्न इति **प्रजातस्तम्** । प्रजातमिति वक्तव्ये प्रजातुमिति प्रयोगश्छान्दसः । किं कृत्वा, **दत्त्वा** । **किम्**, **आयुः**, शताब्दात्मकमुपजीवनम् । पुन**र्द्रविणं** सुवर्णमणिमुक्तादि । पुन**र्ब्रह्मवर्चसं** स्वाध्यायाध्ययनतदर्थविचारतदर्थानुष्ठापनै(ष्ठानै)र्जनितं मुखतेजः । यद्दृष्ट्वा लोका आचक्षते देदीप्यमानोऽयं साक्षाज्ज्वलन्निव पावक इति । कस्मै **मह्यम्** । कथंभूताय **पृथिव्यां** विद्यमानाय । कथंभूता गायत्री । **द्विजाता** द्विजातिभिस्त्रैवर्णिकैरुपास्यमाना । यद्वा द्वयोः सूर्यमण्डलब्रह्मलोकयोर्जाता प्रादुर्भूता । "जनी प्रादुर्भावे" अस्मान्निष्ठाप्रत्ययः ।

* जातपदस्य फलितव्याख्यानमस्तीत्येतत् । + पूर्वत्र त्वेवं न दृश्यते । एतदनुरोधेन तत्तत्र यावदपेक्षितं कल्पनीयम् ।

पुनः कथंभूता । **प्रचोदयन्ती**, अन्तर्यामिरूपेण प्राणिमात्रं प्रेरयित्री । **पवने** व्यत्ययेन पवनः । अत्र लुप्तोपमोपादानम् । यथा प्राणवायुश्चतुर्विधं प्राणिजातं प्रेरयतीतस्ततो गमनागमनादिकं कारयति तथेति । तथा **वेदमाता** चतुर्णां वेदानां जननी । वरान्स्वोपासकेभ्यो वाञ्छितार्थान्ददातीति **वरदा** । कथंभूता सती, **मयोपासकेन स्तुतो** बहुलग्रहणाद्व्यत्ययेन स्तुता सतीत्यर्थः ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यकदशमप्रपाठके नारायणीयापरनामधेययुक्तायां याज्ञिक्यामुपनिषदि भाष्ये षट्त्रिंशोऽनुवाकः ॥ ३६ ॥

अथ सप्तत्रिंशोऽनुवाकः ।

पूर्वोक्तोपासनास्वसमर्थस्याऽऽदित्यदेवताविषयं जप्यं मन्त्रमाह—

**घृणिः सूर्य आदित्यो न प्रभा वात्यक्षरम् । मधु क्षरन्ति तद्रसम् । सत्यं वै तद्रसमापो ज्योती रसोऽमृतं ब्रह्म भूर्भुवः सुवरोम् , इति ।**

**इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यकदशमप्रपाठके नारायणोपनिषदि सप्तत्रिंशोऽनुवाकः ॥ ३७ ॥**

भगवानादित्यो **वाति** वैहायसेन मार्गेणाहर्दिवं गच्छति लोकानुपकर्तुम् । किंविधः । जगत्प्रसवहेतुत्वात्**सूर्यः** । दीप्तिमत्त्वाद्**घृणिः** । क्षरणराहित्येन नित्यत्वा**दक्षरमक्षरः** । केव, **प्रभा न** । नकार उपमार्थः । आदित्यसंबन्धिनी प्रभेव । आदित्यस्योपमानान्तराभावात् । स्वप्रभा गोलकीभूता व्योममार्गेण गच्छति चेद्यथा प्रभावान(तथाऽ)यमित्यभूतार्थमुपमानम् । अपिच **तद्रसं** तस्मात्पूर्वोक्तादादित्याज्जन्यं रसमुदकं **मधु** मधुरं यथा तथा **क्षरन्ति** नद्यो वहन्ति । आदित्यलब्धवृष्ट्युदकमेव नद्यो वहन्ति, अन्यथा भूमावुदकाभाव इति भावः । उत्तरार्धेनाऽऽदित्यब्रह्मणः सर्वात्मकत्वमुच्यते । तदादित्यलक्षणं ब्रह्म **सत्यं** यथार्थभाषणम् । **रसं** मधुरादिरसजातम् । **आपः** सिन्धुनद्यादिगतमुदकम् । **ज्योति**श्चन्द्राग्न्यादि । **रसः** पदार्थमात्रसारः । **अमृतं** सुधा । **ब्रह्म** त्रयीविद्या । **भूर्भुवः सुव**स्त्रयो लोकाः । **ओमों**कारः । एतत्सर्वमादित्य एवेति मनसा विभावयेदिति भावः ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यकदशमप्रपाठके नारायणीयापरनामधेययुक्तायां याज्ञिक्यामुपनिषदि भाष्ये सप्तत्रिंशोऽनुवाकः ॥ ३७ ॥

अथाष्टात्रिंशोऽनुवाकः ।

---

अथ ज्ञानप्रतिबन्धकब्रह्महत्यादिपापनिवृत्तिहेतवस्त्रिसुपर्णनामका मन्त्रा उच्यन्ते । तत्र प्रथममन्त्रमाह—

ब्रह्ममेतु माम् । मधुमेतु माम् । ब्रह्ममेव मधुमेतु माम् ।
यास्ते सोम प्रजा वत्सोऽभि सो अहम् । दुष्ष्वप्नह-
न्दुरुष्षह । यास्ते सोम प्राणाश्स्ताञ्जुहोमि, इति ।

ब्रह्म परं तत्त्वं मामेतु प्राप्नोतु । मधु परमानन्दमाधुर्योपेतं वस्तु मामेतु प्राप्नोतु तदेव पुनः प्रार्थ्यते । मधुरं ब्रह्मैव मामेतु, न त्वन्यत्क्षुद्रदैवतादिकमिति भावः । हे सोमोमा ब्रह्मविद्या तया सह वर्तमान परमात्मंस्ते तव याः प्रजा देवमनुष्यादयः सन्ति ता अभिलक्ष्य स तादृशस्त्वत्सेवको वत्सो बालक एतासां त्वदीयप्रजानां मध्ये बालवदहं त्वदीयकरुणायोग्यः । अतो हे दुष्ष्वप्नहन्संसाररूपस्य दुःस्वप्नस्य घातक परमेश्वर दुरुष्षह दुःसहं भवं विनाशयेत्यर्थः । हे सोम परमात्मंस्ते त्वदीयाः [प्राणवृत्तयो याः सन्ति तान्वृत्तिप्राणांस्त्वयि जुहोमि प्रक्षिपामि । मदीयमनोवागादयः] प्राणास्त्वया निर्मितत्वात्त्वदीया अतस्त्वय्येवोपसंहारामि । विषयेभ्य इन्द्रियाणि निरुध्य त्वदेकचित्तो भवामीत्यर्थः ।

उक्तस्य त्रिसुपर्णमन्त्रस्य माहात्म्यं ब्राह्मणरूपेण दर्शयति—

त्रिसुपर्णमयाचितं ब्राह्मणाय दद्यात् । ब्रह्महत्यां वा
एते घ्नन्ति । ये ब्राह्मणास्त्रिसुपर्णं पठन्ति । ते सोमं
प्राप्नुवन्ति । आ सहस्रात्पङ्क्तिं पुनन्ति । ओम्, इति ।

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके दशमप्रपाठके नारायणोपनिषद्यष्टात्रिंशोऽनुवाकः ॥ ३८ ॥

विद्यान्तराणि नापृष्टः कस्यचिद्ब्रूयादिति शास्त्रमनुसृत्य शिष्येण याच्ञायां कृतायां पश्चादुपदिशन्ति । इमं तु त्रिसुपर्णमन्त्रं शिष्ययाच्ञामन्तरेणैव ब्राह्मणायोपदिशेत् । तेनोपदेशेन ये ब्राह्मणास्त्रिसुपर्णं पठन्ति सर्वदा त्रिसुपर्णमन्त्रं जपन्त्येते पुरुषा ब्रह्महत्यां विनाशयन्ति । ते सोमं* प्राप्नुवन्ति । ये तस्यां(ते यस्यां) पङ्क्ता-

---

* सोमयागफलम् ।

वक्षन्ति तां पङ्क्तिं सहस्रपर्यन्तं पुनन्ति शुद्धां कुर्वन्ति । तस्मादों प्रणवप्रतिपाद्यः परमात्मैव त्रिसुपर्णमन्त्रस्य देवतेत्यर्थः ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यकदशमप्रपाठके नारायणीयापरनामधेययुक्तायां याज्ञिक्यामुपनिषदि भाष्येऽष्टात्रिंशोऽनुवाकः ॥ ३८ ॥

अथैकोनचत्वारिंशोऽनुवाकः ।

द्वितीयं त्रिसुपर्ण[मन्त्र]माह—

**ब्रह्म मेधया । मधु मेधया । ब्रह्ममेव मधु मेधया । अद्या नो देव सवितः प्रजावत्सावीः सौभगम् । परा दुष्ष्वप्नियꣳ सुव । विश्वानि देव सवितर्दुरितानि परासुव । यद्भद्रं तन्म आसुव । मधु वाता ऋतायते मधु क्षरन्ति सिन्धवः । माध्वीर्नः सन्त्वोषधीः । मधु नक्तमुतोषसि मधुमत्पार्थिवꣳ रजः । मधु द्यौरस्तु नः पिता । मधुमान्नो वनस्पतिर्मधुमाꣳ अस्तु सूर्यः । माध्वीर्गावो भवन्तु नः, इति ।**

**यद्ब्रह्म** सर्वजगत्कारणं सर्ववेदान्तवेद्यं तन्मेधया गुरूपदिष्टमहावाक्यतदर्थधारणशक्त्या लभ्यतामिति शेषः । मध्वित्यादि पूर्ववत् । हे **सवितः** प्रेरक **देवाद्या**ऽस्मिन्दिने **नो**ऽस्माकं विद्यार्थिनां **प्रजाव**च्छिष्यप्रशिष्यादित्रयो(प्रजो)पेतं **सौभग**माचार्यरूपं भाग्यं **सावीः** प्रेरय यच्छेत्यर्थः । [ **दुष्ष्वप्नियं** ] दुःस्वप्नियं दुःस्वप्न्यं दुष्टस्वप्नसदृशं द्वैतप्रतिभासं **परासुव** निराकुरु । अपि च हे **सवितः** प्रेरक **देव दुरितानि** ज्ञानप्रतिबन्धकानि पापानि **विश्वानि परासुव** निराकुरु । **भद्रं** कल्याणमसंभावनाविपरीतभावनारहितं तत्त्वज्ञानं यदस्ति **तन्मे** मह्यमुपासकाया**ऽऽसुव** साकल्येन प्रयच्छ । [ **ऋतायते,** ऋतं परं ब्रह्म तदिच्छते मह्यं ] **वाता** वायवो **मधु** माधुर्योपलक्षितं सुखं यथा भवति तथा वान्त्विति शेषः । प्रबले तु वायौ रोगोत्पत्त्या तत्त्वज्ञानविघ्नः संपद्यतेऽतः स मा भूदिति वायोरानुकूल्यं प्रार्थ्यते । एवमुत्तरत्रापि तत्तदानुकूल्यं द्रष्टव्यम् । **सिन्धवो** नद्यो **मधु क्षरन्ति** मधुरमारोग्यकरमुदकं संपादयन्त्वित्यर्थः । **ओषधी**र्व्रीहियवादयोऽपि **नो**ऽस्माकं **माध्वी**र्मधुराः पथ्यरूपाः सन्तु । **नक्तं** रात्रावुतापि **चोषसि** प्रभाते दिवसेऽपि विद्यार्थिनो मे **मधु** मधुरमनुकूलं सुखमस्तु । कालकृतो विघ्नो मा भूदित्यर्थः । **पार्थिवं रजः** पृथिव्यामधःस्थितं शयनादिस्थानगतं रजोऽपि **मधुम**न्माधुर्योपेतं कण्टकपाषाणादिराहित्येनानुकूलमस्तु । **नो**ऽस्माकं **पिता** पितृसदृशी

द्यौरपि मध्वस्तु । अतिवृष्ट्यादिप्रातिकूल्यरहिताऽस्तु । " द्यौः पिता पृथिवी माता " इति मन्त्रान्तराद्दिवः पितृत्वम् । वनस्पतिरत्र ( पि ) चूतपनसादिर्नोऽस्मान्प्रति मधुमान्मधुरफलोपेतो जीवमहेतुरस्तु । सूर्योऽपि प्रभूतं संतापमकृत्वा मधुमान्माधुर्येणानुकूलप्रकाशनेन युक्तोऽस्तु गावोऽपि नोऽस्मान्प्रति माध्वीर्जीवनहेतुमधुरक्षीरोपेता भवन्तु ।

अस्य त्रिसुपर्णमन्त्रस्य महिमानं दर्शयति—

य इमं त्रिसुपर्णमयाचितं ब्राह्मणाय दद्यात् ।
भ्रूणहत्यां वा एते घ्नन्ति । ये ब्राह्मणास्त्रिसु-
पर्णं पठन्ति । ते सोमं प्राप्नुवन्ति । आ
सहस्रात्पङ्क्तिं पुनन्ति । ओम्, इति ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यकदशमप्रपाठके नारायणोपनिषद्येकोनचत्वारिंशोऽनुवाकः ॥ ३९ ॥

ब्राह्मणगर्भस्य राजगर्भस्य वा हननं भ्रूणहत्या । अन्यत्पूर्ववत् ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यकदशमप्रपाठके नारायणीयापरनामधेययुक्तायां याज्ञिक्यामुपनिषदि भाष्य एकोनचत्वारिंशोऽनुवाकः ॥ ३९ ॥

---

अथ चत्वारिंशोऽनुवाकः ।

---

तृतीयं त्रिसुपर्ण[ मन्त्र ]माह—

ब्रह्म मेधवा । मधु मेधवा । ब्रह्ममेव मधु मेधवा ।
ब्रह्मा देवानां पदवीः कवीनामृषिर्विप्राणां महिषो
मृगाणाम् । श्येनो गृध्राणाꣳ स्वधितिर्वनानाꣳ सोमः
पवित्रमत्येति रेभन् । हꣳसः शुचिषद्वसुरन्तरिक्षसद्धो-
ता वेदिषदतिथिर्दुरोणसत् । नृषद्वरसदृतसद्व्योमसदब्जा
गोजा ऋतजा अद्रिजा ऋतं बृहत्, इति ॥

मेधवा, मेधो यज्ञः सोऽस्यास्तीति * मेधवत् । यज्ञदानादिसाध्यविविदिषापूर्वकत्वा-

* मूले छान्दसेन डादेशेन तथा प्रयोग इत्याशयः ।

अथाष्टचत्वारिंशोऽनुवाकः ।

अमुत्रभूयादध यद्यमस्य बृहस्पते अभिशंस्तेरमुञ्चः ।
मत्यौहतामश्विना मृत्युमस्माद्देवानामग्ने भिषजा शचीभिः ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यकदशमप्रपाठके नारायणोपनिषद्यष्टचत्वारिंशोऽनुवाकः ॥ ४८ ॥[1]

अमुत्रभूयादिति । बृहतां वेदवाचां पतिः पालको बृहस्पतिस्तत्संबुद्धौ हे बृहस्पते परमात्मन्यमस्य संबन्धि यद्भयं तस्मान्मामुञ्चो मोचय । अभिशस्तेरपयशसोऽपि माममुञ्चः । एतद्द्वयान्मोचयित्वाऽथानन्तरम् । अमुत्रभूयात् । व्यत्ययः । अमुत्रभवेन परलोकभवेन सुखेन मां संयोजयेति शेषः । किंचाश्विनाऽश्विनौ देववैद्यावस्मान्मत्तः सकाशान्मृत्युं प्रत्यौहतां दूरी कुर्वाताम् । हेऽग्ने देवानां संबन्धिना भिषजा वैद्यभूतेन त्वयाऽहं रक्षणीयोऽस्मीति शेषः । शचीभिरिन्द्रपत्नीभिः संयोजयेत्यपि शेषः । हविर्नयनद्वारा देवताक्षुन्निवारकत्वादग्नेभिषक्त्वं द्रष्टव्यम् ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यकदशमप्रपाठके नारायणीयापरनामधेययुक्तायां याज्ञिक्यामुपनिषदि भाष्येऽष्टचत्वारिंशोऽनुवाकः ॥ ४८ ॥

====

अथैकोनपञ्चाशोऽनुवाकः ।

हरिꣳ हरन्तमनुयन्ति देवा विश्वस्येशानं वृषभं मतीनाम् ।
ब्रह्म सरूपमनु मेदमागादयनं मा विवधीर्विक्रमस्व ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यकदशमप्रपाठके नारायणोपनिषद्येकोनपञ्चाशोऽनुवाकः ॥ ४९ ॥[2]

हरिमिति । हे परमात्मंस्त्वां सर्वे देवा अनुयन्ति भृत्यभावेनानुसरन्ति । त्वां कथंभूतम् । हरिं विष्णुरूपम् । तथा भक्तानां पापं हरन्तम् । विश्वस्य जगत ईशानम् । मतीनां सर्वप्राणिबुद्धीनां वृषभं श्रेष्ठत्वेन नियन्तारं पुण्यापुण्ययोः सर्वप्राणिबुद्धिप्रेरकमिति यावत् । तदुक्तम् – "धियो यो नः प्रचोदयात्" इति । किंच त(त्व)-दनुग्रहाद्ब्रह्म वेदचतुष्टयं मा मामन्वागादन्वागच्छतु । कथंभूतं ब्रह्म, समानस्वरशब्दादिवैषम्यरहितानि रूपाणि प्रकृतिप्रत्ययादीनि यस्य तत्सरूपम् । पुनः कथंभूतम् ।

१ घ. ६५ । २ घ. ६६ ।

इदं सर्वैस्त्रैवर्णिकैः प्रत्यक्षत्वेनाधीयमानम् । किंचायनमस्माभिः संपादितं मोक्षमार्गं मा विवधीर्मा हिंसय । किंच दातुं विक्रमस्व पराक्रमं कुरु, दातुमुद्यमं कुर्वित्यर्थः ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यकदशमप्रपाठके नारायणीयापरनामधेययुक्तायां याज्ञिक्यामुपनिषदि भाष्य एकोनपञ्चाशोऽनुवाकः ॥ ४९ ॥

अथ पञ्चाशोऽनुवाकः ।

शल्कैरग्निमिन्धान उभौ लोकौ सनेमहम् ।
उभयोर्लोकयोर्ऋद्ध्वाऽति मृत्युं तराम्यहम् ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यकदशमप्रपाठके नारायणोपनिषदि पञ्चाशत्तमोऽनुवाकः ॥ ५० ॥

शल्कैरिति । हे भगवञ्शल्कैः समिद्रूपैः शुष्ककाष्ठैरग्निमाहवनीयादिकमिन्धानो दीपयन्नहमुभौ लोकाविहपरलक्षणौ सनें प्राप्नुयां त्वदनुग्रहात् । एतेन लोकद्वयं सत्कर्मणा फलतीत्युक्तं भवति । अत एवोभयोर्लोकयोर्व्यत्ययेनोभौ लोकावृद्ध्वा लब्ध्वा मृत्युमहमातितराम्यमृतो भवामि । यावदायुरैहिकान्भोगान्भुक्त्वाऽन्ते देवो भवामीत्यभिप्रायः ।

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यकदशमप्रपाठके नारायणीयापरनामधेययुक्तायां याज्ञिक्यामुपनिषदि भाष्ये पञ्चाशोऽनुवाकः ॥ ५० ॥

अथैकपञ्चाशोऽनुवाकः ।

मा छिदो मृत्यो मा वधीर्मा मे बलं विवृहो मा प्रमोषीः ।
प्रजां मा मे रीरिष आयुरुग्र नृचक्षसं त्वा हविषा विधेम ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यकदशमप्रपाठके नारायणोपनिषद्येकपञ्चाशोऽनुवाकः ॥ ५१ ॥

मेति । हे मृत्यो हे उग्र क्रूर त्वमस्म * त्संबुद्धिं मा छिदो मा विच्छेदय । अस्मत्सत्कर्मानुष्ठानं मा वधीर्मा हिंसय । मे मम शारीरं बलं मा विवृहो मा पीडय । अस्मदीयपरलोकसाधनं मा प्रमोषीर्मा चोरय । मे प्रजामायुश्च मा

* सम्यग्बुद्धिं सम्यग्बोधमिति यावत् ।

रीरिषो मा हिंसय। तदर्थं त्वा त्वां हविषा हविष्प्रदानैर्विधेम परिचरेम। त्वा कथंभूतम्। नृप्राणिनश्चेष्टे पुण्यपापपरीक्षायै पश्यतीति नृचक्षास्तं नृचक्षसम्॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके दशमप्रपाठके नारायणीयापरनामधेययुक्तायां याज्ञिक्यामुपनिषदि भाष्य एकपञ्चाशोऽनुवाकः॥ ५१॥

अथ द्विपञ्चाशोऽनुवाकः।

मा नो॑ महान्त॑मुत मा नो॑ अर्भकं मा न उक्ष॑न्तमुत मा न॑ उक्षितम्।
मा नो॑ वधीः पितरं मोत मातरं प्रिया मा नस्तनुवो॑ रुद्र रीरिषः॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यकदशमप्रपाठके नारायणोपनिषदि द्विपञ्चाशोऽनुवाकः॥ ५२॥

मा न इति। रुद्र दुष्टरोदनक*र्नोऽस्माकं महान्तं गुरुप्रभृतिपूज्यवर्गं मा वधीर्मा हिंसीः। "वध बन्धनहिंसयोः" अस्माल्लुङ्। अपि चार्भकं स्तनंधयम् उक्षन्तम्। "उक्ष सेचने" अस्माच्छता सेचनपटीयसं तरुणम्। उक्षितं योनिष्वासिक्तं गर्भस्थं पिण्डं पितरं मातरं [च] मा वधीः। उतशब्दा अपिपर्याया उक्तानुक्तसमुच्चयद्योतिनः। किंच हे वृषभवाहन प्रिया अभिलषिता नरतन्वस्तनूर्मा रीरिषः। "रिष हिंसायाम्" अस्माल्लुङि मध्यमपुरुषैकवचनम्। सर्वानस्मानस्मदीयांश्च सुखयेति भावः।

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यकदशमप्रपाठके नारायणीयापरनामधेययुक्तायां याज्ञिक्यामुपनिषदि भाष्ये द्विपञ्चाशोऽनुवाकः॥ ५२॥

अथ त्रिपञ्चाशोऽनुवाकः।

मा न॑स्तोके तन॑ये मा न आयु॑षि मा नो गोषु मा नो अश्वे॑षु रीरिषः।
वीरान्मा नो॑ रुद्र भामितो व॑धीर्हविष्म॑न्तो नम॑सा विधेम ते॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यकदशमप्रपाठके नारायणोपनिषदि त्रिपञ्चाशोऽनुवाकः॥ ५३॥

मा न इति। हे महारुद्र तोकमर्भकं तनयं तरुणं पुत्रमायुर्जीवनं गा अश्वानेतदुपलक्षितमस्मदीयं सर्वस्वं मा रीरिषः। "रिष हिंसायाम्"। मा ×हिंसीः। त्वं

* अन्तर्भावितण्यर्थोऽत्र करोतिः। णिजन्तमेव वा पाठ्यम्। × एतदग्रे "किंच वीरानस्मद्धितकारिणो वीर्यवतः पुरुषान्मा वधीर्मा हिंसीः।" इति ग्रन्थोऽपेक्षित इति ज्ञेयम्।

कथंभूतः सन् । भामितोऽस्मदपराधैः कारितक्रोधः । त(त्व)दर्थं हविष्मन्तो यथाविधिनिष्पादितहविर्युक्तजुहूहस्ता वयं नमसा प्रणामेन ते तवेज्यां विधेम कुर्याम ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यकदशमप्रपाठके नारायणीयापरनामधेययुक्तायां याज्ञिक्यामुपनिषदि भाष्ये त्रिपञ्चाशोऽनुवाकः ॥ ५३ ॥

====

अथ चतुष्पञ्चाशोऽनुवाकः ।

---

प्रजापते न त्वदेतान्यन्यो विश्वा जातानि परि ता बभूव ।
यत्कामास्ते जुहुमस्तन्नो अस्तु वयꣳ स्याम पतयो रयीणाम् ।[1]

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यकदशमप्रपाठके नारायणोपनिषदि चतुष्पञ्चाशोऽनुवाकः ॥ ५४ ॥

प्रजापत इति । हे प्रजापते ब्रह्मन्पार्वतीवल्लभ त्वत्त्वत्तो जातान्युत्पन्नानि विश्वा विश्वानि समस्तानि [ता] तानि प्रसिद्धान्येतान्युपलभ्यमानानि सुरनरतिर्यगादिलक्षणानि पञ्चभूतानि चतुर्दश भुवनानि नानाविधब्रह्माण्डपिण्डाण्डानि त्वत्तोऽन्यो यः कश्चिन्न परिबभूव । परिपूर्वो भवतिस्तिरस्कारार्थः । नोपसंजहारेति यावत् । औपलक्षण्येन न संजीवयति [ न सृजति च ] । अपि तु सृष्टिकाले त्वमेव सृजसि जीवनकाले त्वमेव जीवयसि प्रलये त्वमेव त्वय्येवोपसंहरासि नान्यः कश्चिदित्यभिप्रायः । यस्मादेवं तस्मात्ते निखिलजगदुत्पत्तिस्थितिलयकर्त्रे भगवते तुभ्यं जुहुमः । श्रौतस्मार्तानुष्ठानोपयोगिहविस्त्यागं कुर्मः । अत एव यस्मिन्कामो येषामस्माकं ते वयं यत्कामा ऐहिकामुष्मिकोपभोग्ये यद्वा(त्र) वयं जुहुमस्तद्वाञ्छितं वस्तु नोऽस्मभ्यमस्तु । श्रौतस्मार्तहोमफलत्वेन सिध्यतु । किंच तवापाङ्गालोके पतिता वयं रयीणां विद्याविनयसंपदामिहपरोपभोग्यभोगसंपदां च पतयोऽधिपतयः स्याम । अयमेव मन्त्रो ब्राह्मणभोजनादौ पार्वतीपातिप्रीतिकृदुदकदाने विनियुज्यते । तस्मिन्पक्षे जुहुमो ब्राह्मणमुखाग्नौ मिष्टान्नरूपहव्यत्यागरूपं होमं कुर्म इति व्याख्यायान्यत्सर्वमेतदनुकूलत्वेन व्याख्यायतामिति दिक् ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यकदशमप्रपाठके नारायणीयापरनामधेययुक्तायां याज्ञिक्यामुपनिषदि भाष्ये चतुष्पञ्चाशोऽनुवाकः ॥ ५४ ॥

====

---

[1] ऋ. ५१ ।

अथ पञ्चपञ्चाशोऽनुवाकः ।

स्वस्तिदा विशस्पतिर्वृत्रहा विमृधो वशी ।
वृषेन्द्रः पुर एतु नः स्वस्तिदा अभयंकरः ॥
इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके दशमप्रपाठके नारायणोपनिषदि
पञ्चपञ्चाशोऽनुवाकः ॥ ५५ ॥

**स्वस्तिदा इति** । इतस्ततो गच्छतां नोऽस्माकं **पुरः** पुरस्तादौपलक्षण्येन प्रागवाक्प्रत्यगुदगूर्ध्वाधोदिक्षु पारिपालनायेन्द्र एत्वागच्छतु । सर्वतो दिक्षु वज्रहस्तेन पालिता वयं निर्भयाः स्यामेति भावः । इन्द्रः कीदृक् । **स्वस्तिदा** भूलोकसुखकृत् । पुनः **स्वस्तिदा** आमुत्रिकसुखकृत् । **विशो** नानाविधप्रजायाः पतिः प्रभुः । **वृत्रहा** स्फीतम् (स्पष्टम्) । **विमृधो** रक्षोजातिमथनकर्ता । **वशी** त्रैलोक्यवशीकारवान् । **वृषा** प्रावृषि वृष्ट्युदकसेचकः । **अभयंकरः** स्वाश्रितानाम् ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यकदशमप्रपाठके नारायणीयापरनामधेययुक्तायां याज्ञिक्यामुपनिषदि भाष्ये पञ्चपञ्चाशोऽनुवाकः ॥ ५५ ॥

---

अथ षट्पञ्चाशोऽनुवाकः ।

त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम् ।
उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय माऽमृतात् ॥
इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके दशमप्रपाठके नारायणोपनिषदि
षट्पञ्चाशोऽनुवाकः ॥ ५६ ॥

**त्र्यम्बकमिति** । हे भगवन्पार्वतीपते त्वां **यजामहे** । त्वां कीदृशम् । **त्र्यम्बकं** त्रिनेत्रम् । **सुगन्धिं** यथा केतक्यादिसौगन्ध्यं दूरादाघ्रायते तथा तदीयदिव्यदेहसौरभ्यं सोऽयं सुगन्धिः । सुपूर्वकत्वाद्गन्धशब्दस्ये*कारः । पुनः कीदृशम् । **पुष्टिवर्धनं** पुष्टिं लौकिकवैदिकपुष्टिं वर्धयतीति तथोक्तम् । हे भगवंस्त्वां संध्यावर्ध(न्द)नादिसत्कर्मभिर्येजि=त्वा यथोर्वारुकं कर्कट्यादेः फलं पक्वं सद्बन्धनाद्वृन्तादनायासेन मुच्यते तथा वयं **मृत्योः** सकाशान्**मुक्षीय** मुक्षीमहि मुक्ता भवेम । "व्यत्ययो बहुलम्" इति वचनव्यत्ययः । **अमृतान्**मोक्षान्**मा** मुक्षीमहि न वियुज्यामहे ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यकदशमप्रपाठके नारायणीयापरनामधेययुक्तायां याज्ञिक्यामुपनिषदि भाष्ये षट्पञ्चाशोऽनुवाकः ॥ ५६ ॥

---

* गन्धस्येदुत्पूतिसुसुरभिभ्य इति सूत्रेणेति भावः । = इष्ट्वेति पाठ्यम् ।

१ घ. ७२ । २ च. ७२ ।

अथ सप्तपञ्चाशोऽनुवाकः ।

ये ते सहस्रमयुतं पाशा मृत्यो मर्त्याय हन्तवे ।
तान्यज्ञस्य मायया सर्वानवयजामहे ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यकदशमप्रपाठके नारायणोपनिषदि सप्तपञ्चाशोऽनुवाकः ॥ ५७ ॥

य इति । हे मृत्यो मर्त्याय व्यत्ययेन[मर्त्यं] प्राणिमात्रं हन्तवे हन्तुं सहस्रमयुतमेतत्संख्याका ये ते तव पाशाः सन्ति तान्सर्वान्पाशानवयजामहे निवारयामः । अत्रोपसर्गयोगेण यजतेर्भिन्नार्थतोच्यते । केन साधनेन । यज्ञस्य सत्कर्मानुष्ठानस्य मायया मिषेण च्छद्मना । पुत्रजन्मच्छद्मना पैतृकमृणमद्या(पा)करोतीत्यादिवदयं प्रयोगो द्रष्टव्यः । यद्वा यज्ञस्य सत्कर्मानुष्ठानस्य मायया शक्त्या बलेन । मायाशब्दः शक्तिपर्यायः ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यकदशमप्रपाठके नारायणीयापरनामधेययुक्तायां याज्ञिक्यामुपनिषदि भाष्ये सप्तपञ्चाशोऽनुवाकः ॥ ५७ ॥

अथाष्टपञ्चाशोऽनुवाकः ।

मृत्यवे स्वाहा मृत्यवे स्वाहा ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यकदशमप्रपाठके नारायणोपनिषद्यष्टपञ्चाशोऽनुवाकः ॥ ५८ ॥

मृत्यव इति । अथेदानीं पापमात्रनिबर्हणार्था होममन्त्रा उच्यन्ते तादृग्लिङ्गप्रतीतेः । यो नानाविधपातक[वा]न्पापनिबर्हणकामवांश्च तेन स्वगृह्योक्तविधिना पञ्चभू[त]संस्काराद्याज्यसंस्कारान्तं कर्म कृत्वैतैर्वक्ष्यमाणमन्त्रैः प्रधानाहुतयः कर्तव्याः । स्विष्टकृदाद्यन्यत्समानम् । मन्त्रस्यायमर्थः । येन म्रियन्ते प्राणिनः स मृत्युस्तस्मै [ मृत्यवे ] स्वाहा सकृद्गृहीतमिदमाज्यं सुहुतमस्तु । आहुतिद्वयद्योतनार्था मन्त्रावृत्तिः । इदमाहुतिद्वयं मृत्युदेवत्यम् ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यकदशमप्रपाठके नारायणीयापरनामधेययुक्तायां याज्ञिक्यामुपनिषदि भाष्येऽष्टपञ्चाशोऽनुवाकः ॥ ५८ ॥

अथैकोनषष्टितमोऽनुवाकः ।

देवकृतस्यैनसोऽवयजनमसि स्वाहा । मनुष्यकृतस्यैनसोऽवयजनमसि स्वाहा । पितृकृतस्यैनसोऽवयजनमसि स्वाहा । आत्मकृतस्यैनसोऽवयजनमसि स्वाहा । अन्यकृतस्यैनसोऽवयजनमसि स्वाहा । अस्मत्कृतस्यैनसोऽवयजनमसि स्वाहा । यद्दिवा च नक्तं चैनश्चकृम तस्यावयजनमसि स्वाहा । यत्स्वपन्तश्च जाग्रतश्चैनश्चकृम तस्यावयजनमसि स्वाहा । यत्सुषुप्तश्च जाग्रतश्चैनश्चकृम तस्यावयजनमसि स्वाहा । यद्विद्वा्ंसश्चाविद्वा्ंसश्चैनश्चकृम तस्यावयजनमसि स्वाहा । एनस एनसोऽवयजनमसि स्वाहा ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके दशमप्रपाठके नारायणोपनिषद्येकोनषष्टितमोऽनुवाकः ॥ ५९ ॥

**देवकृतस्येति** । देवकृतस्यैनस इत्यादिषु यद्वो देवा इत्यतः प्राक्तनेष्वेकादशसु मन्त्रेषु हविर्ग्रहीतृदेवताया अप्रतीतेरग्निर्देवतात्वेनाङ्गीकर्तव्यः, सर्वदेवताप्रधानत्वादग्नेः । तत्र क्रमेण षड्विधुरवैश्वदेवेऽपि विनियुक्ताः । तथा चायमर्थः । हे आज्य त्वमेनसः पापस्यावयजनं निवारकमसि । अवपूर्वो यजतिर्निवारणार्थः सर्वत्र । तदर्थमिदमाज्यमग्नये **स्वाहा** सुहुतमस्तु । यद्वा हेऽग्ने त्वमेनसोऽवयजनं निवारकोऽसि । लिङ्गव्यत्ययः । तदर्थमिदमाज्यं तुभ्यं स्वाहा सुहुतमस्तु । एवमुत्तरत्रापि वाक्यार्थः । एनसः कर्मभूतस्य । देवाय कृतं देवकृतं तस्य **देवकृतस्य** । दैवेषु कर्मस्वङ्गवैकल्यादिरूपस्येत्यर्थः । देवैर्द्योतनशीलैरस्मदिन्द्रियैः कृतस्येति वा । मनुष्यार्थं कृतं मनुष्यकृतं तस्य भिक्षारान्नप्रदानाद्यभावरूपस्य । **पितृकृतस्य** पैतृकेषु कर्मस्वङ्गवैकल्यादिरूपस्य । **आत्मकृतस्य** स्वयंकृतस्यागम्य(म्या)गमनादेः । **अन्यकृतस्या**स्मद्भार्यादिकृतस्य । **अस्मत्कृतस्या**स्मज्ज्ञातिवर्गकृतस्य । किंच **दिवा नक्तं** रात्रिंदिवं **यदेनश्चकृम** कृतवन्तस्तस्य । **स्वपन्तः** स्वप्नावस्थामनुभवन्तो **जाग्रतो** जागरूकाश्च **यदेनो** नानाविधं पापं **चकृम** तस्य । **सुषुप्तो** व्यत्ययेन सुषुप्ताः सुषुप्त्यवस्थामनुभवन्तः सन्तो **यदेनश्चकृम**

तस्य । जाग्रदवस्थायां पापबाहुल्यस्य संभावितत्वान्मन्त्रद्वये जाग्रच्छब्दप्रयोगः । सुषुप्त्यवस्थायामपि किंचित्सूक्ष्मतरं पापं द्रष्टव्यम् । विद्वांसोऽविद्वांसश्च वयं यदेनश्चकृम तस्य । ज्ञानाज्ञानपूर्वकृतस्येत्यर्थः । एनस उपपातकादेरप्यधिकं यदेनो महापातकादि तस्य । यद्वा—एनसो विनो लोपश्छान्दसः । एनस्विनः पुरुषात्सकाशाद्यदेनो जातं तस्य । "तत्संसर्गी तु पञ्चमः" इति शास्त्रसिद्धस्य महापापस्येत्यर्थः ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यकदशमप्रपाठके नारायणीयापरनामधेययुक्तायां याज्ञिक्यामुपनिषदि भाष्य एकोनषष्टितमोऽनुवाकः ॥ ५९ ॥

अथ षष्टितमोऽनुवाकः ।

यद्वो देवाश्चकृम जिह्वया गुरुमनसो वा प्रयुती देवहेडनम् । अरा वायो नो अभि दुच्छुनायते तस्मिन्तदेनो वसवो निधेतन स्वाहा ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यकदशमप्रपाठके नारायणोपनिषदि षष्टितमोऽनुवाकः ॥ ६० ॥

यदिति । [वसवो वासयितारो] गुरु गम्भीरं मनो येषां ते गुरुमनसो हे गुरुमनसः सर्वे देवा वो युष्मानुद्दिश्य यद्देवहेडनं देवविडम्बनमयमधिकोऽयं न्यून इत्यादि देवगर्हणं जिह्वया वाचा वयं चकृम तदेनो यूयं तस्मिन्पूर्वोक्ते गम्भीरे युष्मदीयमनसि निधेतन । स्वार्थे तनप् । स्थापयत, न तु वाचोद्घाटयत । अस्मदपराधं सहध्वमिति यावत् । देवहेडनं कीदृशम् । प्रयुतसंख्याऽस्यास्तीति प्रयुति । दीर्घश्छान्दसः । असंख्याकमित्यर्थः । वाशब्दो निश्चये । अगुरुमनस इति वयमित्यस्य विशेषणं वा । गुरुषु जगत्पूज्येषु देवेषु भक्तियुक्तं मनो येषां ते गुरुमनसः । न गुरुमनसोऽगुरुमनसः । एवंविधाः सन्तो वयं यद्देवहेडनं चकृम । अगुरुमनस्कत्वादेव देवहेडनप्रसक्तिः । किंच हे वायो सप्तमरुत्प्रधाना हे मरुत उपवायवो नोऽस्मत्संबन्धि यदेनोऽभिदुच्छुनायतेऽभितो दुष्टशुनवदाचरति किल दुष्टशुनवदपवित्रं तदेनस्तस्मिन्नित्यादि पुनर्योजनीयम् । कथंभूतमेनः । अरा व्यत्ययेनारं मरणनिव(र्व?)र्तकम् । तदर्थमिदमाज्यं लिङ्गोक्तदेवताभ्यः स्वाहा सुहुतमस्तु ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यकदशमप्रपाठके नारायणीयापरनामधेययुक्तायां याज्ञिक्यामुपनिषदि भाष्ये षष्टितमोऽनुवाकः ॥ ६० ॥

अथैकषष्टितमोऽनुवाकः ।

कामोऽकार्षीन्नमो नमः । कामोऽकार्षीत्कामः करोति नाहं करोमि कामः कर्ता नाहं कर्ता कामः कारयिता नाहं कारयिता एष ते काम कामाय स्वाहा ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यकदशमप्रपाठके नारायणोपनिषद्येकषष्टितमोऽनुवाकः ॥ ६१ ॥

काम इति । हे त्रयस्त्रिंशत्कोटिदेवता युष्मभ्यं नमो नमः । पूर्वोक्तानि पापानि कामो मकरध्वजोऽकार्षीच्चकार । कामोऽकार्षीदिति पुनरुक्तिः(क्तेः) स्वकर्तृ[त्व]निवृत्तिः । काम एव करोति नाहं करोमि । काम एव कर्ता नाहं कर्ता । अत्र हेतुरुच्यते । काम एव सर्वाणि जगानि ( जगन्ति ) वशीकृत्य कारयिता भवति नाहं कारयिताऽस्वतन्त्रत्वान्मनुष्याणाम् । हे काम तत्पापनिवृत्त्यर्थं ते तुभ्यमेष आज्यभागः स्वाहा सुहुतोऽस्तु । कथंभूताय तुभ्यं कामाय कमनीयविग्रहाय ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यकदशमप्रपाठके नारायणीयापरनामधेययुक्तायां याज्ञिक्यामुपनिषदि भाष्य एकषष्टितमोऽनुवाकः ॥ ६१ ॥

अथ द्विषष्टितमोऽनुवाकः ।

मन्युरकार्षीन्नमो नमः । मन्युरकार्षीन्मन्युः करोति नाहं करोमि मन्युः कर्ता नाहं कर्ता मन्युः कारयिता नाहं कारयिता एष ते मन्यो मन्यवे स्वाहा ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यकदशमप्रपाठके नारायणोपनिषदि द्विषष्टितमोऽनुवाकः ॥ ६२ ॥

मन्युरिति । मन्युः कोपाभिमानी देवः । मन्यवे क्रोधरूपाय । अन्यत्पूर्ववत् । अत्र मीमांसा—कारयितुरेव पापं न कर्तुरनिच्छतः । * यदि स्वयमपीच्छत्यन्योऽपि कारयति तर्ह्युभयोरपि पापलेपः । यथा कश्चिद्यवनोऽनिच्छन्तमपि कंचित्पापमकारयत् । ननु बलात्कारितपापस्यापि धर्मशास्त्रेषु प्रायश्चित्तं श्रूयत इति चेन्न । स्वयंकृतप्रायश्चित्तमपेक्ष्य (?) बलात्कारितपापस्य(स्या)+ त्यल्पत्वात् । किंचाऽऽभ्यां मन्त्राभ्यां पुरुषो हस्त-

* अस्या अग्रिमायाश्च फक्किकाया व्यत्यासेन पाठो युक्तः । + प्रायश्चित्तस्येत्यनुषङ्गः ।

मुद्धृत्य रोदिति काममन्यू बलात्पापं मां कारयतोऽनिच्छन्तमपि किं करोमि क्व गच्छामि कस्ताभ्यां त्रायते मामिति । तस्माद्रोदनपश्चात्तापादिवशादेवमवगम्यते कारयितुरेव पापं न कर्तुरिति ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यकदशमप्रपाठके नारायणीयापरनामधेययुक्तायां याज्ञिक्यामुपनिषदि भाष्ये द्विषष्टितमोऽनुवाकः ॥ ६२ ॥

अथ त्रिषष्टितमोऽनुवाकः ।

अतः परं सर्वपापनिबर्हणार्थाः सर्वोत्कृष्टचतुर्थाश्रमकरणाङ्गभूते विरा(री)जाख्यहोमे कर्माणि विनियुक्ता मन्त्राः पठ्यन्ते तादृग्लिङ्गप्रतिभानात् । सर्वपापनिबर्हणद्वारा संन्यासं करिष्यमाणो यथाशास्त्रोक्ताधिकारी स्वगृह्योक्तविधिना पञ्चभूतसंस्काराद्याज्यसंस्कारान्तं कर्म कृत्वैतैर्वक्ष्यमाणमन्त्रैः प्रधानाहुतीः कुर्यात् । स्विष्टकृदाद्यन्यत्समानम् । सर्वत्र हविर्ग्राहिणी देवता तु परमात्मैव । [ तत्र प्रथमो मन्त्रः—]

**तिलाञ्जुहोमि सरसाꣳ सपिष्टान्गन्धार मम चित्ते रमन्तु स्वाहा, इति ।**

मन्त्राणाम( न्त्रस्या )यमर्थः । गन्ध उत्तमदेहसौरभ्यमस्यास्तीति गन्धारस्तत्संबुद्धौ हे **गन्धार** परमात्मंस्त्वदर्थं **तिलाञ्जुहोमि** । कथंभूतान्**सरसान्न** तु शुष्कान्**सपिष्टान्**सक्त्वादिपिष्टान्तरलेशसहितान् । किंच तद्धोमफलत्वेन त्वदीयाः परमपावना गुणा **मम चित्ते रमन्तु** रमन्ताम् । **स्वा**हेदं प्रकृतं हविस्त्वामुद्दिश्य सुहुतमस्तु । एवमेव स्वाहाशब्दार्थ उत्तरत्रापि ।

**गावो हिरण्यं धनमन्नपानꣳ सर्वेषाꣳ श्रियै स्वाहा ।**

**गाव इति** । हे परमात्मंस्त्वत्प्रसादाद्गावो **हिरण्यं धनमन्नपान**मेतानि मम सिध्यन्तु । किंच **सर्वेषां** भोग्यपदार्थानां प्राप्तिरस्तु । किंच **श्रियै** गजान्तलक्ष्मीसिद्ध्यर्थं हविरिदं तुभ्यं **स्वाहा** ।

**श्रियं च लक्ष्मिं च पुष्टिं च कीर्तिं चाऽऽनृण्यताम् ।**

**ब्रह्मण्यं बहुपुत्रताम् । श्रद्धामेधे प्रजाः संददातु स्वाहा ॥**

**इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यकदशमप्रपाठके नारायणोपनिषदि त्रिषष्टितमोऽनुवाकः ॥ ६३ ॥**

**श्रियमिति** । **श्रियं** राज्यलक्ष्मीं *लक्ष्मीं मोक्षलक्ष्मीं **पुष्टिं** शरीरादेः **कीर्तिं** त्रैलो-

* मूले छान्दसो ह्रस्व इति सूचयितुं दैर्घ्येण निर्देशः ।

क्यविदितकल्याणगुणवत्त्वमानृण्यतां देवर्षिपितृऋणत्रयनिर्मुक्तत्वं ब्रह्मण्यं सर्वब्राह्मणोत्तमत्वं बहुपुत्रतां श्रद्धामेधे गुरुवेदान्तवाक्यविश्वासवेदशास्त्रार्थग्रहणधारणपटुत्वे प्रज्ञा दुहित्राद्या भगवान्परमात्मा मह्यं सम्यग्ददातु ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यकदशमप्रपाठके नारायणीयापरनामधेययुक्तायां याज्ञिक्यामुपनिषदि भाष्ये त्रिषष्टि*तमोऽनुवाकः ॥ ६३ ॥

अथ चतुःषष्टितमोऽनुवाकः ।

तिलाः कृष्णास्तिलाः श्वेतास्तिलाः सौम्या वशानुगाः ।
तिलाः पुनन्तु मे पापं यत्किंचिद्दुरितं मयि स्वाहा ।

तिला इति । हे परमात्मंस्त्वदाज्ञया मम यत्किंचिद्दुरितं तत्पापं दूरीकृत्य मे मां तिलाः पुनन्तु । तदर्थमिदं हविस्तुभ्यं स्वाहा । तिलाः कथंभूताः । केचित्कृष्णाः केचिच्छ्वेताः उभयविधाः सर्वेऽपि सौम्या रोगाद्युपद्रवाप्रदाः । वशानुगा अस्मद्वशवर्तिनः । स्वधर्मोपार्जितं द्रव्यं दत्त्वा विक्रीयाऽऽनीता न त्वनुशासनचौर्यादिनाऽऽनीता इत्यर्थः । अचेतनानां तिलानां पापनाशनसामर्थ्यं त्वदाज्ञयेति भावः+ ।

चोरस्यान्नं नवश्राद्धं ब्रह्महा गुरुतल्पगः ।
गोस्तेयꣳ सुरापानं भ्रूणहत्या तिला शान्तिꣳ शमयन्तु स्वाहा ।

चोरस्येति । हे परमात्मंस्त्वदाज्ञया तिला= एतन्मन्त्रोक्तानां पापानां शान्तिं विनाशं शमयन्तु कुर्वन्तु तदर्थमिदं हविस्तुभ्यं स्वाहा । नवश्राद्धमेकोद्दिष्टाद्यन्नभोजनम् । भ्रूणो गर्भः शिशुर्वीरो वा । स्पष्टमन्यत्× ।

श्रीश्च लक्ष्मीश्च पुष्टीश्च कीर्तिं चाऽऽनृण्यताम् । ब्रह्मण्यं बहुपुत्रताम् । श्रद्धामेधे प्रज्ञा तु जातवेदः संददातु स्वाहा ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यकदशमप्रपाठके नारायणोपनिषदि चतुःषष्टितमोऽनुवाकः ॥ ६४ ॥

श्रीश्चेति । हे जातवेदः सर्ववेदस्य धनस्य वोत्पादक ( ? ) हे परमात्मंस्तत्सर्वं

छ. * पुस्तकेऽत्र (६४) तमानुवाकसमाप्तिर्दृश्यते । + एतदग्रे छ. पुस्तके (६५) तमानुवाकसमाप्तिर्दृश्यते । सा चानुवाकपरिगणनविरुद्धा । = छान्दसत्वाद्विसर्गलोपो मूले । × एतदग्रे छ. पुस्तके (६६) तमानुवाकसमाप्तिर्दृश्यते । साऽनुवाकपरिगणनविरुद्धा ।

भवान्मह्यं सन्ध्यद्दातु । किं तत् । श्रीश्रेत्यादि, पदार्था व्याख्याताः । मेधा कुशाग्र-बुद्धित्वम् । तुरेवार्थे । चाः समुच्चये ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यकदशमप्रपाठके नारायणीयापरनामधेययुक्तायां याज्ञिक्यामुपनिषदि भाष्ये चतुःषष्टितमोऽनुवाकः ॥ ६४ * ॥

अथ पञ्चषष्टितमोऽनुवाकः ।

प्राणापानव्यानोदानसमाना मे शुध्यन्तां ज्योतिरहं विरजा विपाप्मा भूयास९ स्वाहा ।

प्राणापानव्यानोदानसमाना इति । प्राणादयः पञ्च वायवः प्रसिद्धास्ते सर्वेऽप्यनेनाऽऽज्यहोमेन शुद्धा भवन्तु । य(त)तोऽहं विपाप्मा प्रतिबन्धकपातकरहितो विरजाः पापकारणीभूतरजोगुणेनापि रहितः सन्यज्ज्योतिर्जगत्कारणं परब्रह्म तद्रूपस्तु भूयासम् । तदर्थमिदमाज्यं [ स्वाहा ] सुहुतमस्तु = ।

वाङ्मनश्चक्षुः श्रोत्रजिह्वाघ्राणरेतो बुद्ध्याकूतिः संकल्पा मे शुध्यन्तां ज्योतिरहं विरजा विपाप्मा भूयास९ स्वाहा ।

वागिति । वागादीनीन्द्रियाणि । रेतो गुह्येन्द्रियम् । मनःशब्दवाच्यस्यैवान्तःकरणस्य निश्चयात्मिका वृत्तिर्बुद्धिः । अनिश्चयरूपा वृत्तिराकूतिः । इदं समीचीनमिति-कल्पनारूपा वृत्तिः संकल्पः । अन्यत्पूर्ववत् + ।

त्वक्चर्ममाꣳसरुधिरमेदोमज्जास्नायवोऽस्थीनि मे शुध्यन्तां ज्योतिरहं विरजा विपाप्मा भूयास९ स्वाहा ।

त्वक्चर्मेत्यादि । अत्र स्थूलशरीरगतानां सप्तधातूनां शुद्धिरुच्यते । एकस्यैव धातोर्बाह्यान्तरभागविवक्षया त्वक्चर्मशब्दौ प्रयुक्तौ । अन्यत्पूर्ववत् × ।

शिरःपाणिपादपार्श्वपृष्ठोरूदरजङ्घशिश्नोपस्थपायवो मे शुध्यन्तां ज्योतिरहं विरजा विपाप्मा भूयास९ स्वाहा ।

शिरःपाणीत्यादि । अत्रापि स्थूलशरीरावयवानां शिरःपाण्यादीनां शुद्धिरुच्यते । लिङ्ग(लिङ्गाण्ड)भेदविवक्षया शिश्नोपस्थशब्दौ द्वौ द्रष्टव्यौ । अन्यत्पूर्ववत् ⊙ ।

---

* इयं चानुवाकपरिगणनानुरोधेनानुवाकसमाप्तिः । छ. पुस्तकानुरोधेन तु ( ६७ ) तमानुवाकसमाप्तिः । = छ. पुस्तकेऽत्र ( ६८ ) तमानुवाकसमाप्तिः । इयं च मूलोक्तानुवाकपरिगणनविरुद्धा । + छ. पुस्तकेऽत्र ( ६९ ) तमानुवाकसमाप्तिः । इयं च मूलोक्तानुवाकपरिगणनविरुद्धा । × एतदग्रे छ. पुस्तके ( ७० ) तमानुवाकसमाप्तिर्मूलोक्तानुवाकपरिगणनविरुद्धा । ⊙ एतदग्रे छ. पुस्तके (७१) तमानुवाकसमाप्तिः, सा च मूलोक्तानुवाकपरिगणनविरुद्धा ।

उत्तिष्ठ पुरुष हरित पिङ्गल लोहिताक्षि देहि देहि ददापयिता मे शुध्यन्तां ज्योतिरहं विरजा विपाप्मा भूयासꣳ स्वाहा ।

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यकदशमप्रपाठके नारायणोपनिषदि पञ्चषष्टितमोऽनुवाकः ॥ ६५ ॥

उत्तिष्ठेति । शुद्धिहेतुत्वेनात्र सर्वकर्मनिष्पादकं वह्निशरीरोपाधिकं [ परमात्मानं ] प्रार्थयते—पुरुष पुरि [व ह्नि]शरीरे शयान हे परमात्मन्नुत्तिष्ठ, औदासीन्यं परित्यज्य मदनुग्रहार्थमुद्युक्तो भव । संबुद्ध्यन्तपुरुषशब्दस्यैव हरितादीनि त्रीणि पदानि विशेषणानि । हे हरित प्रतिबन्धहरणकुशल । हे पिङ्गल पिङ्गलवर्ण । लोहिताक्षि रक्तनयन । देहि देहि पुनः पुनः शुद्धिं मे प्रयच्छ । ददापयिताऽऽचार्यमुखात्तत्त्वविज्ञानस्यातिशयेन दापयिता भवेति शेषः । तस्य* दापयितुर्ज्ञानस्योत्पत्तये मे मदीयाश्चित्तवृत्तयः शुध्यन्ताम् । ज्योतिरहमित्यादि पूर्ववत्+ ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यकदशमप्रपाठके नारायणीयापरनामधेययुक्तायां याज्ञिक्यामुपनिषदि भाष्ये पञ्चषष्टितमोऽनुवाकः ॥ ६५ ॥

अथ षट्षष्टितमोऽनुवाकः ।

पृथिव्यापस्तेजो वायुराकाशा मे शुध्यन्तां ज्योतिरहं विरजा विपाप्मा भूयासꣳ स्वाहा ।

पृथिवीति । शरीरस्योपादानकारणानि पृथिव्यादीनि । पूर्ववदन्यत् = ।

शब्दस्पर्शरूपरसगन्धा मे शुध्यन्तां ज्योतिरहं विरजा विपाप्मा भूयासꣳ स्वाहा ।

शब्दस्पर्शेत्यादि । शरीरोपादानपञ्चमहाभूतेष्वाकाशादिषु वर्तमाना गुणाः शब्दादयः । पूर्ववदन्यत् × ।

मनोवाक्कायकर्माणि मे शुध्यन्तां ज्योतिरहं विरजा विपाप्मा भूयासꣳ स्वाहा ।

* दापयितुः सकाशात्तस्य ज्ञानस्य पूर्वोक्ततत्त्वविज्ञानस्योत्पत्तय इति संबन्धः । + एतदग्रे छ. पुस्तके ( ७२ ) तमानुवाकसमाप्तिर्वर्तते । सा च मूलोक्तानुवाकपरिगणनविरुद्धा । = एतदग्रे छ. पुस्तके ( ७३ ) तमानुवाकसमाप्तिर्दृश्यते । सा च मूलोक्तानुवाकपरिगणनविरुद्धा । × एतदग्रे छ. पुस्तके ( ७४ ) तमानुवाकसमाप्तिर्दृश्यते सा च मूलोक्तानुवाकपरिगणनाविरुद्धा ।

मन इति । मनोवाक्कायानां कर्माणि । अन्यत्पूर्ववत्* ।

अव्यक्तभावैरहंकारैर्ज्योतिरहं विरजा
विपाप्मा भूयासꣳ स्वाहा ।

अव्यक्तभावैरिति । हे परमात्मंस्त्वत्प्रसादादहंकारैर्व्यर्थगर्वैर्विमुक्तो भूयासम् । कथंभूतैरव्यक्तभावैः । लोकानां निकटेऽप्रकटिताभिप्रायैः । पूर्ववद+न्यत् ।

आत्मा मे शुध्यन्तां ज्योतिरहं विरजा
विपाप्मा भूयासꣳ स्वाहा ।

आत्मेति । म आत्मा शरीरं शुध्यन्तां शुद्धो भवतु । प्रायःपाठात्सर्वत्र बहुवचनप्रयोगश्छान्दसः ।

अन्तरात्मा मे शुध्यन्तां ज्योतिरहं
विरजा विपाप्मा भूयासꣳ स्वाहा ।

अन्तरात्मेति । अन्तरात्माऽन्तःकरणम् । अन्यत्पूर्ववत्= ।

परमात्मा मे शुध्यन्तां ज्योतिरहं विरजा
विपाप्मा भूयासꣳ स्वाहा ।

परमात्मेति । [ परमात्मा ] निखिलजगत्प्रभुः । अन्यत्पूर्ववत् । ननु परमात्मनो नित्यशुद्धत्वात्कथं तच्छुद्धिः प्रार्थ्यत इति चेन्न । अविद्यादोपवशेन परमात्मनोऽप्रतिभानमशुद्धिरित्युच्यते । स्वात्मत्वेन प्रतिभानं शुद्धिरिति विशेषाङ्गीकारात्÷ ।

क्षुधे स्वाहा ।

क्षुध इति । क्षुदधिष्ठानदेवतायै स्वाहा । एतदादिवक्ष्यमाणपञ्चमन्त्रेषु लिङ्गोक्ता देवता हविर्भुजः ।

क्षुत्पिपासाय स्वाहा ।

क्षुत्पिपासायेति । एतदधिष्ठानदेवताभ्यां स्वाहा ।

विविट्यै स्वाहा ।

---

* एतदग्रे छ. पुस्तके ( ७५ ) तमानुवाकसमाप्तिर्दृश्यते । सा च मूलोक्तानुवाकपरिगणनविरुद्धा । + एतदग्रे छ. पुस्तके ( ७६ ) तमानुवाकसमाप्तिर्दृश्यते । सा च मूलोक्तानुवाकपरिगणनविरुद्धा । = एतदग्रे छ पुस्तके ( ७७ ) तमानुवाकसमाप्तिर्दृश्यते । सा च मूलोक्तानुवाकपरिगणनविरुद्धा । ÷ एतदग्रे छ. पुस्तके ( ७८ ) तमानुवाकसमाप्तिर्दृश्यते, सा च मूलोक्तानुवाकपरिगणनविरुद्धा ।

विविट्‌या इति । "विषॢ व्याप्तौ" इति धातोरुत्पन्नोऽयं शब्दः । विशेषेण विष्टिर्व्याप्तिर्यस्य ब्रह्मणस्तद्विविट्टिः । छान्दसः षकारस्य टकारः । तादृशं ब्रह्मोद्दिश्य स्वाहा हुतमस्तु ।

ऋग्विधानाय स्वाहा ।

ऋग्विधानायेति । ऋचो विदधाति करोत्युत्पादयतीति ऋग्विधानः परमात्मा तस्मै स्वाहा हुतमस्तु ।

कषोत्काय स्वाहा ।

कषोत्कायेति । "कष करणे" [इति] धातुः । कष्यते क्रियत इति कषो नामरूपकर्मात्मकः कार्यप्रपञ्चस्तस्मिन्नुत्क उपकर्तुमुत्सुकः कषोत्कः परमेश्वरस्तादृशाय सृष्ट्याद्युन्मुखाय परमेश्वराय स्वाहा ।

क्षुत्पिपासामलं ज्येष्ठामलक्ष्मीर्नाशयाम्यहम् ।
अभूतिमसमृद्धिं च *सर्वान्निर्णुद मे पाप्मान स्वाहा ।

क्षुत्पिपासामलमिति । हे परमात्मन्नहं त्वत्प्रसादात्क्षुत्पिपासारूपं मलं लक्ष्म्या ज्येष्ठामग्रजामलक्ष्मीरलक्ष्मीमभूतिमनैश्वर्यमसमृद्धिं धनधान्यादिसमृद्ध्यभावमेतान्सर्वान्नाशयामि । किंच त्वं मे मदीयं पाप्मानं निर्णुद विनाशय । तदर्थं स्वाहा तुभ्यं सुहुतमस्तु ।

अन्नमयप्राणमयमनोमयविज्ञानमयमानन्दमयमात्मा मे
शुध्यन्तां ज्योतिरहं विरजा विपाप्मा भूयास स्वाहा ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यकदशमप्रपाठके नारायणोपनिषदि
षट्षष्टितमोऽनुवाकः ॥ ६६ ॥

अन्नमयेत्यादि । अन्नमयादयः पञ्च कोशा वारुण्यामुपनिषद्युक्ताः । पूर्ववदन्यत् ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यकदशमप्रपाठके नारायणीयापरनामधेययुक्तायां याज्ञिक्यामुपनिषदि भाष्ये षट्षष्टितमोऽनुवाकः ॥ ६६ ॥

====

* अत्र घ. पुस्तके सर्वा निर्णुदेत्येव पाठः ।

अथ सप्तषष्टितमोऽनुवाकः ।

इतः परं वैश्वदेवकर्मणि विनियुक्ताः षड्होममन्त्रा व्याख्यायन्ते—

अग्नये स्वाहा । विश्वेभ्यो देवेभ्यः स्वाहा । ध्रुवाय भूमाय स्वाहा । ध्रुवक्षितये स्वाहा । अच्युतक्षितये स्वाहा । अग्नये स्विष्टकृते स्वाहा, इति ।

अग्निविश्वे(श्व)देवध्रुवाः प्रसिद्धाः । ध्रुवा क्षितिरवस्थितिर्यस्य सोऽयं ध्रुवक्षितिः । अच्युतक्षितिरपि तादृशः । एतौ देवविशेषौ । कदाचित्प्रमादालस्यादिना दुरिष्टमपि कर्म स्विष्टं करोतीति स्विष्टकृत् । एतद्विशेषणोऽप्यग्निः प्रसिद्धः । एताभ्यो देवताभ्यः प्रकृतमन्त्रादि हविः स्वाहा सुहुतमस्तु ।

इतः परं बलिहरणकर्मणि विनियुक्ता मन्त्रा व्याख्यायन्ते—

धर्माय स्वाहा । अधर्माय स्वाहा । अद्भ्यः स्वाहा । ओषधिवनस्पतिभ्यः स्वाहा । रक्षोदेवजनेभ्यः स्वाहा । गृह्याभ्यः स्वाहा । अवसानेभ्यः स्वाहा । अवसानपतिभ्यः स्वाहा । सर्वभूतेभ्यः स्वाहा । कामाय स्वाहा । अन्तरिक्षाय स्वाहा । यदेजति जगति यच्च चेष्टति नाम्नो भागोऽयं नाम्ने स्वाहा । पृथिव्यै स्वाहा । अन्तरिक्षाय स्वाहा । दिवे स्वाहा । सूर्याय स्वाहा । चन्द्रमसे स्वाहा । नक्षत्रेभ्यः स्वाहा । इन्द्राय स्वाहा । बृहस्पतये स्वाहा । प्रजापतये स्वाहा । ब्रह्मणे स्वाहा । स्वधा पितृभ्यः स्वाहा । नमो रुद्राय पशुपतये स्वाहा । देवेभ्यः स्वाहा । पितृभ्यः स्वधाऽस्तु । भूतेभ्यो नमः । मनुष्येभ्यो हन्ता । प्रजापतये स्वाहा । परमेष्ठिने स्वाहा, इति ।

धर्माधर्मावोषधिवनस्पतिदेवताः प्रसिद्धाः । रक्षांसि [प्रसिद्धानि । ] देवजना देवानां भृत्यवर्गाः । रक्षांसि च देवजनाश्च रक्षोदेवजनाः । गृहे विद्यमाना गृह्याः कुलदेवताः । गृहप्रान्तदेशवर्तमाना देवता अवसानशब्देनोच्यन्ते* । सर्वभूतशब्देन पञ्च

* अवसानपतिशब्दस्य व्याख्यानं स्पष्टत्वादुपेक्षितम् । अवसानपतिशब्देन गृहप्रान्तदेशवर्तमा- देवतास्वामिनो ग्राह्याः ।

भूतानि भूतविशेषा वो(षाश्चो)च्यन्ते । **कामः** प्रसिद्धस्त्रिलोकीव्यामोहको रतिपतिः । **अन्तरिक्ष**शब्देनान्तरिक्षलोकस्थवायुर्लक्ष्यते । द्वितीयान्तरिक्षशब्देन मध्यमलोकाधिष्ठान-देवता कथ्यते । वैदिकशब्दराशिवाचिकेन नामशब्देन तद्वेद्यः परमात्मा लक्ष्यते । तथा चायमर्थः—**जगति** ब्रह्माण्डे यद्वृक्षादिरूपमेजति वाय्वादिनिमित्तेन कम्पते **यच्च** मनुष्यादि **चेष्टति** गमनागमनादिचेष्टां करोति । औपलक्षण्येन पर्वतादिक-मपि गृह्यते । अयं सर्वोऽपि पदार्थसमूहो **नाम्नः** परमात्मनो **भागो** भक्षणी-योंऽशः, प्रलयकाले सर्वस्य जगतस्तेनोपसंह्रियमाणत्वात् । सिद्धान्ते चैकस्यैव पर-मात्मनो निखिलजगदुत्पत्तिस्थितिलयकर्तृत्वाङ्गीकारात् । तथाच तस्मै **नाम्ने** जगत्संहर्त्रे परमात्मने **स्वाहा** । बलिहरणरूपमिदं हविर्भूमौ दत्तमस्तु । **द्यावापृ-थिव्यौ** प्रसिद्धे । **सूर्यचन्द्रनक्षत्रेन्द्रबृहस्पतयः** प्रसिद्धाः । **प्रजापतिब्रह्माणौ** विरा-ड्ढिरण्यगर्भौ । अग्निष्वात्तादिभ्यः **पितृभ्यः स्वधा**, [**स्वाहा च**](?), इदमन्नं बलिह-रणकर्मार्हं दत्तमस्तु । [**रुद्राय नमः**] **स्वाहा** चेदमन्नं दत्तमस्तु । कथंभूताय, **पशुपतये** ब्रह्मादिस्थावरान्ताधिपतये । इन्द्रादिभ्यो **देवेभ्यः स्वाहा पितृभ्यः स्वधाऽस्तु** । भागान्तरद्योतनार्थं मन्त्रान्तरम् । **भूतेभ्यो** देवविशेषेभ्यो **नमः** । स्वाहाशब्दोऽप्यनुष-ञ्जनीयोऽन्नदानसिद्धये । यद्वा नमःशब्द एव भूतानामन्नदानवाचको द्रष्टव्यः । **मनु-ष्येभ्यो हन्ता,** इदमन्नं दत्तमस्तु । स्वाहास्वधानमोहन्तकारैश्चतुर्भिर्निपातैर्देवपितृभूत-मनुष्याणाम(ष्येभ्योऽ)न्नं दातव्यम् । एतच्छब्दोच्चारणपूर्वकं हि तेषामन्नदाने भूयसी तृप्तिः प्रियोक्तिपूर्वकमिव ब्राह्मणभोजनेन ब्राह्मणानाम् । **प्रजापतये स्वाहा** । भागान्त-रद्योतनार्थं मन्त्रान्तरम् । परमेष्ठी चतुर्मुखो ब्रह्मा ।

> यथा कूपः शतधारः सहस्रधारो अक्षितः ।
> एवा मे अस्तु धान्यꣳ सहस्रधारमक्षितम् ॥
> धनधान्यै स्वाहा ॥

यथेति । **यथा** येन प्रकारेण **कूप** उदकाधारविशेषः **शतधारः सहस्रधारो**ऽने-कोदकधारोपेतो बहुधोदकग्रहणेऽप्यक्षितोऽक्षय्यश्च भवति, **एव**ैवं मह्यं परमात्मनः प्रसादाद्धान्यमक्षितमक्षय्यमस्तु । **सहस्रधार**मनेककुसूलादिपूर्ण ( र्णं ) प्रस्थादिपरम्प-रायुक्तं च भूयात् । तदर्थमिदं हविः **स्वाहा** सुहुतमस्तु । कस्मै । धनानि दधाति पोष-यति भक्तानामिति **धनधानी** काचिद्देवता तस्यै ।

> ये भूताः प्रचरन्ति दिवानक्तं बलिमिच्छन्तो
> वितुदस्य प्रेष्याः । तेभ्यो बलिं पुष्टिकामो
> हरामि मयि पुष्टिं पुष्टिपतिर्दधातु स्वाहा ॥

ओष*धिवनस्पतिभ्यः स्वाहाऽन्तरिक्षाय स्वाहा नमो रुद्राय

पशुपतये स्वाहा वितुदस्य प्रेष्या एकं च ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यकदशमप्रपाठके नारायणोप-

निषदि[1] सप्तषष्टितमोऽनुवाकः ॥ ६७ ॥

य इति । तेभ्यो बलिं हरामि भूमौ निक्षिपामि पुष्टिकामः सन्नहम् । अत एव पुष्टिपतिर्धनधान्यादिपोषणाधिपतिर्भगवान्मयि पुष्टिं धनधान्यादिपोषं दधातु स्थापयतु । तदर्थमिदमन्नं स्वाहा भूमौ निक्षिप्तमस्तु । तेभ्यः केभ्यः । ये भूता ग्रह-विशेषा बलिमाहारमिच्छन्तः सन्तो दिवानक्तं प्रचरन्ति । भूताः कथंविधाः । प्रेष्याः प्रेषणीया भृत्या इति यावत् । कस्य, विशेषेण तुदति पापिनः प्राणिनः पीड-यतीति वितुदः श्मशानवासी भगवान्कालाग्निरुद्रस्तस्य वितुदस्य ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यकदशमप्रपाठके नारायणीयापरनामधेययुक्तायां याज्ञिक्यामुपनिषदि भाष्ये सप्तषष्टितमोऽनुवाकः ॥ ६७ ॥

---

अथाष्टषष्टितमोऽनुवाकः ।

---

जपमात्रेण पापक्षयार्थोऽयं मन्त्रः—

ओं तत्सत्यम् । ओं तद्ब्रह्म । ओं तद्वायुः । ओं

तदात्मा । ओं तत्सर्वम् । ओं तत्पुरोर्नमः ।

अन्तश्चरति भूतेषु गुहायां विश्वमूर्तिषु । त्वं यज्ञ-

स्त्वं वषट्कारस्त्वमिन्द्रस्त्वꣳ रुद्रस्त्वं विष्णुस्त्वं

ब्रह्म त्वं प्रजापतिः । त्वं तदाप आपो ज्योती

रसोऽमृतं ब्रह्म भूर्भुवः सुवरोम्, इति ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यकदशमप्रपाठके[3] नारायणोपनिष-

द्यष्टषष्टितमोऽनुवाकः ॥ ६८ ॥

तद्वेदान्तवेद्यं वस्तु ब्रह्मातिबृहत् । तदेव वायुः । तदेवाऽऽत्मा जीवोऽपि । तदेव सत्यमवितथम् । किं बहुना, तदेव सर्वं चराचरं जगत् । तदेव पुरोर्विस्तीर्णस्य ब्रह्माण्डस्य कारणं य(णम)तस्तस्मै नमोऽस्तु । किंचैवंविधं यद्ब्रह्म तद्विश्वमूर्तिषु नाना-

---

* एतदाद्यों तद्ब्रह्मेत्यस्मात्प्राग्विद्यमानं मूलं ज. पुस्तके नास्ति ।

---

१ घ. ८४ । २ ङ. °णादिनिधि । ३ घ. ८१ ।

विधशरीरेषु भूतेषु प्राणिषु गुहायामन्तर्हृदयपुण्डरीकमध्ये चरति वर्तते । एवं परोक्षेण सर्वात्मकत्वमुक्त्वेदानीमपरोक्षेण परमात्मनः सर्वात्मकत्वं दर्शयति । हे भगवंस्त्वं यज्ञो नानाविधक्रतुरूपः । त्वमेव वषट्कारो देवान्नदायकशब्दविशेषः । औपलक्षण्येन त्वमेव स्वाहास्वधाहन्तकारादिः । त्वमेवेन्द्ररुद्राविष्णुब्रह्मरूपः । त्वमेव प्रजापतिर्विराट् । त्वमेव तत्प्रसिद्धं ब्रह्माण्डम् । त्वमेवाऽऽपो नद्यादिगताः । त्वमेवाऽऽपः पारावारगताः । त्वमेव ज्योतिः सूर्यादि । त्वमेव रसो मधुरादिः । त्वमेवामृतं सुधा । त्वमेव ब्रह्म वेदकूटम् । त्वमेव भूर्भुवः सुवस्त्रैलोक्यम् । त्वमेवोंकारः शब्दब्रह्म ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यकदशमप्रपाठके नारायणीयापरनामधेययुक्तायां याज्ञिक्यामुपनिषदि भाष्येऽष्टषष्टितमोऽनुवाकः ॥ ६८ ॥

अथैकोनसप्ततितमोऽनुवाकः ।

अथ प्राणाहुतिमन्त्रान्दर्शयति—

श्रद्धायां प्राणे निविष्टोऽमृतं जुहोमि । श्रद्धायामपाने निविष्टोऽमृतं जुहोमि । श्रद्धायां व्याने निविष्टोऽमृतं जुहोमि । श्रद्धायामुदाने निविष्टोऽमृतं जुहोमि । श्रद्धायाᳪं समाने निविष्टोऽमृतं जुहोमि । ब्रह्मणि म आत्माऽमृतत्वाय, इति ।

वैदिककर्मणि विश्वासातिशयः श्रद्धा, तस्यां सत्यां पञ्चसु शरीरगतवायुभेदेषु मध्ये प्रथमं प्राणनामके वायौ निविष्ट आदरयुक्तोऽहममृतं स्वादुभूतमिदं हविर्जुहोमि प्रक्षिपामि । एवमपानादिषु योज्यम् । एताभिः पञ्चभिराहुतिभिरमृतत्वाय मोक्षाय मे मदीय आत्मा जीवो ब्रह्मणि परमात्मन्येकी भवत्विति शेषः ।

अथ भोजनादावपां प्राशने मन्त्रमाह—

अमृतोपस्तरणमसि, इति ।

हे पीयमान जल त्वममृतं विनाशरहितं प्राणदेवताया [उपस्तरणमसि । तथा शयानस्य पुरुषस्य मञ्चकस्योपरि तूलपटादिकमुपस्तीर्यते तद्वत्प्राणदेवताया ] इदमुपस्तरणम् । तथा च वाजसनेयिनः प्राणविद्यायां प्राणदेवताया जलवस्त्रत्वमामनन्ति— "तस्मादशिष्यन्नाचामेदशित्वाऽऽचामेदेतदेव तदन्नमनग्नं कुरुते" इति ।

प्राणाहुतिष्वेव विकल्पितानि मन्त्रान्तराणि दर्शयति—

श्रद्धायां प्राणे निविष्टोऽमृतं जुहोमि । शिवो मा

विशाप्रदाहाय । प्राणाय स्वाहा । श्रद्धायामपाने निविष्टोऽमृतं जुहोमि । शिवो मा विशाप्रदाहाय । अपानाय स्वाहा । श्रद्धायां व्याने निविष्टोऽमृतं जुहोमि । शिवो मा विशाप्रदाहाय । व्यानाय स्वाहा । श्रद्धायामुदाने निविष्टोऽमृतं जुहोमि । शिवो मा विशाप्रदाहाय । उदानाय स्वाहा । श्रद्धायाँ समाने निविष्टोऽमृतं जुहोमि । शिवो मा विशाप्रदाहाय । समानाय स्वाहा । ब्रह्मणि म आत्माऽमृतत्वाय, इति ॥

हूयमान द्रव्यविशेष त्वं शिवः शान्तो भूत्वा मां प्रविश । किमर्थम् । अप्रदाहाय, क्षुत्संपादितदाहनाशनायेत्यर्थः । किंच हूयमानद्रव्यं प्राणदेवतायै स्वाहा सुहुतमस्तु । पूर्ववदन्यद्व्याख्येयम् ।

भोजनादूर्ध्वमपां प्राशने मन्त्रमाह—

अमृतापिधानमसि, इति ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यकदशमप्रपाठके नारायणोपनिषद्येकोनसप्ततितमोऽनुवाकः ॥ ६९ ॥

पीयमान हे जल त्वममृतमविनश्वरमपिधानमाच्छादकमसि ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यकदशमप्रपाठके नारायणीयापरनामधेययुक्तायां याज्ञिक्यामुपनिषदि भाष्य एकोनसप्ततितमोऽनुवाकः ॥ ६९ ॥

अथ सप्ततितमोऽनुवाकः ।

भुक्तस्यान्नस्याभिमन्त्रणे मन्त्रमाह—

श्रद्धायां प्राणे निविश्यामृतँ हुतम् । प्राणमन्नेनाऽऽप्यायस्व । श्रद्धायामपाने निविश्यामृतँ हुतम् । अपानमन्नेनाऽऽप्यायस्व । श्रद्धायां व्याने निविश्यामृतँ

हुतम् । व्यानमन्नेनाऽऽप्यायस्व । श्रद्धायामुदाने निवि-
श्यामृतꣳ हुतम् । उदानमन्नेनाऽऽप्यायस्व । श्रद्धायाꣳ
समाने निविश्यामृतꣳ हुतम् । समानमन्नेनाऽऽप्यायस्व, इति॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यकदशमप्रपाठके नारायणोप-
निषदि सप्ततितमोऽनुवाकः ॥ ७० ॥[1]

वैदिककर्मणि विश्वासातिशयः श्रद्धा, तस्यां सत्यां प्राणवायौ निविश्याऽऽदराति-
शयं कृत्वाऽमृतमनश्वरं स्वादुभूतमिदं हविर्मया हुतम् । हे प्राणाभिमानिनि देवि त्वं
प्राणं मुखनासिकासंचारिणं वायुं हुतेनान्नेनाऽऽप्यायस्व वर्धय । स्पष्टमन्यत् ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यकदशमप्रपाठके नारायणीयापरनामधेययुक्तायां
याज्ञिक्यामुपनिषदि भाष्ये सप्ततितमोऽनुवाकः ॥ ७० ॥

====

अथैकसप्ततितमोऽनुवाकः ।

---

क्षुदादिजनितचित्तविक्षेपशान्तेरूर्ध्वं भोक्तुर्जीवस्य परमेश्वरस्वरूपानुसंधानहेतुं मन्त्रं
दर्शयति—

अङ्गुष्ठमात्रः पुरुषोऽङ्गुष्ठं च समाश्रितः ।
ईशः सर्वस्य जगतः *प्रभु प्रीणाति विश्वभुक्, इति ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके दशमप्रपाठके नारायणोपनिषद्ये-
कसप्ततितमोऽनुवाकः ॥ ७१ ॥[2]

हृदयमध्यगत आकाशः स्वाङ्गुष्ठपरिमितः । तत्र वर्तमाना बुद्धिरपि तावती । तयाऽ-
वच्छिन्नो जीवरूपः पुरुषोऽप्यङ्गुष्ठमात्रः स्वाङ्गुष्ठपरिमितः । स च ज्ञानक्रियाश-
क्त्याऽङ्गुष्ठमाश्रितः । चकारान्मस्तकं चाऽऽश्रितः । आपादमस्तकव्यापीत्यर्थः । स
चोपाधिसंबन्धमन्तरेण स्वकीयेन वास्तवरूपेण सर्वस्य जगत ईशो नियन्ता । अत एव
विश्वभुक् । सर्वं जगद्भुङ्क्ते । तादृशः प्रभुरीश्वरः प्रीणाति, अनेन भोजनेन प्रीतो
भवतु ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यकदशमप्रपाठके नारायणीयापरनामधेय-
युक्तायां याज्ञिक्यामुपनिषदि भाष्य एकसप्ततितमोऽनुवाकः ॥ ७१ ॥

====

---

* छान्दसो विसर्गलोपः ।

---

१ घ. ८७ ॥ २ घ. ८८ ॥

अथ द्विसप्ततितमोऽनुवाकः ।

इत्थं भोजनोत्तरं परमेश्वरानुसंधानप्रतिपादकं मन्त्रमुदाहृत्य भोक्तुः सर्वेषामङ्गानां स्वस्थताप्रतिपादकं मन्त्रमनुभवपूर्वकं पठति—

वाङ्म *आसन् । नसोः प्राणः । अक्ष्योश्चक्षुः । कर्णयोः श्रोत्रम् । बाहुवोर्बलम् । ऊरुवोरोजः । अरिष्टा विश्वान्यङ्गानि तनूः । तनुवा मे सह नमस्ते अस्तु मा मा हिꣳसीः, इति ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके दशमप्रपाठके नारायणोपनिषदि द्विसप्ततितमोऽनुवाकः ॥ ७२× ॥

हे भगवन्षडृसमन्त्रमाकण्ठं भुक्तवतस्तृप्तस्य मे मम वाग्वागिन्द्रियशक्तिस्तद्गोलक +आस्ये, प्राणो नसोर्नासिकयोः, चक्षुश्चक्षुरिन्द्रियशक्तिरक्ष्योरक्ष्णोस्तद्गोलकयोः, श्रोत्रं श्रोत्रेन्द्रियं कर्णयोस्तद्गोलकयोः, लब्धस्वास्थ्यान्यासन् । प्राग्भोजनात्क्षुदादिवशेन विकलान्यभवन्नित्यर्थः । अत एव बाहुवोर्बाह्वोर्बलमभूत् । ऊरुवोरोजो गमनागमनसामर्थ्यमभूत् । किं बहुना, विश्वानि सर्वाणि ममाङ्गान्यरिष्टान्यनुपहिंसितानि स्वस्थान्यभूवन् । किंवा परिमितगणनया, मे मम तनुवा तन्वा लिङ्गशरीरेण सह तनूः स्थूलशरीरं स्वस्थी भवति स्म । अत एव भो भगवंस्त्वप्रसादात्स(न्मि)ष्टान्नं लब्ध्वा =यतोऽहं तृप्तो मत्कृतं नमस्ते तुभ्यमस्तु । इत्थं प्रत्यहं सहकुटुम्बस्य मे तृप्तिं कृत्वा सर्वाङ्गस्वास्थ्यं च संपाद्य यावन्मरणं सहकुटुम्बं मां मा हिꣳसीर्मा पीडय । किंतु मृडय । मन्त्रोऽयं भोजनोत्तरं प्रत्यहं परमेश्वरकृतोपकृतिस्मृतिसिद्धये ब्राह्मणैरर्थानुसंधानपूर्वकं पठनीय इति रहस्यम् ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यकदशमप्रपाठके नारायणीयापरनामधेययुक्तायां याज्ञिक्यामुपनिषदि भाष्ये द्विसप्ततितमोऽनुवाकः ॥ ७२ ॥

अथ त्रिसप्ततितमोऽनुवाकः ।

एवं सर्वाङ्गस्वास्थ्यमुक्त्वा सर्वपापक्षयार्थत्वेनोत्तरोत्तरधनप्राप्य(पक)त्वेन चेन्द्रसप्तर्षिसंवादकं मन्त्रं जप्यत्वेनाऽऽह—

वयः सुपर्णा उपसेदुरिन्द्रं प्रियमेधा ऋषयो नाधमानाः ।

---

* पद्दन्नित्यास्यशब्दस्याऽऽसन्नादेशे सप्तम्याः सुपां सुलुगिति लुकि रूपमिदम् । × अत्र घ. पुस्तकेऽङ्को नास्ति । + आसन्नित्यस्य व्याख्यानमेतत् । =यतोऽहं तृप्तोऽत एवेति संबन्धः ।

अपध्वान्तमूर्णुहि पूर्धि चक्षुर्मुमुग्ध्यस्मान्निधयेऽवबद्धान्, इति ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यकदशमप्रपाठके नारायणोपनिषदि त्रिसप्ततितमोऽनुवाकः ॥ ७३ ॥

**ऋषयः** सप्तसंख्याकाः कदाचिदिन्द्रं स्वर्गस्थमुपसेदुः । भूलोकात्सकाशादिन्द्रसामीप्यं जग्मुः । कथंभूता ऋषयः । **नाधमानाः** किमपि याचितुकामाः । **प्रियमेधाः** सर्वप्राणिप्रियकृतबुद्धिविशेषाः । **वय** इति विशब्दबहुवचनं पक्षिवाचकम् । **वय इव** पक्षिण इव शीघ्रगमनाः । कथंभूता वयः । **सुपर्णाः** शोभनपक्षाः । कथंभूतमिन्द्रम् । **अपध्वान्तम**पगतहृदयान्धकारम् । इन्द्रमुपेत्य यदूचिरे तदुच्यते । हे भगवन्निन्द्रा**स्मानूर्णुहि** दिव्यदुकूलादिप्रदानेनाऽऽच्छादय । अस्माकं चक्षुः **पूर्धि,** उत्तमसौन्दर्यादिमत्पदार्थप्रदर्शनप्रदानाभ्यां पूरय । **अस्मान्**सर्वेभ्यः पापेभ्यो **मुमुग्धि** मोचय । किंचा**स्मान्निधयेऽवबद्धाना**सक्तान्कुरु । अनेकधनरत्नवन्निधियुक्तानस्मान्कुर्वित्यर्थः । एवमृषियाचितेनेन्द्रेण दत्तैर्भोग्यैः सुखिताः सन्त ऋषयो भूमिमेत्य स्वाश्रमेषु स्थितवन्त इत्याद्युपाख्यानं पूरयितव्यम् ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यकदशमप्रपाठके नारायणीयापरनामधेययुक्तायां याज्ञिक्यामुपनिषदि भाष्ये त्रिसप्ततितमोऽनुवाकः ॥ ७३ ॥

अथ चतुःसप्ततितमोऽनुवाकः ।

एवं जपानन्तरं हृदयमालभ्य जप्यं मन्त्रमाह—

**प्राणानां ग्रन्थिरसि रुद्रो मा विशान्तकः ।**

**तेनान्नेनाऽऽप्यायस्व,** इति ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके दशमप्रपाठके नारायणोपनिषदि चतुःसप्ततितमोऽनुवाकः ॥ ७४ ॥

हे हृदयवर्तिन्नहंकार त्वं वायुरूपाणामिन्द्र(न्द्रिय)रूपाणां च **प्राणानां ग्रन्थिरसि** । परस्परमविश्लेषाय ग्रन्थनहेतुरसि । तादृशस्त्वं रुद्रस्त(स्त्व)दभिमानिदेवतारूपोऽ**न्तको** दुःखस्य विनाशको भूत्वा **मा** मां **विश** मच्छरीरे प्रविष्टो भव । **तेन** मद्भुक्ते**नान्नेनाऽऽप्यायस्व** मामभिवर्धय ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यकदशमप्रपाठके नारायणीयापरनामधेययुक्तायां याज्ञिक्यामुपनिषदि भाष्ये चतुःसप्ततितमोऽनुवाकः ॥ ७४ ॥

१ ष. १०. २ ष. ११ ।

अथ पञ्चसप्ततितमोऽनुवाकः ।

एवं हृदयाभिमन्त्रणमुक्त्वा यावज्जीवं मृत्युपरिहारार्थं देवताप्रा(प्री)णनरूपमन्त्रमाह—

नमो रुद्राय विष्णवे मृत्युर्मे पाहि, इति

**इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यकदशमप्रपाठके नारायणोपनिषदि पञ्चसप्ततितमोऽनुवाकः ॥ ७५ ॥**

रुद्राय पार्वतीपतये **नमोऽस्तु** । **विष्णवे** लक्ष्मीपतये **नमोऽस्तु** । किंच हे रुद्र हे विष्णो त्वं त्वं च **मृत्युर्व्यत्ययेन** मृत्योः सकाशान्मे मां **पाहि** ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यकदशमप्रपाठके नारायणीयापरनामधेययुक्तायां याज्ञिक्यामुपनिषदि भाष्ये पञ्चसप्ततितमोऽनुवाकः ॥ ७५ ॥

अथ षट्सप्ततितमोऽनुवाकः ।

त्वमग्ने द्युभिस्त्वमाशुशुक्षणिस्त्वमद्भ्यस्त्वमश्मनस्परि ।
त्वं वनेभ्यस्त्वमोषधीभ्यस्त्वं नृणां नृपते जायसे शुचिः ॥

**इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यकदशमप्रपाठके नारायणोपनिषदि षट्सप्ततितमोऽनुवाकः ॥ ७६ ॥**

**त्वमिति । हेऽग्ने** त्वमपि **द्युभिरुत्तम**कान्तिभिः सहितः सन्नस्मन्मृत्युं निवारय । किंच **त्वमाशु** शीघ्रं शोषयति भक्तानां पापमित्याशुशुक्षणिः, [ तादृशो भव] । किंच **त्वमद्भ्य** उपरि कणत्वेन (कारणत्वेन?) तिष्ठसि । अप्कारणत्वादग्नेरद्भ्य आधिक्यम् । "अग्नेरापः" इति श्रुतेः । किंच त्वं महामेरुरूपस्य पाषाणस्य पर्युपरि तिष्ठसि । कनकाचलशिखरेष्वग्न्यादिदेवानां विद्यमानत्वप्रसिद्धेः । किंच **त्वं वनेभ्यो** व्यत्ययेन नन्दनादिवनेषु विहरसि । किंच **त्वमोषधीभ्यो** व्यत्ययेन सोमलताद्योषधीषु व्याप्य तिष्ठसि । **हे नृपते** यजमानरूपमनुष्याधिपतेऽग्ने त्वं **नृणां** यजमानानां मध्ये पूज्यो **जायसे** भवसि । किंच त्वं वैदिकलौकिकश्मशानिकसर्वपदार्थभुगपि सन्सर्वदा **शुचिरेव** । एवंविधप्रभावस्त्वं मृत्योः सकाशान्मां पाहीति पूर्वेणान्वयः ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यकदशमप्रपाठके नारायणीयापरनामधेययुक्तायां याज्ञिक्यामुपनिषदि भाष्ये षट्सप्ततितमोऽनुवाकः ॥ ७६ ॥

अथ सप्तसप्ततितमोऽनुवाकः ।

अथेदानीं परमात्मनः सकाशात्स्वाभीष्टं याचते—

शिवेनं मे संतिष्ठस्व स्योनेनं मे संतिष्ठस्व सुभूतेनं मे संतिष्ठस्व ब्रह्मवर्चसेनं मे संतिष्ठस्व यज्ञस्यर्द्धिमनु संतिष्ठस्वोपं ते यज्ञ नम उपं ते नम उपं ते नमः, इति ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यकदशमप्रपाठके नारायणोपनिषदि सप्तसप्ततितमोऽनुवाकः ॥ ७७ ॥

हे यज्ञ सर्वयज्ञस्वरूप हे भगवन्परमात्मंस्ते तुभ्यमुप सामीप्येन नमोऽस्तु । त्वत्संनिधौ त्वत्समक्षं भूयो भूयो नमस्करोमीत्यर्थः । अत्यादरार्थमाम्रेडितम् । किंच त्वं शिवेन कल्याणप्रदानेन सह मे गृहे संतिष्ठस्व । स्योनेनैहिकसुखप्रदानेन सह । सुभूतेन महैश्वर्यप्रदानेन सह । ब्रह्मवर्चसेन सह । समानमन्यत् । एवंगुणवति त्वयि मद्गृह उपस्थिते सत्यहमप्येवंविधगुणवान्भूयासमिति प्रार्थयितुराशयः । किंच त्वत्प्रीत्यर्थं कृतस्य यज्ञस्य सत्कर्मानुष्ठानस्यर्द्धिं समृद्धिमनु पश्चात्तत्फलं दातुमस्मत्समीपे संतिष्ठस्व सम्यगचलचित्तः सन्नुपविश ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यकदशमप्रपाठके नारायणीयापरनामधेययुक्तायां याज्ञिक्यामुपनिषदि भाष्ये सप्तसप्ततितमोऽनुवाकः ॥ ७७ ॥

अथाष्टसप्ततितमोऽनुवाकः ।

समाप्तं भोजनप्रकरणं कर्मप्रकरणं च । अथेदानीं सर्वकर्ममयसंसारबीजदाहार्थं संन्यासप्रकरणमारभ्यते । तत्र ज्ञानप्रतिबन्धकमहापातकपरिहारेण ज्ञानयोग्यतालक्षणां शुद्धिमुक्त्वा योग्यस्य पुरुषस्यापेक्षितेषु ज्ञानसाधनेषु संन्यासस्य निरतिशयोत्कर्षार्थ(र्थत्वं) वक्तुं सत्यादीन्येकादशोत्कृष्टसाधनानि प्रतियोगित्वेन वक्तव्यानि, तत्र प्रथमं साधनमुपन्यस्यति—

सत्यं परं परꣳ सत्यꣳ सत्येन न सुवर्गाल्लोकाच्च्यवन्ते कदाचन सताꣳ हि सत्यं तस्मात्सत्ये रमन्ते,—इति ।

यद्वस्तु प्रमाणेन दृष्टं तस्य तथैवाभिवदनं सत्यं तच्च परं पुरुषार्थसाधनेषूत्कृष्टम् । तत्र विधाना(स्यैव ऽऽदरा)य परं सत्यमिति पुनर्वचनम् । यद्वा परं [ब्रह्म] सत्यम-

बाध्यं तद्वद्यथार्थवचनमपि बाधरहितमिति व्यावहारिकबाधराहित्येनोत्कर्षं विवक्षित्वा दृष्टान्तेन परं सत्यमित्युक्तम् । सत्येन यावज्जीवनं यथार्थकथनेन स्वर्गाल्लोकात्कदाचन कदाचिदपि न प्रच्यवन्ते, अनृतवादिनस्तु केनचित्पुण्येन स्वर्गं प्राप्य [ प्य- ] नृतवदनदोषेण कर्मफलापूर्व ( र्ण ) तायामपि तदैव स्वर्गात्प्रच्यवन्ते । किंच हि यस्मात्कारणात्सतां सन्मार्गवर्तिनामृष्यादीनां संबन्धि[ सत्यं ] यथार्थवादित्वं तस्मात्कारणात्सतामिदमिति व्युत्पत्तिमाश्रित्य सत्यवादित्वमेव परमं मोक्षसाधनमिति केचिन्महान्तो वदन्तस्तस्मिन्नेव सत्ये रमन्ते क्रीडन्ति ।

एकं मतमुक्त्वा द्वितीयं मतमाह—

तप इति तपो नानशनात्परं यद्धि परं तपस्त-
द्दुर्धर्षं तद्दुराधर्षं तस्मात्तपसि रमन्ते—, इति ।

तपः परं मोक्षसाधनमिति केषांचिन्मतम् । तीर्थयात्राजपहोमादीनि यद्यपि बहूनि तपांसि सन्ति तथाऽपि तेषु सर्वेष्वनशनमु ( नादु ) पवासैकभक्ताद्युपदेश ( ह्यशन )- वर्जनात्परमुत्कृष्टं तपो नास्ति । यदनशनरूपं कृच्छ्रचान्द्रायणादिकं परं तपोऽस्ति तद्दुर्धर्षं धर्षयितुं सोढुमशक्यमत एवाऽऽसमन्तात्सर्वेषां प्राणिनां तत्तपो दुर्धर्षं दुःशकमित्यनुभूयते । तस्मात्कारणात्केचन श्रद्धालवः कृच्छ्रचान्द्रायणादिके तपसि रमन्ते क्रीडन्ति ।

तृतीयं मतमाह—

दम इति नियतं ब्रह्मचारिणस्तस्माद्दमे रमन्ते—, इति ।

वाक्चक्षुरादीन्द्रियाणां बाह्यानां निषिद्धेभ्यो विषयेभ्यो निवृत्तिर्दमः, स एवोत्तमो मोक्षहेतुरिति मन्यमाना नैष्ठिकब्रह्मचारिणो नियतं सर्वदा वदन्ति तस्माद्दमे रमन्ते ।

चतुर्थं मतमाह—

शम इत्यरण्ये मुनयस्तस्माच्छमे रमन्ते—, इति ।

अन्तःकरणस्य क्रोधादिदोषराहित्यं शमः, स एवोत्तमो मोक्षहेतुरित्यरण्ये वर्तमाना मुनयो वानप्रस्था मन्यन्ते तस्मात्ते शमे रमन्ते ।

पञ्चमं मतमाह—

दानमिति सर्वाणि भूतानि प्रशंसन्ति दाना-
न्नातिदुश्चरं तस्माद्दाने रमन्ते—, इति ।

गोभूहिरण्यादीनां स्वकीयानां शास्त्रोक्तवर्त्मना स्व [स्वत्व] परित्यागपूर्वकं परस्वत्वापादनं दानं तदेवोत्तमं मोक्षसाधनमिति सर्वे प्राणिनः प्रशंसन्ति । दानादतिशयितं

दुष्क(श्च )रं नास्ति । धनरक्षार्थं प्राणानपि परित्यजतां पुरुषाणामुपलम्भात् । तस्माद्गो-भूहिरण्यादिदाने रमन्ते ।

[ षष्ठं मतमाह— ]

धर्म इति धर्मेण सर्वमिदं परिगृहीतं धर्मा-
न्नातिदुष्करं तस्माद्धर्मे रमन्ते—, इति ।

स्मृतिपुराणादिप्रतिपाद्यो वापीकूपतडागादिनिर्माणरूपो धर्मोऽत्र विवक्षितः । स चोत्तमो मोक्षहेतुरिति स ( म )हामात्यादयः प्रभवो मन्यन्ते । तडागादिरूपेण धर्मेण सर्वमिदं जगत्परिगृहीतम् । सर्वेऽपि मनुष्यपश्वादयः स्नानपानादिना तुष्यन्ति । तादृशधर्मादन्यदतिदुश्च( ष्क )रं नास्ति । तस्मात्कारणाद्धर्मे रमन्ते प्रभवः ।

सप्तमं मतमाह—

प्रजन इति भूयांसस्तस्माद्भूयिष्ठाः प्रजा-
यन्ते तस्माद्भूयिष्ठाः प्रजनने रमन्ते—, इति ।

प्रजनोऽपत्योत्पादनं तस्यैवोत्तमसाधनत्वं भूयांसो ( सोऽति ) बहवः प्राणिनो मन्यन्ते । धनिकैर्दरिद्रैः शिष्टैश्च सर्वैरपि पुत्रोत्पादनायातिशयेन प्रयतमान ( त्वस्याऽऽदृत )त्वात् । तस्मादेकैकस्य पुरुषस्य भूयिष्ठा द्वित्राः पञ्च षडित्येवं बहवोऽपत्यविशेषा उत्पद्यन्ते । तस्माद्भूयिष्ठा अतिबहवः प्राणिनः प्रजोत्पादने रमन्ते ।

अष्टमं मतमाह—

अग्नय इत्याह तस्मादग्नय आधातव्याः—, इति ।

अग्नयो गार्हपत्यादय उत्तमा मुक्तिहेतव इति । कश्चिद्वेदार्थपर आह । तस्मात्कारणाद्गृहस्थैरग्नय आधातव्या भवन्ति ।

नवमं मतमाह—

अग्निहोत्रमित्याह तस्मादग्निहोत्रे रमन्ते—, इति ।

आहितेष्वग्निषु सायं प्रातश्चानुष्ठेयो होमोऽग्निहोत्रं तदुत्तमं मोक्षसाधनमित्यपरः कश्चिद्वेदार्थपर आह । तस्मात्केचिदग्निहोत्रे रमन्ते ।

दशमं मतमाह—

यज्ञ इति यज्ञो हि देवास्तस्माद्यज्ञे रमन्ते—, इति ।

दर्शपूर्णमासज्योतिष्टोमादिको यज्ञ उत्तमो मोक्षहेतुरित्यपरे वेदार्थपरा मन्यन्ते । तत्र हेतुरुच्यते—हि यस्मात्कारणाद्यज्ञो व्यत्ययेन तृतीया यज्ञेन पूर्वोक्ता देवा इन्द्रादयो दिवं गता इति वाक्यशेषः । तस्मादेव कारणादद्यापि केचन वैदिका यज्ञे पूर्वोक्ते रमन्त आसक्तचित्ताः सन्तः क्रीडन्ति ।

एकादशं मतमाह—

**मानसमिति विद्वा᳚ꣳसस्तस्माद्विद्वाꣳस एव मानसे रमन्ते—, इति ।**

मनसैव निष्पाद्यमुपासनं **मानसं** तदेवोत्तमं मोक्षसाधनमिति **विद्वांसः** सगुणब्रह्म-विदो मन्यन्ते । **तस्मा**त्कारणात्केचन **विद्वांसो** वेदोपास्तितात्पर्यविदो **मानस एव**ोपासने **रमन्ते** ।

द्वादशं मतमाह—

**न्यास इति ब्रह्मा ब्रह्मा हि परः परो हि ब्रह्मा तानि वा**
**एतान्यवराणि परा᳚ꣳसि न्यास एवात्यरेचयत्, इति ।**

पूर्वोक्तकारणा(र्वकाण्डोक्ता)नामग्निहोत्रादिकर्मणामारुणिजाबालाद्युपनिषदुक्तप्रकारेण परित्यागो **न्यासः** स एवोत्तमो मोक्षहेतुरिति **ब्रह्मा** हिरण्यगर्भो मन्यते । स च **ब्रह्मा परो हि** परमात्मरूपो हि न तु पूर्वोक्तमतानुसारिण इव जीवः । यद्यप्यसौ हिरण्यगर्भो देहधारी तथाऽपि **परो हि** परमात्मैव **ब्रह्मा** हिरण्यगर्भ इति वक्तुं शक्यते। तच्छिष्यत्वेन तत्समानज्ञानत्वात् । अत एव श्वेताश्वत[रा आमनन्ति]—"यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै" इति । यानि पूर्वोक्तसत्यादीनि मान-सान्ता[नि ता]न्येतानि [परांसि] तपांसि भवन्त्येव तथाऽपि संन्यासमपेक्ष्या**वराणि** निकृष्टानि । **संन्यास एक एव** सर्वाण्यत्यरेचयदतिक्रान्तवान् । उत्तमत्वेन तारतम्यं तत्र विश्रान्तमित्यर्थः ।

उक्तमुत्तमसाधनमुपसंहरति—

**य एवं वेदे᳚त्युपनिषत्, इति ॥**

**इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके दशमप्रपाठके नारायणोपनिषद्य-ष्टसप्ततितमोऽनुवाकः ॥ ७८ ॥**

**यः** पुमानेवंप्रकारेण [सं]न्यासस्यान्येभ्यः साधनेभ्य उत्तमत्वं **वेद** तस्य विदुष इत्युक्ता **विद्योपनिषद्**रहस्यभूता भवति ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यकदशमप्रपाठके नारायणीयापरनामधेययुक्तायां याज्ञिक्यामुपनिषदि भाष्येऽष्टसप्ततितमोऽनुवाकः ॥ ७८ ॥

---

अथैकोनाशीतितमोऽनुवाकः ।

---

पूर्वोक्तमोक्षसाधनसमूहमुपपादयितुमाख्यायिकामाह—

**प्राजापत्यो हाऽऽरुणिः सुपर्णेयः प्रजापतिं पितरमुपससार**

किं भगवन्तः परमं वदन्तीति तस्मै प्रोवाच—इति ।

प्रजापतेः पुत्रः प्राजापत्यः स चाऽऽरुणिनामकः । स एव सुपर्णाख्यायाः स्त्रिया अपत्यत्वात्सुपर्णेय इत्युच्यते । तादृशः पुरुषः स्वकीयं पितरं प्रजापतिमुपससारोत्तमसाधनजिज्ञासयोपसन्नवान् । उपा(प)सद्य चैवं पप्रच्छ । हे प्रजापते भगवन्तः पूज्या महर्षयो मोक्षसाधनेषु किं साधनं परममुत्कृष्टं वदन्ति । एवं पृष्टः प्रजापतिस्तस्मा आरुणये प्रोवाच ।

पूर्वमुक्तेषु साधनेषु प्रथमं दर्शयति—

सत्येन वायुरावाति सत्येनाऽऽदित्यो रोचते
दिवि सत्यं वाचः प्रतिष्ठा सत्ये सर्वं प्रति-
ष्ठितं तस्मात्सत्यं परमं वदन्ति—, इति ।

योऽयं वायुरन्तरिक्षे वाति सोऽयं पूर्वजन्मनि मनुष्यः सन्सत्यवादित्वं परिपाल्य तेन सत्येन वायुदेवतात्वं प्राप्येदानीं लोकानुग्रहार्थमन्तरिक्षे वाति । तथैवाऽऽदित्योऽपि पूर्वजन्मानुष्ठितेन[सत्येन] दिवि रोचते द्युलोके प्रकाशते । एतत्सत्यं वाचो वागिन्द्रियस्य प्रतिष्ठा स्थिरं स्थानमनृतं तु वाचोक्तमपि परैर्निराक्रियत इति न वाचः प्रतिष्ठा । तस्य स्वर्ग ( था सति ) लोकेऽस्मिन्सत्ये भाषणे [ सर्वं ] प्रामाणिकव्यवहारजातं प्रतिष्ठितं तस्मात्कारणात्सत्यमेव परमं साधनमित्येवं केचिदनुष्ठातारो वदन्ति ।

त(अ)त्राऽऽरुणेर्मुखविकाशराहित्यलक्षणापरितोषं दृष्ट्वा द्वितीयं साधनमाह—

तपसा देवा देवतामग्र आयन्तपसर्षयः सुवरन्व-
विन्दन्तपसा सपत्नान्प्रणुदामारातीस्तपसि सर्वं
प्रतिष्ठितं तस्मात्तपः परमं वदन्ति—, इति ।

इदानीं स्वर्गे वर्तमाना अग्नीन्द्रादयो देवा अग्रे पूर्वजन्मन्यनुष्ठितेतान्नपरित्यागरूपेण कृच्छ्रचान्द्रायणादितपसा देवतामायन्निदानींतनं देवतात्वं प्राप्ताः । तथा वसिष्ठादयो महर्षयः पूर्वानुष्ठितेन तपसा सुवरन्वविन्दन्स्वर्गलोकमनुक्रमेण लब्धवन्तः । तथा वयमपीदानीमभिचाररूपेण तपसा सपत्नाञ्शत्रूनरातीरस्मदीयद्रव्यलाभविरोधिनः पुरुषानपि प्रणुदाम निराकुर्मः । अन्यदपि सर्वं फलजातं तपसि प्रतिष्ठितं तस्मादनशनरूपं तपः परमं मोक्षसाधनमिति वदन्ति ।

अत्रापि पूर्ववदपरितोषं दृष्ट्वा तृतीयं साधनमाह—

दमेन दान्ताः किल्बिषमवधून्वन्ति दमेन ब्रह्मचारिणः सुवरगच्छन्दमो भूतानां दुराधर्षं दमे सर्वं प्रतिष्ठितं तस्माद्दमः परमं वदन्ति—, इति ।

दान्ता बाह्येन्द्रियदमनयुक्ताः पुरुषास्तेन दमेन स्वकीयपापमवधून्वन्ति नाशयन्ति। तथा नैष्ठिकब्रह्मचारिणो दमेन स्वर्गमगच्छन् । स च दमो भूतानां प्राणिनां दुराधर्षं धर्षयितुं सर्वदा सोढुं दुःसहः । तस्मिंश्च दमे सर्वमपेक्षितं फलं प्रतिष्ठितम् । तस्मात्कारणाद्दमः परमं मुक्तिसाधनमिति केचिद्वदन्ति । अत्र सर्वत्र पूर्वसाधने परितोषराहित्यादुत्तरसाधनोक्तिर्द्रष्टव्या ।

चतुर्थं साधनमाह—

शमेन शान्ताः शिवमाचरन्ति शमेन नाकं मुनयोऽन्वविन्दञ्छमो भूतानां दुराधर्षं छमे सर्वं प्रतिष्ठितं तस्माच्छमः परमं वदन्ति—, इति ॥

शान्ता अन्तःकरणगतक्रोधादिरहितास्तेन शमेन शिवं मङ्गलं पुरुषार्थमाचरन्ति । नारदाद्या मुनयः शमेन स्वर्गमलभन्त । अन्यत्पूर्ववत् ।

पञ्चमं साधनमाह—

दानं यज्ञानां वरूथं दक्षिणा लोके दातारꣳ सर्वभूतान्युपजीवन्ति दानेनारातीरपानुदन्त दानेन द्विषन्तो मित्रा भवन्ति दाने सर्वं प्रतिष्ठितं तस्माद्दानं परमं वदन्ति—, इति ।

गोहिरण्यादिदानं यज्ञानां संबन्धिनी दक्षिणा भवति । तस्माद्वरूथं श्रेष्ठम् । लोकेऽपि दातारं पुरुषं वेदशास्त्रसंविदो मूढाश्च सर्वेऽपि पुरुषा उपजीवन्ति । तथा योद्धुकामानां भटानां धनदानेनारातीः शत्रूनपानुदन्त राजानो निराकृतवन्तः । येऽपि प्रबला द्विषन्तस्तेऽपि धनदानेन तुष्टा मित्राणि भवन्ति । अन्यत्पूर्ववत् ।

षष्ठं साधनमाह—

धर्मो विश्वस्य जगतः प्रतिष्ठा लोके धर्मिष्ठं प्रजा उपसर्पन्ति धर्मेण पापमपनुदति धर्मे सर्वं प्रतिष्ठितं तस्माद्धर्मं परमं वदन्ति—, इति ।

श्रुतिस्मृतिप्रतिपादितवापीकूपतटाकादिनिर्माणरूपो धर्मो विश्वस्य जगतः सर्वस्य

प्राणिजातस्य प्रतिष्ठाऽऽश्रय इत्येतत्प्रसिद्धम् । तथा लोके धर्मिष्ठमतिशयेन धर्मे वर्तमानं पुरुषं प्रजाः सर्वा उपसर्पन्ति धर्माधर्मनिर्णयार्थमुपगच्छन्ति । किंच प्रायश्चित्तरूपेण [धर्मेण] पापं विनाशयन्ति । अन्यत्पूर्ववत् ।

सप्तमं साधनमाह—

प्रजननं वै प्रतिष्ठा लोके साधु प्रजायास्तन्तुं
तन्वानः पितृणामनृणो भवति तदेव तस्या
अनृणं तस्मात्प्रजननं परमं वदन्ति—, इति ।

प्रजननं पुत्रोत्पादनं यदस्ति तद्गृहस्थानां प्रतिष्ठा पुत्रस्य गृहकृत्यनिर्वाहकत्वात् । "सोऽयं मनुष्यलोकः पुत्रेणैव जय्यो नान्येन कर्मणा" इति श्रुतेः । किंच प्रजायाः पुत्रपौत्रादिरूपायास्तन्तुं परम्परां साधु तन्वानः शास्त्रीयमार्गो यथा भवति [तथा विस्तारयन्पितृणां मृतानां पितृपितामहादीनामनृणो भवति] । तदीयमृणं पुत्रिणा प्रत्यर्पितं भवति । यत्प्रजननं तदेव तस्य पुत्रिण ऋणापाकरणहेतुः । अन्यत्पूर्ववत् ।

अष्टमं साधनमाह—

अग्नयो वै त्रयी विद्या देवयानः पन्था गार्ह-
पत्य ऋक्पृथिवी रथंतरमन्वाहार्यपचनं यजुर-
न्तरिक्षं वामदेव्यमाहवनीयः साम सुवर्गो
लोको बृहत्तस्मादग्नीन्परमं वदन्ति—, इति ।

गार्हपत्यो दक्षिणाग्निराहवनीय इति येऽग्नयः सन्ति त एव त्रयी विद्या वेदत्रयात्मिका वेदत्रयोक्तकर्मसाधनत्वाद्वेदविहितत्वाच्च, देवयानो यागद्वारेण देवत्वप्रापको मार्गश्च । किंच तेषामग्नीनां मध्ये गार्हपत्योऽग्निर्ऋग्वेदात्मकः पृथिवीलोकरूपो रथंतरसामात्मकश्चेति प्रशस्यते । अन्वाहार्यपचनो दक्षिणाग्निर्यजुर्वेदान्तरिक्षलोकवामदेव्यसामात्मकः । [ दक्षिणाग्निस्तु सामवेदस्वर्गलोकबृहद्रथंतरसामात्मकः । ] अन्यत्पूर्ववत् ।

नवमं साधनमाह—

अग्निहोत्रं सायं प्रातर्गृहाणां निष्कृतिः स्विष्टꣳ
सुहुतं यज्ञक्रतूनां प्रायणꣳ सुवर्गस्य लोकस्य
ज्योतिस्तस्मादग्निहोत्रं परमं वदन्ति—, इति ।

सायं प्रातश्चानुष्ठितमग्निहोत्रं गृहाणां निष्कृतिः क्रयसाधनं मूल्यम्, अग्निहो-

न्नाभावे क्षुधितोऽग्निर्गृहान्दहेत् । किंचाग्निहोत्रं स्विष्टं शोभनयागरूपं सुहुतं शोभनहोमरूपम् । देवतामुद्दिश्य द्रव्यत्यागो यागः । तस्य द्रव्यस्याग्नौ प्रक्षेपो होमः । किंचैतद्यज्ञक्रतूनां प्रायणं प्रारम्भः । अग्न्याधेयमग्निहोत्रं दर्शपूर्णमासावाग्रयणं चातुर्मास्यानि निरूढपशुबन्धः सौत्रामणीति सप्त हविर्यज्ञाः । क्रतुशब्दो यूपवत्सु सोमयागेषु रूढः । अग्निष्टोमोऽत्यग्निष्टोम उक्थ्यः षोडशी वाजपेयोऽतिरात्रोऽप्तोर्यामश्चेति सप्त सोमसंस्थाः क्रतवः । तेषां सर्वेषां यज्ञक्रतूनां प्रारम्भकमग्निहोत्रम् । अत एव स्वर्गस्य लोकस्य ज्योतिः प्रकाशकम् । अन्यत्पूर्ववत् ।

दशमं साधनमाह—

यज्ञ इति यज्ञेन हि देवा दिवं गता यज्ञेनासुरा-
नपानुदन्त यज्ञेन द्विषन्तो मित्रा भवन्ति यज्ञे
सर्वं प्रतिष्ठितं तस्माद्यज्ञं परमं वदन्ति—, इति ।

यज्ञ उत्तमं साधनमिति केचिदाहुः । किंच देवाः पूर्वानुष्ठितेन यज्ञेन स्वर्गं प्राप्ताः । किंच यज्ञेनैव तदा [तदा] देवा असुरान्विनाशितवन्तः । किंच सर्वकामप्राप्तिसाधनेन ज्योतिष्टोमेन द्वेष्टृ(प)शान्तिकामस्य पूर्वं द्वेषं कुर्वन्तोऽपि शत्रवो मित्रा[णि] भवन्ति । पूर्ववदन्यत् ।

एकादशं साधनमाह—

मानसं वै प्राजापत्यं पवित्रं मानसेन मनसा साधु
पश्यति मानसा ऋषयः प्रजा असृजन्त मानसे
सर्वं प्रतिष्ठितं तस्मान्मानसं परमं वदन्ति—, इति ।

मनसा निष्पाद्यं मानसमुपासनं यदस्ति तदेव [ प्राजापत्यं ] प्रजापति[पद]प्राप्तिसाधनमत एव पवित्रं चित्तशुद्धिकारणम् । मानसेनैवोपासनेन युक्तं मनोऽन्तःकरणं यदस्ति तेनैकाग्रेण मनसा साधु पश्यति, अतीतानागतव्यवहितादिवस्तुजातं योगी सम्यक्साक्षात्करोति । एतच्च योगशास्त्रे बहुधा प्रपञ्चितम् । मानसा एकाग्रमनोयुक्ता विश्वामित्रादय ऋषयः स्वसंकल्पमात्रेण बह्वीः प्रजा असृजन्त । पूर्ववदन्यत् ।

द्वादशं साधनमाह—

न्यास इत्याहुर्मनीषिणो ब्रह्माणम्—, इति ।

न्यास इत्युक्तो [यो] मोक्षहेतुस्तं ब्रह्माणं हिरण्यगर्भरूपं मनीषिणो बुद्धिमन्तो महर्षयः स्मृतिकर्तार आहुः । तथा च "संन्यासाद्ब्रह्मणः स्थानम्" इति स्मर्यते । हिरण्यगर्भप्राप्त्यन्तरङ्गसाधनत्वात्तद्रूपत्वम् ।

तमेव संन्यासं स्तोतुं तत्प्राप्यहिरण्यगर्भस्य रूपं प्रपञ्चयति—

**ब्रह्मा विश्वः कतमः स्वयंभुप्रजापतिः संवत्सर इति—, इति ।**

यो [**ब्रह्मा**] हिरण्यगर्भः सोऽयं **विश्वः** सर्वजगदात्मकः । **कतमो**ऽतिशयेन सुखस्वरूपः पुनः **स्वयंभुप्रजापति**रुत्पादकाभ्यां मातापितृभ्यां विना स्वयमेवोत्पन्नः स चासौ प्रजानां पालकश्चेति समासः । **संवत्सरः** कालात्मकः । **इति**शब्दः प्रदर्शनार्थः । **इति** सर्वस्वरूपत्वमुन्नेयमित्यर्थः ।

पुनरपि संन्यासस्तुतये हिरण्यगर्भावयवस्य संवत्सरस्य माहात्म्यं दर्शयति—

**संवत्सरोऽसावादित्यो य एष आदित्ये**
**पुरुषः स परमेष्ठी ब्रह्माऽऽत्मा—, इति ।**

योऽयं **संवत्सरः** काल उक्तोऽसावादित्यस्वरूप एव । आदित्यगत्यभा(भ्या)सेन निष्पादितत्वात् । य **एष** तस्मिन्नादित्यमण्डले **पुरुषः** स एव **परमेष्ठी** हिरण्यगर्भरूपः, आदित्यमण्डलद्वारेण हिरण्यगर्भस्य प्राप्यत्वात् । स च परमेष्ठी **ब्रह्म** जगत्कारणवस्तु । तथैवाऽऽत्मा सर्वेषां प्रत्यगात्मभूतः ।

एवमादित्यादिद्वारा संवत्सरं प्रशस्य तमादित्यमण्डलद्वारेण सर्वव्यवहारहेतुतया प्रशंसति—

**याभिरादित्यस्तपति रश्मिभिस्ताभिः पर्जन्यो वर्षति**
**पर्जन्येनौषधिवनस्पतयः प्रजायन्त ओषधिवनस्पतिभि-**
**रन्नं भवत्यन्नेन प्राणाः प्राणैर्बलं बलेन तपस्तपसा श्रद्धा**
**श्रद्धया मेधा मेधया मनीषा मनीषया मनो मनसा**
**शान्तिः शान्त्या चित्तं चित्तेन स्मृतिः स्मृत्या स्मारः**
**स्मारेण विज्ञानं विज्ञानेनाऽऽत्मानं वेदयति तस्मादन्नं दद-**
**न्त्सर्वाण्येतानि ददात्यन्नात्प्राणा भवन्ति भूतानां प्राणैर्मनो**
**मनसश्च विज्ञानं विज्ञानादानन्दो ब्रह्म योनिः—, इति ।**

अयमादित्यो याभिरुष्णस्वरूपाभी रश्मिभिस्तपति प्रभूतं संतापं करोति **ताभि**स्तीव्ररश्मिभिर्भूमिगतं जलमादाय **पर्जन्यो** भूत्वा **वर्षति** । तेन च **पर्जन्येन** वृष्टिजलेन व्रीह्याद्या ओषधयोऽश्वत्थपनसाद्या वनस्पतयश्च प्रकर्षेणोत्पद्यन्ते । **ओषधिभिर्वनस्पतिभिश्च** भोज्यमन्नं संपद्यते । तेन **चान्नेन प्राणाः** पु(पो)षिता भवन्ति । तैश्च पुष्टैः **प्राणैः** शरीरे **बलं** संपद्यते । तेन **बलेन** कृच्छ्रचान्द्रायणादिरूपं **तपः** संपद्यते । **तेन**

। **तपसा** शुद्धचित्तस्य तत्त्वज्ञानविषया **श्रद्धा** जायते। तया **श्रद्धया** पुरुषस्यैकाग्रचित्तस्य **मेधा** गुरूपदिष्टग्रन्थतदर्थधारणशक्तिरूपा जायते। तया च **मेधया मनीषा** बुद्धिरुत्पद्यते। तया च **मनीषया मनो** निरन्तरं तत्त्वविषयं मननमुपजायते। तेन **मनसा** मननेन क्रोधादिदोषस्यावसराभावाच्छान्तिरुपजायते। तया च **शान्त्या** विक्षेपरहितस्य **चित्तं** चेतनं तत्त्वविषयप्रमाणजनितज्ञानमुपजायते। तेन **चित्तेन** ज्ञानेन निद्रा [ दि ] व्यवधानेऽपि तत्त्वविषयां [ **स्मृतिं** ] प्राप्नोति। तया निद्राद्यनन्तरभाविन्या **स्मृत्या** [ **स्मारं** ] निरन्तरं **स्मरणं** प्राप्नोति। तेन च **स्मारेण विज्ञानं** विजातीय[ प्रत्यय ]व्यवधानराहित्येन विशिष्टं संततं ज्ञानं प्राप्नोति। तेन च **विज्ञानेनाऽऽत्मानं वेदयति** परमात्मानं सर्वदाऽनुभवति। यस्मादन्नस्योक्तप्राणबलादिपरम्परया परमात्मानुभवे हेतुत्वं **तस्मादीदृशमन्नं ददत्पुरुषः सर्वाण्येतानि** प्राणादीन्यात्मानुभवान्तानि वस्तूनि **ददाति**। अन्नदानस्य सर्वदानरूपत्वं विस्पष्टयितुमुक्तमेवार्थं पुनरन्यस्मात्प्राणा भवन्तीत्यादिवाक्येन संक्षिप्योपन्यस्यते। प्राणादिपरम्परोत्पन्नाद्विज्ञानादानन्दः परमानन्दरूपो भूत्वा **ब्रह्म** वेदान्तप्रतिपाद्यं **योनिर्जगत्कारणम्**। यद्वा ब्रह्मणो वेदस्य **योनिः** कारणं तादृग्रूपः स्वयं भवति।

यथोक्तं संन्यासमेव स्तोतुं तेन संन्यासेन प्राप्ततत्त्वज्ञानं पुरुषं प्रशंसति—

> **स वा एष पुरुषः पञ्चधा पञ्चात्मा येन सर्वमिदं प्रोतं पृथिवी चान्तरिक्षं च द्यौश्च दिशश्चावान्तरादिशाश्च स वै सर्वमिदं जगत्स स भूतं स भव्यं जिज्ञासक्लृप्त ऋतजा रयिष्ठा श्रद्धा सत्यो महस्वान्तपसो*वरिष्ठात्,**— इति।

यः पुरुषः संन्यासपुरःसरं तत्त्वज्ञानं संपादयति **स एवैष पुरुषः सर्वात्मकः पञ्चधा** पञ्चभिः प्रकारैः पञ्चात्मा पञ्चविंशतिवस्तुस्वरूपो भवति। शब्दस्पर्शादिगुणपञ्चकं पृथिव्यादिकं भूतपञ्चकं चक्षुःश्रोत्रादिकं ज्ञानेन्द्रियपञ्चकं वाक्पाण्यादिकं कर्मेन्द्रियपञ्चकं प्राणापानादिकं वायुपञ्चकमेतावतां वस्तूनां स्वरूपभूत इत्यर्थः। यद्वा पञ्चभिरात्मभिर्युक्तः पञ्चधा वर्तते।

तथा च **पुराणे**ऽभिहितम्—

> " भूतात्मा चेन्द्रियात्मा च प्रधानात्मा तथा भवान्।
> आत्मा च परमात्मा च त्वमेकः पञ्चधा स्थितः " ॥ इति।

**येन** ब्रह्मरूपेण **सर्वमिदं** जगत्सूत्रे मणिगणा इव **प्रोतं** प्रकर्षेणोतं व्याप्तमित्यर्थः

* छान्दसत्वान्मकारपकारटकाराणां पकारवकारठकारादेशा इति बोध्यम्।

तदेव सर्वं पृथिवी चेत्यादिना प्रपञ्च्यते—स एव पृथिव्यादिवस्तुव्यापी पुरुषः सर्वमिदं वर्तमानं जगत्, तत्त्वदृष्ट्या तद्व्यतिरेकेणाभावात्। तथा भूतमतीतं जगत्स एव। भव्यं भविष्यदपि जगत्स एव। ननु तत्त्वावित्पुरुषो मूढवद्धस्तपादादियुक्तदेहरूप एव दृश्यते न तु सर्वजगत्स्वरूप इति चेन्मैवम्। यतोऽयं जिज्ञासक्लृप्तो जिज्ञासया वेदान्तविचारेण सर्वात्मकतया निश्चितो भवति। ऋतजा ऋतेन सत्येन प्रामाणिकेन ज्ञानेन सर्वात्मा जातः, जिज्ञासाकाले भ्रान्तिज्ञानरूपेषु स ( पू ) र्वपक्षेषु [ निराकृतेषु ] प्रामाणिकेन सिद्धान्तज्ञानेन तादृशो जातो भवति। स च रयिष्ठा रयिर्धनं गुरूपदेशस्तत्रैव तिष्ठति न तूपदेशरहितानां प्रतीयत इत्यर्थः। ईदृशस्वरूपविज्ञानस्य श्रद्धया लभ्यत्वादसौ श्रद्धारूपः। " श्रद्धावाल्ँलभते ज्ञानम् " इति स्मृतेः। सत्यमबाध्यं यद्ब्रह्म तत्स्वरूपत्वादयं सत्यः। महस्वांस्तेजस्वान्स्वयंप्रकाश इत्यर्थः। अत एव तमसा संसारकारणाज्ञानेन वियुक्तत्वादुपरिष्टाद्वर्तते।

इत्थं संन्यासपूर्वकज्ञानयुक्तपुरुषं प्रशस्य ज्ञानयुक्तफलं दर्शयति—

**ज्ञात्वा तमेवं मनसा हृदा च भूयो न मृत्युमुपयाहि विद्वान्–**, इति।

हे आरुणे त्वं [ तं ] परमात्मानं हृदा हृत्पुण्डरीकनिवासित्वाद्धृदयरूपेण मनसैवं पूर्वोक्तसंन्यासरूपसाधनप्रकारेण ज्ञात्वा ज्ञानेन युक्तः सन्भूयः पुनर्मृत्युं नोपयाहि [ मा प्राप्नुहि ], ज्ञानिनो वर्तमानदेहपाते सति जन्माभावात्पुनर्मृत्युर्नास्तीत्यर्थः।

[ बहुधा प्रशस्तं संन्यासमुपसंहरति— ]

**तस्मान्न्यासमेषां तपसामतिरिक्तमाहुः–**, इति।

यस्मात्पुरुषार्थस्यान्तरङ्गसाधनं तस्मात्ते( दे )षां सत्यादीनां तपसां मध्ये संन्यासमतिरिक्तमत्युत्कृष्टं साधनं मनीषिण आहुः।

संन्यासादूर्ध्वं प्रणवेनाऽऽत्मनि समाधिं विधित्संस्तस्मिन्समाधौ विघ्नपरिहारार्थमादावन्तर्यामिणः सर्वकारणत्वेन स्तुतिं दर्शयति—

**वसुरण्वो विभूरसि प्राणे त्वमसि संधाता ब्रह्मन्त्वमसि विश्वधृत्तेजोदास्त्वमस्यग्निरसि वर्चोदास्त्वमसि सूर्यस्य द्युम्नोदास्त्वमसि चन्द्रमस उपयामगृहीतोऽसि ब्रह्मणे त्वा महसे–**, इति।

हे ब्रह्मन्नन्तर्यामिन्वसुरण्वो वसुनो वस्तुतत्त्वस्य रण्वो वशिता कथयिताऽस्मदनुग्रहार्थमुपदेष्टाऽसि। तथा विभुर्हिरण्यगर्भविराडादिविविधरूपेणोत्पन्नोऽसि। प्राणे वायुरूपे जीवात्मनः संधाता योजयिता त्वमसि। विश्वं भ (ध)रतीति विश्वभृ(धृ)द्ब्रह्मा-

ण्डधारकवायुरूपोऽसि । भूलोकवर्तिनोऽग्नेस्तेजोदाः प्रकाशरूपधनप्रदस्त्वमसि । द्युलोकवर्तिनः सूर्यस्य वर्चोदाः प्रकाशदस्त्वमसि । तथा चन्द्रमसो द्युम्नोदाः प्रकाशरूपधनप्रदस्त्वमसि । तथा यागेषु सोमरूपः सन्नुपयामेन पार्थिवमृन्मयदारुमयपात्रेण गृहीतोऽसि । उपयामशब्दस्य पृथिवीपरत्वं षष्ठकाण्डे मन्त्रव्याख्याने समाम्नातम्—“ उपयामगृहीतोऽसीत्याह । इयं वा उपयामः” इति । उक्तप्रकारं सर्वकर्तारमन्तर्यामिणं त्वा महसे ब्रह्मणे ज्योतिर्ज्योतिः(चैतन्यज्योतिः)स्वरूपब्रह्मतत्त्वाभिव्यक्त्यर्थं भजामीति शेषः ।

अनेन प्रकारेणान्तर्यामिणं स्तुत्वा परिहृतविघ्नस्य संन्यासिनः समाधिं विधत्ते—

ओमित्यात्मानं युञ्जीत— इति ।

त्रिमात्रप्रणवमुच्चारयन्सर्ववेदान्तेषु निर्णीतमात्मानं स्वात्मरूपेण चित्ते समादध्यात् समाधिसाधनमोंकारं प्रशंसति—

एतद्वै महोपनिषदं देवानां गुह्यम्, इति ।

यत्प्रणवस्वरूपमस्त्येतद्वै महोपनिषदं महत्यो बह्व्य उपनिषदः प्रतिपादिका यस्य परमात्मवाचकस्य प्रणवरूपस्य तन्महोपनिषदम् । अकारान्तत्वं छान्दसम् । “सर्वे वेदा यत्पदमामनन्ति, तत्ते पदं संग्रहेण ब्रवीम्योमित्येतत्” इति प्रणवस्य सर्वोपनिषत्प्रतिपाद्यत्वं कठवल्लीषु श्रुतम्, तच्च प्रणवरूपं निर्गुणतत्त्वप्रतिपादकं देवानामिन्द्रादीनां गुह्यं गोप्यम् । ते हि शमदमाद्यधिकारसंपत्तिरहिताय प्रणवं नोपदिशन्ति ।

यथोक्तप्रणवसमाधिजनितस्य तत्त्ववेदनस्य फलं दर्शयति—

य एवं वेद ब्रह्मणो महिमानमाप्नोति तस्माद्ब्रह्मणो महिमानम्—, इति ।

यः पुमान्संन्यासादूर्ध्वं प्रणवेन ब्रह्मतत्त्वसमाधिं कुर्वन्नेवं वेदान्तमहावाक्योक्तप्रकारेण वेद ब्रह्मतत्त्वं जानाति, असौ ज्ञानी स्वस्मिन्नविद्याकल्पितं जीवत्वापादकं परिच्छेदमपहाय देशकालवस्तुपरिच्छेदशून्यस्य ब्रह्मणो महिमानं महत्त्वमाप्नोति तत्त्ववेदनेन जीवत्वकृतभ्रमो निवर्तते ब्रह्मस्वभाव आविर्भवति ततो जीवन्मुक्तो भवतीत्यर्थः । तस्य जीवन्मुक्तस्य प्रारब्धभोगक्षयेण देहपाते सति तस्मात्कृत्स्नाविद्यानिवर्तकाद्वेदनादविद्यातत्कार्यवासनालेशरहितस्य मुख्यब्रह्मणो महिमानं महत्त्वं प्राप्नोति विदेहमुक्तिर्भवतीत्यर्थः ।

संन्यासपुरःसरां तत्त्वविद्यामुपसंहरति—

इत्युपनिषत्, इति ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यकदशमप्रपाठके नारायणोपनिषद्येकोनाशीतितमोऽनुवाकः ॥ ७९ ॥

इत्येवमतीतेन ग्रन्थेन प्रोक्ता येयं विद्या सेयमुपनिषद्रहस्यविद्या ।

अथ **मीमांसा**—तस्य(त्र) संन्यासरूपस्य चतुर्थाश्रमस्य सद्भावस्तृतीयाध्यायस्य चतुर्थपादे चिन्तितः—

"नास्त्यूर्ध्वरेताः किंवाऽस्ति नास्त्यसावविधानतः ।
वीरघाताद्वि(तो वि)धेः क्लृप्तावन्धपङ्ग्वादिगा स्मृतिः ॥
अस्त्व(स्त्य)पूर्वविधेः क्लृप्तेर्वीरहाऽनग्निको गृही ।
अन्धादेः पृथगुक्तत्वात्स्वस्थानां श्रूयते विधिः ॥

**पूर्वाधिकरणे** स्वतन्त्रमात्मविज्ञानं कर्मनैरपेक्ष्येण पुरुषार्थसाधनमित्युक्तम् । तस्याऽऽत्मज्ञानस्योर्ध्वरेतःस्वाश्रमेषु सुलभत्वादाश्रमसद्भावश्चिन्त्यते । तत्र नास्त्यूर्ध्वरेता इति प्राप्तम् । कुतः । विध्यभावात् । "त्रयो धर्मस्कन्धा यज्ञोऽध्ययनं दानमिति प्रथमस्तप एव द्वितीयो ब्रह्मचार्याचार्यकुलवासी तृतीयः" इत्यत्र यज्ञाद्युपलक्षितगार्हस्थ्यस्य तपःशब्दलक्षितवानप्रस्थत्वस्य नैष्ठिकब्रह्मचर्यस्य च परामर्शमात्रं गम्यते । न विधिरुपलभ्यते न चापूर्वार्थत्वेन विधिः कल्पयितुं शक्यः । "वीरहा वा एष देवानां योऽग्निमुद्वासयते" इत्यग्न्युद्वासनलक्षणस्य गार्हस्थ्यपरित्यागस्य निन्दितत्वात् । चत्वार आश्रमा इति **स्मृति**स्तु गार्हस्थ्यधर्मानधिकृतान्धपङ्ग्वादिविषया भविष्यति । न ह्यन्धस्याऽऽज्यावेक्षणोपेते कर्मण्यधिकारः । नापि पङ्गोर्विष्णुक्रमणाद्युपेते कर्मण्यधिकारः । तस्माच्चक्षुरादिपाटवयुक्तस्याऽऽत्मज्ञानोपयुक्त ऊर्ध्वरेता आश्रमो नास्तीति प्राप्ते ब्रूमः । अस्त्यूर्ध्वरेता आश्रमः । विध्यश्रवणेऽप्यपूर्वार्थत्वेन कल्पयितुं शक्यत्वात् । न च वीरघातदोषः । उत्सन्नाग्निविषयत्वाद्वीरहत्यायाः । यत्त्वन्धविषयत्वं स्मृतेरुक्तं तदसत् । "अथ पुनरव्रती वा व्रती वाऽस्नातको वा स्नातको वोत्सन्नाग्निरनग्निको वा यदहरेव विरजेत्तदहरेव प्रव्रजेत्" इति विरक्तानां गार्हस्थ्यानधिकृतानां पृथक्संन्यासविधानात् । न च चक्षुरादिपाटववतामाश्रमान्तरविध्यभावः । **जाबालश्रुतं** प्रत्यक्षविध्युपलम्भात्—"ब्रह्मचर्यं समाप्य गृही भवेद्गृहाद्वनी भूत्वा प्रव्रजेत्" इति तस्मादस्त्याश्रमान्तरम्" ।

तत्रैवान्यच्चिन्तितम्—

"लोककाम्याश्रमी ब्रह्मनिष्ठामर्हति वा न वा ।
यथावकाशं ब्रह्मैव ज्ञातुमर्हत्यवारणात् ॥
अनन्यचित्तता ब्रह्मनिष्ठाऽसौ कर्मठे कथम् ।
कर्मत्यागी ततो ब्रह्मनिष्ठामर्हति नेतरः ॥

त्रयो धर्मस्कन्धा इत्यत्राऽऽश्रमानधिकृत्य सर्वे एते पुण्यलोका भवन्तीत्याश्रमानुष्ठायिनां पुण्यलोकफलमभिधाय ब्रह्मसंस्थोऽमृतत्वमेतीति मोक्षसाधनत्वे[न] ब्रह्मनिष्

प्रतिपाद्यते । सेयं ब्रह्मनिष्ठा पुण्यलोककामिन आश्रमिणोऽपि संभाव्यते । आश्रमकर्माण्यनुष्ठाय यथावकाशं ब्रह्मनिष्ठायाः कर्तुं शक्यत्वात् । न हि लोककामी ब्रह्म न जानीयादिति निषेधोऽस्ति । तस्मादस्ति सर्वस्याप्याश्रमिणो ब्रह्मनिष्ठेति प्राप्ते ब्रूमः ब्रह्मनिष्ठा नाम सर्वव्यवहारपरित्यागे सत्यनन्यचित्ततया ब्रह्मणि परिसमाप्तिः । न चासौ कर्मशूरे संभवति । कर्मानुष्ठानत्यागयोः परस्परविरोधात् । तस्मात्कर्मत्यागिन एव ब्रह्मनिष्ठेति स्थितिः" ।

अस्मिन्नर्थे श्रुतिस्मृतिवाक्यानि संक्षिप्य प्रदर्श्यन्ते—

"त्याग एव हि सर्वेषां मोक्षसाधनमुत्तमम् ।
त्यजतैव हि विज्ञेयं त्यक्तुः प्रत्यक्परं पदम् ॥
मुक्तेश्च बिभ्यतो देवा मोहेनापिदधुर्नरान् ।
ततस्ते कर्मसूद्युक्ताः प्रा(प्र)वर्तन्ते विचक्षणाः ॥
अतः संन्यस्य कर्माणि सर्वाण्यात्मावबोधतः ।
हत्वाऽविद्यां धिया प्राप त(यैवेयात्त)द्विष्णोः परमं पदम्" ॥

इति भाल्लविशाखायामामनन्ति ।

"सशिखं वपनं कृत्वा बहिःसूत्रं त्यजेद्बुधः ।
यदक्षरं परं ब्रह्म तत्सूत्रमिति धारयेत् ॥
ज्ञानशिखी(खा) ज्ञाननिष्ठा ज्ञानयज्ञोपवीतिनः ।
ज्ञानमेव परं तेषां पवित्रं ज्ञानमुच्यते ॥
अग्नेरिव शिखा नान्या यस्य ज्ञानमयी शिखा ।
स शिखीत्युच्यते विद्वान्नेतरे केशधारिणः" ॥

इत्याथर्वणिका आमनन्ति ।

"कुटुम्बपुत्रदारांश्च वेदाङ्गानि च सर्वशः ।
यज्ञान्यज्ञोपवीतं च त्यक्त्वा गूढश्चरेन्मुनिः" ॥

इति बाष्कलशाखायामामनन्ति ।

"स शिखान्केशान्निकृन्त्य विसृज्य यज्ञोपवीतं भूः स्वाहेत्यप्सु जुहुयात् ।
त्रिदण्डं कुण्डिकां शिक्यं त्रिविष्टब्धमुपानहौ ।
शीतोपघातिनीं कन्थां कौपीनस्य तु च्छादनम् ॥
पवित्रं स्नानशाटीं च उत्तरासङ्गमेव च ।
यज्ञोपवीतं वेदांश्च सर्वं तद्वर्जयेद्यतिः" ॥

इति कठा आमनन्ति ।

" अथ परिव्राड्विवर्णवासा मुण्डोऽपरिग्रहः शुचिरद्रोही भैक्षाणो ब्रह्मभूयाय भवति " इति जाबालिका आमनन्ति । " अथ परिव्राडेकशाटी[परिवृतो] मुण्डोदरपात्र्यरण्यानित्यो भिक्षार्थं ग्रामं प्रविशेदासायं प्रदक्षिणेनाविचिकित्सन्सार्ववर्णिकभैक्षाचरणमभिशस्तपतितवर्जमयज्ञोपवीती शौचनिष्ठः काममेकं वैणवं दण्डमाददीत " इति मैत्रायणीशाखायामामनन्ति । "कन्थाकौपीनोत्तरासङ्गानां त्यागिनो यथाजातरूपधरा निर्ग्रन्था निष्परिग्रहाः" इति संवर्तश्रुतिः । " गृहस्थो ब्रह्मचारी वानप्रस्थो [वा] लौकिकाग्नीनुदराग्नौ समारोपयेद्गायत्रीं च स्वमुखाग्नौ समारोपयेदुपवीतं भूमौ वाऽप्सु वा विसृजेत् " इति वारुणीश्रुतिः ।

"यथोक्तान्यपि कर्माणि परिहाय द्विजोत्तमः ।
आत्मज्ञाने शमे च स्याद्वेदाभ्यासे च यत्नवान् ॥
एतद्द्विजन्मसाफल्यं ब्राह्मणस्य विशेषतः ।
प्राप्यैतत्कृतकृत्यो हि द्विजो भवति नान्यथा ॥
यदा तु विदितं तत्स्यात्परं ब्रह्म सनातनम् ।
तदैकदण्डं संगृह्य उपवीतं शिखां त्यजेत्" ॥

इत्यादयः स्मृतय उदाहार्याः ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यकदशमप्रपाठके नारायणीयापरनामधेययुक्तायां याज्ञिक्यामुपनिषदि भाष्य एकोनाशीतितमोऽनुवाकः ॥ ७९ ॥

=====

अथाशीतितमोऽनुवाकः ।

---

संन्यासस्यैव ब्रह्मज्ञानं प्रत्यन्तरङ्गसाधनत्वाज्जिज्ञासोः संन्यास एव युक्तो न तु कर्मानुष्ठानमित्युक्तम् । तर्हि निष्पन्ने तत्त्वसाक्षात्कारे कर्माण्यनुष्ठीयन्तामित्येतां शङ्कां निवारयितुं तत्त्व[ज्ञानि]व्यवहाराणां लौकिकानां सर्वेषां यागरूपत्वमुच्यते । न हि यागस्य यागाधिकारशङ्काऽस्ति । अतोऽस्मिन्ननुवाके पूर्वभागेषु योगिनोऽवयवा यज्ञाङ्गद्रव्यत्वेनाऽऽम्नायन्ते—

तस्यैवं विदुषो यज्ञस्याऽऽत्मा यजमानः श्रद्धा
पत्नी शरीरमिध्ममुरो वेदिर्लोमानि बर्हिर्वेदः
शिखा हृदयं यूपः काम आज्यं मन्युः पशुस्तपोऽ-
ग्निर्दमः शमयिता दक्षिणा वाग्घोता प्राण उद्गाता
चक्षुरध्वर्युर्मनो ब्रह्मा श्रोत्रमग्नीत्—, इति ॥

**तस्य पूर्वोक्तस्य संन्यासिन एवं विदुषः** पूर्वोक्तेन प्रकारेण ब्रह्मणो महत्त्वं साक्षात्कृतवतो जीवन्मुक्तस्य संबन्धी यो यज्ञोऽस्ति तस्य यज्ञस्य देहेन्द्रियादिसाक्षी य **आत्मा स एव यजमानसदृशः**, तस्य स्वामित्वात् । या तु तदन्तःकरणे **श्रद्धा सा पत्नी । यच्च शरीरं तदिध्मम्** । एवमुरआद्यवयवानां वेद्यादिरूपत्वोपचारो योजनीयः । **यस्तु दमः शमयिता** सर्वेन्द्रियोपशमकारी चित्तवृत्तिविशेषस्तस्य **दक्षिणा**रूपत्वमुन्नेयम् ।

जघनस्यानुवाकस्य द्वितीयभागेन योगिव्यवहारस्य ज्योतिष्टोमावयवक्रियारूपत्वं दर्शयति—

यावद्ध्रियते सा दीक्षा यदश्नाति तद्धविर्यत्पिबति तदस्य सोमपानं यद्रमते तदुपसदो यत्संचरत्युपविशत्युत्तिष्ठते च स प्रवर्ग्यो यन्मुखं तदाहवनीयो या व्याहृतिराहुतिर्यदस्य विज्ञानं तज्जुहोति यत्सायं प्रातरत्ति तत्समिधं यत्प्रातर्मध्यंदिनꣳ सायं च तानि सवनानि—, इति ।

यावन्तं कालं भोजनमकृत्वा **ध्रियते** विदुषा धार्यते सा धृतिर्दीक्षाख्यसंस्काररूपा । एवं भोजनादौ हविरादिरूपत्वमुन्नेयम् ।

अथास्यानुवाकस्य तृतीयभागेन जीवन्मुक्तस्य संबन्धिनां कालविशेषाणां नानाविधयागरूपत्वमाह—

ये अहोरात्रे ते दर्शपूर्णमासौ येऽर्धमासाश्च मासाश्च ते चातुर्मास्यानि य ऋतवस्ते पशुबन्धा ये संवत्सराश्च परिवत्सराश्च तेऽहर्गणाः सर्ववेदसं वा एतत्सत्रं यन्मरणं तदवभृथः—, इति ।

**संवत्सराश्च परिवत्सराश्चे**तिचकाराभ्यामिदावत्सरानुवत्सरेद्वत्सराः समुच्चीयन्ते । प्रभवादिषु षष्टिसंवत्सरेष्वेकैकं पञ्चकं युगशब्दाभिधेयं तस्मिंश्च पञ्चापि क्रमेण संवत्सरपरिवत्सरेदावत्सरानुवत्सरेद्वत्सरसंज्ञका द्रष्टव्याः ।

तथाच कालनिर्णये संग्रहकारेणोदाहृतम्—

"चान्द्राणां प्रभवादीनां पञ्चके पञ्चके युगे ।
संपरीदान्विदित्येतच्छब्दपूर्वास्तु वत्सराः" इति ॥

अहर्गणा द्विरात्रादयः । सर्ववेदसं सर्व [ स्व ] दक्षिणाकम् । अत्रैतच्छब्देन प्रकृताहोरात्रादिपरिवत्सरान्तसर्वकालसमु ( मष्टयु ) पलक्षितं योगिन आयुर्विवक्ष्यते । यदायुस्तत्सर्वस्वदक्षिणोपेतं सत्रमित्यर्थः ।

अस्यानुवाकस्य चतुर्थभागेन सर्वयज्ञात्मकं योगिन उपासीनस्य क्रममुक्तिलक्षणं फलमाह--

एतद्वै जरामर्यमग्निहोत्रꣳ सत्रं य एवं विद्वानुदग-
यने प्रमीयते देवानामेव महिमानं गत्वाऽऽदि-
त्यस्य सायुज्यं गच्छत्यथ यो दक्षिणे प्रमीयते
पितृणामेव महिमानं गत्वा चन्द्रमसः सायुज्यꣳ
सलोकतामाप्नोत्येतौ वै सूर्याचन्द्रमसोर्महिमानौ
ब्राह्मणो विद्वानभिजयति तस्माद्ब्रह्मणो महि-
मानमाप्नोति तस्माद्ब्रह्मणो महिमानम्, इति ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यकदशमप्रपाठके नारायणोपानिषद्य-
शीतितमोऽनुवाकः ॥ ८० ॥

जरामरणावधिकं यद्योगिचरितमस्ति त [ देत ] द्वेदोक्ताग्निहोत्रादिसहस्रसंवत्सरसत्रान्तकर्मस्वरूपमित्येवं यः पुमान्विद्वानुपासीन उत्तरायणे म्रियते, स उपासको देवानामिन्द्रादीनां महिमानमैश्वर्यं प्राप्य तदूर्ध्वमादित्य [ स्य ] सायुज्यं सहवासं तादात्म्यं वा भावनातारतम्येन प्राप्नोति । अथ पूर्वोक्तवैलक्षण्येन य उपासको दक्षिणायने म्रियते स उपासकः पितृणामग्निष्वात्तादीनामैश्वर्यं प्राप्य चन्द्रमसः सायुज्यं पूर्ववत्प्राप्नोति । य एवमेतौ सूर्याचन्द्रमसोर्महिमानावनुभवन्ब्राह्मणस्तत्त्वं(त्र) सगुणब्रह्मरूपं हिरण्यगर्भं विद्वाँस्तल्लोकवासिनामुपदेशिनामुपासीनोऽभिजयति हिरण्यगर्भसाक्षात्काररूपं प्राप्नोति । अ(त)स्मात्साक्षात्कारा[त्त]ल्लोकवासिदेहपातादूर्ध्वं हिरण्यगर्भलोके गत्वा तत्र ब्रह्मणो हिरण्यगर्भस्य महिमानमैश्वर्यं प्राप्नोति । तत्रोत्पन्नब्रह्म[तत्त्व]साक्षात्कारः तस्माज्ज्ञानाद्ब्रह्मलोकविनाशादूर्ध्वं सत्यज्ञानादिलक्षणस्य ब्रह्मणो महिमानं महत्त्वं च प्राप्नोति । ( *इत्युपनिषदिति वाक्येन यथोक्तविद्यायास्तत्प्रतिपादकस्य ग्रन्थस्य चोपसंहारः क्रियते )

* धनुश्चिह्नान्तर्गतोऽधिको ग्रन्थः प्रमादात्पतितः ।

१ ङ तुर्भागेन(ग) ।

अथ मीमांसा । तृतीयाध्याये तृतीयपादे चिन्तितम्—

पुंविद्यैका विभिन्ना वा तैत्तिरीयकताण्डिनोः ॥
मरणावभृथत्वादिसाम्यादेकेति गम्य(गम्य)ते ।
बहूनां रूपभेदेन किंचित्साम्यस्य बाधनात् ।
न विद्यैक्यं तैत्तिरीये ब्रह्मविद्याप्रशंसनात् ॥

अस्ति तैत्तिरीये पुरुषविद्या—"तस्यैवं विदुषो यज्ञस्याऽऽत्मा यजमानः" इति । तथा ताण्डिशाखायामपि श्रूयते—"पुरुषो वाव यज्ञः" इति । सेयमेकैव पुरुषविद्या । यन्मरणं तदवभृथो मरणमेवावभृथ इत्युभयत्र समानधर्मश्रवणात्प्रातःसवनादीनां च समानत्वादिति प्राप्ते ब्रूमः । वेद्यस्वरूपस्य भूयांस्तत्र भेद उपलभ्यते । तथा हि—विदुषो यो यज्ञस्तस्य यज्ञस्याऽऽत्मेति तैत्तिरीयके व्यधिकरणे षष्ठ्यौ । अन्यथाऽऽत्मा यजमान इति कथं [न] व्याहन्येत । ताण्डिनां तु पुरुषयज्ञयोः सामानाधिकरण्यं श्रुतमित्येको रूपभेदः । आत्मयजमानादिकं च सर्वमत्र श्रुतं ताण्डिशाखायां नोपलभ्यते । यत्तु ताण्डिनामुपलभ्यते त्रेधा विभक्तस्याऽऽयुषः सवनत्रयत्वमित्यादि न तत्किंचिदपि तैत्तिरीयके पश्यामः । अतो मरणावभृथत्वाद्यल्पसाम्येऽपि बहूनां रूपभेदानां विद्यमानत्वाद्विद्ययोर्भेद एवोचितः । अपि च न तैत्तिरीयाणां कर्मसाधनत्वमुलभ्यते किं तर्हि ब्रह्मविद्याप्रशंसा । तस्यैवं विदुष इति ब्रह्मविद उत्कर्षणात् । तस्मान्न विद्यैक्यशङ्कायामप्यवकाशोऽस्ति । क्रममुक्तिश्च(श्च)तस्मिन्ननुवाके तत्त्वज्ञानिसेवानिमित्ताऽऽभिहितेत्यदोषमतिमङ्गलम् ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यकदशमप्रपाठके नारायणीयापरनामधेययुक्तायां

याज्ञिक्यामुपनिषदि भाष्येऽशीतितमोनुवाकः ॥ ८० ॥

[*अम्भस्यैकपञ्चाशच्छतं जातवेदसे चतुर्दश भूरन्नं भूरग्नये भूरग्नये चैकमेकं पाहि पाहि चत्वारि चत्वारि यश्छन्दसां द्वे नमो ब्रह्मण ऋतं तपो यथा वृक्षस्यैकंपेकमणोरणीयाश्चतुस्त्रिंशत्सहस्रशीर्ष षड्विंशतिरादित्यो वा एष आदित्यो वै तेज एकमेकं निधनपतये त्रयोविंशतिः सद्योजातं त्रीणि वामदेवायैकमघोरेभ्यस्तत्पुरुषाय द्वे द्वे ईशानो नमो हिरण्यबाहव एकमेकमृतꣳ सत्यं द्वे सर्वो वै चत्वारि कद्रुद्राय त्रीणि

* एतच्चिह्नान्तर्गतो ग्रन्थो ज. पुस्तके नास्ति ।

यस्य वैकङ्कती कृणुष्व पाजोऽदितिरापो वा इदꣳ सर्वमेकमापः पुनन्तु चत्वार्यग्निश्च सूर्यश्च नव नवोमिति चत्वार्यायातु पञ्चौजोऽसि दशोत्तमे चत्वारि घृणिस्त्रीणि ब्रह्ममेतु मां यास्ते ब्रह्महत्यां द्वादश ब्रह्ममेधयाऽद्या न इमं भ्रूणहत्यां ब्रह्ममेधवा ब्रह्मा देवानामिदं वीरहत्यामेकान्नविꣳशतिरेकान्नविꣳशतिर्मेधा देवी मेधां म इन्द्रश्चत्वारि चत्वार्यामां मेधा द्वे मयि मेधामेकमपैतु परं वातं प्राणममुत्रभूयाद्धरिꣳ शलैरग्नि मा छिदो मृत्यो मा नो महान्तं मा नस्तोके प्रजापते स्वस्तिदा त्र्यम्बकं ये ते सहस्रं द्वे द्वे मृत्यवे स्वाहैकं देवकृतस्यैकादश यद्वो देवाः कामोऽकार्षीन्मन्युरकार्षीद्द्वे द्वे तिलाञ्जुहोमि गावः श्रियं प्रजाः पञ्च तिलाः कृष्णाश्चोरस्य श्रीः प्रज्ञा तु जातवेदः सप्त प्राणवाक्त्वक्छिरो(र उ)त्तिष्ठ पुरुष पञ्च पृथिवीशब्दमनोवागव्यक्ताऽऽत्माऽन्तरात्मा परमात्मा मे क्षुधेऽन्नमय पञ्चदशाग्नये स्वाहैकंचत्वारिꣳशदों तद्ब्रह्म नव श्रद्धायां प्राणे निविष्टश्चतुर्विꣳशतिः श्रद्धायां दशाङ्गुष्ठमात्रः पुरुषो द्वे वाङ्म आसन्नष्टौ वयः सुपर्णाः प्राणानां ग्रन्थिरसि द्वे द्वे नमो रुद्रायैकं त्वमग्ने द्युभिर्द्वे शिवेन मे संतिष्ठस्व सत्यं प्राजापत्यस्तस्यैवमेकमेकमशीतिः ॥ ]

ॐ सह नाववतु । सह नौ भुनक्तु । सह वीर्यं करवावहै । तेजस्वि नावधीतमस्तु मा विद्विषावहै ॥

ॐ शान्तिः शान्तिः शान्तिः ॥

हरिः ॐ ।

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके परिशिष्टत्वेन संगृहीतो दशमः प्रपाठकः समाप्तः ॥ १० ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥ १ ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयारण्यके परिशिष्टत्वेन संगृहीतं दशम-
प्रपाठकभाष्यं समाप्तम् ॥ १० ॥



समाप्तमिदं सपरिशिष्टं सभाष्यं तैत्तिरीयारण्यकम् ।

